ध्यमपदलोपीसमास : । यावताच यदिहनिर्वाहोयेन•दस्रवा ॥

यावन : । सिह्लके । नागोरीगं दूइति प्रसिद्धेधूपे ॥ यवनदेशेभव : । तत्र भवइत्यण् ॥ याव्यतेवा । योतैर्यं नालम्युद्गी : जुवार•योनूहरोइति ख्यातेधान्यप्रभेदे ॥ यावनोलोहित : स्वादुर्लोहित : श्लेष्मपित्तजित् । वहय्यस्तुवरोरुच : कं दह्लतृक्षितोलघु : ॥

यावनाल : । पुं• धान्यभेदे । इक्षत गड्डलि। दीर्घनाले । दीर्घशरे । देवे घो । कुसुमपवर्के । यावने । जुवार• कु•भा• ॥

यावनालशर : । पुं• शरविशेषे । न दीजे । दृढस्वचि । वारिसम्भवे । ख रपत्रे । जोहुरलो•इतिभाषा ॥

यावनाली । स्त्री• यावनालशर्करायाम् । हिमोत्पन्नायाम् । हिमशर्करायाम् ॥

यावशूक : । पुं• यवक्षारे ॥ इतिरत्नमाला ॥

यावस : । पुं• न•प•सि ॥ तृणसङ्घाते ॥ युयते । यु• । वहियुभ्यांणि दित्यासच् ॥

याव्य : । त्रि• मिश्रणीये ॥

याशोधरेय : । शाक्यमुनिपुत्रे ॥

याष्टीक : । त्रि• यष्ट्यायोधिनि । यष्टिहेतिके ॥ यष्टि : प्रहरणमस्य । शक्तियष्ट्योरीकक् । स्त्रियांङीपि• याष्टीकी ॥

यास : । पुं• दुरालभायाम् । यवासे । यास : स्वादु : सरस्तिक्तस्तुवर : शीतलोलघु : । कफमेदोमदभ्रान्ति पित्तासृक्कुष्ठकासनुत् । तृष्णाविसर्प वातास्रवमिज्वरहर : स्मृत : । यं वासस्यगुणैस्तुल्या बुधैरुक्तादुरालभा ॥ यसनम् । यसुप्रयत्ने । भावे घञ् ॥ यासोस्त्यस्य । अर्श आद्यच् ॥ याति । बाहुलकादसच्

यासा । स्त्री• मदनशलाकापक्षिणि ॥

यासापद्मम् । न• विकसितोत्पले । सद्योविकसितंपद्मं यासापद्मंप्रचक्षते ॥

यास्क : । पुं• मुनिविशेषे ॥ यस्कस्यापत्यम् । शिवादिभ्योण् । बहुत्वे• यस्का : ॥

यियक्षमाण : । त्रि• यष्टुमिच्छति । यजते : सन्नन्ताल्लट : शानच् ॥

यियक्षु : । त्रि• यष्टुमिच्छौ ॥ यजे : सन्नन्तादुप्रत्यय : ॥

यियासन् । त्रि• यातुमिच्छति । यातेसन्नन्ताल्लट : शत्रादेश : ॥

यियासित : । त्रि• जिगमिषिते । यातुमिष्टे ॥ याते : सन्नन्तात्कर्मणिक्त : ॥

यियासु : । त्रि• यातुमिच्छौ ॥ याते : सन्नन्तादुप्रत्यय : ॥

युक्तम् । न॰ हस्तचतुष्टये ॥ त्रि॰ युते । अपृथग्भूते । मिलिते । औपयिके । न्यायगतद्रव्ये ॥ युक्तिसिद्धे । यथार्थे ॥ स्थिते ॥ नियुक्ते । अवहिते । अप्रमत्ते । निगृहीतमनसि । समाहितचित्ते । ईश्वरायेवेतानिकर्माणिममफलायेत्येवमभिप्रायवति ॥ परिमिते ॥ पुं॰ अभ्यस्तयोगे ॥ यथा । योगीतुद्विविधः प्रोक्तोयुक्तयुञ्जानभेदतः । युक्तस्यसर्वदाभानंचिन्तासहकृतोपरः ॥ युज्यतेस्म । युजिर्योगे॰क्त : ॥

युक्तदण्डः । पुं॰ यथापराधदण्डे॰न्ये ॥ उद्वेजयतितीक्ष्णेनमृदुनापरिभूयते । दण्डेनन्दपतिस्तस्माद्युक्तदण्डः प्रशस्यते ॥

युक्तरसा । स्त्री॰ रास्नायाम् । काटाखाम्बलो॰इ॰गौ॰दे॰भा॰ । एलापर्णीम् ॥ युक्तोरसोयस्याः ॥

युक्ता । स्त्री॰ एलानी॰इ॰गौ॰दे॰भा॰ ॰प्र॰वृत्तविशेषे ॥

युक्तिः । स्त्री॰ न्याये ॥ कार्यकारणयोरभेदसाधने॰न्यायोयथा । मृद्विमदात्मनाघटं प्रागसति॰मृद्वियतो यस्मात्॰तस्मात्॰कार्यकारणयोरभेदएव । कार्यकारणयोरन्यत्वे॰॰ एककारणज्ञानात्॰सर्वकार्यज्ञानंनस्यादित्यादिः ॥ योगे । योजनायाम् ॥ लोकव्यवहारे ॥ धर्मशास्त्रविरोधेतुयुक्तियुक्तोविधिः स्मृतः ॥ अनुमाने ॥ अपूर्वार्थप्राप्तौ ॥ सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्येषु षड्गुणेषु ॥ शास्त्रदीपिकायांयुक्तिशब्दस्य॰प्रमाणपरतयाव्याख्यानात्॰प्रत्यक्षादिषट्सुप्रमाणेषु ॥ योजनम् । युजेः स्त्रियांक्तिन् ॥ नाट्यालङ्कारविशेषे ॥ तल्लक्षणंयथा । युक्तिरर्थावधारणमिति ॥ उदाहरणंयथा । यदिसमरमपास्यनास्तिमृत्योर्भयमितियुक्तमितोन्यतः प्रयातुम् । अथमरणमवश्यमेवजन्तोः किमितिमुधामलिनंयशः कुरुध्वमिति ॥

युगः । पुं॰ रथाद्यवयवे । जूआ॰इतिभाषा ॥

युगम् । न॰ युग्मे ॥ हस्तचतुष्के । वृद्धिनामौषधे ॥ कृतादिषुचतुर्षु ॥ देवानांद्वादशसहस्रवत्सरेण॰चतुर्युगं भवति । मनुष्यमानेनचतुर्युगपरिमाणं विंशतिसहस्राधिकाचिचत्वारिंशल्लक्षम् । ४३२०००० ॥ तत्रसत्ययुगस्यमानम् १७२८००० वर्षाः । त्रेतायुगस्यमानम् । १२९६००० वर्षाः । द्वापरयुगस्यमानम् । ८६४००० वर्षाः । कलियुगस्यमानम् । ४३२००० वर्षाः ॥ तेषांभारतवर्षवर्त्तित्वं यथा । चत्वारि

भारतेवर्षेयुगानिमुनयोऽन्वयन् । कृतं च त्रेताद्वापरश्चकलिश्चेतिचतुर्युगम् । चत्वार्याहु : सहस्राणिवर्षाणान्तुकृतंयुगम् । तस्यतावतच्छतीसन्ध्यासन्ध्यांशश्चतथाविध : । इतरेषुससन्ध्येषुससन्ध्यांशेषुच त्रिषु । एकापायेनवर्त्तन्ते सहस्राणिशतानिच । यदेतत्परिसङ्ख्यातमादावेवचतुर्युगम् । एतद्द्वादशसहस्रं देवानायुगमुच्यते ॥ इतिमनु : । तथाविष्णुपुराणे । चत्वारित्रीणिद्वे चैकंकृतादिषुयथाक्रमम् । दिव्याब्दानांसहस्राणियुगमाहु : पुराविद : ॥ तत्प्रमाणै : शतै : सन्ध्यापूर्वातत्राभिधीयते । सन्ध्यांशकस्ततत्तुल्योयुगस्यानन्तरोद्दिस : ॥ सन्ध्यासन्ध्यांशयोरन्तर्य : कालोमुनिसत्तम । युगाख्य : सतुविज्ञेय: कृतत्रेतादिसंज्ञित : ॥ इति ॥ योजनम्० युज्यतेवा । युजिर्योगे । घञ् । कुत्वम् । संज्ञापूर्वकत्वान्नगुण : । रथयुगेतिनिपातनाद्वा ॥

युगकील : । पुं० युगकीलके ।

युगकीलक : । पुं० युगकाष्ठस्यकीलके । शम्यायाम् । जुएकीकील० इ० भाषा । स्वार्थेकन् ॥

युगक्षय : । पुं० महाप्रलये । युगानांक्षयोयस्मिन् ।

युगन्धर : । पुं० यचरथयुगकाष्ठमासज्यतेतस्मिन्काष्ठे । कूबरे । युगंवोढ्वब्धनकाष्ठम्धारयति । संज्ञायांभृतृवृजिधारीतिखच् । अरुर्द्विषदजन्तस्येतिमुम् ॥ पर्वतविशेषे ॥

युगपत् । अ० एकदा । एकस्मिन्नेव काले । युवन्त्यस्मिन्काले । यु० । गपतकप्रत्यय: ॥ यद्वा । युगंपयतेस्मिन् । पयगतौ । डतप्रत्यय: ॥

युगपत्र : । पुं० कोविदारे । रक्तकाञ्चनारवृक्षे ॥ युगंपत्रमस्य ॥ युग्मपर्णवृक्षमात्रे ॥

युगपत्रक : । पुं० कोविदारे । रक्तकाञ्चनद्रुमे । युगंयुग्मंपत्रमस्य ॥

युगपत्रिका । स्त्री० शिंशपावृक्षे ॥

युगपार्श्वग : । पुं० दमनकालेकण्ठारोपितकाष्ठवाहे । प्रष्ठौहि ॥ युगस्यस्कन्धकाष्ठस्यपार्श्वेगच्छति । पन्येष्वपीतिड : ॥

युगलम् । न० युगे । युग्मे ॥ युज्यते । युजिर्योगे । वृषादिभ्य: कलच्चित् । न्यङ्क्वादित्वात्कुत्वम् ॥ युगंलातिवा । आतइतिक : ॥ युगंयुग्ममस्त्यस्यवा । सिध्मादित्वाल्लच् ।

युगलाख्य : । पुं० बर्बुरवृक्षे । त्रि० युग्मनामके ॥

युगांशक : । पुं० वत्सरे ॥ युगविभागे ॥

युगादि: । स्त्री० तिथिविशेषेषु ॥ यथा । वैशाखमासस्यसिताटतीया० नवम्यसौकार्त्तिकशुक्लपचे । नभस्यमासस्यचकृष्णपचे बयोगीपञ्चदशीचमाघे ॥ एतायुगादय: प्रोक्ता : स्वाध्यायंवर्ज्जयेद्बुध : । महापुण्यप्रदाश्चैतादत्तस्याचयकारिका : ॥ विशेषमाहभारद: । कार्त्तिकेशुक्लनवमीयादि: क्वतयुगस्यच । त्रेतादिर्माधवेशुक्लटतीयापुण्यसम्मिता- ॥ कृष्णापञ्चदशीमाघेद्वापरादिरुदीरिता । कल्पादि : स्यात्कृष्णापचे नभस्येचत्रयोदशीति ॥ कालविशेषे ।। युगस्यभादि : ॥

युगान्त : । पुं० प्रलये ॥ युगशेषे ॥

युग्मम् । न० द्वन्द्वे । युगले । युगे । जोडा० जोडी० इ० भा० ॥ युज्यते । युजिर्योगे । युजिरुजितिभ्यांकुर्श तिमक् ।। द्वयो: श्लोकयोरन्वयें ।।

युग्मपत्र: । पुं० रक्तकाञ्चने कोविदारे ॥ न० युगलपर्णे ।। युग्मंपत्रमस्य ।

युग्मपत्रिका । स्त्री० शिंशपावृक्षे ।।

युग्मपर्ण : । पुं० कोविदारे । सप्तपर्णवृक्षे ॥

युग्मफला स्त्री० इन्द्रवर्भिण्याम् ॥ वृश्चिकाल्याम् । गन्धिकायाम् ॥

युग्मादरणम् । न० युग्मतिथिपूज्यता-

याम् ॥ द्वयोर्मान्यत्वे ॥

युग्य : । पुं० प्रासङ्ग्ये । शाकटे । युगादीनांवोढरि ॥ युगंरथाद्यङ्गंवहतितद्वहतिरथयुगप्रासङ्गमितियत् ॥ न० याने ॥ हस्त्यश्वादिवाहने ॥ युज्यते । युजिर् ० । युग्यञ्चपत्त्वइति क्यवन्तोनिपातित: ॥ युगायहितो वा । उगवादिभ्योयत् युगमर्हति वा । दण्डादित्वाद्यत् ॥

युङ्गी । पुं० वर्णसङ्करजातिविशेषे । यथा । गङ्गापुत्रस्यकन्यायांवीर्येणवेशधारिण : । बभूववेशधारोचपुत्रो युङ्गीप्रकीर्तित: । इ० ब्र० वै०पु० ॥

युक्०ग्० । त्रि० समाधिमति । युग्मे ॥ युज्यतेसमाधत्ते । युजसमाधौदैवादिक: । क्विप्चेतिक्विप् ॥

युङ् । पुं० योगकर्त्तरि । मेलनकर्त्तरि ॥ युनक्ति । युजिर्योगे । ऋत्विगादिनाक्विन् । युजेरसमासे० इ० नुम् । क्विन्प्रत्ययस्यकु : । इतिनस्यकुत्वेन० सानुनासिकोङकार: ॥

युजौ । पुं० नित्यद्विवचनान्त : । अश्विनीकुमारयो : ॥

युजान : । पुं० सारथौ ॥

युञ्जान : । पुं० सारथौ ॥ विप्रे ॥ भावनासहकारेणसर्वज्ञेयोगिविशेषे ॥ यथा । योगीतुद्विविध : प्रोक्तोयुक्तयुञ्जानभेदत : । युक्तस्यसर्वदाभानंचिन्तासहक्रतोऽपर : ॥ इ०

भा० प० ॥ युक्तस्येति० योगभ्यासा वगत्वावशीकृत समाधिसमासादि तोविविधसिद्धियुक्तइत्युच्यते ० य यमेवविशिष्टयोगवत्वात्युक्तइत्युच्य ते । सर्वदेतिचिन्तासहकारंविनेत्य र्थः । भानंसर्वविषयाणांप्रत्यक्षम् अपरोयुञ्जान : । विषयव्यावृत्त्यामा नससमाधिस्थ : । अयस्व । युञ्जान उच्यते । चिन्ताध्यानम्० तदेवका रणम्० तत्सहकारात्स्थूलसूक्ष्म- व्यवहितविप्रकृष्टामर्थानमन : प्रत्य क्षीकरोतीत्यर्थ : । इतिसिद्धान्तमु- क्तावली ॥

युत् । च० कुत्सायाम् ।

युतम् । न० हस्तचतुष्टये ॥ त्रि० यु क्ते । अपृथग्भूते ॥ पृथग्योगे ॥

युतकम् । न० संशये ॥ युगे । युग्मे ॥ नारीवस्त्राञ्चले । पटाञ्चले ॥ चलनार्थे । प्राट्टार्थे ॥ युक्ते ॥ यौतके ॥ स्त्रीवस्त्रभेदे ॥ सूर्यार्थे ॥ मैत्रीकरणे ॥ योनिसम्बन्धे ॥

युतयामित्रवेध : । पुं० वेधविशेषे ॥ सयथा । पापात्सप्तमगः शशीयदि भवेत्पापैर्युतोधवायतं नाशुविव र्जयेन्मुनिमितोदोषोप्ययंकथ्यते । या चायांविपदोऽर्थसुतवधः चौरैश्वरो- गागमोवैधव्यंविवर्हऋतौचमरणंशुक्ल युर्ग्मोस्मि । अत्रापवादोयथा । तुर्यस्थितोऽपिचमन्दिरगोयदूर्णो मित्रर्क्षसौम्यगृहगोथतदोथितोवा० यामित्रवेधविहितामपहन्तिदोषान् दोषाकर : सुखमनेकविधंविधत्ते वृषकर्कटसिंहकन्यामिथुनधनुर्मी- नतुलास्थे चन्द्रे शुभग्रहयोगितोवा ० युतयामित्रदोषोनास्ति ॥

युतवेध : । पुं० वेधविशेषे । सयथा । चन्द्र : करोतियदियाससहितोय मार्गंभौमान्वित : पतिविनाशकर सुचन्द्र : । स्वर्भानुकेतुशनिभिर्म्- तिमादधातिमानासुखानिकविना- गुरुणाबुधेन ।

युधम् । न० पायोधसे । जन्ये प्रधने मृधे । रणे युद्ध० कलहे० इ० भा० ॥ योधनम् । युसम्प्रहारे । भावेक्त : ॥

युधङ्ग : । पुं० कार्त्तिकेये ।

युत्सार : । पुं० घोटके ॥

युधाचार्य : । पुं० युधार्थमायुधविद्या । परेशके ॥

युत् स्त्री० समिति । आजौ । सङ् यामे । युद्धे ॥ योधनम युध० । स म्पदादित्वात्क्विप् ॥

युधाजित: । पुं० कैकय्याभ्रातरि । भ रतमातुले ।

युधान : । पुं० क्षत्रिये ॥ युध्यते । युध० । युधिबुधिदृश : किच्चेत्या नच् ।

युधामन्यु : । पुं० नृपतिविशेषे ।

युधिष्ठिर : । धर्मात्मजे । कुन्त्यागर्भे-धर्मादुत्पन्ने • अर्जुनाग्रजे • प्रथमपाण्डवे । अजातशत्रौ । शल्यारौ । अजमीढे ॥ युधिरणे जयभागित्वेन स्थिर : । हलदन्तादित्यलुक् । गवियुधिभ्यांस्थिरइतिषत्वम् ॥

युध्म : । पुं॰ धनुषि ॥ संयुगे ॥ युध्यते । युध॰ । इषियुधीत्यादिनामक् ॥ बाणे ॥

युयुत्खुर : । पुं॰ क्षुद्रव्याघ्रे ॥

युयुत्सु : । त्रि॰ युद्धेच्छौ ॥ युध : सन्नन्तादुप्रत्यय : ॥ धृतराष्ट्राद्वैश्यायांजाते ॥

युयुधान : । पुं॰ सात्यकौ । शिनेर्नप्तरि ॥ इन्द्रे ॥ क्षत्रिये ॥ योद्धरि ॥

युवगण्ड : । पुं॰ यूनोगण्डस्थव्रणविशेषे । यवगण्डे । वयस्फोटे ॥

युवति : । स्त्री॰ प्राप्तयौवनायांस्त्रियाम् । तरुण्याम् ॥ यौति॰ नित्यमैमित्तकास्वेषु सर्वं शुकर्म सुमिश्रीभवतिपाणिग्रहणेमसहाधिकारात् । युमिश्रणे । कनिन् युवृषितक्षीतिकनिन् । यूनस्ति : ॥ हरिद्रायाम् ॥ स्त्रीसामान्ये ॥

युवती । स्त्री॰ तरुण्याम् । दिव्यायाम् । वयोयाम् । युवती ॥ तस्या लक्षणादियथा । षाषोडशाद्भवेद्वालातरुणीत्रिंशतामता । पञ्चपञ्चाशत : प्रौढाभवेद्वृद्धाततःपरम् ॥ बालातुप्राणदाप्रोक्तायुवतीप्राणहारिणी । प्रौढाकरोतिवृद्धत्वं वृद्धामरणमादिशेत् । निदाघशरदोर्वालाप्रौढावर्षावसन्तयो : । हेमन्ते-शिशिरेयोग्याम्हद्धायापिशस्यते ॥ योग्या॰ युवती ॥ हरिद्रायाम् ॥ यौति॰ शास्त्रविहितसर्वकर्मसुमिश्रीभवति॰ दम्पत्यो : सहाधिकारात् । युमिश्रणे । लट : शत । उगितश्चेतिङीप् ॥ यद्वा । युवतिशब्दात्॰ सर्वतोक्तिन्नर्थादितिङीष् ॥ स्त्रीसामान्ये ॥

युवतीष्टा । स्त्री॰ स्वर्णयूथिकायाम् ॥

युवा । पुं॰ वयस्थे । तरुणे । षोडशवर्षमारभ्यत्रिंशद्वर्षपर्यन्तावस्थावति । मतान्तरेणषोडशवर्षादारभ्यसप्ततिवर्षपर्यन्तवयस्के ॥ यथा । षाषोडशाद्भवेद्वालस्तरुणस्ततउच्यते । वृद्धस्यात्सप्ततेरूर्ध्वं वर्षीयान्नवते:परमितिस्मृते:यौति । यु॰ । कनिन् युवृषीतिकनिन् । त्रि॰ अल्पवयसि ॥ श्रेष्ठे ॥ निसर्गबलशालिनि । षष्टिवत्सरान्तर्गतनवमवत्सरे । तत्फलं यथा । महार्घंजायतेसर्वंघृततैलरसादिकम् । प्रजानाशभवेद्वृद्धिर्युवनिसंवत्सरेशुभे ॥

युवनाश्व : । पुं॰ सूर्यवंशीयराजविशेषे ॥ मान्धातृपितरि ॥

वर्त्तुलः शोभनः स्थूलः कार्य्यो-
ष्टपमीलितः ॥ भविष्ये । बिल्व-
क्षपकुलस्ये बकलीयूपः प्रशस्यते ॥
चूलिकामवेदिमाहुर्यात्सर्गं तत्वम् ॥
यूपस्थगेन । यु० । कुषुभ्यांचि-
ति० योटीर्घश्च ॥ यूपमिवप्रस्थ-
स्मिन् पशुमितिवा ॥

यूपकटकः । पुं० चषाले ॥ यूपस्या
ये स्थितः कटकाकारः । यूपमूर्द्ध
निहितौलोहवलये ॥

यूपकर्णः । पुं० यूपैकदेशे । घृता
क्तौ ॥

यूपखण्डः । पुं० तक्ष्यमाणस्ययूप-
स्यप्रथमपतितेशकले ॥

यूपद्रुः । पुं० खदिरवृक्षे ॥

यूपद्रुमः । पुं० खदिरवृक्षे ॥ यूप
स्यद्रुमः तत्रोपयुक्तत्वात् ॥ रक्त
खदिरे ॥

यूपलक्ष्यः । पुं० पतत्रिणिपक्षिणि ॥

यूपाग्रम् । न० तक्मणि । यूपस्याग्र
भागे । यूपस्याग्रम् ॥

यूषः । पुं० न० मुद्गादिक्काथरसे ।
जूस० इ० भा० ॥ मुद्गामलकयू
षस्तुभेदीदीपनपाचनः । यहयू
षोगिवद्यूषंयथा । मुद्गयूषंर-
सं तत्र धान्यजीरकसंयुतम् । सै
न्धवेनान्वितंद्याताषड्यूषमिति-
कीर्तितम् । रसः जघन्यमांसभव
म ॥ ब्रह्मदारुवृक्षे ॥ यूषति । यू

प० । अच् ॥ इगुपधेतिकः ॥

येयः । त्रि० यातव्ये ॥ यातुंयोग्यः ।
या० । अचोयत् । ईद्यति ।
गुणः ॥

योक्ता । त्रि० योगकर्त्तरि ॥ युजेः
कर्त्तरितृन् ॥

योक्त्रम् । न० मन्थनरज्जौ । आब
न्धे ॥ योत्रे ॥ युज्यतेऽनेन । यु
जिर्० । दाम्नीशसयुयुजेतिष्ट्रन् ॥

योगः । पुं० सन्नहने । कवचादिधा
रणे ॥ उपाये ॥ ध्याने ॥ सङ्गत्या
म् ॥ युक्तौ ॥ अपूर्वार्थसम्प्राप्तौ ।
अलब्धलाभे ॥ वपुःस्थैर्ये ॥ प्र
योगे ॥ भेषजे ॥ विस्रब्धघातके ।
द्रव्ये । धने ॥ कार्मणे ॥ नैया
यिके ॥ चारे ॥ सूत्रे ॥ विष्कम्भा
दिषु ॥ तेयथा । विष्कम्भः प्रीति
रायुष्मान्सौभाग्यः शोभनस्तथा-
अतिगण्डः सुकर्माधृतिः शूलस्त-
थैवच ॥ गण्डोवृद्धिर्ध्रुवश्चैवव्याघातो
हर्षणस्तथा । वज्रसिद्धिर्व्यतीपा
तोवरीयान्परिघः शिवः ॥ सि
द्धः साध्यः शुभः शुक्लोब्रह्मैन्द्रा
वैधृतिस्तथेति ॥ संयोगमात्रे ॥ प
रस्परसमागमे ॥ चित्तवृत्तिनिरोधे
॥ सम्यग्दर्शनोपाये । निष्कामक
र्मणि ॥ समाधौ ॥ दुःखसंयोग-
वियोगे । अन्तःकरणशुद्धिरूपवै
राग्ये ॥ अघटमघटमाकामयोति

योगमल: । पुं॰ अन्तरायशब्दवाच्ये-षु व्याधिस्त्यानादिषु ॥ चित्तविक्षेपे ॥

योगमाया । स्त्री॰ सर्वसङ्कल्पाधिष्ठानभूतायांभवगत्यांचिच्छक्तौ ॥ ईश्वरसङ्कल्पवशवर्त्तिन्यांमायायाम् ॥ सत्त्वरजस्तमसांत्रयाणांगुणानांयोगीयुक्तिघटनंमाया । योगस्यमाया ॥

योगयज्ञ: । यमनियमादियोगाङ्गानुष्ठाने ॥ योगएवयज्ञ: ॥ त्रि॰तत्परे ॥

योगरूढ: । पुं॰ योगार्थसद्भावेनरूढ्यर्थबोधकशब्दे ॥ यथा । योगरूढाश्चरूढाश्चयौगिकाश्चेतित्रिधा । हिशब्दास्त्रिधाभवन्ति । योगरूढा: पङ्कजादय: । पङ्कजनिडप्रत्यये: पङ्कजनिकर्त्रभिधायकेनयोगेनापि पद्मार्थएवप्रतिपाद्यतेनकुमुदाद्यर्थ: इति । योगार्थपुरस्कारेणापिरूढ्यर्थएवेति॰योगरूढ: । एवमीश्वरसङ्केतमहिम्नाभटितिपद्मस्यैवस्मृते: ॥

योगवाही । त्रि॰ मध्वादौ । संसर्गगुणग्राहके ॥

योगवाही । स्त्री॰ क्षारविशेषे । सर्जिकाक्षाराम् ॥

योगविद् त्रि॰ प्राप्तयोगेयोगंविन्दतिलभते । विद्लृ॰ । सम्पूर्वविधिया

दिनाक्विप् ॥

योग: । न॰ समाधौ ॥ युनक्ति । युजिर्॰ । भञ्ज्युप्लियुजिभृजिभ्य: कुश्चेत्युसुन्॰कवर्गश्चान्तादेश: । योगसी॰योगांसि ॥

योगसार: । पुं॰ तन्त्रविशेषे ॥ सर्वरोगहरोपाये ॥

योगाङ्गम् । न॰ यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिषु ॥

योगात्मा । पुं॰ निरस्तसमस्तप्रपञ्चे परमात्मनि ॥ यंविनिद्राजितश्वासा: संतुष्टा: संयतेन्द्रिया: । ज्योति: पश्यन्तियुञ्जानास्तस्मैयोगात्मनेनम: ॥

योगाधमनम् । न॰ छलेनबन्धके ॥

योगाधियोग: । पुं॰ यात्रायोगान्तरे ॥ यथा । एकोऽपिज्ञ्यसितेषुपञ्चमतप: केन्द्रेषुयोगस्तथा॰द्वौचेत्तेष्वधियोगएषुसकलायोगाधियोग: स्मृत: ॥ योगेशुभमथाधियोगगमनेचेमंरिपूणांवधस्त्वाधियोगेजयश्रीवनीश्चलभतेयोगाधियोगेश्चलन् ॥

योगान्तराय: । पुं॰ योगमले ॥ योगस्य॰योगेवाअन्तराय: ॥

योगारङ्ग: । पुं॰ नारङ्गे ॥

योगारूढ: । त्रि॰ इन्द्रियार्थतत्साधनकर्मानासक्ते ॥ यथा । यदाहिने

न्द्रियार्थेषु नकर्मस्वनुषज्जते । सर्वसङ्कल्पसंन्यासीयोगारूढस्तदोच्यते ॥

योगासनम् । न० ब्रह्मासने । ध्यानासने ॥

योगिदण्ड: । पुं० वेत्रे ॥

योगी । त्रि० वसुरुद्रादित्यादिदेवताभक्ते ॥ दरिद्रब्राह्मणे । ध्याननिष्ठे । निरतिशयज्ञानैश्वर्यादिशालिनि ॥ समाधिनिष्ठेऽन्तर्दृष्टौ ॥ परमहंसपरिव्राजके ॥ परवैराग्ययुक्ते ॥ योगयुक्ते ॥ योगेननित्यसम्बन्धिनि ॥ योगारूढे ॥ सहिविधोऽपरम: परमश्च । तत्रोत्पन्नतत्त्वज्ञानोऽनुत्पन्नजीवन्मुक्तिरपरम: । उत्पन्नतत्त्वज्ञानउत्पन्नजीवन्मुक्तिस्तुपरमोयोगीति ॥ स्वर्णेलोष्ट शत्रौरण्ये सुस्निग्धे चन्दनेतथा । समताभावमायस्यसयोगीपरिकीर्त्तित: ॥ आत्मौपम्येनसर्वत्रसमंपश्यतियोऽर्जुन । सुखंवायदिवादु:खंसयोगीपरमोमत: ॥ योगोऽस्यास्ति । अतइनिठनाविती नि: कर्मयोगिणि ॥ यथा । योगिन: कर्मकुर्वन्तिसङ्गं त्यक्त्वात्मशुद्धयइति ॥

योगिनी । स्त्री० योगयुक्तायांनार्याम् ॥ भगवत्या: सखीरूपासुवरणदेवतासु ॥ ता: कोटिविधा । तासांचतु: षष्टि: प्रधाना: । तास्वष्टयोगिन्यो यथा । ततोष्टपत्रेष्वब्जस्य पूजयेदष्टयोगिनी: । शैलपुत्रींचण्डघण्टांस्कन्दमातरमेवच । कालरात्रिञ्चपूर्वादिचतुर्दिक्षुप्रपूजयेत् ॥ चण्डिकामथकूष्माण्डींतथाकात्यायनींशुभाम् । महागौरीञ्चाग्निकोणेनैर्ऋत्यादिषुपूजयेत् ॥ ब्रह्माद्यायोगिन: स्त्रीत्वविवक्षायामृन्नेभ्योङीविति नाम्नलघणोङीप् ॥ पश्चात्र योगिनीचक्रम् । मङ्गलादिषु । यथा मङ्गलापिङ्गलाधन्याभ्रामरीभद्रिकातथा । उल्कासिद्धि: सङ्कटाचयोगिन्योष्टौप्रकीर्तिता: ॥

योगिनीचक्रम् । न० तिथिविशेषे दिग्विशेषावस्थिति योगिनीषु ॥ यथा । ब्रह्माणीसंस्थितापूर्वेप्रतिपन्नवमीतिथौ । माहेश्वरीचोत्तरेचद्वितीयादशमीतिथौ । स्थिताग्नेये चकौमारीतृतीयैकादशीतिथौ । नारायणीचनैर्ऋत्येचतुर्थीद्वादशीतिथौ ॥ पञ्चम्यास्त्रयोदश्यांवाराहीदक्षिणेतथा । षष्ठ्यांचैवचयोदश्यामिन्द्राणीपश्चिमेस्थिता ॥ सप्तम्यांपौर्णिमास्यांचचामुण्डावायुगोचरे । अष्टम्यमावास्ययोश्चमहालक्ष्मीश्चगोचरे ॥ योगिनीसम्मुखेनैवगमनादिप्रकारयेत् ॥ अपिच । नवमीप्रतिपत्पूर्वे० वह्निरुद्रे ग्निकोणके ।

चयोदशशरेयास्य• वेदादिर्ध्येचमे स्ऽ ति । चतुर्दशरसे ऽस्मात्•पूर्णि मासुनिमाहुते । दशपञ्चोत्तरे दर्शा ष्टमीशानैचयोगिनी ॥ वामेशुभप्र दापृष्ठे वाञ्छितार्थप्रदायियिनी ॥ द क्षिणे भमकस्तोचसम्मुखेमृत्युदायि नी ॥

योगीन्द्रः । पुं• शिवे ॥ योगः पर मात्मचिन्तनम्• तद्वत्सुश्रेष्ठः ॥

योगीशः । पुं• शिवे ॥ विष्णौ • च- न्ये योगिनोयोगान्तरायैर्हन्यन्ते• स्व स्वरूपात्प्रमाद्यन्ति• चयन्तुतद्रहि तत्वात्तेषामीशः ॥ याज्ञवल्क्य मुनौ ॥

योगीश्वरः । पुं• शिवे ॥ योगिनामी श्वरः ॥ याज्ञवल्क्यमुनौ ॥

योगीश्वरी । स्त्री• दुर्गायाम् । यथा । योगिशक्त्याद्योदेवाः सनकान्ता स्तपोबलाः । तेषांस्वामीतथायोगी ईश्वरीप्रभुपालना ॥ चात्मेन्द्रियम नादीनांसंघोयोगगउच्यते । तेषां वायेजनाद्योगी योगैश्वर्यविबोधने तिदेवीपुराणम्

योगेशः । पुं• याज्ञवल्क्ये ॥

योगेश्वरः । पुं• सदाशिवे • सर्वज्ञ सर्वशक्तौभगवति । श्रीकृष्णे ॥ सर्वेषामणिमादिसिद्धिशालिनां योगिनामीश्वरः । सर्वयोगसिद्धी नामीश्वरः ॥

योगेश्वरी । स्त्री• वराटदेशस्थितायां मृदुर्गायाम् ॥ वन्ध्याकर्कोटक्याम् ॥

योगेष्टम् । न• सीसके । तागे । सी- साद्धिप्रसिद्धे धातौ ॥ योगेधातु- सम्बन्धे इष्टम् । सप्तमीतिसमासः ॥

योग्यम् । न• ऋद्धिनामौषधौ ॥ ऋद्धि नामौषधौ ॥ पुं• पुष्यनक्षत्रे ॥ त्रि• प्रवीणे ॥ योगार्हे ॥ उपाये योग्ये नार्थः कल्पमस्याञ्जनस्य ॥ शक्ते ॥ युज्यते । युजिर्• । ऋह लोर्ण्यत् ॥ यद्वा । योगायप्रभवति । योगाय्च ॥ अभ्यासे ॥ यथा । अपरः प्रणिधानयोग्ययामरुतः प ञ्चशरीरगोचरानितिरघुः । प्रणि- धानयोग्ययासमाध्यभ्यासेनवशमन यद्रितिसम्बन्धः ॥

योग्यता । स्त्री• वाक्यार्थज्ञानहेतौ । चर्थाबाधे ॥ अग्निनासिञ्चेदिति नप्रमाणम्• योग्यताविरहात् ॥ भावेतल् ॥ शाब्दबोधकारणविशे षे ॥ सतुपदार्थानांपरस्परसम्बंधे बाधाभावः । इतिसाहित्यदर्पणः ॥ न्यायमते• तत्पदार्थेतत्पदार्थ वत्ता । यथा । पदार्थेतत्रतद्वत्ता योग्यतापरिकीर्तिता । एकपदार्थे ऽपरपदार्थसंम्बन्धोयोग्यतेत्यर्थः । तदभावाभावाञ्चवह्निनासिञ्चतौ त्यादौनशाब्दबोधः ॥ चमतायामि तिलोकप्रसिद्धिः ।

योग्यरथः । पुं॰ वैनयिके ॥

योग्या । स्त्री॰ अभ्यासे ॥ अर्कयोषिति ॥ शस्त्राभ्यासे । खुरल्याम् । श्रमे ॥ टाप् ॥

योजकः । त्रि॰ नियोगकर्त्तरि ॥ योजयति । यु॰ । ण्वुल् ॥

योजनम् । न॰ परमात्मनि ॥ योगे ॥ चतुष्क्रोश्याम् । क्रोशचतुष्टये ॥ यथा । द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयन्तु शयः स्मृतः । तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुः सहस्रकः ॥ तच्चतुष्कं योजनं स्यादित्यादिमानमशास्त्रम् ॥ एतन्मते षोडशसहस्रहस्तैर्योजनं भवति ॥ द्वात्रिंशत्सहस्रहस्तैर्योजनमुक्तं लीलावत्यां यथा । यवोदरैरङ्गुलमष्टसङ्ख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः । हस्तैश्चतुर्भिर्भवतीह दण्डः क्रोशः सहस्रद्वितयेन तेषाम् ॥ स्याद्योजनं क्रोशचतुष्टयेन तथा कराणां दशकेन वंशः ॥ इति ॥ युजे ल्युट् ॥

योजनगंधा । स्त्री॰ कस्तूर्याम् ॥ सीतायाम् । व्यासमातरि । सत्यवत्याम् ॥ योजनाद्गंधो यस्याः ॥

योजनगंधिका । स्त्री॰ योजनगंधार्थे ॥ स्वार्थे कः । प्रत्ययस्थादितीत्वम् ॥

योजनपर्णी । स्त्री॰)
योजनवल्लिका । स्त्री॰) मञ्जिष्ठायाम् ॥

योजनवल्ली । स्त्री॰ मञ्जिष्ठायाम् ॥ योजनगामिनीवल्ली ॥

योजना । स्त्री॰ युक्तौ । योगकारणायाम् ॥

योजितः । त्रि॰ नियुक्ते ॥ प्रवर्त्तिते ॥ सम्पादिते ॥ युज्यते स्म । युजेः कर्म्मणि क्तः ॥

योटकः । पुं॰ विवाहोपयोगिविचारविशेषे ॥ स च॰ वर्णवश्यादिकूटभेदादष्टधा । तदुक्तम् । वर्णो वश्यं तथा तारा योनिश्च ग्रहमैत्रकम् । गणमैत्रं भकूटञ्च नाडी चैते गुणाधिकाः ॥ एते वर्णादिमैत्र्यां सङ्ख्यागुणाधिकाः स्युः । यथा वर्णमैत्र्यामेको गुणः । वश्ये द्वावित्यादि ॥

योतुः । पुं॰ परिमाणे ॥

योत्रम् । न॰ योक्त्रे । वृषादेर्गलेयुगबन्धने ॥ यूयतेऽनेन । यु॰ । दाम्नीतिष्ट्रन् ॥

योद्धा । पुं॰ योधे । भटे । युद्धकर्त्तरि ॥ युध्यते । युधसम्प्रहारे । तृच् ॥

योधः । पुं॰ योद्धरि । युध्यते । युध॰ । पचाद्यच् ॥ सात्यकौ ॥

योधनम् । न॰ अस्त्रे ॥ युद्धे ॥

योधसंरावः । पुं॰ क्रन्दने । अन्योन्यस्पर्द्धया योधानामाह्वाने ॥ योधानां संरावः । [illegible] । उपसर्गे रुव इति घञ् ॥

योनाल : । पुं० यवनाले । जूर्णाह्वये । देवधान्ये । जुन्हरी० जुवार० इ० प्र० धान्ये ॥

योनि : । पुं० स्त्री० आकारे ॥ कारणे ॥ तोये ॥ स्मरमन्दिरे । भगे । वराङ्गे । उपस्थे । रतिगृहे । जन्मवर्त्मनि । गर्भाधानस्थाने : तस्यलक्षणंयथा । शुभ: कमठपृष्ठाभोगजस्कन्धोपमोभग : । वामोन्नतश्चेत्कन्याज : पुत्रजोदक्षिणोन्नत : ॥ आखुरोमागूढमणि : सुश्लिष्ट : संवृत : पृथु : । तुङ्ग : कमलवर्णाभ : शुभो श्वत्थदलाकृति : ॥ कुरङ्गखुररूपोयस्तु चुल्लिकोदरसन्निभ : । रोमशोविवृतास्यश्च दृश्यनाशोतिदुर्भग : ॥ शङ्खावर्त्तो भगोयस्या : सागर्भं निहन्तिच्छति । चिपिट : कर्पराकार : किङ्करीपददोभग : ॥ वंशवेतसपत्राभोगजरोमोच्चनासिक : । विकट : कुटिलाकारोलम्बगल्लस्तथाशुभ : ॥ अपिच । शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्तासाप्रकीर्तिता । तस्यास्तृतीयेत्वावर्तेगर्भशय्या प्रतिष्ठिता ॥ यौति । युमिश्रणे । वह्निश्रीतिनि : ॥ प्रकृतौ ॥

योनिकन्द : । पुं० योनिरोगविशेषे ॥

योनिकूट : । पुं० वैवाहिकविचारोपयोगिनि० योटकविशेषे । सयथा । तोयेशाश्विभयोस्तुरङ्गउदितोवातार्कयो : कासर : पूर्वाभाद्रधनिष्ठयोर्मृगपतिर्यमान्त्ययो : कुक्कुर : । मेषोग्नीज्यभयोर्जलश्रवणयो: कीशोऽभिजिद्वैश्वयोर्वैभ्रब्राह्मभयोरहिर्सर्पज्येष्ठानुराधर्क्षयो : ॥ वातायु : शिवमूलयोस्तुसरमागौरर्यमोयान्तयोर्व्याघ्रश्चित्रविशाखयो : फणिपुनर्वस्वोस्तुमार्जारक : । आखु : पितृभगर्क्षयोस्तु कथितायोनिस्त्वभानामियंवैरस्थापितयोर्द्वयोरपि महत्पाणिग्रहंवर्जयेत् ॥ गोव्याघ्रं गजसिंहमश्वमहिषं श्वैणास्त्वबभ्रूरगं वैरंवानरमेषकंसुमहत्तद्वद्विडालोन्दुरम् । लोकानां व्यवहारतोन्यदपिचज्ञात्वाप्रयत्नादिदंदम्पत्योर्नृपभृत्ययोरपिसदावर्ज्यंशुभस्यार्थिभि : ॥ एकयोनिषुसम्पत्तिर्दम्पत्यो सङ्गम : सदा । भिन्नयोनिषुमध्या स्यादरिभावोनचेत्तयो : ॥ अपवादश्च । योनेरभावेनोद्वाह : कार्य:सतु वियोगद : । राशिवश्यस्वयंस्वामि- कारयेन्नतुदोषभाग् इति ॥

योनिज : । त्रि० योनिनि : सृतंशरीरे ॥

योनिदेवता । स्त्री० पूर्वफल्गुनी- नक्षत्रे ॥

योनिमुद्रा । स्त्री० देवतापूजायांप्रदर्श नीयाङ्गुलीरचितयोन्याकारमुद्रा

कारविशेषे ॥

योनिरोगः । पुं॰ भगन्दरे ॥

योन्यर्शः । न॰ भगजातरोगविशेषे । कन्दसंज्ञे ॥

योषा । स्त्री॰ अबलायाम् । नार्याम् ॥ योषति॰ योषयतिवा । युषसौत्रः सेवायाम् । पचाद्यच् ॥ युष्यते॰ योष्यतेवा । घञ् ॥

योषित् । स्त्री॰ स्त्रीमात्रे । योषायाम् ॥ सात्रिविधा । यथा । योषितस्त्रिविधाब्रह्मन्पृथिव्यां मूढचेतसाम् । साध्वीभोग्याश्च कुलटाता: सर्वा: स्वार्थतत्परा: ॥ परलोकभयात्साध्वीतथैवयशसात्मन: । कामस्नेहाच्चकुरुतेभर्तु: स्नेहन्नसन्ततम् १ ॥ भोग्याभोग्यार्थिनीशश्वत्कामस्नेहेऽप्यकेवलम् । कुरुतेरतिसेवाञ्चनच-भोग्यादृढञ्चयम् ॥ वस्त्रालङ्कारसम्भोगंपुष्टिगन्धारमुत्तमम् । यावत्प्राप्नोतिसाभोग्यातावच्चवशगाप्रिया ॥ २ ॥ कुलाङ्गारसमानारीकुलटाकुलनाशिनी । कपटात्कुरुतेसेवां स्वामिनोनचभक्तित: ॥ सदापुंयोगमांसंसुमत्तसामदनातुरा । आहारादधिकंजारंप्रार्थयन्तीनवंनवम् ॥ जारार्थेस्वपतिंतातहन्तुमिच्छतिपुंश्चली । तस्यांयो विश्वसेन्मूढोजीवनं तस्यनिष्फलम् ॥ कथितायोषित: सर्वाउत्तमाधममध्यमा: । स्वात्मा-

रामाविज्ञात्मिमनसातांनपरिहता ॥ योषते युष्यतेवा । युष॰ । इम् रुडियुषिभ्यइति: ॥ अवध्या: सर्वभूतानांयोषित: अन्यतामिति ॥

योषिता । स्त्री॰ योषिति ॥ युषेर्विज्ञानात्कर्मणिक्त: ।

योषित्प्रिया । स्त्री॰ हरिद्रायाम् ॥

यौक्तिक: । पुं॰ नर्मसचिवे । त्रि॰ युक्तियोग्ये ॥

यौगपद्यम् । न॰ एककालतायाम् ॥

यौगिक: । त्रि॰ योग्ये ॥ योगनित्यमर्हति छेदादित्वाट्ठञ् ॥ प्रकृतिप्रत्यययोगलभ्यार्थशाब्दके । योगायप्रभवति । योगाद्यच्चेति॰ ठञ् ॥ योगरूढाचरूढाचयौगिकाचेतितेत्रिधा चादितेयादिशब्दायौगिका: । अदितेरपत्यमिति॰ कृदिकारादक्तिनइतिङीषन्तात्स्त्रीभ्योढगितिढक् प्रत्ययेनकेवलंयोगार्थएव ॥

यौजनशतिक: । त्रि॰ शतयोजनयायिनि ॥ योजनानांशतम्॰ योजनशतम् । योजनशतंगच्छति । ठञ् । पुं॰ आचार्ये । योजनशतादभिगमनमर्हति । ततोभिगमनमर्हतीति अवक्तव्यमितिठञ् ।

यौजनिक: । त्रि॰ योजनमात्रयायिनि ॥ योजनंगच्छति । योजनंगच्छतीतिठञ् ।

यौतकम् । न॰ यौतुके । परिणयनका-

र्थे योधमौ । युतकंयोनिसम्बन्ध : । तत्रभवम् । तत्रभवइत्यण् ॥ युत योर्बन्धुवरयोर्वा॰ इदम् । तस्येदमि त्यण् ॥

यौतवम् । न॰ द्रवये । परिमाणे । यौतेर्बाहुलकाद्भावे॰ कर्त्तरिवातुन् । योतु : योधनम्॰ योधकीवा । तस्येदम् । अण् ॥

यौतुकम् । न॰ यौतके ॥

यौध : । पुं॰ योधे । योधएव । स्वार्थिक : प्रज्ञाद्यण् ॥

यौधिष्ठिर : । त्रि॰ युधिष्ठिरसम्बन्धिनि ॥ साचयौधिष्ठिरीसेनागाङ्गेयश रताडिता । प्रतिपत्पाठशीलानां विद्येवतनुतांगता ॥ युधिष्ठिरस्यायम् । तस्येदमित्यण् ॥

यौधिष्ठिरि : । पुं॰ युधिष्ठिरात्मजे ॥ कुर्वादिष्वंबाधित्वा॰ बाह्वादित्वा दिञ् । बहुत्वे॰ युधिष्ठिरा : । बहुवचनेतिलुक् ॥

यौन : । पुं॰ कन्यादानादिसम्बन्धे ॥ न॰ योनिसंबन्धाधीनपापे ॥

यौवतम् । न॰ युवतीनांवृन्दे ॥ परिमाणे॰ । युवतीनांसमूह : । यौती : शवन्तादुगितश्चेतिङीपि॰ अनुदात्तादेरञित्यञ् ॥ लास्यप्रभेदे ॥

यौवनम् । न॰ अवस्थाविशेषे । तारुण्ये ॥ यूनोभाव : । हायनान्तेत्यण्

ञ्नितिप्रकृतिभाव : ॥ कौमारंपञ्चमाब्दान्तंपौगण्डंदशमावधि । कैशोरमापञ्चदशाद्यौवनन्तुतत : परम् ॥ नवयौवनलक्षणंयथा । दरोद्भिन्नस्तनंकिंचिच्चलाक्षंमे दुरस्मितम् । मनागभिस्फुरद्भावंनव्यंयौवनमुच्यते ॥ नव्ययौवनकारकमौषधं यथा अश्वगन्धानागबलागुडमांसविपेचिणाम् । रूपंभवेद्यथातद्वन्नवयौवनधारिणाम् ॥ इति ॥ युवतिवृन्दे ॥ युवतीनांसमूह : । अत्रस्त्रियमस्तिरिति॰ स्त्रीयुवतिशब्द : । तस्मान्भिक्षादित्वादणिविवक्षिते॰ पुंवद्भावेऽन्नितिप्रकृतिभाव : ॥

यौवनकण्टक : । पुं॰ न॰ युवगण्डे । वयस्फोटे ॥

यौवनलक्षणम् । न॰ लावण्ये ॥ कुच ॥

यौवनाश्व : । पुं॰ मांधातरिनृपे ॥ यौवनाश्वोथमांधाताचक्रवर्त्त्यवनीप्रभु : । सप्तद्वीपवतीमेक : शशासाच्युततेजसा ॥ यावत्सूर्यउदेतिस्म यावच्चप्रतितिष्ठति । सर्वंतद्यौवनाश्वस्यमांधातु : क्षेत्रमुच्यते ॥ इति वह्निपुराणम् ॥

यौवनाश्वक : । पुं॰ मांधातृनृपे ॥

यौष्माक : । त्रि॰ युष्मदीये ॥ युवयोर्युष्माकंवाऽयम् । युष्मदस्मदोरन्यतरस्यांखञ्चेत्यञ् : पक्षेऽण् । प्रकृतेर्युष्माकादेश : ॥

यौष्माकीण : । त्रि॰ युष्मत्सम्बन्धिनि । युष्मदीये । यौष्माके ॥ युवयोर्युष्माकं वाऽयम् । युष्मदस्मदोरितिखञ् तस्मिन्नणिचयुष्माकास्माकौ ॥

० : ॥ : ०

---

र : । पुं॰ पावके । दहने ॥ तीक्ष्णे ॥ कामाग्नौ ॥ रेफे ॥ लघुमध्ये ऽ।ऽ पुं॰ न॰ ॥

रंसन् । त्रि॰ रममाणे ॥

रंहः । न॰ वेगे ॥ रमतेऽनेन । रमन्ते ह्रायाम् । रमेर्हुक्चेत्यसुन् । हुगागमश्च ॥ रंहत्यनेनवा । रंहयंवा । रंहिगतौ । असुन् । अचैवंवदन्ति रंहेरसुनासिद्धे॰ रङ्घ रमुनि॰ रङ्घ इतिमाभूदिति॰ रमेरितिसूत्रम् । तथाच । स्यान्मध्योमचतुर्यत्वमंहसोरंहसस्तथेतिद्विरूपकोश : । एतच्च॰ रङ्घ : सङ्गोऽसुराणां जगदुपकृतये नित्ययुक्तस्ययस्यस्तौतिप्रीतिप्रसन्नोन्वहमहिमरुचे : सोऽवतात्स्यन्दनोवः ॥ बृत्तिपाठोऽनुप्रासरसिकानांप्रामादिकइति ॥ सवेगगतिवचनेऽप्यप्रयोग : ॥ वेगाख्यगुणे ॥

रकार : । पुं॰ रेफाख्यवर्णे । वासवपविधिना॰ रात्कारप्रत्ययोपिभवति । रकारादीनिनामानिशृण्वतो ममपार्वतीतिलिङ्गात् ॥

रक्त : । पुं॰ बन्धूके ॥ लोहितवर्णे यथा । पाणिपादतलौरक्तौनेत्रान्तनिनखानिच । जिह्वाताल्वधरोष्ठौचसप्तरक्तोधनीभवेदितिसामुद्रिकम् ॥ कुसुम्भे ॥ हिङ्गुले ॥ न॰ कुङ्कुमे ॥ ताम्रे ॥ प्राचीनामलके ॥ पद्मके ॥ सिन्दूरे ॥ हिङ्गुले ॥ रक्तचन्दने ॥ शरीरस्थसप्तधातुमध्ये तधातुविशेषे ॥ रुधिरे ॥ असृजि लोहिते । अस्रे । क्षतजे । शोणिते । कीलाले । त्वग्जे । रक्तम्॰ मू॰ भा॰ प्र॰ ॥ रक्तस्यस्वरूपमाह । यद्रारसोयकृद्याति तत्र रञ्जकपित्तत ॥ । रागंपाकञ्चसम्प्राप्यसभवेद्रक्तसंज्ञक : ॥ रक्तंसर्वशरीरस्थं जीवस्याधार उत्तम : ॥ स्निग्धं गुरुचलंस्वादुविदग्धं पित्तवद्भवेत् ॥ जीवस्याधार उत्तमद्रुति । यतआह । जीवोवसति सर्वस्मिन्देहेतत्रविशेषत : । वीर्ये रक्ते मलेयस्मिन्क्षीणेयातिक्षयं क्षयात् इति ॥ वीर्येरक्तेमलेचशरीरारम्भके । वाग्भटोक्तपरिमाणविशेषे जीवोवसति॰ ऋतुस्त्रुत्वे प्रवृत्ते रक्तस्यावयोपदेशस्यवैयर्थ्यं प्रसङ्गात् । पित्तवद्भवेत्॰ अम्लं भवेदित्यर्थ : ॥ रक्तस्यस्थानमाह । । यकृत्प्लीहापरक्तस्यमुखं स्थानंतयो : स्थितम् । अन्यत्रापिस्थितंरक्तंतारक्तानांपोष

भवेत् ॥ इति ॥ रक्तदोषनाशक मौषधं यथा । अश्वयष्टिफलं पिष्टं वारिणातनुलेपनः । तेनयुक्तं रक्त दोषः प्रशमतिनसंशयः ॥ रक्त-तिका० रज्यतेवा । रञ्जरागे । कर्त्तर्येतिक्तः । कर्मणिक्तोवा ॥ त्रि० अनुरक्ते ॥ नील्यादिरंजिते ॥ लोहिते ॥ क्रीडारते ॥

रक्तक : । पुं० अम्लाने ॥ बन्धूके ॥ रक्तवस्त्रे ॥ रक्तशिग्रौ ॥ रक्तैर-ण्डे ॥ न० हिङ्गुले ॥ त्रि० अनुरा-गिणि ॥ विनोदिनि ॥ रक्तपुष्पत्वा त्०रक्त : । स्वार्थेकन् ॥

रक्तकन्द : । पुं० विद्रुमे ॥ राजपला ण्डौ ॥ रक्तालौ ॥

रक्तकन्दल : । पुं० प्रवाले ॥

रक्तकमलम् । न० रक्तोत्पले ॥ कोक-नदे ॥

रक्तकम्बलम् । न० रक्तोत्पले ॥ यथा पाद्मे । रक्तकमलै :कुमुदै: पुष्पै : कल्हारै रक्तकं बलैरिति ॥

रक्तकरवीरक : । पुं० रक्तप्रसवे । रा-ज०प्रकुसुमे । चण्डीकुसुमे । भूत द्राविणि । रविप्रिये । लालकनेर० इतिभाषाप्रसिद्धे ॥

रक्तकाञ्चन : । पुं० रक्तकोविदारद्रु-मे । चमरिके ॥

रक्तकाण्डा । स्त्री० रक्तपुनर्नवाया-म् ॥

रक्तकाष्ठम् । न० पतङ्गे ॥

रक्तकुमुदम् । न० रक्तकैरवे ॥

रक्तकुसुम : पुं० पारिभद्रे ॥ धन्वन-वृक्षे ॥

रक्तकेशर : । पुं० पारिभद्रे ॥ पुन्ना-गवृक्षे ॥

रक्तकैरवम् । न० रक्तकुमुदे ॥

रक्तकोकनदम् । न० रक्तोत्पले ॥

रक्तखदिर : । पुं० रक्तसारे । बहुश-ल्ये । याज्ञिके ॥

रक्तगन्धकम् । न० बोले ॥

रक्तगुल्म : । स्त्रीणांरक्तजगुल्मरोगे ॥ तस्यौषधं यथा । त्रिलयष्टीत्रिकटु कं चूर्णंपीतं हरेच्छिव । तिलक्वाथेन-संयुक्तं रक्तगुल्मं स्त्रियाहर ॥

रक्तघ्न : । पुं० रोहितकवृक्षे ॥

रक्तघ्नी । स्त्री० दूर्वाविशेषे । मांठिया-दूर्वाइ०गौ०दे०भा०प्र० ॥

रक्तचन्दनम् । न० स्वनामप्रसिद्धेच न्दने । पत्राङ्गे । कुचन्दने । ताम्र सारे । रक्तंशीतंगुरुस्वादुच्छर्दितृ-ष्णास्रपित्तहृत् । पित्तनेत्रहितंवृष्यं ज्वरव्रणविषापहम् ॥ रक्तञ्चतत्च न्दनञ्च ॥ रक्तसारे ॥ रक्तचन्दनमि व । रक्तसारत्वात् ॥

रक्तचित्रक : । पुं० क्षुपविशेषे । काले । कालमूले । दारुके । चि-त्राङ्गे । राङ्गचिता०इ०गौ०दे०भा षाप्र० ॥

रक्तचूर्णम् । न० सिन्दूरे ॥ रक्तवर्णचूर्णमात्रे ॥

रक्तजन्तुकः । पुं० भूनागे ॥ रक्तवर्णजन्तुमात्रे ॥

रक्तजिह्वः । पुं० सिंहे ॥ त्रि० रक्तवर्णजिह्वायुक्ते ॥

रक्तझिण्टी । स्त्री० कुरबके ॥

रक्ततुण्डः । पुं० शुकपक्षिणि ॥ त्रि० लोहितमुखयुक्ते ॥

रक्ततुण्डकः । पुं० भूनागे ॥

रक्ततृणा । स्त्री० गोमूत्रिकायाम् ॥

रक्तत्रिवृत् । स्त्री० रक्तवर्णत्रिवृतायाम् त्रिपुटायाम् । ताम्रपुष्पिकायाम् ॥

रक्तदन्तिका । स्त्री० चण्डिकायाम् ॥ तत्स्थाने ॥

रक्तदला । स्त्री० नलिकायाम् ॥ चिविल्लिकायाम् ॥

रक्तधातुः । पुं० गैरिके ॥ ताम्रे ॥

रक्तनालः । पुं० जीवशाके ॥

रक्तनासिकः । पुं० पेचके ॥ त्रि० लोहितनासिकाविशिष्टे ॥

रक्तपः । पुं० यातुधाने । राक्षसे ॥ रक्तंपिबति । पा० । घातोनुपेतिकः त्रि० रक्तपानकर्त्तरि ।

रक्तपटः । पुं० वैनाशिकविशेषे ॥ साङ्ख्यभिक्षौ ॥

रक्तपत्रिका । स्त्री० नाकुल्याम् ॥ रक्तपुनर्नवायाम् ॥

रक्तपद्मी । स्त्री० समङ्गायाम् । क्षुद्रक्षुपविशेषे ॥

रक्तपद्मः । पुं० न० रक्तोत्पले । कोकनदे ॥

रक्तपल्लवः । पुं० अशोकवृक्षे । लोहितपत्रे ।

रक्तपा । स्त्री० जलौकायाम् ॥ डाकिन्याम् ॥ रक्तंपिबति । पा० धातो नुपसर्गकः ॥

रक्तपाकी । स्त्री० वृहत्याम् ॥

रक्तपाता । स्त्री० जलौकायाम् ॥

रक्तपादः । पुं० शुकपक्षिणि ॥

रक्तपादी । स्त्री० लज्जालौ ॥ हंसपद्याम् ॥

रक्तपायी स्त्री० रक्तपानशीले ॥

रक्तपायिनी । स्त्री० जलौकायाम् ॥

रक्तपारदः । पुं० न० हिङ्गुले ॥

रक्तपिण्डम् । न० जवापुष्पे ॥ द्रू० शब्दरत्नावली ॥

रक्तपिण्डकः । पुं० रक्तालौ । रतालू० द्रू० भा० ॥

रक्तपित्तम् । न० रोगविशेषे ॥

रक्तपित्तहा पुं० रक्तचन्याम् ॥

रक्तपुच्छिका । स्त्री० ब्राह्मण्याम् । वाह्मनीतिप्रसिद्धजन्तुविशेषे ॥

रक्तपुनर्नवा स्त्री० रक्तपुनर्नवाशाके । मण्डलपत्रिकायाम् । रक्तकाण्डायाम् । रक्तपुष्पिकायां

म् शोणपत्ते ॥

रक्तपुष्प : । रक्तकरवीरे ॥ रक्ता र्के ॥ बन्धूकवृक्षे ॥ पुन्नागवृक्षे ॥ बकवृक्षे ॥ दाडिमे ॥ रोहितकवृक्षे ॥ रक्तकाञ्चनवृक्षे ॥

रक्तपुष्पक : । पुं० रोहितकद्रुमे ॥ पलाशवृक्षे ॥ पर्पटे ॥ शाल्मलिवृक्षे ॥

रक्तपुष्पा । स्त्री० शाल्मलिवृक्षे ॥ रक्तपुनर्नवायाम् । सिन्दूर्याम् रक्तानिलोहितानिपुष्पाण्यस्या : ॥

रक्तपुष्पिका । स्त्री० लज्जालौ ॥ रक्तपुनर्नवायाम् ॥ भूपाटलौ ॥

रक्तपुष्पी । स्त्री० पाटलिवृक्षे ॥ जवायाम् ॥ आवर्तकीलतायाम् ॥ नागदमन्याम् ॥ करुणीवृक्षे ॥ उष्ट्रकाण्डाम् ॥

रक्तपूरकम् । न० वृक्षाम्ले ॥

रक्तप्रसव : । पुं० रक्तकरवीरे ॥ रक्ताम्लाने ॥

रक्तफल : पुं० वटवृक्षे ॥

रक्तफला । स्त्री० पीलुपर्ण्याम् । बिम्बिकायाम् । कुंदुरु० कुंदूरी० इतिख्यातौषधौ ॥ रक्तानिफलान्यस्या : । अजादित्वाट्टाप् ॥

रक्तफेनज : । पुं० वामपार्श्वस्थक्लोम्नि । पुप्फुसे ॥

रक्तवालुकम् न० सिन्दूरे ॥

रक्तमञ्जर : । पुं० निचुलवृक्षे ॥

रक्तमत्स्य : । पुं० रक्तवर्णमत्स्यविशेषे ॥ यथा । योरक्तकोनातिदीर्घोनिता न्तोनातिस्थूलोरक्तमत्स्य : सतु क्त: । शीतोरुच्य: पुष्टिकृद्दीपनो सौनाशं धत्ते किञ्चद्दोषत्रयस्य ॥

रक्तमाल : । पुं० चिरबिल्वे । करञ्जके ॥

रक्तमूलक : । पुं० देवसर्षपवृक्षे ॥

रक्तमेह : । पुं० प्रमेहरोगविशेषे ॥

रक्तमोक्षणम् न० शोणितस्रावे ॥ वेदनोपशमार्थायतथापाकशमायच । अचिरोत्पतितेशोथेशोणितस्रवणं चरेत् ॥ चरेत्० कुर्यात् । एकतस्तु क्रिया : सर्वारक्तमोक्षणमेकत : । रक्तं हिवेदनामूलंतच्चेन्नास्तिनचापिरुक् ॥ विवर्णे काठिनेश्यावेव्रणे चात्यन्तवेदने । सविशेषे विशेषेणाजलौकाभि : पदैरपि ॥ शोणितस्रावणं चरेदित्यनेनान्वय : ॥

रक्तयष्टि : । स्त्री० )
रक्तयष्टिका स्त्री० ) मञ्जिष्ठायाम् ॥

रक्तयावनाल : । पुं० तुवरयावनाले ॥

रक्तराजतम् । न० शोणमुक्ताफले ॥

रक्तरेणु : । पुं० सिन्दूरे ॥ पलाशकोरके ॥ पुन्नागे ॥ रक्तारेणवोस्य ॥

रक्तरेणुका । स्त्री० पलाशकलिकायाम् ॥

रक्तरैवतकम् । न० महापारे[illegible] ॥

रक्तलशुन : । पुं० महाकान्दे । गृञ्जने । दीर्घपत्रके । पृथुपत्रे । स्थूल

[illegible] । यवनेष्टे ॥ गृञ्जनस्यमधुरं कटुकन्दं नालमप्यु पदिशन्तिकषायम् । पत्रसस्वयमुशन्तिसतिक्तंसूरयोलवणमस्थिवदन्तीतिराजनिर्घंटः ॥

रक्ता । स्त्री० काकतुण्डाम् ॥

रक्तलोचन: । पुं० कपोते ॥ त्रि० लोहितलोचनयुक्ते ॥ रक्तेलोचनेयस्य: ॥

रक्तवटी । स्त्री० मसूरिकायाम् ॥

रक्तवर्ग: । पुं० किंशुके ॥ दाडिमे बन्धूके ॥ लाक्षायाम् ॥ निशाद्वये कुसुम्भपुष्पे ॥ मंजिष्ठायाम् ॥

रक्तवर्ण: । पुं० इन्द्रगोपे ॥

रक्तवर्द्धन: । पुं० वार्त्ताकौ ॥

रक्तवर्षाभू: । स्त्री० रक्तपुनर्नवायाम् ॥

रक्तवसन: । पुं० सन्न्यासिनि ॥ त्रि० लोहितवस्त्रवति ॥ न० रक्तांशुवस्त्रे ॥

रक्तवात: । पुं० रोगविशेषे ॥ नारिकेलस्यैवमूलंक्षीरेणसंयुतम् । पिबेच्चत्रिविधस्तस्यरक्तवातोविनश्यति ॥

रक्तवालुका । स्त्री० सिन्दूरे ॥

रक्तबिन्दु: । पुं० रुधिरकणे ॥

रक्तबीज: । पुं० दाडिमे । शुम्भनिशुम्भयो: सेनापतावसुरविशेषे ॥

रक्तबीजका । स्त्री० तरदोद्भवे ॥

रक्तवृन्ता । स्त्री० शेफालिकायाम् ॥

रक्तवृष्टि: । स्त्री० रुधिरवर्षणरूपे० उत्पातविशेषे ॥ तत्फलंयथा [illegible] यथा रक्तेशस्त्रोद्योगोमांसास्थिवसादिभिर्मरक: । धान्यहिरण्यत्वक्फलकुसुमाद्यैर्वर्षितैर्भयंविद्यात् ॥

रक्तशालि: । पुं० रक्तवर्णधान्यविशेषे ॥ ताम्रशालौ । शोणशालौ ॥

रक्तशासनम् । न० सिन्दूरे ॥

रक्तशिग्रु: । पुं० रक्तशोभाञ्जनवृक्षे । रक्ताक्षे । मधुरे ॥ रक्तोमधुर: रक्तकण्ठानामितिदर्शनात् । सचासौशिग्रु: । रक्तोवर्णोमपुष्पेवावा ॥

रक्तशीर्षक: । पुं० सरलद्रवे ॥

रक्तशृङ्गिकम् न० विषे ॥

रक्तसंज्ञ: । पुं० कुङ्कुमे ॥

रक्तसन्दंशिका । स्त्री० जलौकायाम् ॥

रक्तसन्ध्यकम् । न० रक्तकह्लारे । उत्पले ॥ रक्तासन्ध्येव । इवार्थे कन् । कोप: ॥ रक्तानुसन्धीन् कति । अकुटिलायांगतौ । मूलविभुजादित्वात्को वा ॥

रक्तसरोरुहम् । न० रक्तपद्मे ॥ रक्तञ्चतत्सरोरुहञ्च ॥

रक्तसर्षप: । पुं० राजिकायाम् ॥

रक्तसहा । स्त्री॰ रक्ताम्लाने ॥
रक्तसारः । पुं॰ रक्तखदिरे ॥ अम्लवेतसे ॥ न॰ रक्तचंदने ॥ पतङ्गे । बकम॰ इतिख्याते ॥
रक्तसौगन्धिकम् । न॰ रक्तकह्लारे । रक्तसौंधी॰ इ॰भा॰प्र॰ ॥ रक्तवर्णविकालविकाशिपुष्पवृक्षे ॥ रक्तश्चतत्सौगन्धिकश्च ॥
रक्तस्राव : । पुं॰ रक्तपतने ॥
रक्तहंसा । स्त्री॰ रागिणीविशेषे ॥
रक्ता । स्त्री॰ गुञ्जायाम् ॥ लाक्षायाम् ॥ मञ्जिष्ठायाम् ॥ उष्ट्रकाण्डाम् ॥
रक्ताकार : । पुं॰ प्रवाले ॥
रक्ताक्तम् । न॰ रक्तचन्दने ॥ त्रि॰ शोणितमिश्रिते ॥
रक्ताक्ष : । पुं॰ कासरे । महिषे ॥ क्रूरे ॥ पारावते ॥ चकोरे ॥ सारसे ॥ षष्टिवत्सरान्तर्गतवत्सरविशेषे ॥ दुर्भिक्षं मरणं रोगो धान्यौषधिप्रपीडनम् । पापरोगा भवेद्देवि रक्ताक्षेऽमरवन्दिते ॥ ५८ ॥ त्रि॰ रक्तनेत्रवति ॥ रक्तेअक्षिणीयस्य : । अक्ष्णोदर्शनादित्यच् ॥
रक्ताङ्ग : । पुं॰ भौमग्रहे ॥ कम्पिल्ले ॥ प्रवाले । मत्कुणे ॥ मण्डले ॥ कमलासे ॥ न॰ विद्रुमे ॥ धीरे । रक्तचन्दने ॥ कुङ्कुमे ॥
रक्ताङ्गा । स्त्री॰ जीवंतिकायाम् ॥
रक्ताङ्गी । स्त्री॰ मञ्जिष्ठायाम् ॥
रक्तातिसार : । पुं॰ रोगविशेषे ॥ पित्तकृन्तियदा त्वर्थं द्रव्यमश्नाति पैत्तिकी । तद्दोषाज्जायते शीघ्रं रक्तातीसार उल्बण : ॥ वत्सकातककत्वगार्द्रादाडिमफलसम्भवात्स्वक् च । त्वग्युगलं पलमानं विपचेदष्टाङ्गसम्मितेतोये ॥ अष्टमभागं शेषं क्वाथं मधुनापिबेत् पुरुष : । रक्तातिसारमुल्बणमतिशयितं नाशयेन्नियतम् ॥ कुटजदाडिमक्वाथ : ॥ गोदुग्धनवनीतन्तु मधुनासितयासह । लीढं रक्तातिसारेतु ग्राहकं परमं महत् ॥ नवनीतावलेह : ॥ पीतं मधुसितायुक्तं चन्दनं तण्डुलाम्बुना । रक्तातिसारजिद्रक्तपित्ततृड्दाहमेहनुत् ॥ चन्दनमचश्वेतम् । चन्दनकल्क : ।
रक्ताधार : । पुं॰ चर्मणि ॥
रक्तापहम् । न॰ बोले ॥
रक्तापामार्ग : । पुं॰ क्षुद्रापामार्गे । चाघट्टके ॥
रक्ताम्बरम् । न॰ वह्निशिखाख्यकुसुमरञ्जितेवस्त्रे ॥ काषायवस्त्रे ॥ त्रि॰ तद्वति ॥
रक्ताम्र : । पुं॰ कोशाम्रे ॥
रक्ताम्लान : । पुं॰ कुरुबके ॥
रक्तार्क : । पुं॰ अर्कपर्णे । विकीरणे ॥ रक्तार्कपुष्पं मधुरं सतिक्तंकु

कन्दे । यवनेष्टे ॥ गृञ्जनस्यमधुरं कटुकन्दं नालमप्यपदिशन्तिकषायम् । पत्रसञ्चयमुशन्तिसतिक्तंमरयोलवणमस्थिवदन्तीतिराजनिर्घण्ट: ॥

रक्तला । स्त्री० काकतुण्डाम् ॥

रक्तलोचन: । पुं० कपोते ॥ त्रि० लोहितलोचनयुक्ते ॥ रक्तेलोचनेयस्य: ॥

रक्तवटी । स्त्री० मसूरिकायाम् ॥

रक्तवर्ग: । पुं० किंशुके॥ दाडिमे बन्धूके ॥ लाचायाम् ॥ निशाद्वये कुसुम्भपुष्पे ॥ मञ्जिष्ठायाम् ॥

रक्तवर्ण: । पुं० इन्द्रगोपे ॥

रक्तवृन्त: । पुं० वार्त्ताकौ ॥

रक्तवर्षाभू: । स्त्री० रक्तपुनर्नवायाम् ॥

रक्तवसन: । पुं० सन्न्यासिनि । त्रि० लोहितवस्त्रवति ॥ न० रक्तवस्त्रे ॥

रक्तवात: । पुं० रोगविशेषे ॥ नारिकेलस्यैवमूलंक्षीरेणसंयुतम् । पिबेत्त्रिदिवसंरक्तवातोविनश्यति ॥

रक्तवालुका । स्त्री० सिन्दूरे ॥

रक्तविन्दु: । पुं० रुधिरलवणे ॥

रक्तबीज: । पुं० दाडिमे । शुम्भनिशुम्भयो: सेनापतावसुरविशेषे ॥

रक्तबीजका । स्त्री० तरदीवृक्षे ॥

रक्तवृन्ता । स्त्री० शेफालिकायाम् ॥

रक्तवृष्टि: । स्त्री० रुधिरवर्षणरूपे० उत्पातविशेष ॥ तत्फलंशस्त्रोद्योगोयथा रक्तेशस्त्रोद्योगोमांसास्थिवसादिभिर्भय: । धान्यहिरण्यत्वक्फलकुसुमाद्यैर्वर्षितेभयंविद्यात् ॥

रक्तशालि: । पुं० रक्तवर्णधान्यविशेषे ॥ ताम्रशालौ । शोणशालौ ॥

रक्तशासनम् । न० सिन्दूरे ॥

रक्तशिर: । पुं० रक्तशोभाञ्जनवृक्षे । रक्ते । मधुरे ॥ रक्तामधुर: ॰ रक्तस्थानामितिदर्शनात् । सचासौशिग्रु: । रक्तसौवर्णनपुष्पवा ॥

रक्तशीर्षक: । पुं० सरलद्रवे ।

रक्तशृङ्गिकम् न० विषे ॥

रक्तसंज्ञ: । पुं० कुङ्कुमे ॥

रक्तसन्दंशिका । स्त्री० जलौकायाम् ॥

रक्तसन्ध्यकम् । न० रक्तपद्मे । रक्तसन्ध्येव । बुवार्थे कन् । कोण: ॥ रक्तान्सन्धीन्कति । अककुटिलायांगतौ । मूलविभुजादित्वात्कोवा ॥

रक्तसरोरुहम् । न० रक्तपद्मे ॥ रक्तञ्चतत्सरोरुहञ्च ॥

रक्तसर्षप: । पुं० राजिकायाम् ॥

रक्तसहा। स्त्री॰ रक्ताम्लाने ॥

रक्तसार:। पुं॰ रक्तखदिरे ॥ अम्लवेतसे ॥ न॰ रक्तचंदने ॥ पतङ्गे । वकम॰ इतिख्याते ॥

रक्तसौगन्धिकम्। न॰ रक्तकह्लारे। रक्तसौंधी॰ इ॰भा॰प्रा॰ ॥ रक्तवर्णच्छिकालविकाशिपुष्पवृक्षे ॥ रक्तश्चतत्सौगन्धिकञ्च ॥

रक्तस्राव:। पुं॰ रक्तपतने ॥

रक्तहंसा। स्त्री॰ रागिणीविशेषे ॥

रक्ता। स्त्री॰ गुञ्जायाम् ॥ लाक्षायाम् ॥ मञ्जिष्ठायाम् ॥ उपकारिकायाम् ॥

रक्ताकार:। पुं॰ प्रवाले ॥

रक्ताक्तम्। न॰ रक्तचन्दने ॥ त्रि॰ शोणितमिश्रिते ॥

रक्ताक्ष:। पुं॰ कासरे। महिषे ॥ क्रूरे ॥ पारावते ॥ चकोरे ॥ सारसे ॥ षष्टिवत्सरान्तर्गतवत्सरविशेषे ॥ दुर्भिक्षं मरणं रोगोधान्यौषधिप्रपीडनम्। पादरोगाभवेद्देवि रक्ताक्षेऽमरवन्दिते ॥ ५८ ॥ त्रि॰ रक्तनेत्रवति ॥ रक्तेअक्षिणीयस्य स:। अक्ष्णोदर्शनादित्यच् ॥

रक्ताङ्ग:। पुं॰ भौमग्रहे ॥ काम्पिल्ले ॥ प्रवाले। मत्कुणे ॥ मण्डले ॥ कृकलासे ॥ न॰ विद्रुमे। धीरे। रक्तचन्दने ॥ कुङ्कुमे ॥

रक्ताङ्गा। स्त्री॰ जीवंतिकायाम् ॥

रक्ताङ्गी। स्त्री॰ मञ्जिष्ठायाम् ॥

रक्तातिसार:। पुं॰ रोगविशेषे ॥ पित्तकृन्ति यदा त्यर्थं द्रव्यमश्नातिपैत्तिके। तद्दोषाज्जायतेशीघ्रं रक्तातीसार उल्वण: ॥ वत्सकस्तरुत्वगाद्रीदाडिमफलसम्भवास्त्वक् च। त्वग्युगलं पलमानं विपचेदष्टाङ्गसम्मितेतोये ॥ अष्टमभागं शेषं क्वाथं मधुनापिबेत्पुरुष:। रक्तातिसारमुल्वणमतिशयितं नाशयेन्नियतम् ॥ कुटजदाडिमक्काथ: ॥ गोदुग्धनवनीतन्तु मधुनासितयासह। लीढं रक्तातिसारेतुग्राहकं परमं महत् ॥ नवनीतावलेह: ॥ पीतं मधुसितायुक्तं चन्दनं तण्डुलाम्बुना। रक्तातिसारजिद्रक्तपित्ततृड्दाहमेहनुत् ॥ चन्दनमचक्षेतम्। चन्दनकल्क: ।

रक्ताधार:। पुं॰ चर्मणि ॥

रक्तादहम्। न॰ बोले ॥

रक्तापामार्ग:। पुं॰ क्षुद्रापामार्गे। आघट्टके ॥

रक्ताम्बरम्। न॰ वह्निशिखाख्यकुसुम्भरञ्जितेवस्त्रे ॥ काषायवस्त्रे ॥ त्रि॰ तद्वति ॥

रक्ताम्र:। पुं॰ कोशाम्रे ॥

रक्ताम्लान:। पुं॰ कुरुवके ॥

रक्तार्क:। पुं॰ अर्कपर्णे। विकीरणे ॥ रक्तार्कपुष्पं मधुरं सतिक्तंकु

च्छक्तमिच्चं कफनाशनञ्च । वाखोर्वि षंवह्निचरक्तपित्तसङ्ग्रहिगुल्म-श्वयथौहितं तत् ॥
रक्ताम्नम् । न० नेत्ररोगविशेषे ॥ तल्ल क्षणंयथा । पद्माभं मृदुरक्तामंय-न्मांसंचीयतेसिते ॥
रक्तार्बुदः।पुं० उपपापोद्भवेरोगविशेषे॥
रक्तार्शः । न० अर्शोरोगविशेषे ॥
रक्तालुः । पुं० रक्तपिण्डालौ । रक्त-कन्दे । लोहितालौ । रतालु०रत गडा०हु०भा०प्र०कन्दे ॥
रक्ताशोकः । पुं० वृक्षविशेषे ॥
रक्तिका । स्त्री० गुञ्जायाम् । रत्ती०घुं घची०चिरमिठी०हु०भा०प्र० भिन्न भूषणायाम् । राजिकायाम् ॥ र-क्तिकापरिमाणे ॥
रक्तिमा । पुं० लोहितत्वे ॥
रक्तेक्षुः।पुं० रक्तवर्णेक्षौ। सूक्ष्मपत्रे॥
रक्तेरण्डः । पुं० व्याघ्रे । हस्तिक-र्णे । रुबौ ॥
रक्तेर्वारुः । पुं० इन्द्रवारुण्याम् ॥
रक्तोत्पलः । पुं० शाल्मलिवृक्षे ॥ न०कोकनदे । रक्तसरोरुहे ॥
रक्तोत्पलाभः । पुं० शोणवर्णे । त्रि० तद्वति ॥
रक्तोत्पलम् । न० गैरिके ॥
रक्षः । पुं० मन्त्रगुप्तसमर्थे ॥ रक्षति । रक्षपालने । पचाद्यच् ॥
रक्षःसभम् । न० रक्षःसमूहे ॥

रक्षकः । त्रि० रक्षितरि ॥ अनाथबा लवृद्धानांरक्षकाः सर्वदेवताः ॥ रक्षति । रक्ष० । ण्वुल् ॥
रक्षणम् । न० पालने ॥ रक्षल्ल्युट् ॥ आपदर्थेधनंरक्षेद्दारान्रक्षेद्धनैर पि । आत्मानंसततंरक्षेद्दारैर पिधनैरपि ॥ त्रि० रक्षके । पाल के ॥ रक्षति० पालयति । रक्ष० । नन्द्यादित्वाल्ल्युः ॥
रक्षणिः । स्त्री० त्रायमाणायांलता याम् ॥
रक्षणीयः । त्रि० रक्ष्ये । रक्ष० । अ नीयर् ॥
रक्षन् । त्रि० रक्षितरि । रक्षति । र क्ष० । शतृ ॥
रक्षः । न० राक्षसे । निर्ऋतिप्रभृतौ ।रावणादौ । रक्षन्त्यस्मात् । रक्ष० । सर्वधातुभ्योऽसुन् ॥ निर्दये ॥ यथा । दृष्ट्वातुविकलान्व्यङ्गाननना थान्रोगिणस्तथा । दयानजायतेय स्यसरक्षइतिमेमतिः ॥
रक्षा । स्त्री० जतुनि । रक्षणे । बा धानिवृत्तौ ॥ योगयुक्तोजनार्दनं चिन्तयेदितियत्साध्यचिन्तकस्यप रारक्षेत्यहंमन्ये । यथोक्तंसहस्र नामभाष्ये । नित्यं संचिन्तयेदेष योगयुक्तोजनार्दनम् । साप्यरक्षा परामन्येकोहिनस्यच्युताश्रयमि ति ॥ रक्षणम् । रक्ष० । गुरोश्चहल

त्यस्य : । टाप् ॥ भस्मनि ॥ श्राव
ण्यांपौर्णमायान्तुरक्षाबन्धनमिष्यते
। यथा । पौर्णमास्यांहरेरक्षाबन्धनं
विधिपूर्वकम् । ब्रजराजकुमारस्था
त्कैचिदिच्छन्तिसाधव : ॥ तत्रभ
द्रासङ्गंवेलामतिक्रम्यैवकुर्य्यात् ।
तथाचस्मृति : । भद्रायांद्वेनकर्त्त
व्ये श्रावणीफाल्गुनीतथा । श्राव
णीनृपतिंहन्तिग्रामान्दहतिफाल्
गुनीति ॥ विधिश्चभविष्योत्तरे ।
उपाकर्मदिनेप्रोक्तमृषीणांचैवतर्प
णम् । ततोऽपराह्णसमयेरक्षापोट
लिकांशुभाम् ॥ कारयेदक्षतै :
शस्तै : सिद्धार्थैर्हेमभूषिताम् । व
स्त्रैर्विचित्रै : कार्पासै : क्षौमैर्वा
मलवर्ज्जितै : ॥ विचित्रंग्रथितं
सूत्रंस्थापयेद्भाजनोपरि । उपलिप्ते
गृहमध्ये दत्तचतुष्के न्यसेच्छुभं
पीठम् । तत्रोपविशेद्राजासामा
त्य : सपुरोहित : समुहृत् ॥ तद
नुपुरोधान्नृपतेरक्षांबध्नीतमन्त्रेण ।
येनबद्धोबलीराजादानवेन्द्रोमहाब
ल : । तेनत्वांप्रतिबध्नामिरक्षे मा
चलमाचल ॥ यद्वाबध्नं दाक्षायणा
इत्यादिर्वैदिकोप्यत्रमन्त्र : पठनी
य : ॥ ब्राह्मणै : क्षत्रियैर्वैश्यै :
शूद्रैश्चान्यैश्चमानवै : । कर्त्तव्यो
रक्षणाचारोविप्रान्सम्पूज्यशक्ति
त : । अनेनविधिनायस्तुरक्षिका
बन्धमाचरेत् । ससर्वदोषरहित :
सुखंसम्वत्सरं वसेत् । इति ॥

रक्षापत्र : । पुं० भूर्जवृक्षे ॥ न० भू
र्जत्वचि ॥

रक्षिका । स्त्री० रक्षायाम् । रखडी०
इ० भा० ॥

रक्षित : । त्रि० त्राते । गोपायिते ।
गुप्ते ॥ रक्ष्यतेस्म । रक्ष० । क्त० ॥

रक्षिता । त्रि० रक्षाकर्त्तरि । रक्षके
॥ यथा । आयव्ययज्ञोलोकज्ञोदेशो
त्पत्तिविशारद : । कृताकृतज्ञोभृत्या
नांज्ञेय : स्यादेषरक्षिता ॥

रक्षी । त्रि० रक्षके ॥ अवश्यं रक्षति ।
रक्ष० । णिनि : ॥

रक्षिवर्ग्ग : । पुं० अनीकस्थे । राजर
क्षकगणे ॥ अवश्यं रक्षन्ति । रक्ष
पालने । आवश्यकेतिणिनि : । र
क्षिणांवर्ग्ग : ॥

रक्षोघ्न : । पुं० सिद्धार्थे । सितसर्ष
पे ॥ भल्लातकवृक्षे ॥ न० काञ्जि
के ॥ हिङ्गुनि ॥

रक्षोघ्नधूपं : । पुं० गुग्गुल्वगुरुसर्जरस
वचागौरसर्षपचूर्णलवणनिम्बपत्र
व्यामिश्रे घृतसंयुक्ते ॥

रक्षोघ्नी । स्त्री० वचायाम् ॥ दुर्गाया
म् ॥

रक्षोजननी । स्त्री० रात्र्याम् ॥ राक्ष
समातरि ॥

रक्षोहा । त्रि० रक्षसांहन्तरि ॥ पुं०

गुग्गुलौ ।

रघ्ग :। पुं० चापौ ॥ रघ० । यज यार्थे तिनङ् ॥

रघु :। पुं० सूर्यवंशीयदिलीपराज पुत्रे । श्रीरामचन्द्रस्यप्रपितामहे । लङ्कते । लघिगतौ । लघिवंहोर्न लोपश्चेतिकुर्नलोपश्च । बालमूलल घुङ्गलीनांवालोरत्वमापद्यते० इतिर त्वम् ॥ रङ्कतेनाशं गच्छतीतिव्युत् पत्त्या० व्यष्टिसमष्टिरूपेऽन्नमयको षे ॥

रघुकार :। पुं० कालिदासकवौ ॥ रघुंकाव्यविशेषंकरोति । इकञ्० । कर्मण्यण् ॥

रघुनन्दन :।<br>रघुनाथ :। } रामचन्द्रे ॥

रघुपति :। पुं० श्रीरामे ॥ यथा । य दुक्तं : क्वगतामथुरापुरीरघुपते : क्वगतोत्तरकोशला । इतिविचिन्त्य कुरुष्वमन : स्थिरंनसदिदंजगदित्य वधारयेतिरूपगोस्वामी ।

रघुवंश :। पुं० रघो : सन्ततौ ॥ र-घोर्वंश : ॥ कालिदासकृते काव्य-विशेषे ॥

रघुवंशवित्त :।<br>रघुवंशतिलक: । पुं० } श्रीरामे ॥<br>रघुवर :।

रघूद्वह :। पुं० श्रीरामे ॥ उद्वहति । वह० । पचाद्यच् । रघूनामुद्वहोना यक : ॥

रङ्क :। त्रि० कृपणे ॥ मंदे ॥ रमते । रमेर्बाहुलकात्क : ॥

रङ्कु :। पुं० शबलपृष्ठे । मृगविशेषे । रमते० रज्यतेवा । मृगय्वादित्वात् साधु : ॥ जनपदविशेषे ॥

रङ्ग :। पुं० रागे ॥ नृत्ये ॥ नृत्यस्थाने ॥ रणाचितौ ॥ टङ्कणे ॥ खादिर-सारे । पुं० न० त्रपुणि । त्रापूषे । वङ्गे । कुरूप्ये । पिच्चटे । पूतिग न्धे । रांग० इ० भा० ॥ तद्विशेषो यथा । श्वेतंमृदुलघुस्वच्छंस्निग्धमु ष्णासहंहिमम् । मूत्रपचहरंकान्तंच पुष्पंउमदाहृतम् ॥ खुरकंमिश्रकश्चा पिद्विविधंरङ्गमुच्यते । उत्तमंखुरकंतत्र मिश्रकंत्वहितंमतम् ॥ तस्याशुद्धस्य दोषोयथा । रङ्गोविधत्ते खलुशुद्धिही नस्तथाप्यपक्वश्चकिलासगुल्मौ । कुष्ठा निशूलं किलवातशोथं पाण्डुप्रमेह स्वभगन्दरञ्च ॥ विषोपमं रक्तविका रवृन्दं चयच्छप्तच्छाविषमज्वरञ्च । मेहाश्मरीविद्रधिरुग्व्यथेरोगान्नानी विदध्यात् कथितान्विकारान् ॥ तस्यशोधनंयथा । वङ्गनागौप्रतप्तौ चगालितौतौनिषेचयेत् । त्रिधा त्रिधाविशुद्धि : स्याद्रविदुग्धे पिच त्रिधा ॥ तैलतक्रकाञ्जिकगोमूत्र कुलत्थकाथे इत्यत्र्यं त्रिधात्रिधा । ततोऽर्कदुग्धत्रिधा ॥ अथमारण विधि : । मृत्पात्रे द्राविते रङ्गे

चिञ्चाश्वत्थत्वचोरजः। चिप्त्वाव ङ्गं चतुर्थांशमयोदर्व्याप्रचालयेत्॥ चिञ्चाश्वत्थी। रजः चूर्णम्। अयोदर्वीलोहदर्वी॰कारच्छुलो॥ ततो वियाममात्रेणवङ्गं भस्मप्रजायते। अथभस्मसमंतालंचिप्त्वाम्लेनविमर्दयेत्॥ ततोगजपुटेपक्त्वापुनरम्लेन मर्दयेत्। तालेनदशमांशेनयाममेकंततः पुटेत्॥ एवंदशपुटैःपक्वं वङ्गंभवतिमारितम्॥अस्यगुणायथा। रङ्गंलघु,सरंरूचंकुष्ठमेहकफक्रमीन्। निहन्तिपाण्डुंसश्वासंचचुष्यंपित्तलंमनाक्॥ सिंहोगजौघन्तुयथा निहन्तितथैवरङ्गोऽखिलमेहवर्गम्। देहस्यसौख्यंप्रबलेन्द्रियत्वंनरस्यपुष्टिंविदधातिनूनम्॥ रङ्गति। रगि गतौ। पचाद्यच्॥ रज्यत्यस्मिन्॰ रज्यतेऽनेनवा। रञ्जरागे। अकर्त्तरिचेतिघञ्। कुत्वम्॥

रङ्गकारः। त्रि॰ वस्त्रादीनांरङ्गकर्त्तरि। रंगरेज॰इ॰भा॰॥

रङ्गकाष्ठम्। न॰ पतङ्गे॥

रङ्गजम्। न॰ सिन्दूरे॥

रङ्गजीवकः। पुं॰ चित्रकरे॥

रङ्गदः। पुं॰टङ्कणे॥ खादिरसारे॥

रङ्गदा। स्त्री॰ स्फटक्याम्॥

रङ्गदायकम्। न॰ कङ्कुष्ठे॥

रङ्गदृढा। स्त्री॰ स्फटिकायाम्॥

रङ्गपत्री। स्त्री॰)

रङ्गपुष्पी। स्त्री॰) नीलीवृक्षे॥

रङ्गभूतिः। स्त्री॰ कोजागरपूर्णिमायाम्॥

रङ्गभूमिः। स्त्री॰ मल्लभूमौ॥ नाट्यभूमौ॥

रङ्गमल्ली। स्त्री॰ वीणायां॥

रङ्गमाणिक्यम्। न॰ माणिक्यरत्ने॥

रङ्गमाता। स्त्री॰ कुट्टन्याम्॥ अतुनि। लाक्षायाम्॥ वृत्त्याम्॥

रङ्गमातृका। स्त्री॰ लाक्षायाम्॥

रङ्गलासिनी। स्त्री॰ शेफालिकायाम्॥

रङ्गवीजम्। न॰ रूप्ये॥

रङ्गशाला। स्त्री॰ नाट्यगृहे। नाचघर॰ इतिभाषाप्र॰॥

रङ्गसङ्गशम्। न॰ यसदे। जस्त॰ इ॰ भा॰॥

रङ्गाङ्गा। स्त्री॰ स्फटिकायाम्॥

रङ्गाजीवः। पुं॰ चित्रकारे॥ रङ्गेणाजीवति। जीव॰। इगुपधेतिकः॥ रङ्गः आजीवोऽस्य तिवा॥

रङ्गारिः। पुं॰ करवीरे॥

रङ्गावतारकः। पुं॰ रङ्गावतारिणि। शैलूषे। भरते। नटे॥ नृत्यगीतस्यामेगीतवाद्यादिनातदनुगुणतयाप्रसङ्गिनि॥ इ॰ प्रायश्चित्तविवेकः। नटगायनव्यतिरिक्तोरङ्गावतरणजीविनिन्दितकञ्चुक-

भट्ट : ॥

रङ्गावतारी । पुं॰ नटे ॥

रङ्गिणी । स्त्री॰ कैवर्त्तिकायाम् ॥ शतमूल्यां ॥

रङ्गोपजीवी । पुं॰ नटमल्लादिकर्त्तरि ॥ रङ्गोपजीविप्रभृतीनामन्नादानां नरकप्राप्तिरुक्ता विष्णुपुराणे २ अंशे ॥ यथा । रङ्गोपजीवी कैवर्त्तः कुण्डाशी गरदस्तथा ॥ सूचीमाहिषिकश्चैव पर्वकारोचयेद्विजः ॥ आगारदाहीमित्रघ्नः शाकुनिर्ग्रामयाजकः ॥ रुधिरान्धेपतन्त्येतेसोमंविक्रीणतेचये इति ॥

रङ्घः न॰ रंहसि ॥ इतिभरतद्विरूपकोषः ॥

रचनम् । न॰ ग्रन्थने । निर्माणे ॥

रचना । स्त्री॰ कुसुमप्रकारादेः पत्रावल्यादेश्चरचने । परिस्पन्दे ॥ रचप्रतियत्ने । चुरादिरदन्तः । ण्यासश्रन्थोयुच् । रच्यते॰ इतिवा ॥ यथाक्रमेणस्थापने । निवेशे । स्थितौ ॥ निर्मितौ ॥ यथा । असाधारणचमत्कारकारिणीरचनाहि निर्मितिः तत्पर्यायाः सन्दर्भः । गुम्फः । सन्थनम् ॥ ग्रन्थनम् ॥

रचितः । त्रि॰ कल्पिते । कृते ॥ स्थापिते ॥ रच॰ । कर्मणिक्तः ॥

रजः । पुं॰ रेणौ । धूलौ ॥ परागे ॥ आर्त्तवे ॥ गुणान्तरे । रञ्जयति । रञ्जरागे । घञर्थेकप्रत्ययः ॥ न॰ स्त्रीकुसुमे ॥

रजःशयः । पुं॰ शुनि । रजसिशेते । शीङ्॰ । अधिकरणेशेतेरित्यच् ॥

रजःसारथिः । पुं॰ वायौ ॥

रजकः । पुं॰ निर्णेजके । वस्त्रधावके ॥ अयञ्चतीवरपत्न्यांधीवराज्जातः सङ्करजातिः वासांसिफलकैः शुद्धानि र्णिज्याद्रजकः शनैः । अतोन्यथाहिकुर्वीतदण्ड्यः स्याद्द्वमाषकान् ॥ रञ्जति । रञ्ज॰ । नृतिखनिरञ्जिभ्यइति॰ ष्वुन् । असि॰ अनि॰ अनेचरञ्जेर्नलोपः । शिल्पान्ष्कोपि॰ रजकी । भाष्यमते॰ क्वुन् । टाप् रजिका ॥ शुक्ले ॥ रजकौधातकशुकावितिहेमः ॥

रजतम् । न॰ दुर्वर्णे । रूप्ये ॥ अस्योत्पत्तिर्यथा । त्रिपुरस्यवधार्थाय- निर्निमेषैर्विलोचनैः । निरीक्षयामासशिवः क्रोधेनपरिपूरितः ॥ ततस्तूर्णमपतत्तस्य कस्माद्विलोचनात् । ततोरुद्रः समभवद्वैश्वानरमिवज्वलन् ॥ द्वितीयादपतन्नेत्रादश्रुबिन्दुस्तुवामकात् ॥ तस्माद्रजतमुत्पन्नमुक्तकर्मसुयोजयेत् । क्वचिमञ्चभवेत्तत्तिरङ्गादिरसयोगतः । पश्चास्यगुणान्रूप्ये ॥ हारे दन्तिदन्तयोः ॥ शोणिते ॥ हृदे

शैले ॥ स्वर्णे । रजतिरज्यतेऽनेनवा । रञ्ज० । पृषिरञ्जिभ्यांकिदिष्यतच् ॥ त्रि० शुक्ले ॥

रजतद्युति : । पुं० हनुमति ॥

रजतप्रस्थ : । पुं० कैलासाचले ॥

रजताचल : । पुं० रौप्यपर्वते ॥

रजताद्रि : । पुं० कैलासपर्वते ॥

रजनम् । न० स्वर्णे । सुवर्णे । कुसुमादिरागे ॥ रज्यतेनेन । रञ्ज : क्युन् ।

रजनि : । स्त्री० निशि । रात्रौ ॥ रंजन्ति० अनुरक्ताभवन्ति० रागिणोस्याम् बाहुलकाद्रञ्जेरनिनलोपश्च ।

रजनिकर : । पुं० चंद्रे ॥

रजनी । स्त्री० नीलिन्याम् ॥ रात्रौ ॥ हरिद्रायाम् ॥ जतुकायाम् । लाक्षायाम् रंजन्त्यनुरक्ताभवन्त्यस्यां रागिण : । रञ्ज० । घिपे : किच्चेतिचकारादनि : । कित्वान्नलोप : । बाहुलकाद्वा० रजनि : । गौरादित्वान् ङीष् ॥

रजनीकर : । पुं० हिमांशौ ॥

रजनीगन्धा । स्त्री० पुष्पविशेषे ॥

रजनीचर : । पुं० राक्षसे । रात्रिचरे ॥ रजन्यांचरति । चरेष्ट : ॥ चौरे ॥ यामिकभटे ॥

रजनीजलम् न० नीहारे । ओस० इ०भा० । रजन्याजलम् ॥

रजनीपुष्प : । पुं० पूतिकरञ्जे ॥

रजनीमुखम् । न० प्रदोषे ॥ रजन्यामुखमिव ॥

रजनीहासा । स्त्री० शेफालिकापुष्पे हारशृङ्गार०पारिजात० इ० लोक प्रसिद्धे ॥ रजन्यांहासोयस्या : ॥

रज : । न० गुणान्तरे । प्रकृतिगुणविशेषे । रागद्वेषात्मकेदु : खहेतौ ॥ रजोरागात्मकंविद्धितृष्णासङ्गसमुद्भवम् । तन्निवध्नातिकौन्तेयकर्मसङ्गेनदेहिनम् । आर्त्तवे । स्त्रीपुष्पे ॥ परागे । सुमनोरजसि ॥ रेणुमात्रे । धूलिमात्रे ॥ निषिद्धाऽनिषिद्धरजोयथा । आयुष्कामोनसेवेततथासम्मार्जनीरज : । तथाश्वरथधान्यानांगवाञ्चैवरज : शुभम् ॥ अशुभञ्चविजानीयात्खरोष्ट्राजाविकेषुच । गवांरजोधान्यरज : पुत्रस्याङ्गभवंरज : ॥ एतद्रजोमहाशस्तं महापातकनाशनम् ॥ अजारज : खररजस्तथासम्मार्जनीरज : । स्त्रिय : पादरजोराजन् शक्रादपिहरेच्छ्रियम् इ०ल०चं० ॥ रञ्जयति० रजनम्० रज्यतेऽनेनवा । रञ्जरागे । भूरंजिभ्यांकिदित्यसुन् । नलोप : ॥ अम्भसि ॥ दिवसे ॥ अप्रगहनीरजसोउच्यते० इतिनिरुक्तोक्ते : ॥ स्वस्तिद्धीनंरजो।हीनंशि

रे।नामविवर्जितम्।मुद्राहीनंहस्त दत्तंपत्रंसिद्धिकरंनहीतिलच्यम्॥

रजसानु :। पुं० मेघे॥ चित्ते॥

रजस्वल :। पुं० महिषे।सैरिभे॥ त्रि० सरजस्के॥ रजोऽस्त्यस्य। रज : कृषीतिवलच्॥

रजस्वला। स्त्री० स्त्रीधर्मिण्याम्।अव्याम्। आत्रेय्याम्। पुष्पवत्यां-स्त्रियाम्। उदक्यायाम्॥ द्वादशावत्सरादूर्ध्वमापञ्चाशत्समा : स्त्रिय :। मासिमासिभगद्वाराप्रकृत्यैवार्त्तवंस्रवेत्॥ तत्र। प्रथमेऽहनिचण्डालीद्वितीयेब्रह्मघातिनी। तृतीयेरजकीप्रोक्तावथावर्ज्यातथाङ्गना॥ शुद्धाभर्त्तुश्चतुर्थेऽह्निअशुद्धादैवपैत्रयो :। दैवेकर्मणिपैत्रेचपञ्चमेऽहनिशुद्ध्यति॥ रजोऽस्त्यस्या :। रज : कृष्यासुतिपरिषदोवलच्। तसोमत्वर्थइतिभत्वम्॥ सिंहकर्कटस्थेर्केनद्याम्॥ यथा। सिंहकर्कटयोर्मध्येसर्वानद्योरजस्वला :। तासुस्नानंनकुर्वीतवर्जयित्वासमुद्रगा :॥ उपाकर्मणिचोत्सर्गेप्रेतस्नानेतथैवच। चन्द्रसूर्योपरागेचरजोदोषोनविद्यते॥ दशवर्षाधिकायांनार्याम्॥

रजि :। पुं० चन्द्रवंशीयराजविशेषे॥

रञ्ज :। पत्रि० आकृष्टे॥ रज्जुर्यस्यार्त्मकर्मणित्ता :। रज्जुर्योर्मृगरमणादूर्ध्वंप्रधानकारलोप :॥

रजोगुण :। पुं० अप्रीत्यात्मकेप्रकृतेर्गुणे॥ अप्रीतिरात्मभावोयस्य। उपष्टम्भकंचलञ्चरज :। सत्त्वतमसीस्वयमक्रियत्वात्स्वकार्येप्रवृत्तिंप्रत्यवसीदन्तीरजसोपष्टभ्येते०उत्साहंप्रयत्नंकार्येते। तदिदमुक्तमुपष्टम्भकंरजइति।कस्मादित्यतउक्तं०चलमिति। तदनेन०रजस : प्रवृत्त्यर्थत्वंदर्शितम्। यद्दु : खहेतुस्तद्दु : खात्मकंरज :॥ रज :कार्येकामक्रोधहर्षादौ॥

रजोनिमीलित :। त्रि० रजोगुणाव्रते॥ अपथेपदमर्पयन्तिहिश्रुतवन्तोऽपिरजोनिमीलिता :॥

रजोवलम्। )
रजोरसम्। ) न० अन्धकारे॥

रजोविशाल :। पुं० भूर्लोके॥ मध्येरजोविशाल : सवधर्माधर्मानुष्ठानपरत्वात्०तु : खवहुलत्वञ्च०रजोविशालइतिसाङ्ख्याचार्या :॥

रजोहर :। पुं० रजके॥

रज्जु :। स्त्री० वेण्याम्। बन्धनसाधनवस्तुनि। शुल्वे। वराटके। गुणे। डोरी०रस्सी०इ०भा०। सृज्यते। सृजविसर्गे। सृजेरसुमृच। चात्सलोपउप्रत्ययश्च। सस्यसुस्त्वेनश :०जश्त्वेनज :॥ मध्यगुरौ। ऽ।०॥

रज्यमान : त्रि० लोहितायमाने॥

रञ्जेर्दैवादिकात्कर्त्तरिशानच् । अ
निदितामितिनलोपः ॥

रञ्जकः । पुं॰ कुसुम्भादिना वस्त्रादि
रागकर्त्तरि ॥ कम्पिल्लके ॥ प्रीति
जनके ॥ न॰हिङ्गुलि ॥

रञ्जनः । पुं॰ रागजनके ॥ मुञ्जतृ
णे ॥ न॰रक्तचन्दने ॥ हिङ्गुलि॰ प
तङ्गे । बकम्॰इ॰भा॰ ॥ वर्ण्णान्त
रापादने॥रञ्जयति । रञ्जरागे ।ण्य
न्तः । युच्॰ल्यु॰वा ॥

रञ्जनकः । पुं॰ कट्फले ॥

रञ्जनी । स्त्री॰ गुण्डारोचनिकायाम्
॥ नील्याम् ॥ मञ्जिष्ठायाम् ॥ शे-
फालिकायाम् ॥ हरिद्रायाम् ॥प
र्प्याम् । रञ्जयति । रञ्ज॰ । ल्यु
ट् । णिलोपस्थानिवद्भावादङ्गन
येश्चेतिवानलोपोन ॥ रज्यतेऽनये
तिविग्रहेतु॰करणे तिल्युटिभवत्ये
व । रज्जेः क्युन्नितिवा ॥

रञ्जनीयः । त्रि॰ रागोत्पादनयोग्ये ॥

रटितः । त्रि॰ कथिते ॥ रटेः कर्म
णिक्तः ॥ न॰कथनमात्रे ॥

रणः । पु॰ कोणे । वीणादिवादने ॥
क्वणे । पुं॰न॰युधि । समरे । यु
द्धे ॥ रणनम्॰रणन्ति॰शब्दायन्तेऽ
स्मिन्नितिवा । रणशब्दे । बशिरण्यो
रित्यप् ॥ रणति । रणः पचाद्यच्वा ॥

रणन् । पुं॰ ध्वनति ॥

रणतूर्य्यम् । न॰ सङ्ग्रामपटहे । अ
भयडिण्डिमे । युद्धवाद्ये ॥

रणप्रियः । पुं॰ श्येनविहगे ॥ न॰उ
शीरे । वीरणमूले ॥

रणमत्तः । पुं॰ हस्तिनि । द्विपे ॥

रणमुष्टिः । पुं॰ विषमुष्टिक्षुपे ॥

रणरङ्गः । पुं॰ रणकातरहस्तिनि । प्र
तिमे ॥

रणरणः । पुं॰ मशके ॥ न॰उद्वाहने

रणरणकः । पुं॰ उत्कण्ठायाम् ॥ का
मे ॥

रणसङ्कुलम् न॰ तुमुले । व्याकुले र
णे ॥ रणस्यसङ्कुलम् ॥

रणसमुद्यमः । पुं॰ युद्धोद्योगे ॥

रणाङ्गनम् । न॰ युद्धस्थले ॥

रणालङ्कारः । पुं॰ कङ्कपक्षिणि ॥

रण्डः । त्रि॰ अर्द्धचर्मावच्छिन्नावयवे
॥ धूर्त्ते ॥

रण्डकः । पुं॰ अफलद्रुमे ॥

रण्डा । स्त्री॰ मूषिकपर्ण्याम् ॥ विध
वायाम् ॥ रमन्तेऽत्र । रमक्रीडा
याम् । अमन्ताड्डः । टाप् ॥

रण्डाश्रमी । पुं॰ अष्टचत्वारिंशद्वर्ष
रोपरिभार्याविहीने ॥ यथा । च
त्वारिंशद्वत्सराणांसाष्टानांचपरेय
दि । स्त्रियावियुज्यतेकश्चित्सतुर
ण्डाश्रमीमतः ॥

रतम् । न॰ मैथुने । सुरते ॥ तद्द्वि
विधम् । यथाहवात्स्यायनः ।
बाह्यमाभ्यन्तरञ्चेतिद्विविधंरतम्

च्यते । तथाद्यं चुम्बनाश्लेषनखद
न्तक्षतादिकम् । द्वितीयं सुरतं
साक्षान्नानाकारैर्विकल्पितमिति ॥
त्रि० गुह्ये ॥ अभिरते । अनुरक्ते
रमणम् । रम० । नपुंसकेभावेक्तः
। अनुदात्तोपदेशेतिनलोपः ॥

रतकील : । पुं० कुक्कुरे ॥

रतकूजितम् । न० रतिकालकथाया
म् । मणिते ॥

रतगुरु : । पुं० भर्त्तरि हृदयेशे ॥

रतज्वर : । पुं० काके ॥

रतताली । पुं० षिड्गे ॥

रतताली । स्त्री० कुट्टन्याम् ॥

रतनाराच : । पुं० नारीणांशीत्कारे
॥ स्मरे ॥ शुनि ॥ षिड्गे ॥

रतनिधि : । पुं० खञ्जने ॥

रतराग : । पुं० सुरताभिलाषे ॥

रतर्द्धिकम् । न० दिवसे ॥ सुखस्ना-
ने ॥ अष्टमङ्गले ॥

रतव्रण : । )
रतशायी । ) पुं० कुक्कुरे । शुनि ॥

रतहिण्डक : । पुं० स्त्रीचौरे ॥ लम्प-
टे ॥

रतान्दुक : । पुं० कुक्कुरे ॥

रताम्बी । स्त्री० कुष्माण्ड्यां ॥

रतामर्द : । पुं० कुक्कुरे ॥

रतायनी । स्त्री० वेश्यायाम् ॥

रतार्थिनी । स्त्री० मैथुनाभिलाषिण्या
म् ॥ कामुक्याम् ॥

रति : । स्त्री० स्मरदारेषु । कामदेव-
स्यपत्न्याम् ॥ आषाढिस्थानस्था-
यांदेव्याम् ॥ सुरते ॥ गुह्ये ॥ रा-
गे ॥ अनुरागे ॥ यथा । भगवान्०
ब्रह्म०कात्र्स्न्येनत्रिरन्वीक्ष्यमनीष
या । तदध्यवस्यत्कूटस्थोरतिरात्म
न्यतोभवेत्इति ॥ रम्यतेऽनया
रम० । क्तिन् । अनुदात्तोपदेशवन
तितनोत्यादीनामनुनासिकलोपो-
झलिक्ङितिइतिमलोपः ॥ चेत:
परितोषे ॥ इष्टार्थसंयोगजनितायां
क्रीडायाम् ॥ इच्छाविशेषे ॥ य-
था । यूनोरन्योन्यविषयस्थायिनी-
च्छारति : स्मृतेतिरसार्णवसुधा-
कर : ॥

रतिकुहरम् । न० भगे । योनौ ॥

रतिकूजितम् । न० मणिते । मैथुनश
ब्दे ॥ रते : कूजितम् ॥

रतिक्रिया । स्त्री० संवेशने । मैथुने ॥

रतिगृहम् । न० योनौ ॥ रमणम-
न्दिरे ॥

रतिचक्रम् । न० कामिन्यामश्वक्रीड-
ने ॥ यथा । शास्त्रस्यविषयस्तावद्या
वन्मन्दरसोनर : । रतिचक्रेप्रवृत्ते
तुनशास्त्रंनापिचक्रम : ॥

रतिनाग : । पुं० षोडशबन्धान्तर्गतप
ञ्चदशबन्धे ॥ तल्लक्षणं यथा ॥ पीड
येदूरुयुग्मेनकामुकंकामिनीयदि ।
रतिनाग : समाख्यात : कामिनी

नामनोरम : ॥

रतिपति : । पुं॰ कामदेवे ॥ रते : पति : ॥ देशविशेषस्थस्त्रीणांस्था-नविशेषितस्याविर्भावेयथा । बाचि श्रीमाथुरीणांजनकजनगदस्थायिनी नांकटाचे ॰ दन्तगौडाङ्गनानां॰मु ललितजघनेचोत्कलप्रेयसीनाम् । तैलङ्गीनांनितंबे॰सजलघनकुचौके रलीकेशपाशे॰कार्णाटीनांकटौच-स्फुरतिरतिपतिर्गुर्ज्जरीणांस्तनेषु ॥

रतिपाशक: । पुं॰ रतिबन्धविशेषे ॥ यथा । पीडयेदूरुयुग्मेनकामुकोयदिसुन्द रीम् । रतिपाशस्तथाख्यात : का मिनीनांसुखावह : ॥

रतिप्रिय : । पुं॰ कामदेवे ॥ रति : प्रियायस्य । सुरतप्रिये ॥

रतिबन्ध : । पुं॰ पद्मासनादिषोडश सु । तेयथा । पद्मासनोनागपाशो लतावेष्टोऽर्द्धसम्पुटम् । कुलिशंसु न्दरञ्चैवतथाकेशरएवच ॥ हिल्लो लोनरसिंहोपिविपरीतस्तथापर : । चुम्बोवैधेनुकश्चैवमुत्कंठस्तुतत: परम् । सिंहासनोरतिर्नागोवि द्याधरस्तुषोडश : ॥

रतिमदा । स्त्री॰ अप्सरसि । स्वर्वे श्यायाम् ॥

रतिमन्दिरम् । न॰ योनौ ॥ मैथुन गृहे ॥

रतिमित्र : । पुं॰ रतिबन्धविशेषे ॥ यथा । पातयेदूरुयुग्मेचकामुकंय दिकामुकी । रतिमित्रस्तथाख्यात: कामिनीनांसुखावह : ॥

रतिरमण : । पुं॰ कामदेवे ॥

रतिलक्षम् । न॰ निधुवने ॥

रतिलाभ : । पुं॰ सुरतसुखप्राप्तौ ॥ यथोक्तंरतिरहस्ये । स्रस्ततावपुषि मीलनंदृशोर्मूर्च्छनाचरतिलाभल क्षणम् । श्लेषयेत्स्वजघनंमुहुर्मुहु: सीत्करोतिगलगद्गदाकुलेति ॥

रतिसत्त्वरा । स्त्री॰ चिरञ्जीवायाम् । पिडिङ्गशाक॰इ॰गौ॰दे॰ भा॰ ॥

रतिसुन्दर : । पुं॰ रतिबन्धविशेषे ॥ यथा । नारीपदद्वयंकामीधारयेद्ध् दयेयदि । धृतकंठोरमेत्कामीबन्ध: स्याद्रतिसुन्दर : ॥

रतु : । स्त्री॰ देवनद्याम् सत्यवाचि ॥ ऋदितिमौत्रेभातु : । तत : ऋ तेरम्चेतिकु : अमागमश्च ॥

रतोद्वह : । पुं॰ कोकिले ॥

रत्यङ्गम् । न॰ भगे । योनौ ॥ रते : सुरतस्यअङ्गम् ॥

रत्नम् । नं॰ स्वजातिश्रेष्ठे । जातौ जातौयदुत्कृष्टंतद्रत्नमभिधीयते ॥ मणौ ॥ धनार्थिनोजना : सर्वेरम न्तेस्मिन्नतीवयत् । ततोरत्नमिति प्रोक्तंशब्दशास्त्रविशारदै : ॥ तत्त् पाषाणभेदोस्मिन्नुक्तादिचतदुच्यते तानिनवधानिरूपितानियथा । व

श्च गारुत्मतं पुष्परागो माणिक्यमेव
च । इन्द्रनीलश्च गोमेदस्तथा वैदूर्य
मित्यपि ॥ मौक्तिकं विद्रुमश्चेति र
त्नान्युक्तानि वै नव । रत्नैर्मिश्रितानि
स्युर्मधुराणि सराणि च । चक्षुष्याणि
शीतानि विषघ्नानि धृतानि तु ॥ मङ्ग
ल्यानि मनोज्ञानि ग्रहदोषहराणि च ॥
माणिक्यं तरणेः सुजातममलं मु
क्ताफलं शीतगोर्माहेयस्य तु विद्रुमो
निगदितः सौम्यस्य गारुत्मतम् ।
देवेज्यस्य च पुष्परागमसुराचार्यस्य व
ज्रं शनेर्नीलं निर्मलमन्ययोर्निगदि
ते गोमेदवैदूर्यके ॥ रत्नानां शोधन
मारणविधिर्वज्रवद्बोध्या । रमयति
। रम क्रीडायाम् । रमतेऽस्मिन्वा
। रमिस्तर्चितिनः । मेट् । माणि
क्ये ॥ वज्रे ॥ सगण० ॥ ऽ० ॥

रत्नकन्दलः । पुं॰ प्रवाले ॥

रत्नकूटः । पुं॰ पर्वतविशेषे ॥

रत्नगर्भः । पुं॰ समुद्रे ॥ रत्नानि गर्भेऽस्य ॥ कुबेरे ॥

रत्नगर्भा । स्त्री॰ भूमौ ॥ रत्नानि गर्भेऽस्याः ॥ उपचाराद्गुणवत्पुत्रायाम् ॥

रत्नचषकः । पुं॰ न॰ स्फटिकादिमणिपात्रे ॥

रत्नद्वीपः । पुं॰ न॰ रत्नप्रचुरद्वीपविशेषे ॥

रत्नधेनुः । स्त्री॰ महादानविशेषे ॥

रत्ननिधिः । पुं॰ खञ्जनपक्षिणि ॥

रत्नपञ्चकम् । न॰ सुवर्णादिपञ्चसु ॥
यथा । सुवर्णं रजतं मुक्ता लाजावर्त्तं
प्रवालकम् । रत्नपञ्चकमाख्यातं
मुनिभिः कर्मवेदिभिः ॥

रत्नपरीक्षा । स्त्री॰ मणिविचारे । तत्र
मणीनां तावद्गुणप्रधानार्थमाह । र
त्नेन शुभेन शुभं भवति नृपाणामनि-
ष्टमशुभेन । यस्मादतः परीक्ष्यं दै-
वं रत्नाश्रितं तज्ज्ञैः ॥ द्विपहयव-
नितादीनां स्वगुणविशेषेण रत्नशब्दो
स्ति । इह तूपलरत्नानामधिकारो व
श्च पूर्वाणाम् ॥ रत्नानामुत्पत्तिप्रद
र्शनार्थम् मतभेदमाचार्याणामाह ।
रत्नानि बलाद्दैत्याद्दधीचितोऽन्ये वद-
न्ति जातानि । केचिद्भुवः स्वभावा
द्वैचित्र्यं प्राहुरुपलानाम् ॥ वज्रेन्द्र
नीलमरकतकर्केतनपद्मरागरुधिरा
ख्याः । वैदूर्यपुलकविमलकराजम
णिस्फटिकशशिकान्ताः ॥ सौग-
न्धिकगोमेदकशङ्खमहानीलपुष्प
रागाख्याः । ब्रह्ममणिज्योतीरसस-
स्यकमुक्ताप्रवालानि ॥ वेणातटे विशु
द्धं शिरीषकुसुमोपमं च कौशलकम् ।
सौराष्ट्रकमाताम्रं कृष्णं शूर्पारकम्भू-
तम् ॥ ईषत्ताम्रं हिमवति मतङ्गजं
वल्लपुष्पसङ्काशम् । आपीतं कालि-
ङ्गं श्यावं पौण्ड्रेषु सम्भूतम् ॥ ऐन्द्रं
षडश्रियुक्तं याम्यं सर्पास्यरूपमसितं
च । कदलीकाण्डनिकाशं वैष्णव-
मिति सर्वसंस्थानम् ॥ वारुणमव-

लागुञ्जोपमंभवेत्कर्णिकारपुष्पनि-भम् । शृङ्गाटकसंस्थानंव्याघ्राक्षिनिभञ्चहीतभुजम् ॥ वायव्यञ्चयवोपममशोककुसुमप्रभंसमुद्दिष्टम् । स्रोतः खनिप्रकीर्णकमित्याकरसम्भवस्त्रिविधः ॥ १० ॥ रक्तंपीतञ्चशुभंराजन्यानांसितंद्विजातीनाम् । शैरीषंवैश्यानांशूद्राणांशस्ततेऽसिनिभम् ॥ ११ ॥ वज्रमणेर्मूल्यपरिज्ञानार्थमाह । सितसर्षपाष्टकंतण्डुलोभवेत् तण्डुलैस्तुविंशत्या । तुलितस्यद्वेलक्षेद्रमूनंद्विद्रमूनितेचैतत् ॥ पादत्र्यंशार्द्धोनंत्रिभागपञ्चांशषोडशांशञ्च । भागञ्चपञ्चविंशतिकः स्यात्साहस्रिकञ्चैव ॥ १३ ॥ शुभवज्रलक्षणान्याह । सर्वद्रव्याभेद्यंलघ्वम्भसितरतिरश्मिवत्स्निग्धम् तडिदनलशक्रचापोपमञ्चवज्रंहितायोक्तम् ॥ अथाशुभलक्षणम् । काकपदमक्षिकाकेशंधातुयुक्तानिशार्कराविद्धम् । द्विगुणाश्रिदग्धकलुषत्रस्तविशीर्णानिनशुभानि । यानिचबुद्बुददलिताग्रचिपिटवाशीफलप्रदीपानि । सर्वेषाञ्चैतेषांमूल्याद्भागोऽष्टमोहानिः ॥ १६ ॥ वज्रंनकैश्चिदपिधारयितव्यमेकेपुत्रार्थिनीभिरबलाभिरशंतितज्ज्ञाः । शृङ्गाटकत्रिपुटधान्यकवत्स्थितंयच्छ्रोणीनिभ

ञ्चशुभदंतनयार्थिनीनाम् ॥ स्वजनविभवजीवितक्षयंजनयतिवज्रमनिष्टलक्षणम् । अशनिभयविषारिनाशनंशुभमुपभोगकरञ्चभूभृताम् । वृत्तिशाराद्यांसप्तसप्ततितमः ॥

रत्नपारायणम् । न० सर्वरत्नस्थाने ॥ यथा । समुद्रोपत्यका हैमीपर्वताधित्यका पुरी । रत्नपारायणंनाम्ना लङ्केतिममभैथिली ॥

रत्नप्रभा । स्त्री० जिनानांनरकविशेषे ॥

रत्नभूः । स्त्री० मणिप्रधानभूमौ ॥

रत्नमुख्यम् । न० हीरके ।

रत्नमुट् । त्रि० मणिचौरे ॥ रत्नंमुष्णाति । मुषस्तेये । क्विप् ॥

रत्नराट् । पुं० माणिक्ये ॥ रत्नश्रेष्ठे ॥

रत्नवती । स्त्री० भूमौ ॥ रत्नानिविद्यन्ते यस्याम् । मतुप् । उगित्वात् ङीप् ।

रत्नवर्षुकम् । न० पुष्पकरथे ॥ त्रि० रत्नवर्षणशीले ॥

रत्नसानुः । पुं० सुरालये । सुमेरुपर्वते ॥ रत्नानिसानौशिखरेऽस्य ॥

रत्नसूः । स्त्री० भूमौ ॥

रत्नाकरः । पुं० जलनिधौ । रत्नानांमाणिक्यमुक्तादीनामाकरः ॥

रत्नाङ्कः । पुं० विष्णुरथे ॥ रत्नचि

र्हे ॥

रत्नाचल: । पुं० दानार्थमणिमय पर्वते ॥

रत्नाभरणम् । न० मणिमयालङ्करणे । जड़ाजगहना० इ० भा० ॥ तस्य धारणगुणा: । धन्यं यशस्यमायुष्यं श्रीमद्व्यसनसूदनम् । हर्षणं काम्यमोजस्यं रत्नाभरणधारणम् ॥

रत्नि: । पुं० बद्धमुष्टिकरे ॥ ऋच्छति० पर्यन्तेऽनेनवा । ऋगतौ । ऋतन्यञ्जीत्यसे: कत्निच् । यण् ॥

रथ: । पुं० शताङ्गे । स्यंदने ॥ पादे । चरणे ॥ वेतसे ॥ देहे । शरीरे ॥ रथवद्रथस्थानीयैरिन्द्रियैराक्रम्यमाणत्वाच्छरीरस्य ॥ रम्यतेऽ ज०रमन्तेऽ चानेनवा । रम० । हनिकुषीतिक्थन् । अनुनासिकलोप: ॥ एकैनसहयोहरि ॥ सगणे० ॥ ऽ० ॥ पौरुषे ॥

रथकड्या । स्त्री० रथवृन्दे ॥ रथानांसमूह: । इनित्रकट्यचश्चेतिकड्यच् ॥

रथकर: । पुं० रथकारे ॥ रथस्यकर: ॥

रथकार: । पुं० तक्षणि । वर्द्धकौ । रथनिर्माणकर्त्तरि । माहिष्यात् करण्यामुत्पन्ने जातिविशेषे । बढ ई० तखाण० इतिभाषाप्रसिद्धे ॥ माहिष्येणकरण्यान्तुरथकार: प्रजायते० इ० याज्ञवल्क्य: ॥ रथं करोति । डुकृञ्० । कर्मण्यण् ॥

रथकुटुंबी । पुं० सारथौ ॥ रथंकुटुम्बयितुंशीलमस्य । कुटुम्बधारणे । सुप्यजातौणिनि: ॥ यद्वा, रथएवकुटुम्बम् । रथकुटुम्बमस्यास्ति । इनि: ॥

रथगर्भक: । पुं० स्कन्धवाह्ययाने । नररथे । कर्णीरथे । प्रवहणे । डयने ॥

रथगुप्ति: । स्त्री० वरूथे । परप्रहरणाभिघातरक्षार्थंरथस्यसन्नाहवदावरणे ॥ रथस्यगुप्तिरावरणम् ॥

रथगोपनम् । न० रथगुप्तौ ॥

रथचरण: । पुं० कोकपक्षिणि । चक्रवाके ॥ रथचक्रे । पैय्या० इ० भाषा ॥

रथद्रु: । पुं० तिनिशवृक्षे ॥ रथस्यद्रु: । तत्रोपयुक्तत्वात् ॥

रथद्वितीया । स्त्री० आषाढशुक्लद्वितीयायाम् ॥ यथा । आषाढस्यसितेपक्षेद्वितीयापुष्यसंयुता । तस्यांरथेसमारोप्यरामंमांभद्रयासह ॥ यात्रोत्सवंप्रवृत्त्याथप्रीणयेच्चद्विजान्बहून् । ऋक्षाभावेतिथौकार्यासदासाप्रीतयेममेतिस्कन्दपुराणम् । साथाणा । मांजगन्नाथम् ॥

रथन्तरम् । न० सामविशेषे ॥ रथेनतरति । तृन्नवमसन्तरवयो: ।

संज्ञायांभृतृवृजीतिखच् । व्युत्पत्ति मात्र नत्ववयवार्थानुगम : ॥

रथपर्य्याय : । पुं॰ वेतसवृक्षे ॥ रथ : पर्यायोऽस्य ॥

रथपाद : । पुं॰ चक्रे ॥

रथव्रज : । पुं॰ रथकक्ष्यायाम् ॥ रथानांव्रज : ॥

रथपुष्पा । स्त्री॰ नदीविशेषे ॥ रथंपिबति । पा॰ । क : । पारस्करादित्वात्सुट्षत्वेनिपातसिद्धे ॥

रथसाधक : । पुं॰ तिनिशे ॥ रथस्य-साधक : ॥

रथाङ्ग : । पुं॰ कोकपक्षिणि ॥ अप-स्करे । चक्रभिन्नरथारम्भके ॥ न॰-चक्रे ॥ रथस्यअङ्गम् ॥

रथाङ्गपाणि : । पुं॰ विष्णौ ॥ रथाङ्गं पाणौयस्य स : । प्रहरणार्थेभ्य: परे निष्ठासप्तम्यौभवत : ॥

रथाङ्गाह्वय : । पुं॰ चक्रवाके ॥ रथाङ्गस्याह्वयोनामयस्य ॥

रथाङ्गी । पुं॰ श्रीहरौ ॥ रथाङ्गंचक्रमस्यास्ति । इनि : ॥

रथाङ्गी । स्त्री॰ ऋद्धिनामौषधौ ॥

रथान्तर : । पुं॰ कल्पभेदे ॥

रथाभ्र : । पुं॰ वेतसवृक्षे ॥

रथारोही । पुं॰ रथस्थयुद्धकर्त्तरि । रथिनि ॥

रथावर्त्त : । पुं॰ धूमावतीदक्षिणार्द्धे तीर्थविशेषे ॥

रथिक : । त्रि॰ रथिनि । रथस्वामिनि । रथोऽस्यास्ति । अतइनिठनौ । इतिठन् ॥ रथेनचरतिवा पर्पादिभ्यष्ठन् ॥ षिद्गौरादिभ्यश्चेतिङीषि॰ रथिकी ॥

रथिका । स्त्री॰ क्षुद्ररथे । त्वाष्ट्राम् ॥

रथी । पुं॰ स्यन्दनारोहे । रथारोहिणि । रथस्वामिनि । रथिके ॥ रथोऽस्यास्ति । इनि : ॥

रथिन : । पुं॰ रथिनि । रथस्यइन : । शकन्ध्वादि : ॥

रथिनी । स्त्री॰ रथकक्ष्यायाम् ॥ रथानांसमूह : । खलादिभ्यइनिर्वक्तव्य : ॥

रथिर : । पुं॰ रथिके रथोऽस्यास्ति । मेधारथाभ्यामिरन्निरचौवक्तव्याविती रच् ॥

रथी । स्त्री॰ शकट्याम् । मज्भोजी॰ इ॰ भा॰ । वह्वादिभ्यश्चेतिङीष् ।

रथोद्धता । स्त्री॰ त्रिष्टु,प् ११ प्रभेदे ॥ रात्परैर्नरलगै रथोद्धता । यथा । राधिकादधिविलोडनस्थिताकृष्णवेणुनिनदैरथोद्धता । यामुनंतटनिकुञ्जमञ्जसासाजगामसलिलाहृतिच्छलात् ॥ रथउद्धता ॥

रथ्य : । पुं॰ रथवाहकाश्वे । रथवोढरि ॥ रथंवहति । तद्वहतिरथयुगप्रासङ्गमितियत् ॥ रथांसे । चक्रे

॥ रथस्याङ्गम् । रथाद्यत् ॥

रथ्या । स्त्री० रथौघे । रथानांसमूह : । खलगोरथादितियत् ॥ प्रतोल्याम् । विशिखायाम् । राजमार्गेतरमार्गे । जनसञ्चारिणिमार्गे । वर्त्त न्याम् । पथि ॥ चत्वरे ॥ रथाय हिता । यत्प्रकरणे : रथाच्चेतियत् ॥ रथंवहतिवा । तद्वहतीतियत् ॥

रद : । पुं० विलेखने ॥ दंते ॥ पुरुषदन्तलचणंयथा । विवर्णैर्धनहीना श्चदन्ता : स्निग्धघना : शुभा : । तीक्ष्णादंष्ट्रा : समा : श्रेष्ठाजिह्वारक्तासमाशुभा ॥ अपिच । कुन्दकुड्मलसङ्काशै : प्रकारैर्दशनैर्नृप : । भचवानरदन्ताश्चनित्यंचुपरिपीडिता : । हस्तिदन्ता : खररदा : स्निग्धदन्तागुणान्विता : । करालैर्विषमैर्दीर्घैर्दशनैर्दु : खजीविन : ॥ द्वात्रिंशद्दंताराजानएकोनोचश्चभोगिन : । त्रिंशद्दंतानरायेतेसुखदु : खस्यभागिन : ॥ एकोनत्रिंशद्दशना : पुरुषादु : खजीविन : । अष्टाविंशद्रदायेषांतेतिदु : खभाजना : ॥ स्त्रीदन्तलचणंयथा । कुन्दपुष्पसमादन्ताभाषितंकोकिलासमम् । दाचिण्ययुक्तमशठंहंसशब्दसुखावहम् ॥ नासासमासमपुटाल्लोगान्नुरुचिराशुभा । करालविषमादन्ता : क्लेशायचभयायच ॥ चौर्यपक्कष्टमांसाश्चदीर्घाभर्तुश्चमृत्यवे । इति ॥ दन्तस्खलनमशुचित्वं यथा । दन्तवद्दन्तलग्नेषुजिह्वास्पर्शैशुचिर्भवेत् ॥ अपिच । दन्तलग्नसमंहार्यैलेपंमन्येतदन्तवत् । नतत्रबहुश : कुर्याद्यत्नमुद्धरणेपुन : ॥ भवेदशौचमत्यर्थंतृणवेधाद्व्रणेकृते ॥ रदति । रदविलेखने । पचाद्यच् ॥

रदच्छद : । पुं० ओष्ठे ॥

रदन : । पुं० रदे । दन्ते ॥ रद्यतेनेन । रद० । करणेल्युट् ॥ न० उत्खनने ॥

रदनच्छद : । पुं० ओष्ठे ॥ अधरे ॥ रदनाश्छाद्यन्तेऽनेन । छदसंवरणे । चुरादि : । पुंसीतिघ : । छादेर्घेद्व्ग्ग्तिह्रस्व : ॥ अस्यशुभाशुभलचणंयथा । मांसलैश्चधनोपेताश्चवक्रैरधरैर्नृपा : । बिम्बोपमैश्चस्फुटितैरोष्ठैरुचैश्चखण्डितै : । विवर्णैर्धनहीना श्चदन्ता : स्निग्धाघना : शुभा : ॥

रदनी । ) पुं० हस्तिनि ॥

रदी । )

रन्तव्य : । त्रि० रन्तुंयोग्ये ॥ रम० । तव्य : ॥

रन्तिदेव : । पुं० साङ्कृतिपुत्रेभरतान्वयोत्पन्ने चन्द्रवंशीयनृपतिश्रेष्ठे । यस्ययश : पुराणेप्रसिद्धम् । यस्यकरुणावतोयंश्लोक : । नकामयेहंग

तिमीश्वरात्परामष्टहियुक्तामपुनर्भवस्य । आर्त्तिप्रपद्यो खिलदेहभाजामन्तःस्थितो येन भवन्त्यदुःखाः ॥ गरुडध्वजे । विष्णौ ॥ कुक्कुरे ॥

रन्ध्रुः । पुं० वर्त्मनि ॥ स्त्री० नद्याम् ॥

रंधनम् । न० पाके । छेदने ॥

रन्ध्रम् । न० दूषणे । छिद्रे ॥ रमणम् । संपदादित्वात्क्विप् । संज्ञापूर्वकत्वान्नदीर्घः । रमं क्रीडां धरति । मूलविभुजादित्वात्कः । यद्वा । रंधयति । रधिर्हिंसासंराध्योः । बाहुलकात्क्रक् ॥ अष्टमभवने ॥ अश्वस्य कुक्षिनाभिमध्यभागे । यथोक्तम् । कुक्षिनाभ्यन्तरे रन्ध्रमुपरन्ध्रं तयोपरीति ॥

रन्ध्रकटः । पुं० जालबर्बुरके ॥

रन्ध्रकरः । त्रि० छिद्रस्य कारके । रन्ध्र इतीर्विधेरा० इ० भाषा०प्र० ॥ रन्ध्रं करोति । कृञोहेतुताच्छील्यानुलोम्ये ष्वितिकृञः टप्रत्ययः ॥

रन्ध्रबभ्रुः । पुं० उंदुरौ ॥

रन्ध्रवंशः । पुं० सच्छिद्रवंशे । कीचकाख्ये । मस्करे । सुषिरास्ये ॥ अस्य गुणा यथा । वंशोत्वम्लो कषायो चकिंचित्तिक्तश्च शीतलो । मूत्रकृच्छ्रप्रमेहार्शः पित्तदाहास्रनाशनो ॥ विशेषो रन्ध्रवंशस्तु दीपनो जीर्णनाशकः । रुचिकृत्पाचनो हृद्यः शूलश्लेष्मगुल्मनाशनः ॥

ररः । न० पापे ॥

रभसः । पुं० हर्षे ॥ यथा । शुचां पात्रं धात्रीपरिणतिरमेध्यप्रभवभूरयं भूतावासो विमृश किमयं तीर्यातिनदृशाम् । तदस्मिन्धीराणांक्षणमपिकिमास्थातुमुचितं फलीकारः कोयं यदयमहमेवेति रभस इति शिल्हणमिश्राः ॥ पुं० अभिधानविशेषे ॥ पौर्वापर्यविचारे ॥ त्रि० तद्वति ॥ रभते । रभ राभस्ये । अत्यविचमीत्यादिनाऽसच् ॥ तद्वत्यर्श आद्यच् ॥

रमः । पुं० कान्ते ॥ रक्ताशोकद्रुमे । स्मरे ॥ रमते । रम० । पचाद्यच् ॥ रमणे ॥

रमकः । पुं० विलासिनि । कान्ते ॥ रमते । रम० । रमेरस्थलोवेतिक्वुन् ॥ केनापि कर्मणापररञ्जके ॥ रमयति । क्वुन् ॥

रमठम् । न० ) हिङ्गुनि ॥
रमठध्वनिः । पुं० )

रमणः । पुं० धवे । प्रिये । पत्यौ । स्मरे । कामदेवे ॥ रमयति । रम० । नन्द्यादित्वाल्ल्युः ॥ वर्णवृत्तान्तरे ॥ सगणो रमणः । कविना कथितः ॥ यथा । धनदो धनदः । भवतां भवतात् ॥ रासभे ॥ वृषणे ॥ महारिष्टे ॥ न० पटोलमूले ॥ जघने ॥ जम्भने । ग्राम्यधर्मे । सुरते । मैथुने । क्रीडारते ॥ मदा

सुखे ॥ क्रीडने ॥

रमणकम् । न० जम्बुद्वीपस्योपद्वीप विशेषे । रम्यकवर्षे ॥ यथा । एवमेवो त्तरेणैोणिवर्णाणिचतपोधन । कुरु वर्षं सिन्धुकूलाच्छृङ्गवानवधिः स्मृत : ॥ हिरण्मयंततोवर्षं श्वेताव धिनिगद्यते । रम्यकञ्चततोवर्षं नी लस्तस्यावधि : स्मृत : ॥ अपिच । दक्षिणे नतुश्वेतस्यनिषधस्योत्तरेण तु । वर्षं रमणकंनामजायन्ते तत्र मानवा : ॥ शुक्लाभिजनसम्पन्ना : सर्वेसुप्रियदर्शना: । दशवर्षसहस्राणिगतानिदशपञ्चच ॥ जीवन्ति तेमहाभागनित्यं मुदितमानसा : ॥ इतिपाद्मे भूखण्ड : ॥

रमणा । स्त्री० रमण्याम् ॥

रमणी । स्त्री० विशेषाङ्गनायाम् । नार्याम् ॥ रमयति०रम्यतेवास्याम् । रम० । ल्युट् ॥ बालाख्यवृक्षे ॥ वेदिकायाम् ॥ • ( * ) •

रमणीय : । त्रि० सुन्दरे । शोभने । रम० । अनीयर् ॥

रमणीयकम् । न० छन्दोविशेषे । रान्नभहितयरैरुदितंरमणीयकम् । इतिलक्षिते ॥

रमणीयचरण : । त्रि० सुकृतिनि । पुण्यकर्म्मणि ॥ रमणीयंशोभनंचरणंशीलंयस्य ॥

रमण्य : । त्रि० रमणीये ॥ रमतेऽस्मि न् । रम० । अरम्योष्वं स्यन्य : ॥

रमति : । पुं० नायके ॥ नाके ॥ कामदेवे ॥ काले ॥ रमतेऽस्मिन् । रम० । रमेर्निदिस्यति : ॥

रमा । स्त्री० लक्ष्म्याम् । पद्मालयायाम् । सर्वेचरमसे यस्माद्रमातस्माद्विष्यसीतिविष्णुशापोच इतुरुक्त : श्रीदेवीभागवते ॥ हालाहलोनैव-विषं विषं रमापरं जनाव्यत्ययमेवमन्वते । योगेनजागर्त्ति निपीयतं शिव : स्मरन्रमांमुह्यतिनिद्रयाहरि :॥ रमयति । रमक्रीड़ा याम् । पचाद्यचि०टाप् ॥ शशिभृजराजकन्यायाम् । कल्किदेवपत्न्याम् ॥ शोभायाम् ॥०

रमाधव : । पुं० )

रमानाथ: । पुं० )

रमापति : । पुं० ) विष्णौ ॥ रमाया धव: ॥ नाथ : पतिर्वा ॥ *

रमाप्रियम् । न० पद्मे ॥

रमाविष्ट : । पुं० श्रीवासे ॥

रमित : । त्रि० रतिप्रापिते ॥

रमेश्वर : । पुं० विष्णौ ॥

रम्भ : । पुं० वेणौ ॥ वैणवदण्डे ॥ वानरविशेषे ॥ महिषासुरस्यपित रि रभते । रभराभस्ये । पचाद्य च् । रभेरशबलिटोरितिनुम् ॥

रम्भा । स्त्री० कदल्याम् ॥ अपसरोभेदे ॥ दुर्गायाम् ॥ गोध्वनौ ॥ वे

श्यायाम् ॥ रभते । रभ॰ अच् । टाप् ॥ रभ्यतेबा । घञ् ॥
रम्भातृतीया । स्त्री॰ व्रतविशेषकाले ॥
रम्भोरू : । स्त्री॰ स्त्रीविशेषे ॥ रम्भे॰ कदलीस्तम्भाविवऊरूयस्या : सा । ऊरूत्तरपदादौपम्यइत्यूङ् ॥
रम्य : । पुं॰ चम्पके ॥ दम्पकवृक्षे ॥ न॰ पटोलमूले ॥ प्रधामधातौ ॥ त्रि॰ मनोज्ञे । हृद्ये । स्वभाव सुन्दरे ॥ रम्याणांविकृतिरपिश्रियं तनोति ॥ रम्यतेक्रीडतेयत्र । रम ॰ । पोरदुपधादितियत् ॥ बलकरे ॥
रम्यकम् । न॰ पटोलमूले । नील गिरेरुद'ग्दग्निवर्त्तमाने॰ वर्षवि शेषे ॥ नीलनीरजरम्यस्यरम्यकेहा दृशस्थिति : । जनस्त्वाव्दसहस्राणि न्यग्रोधफलमश्नत : ॥
रम्यपदपाठ : पुं॰ देवतापदस्तोमे : कालेपूरणे ॥
रम्यपुष्प : । पुं॰ शाल्मलिपादपे ॥
रम्यफल : । पुं॰ कारस्करवृक्षे ॥
रम्या । स्त्री॰ रात्रौ ॥ स्थलपद्मिन्याम् ॥
रम्र : । पुं॰ अरुणवर्णे ॥ शोभायाम् ॥
रय : । पुं॰ वेगे । वेगाख्यगुणे ॥ स वेगगति ।चने स्यप्रयोग : ॥ प्रवाहे ॥ रयत्यनेन । रयणंवा । रयगतौ । पुंसीतिघ : । रीणात्यनेवा । रीगतिरेषणयो : । पुंसीतिघ : ॥ हलश्चेतिघञितु॰ संज्ञापूर्वकत्वा

. द्वृद्ध्यभाव : ।
रयि : । पुं॰ अन्ने । जले ॥
रराटी । स्त्री॰ ललाटे ॥
रल्लक : । पुं॰ कम्बले ॥ कम्बलमृगे ॥ पक्ष्मणि ॥ रमते । रम॰ । क्वि प् । गमादीनांक्काविति मलोप : । तुक् । लाति । ला॰ । क्विप् । रच्चासौलाश्च । स्वार्थेकन् । कोऽणा दृतिहृस्व : ॥ यद्वा । रमणम् । रमे : सम्पदादिक्विप् । रत्क्रीडा लक्ष्यतेऽनेन । लक्षआस्वादने । घ : ॥ रतंलातिवाक्कुन् ॥ स्त्रीणां सिंदूरमरणाम् ॥
रल्लकभल्लकम् । न॰ सिन्दूरमरणौ । मांगद्र॰ भा॰ ॥ गिर : सिन्दूरम रणि : स्त्रीणांरल्लकभल्लकमित्यूक्ति: ॥ सीतारल्लकभल्लभग्नहृदय: स्वस्था नलङ्क्ष्मरद्दतिलक्ष्यम् ॥ रल्लकोभ ल्लकमित्र ॥
रव : । पुं॰ ध्वाने । स्वने । शब्दे ॥ रवणम् । रुशब्दे । ऋदोरप् ॥ ल घुवर्णे॰ ॥
रवण : । पुं॰ उष्ट्रे ॥ कोकिले ॥ खरे ॥ न॰ कांस्ये ॥ रवे । त्रि॰ शब्द- ने ॥ तीक्ष्णे ॥ भगलके ॥ चञ्चले ॥ रौति॰ तच्छील : । रु॰ । चलन शब्दार्थादकर्मकाद्युच् । युयुरुतञ्जो युजितियुच्चा ॥
रवथ : । पुं॰ कोकिले ॥ रौति ।

रु० गोङ्शब्दिगमीत्यादिनाऽप्रत्यय : ॥

रवि । : पुं० सूर्ये । आदित्ये । दिवाकरे ॥ रसान्आदत्ते० इतिरवि : । अत्ररसशब्देसलोपः वोत्यादा नमर्थः । वौगत्यादाविति धातोर्वी तिरूपम्० पृषोदरादित्वात्साधुत्वम् । पृषोदरादित्वकल्पनामूलन्तुविष्णुधर्मोत्तरवचनम् । तद्यथा । रसानाच्छतयादानाद्रविरित्यभिधीयतेइति ॥ प्रकाशानांमध्येरविर्विष्णोर्विभूति: ॥ रूयते० स्तूयते । रुशब्दे । अचइ: ॥

रविकान्त : । पुं० सूर्यकान्तमणौ ॥

रविचक्रम् । न० नराकारसूर्यचक्रविशेषे ॥

रविज : । पुं० शनैश्चरे ।

रवितनय : । पुं० सावर्णिकेमनौ ॥ शनौ ॥ यमे ॥

रविनन्दन : । पुं० सुग्रीवाख्यवानरे ॥ वैवस्वतमनौ ॥ सावर्णिमनौ ॥ शनौ ॥ यमे ॥

रविनाथम् । न० बन्धुजीवके ॥ पद्मे ॥

रविपत्र : । पुं० आदित्यपत्रक्षुपे ॥

रविपार्श्वग : । पुं० चण्डांशो : पार्श्वकेषु ॥ तेयथा । माठर : पिङ्गलोदण्डश्चण्डांशो : पारिपार्श्विकाः ॥ अपिच । वाड : शोष : खर: पचौहारकोजानुकारक : । पिंगीग्रजस्त्रपुरुष : प्रामयातप्रतापको ॥ आश्विनेयौतथादण्डीकुल्माष: पार्श्वगारवे : ॥

रविप्रिय : । पुं० आदित्यपत्रे ॥ रक्तकरवीरे ॥ लकुचे ॥ न० ताम्रे ॥ रक्तकमले ।

रविप्रीता । स्त्री० सुवर्चलायाम् ॥

रविरत्नकम् । न० माणिक्ये ॥

रविलोचन : । पुं० विष्णौ ॥ रविर्लोचनमस्यविराडात्मनइतिरविलोचन : ॥

रविलोहम् । न० ताम्रे ॥

रविसंज्ञकम् । न० ताम्रे ॥

रविसुत : । पुं० सुग्रीवे ॥

रविसूनु : । पुं० शनौ ।

रवीन्दम् । न० पद्मे ।

रवीषु : । पुं० कामे ॥

रशना । स्त्री० काञ्च्याम् । कटिभूषणे ॥ अमृते । अशूङ्व्याप्तौसङ्घातेच । अश्भोजनेवा । अशेरशचेति युच्० धातोरशादेश : । यद्वा । रशति । रशशब्देसौत्र: । बहुलमन्यत्रापीतियुच् । जिह्वायाम् ।

रश्मि : । पुं । दीधितौ ॥ पक्ष्मणि । नेत्रपत्रे ॥ अभ्रक्षौ । प्रग्रहे । रथादियुक्ताश्वादीनांसंयमनरज्जौ । अश्नुतेमेनवा । अशू० । अश्नोते रश्चेतिमि : ॥ सूर्यस्यरश्मिना

जलादानादानेयथा। तेजोभिःसर्व लोकेभ्योच्चादत्तेरश्मिभिर्जलम्। स मुद्राद्यायुसंयोगाद्दत्त्यापोगभस्तयः॥ ततस्तुपयसांकालेपरिवर्त्तनृदिवाकरः। नियच्छत्यपोमेघभ्यः शुक्लाशुक्लैस्तुरश्मिभिरिति॥ अमयादयः। तासांशतानिचत्वारिरश्मीनांवृष्टिसर्ज्जने। शतत्रयंहिमोत्सर्गेतावद्गर्भस्यसर्जने॥ आनन्दाश्चहिमेध्याश्चनूतना : पूतनाइति। चतुःशतंवृष्टिवाहास्ता : सर्वाअमृतास्त्रय इति॥

रश्मिपतिः। पुं० आदित्यपञ्चपे॥

रसः। पुं० गन्धरसे॥ जले॥ विषे॥ वीर्ये॥ द्रवे॥ रोगे॥ स्वादे॥ रसनायाह्यगुणे॥ सचकालसहायभूमिवियदनिलानलसंसर्गेणपरिणामान्तरंगतः षड्विधोभवति। तत्र पृथिव्यम्बुगुणबाहुल्यान्मधुरः १। तोयाग्निगुणबाहुल्यादम्लः २। पृथिव्यग्निगुणबाहुल्याल्लवणः ३। वाय्वग्निगुणबाहुल्यात्कटुकः ४। वाय्वाकाशगुणबाहुल्यात्तिक्तः ५। पृथिव्यनिलगुणबाहुल्यात्कषायः ६। आपोरसानामाधारकारणम्० अतआप्योनाम। अपांपृथिव्यामनुप्रवेशात्पृथिव्यप्याधारकारणमेव। तेनजलक्षितीअपितदाधारतयारसानामभिव्यक्तौकारणं। अभिव्यक्तेश्चमधुरादिरूपमन्तरेणासत्त्वात्०मधुरादिविशेषेपिजलक्षिती कारणं। अग्न्यादयस्तुत्रयोनीरसतयामधुरादिविशेषेप्राधान्येननिमित्तकारणम्। तद्व्यतिरेकेणाम्लादिरसाभावात्। रसाभिव्यक्तेश्च०अग्न्यादिभूतत्रयसन्निधानंविनानुपलब्धेरभिव्यक्तावपि०अग्न्यादीनांकारणत्वम्। यदाहमाधवाचार्य्यः। कफवातौवातकफौवातःपित्तञ्चवृद्धिशमौ। त्रिभिराद्यैस्त्रिभिरन्त्यैस्त्रिभिराद्यपरैस्तदन्त्यैश्च १॥ अन्त्याद्याद्यमाद्यान्त्यावन्त्यंकोपशमंमलम्। मध्यमध्यतरौमध्यंप्रयोगान्नयतस्त्रिकौ॥ २॥ आद्यमध्यंनयन्त्यन्त्यंमधुराद्याःशमेतरौ। आद्यंमध्यान्त्यमाद्यञ्चमध्यमान्तिममन्तिमम्॥ ३॥ आद्यंमध्यञ्चमध्यान्त्यमाद्यमध्यान्तिमंक्रमात्। आद्यदोषंरसाः प्रायः प्रयोगपरिशीलिता इति॥ ४॥ मधुराम्ललवणकटुतिक्तकषायाः षड्रसाः। तत्रत्रिभिराद्यैर्मधुराम्ललवणैः कफवातौ यथाक्रमम्वृद्धिशमौयातः। यातइत्यर्थः। कफोवृद्धिंयातिवातःशमंयातीत्यर्थः। वातइतिवागतिगन्धनयोरित्यस्यधातोरूपम्। वातइतिसर्वत्रसम्बध्यते॥ अन्त्यैस्त्रिभिः कटुतिक्तकषायैः वातकफौवृद्धिशमौ

वात : वातोऽद्धिं वातिकफ : शमं
यातीत्यर्थः ॥ आद्यपरैस्तदन्यै रेवंपि
त्तं वृद्धिं यातिअर्थवशाद्वचनविपरि
णाम:। आद्येोमधुर: तस्मात्परैरम्ल
लवणकटुकैस्त्रिभि: पित्तंवृद्धिंयातित
दन्यैस्तेभ्योन्यैर्मधुरतिक्तकषायै: शमं
याति। केचित्तुतदन्यैरित्येवम्पठित्वा
सचान्त्यैरेवेतिविग्रहंकृत्वासमधुर: अ
न्यौतिक्तकषायौतैर्मधुरतिक्तकषा
येरितिव्याख्यानयंति ॥ पिण्डार्थस्तु ०
कफवातौ ० वातकफौ ० त्रिभिरा[illegible]
स्त्रिभिरन्त्यैश्चयथासङ्ख्यं [illegible]शमौ
वात :। पित्तश्चत्रि[illegible]स्तद
न्यैर्वृद्धिशमौवातौल्येकार्थ :॥ १
अन्त्येति। अन्त्यस्त्रिक : कटुतिक्त
कषायाख्य :। त्रयाणांसङ्घ : त्रि
क :। आद्यस्त्रिकोमधुराम्ललवणा
ख्य :। एतौद्वौत्रिकौ ० आद्य मलं
वातंकोपशमौनयत :। मध्यमध्येत
रौत्रिकौमध्यश्चमध्यौचविदान्तेयस्मि
न्नसौमध्य : इतरश्चतौत्रिकौ ० मधु
राम्ललवणा: आद्यस्त्रिक :० तत्रम
ध्योऽम्ल: प्रथमातिरिक्तकारणाऽभा
वात्स्वादम्ललवणकटुतिक्तकषाये
षुषट्सुमध्यौलवणकटू समध्यस्त्रि
क : इतरोऽस्मादन्योमधुरतिक्तक
षायाख्य :० एतौमध्यंवातपित्तक
फेषुपित्ताख्यंक्रमेणकोपशमौनयत:
। अन्त्यं कफमाद्यान्त्यौ ० आद्यस्त्रिको



मधुराम्ललवणाख्य :। अन्त्यस्त्रि
क : कटुतिक्तकषायाख्य : क्रमे-
णकोपशमौनयत :॥ २ ॥ ( + )
मधुराद्या : षड्रसा : प्रयोगेणभ-
क्षणादिनापरिशीलिताअभ्यस्ता :
क्रमेणआद्यमध्यमन्त्यमित्यादीन्प्रा
योबाहुल्येन ० शमेतरौशमंप्रशममि
तरंकोपं तेनयन्तिप्रापयन्ति । तत्र
मधुरआद्यमध्यम् आद्यस्त्रमध्यस्त्रेति-
द्वन्द्वैक्यम्। आद्यंवायुम् मध्यं-
पित्तं शमं नयति । अन्ते भवमन्त्यं
कफंकोपं नयति ॥ अम्ल : आद्यं
वायुंशमंनयतिमध्यान्त्यम् पित्तक-
फौकोपं नयति ॥ लवण : आद्यं
वायुंशमं नयतिमध्यमान्तिमं पित्त
कफौकोपं नयति ॥ कटुरन्तिमं कफं
शमं नयतिआद्यंमध्यञ्चवातपित्तौ
कोपं नयति । तिक्त : मध्यान्त्यं-
पित्तकफौशमं नयतिआद्यंवायुंको
पं नयति ॥ कषाय : मध्यान्तिमं-
पित्तकफौशमं नयतिआद्यंवायुंको
पं नयति प्रायइतिव्यभिचारात् ।
यथामधुरशीतापिजीवन्तीकफं शम
यति । मधुरोरसोवायुंकोपयति ।
एवंकटुकोपिरसोगोवायुंशमंनय-
ति । एवमम्लादिष्वपिकश्चिद्व्यभि
चार :॥ ३ ॥ ४ ॥ तदुक्तं चरके ।
रसनार्थोरसस्तस्यद्रव्यमाप: क्षिति
स्तथा ; निर्वृत्तौचविशेषेचप्रत्यया:

स्वादयस्तय : ॥ एतेचरसा : परस्य रसंयोगात्सप्तपञ्चाशद्भवन्तीतिचक्रपाणिदत्त : ॥ अपिच । स्वाद्वम्ललवणास्तिक्त : कटुकश्चकषायक : । अमीतुषड्रसा : ख्याता : निर्वलोऽपर : पर : ॥ न्यायमतेतु । रसस्तुरसनायाह्योमधुरादिरनेकधा । सहकारीरसस्यायानित्यत्वादिचपूर्ववत् ॥ सहकारीति० रासनज्ञानेर सकारणमित्यर्थ : । पूर्ववदिति । जलपरमाणौरसोनित्य : अन्य : सर्वोपिरसोऽनित्यइत्यर्थ : ॥ शृङ्गारादौ ॥ सेयथा । शृङ्गारहास्यकरुणारौद्रवीरभयानका : । वीभत्साद्भुतसंज्ञौचेत्यष्टौनाट्ये रसा : स्मृता:॥ अमव्दात्० शान्तोपिनवम: स्मृतोवात्सल्यं दशम :स्मृत:। अष्टाविहप्रसिद्धत्वादिस्य(?)न्यत्रविस्तर:॥ देहस्थधातुप्रभेदे । रसिकायाम् । खेदमातरि । वर्मसारे । रक्तसारे ॥ भुक्तस्यपक्वस्यसारभूतोयोद्रव : सरस : सोपिपच्यते । इतिभिषज :॥ अस्यस्वरूपश्चाह : । यथा । सम्यक्पक्वस्यभुक्तस्यसारोनिगदितोरस : । सतुद्रव : सित : शीत: स्वादु : स्निग्धश्चलोभवेत् ॥ तस्य स्थानमाह । सर्वदेहचरश्चापिरसश्चहृदयंस्थलम् । समानमरुता पूर्वंयद्दयं हृदयेधृत :॥ तस्यकर्मा

प्याह । चारुष्ठधमनीर्गत्वाधातून् सर्वानयंरस : । पुष्णातितदनुस्थी(?)यैर्व्याप्नोतिचतनुं गुणै : ॥ गुणै : शीतस्निग्धपोषकत्वै :॥ मन्दवह्निविदग्धस्तुकटुर्वाम्लोभवेद्रस : । सकुर्याद्बहुलान्रोगान्विषक्कत्यंकरोत्यपि ॥ पारदे॥ रसायनार्थिभिर्लोकै : पारदोरस्यतेयत : । ततो रसइतिप्रोक्त : सचधातुरपिस्मृत: ॥ रागे ॥ तृष्णायाम् ॥ शुद्रसुखरागे ॥ सविकल्पकानन्दे । रसयति० आस्वाद्यते । रसआस्वादने । चुरादिरदन्त : । एरच् ॥ रस्यते० ऽस्वाद्यतेऽनेनवा । कर्मणिघञ् । अलोपस्यस्थानिवत्वान्नवृद्धि : ॥ ऽपांसारोरसइत्यन्यच ॥ षष्ठाङ्के ॥ लघ्वादिचिक्रले ० । ऽ ॥ मात्रामाभे । न० बोले ॥

रसक : । पुं० निष्क्राथमांसे । न० खर्परीतुत्थे ॥ येगुणास्तुत्थकेप्रोक्तास्तेगुणारसकेस्मृता : ॥

रसकर्पूर : । पुं० न० कर्पूररसे । रसकपूर इतिख्याते ॥

रसकेशरम् । न० कर्पूरे । सिताभे ॥

रसगन्ध : । पुं० गन्धरसे । बोले ॥ गन्धवान् रसोऽस्य । राजदन्तादि : ॥

रसगन्धक : । पुं० गन्धरसे । बोले

॥ स्वार्थे कन्तिकः ॥ गन्धके ॥

रसगर्भम् । न० रसाञ्जने ॥ रसोग र्भोऽस्य ॥ हिङ्गुले ॥

रसघ्नः । पुं० टङ्कणे ॥

रसजम् । न० रक्ते ॥ रसाञ्जने ॥ मद्यकीटे ॥ गुडे ॥

रसज्ञः । त्रि० रसिके ॥ रसं जानाति । ज्ञा० । आतोनुपेतिकः ॥

रसज्ञा । स्त्री० जिह्वायाम् ॥ टाप् ॥

रसज्ञेष्टः । पुं० मधुररसे ॥ रसज्ञानामिष्टः ॥

रसज्येष्ठः । पुं० मधुररसे ॥ शृङ्गाररसे ॥

रसत् । त्रि० गर्जति ॥ रसति । रसशब्दे । लटः शतृ ॥

रसतेजः । न० रक्ते ॥

रसशब्दः । पुं० सशब्दमेघे ॥

रसदालिका । स्त्री० पुंड्रकेक्षौ ॥

रसद्रावी । पुं० मधुरजम्बीरे ॥

रसधातुः । पुं० पारदे ॥

रसधेनुः । स्त्री० दानार्थेक्षुरसनिर्मितधेनौ ॥

रसनम् । न० स्वदने । स्वादे ॥ ध्वनौ ॥ रसग्रहणलिङ्गेन्द्रिये । जिह्वायाम् ॥

रसना । स्त्री० रास्नायाम् ॥ काञ्च्याम् ॥ रज्जौ ॥ गन्धालिकायाम् ॥ जिह्वायाम् ॥ अस्याः शुभाशुभलक्षणं यथा । कृष्णाजिह्वाभवेद्य-
स्यसमलाघदिवाभवेत् । नघापवान् भवेन्मर्त्यउष्णांस्थूलांयथाभवेत् ॥ श्वेतजिह्वानराः ज्ञेयाः शौचाचारविवर्जिताः । पद्मपत्रसमाजिह्वासूक्ष्मादीर्घासुशोभना ॥ नस्थूलानातिविस्तीर्णायेषांतेमनुजाधिपाः । निम्नदीर्घाचक्रस्वाचरक्ताग्ररसनायदि ॥ सर्वविद्याप्रवक्तासौभवेन्नात्रसंशयः ॥ रसयति । रस आस्वादने । नन्द्यादित्वाल्ल्युः ॥ रसयन्त्यनया । व्यासश्रन्येतियुज्वा ॥ रसति । रसशब्दे । बहुलमन्यत्रापीतिवायुच् ॥

रसनाथः । पुं० पारदे ॥

रसनायकः । पुं० शिवे ॥

रसनालिट् । पुं० कुक्कुरे ॥

रसनेत्रिका । स्त्री० मनःशिलायाम् ॥

रसपाकजः । पुं० गुडे ॥

रसफलः । पुं० नारिकेलवृक्षे ॥

रसभवम् । न० रक्ते ॥

रसमर्दनम् । न० पारदचूर्णीकरणे ॥

रसमानः । त्रि० कूजनशीले ॥ रसते: परस्मैपदित्वात् ताच्छील्यवयोवचनशक्तिषुचानशप्रत्यये।नशानच् ॥

रसमारणम् । न० पारदस्यमारणे ॥

रसमूर्छनम् । न० पारदस्यमूर्छाकरणे ॥

रसराजः । पुं० पारदे ॥ रसाञ्जने ॥
रसवान् । त्रि० सरसे ॥
रसवती । स्त्री० पाकस्थाने । महानसे ॥ रसाः सन्त्यस्याम् । रसादिभ्यश्चेतिमतुप् । उगितश्चेतिङीप् ॥
रसश्रेष्ठः । पुं० पारदे ॥
रसविक्रयी । त्रि० इक्ष्वादिरसविक्रेतरि ॥
रसवित्‌द् । त्रि० रसज्ञे ॥
रसशेषः । पुं० अपक्वरसे ॥ भुक्तस्यपक्वस्यसारभूतोयोद्रवः सरसः । सचापक्वः सरसशेषइत्युच्यते ॥
रसशोधनम् । न० टङ्कणे ॥ पारदशुद्धौ ॥
रससिन्दूरम् । न० सिन्दूररसाख्यौषधे ॥
रसस्थानम् । न० हिङ्गुले ॥ हृदये ॥
रसा । स्त्री० रसनायाम् । रास्नायाम् ॥ पाठायाम् ॥ शल्लक्यामोषधौ ॥ कङ्ग्वाम् ॥ भूमौ ॥ द्राक्षायाम् ॥ काकोल्याम् ॥ रसोस्यामस्ति । अर्शआद्यच् ॥ रस्यतेवारसआस्वादनेचुरादावदन्तः । घञ् । अज्वा ॥
रसाखनः । पुं० कुक्कुटे ॥
रसाग्रजम् । न० रसाञ्जने ॥
रसाञ्जनम् । न० रसजाताञ्जनविशेषे । रसगर्भे । तार्क्ष्यशैले । रसवत् । रसौत इतिभाषा ॥ रौप्याम्बुध्मायमानायांतत्किट्टन्तुरसाञ्जनम् । तदभावेतुकर्त्तव्यंदार्वीक्वाथसमुद्भवम् ॥ इतिराजनिर्घण्टः । अपिच । दार्वीक्वाथसमंक्षीरंपाकंनीत्वायथाघनम् । तदारसाञ्जनाख्यंतन्नेत्रयोः परमंहितम् ॥ रसाञ्जनंतार्क्ष्यशैलंरसगर्भश्चताक्ष्यजम् । रसाञ्जनंकटुश्लेष्मविषनेत्रविकारनुत् ॥ उष्णंरसाञ्जनंतिक्तंछेदनंव्रणदोषहृत् । इति ॥ रसयुक्तमञ्जनम् । शाकपार्थिवादि ॥
रसाढ्यः । पुं० आम्रातके ॥ त्रि० सरसे ॥
रसातलम् । न० पाताले ॥ रसायाभुवस्तलमधः ॥
रसात्मकः । त्रि० रसस्वभावे ॥ रस आत्मायस्य ॥
रसादानम् । न० शोषणे ॥ रसानामादानम् ॥ भूमिदाने ॥
रसाधारः । पुं० सूर्ये ॥ रसस्याधारे ॥
रसाधिकः । पुं० टङ्कणे ॥ अधिकरसे ॥
रसाधिका । स्त्री० काकोलीद्राक्षायाम् ।
रसाभासः । पुं० अनौचित्यविशिष्टरसे ॥
रसाम्लः । पुं० अम्लवेतसे ॥ न० वृक्षाम्ले ॥ चुक्रे ॥
रसायकः । पुं० तृणविशेषे ॥
रसायनम् । न० जराव्याधिजिदौषधे ॥

॥ नसूतेनविनाकान्तंनकान्तेनवि नारस: । सूतकान्तसमायोगाद्रसायनमुदीरितमितिराजनिर्घण्ट: ॥ भावप्रकाशितल्लक्षणादियथा । यज्जराव्याधिविध्वंसिवयसस्तम्भकंतथा । चक्षुष्यंबृंहणंवृष्यंभेषजंतद्रसायनम् ॥ दीर्घमायु: स्मृतिंमेधामारोग्यंतरुणंवय: । देहेन्द्रियबलंकान्तिंनरोविन्देद्रसायनात् ॥ विशेषोस्यभावप्रकाशादिषुद्रष्टव्य: ॥ विषे ॥ कटौ ॥ तक्रे ॥ पुं॰ पक्षिराजे । गरुडे ॥ विडङ्गे ॥

रसायनफला । स्त्री॰ हरीतक्याम् ॥ रसायनानिफलान्यस्या: ॥

रसायनश्रेष्ठ: । पुं॰ पारदे ॥

रसायनी । स्त्री मञ्जिष्ठायाम् ॥ गुडूच्याम् काकमाच्याम् ॥ महाकरञ्जे ॥ गोरक्षदुग्धायाम् ॥ मांसच्छदायाम् ॥

रसाल: । पुं॰ आम्रे ॥ इक्षौ ॥ रसमलति । अल॰ । कर्मण्यण् ॥ यद्वा । रसेनअलति॰ अल्यतेवा॰ पूर्य्यते॰ पूरयतिवा । अजेरच॰च-अ्रा ॥ पनसे ॥ कुन्दरुष्के ॥ गोधूमे ॥ पुण्ड्रकनामेक्षौ । न॰वोले ॥ सिह्लके ॥

रसालवट: । पुं॰ यक्षपुर्य्यांवटयक्षिण्योस्थाने ॥

रसालसा । स्त्री॰ नाड्यां ॥

रसाला । स्त्री॰ रसनायाम् । जिह्वायाम् ॥ दूर्वायाम् ॥ विदार्य्याम् द्राक्षायाम् ॥ शिखरिणीतिप्रसिद्धायाम् । मार्जितायाम् ॥ अस्या: करणप्रकारोयथा । आदौमाहिषमम्लमम्बुरहितंदध्याढकंशर्करांशुभ्रांप्रस्थयुगोन्मितांशुचिपटेकिञ्चित्क्षिपेत् । दुग्धेनार्द्धघमेनमृन्मयनवस्थाल्यांदृढंस्रावयेदेलावीज-लवङ्गचन्द्रमरिचैर्योग्यैस्तद्योजयेत् ॥ भीमेनप्रियभोजनेनरचितानाम्नारसालास्वयंश्रीकृष्णेनपुरापुन: पुनरियंप्रीत्यासमास्वादिता । एषायेनजसन्त्यजितदिनेसंसेव्यतेनित्यशस्तस्यस्यादतिवीर्य्यवृद्धिरनिशंसर्वेन्द्रियाणांबलम् ॥ ग्रीष्मे तथाशरदियेरविशोषितांगायेचप्रमत्तवनितासुरतातिखिन्ना: । येचापिमार्गपरिसर्पणशीर्णगात्रास्तेषामियंवपुषिपोषणमाशुकुर्य्यात् ॥ रसालाशुक्रलावल्यारोचनीवातपित्तजित् । दीपनीबृंहणीस्निग्धामधुराशिशिरासरा ॥ रक्तपित्तंतृषांदाहंप्रतिश्यायंविनाशयेदिति ॥ अपिच । अर्द्धाढकंसुचिरपर्य्युषितस्यदध्न: खण्डस्यषोडशपलानिशशिप्रभस्य । सर्पिष्पलंमधुपलंमरिचंद्विकर्षंशुण्ठ्या: पलार्द्धमपिचार्द्धपलंचतुर्णाम् ॥ सूक्ष्मपटेललनयामृदुपाणिघृ

छाकपूरधूलिसुरभीकृतपाचसंस्था
एषाहकोटरकृतासरसारसालाया
स्वादिताभगवतामधुसूदनेनेति ॥
रसान् आलाति । ला० । मूलविभु
जादित्वात्क : । टाप् ॥
रसालिहा । स्त्री० शीर्षमालायाम् ।
पृथक्पर्ण्याम् । चाकुलिया० इ०
गौ० दे० भाषा ॥
रसाली । स्त्री० पुंड्रकेची ॥
रसाश्वासा । स्त्री० पलाशीलतायाम् ॥
रसास्वाद : । पुं० चवर्णाद्यस्त्ववलम्ब
मेनानिविषयत्वे : सविकल्पका
नन्दास्वादने । धन्योऽहमित्याद्यान
न्दाकारवृत्तौ ॥
रसास्वादी । पुं० भ्रमरे ॥ त्रि० रसा
स्वादविशिष्टे ॥ रसानामास्वादी ॥
रसाह्व : । पुं० सरलद्रुमरसे ॥
रसिक : । पुं० सारसखगे । तुरंगे ॥
हस्तिनि ॥ त्रि० सरसे । रसज्ञे ।
रसिया० इ० भा० रसोस्त्यस्यास्मि
न्वाठन् ॥
रसिका । स्त्री० रसालायाम् ॥ इक्षुर
से ॥ कटिसूत्रे । काञ्च्याम् ॥
रसनायाम् ॥ रागवत्याम् । रसी
ली० इ० भा० ॥ टाप् ॥
रसिकेश्वर : । पुं० श्रीकृष्णे ॥ वृन्दा
वनान्तरे रम्यरासोत्सवसमुत्सुकम्
। रासमण्डलमध्यस्थं नमामिरसि
केश्वरम् ॥

रसिकेश्वरी । स्त्री० श्रीराधिकाया
म् ॥
रसितम् । न० रुते ॥ स्तनिते । मेघ
निर्घोषे ॥ त्रि० स्वर्णादिखचिते ।
स्वर्णादिलिप्ते ॥ रसशब्दे । भावे
क्त : ॥
रसितवान् । त्रि० आस्वादितवति ॥
रस आस्वादने । क्तवतुप्रत्यय : ॥
उगितश्चेतिङीपि० रसितवती ॥
रसुन : । पुं० कन्दविशेषे । लशुने ॥
रसेन्द्र : पुं० पारदे । रसानामिन्द्रः ॥
रसोत्तम : । पुं० मुद्गे । श्रेष्ठरसे ॥
त्रि० तद्वति ॥
रसोद्भवम् । न० हिङ्गुले ॥ त्रि० रस
जाते ॥
रसोन : । पुं० लशुने । रसानके ॥
रस आस्वादने० चुरादिरदन्त : ।
ऊनः । पातकहेतुत्वात् । ऊन
परिहाणे । चुरा अदन्त : । एर
च् । घञ् वा ॥ लशुनस्तुरसोन :
स्यादुग्रगन्धोमहौषधम् । अरिष्टो
म्लेच्छकन्दश्चयवनेष्टोरसोनक : ॥
अस्योत्पत्तिर्यथा । यदामृतंवैनते
योजहारसुरसत्तमात् । तदाततोऽ
पतद्बिन्दु : सरसोसोभवद्भुवि ॥
पञ्चभिश्चरसैर्युक्तोरसेनाम्लवर्जि
त : । तस्माद्रसोनइत्युक्तोद्रव्या
णांगुणवेदिभि : ॥ कटुकश्चापिमू
लेषुतिक्त : पत्रेषुसंस्थित : ।

नालिकषायउद्दिष्टोनालाग्रेलवण : स्मृत : ॥ वीजेतुमधुर : प्रोक्तोर सस्तद्गुणवेदिभि : ॥ तस्यभत्तगुणा: । रसोनोब्रंहणोवृष्य: स्निग्धोष्ण : पाचन : सर : । रसेपाकेचकटुकस्तीच्णोमधुरकोमत : ॥ भग्न सन्धानकृत्कण्ठ्योगुरु : पित्तास्त्रवृद्धिद: । वलवर्णकरोमेधाहितोनेत्योरसायन : ॥ हृद्रोगजीर्णज्वरकुचिशूलविबन्धगुल्मारुचिकासशोफान् । दुर्नामकुष्ठानलसादजन्तुसमीरणश्वासकफांश्चहन्ति ॥ मद्यंमांसंतथाम्लञ्चहितंलशुनसेविनम् । व्यायाममातपंरोषमतिनीरपयोगुडम् । रसोनमश्नन्पुरुषस्त्यजेदेतन्निरन्तरं ॥

रसोनक : । पुं० रसोने । स्वार्थेकन् ॥

रसोपलम् । न० मौक्तिके ॥

रसौदनम् । न० पुं० मांसरसेनसिक्तओदने । रसौदनोगुरुर्वृष्योवल्योवातज्वरापह : ॥

रस्नम् । न० द्रव्ये ॥ रस्यते०आस्वाद्यते । रस० । दृषिशुषिरसिभ्य: कित्रिति न : ॥

रस्यम् । न० रक्ते । त्रि० आस्वाद्ये । मधुररसप्रधाने ॥

रस्या । स्त्री० पाठायाम् । रास्नायाम् ॥

रह : । अ० विजने । विविक्ते ॥ रह्यते । रहेरसुन् ॥ रमन्तेऽत्रवा । रमेर्देशेहश्चेत्यसुन्०हीम्नादेशश्च ॥

रह : । न० तत्त्वे ॥ रते । गुह्ये ॥ रह्यते । रहत्यागे । असुन् ॥ यद्वा । रमन्तेऽत्र । रमेर्देशेहश्चेत्यसुन्हाम्नादेशश्च ॥

रहस्यम् । त्रि० अभिप्राये । उपनिषदि ॥ उपासने ॥ अतिगोप्ये ॥ गोपनीयत्वंसर्वत्रसमानम् ॥ रहस्यरोमस्पर्शनिषेधोयथा ; नसर्पशस्त्रै: क्रीडेतमृगानिखानिचनस्पृशेत् । रोमाणिचरहस्यानिनाशिष्टेनसहाव्रजेत् ॥ द्र० रहोभवम् दिगादित्वाद्यत् ॥

रहस्या । स्त्री० सरिद्विशेषे ॥ पाठायाम् ॥ रास्नायाम् । टाप् ॥

रहित : । त्रि० वर्ज्जिते ॥

रहूगण : । पुं० पुराणप्रसिद्धेसिन्धुसौवीरदेशयो०र्नृपतिविशेषे ॥

रा । स्त्री० दाने ॥ काञ्चने ॥ विभवे ॥

राका । स्त्री० पूर्णेन्दुपूर्णिमायाम् ॥ नदीविशेषे ॥ कच्छूरोगे ॥ नवजातरज : स्त्रियाम् ॥ रातिशुभम् । रा दाने । कृदाधारार्चिकलिभ्य : कः । कुर्ष्योणादिक : कप्रत्यय : । बाहुलकाद्गुणकत्वेत्संज्ञा । संज्ञापूर्वकविधेरनित्यत्वात्कोणइतिद्रष्टव्यम् ॥

राकिनी । स्त्री० दुर्गायामनुचरीविशेषे ॥

राक्षस : । पुं॰ कौणपे । क्रव्यादे । आशरे । रात्रिचरे । यातुधाने ॥ रक्षन्त्यस्मात् । रक्षपालने । असुन् । प्रज्ञाद्यण्॰ राक्षस : । स्वार्थिका : प्रकृतितोलिङ्गवचनान्यतिवर्तन्तइतिपुंस्त्वम् ॥ विवाहविशेषे । यथा । हत्वाच्छित्वाचभित्वाचक्रोशन्तींरुदतींगृहात् । प्रसह्यकन्याहरणंराक्षसोविधिरुच्यते ॥ रक्षसइवायम् । अण् । षष्टिवत्सरान्तर्गतवत्सरविशेषे ॥ यथा । कोद्रवा : शालिमुद्गाद्यपीडान्सेवरवर्णिनि । सर्वौषधानिधान्यानिराक्षसेनिष्ठुरा : प्रजा : ॥

राक्षसिका । स्त्री॰ राक्षसीसङ्क्रान्तौ ॥

राक्षसी । स्त्री॰ चण्डायाम् । धनहर्यामोषधौ ॥ कौणप्याम् । राक्षसस्त्रियाम् । दंष्ट्रायाम् । डाढ दाढ॰ इ॰ भा॰ ॥ सायाह्नवेलायाम् ॥ सूर्यसंक्रान्तिविशेषे ॥ यथा । शनौतौक्ष्णासंज्ञे भवेद्राक्षसीसासुखायान्त्यजानांतदामासमेकम् ॥ तामस्यांप्रकृतौ ॥ अविहितहिंसाहेतुर्द्वेषप्रधानाराक्षसीप्रकृति : । वैदिकनिषेधातिक्रमेण स्वभावसिद्धरागद्वेषानुसारिसर्वानर्थहेतुप्रवृत्तिहेतुभूतातामसी हिंसाप्राधान्येनद्वेषप्राबल्याद्राक्षसीत्वमस्या : ॥ रक्षसइयम् । तस्येदमित्यण् । ङीप् ॥

राक्षसेन्द्र : । पुं॰ रावणे ॥

राक्षा । स्त्री॰ लाक्षायाम् ॥ रक्ष्यतेऽनया । रक्ष॰ । गुरोश्चहलइत्य : । प्रज्ञाद्यण् । अजादित्वाट्टाप् ॥

राग : । पुं॰ मात्सर्ये ॥ लोहितादिषु ॥ जपाकुसुमादिद्रव्ये ॥ क्लेशादौ ॥ अनुरागे । परस्परप्रीतौ । स्नेहे ॥ तल्लक्षणंयथा । सुखमप्यधिकंचित्तेसुखत्वेनैवरज्यते । यतस्तुप्रणयोत्कर्षात्सरागइतिकीर्त्यते ॥ इति ॥ सुखानुशयिनि । साधनरहितस्यापि॰सर्वंसुखजातीयंमेभूयादितिविपर्ययविशेषे । महामोहे ॥ मोहादनुभूयमानंसुखमनुशेतेकश्चिद्वौद्धवृत्तिविशेषोराजस : सर्वंसुखजातीयंमेभूयादिति । तच्चदृष्टादृष्टसामग्र्याभावात्सम्पादयितुमशक्यम्॰ अत : सचित्तंकलुषीकरोति । यदातु॰सुखिषुप्राणिष्वयंमैत्रीभावयेत्॰सर्वेप्येतेसुखिनोमदीयाइति॰तदातत्सुखंस्वकीयमेवसम्पन्नमितिभावयतस्तचरागोनिवर्त्तते । यथास्वस्यराज्यनिवृत्तावपिपुत्रादिराज्यमेवस्वकीयंराज्यंतद्वत् । निवृत्तेचरागे॰ वर्षाव्यपायेजलमिवचित्तंप्रसीदति ॥ रज्यतेविषयेषुपुरुषोऽनेनेति व्युत्पत्त्या॰कामे । गर्वे । तत्तत्फलदृष्णायाम् ॥ प्राप्तोविषय : क्षयकारणंसत्यपिनक्षीयतामित्येवमा

कारश्चित्तवृत्तिविशेषोरञ्जनात्मारा ग : ॥ सदाकामाभिनिविष्टस्वरूपो भिष्वङ्गोराग : ॥ शोभनाध्यासनि बन्धनोविषयेषुरञ्जनात्मकश्चित्तवृ- त्तिविशेषोऽस्यत्माभिनिवेशरूपोरा- ग : ॥ रागोलिङ्गमबोधस्यचित्तव्या यामभूमिषु । कुत : शाद्वलतातस्य यस्याग्नि : कोटरेतरो : ॥ रागाद् य : सन्तुकामंनलह्लावोपराध्यति । उत्खातदंष्ट्रोरगवद्विद्याकिंकरिष्य तीतिचाचार्य : ॥ सितादौनांवि- कारविशेषे ॥ यथा । सितामध्वा- दिमधुरोद्राक्षादाडिमजीरस : । विरलश्चेत्कृतोरागइति ॥ गान्धा- रादौ ॥ नृपे ॥ चन्द्रे ॥ सूर्ये ॥ लाक्षा दौ ॥ रक्तिमस्विषि ॥ रञ्जने ॥ गा नशास्त्रोयरागेषु ॥ यथा । भरतम- ते॰हनुमन्मतेचराग : षड्विध : । तेषांनामानियथा । भैरव : १ कौ शिक : २ हिन्दोल : ३ दीप- क : ४ श्रीराग : ५ मेघ : । हनु- मन्नरतयोर्मतेप्रत्येकमेषांपञ्चरागि- ण्य : सोमेश्वरकलानाथयोर्मतेप्र- त्येकमेतेषांषड्रागिण्य : । एतेषांप्र- त्येकमष्टौपुत्रा : एकैकापुत्रभार्या- च ॥ कलानाथसोमेश्वरमतेषड्रागा यथा । श्रीराग : १ वसन्त : २ पं चम : ३ भैरव : ४ मेघ : ५ नट नारायण : ६ । इतिनानासङ्गीत

राग :

शास्त्रम् ॥ अथरागस्यव्युत्पत्तिसङ् ख्यास्थानानि । येस्तुचेतांसिरञ्ज- न्ति जगत्त्रितयवर्त्तिनाम् । तेराग इतिकथ्यन्ते मुनिभिर्भरतादिभि : ॥ गोपीभिर्गीतमारब्धमेकैकंकृष्ण सन्निधौ । तेनजातानिरागाणांस- हस्राणितुषोडश ॥ तेषुतेषुषड् त्रिंशद्रागाजगतिविश्रुता: ॥ काल क्रमेणतत्रापिह्रासएवतुदृश्यते ॥ केचिदष्टमितेरागा : सर्वेसन्तीति निश्चितम् । मेरोरुत्तरत : पू- र्वेपश्चिमेदक्षिणे तथा ॥ समु- द्रकच्छेयेदेशास्तत्रामीषांप्रचारणा । तथाच । अङ्गवङ्गकलिङ्गते लिङ्गभूलिङ्गहावङ्गसुरङ्गपूपलङ्गखेल ङ्गसौवीरकौरकाश्मीरनाभीरनाहो रसिन्धुजालन्धरमगमगधनिषधम लयहोहयगजाह्वयमालवजालवम रुमरुचोलोत्कलकुन्तलसिंहलहरि केलकेरलकोशलमल्लिवालमल्लभल्ल सौविदल्लवातकिल्लातगुजरातगुञ्ज रकांजरगौडद्रविडोड्राम्बर्वेदिका स्त्रीपाञ्चालसौराष्ट्रशबरलोहावरस शकोकशबरूपकामरूपहरिगर्भवि दर्भदुर्मटवाटकोकटदेवेद्गनटङ्गन नाटभोटकवाटकरहाटकर्णाटकुन्ति कावन्तिकनककाञ्चकान्यकुब्जभोज काम्बोजतोजतुखारबिहारबलिहा रराजगेहविदेहवाल्हीकचच्चरीकची

गर्त्तामर्त्तादिदेशेषु रागा: प्रचरन्तीति ॥ यस्यश्रवणमात्रेणरञ्ज्यन्ते सकला : प्रजा :। सर्वानुरञ्जनाद्धेतोस्तेनरागइतिस्मृत : ॥ अथरागा : । भादौमालवरागेन्द्रस्ततोमल्लारसंज्ञित : । श्रीरामश्चतत : पश्चाद्वसन्तस्तदनन्तरम् ॥ हिन्दोलश्चाथकर्णाटएतेरागा : षडेवतु । षड्त्रिंशद्रागिणीतत्क्रमश : कथितामया ॥ धानसीमामसीचैवरामकीरीच सिन्धुडा । आशावरीभैरवीचमालवस्यप्रिया इमा : ६ ॥ वेलावलीपूरवीचकानडामाधवीतथा । कोडाकेदारिकाचापिमल्लारदयिताइमा : ६ ॥ गान्धारीशुभगाचैवगौरीकौमारिकातथा । वेलोयारीचवैरागीश्रीरागस्यप्रियाइमा : ॥ ६ ॥ तुडीचपञ्चमीचैवललितापठमञ्जरी । गुञ्जरीचविभाषाचवसंतस्यप्रियाइमा : ६ ॥ मायूरीदीपिकाचैवदेशकारीचपाहिडा । वराडीमोरहाटीचहिन्दोलस्यप्रियाइमा : ६ ॥ नाटिकाचाथभूपालीरामकेलीगडातथा । कामोदाचापिकल्याणीकर्णाटस्यप्रियाइमा : ६ ॥ ३६ ॥ अथकालनियम : । विभाषाललिताचैवकामोदौपठमंजरी । रामकीरीरामकेलीवेलोयारीचगुञ्जरी देशकारीचशुभगा पञ्चमीचगडातुडी । भैरवीचाथकौमारीरागिण्योदशपञ्चच ॥ एता : पूर्वाह्णकालेतुगीयन्ते गायनोत्तमै : । वराडीमायूरीकोडावैरागीचाथधानुषी ॥ वेलावलीमोरहाटीसप्तैतारागयोषित : । गेयामध्याह्नकालेतुयथाभरतभाषितम् ॥ गान्धारीदीपिकाचैवकल्याणीपूरवीतथा । कानडाशावरीचैवगौरीकेदारपाहिडा ॥ मायूरीमालसीनाटीभूपालीसिन्धुडातथा । सायाह्नेतास्वरागिण्य : प्रगायन्तिचतुर्द्दश ॥ पुरुषास्तुभूषाढ्यारागास्ते मालवादय : । प्रदोषेचापराह्णेचरजन्यांगानगोचरा : ॥ दशदण्डात्परंरात्रौसर्वेषांगानमीरितम् । मेघमल्लाररागस्यगानंवर्षासुसर्वदा ॥ श्रीपञ्चमींसमारभ्ययावज्जन्मोत्सवंहरे : । तावद्वसन्तरागस्यगानमुक्तंमनीषिभि : ॥ शक्रोत्थानंसमारभ्ययावद्दुर्गामहोत्सवम् । गीयतेतद्बुधैर्नित्यंमालसीसाममोहरा ॥ सर्वेषामिह रागाणांरागिणीनाञ्चसर्वश : । रङ्गभूमौनृपाज्ञायांकालदोषोनविद्यते ॥ रागश्चालापायेदादौतत्पतीस्तदनन्तरम् । नान्यपत्नीप्रगातव्यानृपाज्ञायांनदूषणम् ॥ रागा : षडथ रागिण्य : षट्त्रिंशच्चारुविग्रहा : आगताब्रह्मसदनात्ब्रह्माणंसमुपासते ॥ अथध्यानम् । नितम्बिनीचु ।

राग :

म्बितवक्त्रपद्म : शुकद्युति कुण्डलवान्प्रमत्त : । सङ्गीतशालीप्रविशन्प्रदेशेमालाधरोमालवरागराज : ॥ १ ॥ नीलोत्पलंकर्णयुगेवहन्ती-श्यामासुकेशीचसुमध्यभागा । वृष-भहासाम्बुजरम्यवक्त्रासाधानसोपम्रसुखारूनेत्रा ॥ १ ॥ करेयुताचाम्बुजयुग्मरम्यादूतस्ततस्वारूविलोकयन्ती । कण्ठस्फुरन्मौक्तिकरत्नहारामामालसोसद्विभूषिताविचित्रा॥२॥ प्रतप्तचामीकरचारूवक्त्राकर्णावतंसं कमलंवहन्ती । पौष्पंधनु : पुष्पशरैर्दधानाचन्द्राननारामकिरीप्रदिष्टा ॥ ३ ॥ महेन्द्रनीलद्युतिरम्बुजाचीप्रवादयन्तीकपिलाशयन्त्रम् । बिचित्ररत्नाभरणासुकेशी-सासिन्धुडाकान्तसमीपसंस्था ॥ ४ ॥ जवाप्रसूनद्युतिविम्बवक्त्रासकञ्जपद्मंकरयोर्दधाना । चौमांशुकाच्छादितगात्रयष्टिराशावरीरङ्गकलाविदग्धा ॥ ५ ॥ सरोवरस्यास्फटिकस्यमन्दिरेसरोरुहै : शङ्करमर्चयन्ती । तालप्रयोगप्रतिरङ्गगीतैर्गौरीतनुर्भैरविकासतीयम् ॥ ६ ॥ अथमल्लार : । विहारशीलोतिसुकान्तिदेह: कान्ताप्रियोधार्मिकशीलयुक्त : । कामातुर: पिङ्गलनेत्रयुग्मोमल्लाररागः : प्रियकृतसुवेश : ॥ २ ॥ सङ्केतिसोत्फुल्ल

राग :

तानिकुञ्जेकृतस्थिति : कान्तसमागमाय । वेलावलीचम्पकमौलिनीसाबालाविचित्राभरणानिरूक्ता ॥ १ ॥ रह : सुकान्तहृयमाणपञ्चरम्यंवहन्तीकुचकुम्भयुग्मे । दूर्वादलश्यामतनु : सकामापुरातनै : सापुरवीनिरूक्ता ॥ २ ॥ अशोकवृक्षस्यतलेविषण्णावियोगिनीवाष्पकणाश्चिताङ्गी । विभूषिताङ्गीनटिलेववालासाकानडाहिमलतेवतन्वी ॥ ३ ॥ सङ्ख्यसङ्ख्यगलेदधानाप्रसूनमालादयितेनबाला । गौरीस्वकान्ता ननचुम्बितास्यासासुन्दरीमाधविकानिकुञ्जे ॥ ४ ॥ सुकच्छपीवादयतिस्वभर्तुर्गानार्थमभ्यस्यतिसम्मुखेन । सदैवतालाविचिताचमाला कोडाकलातानवतीमतासा ॥ ५ ॥ स्नात्वासमुत्तीर्णवतीसुदेहाकेशप्रणिस्यन्दितवारिबिन्दु : । निष्पीडयन्तीतिमिरांशुकान्तकेदारिकारक्तपयोधरश्री : ॥ ६ ॥ अथश्रीराग : । लीलावतारेणवनान्तराणिचिन्वन्प्रसूनानिवधूसहाय : । विलासवेशोद्यतिदिव्यमूर्त्ति : श्रीरागएषप्रथित: पृथिव्याम् ॥ ३ ॥ संध्यासुकालेगृहमध्यदेशेप्रवादयन्तीहपिनाकयन्त्रम् । धाराधराधातुविचित्रिताङ्गीगान्धारिकागम्भसूनंनिधत्ते ॥ १ ॥ रस

नयासुविचारितकौतुकं विदधतीक विकोविदकौतुकम् । सुकवितामृतभावनतत्पराभगवतीसुभगासमुदाहृता ॥ २ ॥ पुष्पोद्यानेसार्द्धमालीकलापै : क्रीडन्त्येवं कोकिलाकाकलीषु । रामाश्यामासङ्गत्यानाप्तसीमागौरीगौरीगौरवालोकदिष्टा ॥ ३ ॥ अट्टालिकायांस्फुटकौमुदीभि: प्रकाशितायांरजनीविहारम् । अङ्गायकान्तेनसमंवसन्तीकौमारिकाकामकलांवहन्ती॥ ४ ॥ गौरीपादाम्भोजमभ्यर्चयन्तीगन्धोद्धतगन्धमाल्यंदधाना । नानारत्नोपायनैर्भक्तिभावैर्वेलोयारीकथ्यतेवालिकेयम् ॥ ५ ॥ उल्लासयन्तीधम्मिल्लरत्न : स्थाने प्राणबन्धुना । मालतीकुसुमस्रग्भिर्वैरागौरागिणीस्मृता ॥ ६ ॥ अथवसन्त : । चूताङ्कुरैर्णैवल्लतावतंसोविघूर्णमानारुणनेत्रपद्म : । पीताम्बर : काञ्चनचारुदेहोवसन्तरागोयुवतीप्रियश्च ॥ ४ ॥ सुनृत्यमानातिसुशीलयुक्तामुक्तालताकल्पितहारयष्टि: । चूताङ्कुरंपाणियुगेवहन्तीजवारुणाङ्गीतुडिकेरितीयम् ॥ १ ॥ सङ्गीतगोष्ठीषु गरिष्ठभावं समाश्रितागायनसम्प्रदायै : । खर्व्वङ्गिनीनूपुरपादपद्मासापञ्चमीपञ्चमवेदवेत्री ॥ २ ॥ उरसिकेशवयस्यसुसारंविद



धतीशयनोत्थितचारुवेशम् । विलुलितालकवल्लिकशाङ्गीभासुराललिताकथिताबुधै : ॥ ३ ॥ सखीकलापै : परिहास्यमानावियोगिनीकान्तवियोगदेहा । पीनस्तनीचैवधराप्रसुप्ताश्यामासुकेशीपठमञ्जरीयम् ॥ ४ ॥ कर्णोत्पलालम्बिमधुव्रतालीशृणोतिसामञ्जुलकूजितानि । कान्तान्तिकंगन्तुमना : प्रदोषे सागुर्ज्जरीवेशकलोचिताङ्गी ॥ ५ ॥ अध्यापयन्तीनिजशिष्यवृन्दं संगीतशास्त्राणिविवेचनाभि: ॥ मनोहराहारलताभिरामासमस्तभाषाकुशलाविशेषा ॥ ६ ॥ अथहिल्लोल : । हासाभिलासेनपतन्पृथिव्यामुत्थापितस्तत्चरणमालिवृन्दै : । उल्लोलसंगीतरसैर्विदग्धोहिल्लोलराग:कथितोरसज्ञै:॥५ मयूरकेकाश्रवणोल्लसन्तीमयूरिकानृत्यततंकिरन्ती । मयूरकांतीवसितिंदधानामायूरिकासङ्कथितागुणज्ञै:॥ १ ॥ प्रदोषकालेगृहसम्प्रविष्टाप्रदीपहस्तारुणगात्रवस्त्रा । सीमन्तसिन्दूरविराजमानासुरक्तमालाकिलदीपिकेयम् ॥ २ ॥ सार्द्धंसखीभिर्विजनेवसन्तीविचित्रवर्णाजनितम्वसङ्गा । निरीक्ष्यमाणाननदर्पणायायासादेशकारीकथितागुणज्ञै : ॥ ३ ॥ भर्त्तुर्दधानाचरणारविन्दंनिषेधय

राग :

स्तीपरदेशयानम् । प्रकामदाम्पत्य सुखेनिमग्नासापाहिडासङ्कथिता-कवीन्द्रैः ॥ ४ ॥ कर्णे दधानासुर-पुष्पयुग्मं स्फुरत्सुवर्णोज्ज्वलमनोहरा-ङ्गी । स्मेराननाचारुविलोलनेत्रा वराङ्गनेयंकथितावडारी ॥ ५ ॥ उत्पन्नमात्रे प्रथमापराधेमानंपुनः कर्तुमनाश्विरेण । ऋजुस्वभावान्नि-यतंरुदन्तीसामोरहाटीहठकेलिरु-ष्टा ॥ ६ ॥ अथकर्णाट : । कृपाण-पाणिस्तुरगाधिरूढोमयूरकण्ठाति-सुकण्ठकान्ति : । स्फुरत्सितस्नि-ग्धरस : प्रशान्त : कर्णाटरागोऽह-रितालवर्ण : ॥ ६ ॥ चिरंनटन्ती-शुभरङ्गमध्ये संप्रार्थयन्तीनटिनंवस न्तम् । सुगीततालेषुकृतावधाना-नटीषुनाटीपरिधानदेहा ॥ १ ॥ स्वनायकंपुष्पलतादिरूढाहसन्मुखी सर्वमुदंवहन्ती । स्वनानिशब्दहित नोतिमुग्धाभूपालिकासास्खलदु-त्तरीया ॥ २ ॥ अध्यापयंतीशुक सारसारी : श्रीरामरामेतिमुवेशल क्ष्मीः । वामस्तनार्द्धस्खलितांशुक श्री : श्रीरामकेलीकथिताकवीन्द्रैः ॥ ३ ॥ विशेषवैदग्ध्यवतीसमस्ता न्कलाविलासेनविमोहयन्ती । हृ ष्टान्वितस्वापरिपुष्टदेहावडाप्रलम्बस्त नभारभव्या ॥ ४ ॥ भर्तु : समं पार्थयितन्तरन्तीपयेविहारेयसरो

राग :

रुहाणि । विचिन्वतीसौरभमोद मानाकामोदरागिण्युदितागुणज्ञैः ॥ ५ व्याधूतानटनृत्यपरिश्रमेण बालालीलाभि : सुदतीकृतादरा । नटीमांकल्याणीकलयतिमनस्त स्तीएणप्रस्थानंमुखरिताकिङ्किणीक लापम् ॥ ६ ॥ अथरागरागिणीनां भावनिरूपणम् । मालव : श्रीश्च हिन्दोलोमल्लारस्तदनन्तरम् । गाय निगायकाधीरसानन्देनचतुष्टय-म् । वसन्तराग: कर्णाटोहवीरीभव त : क्रमात् ॥ धानसीमालसीचैव भैरवीमाधवीतथा ॥ सुभगापञ्चमी नाटीवेलोयारीचगुर्जरी । कामो दाचापिकल्याणीकोडाकेदारिका तुडी ॥ कौमारीमायुरीचैवदेशका रीचसिन्धुडा । रामकेलीचभूपाली रागिण्यस्त्रेतिविंशति : ॥ आनन्दां-शाङ्कृतिप्रोक्तागीयन्तेगानकोविदैः । पूरवीकानडागौरीरामकीरो-षदीपिका ॥ आशावरीविभाषाच वडारीचगडातथा । एतास्तनवरा गिण्योवीरांशेगानमुत्तमम् ॥ वेला वलीचगान्धारीललितापठमञ्जरी । वैरागिरागिणीचापिमोरहाटीच-पाहिडा ॥ करुणांशाविज्ञानीया तृप्तये तारागयेोपित : ॥ रागेण रसभागेनषट्त्रिंशत्रागिणीषुच । करुणानन्दवीरेषुस्वापरार्थमत

थयम् ॥ इतिसंगीतदामोदरेशिव नारदसंवादे १।३ अध्यायी। रञ्जन म्। रञ्ज॰ भावेघञ्॥ रज्यतेऽने नेतिवा। अकर्त्तरिचकारकेसंज्ञाया मितिघञ्। घञिचभावकरणयो रितिरञ्जेर्नलोपः॥

रागचूर्णः। पुं॰ दन्तधावने। खदिरे ॥ मकरध्वजे। कन्दर्पे॥ लाक्षारसे ॥ फल्गुचूर्णे गुलाल॰इ॰भा॰॥ सिन्दूरे॥

रागच्छन्नः। पुं॰ कामदेवे॥ त्रि॰रा गेणच्छन्ने॥

रागदः। पुं॰ तैरणीक्षुपे॥ त्रि॰राग दातरि॥

रागदालिः। पुं॰ मसूरे॥

रागपद्मः। पुं॰ कामादिषु॥ काम श्चमत्सरश्चैवस्पृहातृष्णातथैवच। लो भोमायाचदम्भश्चरागपद्मइतीरित॥

रागपुष्पः। पुं॰ बन्धूके रक्ताम्ला ने॥

रागपुष्पी। स्त्री॰ जबायाम्॥

रागप्रसवः। पुं॰ बन्धूके॥ रक्ताम् म्लाने॥

रागवर्द्धी। त्रि॰ रागप्रवर्त्तके॥

रागयुक्। पुं॰ माणिक्ये॥

रागरज्जुः। पुं॰ कामदेवे॥

रागलता। स्त्री॰ रत्याम्। कामप्रिया याम्॥

रागवृन्तः। पुं॰ कामदेवे॥

रागषाडवः। पुं॰ दाडिमद्राक्षायुक्त मुद्गयूषे॥

रागसूत्रम् न॰ तुलासूत्रे॥ पट्टस् त्रे॥

रागाङ्गी। स्त्री॰)

रागाढ्या। स्त्री॰) मञ्जिष्ठायाम्॥

रागान्धः। त्रि॰ आशादत्त्वादानशीले॥

रागाशनिः। पुं॰ बुद्धे॥

रागिणी। स्त्री॰ विदग्धायांनार्याम्॥ मेनकायाज्येष्ठकन्यायाम्॥ जय श्रीनामन्यांलक्ष्म्याम्॥ षड्रागा णांस्त्रिषु॥ तासुहनुमन्मतेभरतम तेचत्रिंशत्प्रकाराः॥ सोमेश्वरम तेकल्लानाथमतेचषट्त्रिंशत्प्रका राः। आसांविवरणंरागशब्देद्रष्टव्य म्॥

रागी। त्रि॰कामाद्याकुलचित्ते। का मुके। रञ्जके। अनुरक्ते॥ रागि णोदेहवन्तोऽपिसदेवासुरमानुषाः॥ यथोक्तंभागवतेव्यासेन। रागीविष्णु ः शिवोरागी ब्रह्मापिरागसंयुतः। रागज्ञनविनातुर्यादिदेहइवलक्ष्यत इति॥ रञ्जेः सम्पृचानुरुधेतित च्छीलादिषुघिनुण्॥ तृणधान्यवि शेषे। लाञ्छने। बहुतरकणिशे। गुच्छकणिशे॥

राघ्॰ग्॰। त्रि॰ समर्थे॥ राघति। राघृसामर्थ्येक्विप्॥

राघवः। पुं॰ रघुवंशजे। श्रीरामे॰

पुराणप्रसिद्धेमत्स्येमहामीने ॥ यथा । अस्तिमत्स्यस्तिमिर्नामशतयोजनविस्तृत: । तिमिङ्गिलस्तद्गिलोपित द्गिलोप्यस्तिराघव : ॥ इति ॥ब्रह्माण्डाभिमानिनि ॥ रङ्घतिनाशंगच्छतीतिरघुरन्नमय : कोश : । तत्रविदित: । अण् ॥

राघवायण: । पुं॰ रामायणे ॥ यथा । सेतिहासपुराणानिराघवायणभारतम् । समाप्तिरङ्घितान्येवसन्निता निश्रुतानिति ॥ इत्यग्निपुराणम् ॥

राङ्कल : । पुं॰ द्रुमकण्टके ॥

राङ्कवम् । न॰ मृगरोमजेवस्त्रे ॥ रङ्कौभवम् । रङ्कोरमनुष्येण्चेत्यण् । मृगरोमजइत्यत्रमृगशब्देनपशुमात्रंग्राह्यम् । तेनकम्बलाद्यपिराङ्कवम् ॥ पुं॰ गवि ॥ रङ्कौ॰देशविशेषेभव : । पूर्ववणण् ॥

राङ्कवक : । पुं॰ मनुष्ये ॥ रङ्कौभव : । मनुष्यतत्स्थयोर्वुञ् ॥

राङ्कवायण: । त्रि॰ राङ्कवार्थे ॥ रङ्कौभव : । रङ्कोरमनुष्येण्चेतिष्फक् ॥

राङ्गणम् । न॰ रङ्गन्॰इ॰गौ॰भा॰प्र॰ पुष्पविशेषे ॥

राट्॰ड् । पुं॰ राजनि ॥ राजते । राजृदीप्तौ ॥ सत्सूद्विषेतिक्विप् ॥

राजकम् । न॰ नृपवृन्दे ॥ राज्ञांसमूह: । गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ॥ पुं॰ राजनि ।

राजकदम्ब : । पुं॰ कदम्बविशेषे ॥

राजकन्या । स्त्री॰ केविकापुष्पे ॥ भूपसुतायाम् ॥

राजकर्कटी । स्त्री॰ चीनाकर्कट्याम् ॥

राजकशेरु : । पुं॰ न॰जलजकंदविशेषे ॥ भद्रमुस्तायाम् ॥

राजकीय : । त्रि॰ राजसम्बन्धिवस्तुनि ॥ राज्ञइदम् । राज्ञ : कचेतिच्छ : ककारोन्तादेश : ॥

राजकुमार : । पुं॰ राजपुत्रे ॥

राजकूष्माण्ड : । पुं॰ वार्त्ताक्याम् ॥

राजकोशातकी ॥ स्त्री॰ धामार्गवे । तोरञ्जो॰इ॰ भा॰प्र॰ फलशाकेराजकोशातकीशीतामधुराकफवातला । पित्तघ्नीदीपनीश्वासज्वरकासकृमिप्रणुत् ॥

राजक्षवक : । पुं॰ सर्षपे ॥

राजखर्जूरी । स्त्री॰ श्रेष्ठखर्जूर्य्याम् । पिण्डखर्जूरिकायाम् । राजपिण्डायाम् । नृपप्रियायाम् ॥

राजगामि । त्रि॰ राजसम्बन्धिनि ॥

राजगिरि : । पुं॰ शाकप्रभेदे । राजाद्रौ । राजशाकिन्याम् ॥

राजगुह्यम् । न॰ सर्वेषांगुह्यानांराज्ञि: ॥ गुह्यानांराजा । राजदन्तादि: ॥

राजगृहम् । न॰ । तीर्थविशेषे ॥

राजग्रीव : । पुं॰ मत्स्यविशेषे ॥ मद्गुरे ॥

राजघ: । त्रि॰ तीक्ष्णे ॥ राजहन्तरि ।

राजानंहन्ति । हन० । राजघउप-सङ्ख्यानादृक् ॥ टिलोपोघत्त्वञ्च निपात्यते ।

राजचिह्नम् । न० नृपाणामसूचकील क्षणविशेषे ॥ चिह्नानांराजा । राजदन्तादि ॥

राजचिह्नकम् । न० उपस्थे ॥ चिह्नानांस्त्रीपुंविभाजकानांराजा ॥

राजजम्बूः । स्त्री० पिण्डखर्जूरे ॥ जम्बूप्रभेदे । फलेन्द्रे । फलेन्द्रा० इ० भा० । राजजम्बूफलंस्वादुविष्टम्भिगुरुरोचनम् ॥ जम्बूनांराजा ॥ राजदन्तादिः ॥

राजतम् । न० रजते ॥ त्रि० रजतनिर्मिते । रूप्यमये ॥ रजतस्यविकारः । प्राणिरजतादिभ्योञ्जि त्यञ् ॥

राजतरुः । पुं० कर्णिकारवृक्षे ॥ आरग्वधे ॥

राजतरुणी । स्त्री० पुष्पविशेषे । महासहाख्यम् । वर्णपुष्पे । अम्लाने । सुपुष्पे । सुवर्णपुष्पे ॥

राजता । स्त्री० राजत्वे ॥

राजताल : । पुं० स्वनामख्यातपादपे ॥ गुवाके ॥

राजतेमिषः । पुं० नाटाम्रे ॥ सुखाशे ॥ इ० त्रिकाण्डशेषः ॥

राजदण्डः । पुं० राजशासने ॥

राजदन्तः । पुं० अधोदन्तपङ्क्तिस्थ मध्यदन्तयुग्मे ॥ दन्तानांराजा । राजदन्तादिषुपरम् ॥ उपरिस्थे चोर्ध्वमध्यवर्त्तिदन्तद्वये ॥ यथा । राजदन्तौतुमध्यस्थावुपरिस्थे चिकौ क्वचिदितिहेमचन्द्रः ॥

राजदेशीयः । पुं० राजकल्पे । राजदेश्ये ॥ ईषदूनोराजा । ईषदसमाप्तौकल्पप्देश्यदेशीयरः ॥

राजधत्तूरकः । पुं० हृहत्तूरके । राजधूर्त्ते । महाशठे ॥

राजधर्म्मः । पुं० राज्ञांकर्त्तव्यकर्म्मणि ॥ सचमनुस्मृतेःसप्तमाध्याये० कालीपुराणस्य ॥ ८५ ॥ ८६ ॥ अध्याययोः महाभारतस्यशान्तिपर्वणिपद्मपुराणस्यस्वर्गखण्डे ॥ १३८ ॥ अध्यायेचद्रष्टव्यः ॥

राजधानकम् । न० राजपुरे ॥ (*) ॥

राजधानी । स्त्री० कोट्टे । राजपुरे । स्कन्धावारे ॥ धीयतेऽस्याम०इति० धानी । करणाधिकरणयोश्चेत्यधिकरणेल्युट् । ङीप् । राज्ञांधानी ॥

राजधान्यम् । न० श्यामाके ॥

राजधूस्तूरकः । पुं० हृहद्धूस्तूरे ॥ राजधूर्त्ते । महाशठे । निस्त्रैणपुष्पके । भ्रान्ते । राजस्वर्णे ॥

राजा । पुं० प्रभौ ॥ क्षत्रिये ॥ मृगाङ्के । रजनीपतौ ॥ यक्षे ॥ शक्रे ॥ नृपे । पार्थिवे । राज्याभिषिक्तक्षत्रिये ॥ अभिषिक्तजनपदपुरपाल-

यिष्टपुरुषश्रेष्ठे । क्ष्माभृति । भूपे ।
प्रणताशेषसामन्ते ॥ अराजकेहि
लोकेस्मिन्सर्वतोविद्रुतेभयात् ।
रक्षार्थमस्य सर्वस्य राजानमसृजत्प्र
भुः ॥ अस्यव्युत्पत्तिर्विष्णुपुराणे
यथा । महताराजराज्येनपृथुर्वैण्यः
प्रतापवान् । सोभिषिक्तोमहातेजा
विधिवद्धर्मकोविदैः ॥ पित्राऽपर
ञ्जितास्तस्यप्रजास्तेनानुरञ्जिताः
अनुरागात्ततस्तस्यनामराजेत्यभा
षतेति ॥ राजकर्त्तव्यकर्म्माणियथा
मदालसोवाच । वत्सराज्याभिषिक्ते
नप्रजारञ्जनमादितः । कर्त्तव्यमवि
रोधेनस्वधर्मंस्वमहीभृता ॥ अविरो
धेन॰ धर्मशास्त्राविरोधेन । व्यस
नानिपरित्यज्यसप्तमूलहराणिवै ।
आत्मारिपुभ्यःसंरक्ष्योवहिर्मन्त्रवि
निर्गमात् ॥ अष्टधानाशमाप्नोति
स्वचक्रस्यन्दनाद्यथा । तथाराजाप्य
सन्दिग्धंवहिर्मन्त्रविनिर्गमात् ॥
दुष्टादुष्टांश्चजानीयादमात्यानरिदो
षतः । चरैश्चरास्तथाशत्रोरन्वेष्ट
व्याःप्रयत्नतः ॥ विश्वासोनतुकर्त्त
व्योराज्ञामित्राप्तबन्धुषु । का
र्य्ययोगादमित्रेषुविश्वसीतनराधिपः
॥ स्थानवृद्धिक्षयज्ञेनषाड्गुण्यविदि
तात्मना । भवितव्यंनरेन्द्रेणनका
मवशवर्त्तिना ॥ प्रागात्मामन्त्रिण
श्चैवततोभृत्यामहीभृता । जेयाश्चा



नन्तरंपौराविरुध्येततोरिभिः ॥
यस्त्वेतानविजित्यैववैरिणोविजि-
गीषते । सोऽजितात्माजितामा-
त्यःशत्रुवर्गेणबाध्यते ॥ तस्मात्
कामादयःपूर्वंजेयाःपृथमहीभृ-
ता । तज्जयेहिजयोराज्ञोराजानश्य
तितैर्जितः ॥ कामःक्रोधश्चलोभ
श्चमदोमानस्तथैवच । हर्षश्चशत्रवो
ह्येतेनाशाय॰कुमहीभृताम् ॥ का-
मप्रसक्तमात्मानंस्मृत्वापाण्डुंनिपा
तितम् । निवर्त्तयेत्तथाक्रोधादनु
ह्रादंहतात्मजम् ॥ हतमैलंतथालो
भान्मदाद्वेनंद्विजैर्हतम् । मानादना
युषःपुत्रंहतंहर्षात्पुरञ्जयम् ॥
एभिर्जितैर्जितंसर्वंमरुत्तेनमहात्म-
ना । स्मृत्वाविवर्जयेदेतान्षड्दो-
षांश्चमहीपतिः ॥ काककोकिल-
भृङ्गाणांवकव्यालशिखण्डिनाम् ।
हंसानांकुक्कुटानांचशिक्षेतचरितं-
नृपः ॥ काकात्॰सर्वशङ्किता । को
किलात्॰माधुर्यम । भृङ्गात्॰अपी
डयाऽर्थादानम् । वकात्॰शत्रुग्रह
णएकाग्रतास् । व्यालात्॰दुरुपस
र्पित्वम् । शिखण्डिनः चित्रता॰
म्॰सर्पग्रहणायमूकताम्॰राजा-
वात्मगोपनञ्च । हंसात्॰सारग्राहि-
त्वम् । कुक्कुटात्॰संधानम् ॥ कौ
शिकस्यक्रियांकुर्याद्विपक्षेमनुजेश्व
रः । चेष्टांपिपीलिकानाञ्चकालेभू

पः प्रदर्शयेत् ॥ कौशिकस्य॰उलूकस्य राजीकाकावस्कन्दनम् पिपीलिकानाम्॰सेनाबहुत्वंसर्पभक्ष्यश्च ॥ श्ययाग्निविस्फुलिङ्गानांबीजचेष्टाचशाल्मलेः। चन्द्रसूर्यस्वरूपश्चनीत्यर्थंपृथिवीक्षिता ॥ अग्निविस्फुलिङ्गात्॰दूराद्दाहः। बीजात्॰मनरथनिष्पादनम्। उष्णकाले॰चन्द्रः सुखदायी॰शीतकालेन। एवंसूर्यः शीतेसुखदायीउष्णकालेनएवंकालानुसारेणसुखदुःखदातृत्वम् ॥ बधकात्पद्मसरभशूलिन्यागुर्विणीस्तनात्। प्रजानृपेश्चादेयातथाचण्डालयोषितः ॥ वधकात् निघृणत्वम्। पद्मात्॰कण्टकगोपनम् स्मितमुखताच। सरभात्॰ कृत्वापिशत्रूनुन्नोद्वेगः। यथसरभोऽष्टापदः परोन्नतिंन सहते। शूलिन्याश्चान्तिज्ञापनम्। गुर्विण्याः स्तनात्कालेर्यादानम्। चण्डालयोषित्शौनिको॰छागशिरोदर्शयित्वा अन्यद्विक्रीणाति ॥ शक्राकयमसोमानांतद्वद्वायोर्महीपतिः। रूपाणिपञ्चकुर्वीतमहीपालनकर्मणि ॥ यथेन्द्रश्चतुरोमासान्वार्योघेणवभूतलम्। आप्याययेत् तथालोकान्परिचारैर्महीपतिः ॥ परिचारैरर्थदानादिभिः ॥ मासानष्टौयथासूर्यस्तोयंहरतिरश्मिभिः। सूर्यणेवाभ्युपायेनतथाशुल्कादिनानृपः ॥ यथायमः प्रियद्वेष्यौप्राप्तेकालेनियच्छति। तथाप्रियाप्रियौराजादुष्टादुष्टेसमोभवेत् ॥ पूर्णेन्दुमालोक्ययथाप्रीतिमान्जायतेनरः। एवंयत्रप्रजाः सर्वानिर्वृतास्तच्छशिव्रतम् ॥ मरुतः सर्वभूतेषुनिगूढश्चरतेयथा। एवंचरेन्नृपश्चारैः पौरामात्यारिबन्धुषु ॥ नलोभार्थेनकामार्थेनार्थार्थेर्यस्यमानसम्। पदार्थैः क्षिप्यतेधर्मात्सराजास्वर्गमृच्छति ॥ लोभादिप्रयोजनैः उत्पथग्राहिणोमूढान्स्वधर्माच्चलितान्नरान्। यः करोतिनिजेधर्मेसराजास्वर्गमृच्छति ॥ उत्पथग्राहिणः पापिनः ॥ वर्णधर्मानसीदन्तियस्यराष्ट्रे तथाश्रमाः। राजंस्तस्यसुखंतातपरत्रेहचशाश्वतम् ॥ एतद्राज्ञः परंकृत्यंतथैतद्वृद्धिकारणम्। स्वधर्मेस्थापनंनृणांचाल्यतेनकुबुद्धिभिः ॥ पालनेनैवभूतानांकृतकृत्योमहीपतिः। सम्यक्पालयिताभागंधर्मस्याप्नोतिवैयतः ॥ एवमाचरतेराजाचातुर्वर्ण्यस्यरक्षणैः। ससुखीविहरत्येषशक्रस्यैतिसलोकताम् ॥ इतिमार्कण्डेयपुराणेमदालसोपाख्यानाध्यायः ॥ राजते। राजृ॰। कनिन्युवृषीतिकनिन् ॥

द्दौम्रिमति ॥ समस्तपदेचेत् श्रेष्ठार्थवाचकः ॥

राजनम् । न० सामविशेषे ॥ त्रि० राज्ञः शूद्रायामुत्पन्ने ॥ राज्ञोऽपत्यम् । राजश्वशुराद्यत् । राज्ञो जातावेवेतिवार्त्तिकात् शूद्रायामुत्पन्ने चत्रियजातित्वाभावादण् । अन्नितिप्रकृतिभावः ॥

राजनामा । पुं० पटोले ॥

राजनीतिः । स्त्री० नीतिशास्त्रे । राजवृत्तौ ॥ पञ्चान्यवनीतिंराजनीतिञ्च ॥

राजनीलम् । न० मरकतमणौ ॥

राजन्यः । पुं० चत्रिये ॥ शास्त्रविधिबोधितानिकर्माणियथा । राजन्यानाञ्चसदृशसङ्ग्रामोभूमिशासनम् । अत्राशक्तौवणिग्वृत्तं शूद्रवृत्तमथाश्रयेदिति ॥ अस्यनिषिद्धकर्माणियथा । राजन्यानांकराद्दानंविनावैवाह्यिकाश्रयः । प्रतिग्रहः सनिंद्योऽपरत्रचासुखप्रदः ॥ युद्धेपलायनञ्चैवतथाकातरतार्थिषु । अपालनंप्रजानाञ्चदानेधर्मेविरक्तता । अनवेक्षाखराष्ट्रस्यब्राह्मणानामनादरः । अनाह्यानामसन्मानंतेषांकर्मानवेक्षणाम् ॥ भृत्यानाञ्चपरीहासोनिषिद्धः चत्रजन्मनामिति ॥ राज्ञोऽपत्यम् । राजश्वशुराद्यत् । राज्ञोजातावेव । येचाभावकर्मणो

रितिप्रकृत्या ॥ राजपुत्रे ॥ वल्लौ ॥ चीरिकाद्रुमे ॥ राजति । राज० । राजेरन्यः ॥

राजन्यकम् । न० चत्रियसमूहे ॥ राजन्यानांचत्रियाणांसमूहः । गोत्रोक्षोष्ट्रोरभ्रराजराजन्येतिवुञ् । प्रकृत्याग्केराजन्यमनुष्ययुवानः ॥ पुं० राजन्यादिदेशे । राजन्यानांविषयोदेशः । राजन्यादिभ्योवुञ् ॥

राजन्यबन्धुः । पुं० दुर्बलनृपतौ । राजाभासे ॥ राजन्यावबन्धवोऽस्य ॥

राजन्वान् । त्रि० सुराज्ञिदेशे । यत्रदेशेखधर्मशीलोराजा० तत्रदेशे ॥ राजाऽस्तिअस्याचवा । प्रशंसायांमतुप् । राजन्वान्सौराज्ये० इतिनिपातनान्नलोपाभावः ॥ राजन्वती० भूमिः ।

राजपटोलः । पुं० पटोले ॥

राजपटोली । स्त्री० मधुपटोल्याम् ॥

राजपट्टः । पुं० मणिविशेषे । विराजते ॥

राजपट्टिका । स्त्री० चातकखगे ॥

राजपथः । पुं० राजमार्गे ॥ राज्ञः पन्थाः । ऋक्पूरितिसमासांतः ॥ तल्लक्षणंयथाधनूंषिदशविस्तीर्णः श्रीमान्राजपथः स्मृतः । नृवाजिरथनागानामसम्बाधः सुसञ्चरः इति ॥

राजपर्णी । स्त्री० प्रसारिणीलतायाम् ॥

राजपलाण्डु : । पुं॰ रक्तवर्णपलाण्डौ । यवनेष्टे । राजप्रिये । महामूले । दीर्घपत्रे । रक्तकन्दे । लालकांदा॰ लालप्याज॰इ॰भा॰ ॥

राजपीलु : । पुं॰ महापीलुवृक्षे ॥

राजपुत्र : । पुं॰ बुधग्रहे ॥ महाराजाम्ने ॥ राजनन्दने । युवराजे । राजकुमारे । भर्तृदारके ॥ कुमार रक्षाकर्त्तव्याराज्ञायत्नेनसर्वदा ॥ तथाहि । राजपुत्रस्यरक्षाचकर्त्तव्यापृथिवीक्षिता । आचार्यैश्चास्य कर्त्तव्यं नित्यमुक्तं सुरक्षणम् ॥ धर्मकामार्थशास्त्राणिधनुर्वेदञ्चशिक्षयेत् । रथे चकुञ्जरे चैनं व्यायामं कारयेत्सदा ॥ शिल्पानिशिक्षयेच्चैवनाप्तैर्मिथ्याप्रियंवदेत् । गुणाधानमशक्यन्तुयस्यकर्त्तुं स्वभावतः ॥ बन्धनं तस्यकर्त्तव्यं गुप्ते देशेसुखान्वितम् । अविनीतकुमारं हिकुलमाशुविशीर्यते ॥ अधिकारेषुसर्वेषुविनीतं विनियोजयेत् । आदौस्वल्पेषु तत्पश्चात्क्रमेणाथमहत्स्वपि ॥ मृगयापानमक्षांश्चवर्जयेत् पृथिवीपतिः । एतान्यासेवमानास्तुविनष्टाः पृथिवीक्षितः ॥ बहवोनृपशार्दूलातेषांसङ्ख्यानविद्यते । वृथाटनं दिवास्वप्नं विशेषेणविवर्जयेत् ॥ वाक्पारुष्यं नकर्त्तव्यं दण्डपारुष्यमेवच । परोक्षनिन्दाचतथावर्ज्जनीयामहीक्षिता ॥ अर्थस्यदूषणं राजाहि : प्रकारं विवर्ज्जयेत् । अर्थानांदूषणञ्चैवतथाचार्थेषु दूषणम् ॥ अकारणात्समुच्छेदं दुर्गादीनामसत्क्रिया । अर्थानांदूषणं प्रोक्तं विप्रकीर्णत्वमेवच ॥ अदेशकालेयद्दानमपात्रे दानमेवच । अर्थस्यदूषणंप्रोक्तमसत्कर्मप्रवर्त्तनम् ॥ कामं क्रोधं मदं मानं लोभं हर्षं तथैवच । जेतव्यमरिषड्वर्गं सादरं पृथिवीक्षिता ॥ एतेषांविजयं कृत्वाकार्यं भृत्यजयं ततः । कृत्वाभृत्यजयं सर्वं राजाजनपदं जयेत् ॥ कृत्वातुविजयं तेषांमचनृन् बाह्यांस्ततोजयेत् । बाह्याश्चविविधाज्ञेयास्तुल्याभ्यन्तरकृत्रिमाः ॥ गुरवस्ते यथापूर्वं तेषु यत्नपरोभवेत् । पितृपैतामहं मित्रं सामन्तञ्चतथारिपोः ॥ कृत्रिमञ्चमहाभागमित्रं विविधमुच्यते । तथापिचगुरुः पूर्वंभवेत्तत्रापिचाप्तः ॥ स्वाम्यमात्योजनपदोदुर्गंसैन्यं तथैवच । कोषोमित्रञ्चधर्म्मज्ञसप्ताङ्गं राज्यमुच्यते ॥ सप्ताङ्गस्यापिराज्यस्यमूलंस्वामीप्रकीर्त्तितः । तन्मूलत्वात्तथाङ्गानां राजारक्ष्यः प्रयत्नतः ॥ षडङ्गरक्षाकर्त्तव्यातथातेनप्रयत्नतः । अङ्गेभ्योयस्तथैकस्यद्रोहमाचरतेल्पधीः ॥ वधस्त

राजपुत्र :

स्यतुकर्त्तव्य:शीघ्रमेवमहीक्षिता।
नराणांमृदुनाभाव्यंमृदुर्हिपरिभू-
यते ॥ नभाव्यंदारुणेनापितीक्ष्णा
दुद्विजतेजन:। कालेमृदुर्योभवति
कालेभवतिदारुण: ॥ राजालोक
द्वयापेक्षीतस्यलोकद्वयंभवेत्। भृ-
त्यै: सहमहीपाल: परिहासंवि
वर्जयेत् ॥ भृत्या: परिभवन्तीहनृ
पंहर्षवशङ्गतम्। व्यसनानिचस-
र्वाणिभूपति: परिवर्ज्जयेत् ॥ लो
कसङ्ग्रहणार्थायकृतकव्यसनोभवेत्।
शौटीरस्यनरेन्द्रस्यनित्यमुद्रिक्तचेत
स: ॥ जनाविरागमायांतिसदा-
दु:सेव्यभावत:। स्मितपूर्वाभि-
भाषीस्यात्सर्वस्यैवमहीपति: ॥ म
ध्येष्वपिमहाभागभृकुटिंनसमाच
रेत्। भाव्यंधर्मभृतांश्रेष्ठस्थूललक्षे
णभूभृता। स्थूललक्षस्यवशगासर्वा
भवतिमेदिनी। अदीर्घसूत्रस्यभवे-
त्सर्वंकर्मसुपार्थिव: ॥ दीर्घसूत्र-
स्यनृपते: कर्महानिर्ध्रुवंभवेत्। रा
गेदर्पेचमानेचद्रोहेपापेचकर्मणि ॥
अप्रियेचैवकर्त्तव्येदीर्घसूत्र: प्रश-
स्यते। राज्ञासम्भृतमन्त्रेणसदाभा-
व्यंद्विजोत्तम ॥ तस्यासम्भृतमन्त्रस्य
त्त्र्या: सर्वापदोध्रुवा:। कृत्या-
न्येवतुकर्माणिजायन्तेयस्यभूपते: ॥
नारब्धानिमहाभागतस्यस्याद्वसुधा
वशे। मन्त्रमूलंसदाराज्यंतस्मा-

राजपुत्र :

न्मूलंसुरक्षितम् ॥ कर्त्तव्यंपृथिवी
पालैर्मन्त्रभेदभयात्सदा। मन्त्रवि
त्साधितोमन्त्र: संयतानांसुखाव-
ह: ॥ मन्त्रच्छलेनबहवोविनष्टा:
पृथिवीक्षित:। आकारैरिङ्गितैर्ग-
त्याचेष्टयाभाषितेनच ॥ नेत्रवक्त्र
विकारैश्चगृह्यतेऽन्तर्गतंमन:। न-
यस्यकुशलैस्तस्यवशेसर्वावसुन्धरा।
भवतीहमहीभर्त्तु: सदापार्थिवन
न्दन। नैकस्तुमन्त्रयेन्मन्त्रंनराजा
बहुभि: सह ॥ नारोहेद्विषमांना
वंनापरीक्षितनाविकाम्। येचा
स्यभूमिंजयतोभवेयु: परिपन्थिन:
॥ तानानयेद्वशेसर्वान्सामादिभि-
रुपक्रमै:। यथानस्यात्कृशीभाव:
प्रजानामनपेक्षया ॥ तथाराज्ञाप्रक
र्त्तव्यंस्वराष्ट्रंपरिरक्षता। मोहाद्रा
जास्वराष्ट्रंय: कर्षयत्यनपेक्षया ॥
सोचिराद्भ्रश्यतेराज्याज्जीविताच्चस
बान्धव: ॥ भृतोवत्सोजातबल:
कर्म्मयोग्योयथाभवेत्। तथाराष्ट्रं
महाभागभृतंकर्मसमंभवेत्। योरा
ष्ट्रमनुगृह्णातिराजास्वंपरिरक्षति-
॥ सङ्घातमुपयाचत्तु विन्दतेसुमह
त्फलम्। राष्ट्राद्धिरण्यंधान्यञ्चमही
राज्ञामुरक्षिता ॥ नित्यंस्वेभ्य:
परेभ्यश्चयथामातायथापिता। नि
त्यंराजास्वराष्ट्रंय: कर्षत्यन्यस्यचे
च्छया ॥ गोपितानिसदाकुर्यात्-

मविभागोप्रियाणिच । अजसमुप योत्नाय्य फलंतभ्यस्तथैवच ॥ धर्म कर्मदमायत्त विधानेदैवमानुषे । तयोर्दैवमचिन्त्यंहिपौरुषेविद्यतेक्रिया ॥ एवंमहीपालयतोऽस्यभर्त्तुर्लोकानुराग : परमोभवेच्च । लोकानुरागप्रभवाचलक्ष्मीर्लक्ष्मीवतश्चैव पराचकीर्त्तिः ॥ इतिमात्स्ये १६४ अध्यायः॥ रज० तद्गतिलोकप्रसिद्ध वर्णसङ्करजातिविशेषे ॥ यथा । वैश्यादम्बष्ठकन्यायांराजपुत्रस्यसम्भवः इतिपराशरपद्धतिः ॥ करणकन्यायांक्षत्रियाज्जातइतिपुराणम् ॥

राजपुत्रकम् । न० राज्ञः पुत्राणांसमूहे ॥ राजपुत्राणांसमूहः । गोत्राचोष्ट्रोरभ्रेत्यादिनावुञ् ॥ पुं० राजार्म ॥

राजपुत्रिका । स्त्री० राजकन्यायाम्॥ शरारिपक्षिणि॥जात्याम् ॥ राज्ञः पुत्रिकेयं ॥

राजपुत्री । स्त्री० राजकन्यायाम् । मालात्याम् ॥ रेणुकाख्यौषधौ ॥ कटुतुम्ब्याम् ॥ राजरीतौ ॥ कुकुन्दर्याम् ॥

राजपुष्प : । पुं० नागकेशरवृक्षे ॥

राजपुष्पी । स्त्री० )

राजप्रिया । स्त्री०) करुणीवृक्षे ॥

राजफणिज्भकः । पुं० नागरङ्गवृक्षे॥

राजफलम् । न० पटोले ॥

राजफला । स्त्री० जम्ब्वां ॥

राजबदर : । पुं० उत्तमकोलौ । नृपश्रेष्ठे । नृपबदरे । राजवल्लभे । पृथुकोले । तनुबीजे । मधुरफले । राजकोले ॥ न० रक्तामलके ॥ लवणे ॥ लवल्याम् ॥

राजबला । स्त्री० गंधालिकायाम् । प्रसारण्यामोषधौ ॥ बलानांबलप्रदानांराजेव । राजदन्तादिः ॥

राजभद्रिका । स्त्री० श्यामपक्षिणि ॥

राजभूयम् । न० राजत्वे ॥

राजभोगीणम् । न० राज्ञः शरीरायहिते ॥ राज्ञोभोग : शरीरम् तस्मैहितम् । आत्मन्विश्वजनभोगोत्तरपदात्खः ॥

राजभोग्य: । पुं० पियालवृक्षे ॥ न० जातीकोषे । जातीफले ॥

राजभोजी । पुं० वाजपेययज्ञे ॥

राजमण्डूकः । पुं० बृहद्भेके । महामण्डूके । पीताङ्गे । वर्षाघोषे ॥

राजमल्ल : । पुं० नृपमल्ले । उत्सिक्ते । उद्वर्ते ॥ राज्ञांमल्ल : । मल्लानांराजावा ॥

राजमार्ग : । पुं० राजपथे ॥

राजमाष : । पुं० वर्वटे । नीलमाषे । महामाषे । चौरा० लोबियाबडा इ० भा० ॥ राजमाषोगुरु : स्वादुस्तुवरस्तपर्णः सर : । रूक्षोवातकरोरुच्य : स्तन्योभूरिमलप्रद : ॥

ष्ठेतोरम्भस्तथाकृष्णा स्त्रिविध : स प्रकीर्त्तित: । योमहांस्तेषुभवति सएवोक्तोगुणाधिक : ॥ अपिच । राजमाषंपरंहृद्यंकफपित्तहरंपरम् । आध्मानवातकृद्रूक्षोतत्पथ्यंतहूणावहम् ॥ माषाणांराजा । राजदन्तादि : ॥

राजमुद्ग : । पुं॰ मकुष्ठके ॥

राजयक्ष्मा । पुं॰ क्षयरोगे । यक्ष्मणि ॥ राज्ञश्चन्द्रमसोयस्मादभूदेषकिलामय : । तस्मात्तंराजयक्ष्मेति केचिदाहुर्मनीषिण : ॥ षष्ठीतत्पुरुष : कर्मधारयोवा । तथाहवाग्भट : । अनेकरोगानुगतोबहुरोगपुर : सर : । राजयक्ष्माक्षय : शोषोरोगराडितिचस्मृत : ॥ नक्षत्राणांद्विजानाञ्चराज्ञोभूद्यदयंपुरा । यच्चराजाचयक्ष्माचराजयक्ष्मात तोगत : ॥ इति । महापातकजचिह्नमप्ययम् । यथाहविष्णु : । अथनरकानुभूतदु : खानांतिर्यक्त्वमुत्तीर्णानांमानुष्येलक्षणानिभवन्ति । कुष्ठातिपातकी॰ ब्रह्महायक्ष्मी॰सुराप : श्यावदन्तक : सुवर्णहारीकुनखीगुरुतल्पगोदुश्चर्मेत्यादिकूर्मपुराणम् ॥

राजयज्ञ : । पुं॰ अश्वमेधे ॥ राज्ञएवतत्राधिकारात् ॥ राज्ञोयज्ञ : ॥

राजयोग : । पुं॰ ज्ञानपरिपाके । व्यवहारेप्यविच्छिन्नचित्ततालक्षणेयोगविशेषे ॥ राजत्वात्सर्वयोगानांराजयोगइतिस्मृत : । राजयन्नप्यमानंतंपरब्रह्माणमव्ययम् ॥ देहिनंप्रापयेद्यस्तुराजयोग : सउच्यते-इत्युक्ते : ॥ राज्ञउपयुक्तोयोग : । योगानांराजेतिवा ॥ हठयोगोदेहआयासकर : । अयंगुरोरवाप्तस्वन्निरायासेनमोक्षरूपपुरुषार्थप्रद : । हठदृस्याप्यष्टाङ्गानिसन्ति ॥

राजयोगी । त्रि॰ ज्ञानपरिपाकयुक्ते । व्यवहारेप्यविच्छिन्नचित्ततालक्षणयोगग्रस्तवति ॥

राजयोग्य : । त्रि॰ राजार्हे ॥

राजरङ्गम् । न॰ रजते ॥

राजराज : । पुं॰ धनाधिपे, कुवेरे ॥ राज्ञांयक्षाणांराजा । राजाह : सखिभ्यष्टच् ॥ नृपेशे । सार्वभौमे ॥ सुधाकरे । चन्द्रे ॥

राजरीति : । स्त्री॰ पित्तलविशेषे । पाकतुण्डाम् ॥ महैश्वर्याम् । कपिलायाम् ॥

राजर्षि : । पुं॰ प्रभुत्वेसतिसूक्ष्मार्थनिरीक्षणक्षमे॰प्रजापालनाधिकारिणिकृततपर्णनिमिप्रमुखे ॥ राजाचासौऋषिश्च ॥

राजलक्ष्मा । पुं॰ युधिष्ठिरे ॥

राजवंश्य : । त्रि॰ राजवीजिनि । राजवंशोद्भवे ॥ वंशेभव : । दिगादि-

स्यात् । राज्ञोवंश्य : ॥ राजवंशे साधुर्वा । तत्रसाधुरितियत् ॥

राजवान् । त्रि॰ राजमाद्युक्तदेशे ॥ सुराज्ञिदेशेराजन्वान्स्यात्ततोन्यत्र राजवान् । राजास्त्यस्यास्मिन्वा । मतुप् ॥

राजवर्त्म । न॰ घण्टापथे । राजपथे ॥

राजवला । स्त्री॰ भद्रवलायाम् ॥

राजवल्लभ : । पुं॰ राजादन्याम् ॥ राजाम्रे ॥ राजवदरे ॥ नारायणदासकविराजकृतद्रव्यगुणग्रन्थविशेषे ॥ त्रि॰ नृपतिप्रिये ॥

राजवल्ली । स्त्री॰ तोयवल्ल्याम् । उक्ता॰ द्र॰ गौ॰ दे॰ भा॰ ॥

राजवारुणी । स्त्री॰ सुराप्रभेदे ॥

राजवाह : । पुं॰ घोटके ॥ वाहानां राजा । राजदन्तादि : ॥

राजवाह्य : । पुं॰ राजवाहकहस्तिनि । उपवाह्ये । विजयकुञ्जरे ॥ त्रि॰ राजवहनीये ।

राजवीजी । त्रि॰ राजवंश्ये । राज्ञो वीजयितुंशीलमस्य । वीजव्यजनेऽदन्त : । सुपीतिणिनि : ॥ यद्वा । राज्ञोवीजम् । राजवीजम् । तद स्यास्ति । मतद्धनि : ॥

राजवृक्ष : । पुं॰ गिरिमाल॰ इतिप्रसिद्धे सुवर्णके । आरग्वधे ॥ राजा चासौवृक्षश्च ॥ वृक्षाणांराजावा ॥ राजदन्तादि : ॥ रोगाणांराजानं वृक्षतिवा । चौरपूरुकेदने । वाहुलकात् सुक् ॥ पियाले ॥ लङ्कास्थायिनिवृक्षे । लङ्काश् हर॰ द्र॰ भा॰ ॥

राजवृत्तम् । न॰ नृपचारित्रे । तच्चतुर्विधम् । यथाहकामन्दक : । न्यायेनार्जनमर्थस्यवर्द्धनंपालनंतथा । सत्पात्रे प्रतिपत्तिश्चराज्ञोवृत्तं चतुर्विधमिति ॥

राजशण : । पुं॰ पट्टवृक्षे । पाटसन ॰ द्र॰ भा॰ ॥

राजशफर : । पुं॰ इल्लिशमत्स्ये ॥

राजशय्या । स्त्री॰ राज्ञ : शयनीये । महाशय्यायाम् ॥

राजशाक : । पुं॰ वास्तूके ॥

राजशास्त्रम् । न॰ नीतिशास्त्रे ॥ राज्ञांशास्त्रम् ॥

राजशिम्ब : । पुं॰ निष्पावे ॥

राजशुक : । पुं॰ प्राज्ञे । शतपत्रे । नृपप्रिये । राजसूआ॰ द्र॰ भा॰ प्र॰ पक्षिविशे ॥

राजशृङ्ग : । पुं॰ मद्गुरमत्स्ये ॥ न॰ राजच्छत्रे । कनकदण्डके ॥

राजस : । पुं॰ राजसाहङ्कारे । इन्द्रियाणांकारणे । तैजसे ॥ त्रि॰ रजोगुणोद्भवे । रजोगुणप्रधाने ॥ तल्लक्षणंयथा । आरम्भरुचिताधैर्यमसत्कार्यपरिग्रह : । विषयोपसे

वाचाअस्त्वं राजसंगुणलक्षणम् ॥ आरम्भरुचिताफलार्थंकर्मानुष्ठानशीलता ॥ अपिच । येनास्मिन् कर्मणालोकेख्यातिमिच्छति पुष्कलाम् । नचशोचत्यसम्पत्तौतद्विज्ञेयन्तुराजसमिति ॥ रजसोयम् । अण् ॥

राजसदनम् । न० राजगृहे । सौधे ॥ राज्ञः सदनम् । योग्यत्वात् ॥ यद्वा । सदनानांराजा । राजदन्तादिः ॥ तन्नेदायथा । सौधाऽस्त्री राजसदनमुपकार्योपकारिका । स्वस्तिकः सर्वतोभद्रोनन्द्यावर्त्तादयोपिच । विच्छन्दकः प्रभेदाहि भवन्तीश्वरसद्मनाम् ॥

राजसधनम् । न० धनविशेषे ॥ यथा । कुसीदकृषिवाणिज्यशुल्कगानानुवृत्तिभिः । कृतोपकारादाप्तञ्चराजसंसमुदाहृतम् ॥ अनुवृत्त्याश्रया ॥

राजसभा । स्त्री० नृपतिसमाजे ॥ राज्ञः सभा । सभाराजेत्यत्रराजपर्यायस्यैवग्रहणान्नक्लीबत्वम् ॥

राजसयज्ञः । पुं० सकामानांयज्ञे ॥ अभिसन्धायतुफलंदम्भार्थमपिचैव यत् । इज्यतेभरतश्रेष्ठतंयज्ञंविद्धि राजसम् ॥

राजसर्प्यः । पुं० सर्पविशेषे । भुजङ्गभोजिनि ॥

राजसर्षपः । पुं० राजिकायाम् । आसुर्याम् ॥ तिस्रभिर्लिक्षाभिः परिमिते ॥

राजसायुज्यम् । न० राजत्वे ॥ राज्ञः सायुज्यम् ॥

राजसारसः । पुं० मयूरे ॥

राजसाहङ्कारः । पुं० तैजसाहङ्कारे । इन्द्रियाणांकारणे ॥

राजसाहारः । पुं० रजोगुणिनाम्भोजने ॥ यथा । कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः । आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥

राजसी । स्त्री० दुर्गायाम् । रजोगुणसम्बन्धिन्याम् ॥

राजसूयः । पुं० राज्ञाकर्त्तव्ये यज्ञविशेषे । नृपाध्वरे । क्रतुराजे । क्रतूत्तमे ॥ राज्ञासोतव्योऽभिषवद्वारानिष्पादयितव्यः । षुञ् अभिषवे । यद्वा । लतात्मकः सोमोराजासूयतेकण्ड्यतेऽत्रेत्यधिकरणेक्यप् । राजसूयसूर्येत्यादिना निपातनाद्दीर्घः ॥

राजसूयकी । स्त्री० राजसूयस्य दक्षिणायाम् ॥

राजस्कन्धः । पुं० घोटके ॥

राजस्वम् । न० करे । राजग्राह्यभागे ॥

राजसर्षः । पुं० राजधूस्तूरके ॥

राजहंस : । पुं० कलहंसे ॥ चरणै चञ्चुसहितैर्लोहितायैस्सर्वसिताः । तेराजहंसाविख्याता इत्याहुः कोषकोविदाः ॥ हंसानांराजा । राजदन्तादिः ॥ कादम्बे । बालिहांस० इतिगौडदेशप्रसिद्धे । नीलहंसोपम् ॥ नृपोत्तमे ॥

राजहंसिनी । स्त्री० रसालायाः प्रभेदे । राजहंस्याम् ॥ निर्नीरंपाचितंक्षीरंमाहिषंतद्भवंदधि । शुभ्रशर्करयालाढ्यंगालितंराजहंसिनी ॥ राजहंसीसुमधुराबल्यातृष्यतरा हिमा । अत्यर्थंपित्तशमनीकिञ्चित् कफकरीस्मृता ॥

राजहर्षणम् । न० तगरपुष्पे ॥

राजहस्ती । पुं० राजगजे । मारीचे । याजकगजे । मदोत्कटे ॥

राजहासक : । पुं० मत्स्यविशेषे । कातरे । कतले । राजीवे ॥

राजातन: । पुं० पियालवृक्षे ॥ राजानमतति । अत० । कर्त्तरि०-ल्युट् ॥

राजादनः । पुं० फलाध्यक्षे । क्षीरिकायाम् । न० पियाले ॥ राजभिरद्यते । अद० । कर्म्मणिल्युट् ॥ किंशुके । चिपवृक्षे ॥

राजादनी । स्त्री० क्षीरिकायाम् । खिर्नी० इ० भा० ॥

राजानुजीवी । त्रि० राजोपजीविनि ॥



तस्यकर्माणियथा । मत्स्यउवाच । यथानुवर्त्तितव्यंश्चात्मनोराजोपजीविना । तथातेकथयिष्यामिनिबोधगदितोमम । वाग्मासर्वात्मना-कार्याखशक्त्यारविनन्दन । आचिन्त्यश्चनन्तस्यजवक्तव्यंतथावच : ॥ अनुकूलंप्रियंतस्यवक्तव्यंजानसंसदि । रहोगतस्यवक्तव्यमप्रियंयद्धितंभवेत् ॥ परार्थमस्यवक्तव्यंस्वस्थेचेतसिभागंव । स्वार्थः सुहृद्भिर्वक्तव्यो नस्वयन्तुकदाचन ॥ कार्यातिपातः सर्व्वेषुरक्षितव्यः प्रयत्नतः । नचहिंस्यंधनंकिञ्चिन्नियुक्तनचकर्म्मणि ॥ नोपेक्ष्यंभाष्यमाणस्तुतथाराज्ञः प्रियोभवेत् । राज्ञस्तुनतथा-कार्यंवेषभाषितचेष्टितम् ॥ राजलीलानकर्त्तव्यातद्विद्विष्टंविवर्जयेत् । राज्ञः समोधिकोवानकार्यो-वेशोविजानता ॥ द्यूतादिषुतथैवास्यकौशलन्तुप्रदर्शयेत् । प्रदर्श्यं-कौशलंचास्यराजानन्तुविशेषयेत् ॥ अन्तःपुरधनाध्यक्षैर्वैरदूतैः समागतैः । संसर्गंनव्रजेद्राजन्विनापार्थिवशासनम् ॥ निःस्नेहतांचावमानंप्रयत्नेनचगोपयेत् । यच्चगुह्यं भवेद्राज्ञोनतल्लोकेप्रकाशयेत् ॥ नृपेणश्राविलंयत्स्यादाच्यावाच्यन्नृपोत्तम । नतत्संश्रावयेल्लोकेतदाराज्ञः प्रियोभवेत् । आज्ञाप्यमाने-

चान्यस्मिन् समुत्थायस्त्वरान्वितः। अहं किंकरवाणीति वाच्योराजाविजानता ॥ कार्यावस्थास्वविज्ञायकार्यमेवतथाभवेत्। सततंक्रियमाणेस्मिन्लाघवन्तुब्रजेद्ध्रुवम् ॥ राज्ञः प्रियाणिवाक्यानिनचात्यर्थंपुनःपुनः। नहास्यशीलश्चभवेन्नचापिभ्रुकुटीमुखः। नातिवक्तानिर्वक्तानचमत्सरिकस्तथा। आत्मसम्भाविनश्चैवनभवेत्तुकथञ्चन ॥ दुष्कृतानिनरेन्द्रस्यनतुसङ्कीर्त्तयेत् क्वचित्। वस्त्रंशस्त्रमलङ्कारंराज्ञादत्तंनधारयेत् औदार्येणनतद्देयमन्यस्मैभूतिमिच्छता। नचैवोपासनंकार्यंदिवास्वप्नंविवर्जयेत् ॥ नानिर्दिष्टे तथाद्वारेप्रविशेतकदाचन। नच पश्येतराजानमयोग्यासुचभूमिषु राज्ञस्तुदक्षिणेपार्श्वे वामेचोपविशेत्तथा। पुरस्ताच्चतथापश्चादासनन्तुविगर्हितम् ॥ जृम्भांनिष्ठीवनंकासंकोपंपर्यस्तिकाश्रयम्। भ्रुकुटींवान्तमुद्गारंतत्समीपेविवर्जयेत् ॥ स्वयंतचनकुर्वीतस्वगुणाख्यापनंतथा। स्वगुणाख्यापनेचैव परमेवप्रयोजयेत् ॥ हृदयंनिर्मलं कृत्वापरांभक्तिमुपाश्रितैः। अनुजीविगणैर्भाव्यंनित्यंराज्ञामतन्द्रितैः ॥ शाठ्यंलौल्यञ्चपैशुन्यंनास्तिक्यंक्षुद्रतांतथा। चापल्यञ्चपरित्याज्यंनित्यंराजानुजीविना ॥ श्रुतेनविद्याशिल्पैश्चसंयोज्यात्मानमात्मना। राजसेवांततः कुर्याद्भूतयेभूतिवर्द्धिनीम् ॥ नमस्कार्याः सदाचास्यपुत्रवल्लभमन्त्रिणः। सचिवैश्चास्यविश्वासोनतुकार्यः कथञ्चन ॥ अपृष्टश्चास्यनब्रूयात्कामंब्रूयात्तथायदि। हितंपथ्यञ्चवचनंहितैः सहसुनिश्चितम् ॥ चित्तञ्चैवास्यविज्ञेयंनित्यमेवोपजीविना। भर्त्तुराराधनंकुर्याच्चित्तज्ञोमानवः सुखम् ॥ रागापरागौचैवास्यविज्ञेयौभूतिमिच्छता। त्यजेद्वृत्तिंविरक्तस्तुरक्तोवृत्तिन्तुकारयेत्। विरक्तःकारयेन्नाशंविपक्षाभ्युदयन्तथा। आशावर्द्धनकंकृत्वाफलनाशंकरोतिच अकोपेपिसकोपाभःप्रसन्नोऽपिचनिष्फलः। वाक्यंसमन्दंवदतिवृत्तिच्छेदंकरोतिच ॥ प्रदेशवाक्यमुदितोनसम्भावयतेन्यथा। आराधनासुसर्वासुसुप्तवच्चविचेष्टते। कथासुदोषंक्षिपतिवाक्यभङ्गंकरोतिच। लक्ष्यतेविमुखश्चैवगुणसङ्कीर्त्तनेकृते ॥ दृष्टिंक्षिपत्यथान्यत्रक्रियमाणेचकर्मणि। विरक्तलक्षणंह्येतच्छृणुरक्तस्यलक्षणम् ॥ दृष्ट्वाप्रसन्नोभवति वाक्यंगृह्णाति चादरात्। कुशलादिपरिप्रश्नैःसंप्रयच्छतिचासनम् ॥ विरक्तदर्शने

चाप्यरक्ष्यं वनमङ्कते । जायते-हृष्टवदन : श्रुत्वातस्यतुतत्कथाम् ॥ अप्रियाण्यपिवाक्यानितदुक्तान्यभिनन्दते । उपायनञ्चगृह्णाति स्तोकमप्यादरात्तथा ॥ कथान्तरेषुस्मरतिप्रहृष्टवदनस्तथा । इतिरक्तस्यकर्त्तव्यासेवारविकुलोद्वह ॥ आपत्सु नत्यजेत्पूर्वं विरक्तमपिसेवितम् । मित्रं नचापत्सु तथाच भृत्यं त्यजन्तियेनिर्गुणमप्रमेयम् । प्रभुं विशेषे यचतेव्रजन्तिसुरेन्द्रधामामरवृन्दजुष्टम् ॥ इतिमत्स्यपुराणे राजधर्मेऽनुजीविवृत्तिनामाध्याय : ॥ १८० ॥

राजान्नम् । न० आन्ध्रदेशोद्भवशालिविशेषे । राजार्हे । दीर्घशूकके । धान्यश्रेष्ठे ॥ राजस्वामिकभक्ते ॥

राजाम्र : । पुं० न० आम्रविशेषे । राजफले । मधुरे । कामाङ्गे । टङ्के ॥ राजाम्रं तुवरं स्वादुविशदं शीतलंगुरु । ग्राहिरूक्षं विबन्धाध्मवातकृत्कफपित्तनुत् ॥

राजाम्ल : । पुं० अम्लवेतसे ॥

राजार्क : । पुं० सितार्कवृक्षे । वसुके । मन्दारे । सदापुष्पे । अलर्के ॥

राजार्हम् । न० जोङ्गके । अगुरुणि । त्रि० राजयोग्ये ॥ राजानमर्हति । अच् ॥

राजार्हा । स्त्री० जम्ब्वाम् ॥

राजालाबू : । स्त्री० स्वादुतुम्ब्याम् । महातुम्ब्याम् । शाकालाब्वां ॥

राजालुक : । पुं० महाकन्दे । मूलके ॥

राजावर्त्त : । पुं० उपरत्नभेदे । आवर्त्तमणौ । रेवटी० इ० भा० प्र० ॥ राजावर्त्त: प्रमेहघ्नश्छर्द्दिहिक्कानिवारण: ॥ विराटदेशजहीरके । विराटजे ॥ राजपट्टे ॥

राजाहि : । पुं० द्विमुखसर्पे । विषायुधे । अहीरणौ ॥ अहीनांराजा । राजदन्तादि : ।

राजि : । स्त्री० वीथ्याम् । पङ्क्तौ ॥ रेखायाम् । निरन्तरं पङ्क्तिसाधारणे ॥ राजति । राज् ० । इन् । वसिवपियजिराजीत्यादिना० इञ् वा ॥

राजिका । स्त्री० आसुर्य्याम् । क्षवे । क्षुधाभिजनने । राजसर्षपे । राई० इ० भा० ॥ राजिकाकफपित्तघ्नीतीक्ष्णोष्णारक्तपित्तकृत् । किञ्चिद्रूक्षाग्निदाकण्डूकुष्ठकोष्ठकृमीन्हरेत् । अतितीक्ष्णाविशेषेणतद्वत्कृष्णापिराजिका ॥ केदारे ॥ रेखायाम् । पङ्क्तौ ॥ राजति० राजयतिवा । राज् ० । ण्वुल् ॥

राजिकाफल : । पुं० गौरसर्षपे ॥

राजिफला । स्त्री० चीनाकर्कट्याम् ॥

राजिमतफला । स्त्री० राजकोशात-

श्याम् ॥

राजिल : । पुं० डुण्डुभसर्पे ॥ राजि लोमनिर्विष सर्प : ॥ राजि : रेखाऽस्यास्ति । सिध्मादित्वाल्लच् ॥ यद्वा । राजिंलाति । लाऽऽदाने । आतोनुपे तिक : ॥

राजी । स्त्री० निश्छिद्रपङ्क्तौ ॥ कृदिकारादितिङीष् ॥

राजीफल : । पुं० पटोले ॥

राजीव : । पुं० हरिणप्रभेदे ॥ राजीवस्तुमृगोज्ञेयोराजीभि : परिताहत : । राजीवस्तुगुणैर्ज्ञेय : पृषतेनसमोजनै : ॥ राइखडइतिख्यातेवृहन्मत्स्यविशेषे ॥ हस्तिनि ॥ सारसपक्षिणि ॥ न० नलिने । पद्मे ॥ राजीरेखाऽस्यास्ति । अन्येभ्योपिदृश्यतइतिशक्तिकाद्य : । केशरस्यराज्यस्यास्तीतिवा ॥ त्रि० राजोपजीविनि ॥

राजीवलोचन : । त्रि० कमलनयने ॥

राजेन्द्र : । पुं० श्रीरामचन्द्रे ॥ मण्डलेश्वरादृशगुणे राजनि ॥ यथा । चतुर्थीजनपर्यन्तमधिकारोनृपस्यच । योराजातच्छतगुण : सएवमण्डलेश्वर : ॥ तस्माद्दशगुणोराजाराजेन्द्र : परिकीर्त्तित : ॥ इ० ब्र० वैवर्त्तपुराणे ॥

राजोहिजनसंज्ञक : । पुं० भूताङ्कुश वृक्षे ॥

राज्ञी । स्त्री० राजप्रियायाम् । नृपते : पत्न्याम् । राणी० इ० भा० ॥ भास्करस्यभार्यायाम् ॥ कांस्ये ॥ नील्याम् ॥ त्रैलोक्यात्मन : केश वस्यपश्चिमदिग्भागे ॥ राज्ञावरुणेनाधिष्ठितत्त्वात् । सन्ध्यारागयोगाद्वा ॥

राज्यम् । न० नीवृति । जनपदे । देशे । विषये । उपवर्त्तने ॥ तल्लक्षणमुक्तंवरदातन्त्रे । यथा । लक्षाधिपत्यं राज्यं स्यात्साम्राज्यं दशलक्षके । शतलक्षे महेशानिमहासाम्राज्यमुच्यते ॥ इति ॥ अपिच ॥ स्वाम्यमात्यौपुरंराष्ट्र कोशदण्डौसुहृत्तथा । सप्तप्रकृतयोह्येता : सप्ताङ्गंराज्यमुच्यते ॥ इति ॥ राज्ञ : कर्म्मभावोवा ॥ पत्यन्तपुरोहितादिभ्योयक् ॥ राज्यंनैच्छद्यति : पिचादत्तं तत्परिणामवित् । यत्रप्रविष्ट: पुरुषआत्मानंनावबुध्यते ॥

राज्यका । स्त्री० पिष्टराजिकादधिलवणमिश्रितवास्तूकादौ । रायता० इ० भा ॥ राज्यकयातिरोचन्यापाचन्यातांस्तुभक्षयेत् ॥ तान्वटकान् ॥

राज्यमूलम् । न० मन्त्रसंरक्षणे ॥

राज्याङ्गम् । न० राज्यस्योपाये । प्रकृतौ । स्वाम्यमात्यसुहृत्कोषराष्ट्र दुर्गबलेषु ॥ राज्यस्यराजकर्म्मणोङ्गंसाधनम् । स्वामी० राजा० पुरो

चितइतिश्रीधर :। चमात्योमन्त्री। सुहृत्० मित्रम्। कोशोभाण्डागार :। राष्ट्रंदेश :। पर्वतादीनिदुर्गाणि। वलंसैन्यम्। उक्तञ्चकामन्दकीये। स्वाम्यमात्यश्चराष्ट्रञ्चदुर्गं-कोशोवलंसुहृत्। परस्परोपकारीदंसप्ताङ्गंराज्यमुच्यते। पौरश्रेण्या सप्ताङ्गमपिराज्यंप्रकीर्त्तितमिति॥ सप्ताङ्गस्यापिराज्यस्यमूलंस्वामो-प्रकीर्त्तित :। तन्मूलत्वात्तथाङ्गानांराजारच्य : प्रयत्नत :॥ षडङ्गरचाकर्त्तव्यातथातेनप्रयत्नत :। चंगेभ्योयस्त्वथेऽज्ञद्रोहमाचरतेऽ-ल्पधी :॥ वधस्तस्यतुकर्त्तव्य : शोघ्रमेवमहोचिता॥

राटि :। स्त्री० युद्धे। राड० इ०भा० प्र०॥

राडि :। स्त्री० शरारिखगे॥

राढ :। पुं० मदनद्रुमे। मयनफलाख्ये॥

राढक :। पुं० स्वनामाख्यातेदेशे॥ यथा। प्राच्यांमागधशोणौचवारेन्द्रीगौडराढका :। इतिज्योतिषतत्त्वम्॥

राढा। स्त्री० जनपदविशेषे। सुह्मेषु॥ शोभायाम्॥ गौडदेशेपुरीविशेषे॥

राढि :। स्त्री० युद्धे॥

राढीय :। त्रि० राढदेशोद्भवे॥

रात :। त्रि० दत्ते॥

रात्रम्। न० ज्ञाने। यथा। रात्रञ्चज्ञानवचनंज्ञानंपंचविधंस्मृतम्। तेनेदंपंचरात्रंचप्रवदन्तिमनीषिण :॥

रात्रक :। पुं० पञ्चषट्स्वहःस्वर्षेशालिनि। [illegible]॥ न० पंचरात्रे॥

रात्रि :। स्त्री० सूर्यकिरणाभावच्छिन्नकाले। [illegible] निशीथिन्याम्। [illegible] रात० इ० भा०॥ तस्या : कारणंयथा। [illegible] रात्रि :स्याच्चतद्विरहाद्दिनम्॥ इतिवह्निपुराणम्॥ [illegible]। पश्चसन्ध्यायाम्॥ रात्रिमुखम्। रा०। राशद्भ्यांत्रिप्॥ रात्रे : पूर्वोत्तरौयामौवेदाभ्यासेनतौनयेत्॥ हरिद्रायाम्॥

रात्रिचर :। पुं० राक्षसे॥ रात्रौचरति। चरेष्ट :। रात्रे : कृतिविभाषेतिपंचेमुमभाव :॥ त्रि० रात्रौगमनकर्त्तरि॥

रात्रिचरी। स्त्री० राक्षस्याम्॥ टित्त्वान्ङीप्॥

रात्रिजलम्। न० कुज्झटिकायाम्। रात्रेर्जलम्॥

रात्रिजागर :। पुं० कुक्कुरे॥ त्रि०

रात्रौजागरणकर्त्तरि ॥
रात्रिजागरद : । पुं॰ मशके ॥
रात्रिञ्चर : । पुं॰ यातुधाने । राक्षसे ॥ रात्रौचरति । चरेष्ट : । रात्रेः कृतिविभाषेतिपक्षेमुम् ॥ त्रि॰ रात्रौगमनकर्त्तरि ॥
रात्रिञ्चरी । स्त्री॰ राक्षस्याम् ॥
रात्रिन्दिवम् । अ॰ अहोरात्रयो : ॥ रात्रौचदिवाच । अचतुरेत्यादिना ऽधिकरणार्थयोर्द्वन्द्वसमासान्तो- निपातित : । अव्ययान्तत्वादव्य- यम् ॥
रात्रिपुष्पम् । न॰ उत्पले ॥
रात्रिमट : । पुं॰ राक्षसे ॥ अ- टति । अटगतौ । पचाद्यच् । स प्तमीतियोगविभागात्समास : ॥ रात्रौअटतिवा । रात्रे :कृतिविभा षेतिमुम् ॥
रात्रिमणि : । पुं॰ चन्द्रे ॥ रात्रेर्म- णिरिव ॥
रात्रिवास : । पुं॰ अन्धकारे ॥ रात्रौ वासोऽस्य ॥
रात्रिवास : । न॰ रात्रौशयनकाली नपरिधेयेवस्त्रे ॥ यथाशयनस्थान्ध कारेषुरात्रिवासोदिनेतथा । स्नाना म्बरंकुवेशश्च वर्जयेच्छुक्लभोजन म् ।
रात्रिविगम : । पुं॰ प्रभाते ॥ रात्रे विगमोऽत्र
रात्रिविश्लेषगामी । पुं॰ चक्रवाके ॥
रात्रिवेद : । पुं॰ कुक्कुटे ॥
रात्रिवेदी । पुं॰ कुक्कुटे ॥
रात्रिहास : । पुं॰ श्वेतोत्पले ॥
रात्रिहिण्डक : । पुं॰ अन्त : पुरर- क्षके ॥
रात्री । स्त्री॰ निशायाम् । रात्रि ॥ कृदिकारादितिपाक्षिकोङीष् ॥
रात्री । अ॰ निशि ॥
रात्र्यन्ध : । त्रि॰ रात्रौदृष्टिहीनेनरे । रतन्धा॰हि॰भा॰ ॥ तन्नाशकौषधंय था । देवदारोश्चवैचूर्णमजामूत्रेण- भावयेत् । एकविंशतिवारमक्षिणी तेनचाञ्जयेत् ॥ रात्र्यन्धमापटलता नश्येदितिविनिश्चय : ॥ स्मृतिगारु- डे ॥ १८९ ॥ अध्याय : ॥ का- कादौ ॥
राद्ध : । त्रि॰ पक्के । सिद्धे ॥ ल- ब्धे ॥ राध्यति । राध॰ ॥ राधे रनिट : क्त : ॥
राद्धान्त : । पुं॰ सिद्धान्ते ॥ राद्ध : सिद्धोन्तोनिश्चयोयस्मिन् ॥
राध : । पुं॰ वैशाखमासि । माधवे ॥ राधा॰विशाखा॰तद्युतीपौर्णमासी॰ राधी । साऽस्मिन्नस्ति । साऽस्मिन्पौ र्णमासीत्यण् ॥
राधनम् । न॰ साधने ॥ प्राप्तौ ॥ तोषे ॥
राधना । स्त्री॰ भाषणे ॥

राधरङ्कः। पुं॰ सुनासीरे ॥ सीरके ॥ घनोपले ॥ शीकरे ॥ इ॰ मेदिनी ॥

राधरङ्कुः। पुं॰ राधरङ्कार्थे ॥ इति हेमचन्द्रः॥ *

राधः। न॰ ऐश्वर्य्ये ॥

राधा। स्त्री॰ गोपीविशेषे। तस्यानामानियथा। राधारासेश्वरीरासवासिनीरसिकेश्वरी। कृष्णप्राणाधिकाकृष्णप्रियाकृष्णस्वरूपिणी। कृष्णवामांशसम्भूतापरमानन्दरूपिणी। कृष्णावृन्दावनीवृन्दावृन्दावनविनोदिनी ॥ चन्द्रावतीचन्द्रकान्ताशतचन्द्रनिभानना। नामान्येतानिसाराणितेषामभ्यन्तराणिचेति ॥ राधेत्येवञ्चसंसिद्धाराकारोदानवाचकः। स्वयंनिर्वाणधात्रीयासाराधापरिकीर्त्तिता इतिब्रह्मवैवर्त्तपुराणम्। राधेतिसकलान्कामान्साधयतीराधेतिकीर्त्तितेतिदेवीभागवतम्। राधेतिसाधयतीत्यर्थः ॥ महालक्ष्म्याम् ॥ यथा। यन्मायामोहिताब्रह्मविष्णुशिवादयः। वैष्णवास्तांमहालक्ष्मींपरांराधांवदन्तिते ॥ यदर्द्धाङ्गामहालक्ष्मीः प्रियानारायणस्यच ॥ धन्विनांचिर्भेदे। वेधविशेषे ॥ विशाखानक्षत्रे ॥ आमलक्याम् ॥ विष्णुक्रान्तायाम् ॥ विद्युति ॥ राधेति कायमनया। राधसंसिद्धौ। गुरोश्चहलइत्यकारः॥ यद्वा। राधयति। पच्। टाप्॥

राधाकान्तः। पुं॰ श्रीकृष्णे ॥

राधाकृष्णः। पुं॰ राधाऽविनाभूतकृष्णे। श्रीकृष्णे। द्विभुजे। मुरलीधरे ॥ राधानामोच्चारणानन्तरंकृष्णनामोच्चारणेविधिर्यथा। नारदउवाच। आदौराधांसमुच्चार्यपश्चात्कृष्णंविदुर्बुधाः॥ निमित्तमस्यमांभक्तंवदभक्तजनप्रिय ॥ श्रीनारायणउवाच। निमित्तमस्यत्रिविधंकथयामिनिशामय जगन्माताचप्रकृतिः पुरुषश्चजगत्पिता ॥ गरीयसीतिजगतांमातातशतगुणैःपितुः। राधाकृष्णेतिगौरीशेत्येवंशब्दःश्रुतौश्रुतः॥ कृष्णराधेशगौरीतिलोकेनचकदाश्रुतः। प्रसीदरोहिणीचन्द्रगृहाणार्घ्यमिदंमम। गृहाणार्घ्यंमयादत्तंसंज्ञयासहभास्कर। प्रसीदकमलाकान्तगृहाणममपूजनम्॥ इतिदृष्टंसामवेदेकौथुमेमुनिसत्तम। राशब्दोच्चारणादेवस्फीतोभवतिमाधवः। धाशब्दोच्चारतःपश्चाद्धावत्येवससम्भ्रमः। आदौपुरुषमुच्चार्यपश्चात्प्रकृतिमुच्चरेत्। सभवेन्मातृगामीचवेदातिक्रमणेमुने। इ॰ इ॰ ब्र॰ वै॰ पु॰ ॥

राधातनय : । पुं० कर्णनामनि ॥ राधायास्तनय : ।।

राधावल्लभ : । पुं० श्रीकृष्णे ।।

राधावल्लभी । पुं० सम्प्रदायविशेषे ॥

राधावल्लभीय : । त्रि० सम्प्रदायविशेषयुक्ते वैष्णवे ॥ न । तत्तिलकविशेषे ॥ यथा ॥ नासासामूलमाश्रित्यशिरोमध्यगतं मुने । हरिपादाकृतंनासा मूलमाश्रित्ययत्नत : । हरिमन्दिरवत्सर्वं तद्राधावल्लभीयकम् । श्रीराधावल्लभीयं यत्तिलकं सुमनोहरम् । यौगुलं तत्तुविज्ञेयं यद्विमध्ये सुरंगितम् इतिपद्मपुराणम् ॥

राधाभेदी । पुं अर्जुने ॥

राधावेधी । पुं० अर्जुने ॥

राधासुत : । पुं० कर्णे । चम्पाधिपे । अंगराजे । अर्कतनये ॥

राधेय : । पु० राधासुते । कर्णे ॥ राधाया : अपत्यम् । स्त्रीभ्योढक् ।

राभस्यम् । न० उपक्रमे ॥

राम : । पुं० राघवे दशरथतनये । श्रीरामचन्द्रे ॥ राम : शस्त्रभृतामहम् । युद्धकुशलानांमध्ये रामोऽखिलराक्षसक्षयकर : परमवीरोभगवद्विभूति : ॥ अयमवतारस्त्रेतायुगान्तेरावणादिवधार्थं : ॥ रेणुकेये । परशुरामे ॥ हलायुधे । बलभद्रे ॥ भार्गवोराघवोगोपस्त्रयोरामा : प्रकीर्तिता : ॥ रात्रिरितिविख्यातामः शिव : परिकीर्तित : । शिवशक्त्यात्मकंब्रह्मरामरामेतिगीयते । राशब्दोविश्ववचनोमश्चापीश्वरवाचक : । विश्वेषामीश्वरोयोहितेनराम : प्रकीर्तित : ॥ रमतेरमयासार्द्धंतेनरामंविदुर्बुधा : । रमायारमणस्थानंरामंरामविदोविदु : । राचेतिलक्ष्मीवचनोमश्चापीश्वरवाचक : । लक्ष्मीपतिंगतिंरामंप्रवदन्तिमनीषिण : ॥ नाम्नासहस्रंदिव्यानांस्मरणे यत्फलं भवेत् । तत्फलंलभतेनूनंरामोच्चारणमात्रत : ॥ वरुणे । हये ॥ पशुभेदे ॥ न० वास्तुके ॥ कुष्ठौषधौ ॥ तमालपत्रे ॥ त्रि० चारौ । मनोरमे ॥ सिते ॥ असिते । श्यामे ॥ परमात्मनि ॥ रमन्तेयोगिनोनन्ते नित्यानन्दे चिदात्मनि । इतिरामपदेनासौपरंब्रह्माभिधीयते ॥ इतिपद्मपुराणम् ॥ रमते । रमक्रीडायाम् । ज्वलितिकसन्तेभ्योण : ॥ यद्वारमन्ते सच्चिदानन्दलक्षणे योगिनोऽस्मिन्ननेन वा । हलश्चेतिघञ् ॥ रमयतीति वा ॥ मथुरावविलोमेनमध्यमोनंयदक्षरम् । योनस्मरतिलोकेस्मिन्स्तन्मध्यं तन्मस्तोपरि ॥ रामोपासकस्यतिलकंयथा । श्रीरामोपासनायस्तिलकंतूर्द्ध्वपुण्ड्रकम् । भ्रुवोर्मध्ये

सविन्दुः स्यात्यदि विप्रमनोहरम् ॥

रामकरी । स्त्री० रामकलीरागिण्याम् ॥

रामकर्पूरकः । पुं० स्वनाम्नाख्याते-तृणे ॥

रामगिरिः । पुं० स्वनाम्नाप्रसिद्धे॰पर्वते ॥ चित्रकूटपर्वते॰इतिकश्चित् ॥

रामचन्द्रः । पुं० श्रीरामे । रावणारौ ॥

रामजननी । स्त्री० रेणुकायाम् ॥ कौशल्यायाम् ॥ रोहिण्याम् ॥

रामठः । पुं० अङ्कोठवृक्षे ॥ न॰ हिङ्गुनि ॥ रामठदेशोद्भवत्त्वादुपचारः । रमन्तेऽनेनवा । रम॰ । रमेर्वृद्धिश्चेत्यठः ॥ रमयतिवा ॥

रामठी । स्त्री० नाडीहिङ्गुनि ॥

रामणः । पुं० गिरिनिम्बे ॥ तिन्दुके ॥

रामणीयकम् । न० मनोहरत्त्वे । रमणीयत्वे ॥ रमणीयस्यभावः । योपधाद्गुरूपोत्तमाद्वुञ् ॥

रामण्यकम् । न० रमणीयतायाम् ॥

रामतरणी । स्त्री० लताविशेषे ॥

रामतरुणी । स्त्री० तरुणीपुष्पे । सेवती॰इ॰भाषाप्र० ॥

रामतीर्थम् । न० गोमत्याम् प्रसिद्धे- ॥ सूर्य्यारके ॥

रामदूतः । पुं० हनूमति ॥ यथा । मनोजवंमारुततुल्यवेगंजितेन्द्रियं बुद्धिमतांवरिष्ठम् । वातात्मजंवानरयूथमुख्यंश्रीरामदूतंमनसास्मरामीतिरामायणं ॥ रामस्यदूतः ॥

रामदूतिः । स्त्री० तुलसीविशेषे । विशल्यायाम् ॥

रामदूतिका । स्त्री० नागिन्याम् । नागपुष्प्याम् ॥

रामदूती । स्त्री० पर्वपुष्प्याम् । विशल्यायाम् ॥

रामनवमी । स्त्री० चैत्रशुक्लनवम्याम् ॥ रामनवमीव्रतेपारणकालस्तु । नवमीचाष्टमीविद्धात्याज्याविष्णुपरायणैः । उपोषणंनवम्यांवैदशम्यामेवपारणमिति ॥

रामपद्म । न० तीर्थविशेषे ॥

रामपूगः । पुं० पूगभेदे । कामीने । मुनिपूगे । सुरेवटे ॥

रामभद्रः । पुं० श्रीरामे ॥

रामलवणम् । न० रामके । सांभर॰इ॰ भा० ॥

रामवल्लभम् । न० त्वचे ॥ त्रि० रामप्रिये ॥

रामबाणः । पुं० औषधविशेषे ॥ यथा । पारदामृतलवङ्गगंधकंभागयुग्ममरिचेनमिश्रितम् । तत्रजातिफलमर्द्धभागिकंतिन्तिडीफलरसेनमर्द्दितम् ॥ वह्निमान्द्यदशवक्त्रनाशनोरामबाणइतिविश्रुतोरसः । सङ्ग्रहग्रहणिकुम्भकर्णकमामया-

तखरदूषणं जयेत् ॥ दीपतेतुशा
वकानुमानत: सद्यएवजठराग्नि-
दीपन :। रोचक : कफकुलान्तका
रक: श्वासकासवमिजन्तुनाशन: ॥
पारदभाग: १ विषभाग: १लवङ्गभा
ग : १ गन्धकभाग : १ मरिचभा
गा: ८ जातीफलभागौ २ रामबा
णोरसोऽजीर्णे ॥ रामस्यशरे। राम
शरे ॥

रामवीणा । स्त्री॰ वीणाप्रभेदे ॥

रामशरः । पुं॰ शरतृणभेदे । राम
काण्डे ॥

रामशीतला । स्त्री॰ आरामशीतला
याम् ॥

रामसखः । पुं॰ सुग्रीवे ॥ रामगुह
सखा । टच् ॥

रामसेनकः । पुं॰ भूनिम्बे ॥ कट्
फले ॥

रामह्रदः । पुं॰ तीर्थविशेषे ॥

रामा । स्त्री॰ उत्कृष्टयोषिति । रमते
गीतकलाभिरिति॰ रमयतिपुरुष
मितिवापुरुषरमणकारिण्यामबला
याम् ॥ रम॰ । ज्वलादित्वाण: ॥
हिंगुलिन्याम् । वाराहक्रान्तायाम् ॥
गृहकन्यायाम् ॥ आरामशीतला-
याम् ॥ अशोके ॥ गोरोचनाया
म् ॥ गैरिके ॥ हिंगुले ॥

रामानुजः। पुं॰ लक्ष्मणे ॥ श्रीकृष्णे ॥
आधुनिकवैष्णवसंप्रदाये ॥ न॰
तिलकविशेषे ॥ यदूर्ध्वपुण्ड्रं तिलकं
श्रीभगवत्पदमनोहरम् । तन्मध्यप्रीत
रेखं चश्रीमद्रामानुजंविदुः ॥

रामायणम् । न॰ वाल्मीकीयेमहा
काव्ये । कुशलवाकृष्णासंज्ञउत्पन्ने
महदाख्याने । रामेणरावणवधका
व्ये । कुशलवोपदिष्टचतुर्विंशतिस
हस्रश्लोकसङ्ख्याकचादिकाव्ये ॥ य
था । प्राप्तराज्यस्यरामस्यवाल्मी
किर्भगवानृषिः । चकारचरितंकृ
त्स्नं विचित्रपदमर्थवत् ॥ चतुर्विं
शत्सहस्राणिश्लोकानामुक्तवानृष-
िः । तथासर्गशतान् पंचषट्का
ण्डानितथोत्तरम् ॥ तत्त्वशतकोटिसङ्ख्य
कमपि । चरितंरघुनाथस्यशतकोटि
प्रविस्तरम् । एकैकमक्षरं पुंसांमहा
पातकनाशनम् ॥ तत्तु सम्पूर्णं ब्रह्म
लोकेस्थितमित्यैतिह्यम् ॥ रामस्याय
नंचरितम् । पूर्वपदादितिणत्वम् ॥

रामालिङ्गनकामः । पुं॰ रक्ताम्लाने ॥

रामावधजोपमः । पुं॰ चक्रवाके ॥

रामावरजः । पुं॰ लक्ष्मणे ॥ श्री
कृष्णे ॥

रामिलः । पुं॰ रमणे ॥ कामे ॥

राम्भः। पुं॰ व्रतिनोवंशवेदण्डे ॥ र
म्भस्यवेणोर्विकारः । पलाशादि
भ्योवेत्यञ् ॥

रायभाटी । स्त्री॰ चापोउ॰ ष्टु॰ गौ॰
प्र॰ । नदीवीलाविशेषे ॥

रायस्पोष : । पुं० धनपुष्टौ । रायो धनस्यपोष : । अलुक्समास : । छान्दसोविसर्गस्यसकार : ॥

राल : । पुं० स्वनामाप्रसिद्धे० यक्षधूपे ॥ अस्यनामानिगुणाश्चयथा । रालस्तुसालनिर्यासस्तथासर्जरस : स्मृत : । देवधूपोयक्षधूपस्तथासर्वरसश्चस : ॥ रालोहिमोगुरुस्तिक्त : कषायोग्राहकोहरेत् । दोषास्रस्वेदवीसर्पज्वरव्रणविपादिका : ॥ ग्रहभग्नाग्निदग्धांश्रमूलातीसारनाशन : ॥

रालकार्य्य : । पुं० सालवृक्षे ॥

राव : । पुं० शब्दे । ध्वनौ ॥ रवणम् । रुशब्दे । भावेघञ् ॥

रावण : । पुं० लङ्केश्वरे । दशग्रीवे । पौलस्त्ये । पङ्क्तिग्रीवे । रावणोलोकरावणइतिन्यायात्० रावयति । रु० । नन्द्यादित्वाल्ल्यु : । तदुक्तमुत्तरकाण्डे । यस्माल्लोकत्रयंचैतद्रावितंभयमागतम् । तस्मात्त्वंरावणोनामनाम्नावीरो भविष्यसीति ॥ यद्वा । विश्रवसोपत्यम् । शिवादिषु० विश्रवसोविश्रवणरवणावादेशौनिपातितौ० अण्च ॥

रावणगङ्गा । स्त्री० सिंहलदेशस्थनदीविशेषे । येतुरावणगङ्गायांजायन्तेकुरुविन्दका : । पद्मरागाघनंरागंबिभ्राणा : स्फुटार्चिष : ॥

रावणारि : । पुं० श्रीरामे ॥ रावणस्यअरि : ॥

रावणि : । पुं० रावणस्यज्येष्ठपुत्रे । इन्द्रजिति ॥ अथाख्येरावणकुमारे ॥ रावणस्यापत्यम् । अतइञ् ॥

राशि : । पुं० पुञ्जे । उत्करे । कूटे । धान्यादिसमूहे ॥ मेषादिस्वरूपे ज्योतिश्चक्रस्यद्वादशांशे ॥ तस्यसंस्थानंयथा । विषुवत्क्रान्तिवृत्तयोर्यत्पूर्वभागस्थितास्थिरा : । मेषाद्या : राशय : क्रान्तिवृत्तय : पूर्वदिक्क्रमात् ॥ तेयथा । मेषोवृषोथमिथुनंकर्कट : सिंहएवच ॥ कन्यातुलावृश्चिकश्च धनुर्मकरएवच ॥ कुम्भोमीनश्चविज्ञेयाराशयोद्वादशैवते ॥ रश्यते० रशतिवा । रशइतिसौत्रोधातु : स्वनार्थ : । बाहुलकाद्इण् । णिजन्तादच्चवा ॥ यद्वा । अश्नुते । अशूव्याप्तौ । अशिपणाय्योरुडायलुकौचेति० इण्० धातोरुडागमश्च ॥ गणिते ॥

राशिचक्रम् । न० मेषादिद्वादशराश्यादियुक्तवृत्ते । भचक्रे । ज्योतिषचक्रे ॥ सप्तविंशतिभैर्ज्योतिश्चक्रंस्तिमितवायुगम् । तदंशोभवेद्राशिर्नवर्क्षचरणाङ्कित : ॥ तद्विवरणंयथा । भचक्रंध्रुवयोर्बद्धमाक्षिप्तंप्रवहानिलै : । पर्येत्यजस्रंतन्नद्धाग्रहकक्षायथाक्रमम् ॥ उप

रिक्षस्थमहतीकक्षाल्पाध : स्थित श्च । महत्याकक्षयाभागामहान्तो ल्पास्तथाल्पया ॥ कालेनाल्पे नभ गण भुङ्क्तेऽल्पभ्रमणाश्रित : । ग्र ह : कालेनमहतामण्डलेमहतिभ्र मन् ॥ स्वल्पयातुबहून्भुङ्क्ते भगणान्शीतदीधिति : । महत्या कक्षयागच्छन् तत: स्वल्पंशनैश्च र : ॥ मन्दादध : क्रमेणस्युश्चतुर्था दिवसाधिपा : । वर्षाधिपतयस्तद्व त्तृतीया : परिकीर्त्तिता : ॥ ऊ र्द्ध्वक्रमेणशशिनोमासानामधिपा: स्मृता : ॥ होरेशा : सूर्यतनयाद धोध : क्रमशस्तथा । भवेद्भकक्षा तिग्मांशोर्भ्रमणंषष्टिताडितम् । सर्वोपरिष्टाद्भ्रमति योजनैस्तैर्भ मण्डलम् ॥ तत्कक्षाक्रममाह । ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभि धीयते । तन्मध्ये भ्रमणंभानामधो ध : क्रमशस्तथा ॥ मन्दामरेज्यभू पुत्रसूर्यशुक्रेन्दुजेन्दव : । परिभ्रम न्त्यधोध : स्था : सिद्धविद्याधराघ ना : ॥ रविर्मासंनिशानाथ: सपा दद्दिवसद्वयम् । पक्षत्रयंभूमिपुत्रो बुधोष्टादशवासरान् ॥ वर्षमेकंसु राचार्यश्चाष्टाविंशद्दिनंभृगु : । शनि : सार्द्धद्वयंवर्षंस्वर्भानु: सार्द्ध वत्सरम् ॥ एवंप्रमाणात्सकला : स्वराशिंभुञ्जतेग्रहा : ॥ इतिराशि

भोग : ॥

राशिविभाग : । पुं॰ अश्विन्यादिन क्षत्रैर्मेषादीनांविभजने ॥ यथा । सपादद्वयनक्षत्रैरश्विन्यादिभिरेवच । राशय : कथितास्तेतेमेषादिद्वाद शक्रमात् ॥ तथाहि । अश्विनीभर णीकृत्तिकापादोमेष : १ । कृत्ति काशेषपादत्रयंरोहिणीमृगशिरोर्द्धं- वृष : २ । मृगशिर : शेषार्द्धमार्द्रा पुनर्वसुपादत्रयंमिथुनम् ३ । पुन- र्वसुशेषपादैकंपुष्याश्लेषाकर्कट : ४ । मघापूर्वफल्गुन्युत्तरफल्गुनीप्र थमपाद :सिंह: ५ । उत्तरफल्गुनी शेषपादत्रयंहस्ताचित्रार्द्धञ्चकन्या ६ । चित्राशेषार्द्धंस्वातीविशाखापाद त्रयंतुला ७ । विशाखाशेषैकपादो ऽनुराधाज्येष्ठावृश्चिक : ८ । मूलं पूर्वाषाढोत्तराषाढाप्रथमपादोधनु: ९ । उत्तराषाढाशेषपादत्रयश्रवणा धनिष्ठार्द्धंस्यमकर : १० । धनि ष्ठाशेषार्द्धंशतभिषापूर्वभाद्रपाद त्रयंकुम्भ : ११ । पूर्वभाद्रशेषपाद उत्तरभाद्ररेवतीमीनराशि १२ । रिति । उक्तञ्च । सप्तविंशतिभै र्ज्योतिश्चक्रंस्तिमितवायुगम् । तद ष्टांशोभवेद्राशिर्नवर्क्षचरणाङ्कितश्च- ति ॥

राष्ट्र : । पुं॰ न॰ उपद्रवे । चक्रे । जीवृति । देशे । विषये ॥ उपद्रवे

। राजति । राज् । ष्ट्रन् । व्रश्चेति ष : ॥

राष्ट्रनिवासी । त्रि० जानपदे । देशवासिनि ॥

राष्ट्रिका । स्त्री० कण्टकारिकायाम् ॥ राष्ट्रमस्त्यस्या : । अतइनिठनाविति ठन् ॥

राष्ट्रिय : । पुं० नाट्योक्त्या राजश्याले ॥ राष्ट्रेऽधिकृत : । राष्ट्रावारपारा द्घखाविति घ : । घस्येयादेश : ॥

राष्ट्रीय : । पुं० राष्ट्रिये ॥ त्रि० राष्ट्रसम्बन्धिनि ॥

रास : । पुं० कोलाहले ॥ ध्वनौ ॥ भाषाशृङ्खलके ॥ विलासे । गोपानां गोपीभि: सहक्रीडाविशेषे ॥ रासते । रासृशब्दे । अच् ॥ गर्ज्जिते ॥

रासगोष्ठी । स्त्री० हल्लीषके ॥ तल्लक्षणं यथा । पृथंसुवृत्तंमसृणं वितस्तिमात्रोन्नतंकौविनिखन्यशङ्कुकम् । आक्रम्यपद्भ्यामितरेतरन्तुहस्तैर्भ्रमोयंखलुरासगोष्ठीति हरिवंशटीकायां नीलकण्ठ : ॥

रासन : । पुं० रसे ॥ रसनया गृह्यते । शेषइत्यण् ॥

रासभ : । पुं० गर्द्दभे । रासते । रासृ० । रासियल्लिभ्यांर्थ्यभच् ।

रासभवन्दिनी । स्त्री० मल्लिकायाम् ॥

रासभी । स्त्री० गर्द्दभ्याम् । गधी० इ० भा० ॥ जातिलक्षणोङीष् ॥

रासमण्डलम् । न० श्रीकृष्णस्यरासक्रीडास्थले ॥

रासेरस : । पुं० रासगोष्ठ्याम् ॥ रासे ॥ शृङ्गारे ॥ रससिद्धौ ॥ रसावासे ॥ षष्ठीजागरके ॥ उत्सवे ॥ परिहासे ॥

रासेश्वरी । स्त्री० राधायाम् ॥

रास्ना । स्त्री० स्वनामख्यातलताविशेषे । नाकुल्याम् । सुरसायाम् । भुजङ्गाक्ष्याम् । राइसन० जीत० इ० भा० प्र० ॥ रास्नातुत्रिविधाप्रोक्तामूलंपत्रंतृणंतथा । ज्ञेयामूलदलौश्रेष्ठौतृणारास्नातुमध्यमा ॥ इ० रा० नि० ॥ अपिच । नाकुलीतुवरातिक्ताकटुकोष्णाविनाशयेत् । भोगिलूताहश्चिकाखुविषज्वरकृमिव्रणान् ॥ इ० भा० प्र० ॥ रास्नाभिधामवातघ्नोतिराजवल्लभ : ॥ एलापर्णी० इ० दे० भा० प्र० औषधिविशेषे । एलापर्ण्याम् । सुवहायाम् । युक्तरसायाम् । कांटाआमरुली० इ० गौ० दे० भा० प्र० ॥ अस्यागुणायथा । रास्नागणाचनीतिक्तागुरूष्णाकफवातजित् । शोथश्वाससमीरासृग्वातशूलोदरापहा ॥ कामज्वरविषाशीतिवातिकामयहिध्माहृत् ॥ राति० रायतेवा । रासते० रस्यतेवा । रादाने । रसआ स्वादने० रास्रृशब्दे वा । रास्नासास्नेतिसाधु : ।

राहु : । पुं० तमोग्रहे । स्वर्भानौ । सैंहिकेये ॥ रहति॰गृहीत्त्वात्यजति चन्द्रार्कौ । रहत्यागे । बाहुलका-दुण् ॥

राहुगृहम् । न० कन्याराशौ ॥ राहो गृहम् ॥

राहुग्रह : । पुं० )
राहुग्राह : । पुं० ) उपरागेचन्द्रसूर्ययोर्ग्रहणे ॥

राहुच्छत्रम् । न० आर्द्रके ॥

राहुदर्शनम् । न० राहोश्चाक्षुषज्ञाने । ग्रहणे ॥

राहुभेदी । पुं० विष्णौ ॥

राहुमूर्द्धभित् । पुं० केशवे ॥

राहुरत्नम् । न० गोमेदके ॥

राहुलसू : । पुं० बुद्धे । सुगते ॥

राहुस्पर्श : पुं० उपरागे ॥

राहुहा । पुं० विष्णौ ॥

राहूच्छिष्ट : । पुं० )
राहूत्सृष्ट : । पुं० ) लशुने ॥

रिक्त : । त्रि० शून्ये ॥ यथा । रिक्तहस्तो ननोपियाद्राजानंदेवतांगुरुमिति ॥ निर्द्धने ॥ न० वने ॥ रिच्यतेस्म । रिचवियोजनसम्पर्चनयो : । क्त : ।

रिक्तकम् । त्रि० शून्ये ॥ स्वार्थे कन् ॥

रिक्ता । स्त्री० चतुर्थीनवमीचतुर्द्दशीषुतिथिषु ॥

रिक्थम् । न० धनमात्रे । वसुनि ॥ रिच्यते । रिचिर्विरेचने । पातृतुदिवचिरिचीतिथक् ॥

रिक्थहारी । त्रि० दायादे ॥

रिक्थाद : । पुं० पुत्रे ॥

रिक्थी । त्रि० धनहरिणि ।

रिघा । स्त्री० लिक्षायाम् । लीख० इ० भा० इतिहेमचन्द्र : ॥ लक्ष्यते । लक्षआलोचने । घञ् । पृषोदरादि : ॥

रिङ्खणम् । न० स्खलने ॥ धर्मादिस्खलने ॥ बालानांहस्तपादाभ्यांचलने । रिखिगतौ । भावेल्युट् ॥

रिङ्गणम् । न० स्खलने ॥ धर्म्मादिस्खलने ॥ बालानांहस्तपादाभ्यांचलने । रींगणा० इ० भा० प्र० ॥ औचित्यात्पिच्छिलादेसस्खलनंरिङ्गणंक्वचित् ॥ रिगिगतौ । भावेल्युट् ॥

रिङ्गन् । त्रि० जानुभ्यांगच्छति ॥ गच्छति ॥

रिधम : । पुं० कामे ॥ वसन्ते ॥

रिपु : । पुं० शत्रौ । अहितकारिणि ॥ आभ्यन्तरारिपवोयथा । कामक्रोधौलोभमोहौमदोमात्सर्यएवच । आभ्यन्तराइमेप्रोक्तारिपवस्तत्त्ववेदिभि : ॥ अनित्या : शत्रवोबाह्याविप्रकृष्टाश्चतेयत : । अत : सोभ्यन्तरान्नित्यान्षट्पूर्व्वमजयद्रिपून् ॥ अनिष्टंरपति । रपव्य

क्तार्थांवाचि । रपेरिच्चोपधायाइति कु :॥ लग्नात्षष्ठभवने ।। चोरक नामगन्धद्रव्ये ॥

रिपुघातिनी । स्त्री॰ लताविशेषे । कुचिकायाम् । कुचुइ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ शत्रुनाशकारिण्याम् ॥

रिपुद : । पुं॰ दक्षिणोत्तरद्वारगृहे ॥

रिपुभम् । न॰ षष्ठराशौ ॥

रिप्फम् । न॰ व्ययभवने ॥

रिप्र : । त्रि॰ अधमे । कुत्सिते ॥ रीयते । रीङ् स्रवणे । लीरीङोर्ह्रस्व : पुट् चतरौश्च यथाकुत्सनयोरितिरप्रत्ययोधातोर्ह्रस्व : प्रत्ययस्यपुट् च ॥

रिभेद : । पुं॰ अरिभेदे ॥

रिरंसा । स्त्री॰ रन्तुमिच्छायाम् ॥ रमे : सन् ॥ अप्रत्ययात् । टाप् ॥

रिरंसु : । त्रि॰ रन्तुमिच्छौ । रमे : सन्नन्तादुप्रत्यय : ॥

रिरचा । स्त्री॰ रचितुमिच्छायाम् ॥

रिरचिषु : । त्रि॰ रचितुमिच्छौ ॥

रिरी । स्त्री॰ पित्तले ॥

रिश्य : । पुं॰ मृगे ॥

रिष्ट : । पुं॰ खड्गे ॥ फेनिले । रीठा॰ इ॰ भा॰ ॥ न॰ एनसि । पापे ॥ क्षेमे । कुशले ॥ अशुभे । अकल्याणे ॥ अभावे । नाशे ॥ क्षेमाशुभाभावेषु ॥ रेषणम्॰ रिष्यतेर्भ्रंतिवा । रिषहिंसायाम् क्त : ॥

रिष्टक : । पुं॰ फेनिले । रीठा॰ इ॰ भा॰ ॥

रिष्टि : । पुं॰ खड्गे । असौ ॥ स्त्री॰ शुभे ॥ रेषति । रिष॰ क्तिच् ॥

रिष्फम् : । न॰ व्ययभवने ॥

रिष्य : । पुं॰ मृगप्रभेदे ॥ रिष्यति । रिष॰ । अघन्यादित्वात्साधु : ॥

रिष्व : । त्रि॰ हिंस्रे ॥ न॰ शस्त्रे ॥ रिष्यतेऽनेन । रिष॰ । सर्वनिघृष्वरिष्वेतिसाधु : ॥

री । स्त्री॰ गतौ ॥

रीठा । स्त्री॰ रीठाकरञ्जे ॥

रीठाकरञ्ज : । पुं॰ स्वनामख्यातवृक्षे । गुच्छके । गुच्छपुष्पके । गुच्छफले । फेनिले ॥

रीढक : । पुं॰ पृष्ठवंशे ॥

रीढा । स्त्री॰ अवमाननायाम् । अवज्ञायाम् ॥ रेहणम् । रिहवर्धे । औणादिक : क्त : । स्त्रीत्वंलोकात् ॥

रीण : । त्रि॰ स्रुतजलादौ । चरिते । स्रुते ॥ रीयतेस्म । रीङ् स्रवणे । क्त : । स्वादयओदित : । ओदितश्चेतिनत्वम् ॥ घोणे ॥

रीति : । स्त्री॰ स्पन्दे । गतौ ॥ प्रचारे ॥ लोहकिट्टे ॥ दग्धस्वर्णादिमले ॥ सीमनि ॥ स्रवणे ॥ स्वभावे । रूपे । लक्षणे । भावे । आत्म

नि। प्रकृतौ। सहजे। पित्तले॥ पित्तलन्त्वारकूटं स्यादारोरीतिश्च कथ्यते। राजरीतिर्व्रह्मरीतिः कपिलापिङ्गलापि च॥ रीतिरप्युपधातुः स्यात्ताम्रस्ययसदस्य च। पित्तलस्य गुणास्ज्ञेयाः स्वयोनिसदृशा जनैः संयोगजप्रभावेण तस्यान्ये पि गुणाः स्मृताः रीतिकायुगलं रूक्षं तिक्तं च लवणं रसे॥ शोधनं पाण्डुरोगघ्नं कृमिघ्नं नातिलेखनम्। कांस्यशब्दे स्यवोद्धव्यः शोधनेमारणे विधिः॥ वैदर्भ्यादौ॥ रीतिरात्मा काव्यस्य• विशिष्टापदरचना रीतिरिति च वामनसूत्रे। गुणभेदे नतद्विभागमाह। ओजः प्रसादमाधुर्य्य गुणत्रितयभेदतः। गौडवैदर्भ्यपाञ्चालीरीतयः परिकीर्त्तिताः प्रत्येकमेषां लक्षणानि यथा। ओजः समासभूयस्त्वं मांसलं पदडम्बरम्। व्यक्तार्थ पदमग्राम्यं प्रसादः परिकीर्त्तितः शब्दार्थयोः सुरसवन्मधुरं परिकीर्त्तितम्। सर्व्वलोकावगम्यंयद्ग्राम्यंतदभिधीयते॥ सुश्राव्यमपिगम्भीरं प्रसन्नमुपनागरम्। ग्राम्यं यथा। कन्ये मन्येऽप्यसीधन्यायस्त्वामद्यविशाङ्क येत्। नाल्पेनतपसालभ्यः सुन्दरस्त्रीसमागमः॥ उपनागरं यथा। तन्विल्त्वदधरं मृदुनाविदं नविदो

जनाः वसुधायांसुधाभावान्मृषासुर्गं यियासवः॥ शब्दालङ्कारणं तत्स्याद्यदनुप्रासभासुरम्। वर्णावृत्तिरनुप्रासः पादेपादेविधीयते पदावृत्तिस्तुयमकमादिमध्यान्तसर्वगम्। क्रमेणरीतित्रयाणामुदाहरणानि। गंगोत्तुंगतरंगसंगतजटाजूटाग्रजाग्रत्फणिस्फूर्जत्फूत्कृतिभीतिसम्भृतिचमत्कारस्फुरत्सम्भ्रमा। आनन्दामृतवापिकां विदधतोचित्ते गिरीशप्रभोस्त्वांपायान्नवसंगमेभगवतीलज्जावतीपार्वती॥ भवतोविरहव्याधिमधिगम्यससम्भ्रमा। कामिनीयामिनीकान्तं कृतान्तमिवपश्यति॥ हन्तालि सन्तापनिवृत्तयेऽस्याः किन्तालवृन्तं तरलीकरोषि। उत्तापएषोऽन्तरतोपहेतुर्नतभ्रुवोनव्यजनापनेयः॥ इतिकाव्यचन्द्रिका॥ अपि च। वैदर्भीसाथपाञ्चालीगौडीयावन्तिकातथा। लाटीयामागधीचेतिषोढारीतिर्निगद्यते॥ रीयते• रीणातिवा• रयणंवा। रीस्रवणे• रीगतिरेषणयोः। क्तिच्• क्तिन्वा॥

रितिकम्। न• पुष्पाञ्जने॥

रीतिका। स्त्री• कुसुमाञ्जनेपित्तले॥

रीतिपुष्पम्। न• कुसुमाञ्जनेरीतिकायांध्मायमानायांजातेमले॥ रीतेः पित्तलस्यपुष्पमिव• तन्मल-

स्वाम् ॥

रोतिहेतु : । पुं॰ रङ्के । वङ्के ॥ री तेर्हेतु : ॥

रु : । पुं॰ शब्दे ॥

रुक : । त्रि॰ बहुप्रभेदे ॥

रुक्प्रतिक्रिया । स्त्री॰ रोगनिवारणे । चिकित्सायाम् ॥ रुज: प्रतिक्रियानिरसनम् ॥

रुक्मम् । न॰ काञ्चने ॥ धूस्तूरे ॥ लोहे ॥ नागकेशरे ॥ रोचते । रुचदीप्तौ । युजिरुजितिजांकुश्चेति मक् ॥

रुक्मकार : । पुं॰ स्वर्णकारे ॥ रुक्मं करोति । डुकृञ्॰ । कर्मण्यण् ॥

रुक्मकारक : । पुं॰ स्वर्णकारे ॥ रुक्मकारएव । स्वार्थेक : ॥

रुक्मवती । स्त्री॰ पङ्क्तिच्छन्द : १० प्रभेदे ॥ तल्लक्षणं यथा । रुक्मवती सायत्रभमसगौ ॥ यथा । कायमनोवाक्यै:परिशुद्धैर्यस्यसदाकंसहिषिभक्ति : । राज्यपदेश्म्यांलिरुदारारुक्मवतीविप्र : खलुतस्य ॥ इयमेव॰ चम्पकमाला॰ रूपवतीचबोध्या ॥ त्रि॰ स्वर्णवति ॥

रुक्मवेदी । स्त्री॰ काञ्चनवेदिकायाम् ॥ रुक्मंहिरण्यंतन्मयाभिरिष्टकाभिश्चितावेदी॰ रुक्मवेदी ॥

रुक्माङ्गद : । पुं॰ परमभागवतेनृपतितिलके ॥

रुक्मिणी । स्त्री॰ कृष्णस्यप्रधानमहिष्याम् । लक्ष्म्याम् । हरिप्रियायाम् ॥

रुक्मिणीव्रतम् । न॰ व्रतविशेषे ॥

रुक्मिदर्प्प : । पुं॰ )

रुक्मिदारी । पुं॰ ) बलरामे । बलभद्रे ॥

रुक्मी । पुं॰ भीष्मकात्मजे । रुक्मिणीभ्रातरि ॥

रुक्मिभित् । पुं॰ बलदेवे ॥

रुच : । त्रि॰ अप्रेमणि । परुषे ॥ अचिक्कणे । अस्निग्धे ॥ रूक्ष॰ इत्यभयोर्भाषा ॥ रुचयति । रुचपारुष्ये । पचाद्यच् ॥ यद्वा । रुहेरीणादिक : स : ॥

रुग्ण : । त्रि॰ रोगादिनाकुटिलीकृतेभुग्ने । वक्रे ॥ रुज्यतेस्म । रुजो भङ्गे । क्त : । ओदितश्चेतिनत्वम् ॥ रोगिणि

रुक्॰ग्॰ । स्त्री॰ शोभायाम् ॥ तेजसि ॥ द्युतौ ॥ इच्छायाम् ॥ रोचते । रुचदीप्तौ । क्विप् । शारिकाशुकवाचि ॥

रुच : । त्रि॰ शोभमाने ॥ रुचेरिगुपधेतिक : ॥

रुचक : । पुं॰ बीजपूरे ॥ निष्के ॥ दन्ते ॥ कपोते ॥ एरण्डे ॥ न॰ सर्जिकाक्षारे ॥ अश्वस्याभरणे ॥ माल्ये ॥ सौवर्चले ॥ यथा । रु-

रुक्रंरोचनंभेदिदीपनंपाचनंपरम्। सस्नेहंवातनुन्नातिपित्तलंविशदंलघु ॥ उद्गारशुद्धिदंसूक्ष्मंविबन्धानाहशूलहृत् ॥ माङ्गल्यद्रव्ये ॥ उत्कटे ॥ रोचनायाम् ॥ विडङ्गे ॥ लवणे ॥ पुं० न० राजवेश्मविशेषे ॥ वनान्तरे० । रोचतेऽनेन । रुचदीप्तावभिप्रीतौच । अन्तर्भावितण्यर्थ: । क्रुन्शिल्पिसंज्ञयोरिति क्रुन् ॥

रुचा । स्त्री० इच्छायाम् । दीप्तौ ॥ शोभायाम् ॥ शारिकाशुकवाचि ॥

रुचि: । पुं० प्रजापतिविशेषे । आकूतीपतौरौच्यमनो: पितरि ॥

रुचि: । स्त्री० दीप्तौ ॥ शोभायाम् ॥ अभिष्वङ्गे । उत्कटानुरागे ॥ अभिलाषे ॥ रोचते । रुच० । इगुपधात्किदितीन् ॥ बुभुक्षायाम् ॥ गोरोचनायाम् ॥ आलिङ्गनविशेषे ॥ तल्लक्षणंयथा । नायिकायानायकस्यसम्मुखिनान्वोरुपर्य्युपविश्यवक्षसिन्योदस्वायदवस्थानमितिकामशास्त्रं ॥

रुचिकर: । त्रि० रोचने ॥

रुचित: । त्रि० इष्टतमदव्ये ॥ रुचे: कर्तारक: ॥ यद्वा । रोचते । रुच० । रुचिवचीतिकितच् ॥

रुचिफलम् । न० अमृताह्वे । अमृतफले ॥

रुचिरम् । न० मूलके ॥ कुङ्कुमे । लवङ्गे । त्रि० सुन्दरे ॥ सौम्ये ॥ मिष्टे ॥ रोचते । रुच० । इषिमदिमुदीतिकिरच् ।

रुचिरा । स्त्री० गोरोचनायाम् ॥ अतिजगतीछन्द: १३ प्रभेदे ॥ तल्लक्षणादियथा । जभौसजौगितिरुचिराचतुर्ग्रहै: । यथा । पुनातुवोहरिरतिरासविभ्रमी० परिभ्रमन्व्रजरुचिराङ्गनान्तरेसमीरणोल्लसितलतान्तरालगोयथामरुत्तरलतमालभूरुह: ॥ इतिमाचाद्वत्तान्तरेपियथा । सप्तचतुष्कलकलितसकलदलसंशोभितकुण्डलरुचिरा । नकुरुपयोधरमिहफणिपतिरभणितमिदंवृत्तंरुचिरा ॥ यथा । कस्यतनुर्मनुजस्यसितासितसङ्गममधिविधित: पतिता । यस्यकृतेकरभोरुविषीदसिमिहिरातपनिहतेवलता ॥

रुचिराञ्जन: । पुं० शोभाञ्जने ॥

रुचिराश्व: । पुं० नृपतिविशेषे ॥ शोभनतुरगे ॥ त्रि० तद्वति ॥

रुचिष्य: । त्रि० इष्टवस्तुनि ॥ रोचते० रुच्यतेवा । रुच० । रुचिभुजिभ्यांकिष्यन् ॥ अभिप्रेते ॥

रुचि । स्त्री० दीप्तौ ॥ रुक्रुचीरुचय: समाहृत्यैकार्थसङ्ग्रह: । कृदिकारादितिङीष् ॥

रुच्य: । पुं० कतकवृक्षे ॥ शालिधा·

न्य ॥ पथ्यौ ॥ न० सौवर्चले ॥ त्रि० मनोज्ञे । सुन्दरे ॥ रोचते० रुच्यते वा । रुच० । राजसूयेतिसाधु : ॥
रुच्यकन्द : । पुं० सूरणे ॥
रुग् । स्त्री० रोगे ॥ रुजतिदेहम् । रु- जोभङ्गे । क्विप् ॥ रोजनंवा सम्प दादिक्विप् ॥ कुष्ठौषधौ ॥
रुजा । स्त्री० रोगे ॥ भङ्गे ॥ रुजति । रुजो० । भिदादिपाठात् ॰रुजार्था- नामितिनिर्देशाद्वाऽङ्टाप् ॥ दृ गुरपेतिकोश ॥ कुष्ठे ॥ मेष्याम् ॥
रुजाकर : । पुं० व्याधौ । न० कर्मर ङ्गफले ॥ त्रि० पीडाकारिणि ॥
रुजासह : । पुं० धन्वनवृक्षे ॥
रुणत्करा । स्त्री० सुव्रतायाम् । सुख- सन्दोह्यायांगवि ॥
रुण्ड : । पुं० कबन्धे ॥
रुण्डिका । स्त्री० द्वारपिण्डयाम् । देह ल्याम् ॥ दूतिकायाम् ॥ रणभूमौ ।
रुतम् । न० वाशिते । तिरश्चांशब्दे । कूजिते ॥
रुदथ : पुं० कुक्कुटे ॥ शुनि ॥ शि शौ ॥ रोदिति । रुदिर्श्रश्रुविमोच ने । रुदिविदिभ्यांङिदित्यथ : ॥
रुदन्तिका । ) स्त्री०
रुदन्ती । ) स्त्री० क्षुद्रक्षुपविशेषे । स्रवत्तोयायाम् । सञ्जीवन्याम् । रो माञ्चिकायाम् । चणपत्र्याम् ॥ अ स्या : स्वरूपंयथा । चणपत्रसमंप-

त्रं क्षुपस्यैवतथाकृति : । शैशिरेज लबिन्दूनांस्रवन्तीतिरुदन्तिका ॥ रु दन्तीवह्निकृद्व्याधिपित्तघ्नीरसाय- नी ॥
रुदितम् । न० क्रन्दिते । क्रुष्टे ॥ रु- दिर्० । भावेक्त : ॥ त्रि० तद्वति ॥
रुद्ध : । त्रि० नद्योप्राकारादिनाक्रतवे ष्टने । वेष्टिते । वलयिते । संवी- ते । आवृते ॥ रुध्यतेस्म । रुधिर् आवरणे । क्त : ॥
रुद्र : । पुं० गणदेवताविशेषे ॥ एका- दशरुद्रेषु ॥ तेषांनामानियथा । अजैकपादहिर्बुध्नोविरूपाक्षोथरैव- त: । हरश्चबहुरूपश्चत्र्यम्बकश्चसुरे- श्वर: ॥ सावित्रश्चजयन्तश्चपिनाकी चापराजित : । एतेरुद्रा : समा ख्याताएकादशगणेश्वरा : । एते षांमानसानान्तु त्रिशूलवरधारिणा म् । कोटयश्चतुरशीतिस्तत्पुत्रा श्चाक्षमामता : ॥ दिक्षुसर्वासुये रक्षांप्रकुर्वन्तिगणेश्वरा : पुत्रपौत्र सुतास्त्वेतेसुरभीगर्भसम्भवा : ॥ इतिमात्स्ये ५ ध्याय : ॥ शिवे । शम्भौ । ईशे ॥ रोदयत्यसुरान् । संहारकालेप्रजा : संहरन्रोदय तिवा । रुदिर्० । रोदेर्णिलुक्च तिरक्प्रत्ययेणिलुक् ॥ सर्वगतरुजांद्रा वणात्० रोदनहननाद्वारुद्र : । त थाचस्कान्दे । रुज : सर्वगता

यस्माद्द्रावयामि जगत्यहम्। रोदनं हन्मि यस्माच्च रुद्रस्तस्मादहं प्रिये ॥ यद्वा। रुतं वेदात्मकं शब्दं कल्पादौ ब्रह्मणे राति॰ददाति। रादाने। आतोनुपसर्गे क: ॥ यद्वा। रुता नादेन सकलं जगदिदं द्रावयति रञ्जयतीति॰नादात्मकत्वात् रुद्र: ॥ यद्वा। रुतानादेन॰प्रणवरूपेण॰वेदरूपेण वा॰ द्रावयति॰॰ इष्टमर्थमिति रुद्र:। यद्वा। रुतं संसारदु:खं तद्धेतुं वा द्रावयतीति रुद्र: । तदुक्तं रुतं दु:खमुतद्धेतुं विद्रावयति य: प्रभु: । रुद्र इत्युच्यते तस्माच्छिव: परमकारणमिति ॥ विष्णुरुद्रयोरभेदो यथा कौर्मे । सदैव देवो भगवान्महादेवो न संशय: । मन्यन्ते ये जगद्योनिं विभिन्नं विष्णुमीश्वरात् ॥ मोहादवेदनिष्ठाद्वा ते यान्ति नरकं नरा: । वेदानुवर्त्तिनं रुद्रं देवं नारायणं तथा । एकीभावेन पश्यन्ति मुक्तिभाजो भवन्ति ते । श्रीमद्भागवते देव्यादौ रुद्रो परिकीर्त्तितौ। यथा। ब्रह्मणा ब्रह्मणो वक्त्राद्रुदनार्थं मुद्भौ। मूलरुद्रस्यांशभूतो रुद्रनामा द्वितीयकं इति ॥ आदित्यपत्रवृक्षे ॥ एकादशाङ्के ॥ न॰ रौद्ररसे ॥

रुद्रकोटी । स्त्री॰ तीर्थविशेषे ॥

रुद्रगण: । पुं॰ शिवपार्षदसमूहे ॥

रुद्रचण्डी । स्त्री॰ रुद्रयामलोक्तदेवी माहात्म्ये ॥

रुद्रज: । पुं॰ पारदे ॥

रुद्रजटा। स्त्री॰ लताविशेषे। रौद्र्याम्। सौम्यायाम्। सुगन्धायाम्। सुपत्रायाम्। सुगन्धपत्रायाम्। पत्रवल्ल्याम् जटावल्ल्याम् ॥ अस्या गुणा:। कटुरसत्वम्॰ श्वासकासहृद्रोगभूतरक्षोनाशित्वञ्चेति ॥

रुद्रपत्नी । स्त्री॰ चण्ड्याम् । दुर्गायाम् ॥ अतस्याम् ॥

रुद्रप्रिया । स्त्री॰ हरीतक्याम् ॥ रुद्राण्याम् ॥

रुद्रवीणा । स्त्री॰ सङ्गीतनारायणोक्तवीणाविशेषे । रुद्र्याम् ॥

रुद्रसर्ग: । पुं॰ रुद्रकर्तृकभूतवेतालादिसृष्टौ ॥

रुद्रसावर्णि: । पुं॰ द्वादशेमनौ ॥

रुद्रसू: । स्त्री॰ एकादशपुत्रप्रसवाम् ॥

रुद्राक्रीड: । पुं॰ श्मशाने ॥

रुद्राक्ष: । पुं॰ स्वनामप्रसिद्धवृक्षे । तृणमेरौ । अमरे । पुष्पचामरे । अक्षफले । शिवाक्षे । सर्पाक्षे । भूतनाशने ॥ विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया । पूजितोपि महादेवो न स्यात्तस्य फलप्रद: ॥ विना मन्त्रेण यो धत्ते रुद्राक्षं भुवि मानव: । स याति नरकान्घोरान्यावदिन्द्राश्चतुर्दशेति पद्मपुराणम् ॥ रुद्राक्षान्कण्ठदेशे दशन ३२ परि

मितान्॰ मस्तकेविंशतिहे ४० षट् ६ षट् ६ कर्णप्रदेशे॰ करयुगलकृतेद्वादशे १२ द्वादशै १२ व । बाह्वोरिन्दो : कलाभि १६ र्नयनयुगकृतेत्वेक १ मेकं १ शिखायाम्॰ वक्षस्यष्टाधिकं य : कलयतिशतकं १०८ सस्वयंनीलकण्ठ : इतिदेवीभागवतम् ॥ मन्त्रेणेति द्विजेतरविषयम् । सर्वाश्रमाणांवर्णानांरुद्राक्षस्यचधारणम् । कर्त्तव्यंमन्त्रत : प्रोक्तंद्विजानांनान्यवर्णिनामितिनारायणवचनात् ॥

रुद्राणी । स्त्री॰ शिवायाम् । भवान्याम् । सर्वमङ्गलायाम् । रुद्रस्य स्त्री॰ इन्द्रवरुणभवसर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुगिति॰ ङीपानुकौ ॥

रुद्रावर्त्त : । पुं॰ तीर्थविशेषे ॥ अद्रिकूटस्थानस्थायांपरमेश्वर्याम् । रुद्रजटायाम् ॥

रुद्रास्पदम् । न॰ तीर्थविशेषे ॥

रुद्री । स्त्री॰ रुद्रवीणायां ॥

रुधिर : । पुं॰ अङ्गारके । कुजे । भौमे । मङ्गलग्रहे ॥ न॰कुङ्कुमे ॥ शरीरस्थरसभवधातौ । रक्ते । असृजे । त्वगजे । शोणिते । असृजि । लोहू॰इ॰भा॰ ॥ रुणद्धि॰रुध्यतेवा । रुधिर्॰ । इषिमदिमुदीतिकिरच् ॥

रुधिराख्यम् । न॰ मणिप्रभेदे । यथोक्तंगरुडपुराणे । हुतभुग्रूपमादाय दानवस्यथेप्सितम् । नर्मदायांनिचिक्षेपकिञ्चिद्दीनादिभूतले ॥ तत्रेन्द्रगोपकलितंशुकवक्त्रवर्णसंस्थानत : प्रकटपीलुसमानमात्रम् । नानाप्रकारविहितंरुधिराख्यरत्नमुद्भूयतस्त्रखलुसर्वसमानमेव ॥ मध्येन्दुपाण्डरमतीवविशुद्धवर्णंतचेन्द्रनीलसदृशंपटलंतुलेख्यात् । सैश्वर्यभृत्यजननंकथितंतदेवपक्वंसुतत्किलभवेत्सुरवज्रवर्णम् । इतिगारुडे ॥ ७८ ॥ अध्याय : ॥

रुधिरोद्गारी । पुं॰ षष्टिसंवत्सराणां मध्ये वत्सरविशेषे ॥ तत्फलंयथा । महिषीगोहिरण्यादिताम्रकांस्यादाशेषत : । तत्सर्वंदेविविक्रीयकर्त्तव्योधान्यसञ्चय : ॥ रक्तेसंवत्सरेदेविक्रूरबुद्धिर्नराधिप: । मानवा : क्रूरचेष्टाश्चसङ्ग्रामेनजयोभवेत् ॥ ५८ ॥

रुमण्वान् । पुं॰ लवणाचले ॥ लवणमस्त्यस्मिन् । मतुप् । आसन्दीवदिति॰लवणस्यरुमण्भाव : ॥ लवणाकरवाचकरुमन्शब्दस्यैतन्निपातनंनलोपाभावार्थंणत्वार्थञ्चेत्यपिस्मृतम् ॥

रुमा । पुं॰ लवणाकरे ॥

रुमा । स्त्री॰ सुग्रीवदारेषु ॥ विशिष्टलवणाकरे ॥

रुम : । पुं० रमणे ॥ अरुणे । रम्यतेऽस्मिन् । रमक्रीडायाम् । चकिरम्योरुच्चोपधाया इतिरक् ॥

रुरु : । पुं० मृगविशेषे । हरिणजात्यन्तरे । भारशृङ्गाख्ये ॥ रुरुर्महान् कृष्णसार इतियादव : ॥ व्याघ्रे ॥ यथा । गोगोपीगोपवीतोरुरुनखविलसत्कण्ठभूषश्चिरं वइति ॥ दैत्यभेदे ॥ रौति । रुशब्दे । जम्बादयश्चेतिसाधुः ॥ रुशातिभ्यांक्रुन्वा ॥

रुवु : । ) पुं०
रुवुक : । ) पुं० एरण्डे ॥ इतिरत्नमाला । रक्तैरण्डे ॥ इतिराजनिर्घण्ट : ॥

रुशन् । त्रि० निन्द्यार्थायांवाचि ॥ रुशति । रुशहिंसायामितालव्यान्तस्तौदादिकस्तस्माच्छतृप्रत्यय: । रुशन् शब्द : । रुशतीहिंसा । रुशद्वचनम् ॥

रुशती । स्त्री० निन्द्यार्थायांवाचि । शत्रन्तान् ङीप् । आच्छीनद्योरितिनुम् विकल्पान्नुमभाव : । स्त्रियांवाहल्यं गास्यदर्शनम् ॥

रुट् । स्त्री० क्रोधे० ॥ रुशहिंसायाम् । सम्पदादित्वात्क्विप् ॥

रुषा । स्त्री० अमर्षे । कोपे । मन्यौ । क्रोधे ॥ क्विबन्ताद्गुरिमतेरटाप् ॥

रुषित : । त्रि० रुष्टे । क्रोधयुक्ते ॥ रुष्यतेस्म । रुषरोषे । क्त : । रुष्यम् त्वरेतिपक्षे ०इड्विकल्प : ।

रुष्ट : । त्रि० रुषिते ॥ शिवेरुष्टे गुरुस्त्राता गुरौरुष्टे नकश्चन । रुष्यतेस्म । रुष० । क्त : । रुष्यम् त्वरसङ्घुषास्वनामितिपक्षेइडभाव : ॥

रुह : । त्रि० जाते ॥ आरूढे ॥ रुहे: कर्त्तरिक : ॥

रुहकम् । न० छिद्रे ॥

रुहा । स्त्री० दूर्वायाम् ॥ छिन्नापिरोहति । रुहबीजजन्मनिप्रादुर्भावे इगुपधज्ञाप्रीकिर : क : । टाप् ॥ महासमङ्गायाम् ॥

रुहिरुहिका । स्त्री० उत्कण्ठायाम् ॥ इतिपुराणम् ॥

रुह्वा । पुं० वृक्षे ॥ रोहति । रुह० शीङ्क्रुशिरुहीत्यादिना० क्वनिप् ॥

रूक्ष: । पुं० वृक्षे ॥ वरकाटणि ॥ त्रि० अप्रेमणि । परुषे । अचिक्कणे । अस्निग्धे । रूखा० इतिभाषायाम् ॥ रूक्षयति । रूक्षपारुष्ये । पचाद्यच् ॥

रूक्षगन्धक : । पुं० गुग्गुलौ ॥

रूक्षणात्मिका । स्त्री० लङ्काधान्ये ॥

रूक्षदर्भ : । पुं० हरिदर्भे ॥

रूक्षपत्र : । पुं० शाखोटवृक्षे ॥

रूक्षप्रिय : । पुं० ऋषभौषधे ॥

रूक्षस्वादुफल : । पुं० धन्वनवृक्षे ॥

रूक्षा । स्त्री० दन्तीवृक्षे ॥ क्रूरायाम् ॥ अस्निग्धायाम् ॥

रूढ : । पुं० प्रकृतिप्रत्ययार्थमनपेक्ष्यशाब्दबोधजनकेशब्दे ॥ यथा। मुख्योलाक्षणिकोगौण : शब्द : स्यादौपचारिक : । यौगिकोयोगरूढो वारूढोवामुख्यएवस : ॥ इतिशाब्दिका : ॥ "अपिच : रूढमालक्षयति० विभजतेच । रूढं सङ्केतवन्नाम सैवसंज्ञेतिकीर्त्यते। नैमित्तिकीपारिभाषिक्यौपाधिक्यपितद्भिदा ॥ यन्नामयादृशार्थेसङ्केतितमेव० नतुयौगिकमपि० तद्रूढम् । योगरूढंत्वपङ्कजादिकंनतथा।रूढानामेवचसंज्ञापदेनाभिलप्यते । नतुरूढादिवत्संज्ञानामन्योऽवान्तरभेद : । येनविभागव्याघात: स्यात् । संज्ञायास्त्रयो भेदा नैमित्तिकीपारिभाषिकी० औपाधिकीचेति । पाचकपाठकादयस्तुनसंज्ञा : सङ्केतशून्यत्वात् ॥ येतुरूढस्यनाम्नश्चतुर्विधत्वमाहुस्तन्मतमुपन्यस्यति । जातिद्रव्यगुणस्पन्दै र्धर्मै : सङ्केतवत्तया । जातिशब्दादिभेदेनचातुर्विध्यं परेजगु : ॥ गोगवयादीनांगोत्वादिजात्या । पत्वाश्वादीनांलाङ्गलधनादिद्रव्येण । धन्यपिशुनादीनांपुण्यद्वेषादिगुणेन । चलचपलादीनाञ्चशब्दानां कर्म्मणाऽवच्छिन्नशक्तिमत्त्वाच्चातुर्विध्यमेवरूढानामिति। यदुक्तं दण्डाचार्यै : । शब्दैरेवप्रतीयन्ते जाति-

द्रव्यगुणक्रिया : । चातुर्विध्यादमीषान्तुशब्दउक्तश्चतुर्विधइति ॥ तदेतज्जडमूर्खादीनामन्यशून्यादीनाञ्चशब्दानामपरिग्रहापत्त्यापरित्यक्तमस्माभि : ॥ नैमित्तिकसंज्ञांलक्षयति। जात्यवच्छिन्नसङ्केतवती नैमित्तिकीमता । जातिमात्रेहिस ङ्केतादृव्यक्तेर्भानंसुदुष्करम्॥ यन्नामजात्यवच्छिन्नसङ्केतवत्सानैमित्तिकीसंज्ञा । यथागोचैत्रादि : । साहिगोत्वचैत्रादिजात्यवच्छिन्नमेवगवादिकमभिधत्ते नतुगोत्वादिजातिमात्रम् ।गोपदंगोत्वेसङ्केतितमित्याकारकग्रहद्वारामानयेत्यादौ गोत्वादिनागवादेरन्वयानुपपत्ते : एकशक्तत्वग्रहस्यान्यानुभावकत्वेऽतिप्रसङ्गात् ॥ पारिभाषिकीमौपाधिकीञ्चसंज्ञांक्रमेणलक्षयति। उभयावृत्तिधर्मेणसंज्ञास्यात्पारिभाषिकी। औपाधिकीत्वनुगतोपाधिनायाप्रवर्त्तते ॥ उभयावृत्तिधर्मावच्छिन्नसङ्केतवतीसंज्ञापारिभाषिकी । यथाकाशडित्यादि:॥ याचानुगतोपाध्यवच्छिन्नसङ्केतवतीसंज्ञासात्वौपाधिकी । यथाभूतद्रुतादि । साहिसचेतनमूर्त्तविशेषगुणवत्त्ववार्त्ताहारकत्वाद्यनुगतोपाधिपुरस्कारेणैवप्रवर्त्तते । इतिशब्दशक्तिप्रकाशिकायां० जाते ॥ प्रसिद्ध ॥

रूपम्

रूपकम्

रुहेर्गत्यर्थे तिक्तः । ढलुधसुष्टुत्वढ लोपदीर्घः ॥
रूढपद् : । त्रि० बहमूले ।
रूढि : । स्त्री० शिष्टप्रयोगे ॥ प्रसिद्धौ ॥ अनादिव्यवहारसिद्धेसम्बन्धवि शेषे ॥ मुख्यशब्दवृत्तिभेदे ॥ सा चस्वरूपेणजात्यागुणेन वानिर्देशा ईवस्तुनिसंज्ञासंज्ञिसङ्केतेनप्रव र्त्तते । यथा । डित्थ : डवित्थ : गौ:शुक्लइति ॥ रूढशब्दनिष्ठश क्तौ ॥
रूपम् । न० वाच्याकारे । स्वभावे ॥ सौन्दर्ये । मनोहराकृतौ । तल्लल क्षणंयथा । अङ्गान्यभूषितान्येव केनचिद्भूषणादिना । येनभूषितव द्भान्तितद्रूपमितिकथ्यते ॥ इत्यु त्पलनीलमणि । : नाणके । प्रश स्ते ॥ पशौ ॥ शब्दे ॥ ग्रन्थावृत्तौ नाटकादौ ॥ आकारे ॥ श्लोके ॥ अवकाशादिद्विपदान्तेनानाविकार विशेषे ॥ रूपन्तुषोडशविधंमोक्ष धर्मेप्रकीर्तितम् । यथा । ह्रस्वम् १ दीर्घम् २ स्थूलम् ३ चतुरस्र म् ४ वृत्तम् ५ शुक्लम् ६ कृष्णम् ७ नीलारुणम् ८ रक्तम् ९ पीतम् १० कठिनम् ११ चिक्कणम् १२ श्लक्ष्णम् १३ पिच्छलम् १४ मृदु १५ दारुण १६ मिति ॥ चक्षुर्मा त्रग्राह्ये गुणे ॥ तच्चशुक्लनीलपीत रक्तहरितकपिशचित्रभेदात्सप्तवि धम् । पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यांसप्तविधम् । अभास्वरंशु क्लंजले । शुक्लंभास्वरंतेजसि ॥ मा सामाने ०। ॥ त्रि० उत्तरपदस्थि त्याख्यसदृशे ॥ यथापितृरूपःपुत्र:मा तृरूपाकन्या ॥ प्रापके ॥ रोपयतिवि मोहयति । रूपविमोहने । अच् ॥ यद्वा । रूप्यतेऽनेन । खष्पशिल्पशष्पे तिसाधु ॥ रौतिवा । रुशब्दे । खष्पशिल्पेतिप : रौतेर्दीर्घश्च ॥ अतिरूपन्तुनिन्दितम् ॥
रूपकम् । न० नाटके ॥ मूर्त्ते ॥ रूप्ये ॥ काव्यालङ्कारे ॥ तल्लक्षणादि यथा । विषय्यभेदताद्रूप्यरञ्जनंवि षयस्ययत् । रूपकंतत्त्रिधाधिक्य न्यूनत्वानुभयोक्तिभि : ॥ अयंहि धूर्जटि : साक्षाद्येनदग्धा : पुर : क्षणात् अयमास्तेविनाशम्भुस्तार्त्ती यीकंविलोचनम् ॥ शम्भुर्विश्वमवत्वद्य स्वीकृत्यसमदृष्टिताम् । अस्यामुखेन्दु नालव्येनेत्रामन्दे किमिन्दुना ॥ सा ध्वीयमपरालक्ष्मीरसुधासागरोदिता । अयंकलङ्किनश्चन्द्रान्मुखचन्द्रोति रिच्यते ॥ सङ्ख्याविशेषे ॥ यथा । सद्वालीप्रोच्यतेगुञ्जासातिस्रोरू पकंभवेत् । रूपकैर्दशभि : प्रोक्त : कलञ्जोनामनामत : ॥ त्रि० । मू- र्त्तिमति ॥ पुं० । इठादिसप्तसु ॥

तैयथा । इठ :प्रौढोऽयखर्परोविभ
वस्तुरक्रम :। निशारुक : प्रतिता
ल : कथिता :सप्तरूपकोद्भतिदामो
दर :॥

रूपकभेद: । पुं॰ अभिनेयप्रकारे ॥

रूपतत्त्वम् । न॰ शीले ॥

रूपधारी । त्रि॰ सौन्दर्यविशिष्टे ॥

रूपधेयम् । न॰ रूपे ॥ रूपमेव ।भाग
रूपनामभ्योधेय :॥

रूपनाशन : । पुं॰ पेचके

रूपवान् । त्रि॰ आकारविशिष्टे ॥ सौं
दर्ययुक्ते ॥

रूपस्कन्ध : । पुं॰ विषयप्रपञ्चे । वास
नामयचित्तेननिरूप्यमाणे पुशब्दस्प
र्शादिषु । पञ्चेन्द्रियेषुच ॥ रूप्यन्ते
एभिर्वाविषयाइतिकर्मकरणव्युत्प
त्तिभ्यांसविषयाणीन्द्रियाणिरूपस्क
न्ध :। रूप्यमाणपृथिव्यादीनांबाह्य
त्वेपिदेहस्थत्वादिन्द्रियसम्बन्धाच्चा
ध्यात्मिकत्वम् ॥

रूपाजीवा ।स्त्री॰ वारस्त्रियाम् ।वेश्या
याम् ॥ रूपमाजीवोस्या :॥

रूपामाली । स्त्री॰वर्णवृत्तविशेषे॥ य
था।चत्वारोस्यांकर्णाआयन्तेछन्दस्ये
वंहारंकुर्वन्ते ।भव्यावर्णापादेराज
न्ते रूपामालीवृत्तंतत्कान्तं॥ यथा
। इत्वाचण्डंमुण्डंत्वान्नीचण्डंसाचण्डी
व : कल्याणं कुर्यात् । देवेन्द्राद्या:
प्रीत्यासम्प्राप्ता :संसेवन्ते तत्पादा
म्भोजम् ॥

रूपास्त्र : । पुं॰ कामदेवे ॥ रूपमस्त्रम
स्य ॥

रूपिका । स्त्री॰ श्वेतार्कवृक्षे ॥ चोड्र
पुष्पे ॥

रूपी । त्रि॰ रूपवति ॥ मूर्तिमति ॥

रूपेश्वरी । स्त्री॰ देवीविशेषे ॥

रूप्यम् । न॰ आहतरजते ॥ आहतहे
मनि ॥ तारे । चन्द्रहासे । रजते
चन्द्रलोहके । चांदी॰इ॰भा॰ ॥
अथलक्षणंगुणादयश्चयथा । गुरु
स्निग्धंमृदुश्वेतंदाहच्छेदघनक्षमम्
। स्वर्णाढ्यंचन्द्रवत्स्वच्छंरूप्यंनवगु
णंशुभम् ॥ मारणाययोग्यम् ॥
कठिनंकृत्रिमंरूक्षंरक्तंपीतंदलंल
घु । दाहच्छेदघनैर्नष्टंरूप्यंदुष्टंप्र
कीर्तितम् ॥ मारणायायोग्यम्रू
प्यशीतंकषायाम्लंस्वादुपाकरसंसर
म् ।वयस:स्थापनंस्निग्धंलेखनंवा
तपित्तजित् ॥ प्रमेहादिकरोगांश्च
नाशयत्यचिराद्ध्रुवम् ॥ तारंशरी
रस्यकरोतितापंविड्बन्धनंयच्छति
शुक्रनाशम् । वीर्यंबलंहन्तितनोश्च
पुष्टिंमहागदान्पोषयतिह्यशुद्धम्
॥अथशोधनविधि: । पत्तलीकृत्यप
त्राणितारस्याग्नौप्रतापयेत् । निषि
ञ्चेत्तप्ततप्तानितैलेतक्रे चकाञ्जिके
॥गोमूत्रेचकुलत्थानांकषायेचत्रिधा
त्रिधा । एवंरजतपत्राणांविशुद्धि:स

म्प्रजायते ॥ अथास्यमारणविधिः । भागैकंतालकंमर्द्यं याममम्लेनकेन चित् । तेनभागचयंतारपचाणिप-रिलेपयेत् ॥धृत्वामूषापुटेरुद्ध्वापुटे त्रिंशद्वनोपलैः । समुद्धृत्यपुन स्तालंदत्वारुद्ध्वापुटेपचेत् ॥ एवंच तुर्द्दशपुटैस्तारभस्मप्रजायते ॥ अन्योऽपिप्रकारोयथा । स्नुहीचीरेणस म्पिष्टंमाचिकंतेनलेपयेत् । तालक स्यप्रकारेणतारपचाणिबुद्धिमान् । पुटेच्चतुर्द्दशपुटैस्तारभस्मप्रजाय-यते ॥ इति ॥ अथरूप्यकरणम् । मध्वाज्यंगुडताम्रंचकरेणमाचि-कंरसम् । धमनाच्चभवेद्दिव्यंमुवर्णं कारणंशृणु ॥ इतिगारुडे १८८ अध्यायः ॥ कार्षापणे ॥ त्रि॰ रूप वति । सुन्दरे ॥ आहतं॰ प्रशस्तं वा॰ रूपमस्यास्ति । रूपादाहतप्र शंसयोरितियत् ॥ रूप्यते । रूप रूपक्रियायाम् । ख्यन्तः ॥ अच॰ वा ॥

रूप्यकः । पुं॰ लङ्कादिद्वीपवत्समुद्रा न्तर्वर्त्तिनिद्वीपविशेषे ॥

रूप्यमाषकः । पुं॰ कृष्णलाद्वयमि तेरूप्यमाने ॥ द्विकृष्णलेसमधृतेविज्ञे योरूप्यमाषकः ॥

रूप्यशाला । स्त्री॰ टकसाल॰ इति प्रसिद्धे रजतादिमुद्रागृहे ॥

रूप्याध्यक्षः । पुं॰ नैष्किके ॥ रूप्यस्य अध्यक्षः ॥

रूबुकः । पुं॰ एरण्डे ॥

रूमः । पुं॰ शकदेशे । यथा । योरू मदेशाधिपतिंशकेश्वरंजित्वागृही-त्वोज्जयिनींमहाहवे । आनीयसम् भ्राम्यमुमोचतन्त्वहोश्रीविक्रमार्कः समसह्यविक्रमः ॥

रूषकः । पुं॰ वासके ॥

रूषणम् । न॰ मिश्रणे ॥ रूष॰ । ल्युट् ॥

रूषितः । त्रि॰ गुण्ठिते । गुण्डिते ॥ रूष्यतेस्म । रूषिर्वेष्टनार्थोऽपठि तोऽपि॰ भ्वादौद्रष्टव्योभ्वादिरवृत्कृत त्वात् । क्तः । रूक्षीकृते ॥ लिप्ते ॥ लग्ने । लग॰ इ॰ भा॰ ॥ रूष त॰ क॰ विस्फुरणे॰ इतिकविक ल्पद्रुमः । अदरूपत् ॥

रे । अ॰ सम्बोधनविशेषे ॥ यथा । सम्बोधनेङ्गभोः पाट् प्याटहेहैहहो ऽरेरेपिचेतिहेमचन्द्रः ॥ अनादरे ॥

रेकः । पुं॰ शङ्कायाम् ॥ नीचे । हीने ॥ विरेचने ॥ भेके । गूढव-चसि ॥

रेका । स्त्री॰ सन्देहे ॥

रेक्णः । न॰ सुवर्णे । स्वर्णे । रिणक्ति । रिचिर् विरेचने । रिचेर्धनेघिच्चे त्य ऽसुन् । चात्प्रत्ययस्यनुट् । घित्वा त्कुत्वम् ।

रेखा । स्त्री॰ अल्पके ॥ छद्मनि ॥

आभोगे, उल्लेखे ॥ उल्लेखस्त्वत्र दण्डाकारलिपिविशेषः। डंडी र० लकीर० रेख० इ० भा० ॥ राज्याम् ॥ लिख्यते। लिखअक्षरविन्यासे। भिदादित्वादङ् रलयोरैकत्वम् ॥

रेखाभूमिः। स्त्री० वारप्रवृत्तिस्थले। लङ्कासुमेर्वोर्मध्यसूत्रगतदेशे ॥ यथा। यल्लङ्कोज्जयिनीपुरोपरिकुरुक्षेत्रादिदेशान्स्पृशन्सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः। आदौ प्रागुदयोऽपरत्र विषये पश्चाद्धि रेखोदयात्स्यात्तस्मात्क्रियते तदन्तरभुवं खेटे स्फुटं स्वं फलमिति सिद्धान्तशिरोमणिः ॥

रेचकः। पुं० यवक्षारे ॥ जयपालवृक्षे ॥ तिलकवृक्षे ॥ क्रीडार्थजलनिक्षेपयन्त्रे। पिचकारी० इ० भा० प्र० ॥ प्राणवायोः शनैर्वामनासापुटाद्दक्षिणनासापुटाद्वा० सव्यापसव्यन्यायेन बहिर्निःसारणे ॥ मुच्यमानस्तु रेचकइति याज्ञवल्क्यः। श्वासइति शेषः ॥ अनात्मोपेक्षायाम् ॥ निषेधनं प्रपंचस्य रेचकाख्यः समीरणः ॥ न० कङ्कुष्ठमृत्तिकायाम् ॥

रेचनम्। न० मलभेदने। प्रस्कन्दने। विरेके। विरेचने ॥

रेचनकः। पुं० कम्पिल्लके ॥

रेचना। स्त्री० कांपिल्ले ॥

रेचनी। स्त्री० त्रिवृतायाम् ॥ दन्त्याम् ॥ गुन्द्रायाम् ॥ रोचनकायाम् ॥ रिचिर्० ल्युट्। ङीप्। कालाञ्जन्याम् ॥ काम्पिल्ले ॥

रेचितम्। न० उत्तेजिताख्ये। यथा। उत्तेजितं मध्यवेगं योजनं श्वयवलायेति ॥ रेचनम्। रिचिर्०। क्तः। त्रि० रिक्तीकृते ॥ अश्वगतिविशेषे ॥

रेची। स्त्री० अङ्कोठे। काम्पिल्लके ॥

रेजः। त्रि० तेजिते ॥ रेजति। रेजते वा। रेजृ दीप्तौ। पचाद्यच् ॥

रेणुः। पुं० पर्पटे ॥ रेणुकायाम् ॥ पांशौ। पुं० स्त्री० धूलौ ॥ दीपखट्वानरच्छायाच्छिन्नकेशनखादिकम्। अजमार्जाररेणुश्च हन्ति पुण्यं पुराकृतम्० इ० का० लो०। रिणाति० रीयते वा। रीगतिरेषणयोः। अजिवृरीभ्यो निच्चेति णुः ॥

रेणुकम्। न० कङ्कुष्ठभेदे ॥

रेणुका। स्त्री० मरिचाक्रान्तसुगन्धिद्रव्यविशेषे। हिंजायाम्। हरेणौ। भस्मगन्धिन्यामौषधौ ॥ अस्या गुणाः रेणुका कटुका पाकेतिक्तानुष्णा कटुर्लघुः। पित्तलादीपनी

मेध्यापावनीगर्भपातनी ॥ बलास वातवैकव्यतट्‌कण्डूविषदाहनुत् ॥ परशुराममातरि ॥ रेणुरस्यास्ति । व्रीह्यादित्वाइन् । कुसुमकान्ता त्क : ॥ रेणुरिवबा । संज्ञायामिति कन् ॥
रेणुकातीर्थम् । न० तीर्थविशेषे ॥
रेणुकासुत : । पुं० परशुरामे ॥
रेणुरूषित : । पुं० गर्दभे ॥ त्रि० धूलिसञ्चिते ॥
रेणुवास : । पुं० भ्रमरे ॥
रेणुसार : । पुं० कर्पूरे ॥
रेणुसारक : । पुं० कर्पूरे ॥
रेतजा । स्त्री० बालुकायाम् ॥
रेतसम् । न० वीर्ये । शुक्रे ॥
रेत : । न० वीर्ये । शुक्रे ॥ अप्सु रेत : पातनिषेधोयथा , नवामह स्तेनोद्दत्यपिवेद्वक्रेणवाजलम् । नोत्तरेदनुपस्पृश्यनाप्सु रेत : समुत्सृजेत् ॥ पारदे ॥ रिणाति । री गतिरेषणयो : । स्रुरीभ्यांतुट्‌चेत्य सुन् ॥ पुं० । कार्ये ॥ अथातोरेतस : सृष्टिरित्यादौरेत : शब्दस्य कार्यपरत्वेनव्याख्यानात् ॥
रेत्नम् । न० रेतसि ॥ पीयूषे ॥ पटवासे ॥ सूतके । पारदे ॥
रेप : । त्रि० निन्दिते । विगर्हिते ॥ क्रूरे ॥ री० बाहुलकात्प : ॥
रेपा : । त्रि० अधमे ॥ क्रूरे ॥ कृपणे ॥ रपति । रपव्यक्तायांवाचि । रपि रतएच्चेत्यसुन् ॥
रेफ : । पुं० रवर्णे ॥ रादिफ : ॥ रिफयते० रिफतिवा । रिफ घञ् । अ० पचाद्यच्वा । रागे ॥ त्रि० अवद्ये । कुत्सिते ॥ रिफति । रिफकत्थनयुद्धनिन्दाहिंसादानेषु । अकर्त्तरिचेतिघञ् ॥ यद्वा । रिफति । अवद्यावमाधमेतिअप्रत्ययान्तोनिपात : ॥
रेभणम् । न० हम्भायाम् । गोध्वनौ ॥
रेरिहाण : । पुं० वृषाङ्के । ब्रह्मदेवे । सदाशिवे ॥ अम्बरे ॥
रेवट : । पुं० शूकरे ॥ वेणौ ॥ वातुले ॥ विषवैद्ये ॥ न० दक्षिणावर्त्तशङ्खे ॥
रेवत : । पुं० जम्बीरे ॥ आरग्वधे ॥ रेवतीपितरि० नृपतिविशेषे । बलरामश्वशुरे ॥
रेवतकम् । न० पारेवते ॥
रेवती । स्त्री० ककुद्मिकन्यायाम् । बलदेवपत्न्याम् ॥ मातृभेदे ॥ अन्त्यनक्षत्रे ॥ अस्मिन्नक्षत्रेजातस्यफलंयथा । चारुशीलविभवोजितेन्द्रिय : सत्कुले समभवन्महामना : । मानवोनतुभवेन्महीपती रेवतीभवतियस्यजन्मभम् ॥ वाल

ग्रहविशेषे ॥ रैवतमनुमातरि ॥ धनी । दुर्गायाम् ॥ रेवतीनक्षत्रे ० इतिगौरादिषुपाठान्ङीष् ॥ रेवत्यांजातायाम् ॥ चित्रारेवतीतिनक्षत्राणोलुक्॥ पिप्पल्यादित्वान्ङीष् ॥

रेवत्य:। स्त्री० सामविशेषे ॥ नित्यबहुवचनान्तोयरेवतीशब्द: ॥

रेवतीजानि:। पुं० रेवतीरमणे ॥ रेवतीजायायस्य । जायायानिङितिसमासान्तोनिङादेश:। लोपोव्योर्वलीतियलोप: ॥

रेवतीभव:। पुं० शनैश्चरे ॥

रेवतीरमण:। पुं० रामे । हलायुधे । बलदेवे ॥ रेवत्यारमण: ॥

रेवतीश:। पुं० बलभद्रे । रेवतीरमणे ॥

रेवन्त:। पुं० सूर्यात्मजविशेषे ॥ गुह्यकाधिपतौ ॥

रेवन्तप्रसू:। स्त्री० संज्ञायाम् । सूर्यपत्न्याम् ॥

रेवा। स्त्री० नदीविशेषे ॥ नर्मदायाम् । मेकलकन्यायाम् ॥ रत्याम् । मन्मथयोषिति ॥ नीलीवृक्षे ॥ दुर्गायाम् ॥ रेवते । रेवृप्लवगतौ । पचाद्यच् । टाप् ॥

रेषणम्। न० वृकशब्दे ॥ हिंसायाम् । रिषहिंसायाम् । ल्युट् ॥

रै। अ० दाने ॥ अनादरे ॥

रा:। पुं० स्वर्णे ॥ वित्ते । धने ॥ जलदे ॥ ध्वनौ । शब्दे ॥ रातिसुखम्० रायतेवा । रादाने । रातेर्डै: ॥

रैक्क:। पुं० संवर्गविद्याविदिमुनिविशेषे ॥

रैणुकेय:। पुं० परशुरामे ॥ रेणुकायाअपत्यम् । स्त्रीभ्योढक् ॥

रैभ्य:। पुं० ऋषिविशेषे ॥ रेभस्य गोत्राऽपत्यम् । गर्गादित्वाद्यञ् ॥

रैवत:। पुं० सुवर्णालौ ॥ शैलभेदे ॥ शङ्करे ॥ जयन्ते ॥ दैत्यविशेषे ॥ वर्त्तमानकल्पीयेपंचमेमनौ ॥

रैवतक:। पुं० द्वारकासमीपस्थेपर्वतविशेषे । उज्जयन्ते ॥ श्रुतिपुराणप्रसिद्धपरमहंसे ॥ न० पारेवतवृक्षे ॥

रोक:। पुं० क्रयभेदे ॥ दीप्तौ ॥ न० नावि ॥ चरे ॥ विले । छिद्रे ॥ त्रि० चंचले ॥ रोचतेऽत्र। रुच दीप्तौ । हलश्चेतिघञ् ॥ निष्ठासेट्त्वान्न्यङ्क्वादित्वात्कुत्वम् ॥

रोग:। पुं० कुष्ठौषधौ । दोषवैषम्ये । व्याधौ आमये । गदे ॥ दुष्कर्मजानृणांरोगायान्तिचैवक्रमात्क्षमम् । जपै: सुरार्चनैर्होमैर्दानैस्तेषांशमोभवेत् इतिकर्मविपाक: ॥ रोजनम् । भावेघञ् । रुजतिवा । रुजोभङ्गे । पदरुजेतिघञ् ॥

रुज्यतेपीड्यतेदेहोऽनेनेतिवारोग:॥

रोगघ्नम्। न० औषधे। त्रि० रोगनाशके॥

रोगभू:। स्त्री० शरीरे॥

रोगराज:। पुं० पापरोगे। राजयक्ष्मणि॥ रोगाणांराजे। टच्॥

रोगलक्षणम्। न० निदाने॥

रोगशान्तक:। पुं० वैद्ये॥

रोगशिला। स्त्री० मन:शिलायाम्॥

रोगशिल्पी पुं० शरालु० इ० गौ० दे० भा० प्र० वृक्षविशेषे॥

रोगश्रेष्ठ:। पुं० ज्वरे॥ रोगेषुश्रेष्ठ:॥

रोगहम्। न० औषधे। भैषज्ये॥

रोगहारी। पुं० चिकित्सके। वैद्ये॥ रोगंहरतितच्छील:। सुपीतिणिनि:॥ त्रि० रोगनाशके॥

रोगितरु:। पुं० अशोकवृक्षे॥

रोगी। त्रि० रोगयुक्ते। व्याधिते। आतुरे। अभ्यमिते। रोगार्त्ते॥ रोगमस्यास्ति। इनि:॥ अथवच्चिकित्सार्थंपरीक्षांरोगिणस्त्वह॥ तत्राहवाग्भट:। दर्शनस्पर्शनप्रश्नै: परीक्षेतथरोगिणम्। आयुरादिदृशास्पर्शाच्छीतादे: प्रश्नतोऽपरम्॥ आयुरारोग्यचादिशब्दात् साध्यत्वाऽसाध्यत्वादिबोध्यम्। दृशा०दर्शनेन। चक्षसम्पदादिभ्यश्चे तिभावेक्विप्। स्पर्शात्० शीतादे:। शीतोष्णमृदुकठिनत्वादिनापरीक्षणाच्च। प्रश्नत:। उदरलाघवगौरवतृषाऽतृषा०बुभुक्षाऽबुभुक्षाबलाऽबलादिना। मिथ्यादृष्टाविकाराश्चिदुराख्यातास्तथैवच। तथादुष्परिपृष्टाश्चमोहयेयुश्चिकित्सकान्॥ तत्रदर्शनंनेत्रजिह्वामूत्रादे: कर्त्तव्यम्॥

रोगिवल्लभम्। न० भैषज्ये। औषधे। त्रि० रोगिप्रिये॥

रोग्यम्। त्रि० अपथ्ये। अहिते॥ रोगायहितम्। यत्॥ रोगसम्बन्धिनि॥

रोचक:। पुं० बुभुक्षायाम्। अशनायाम्। जिघत्सायाम्। कदल्याम्॥ राजपलाण्डौ॥ अन्ददंशे॥ ग्रन्थिपर्णभेदे। निशाचरे। धनहरे। कितवे। गणहासके। नैपालदेशभरिडउर०इतिप्रसिद्धे॥ अस्यगुणा:। रोचकोमधुरस्तिक्त: कटु, पाक: कटु,र्लघु:। तीक्ष्णोहृद्योहिमोहन्तिकुष्ठकण्डूकफानिलान्॥ रक्षोऽश्रोस्वेदमेदोस्त्रज्वरगंधविषव्रणान्। त्रि०रुचिकारके॥

रोचन:। पुं० कूटशाल्मलौ॥ श्वेतशिग्रौ॥ पलाण्डौ॥ आरग्वधे॥ करञ्जे॥ अङ्कोठे॥ दाडिमे॥ त्रि० रोचके। रुचिकरे॥ रोचते। रुच दीप्तौ। अनुदात्तेतश्चेतियुच्॥

रोचयति । नन्द्यादित्वाल्ल्युर्वा बहुलमन्यत्रापीतियुज्वा ॥

रोचनकः । पुं॰ जम्बीरे ॥

रोचनफलः । पुं॰ बीजपूरके ॥

रोचनफला । स्त्री॰ चिर्भिटायाम् ॥

रोचना । स्त्री॰ रक्तकह्लारे ॥ गोपित्ते ॥ वरयोषिति ॥ रोचते । रुच॰ । बहुलमन्यत्रापीतियुच् । टाप् ॥

रोचनिका । स्त्री॰ वंशरोचनायाम् ॥ शुण्डारोचन्याम् ॥

रोचनी । स्त्री॰ आमलक्याम् ॥ गोरोचनायाम् ॥ मनःशिलायाम् ॥ श्वेतत्रिवृतायाम् ॥ काम्पिल्यौषधौ ॥ रोचते । रुचदीप्तावभिप्रीतौ च । कृत्यल्युटइतिल्युट् ॥

रोचमानः । पुं॰ अश्वस्यग्रीवास्थरोमावर्त्ते ॥ यथा । ग्रीवस्थोहृदयावर्त्तोरोचमानोगलोद्भव इतिचिन्तामणिः ॥ अपिच । कण्ठजोरोचमानस्तुस्वामिसौभाग्यवर्द्धनइतिवैजयन्ती ॥ त्रि॰ अत्यन्तदीप्यमाने ॥ रोचते । रुच॰ । लटः शानच् । आनेमुक् ॥

रोचितः । त्रि॰ प्रकाशिते ॥

रोची । त्रि॰ रोचिष्णौ ॥

रोचिष्णुः । त्रि॰ अलङ्कारादिनाशोभमाने । विभ्राजि । भ्राजिष्णौ ॥ रोचतेतच्छीलः । रुच॰ । अलङ्कृञिति॰ इष्णुच् ॥

रोचिः । न॰ शोचिषि । त्विषि । प्रभायाम् । दीप्तौ ॥ रोचतेऽनेन । रुच॰ । बाहुलकादिसिः ॥

रोची । स्त्री॰ हिलमोचिकायाम् ॥

रोच्यः । त्रि॰ प्रकाश्ये ॥ प्रीतिविषये ॥

रोटिका । स्त्री॰ रोटी॰ इतिभाषा प्रसिद्धेपिष्टकविशेषे ॥ अस्याः करणप्रकारोयथा । शुष्कगोधूमचूर्णेनकिञ्चित्पुष्टाश्चपोलिकाम् । तप्तकेस्वेदयेत्कृत्वा भूयोङ्गारेपितांपचेत् । सिद्धैषारोटिकाप्रोक्तागुणानस्याः प्रचक्ष्महे । रोटिकाबलकृद्रुच्यावृंहणीधातुवर्द्धनी ॥ वातघ्नीकफकृद्गुर्वीदीप्ताग्नीनांप्रपूजिता । यवजारोटिकारुच्यामधुराविशदालघुः । मलशुक्रानिलकरीबल्याश्लेष्मकफामयान् ॥ पीनसश्वासकासांश्चमेदोमेहगलामयान् ॥

रोडः । पुं॰ चोदे ॥ त्रि॰ तृप्ते ॥

रोदनम् । न॰ क्रन्दने । शोकादिनाश्रुपतने । रोना॰ इ॰ भा॰ ॥ अस्रे । अश्रुणि । आंसू॰ इ॰ भा॰ रुद्यते । रुदिर्अश्रुविमोचने । बाहुलकात्कर्म्मणिल्युट् । तस्यशुभाशुभंयथा । अनश्रुस्निग्धरुदितमदीनंशुभदंनृणाम् । प्रचुराश्रुदीनंरूक्षञ्चरुदितंनसुखावहम् ।

॥ रोदनाश्रुपतनेनमृतानांनरकं यथा ॥ ज्ञानिनोमारुदन्त्वेयमारोदी : पुत्रसाम्प्रतम् ॥ रोदनाश्रुप्रपतनान्मृतानांनरकं ध्रुवम् ।' मृतम् हिश्यरोदननिषेधोयथा ॥ श्लेष्माश्रुबान्धवैर्मुक्तं प्रेतोभुङ्क्तेयतोऽवश : । यतोनरोदितव्यं हिक्रिया कार्याविधानत : इति ॥

रोदनिका । स्त्री॰ यवासे ॥

रोदनी । स्त्री॰ कच्छुरायाम् । दुरालभायाम् । यवासे ॥ रोदयति । रुदिर्॰ । ल्युट् । ङीप् ॥

रोद : न॰ दिवि ॥ भूमौ ॥ द्यावापृथिव्यो : ॥ रोदितिसर्वमस्मिन् । रुदिर्॰ । असुन् ॥

रोदसी । अ॰ द्यावापृथिव्यो : ॥ दिवि ॥ भूमौ ॥

रोदसी । स्त्री॰ स्वर्गे ॥ भूमौ ॥ द्यावाभूम्यो : ॥ गौरादित्वात्पक्षेङीष् ॥

रोदस्यौ । स्त्री॰ द्विवचनान्त : । भूमिस्वर्गयो : ॥

रोध : । पुं॰ नदीतीरे । कूले ॥ रुणद्धि । रुधिरावरणे । पचाद्यच् ॥ प्रतिबन्धे ॥

रोधक : । त्रि॰ रोधिनि ॥ रुधिर्॰ । ण्वुल् ॥

रोधन : । त्रि॰ रोधकर्त्तरि ॥ न॰ रोधे ॥

रोधवक्रा । स्त्री॰ सरिति ॥ रोधेनवक्रा ॥

रोध : । न॰ तीरे ॥ रुणद्धि । रुधिर्॰ । सर्वधातुभ्योसुन्निति॰ असुन् ॥

रोधोवक्रा । स्त्री॰ नद्याम् ॥ रोधसावक्रा ॥

रोधोवती । स्त्री॰ नद्याम् ॥

रोध्र : । पुं॰ गालवे । लोध्रे । न॰ अपराधे ॥ किल्बिषे ॥ रुणद्धि । रुधिर्॰ । स्फायितञ्चीत्यादिना रक् ॥

रोध्रपुष्प : । पुं॰ मधूकवृक्षे ॥

रोध्रपुष्पिणी । स्त्री॰ धातकीवृक्षे ॥

रोप: । पुं॰ रोपणे ॥ इषौ । बाणे ॥ न॰ छिद्रे ॥ रोप्यतेऽनेनवा । रुपविमोहने । ण्यन्त : । घञ् ॥ यद्वा । रूयतेऽनेन । हलश्चेतिघञ् ॥

रोपक : । पुं॰ सुवर्णसप्ततितमेभागे ॥ यथाहविष्णुगुप्त : । दीनारारोपकैरष्टाविंशत्यापरिकीर्त्तित: । सुवर्णसप्ततितमोभागोरोपकउच्यतइति ॥

रोपणम् । न॰ विमोहने ॥ जनने ॥ प्रादुर्भावे ॥ रुपेर्भावेल्युट् ॥ अञ्जनविशेषे ॥ यथा । रोपणंरसकंपिष्टासम्यक्समम्प्राव्यशारिणा । गृह्णीयात्तज्जलंसर्वंत्यजेच्चूर्णमधोगतम् ॥ शुष्कन्तत्तज्जलंसर्वंपर्पटीसन्निभंभवेत् । विचूर्ण्यंभावयेत्सम्यक्त्रिवेलंत्रिफलारसै : । कर्पूरस्यरसंतद्वद्दशमांशेननि : क्षिपेत् ।

अञ्जयेन्नयनेतेननेचाखिलगदच्छि-
द : ॥

रोपणचूर्णम् । न० नयनाञ्जनविशे-
षे ॥ यथा । शिलायांरसकंपिष्ट्वास
म्यगाप्लाव्यवारिणा । गृह्णीयात्त
ज्जलंसर्वंत्यजेच्चूर्णमधोगतम् । शु
ष्कं तच्चजलंसर्वंपर्पटीसन्निभंभवेत्
। विचूर्ण्यभावयेत्सम्यक्त्रिवेलं-
त्रिफलारसै : ॥ कर्पूरस्यरजस्तत्र
प्रमांशेननि : क्षिपेत् । अञ्जयेन्नय
नंतेनसर्वदोषोपशान्तये ॥ समस्त
नेत्ररोगघ्नंचूर्णमेतन्नसंशय : ॥

रोपणवर्त्तिः । स्त्री० नेत्राञ्जनप्रभेदे ॥
यथा । अशीतिस्तिलपुष्पाणिषष्टिः
पिप्पलतण्डुला : । जातीपुष्पाणि
पञ्चाशन्मरिचानिचषोडश ॥ सू-
क्ष्मंपिष्टाम्बुनावर्त्तिः कृताकुसु-
मिकाभिधा । तिमिरार्जुनशुक्रा
र्णानाशिनीमांसवृद्धिनुत् ॥ एतस्या
अञ्जनेप्रोक्तामात्रासार्द्धहरेणुका ।
कुसुमिकावटी० रोपणी ॥

रोप्यातिरोप्यः । पुं० धान्यविशेषे ॥ य
था । रोप्यातिरोप्यालघव : शीघ्रपा
कागुणोत्तरा : । अदाहिनोदोषह-
रावल्यामूत्रविवर्द्धना : ॥

रोमम् । न० जले ।

रोमकम् । न० पांशुलवणे । अयस्कां
तप्रभेदे । पुं० रूमाभिधेनगरे ॥

रोमकन्द : । पुं० पिण्डालौ ॥

रोमकपत्तनम् । न० पश्चिमेकेतुमाल-
वर्षस्यनिरक्षदेशेविद्यमानेपत्तने ॥
रूमे ॥ तच्चाधुनारूमश्याम्० इति
नाम्नाप्रसिद्धम् ॥

रोमकूप : । पुं० रोममूले ॥

| | |
|---|---|
| रोमकेशरम् ।<br>रोमगुच्छम् ।<br>रोमगुच्छकम्<br>रोमगुत्सम् । | न० चामरे । चव<br>चूलकी ॥ |

रोम: । न० लोम्नि । अङ्गजे । तनूरु
हे ॥ तस्यफलंयथा । अल्परोमयुता
श्रेष्ठाअङ्घ्राहस्तिकरोपमा । रोमै
कैकंकूपकेस्यात्नृपाणान्तुमहात्म-
नाम् ॥ द्वे द्वे रोमेपण्डितानांश्रोत्रि
याणांतथैवच । रोमत्रयंदरिद्राणां
रोगीनिर्मांसजानुक : ॥ अपिच ।
रोमैकैकंकूपकेपार्थिवानांद्वे द्वे ज्ञेये
पण्डितश्रोत्रियाणाम् । त्र्याद्यैर्निः
स्वामानवाद : स्वभाजः केशाश्चैवं
निन्दिता : पूजिताश्चेति ॥ रोह
ति । रुह० । नामन्सीमन्व्योम-
न्रोमन्निस्त्यादिनासाधु । यद्वा ।
रूयते । रुशब्दे० रुङ्गतौ० भा
वणेवा मनिन् ॥

रोमन्य: पुं० उद्गीर्य्यचर्वणे । पशूनांच
र्वितस्याकृष्यपुनश्चर्वणे । जुगार०
इ० भा० ॥

रोमभूमि : स्त्री० चर्म्मणि ॥

रोमलता । स्त्री० रोमावल्याम् ॥

रोमवान् । त्रि॰ रोमशे । लोमवि शिष्टे ॥

रोमविकार : । ) पुं॰ रोमाञ्चे ।
रोमविक्रिया । ) स्त्री॰ रोमहर्षणे ।

रोमश : । पुं॰ पिण्डालौ । मेषे । कुम्भिनि ॥ शूकरे । त्रि॰ अतिशय लोमविशिष्टे ॥ रोमाणिसन्त्यस्य । लोमादित्वात्॰ श : । रलयो रभेद : ॥

रोमशफल : । पुं॰ डिण्डिशे । मुनि निर्म्मिते । डिण्डसी॰ टिण्डा॰ इ॰ भा॰

रोमशा । स्त्री॰ दग्धावृक्षे ॥

रोमशूकम् । न॰ स्थौणेयके ॥

रोमहर्ष : । पुं॰ पुलकिततत्त्वे । रोमाञ्चे ॥

रोमहर्षण : । पुं॰ सूते । इतिहासपु राणानांधारकेव्यासशिष्ये ॥ अस्य तेसर्वरोमाणिवचसाहर्षितानियत् । द्वैपायनस्यभगवंस्ततोवैरोमहर्षण: ॥ भवन्तमेवभगवान्व्याजहारस्व यंप्रभु : ॥ बिभीतकवृक्षे ॥ न॰ रो माञ्चे ॥ रोम्णांहर्षणम् ॥

रोमाञ्च : । पुं॰ रोमहर्षणे । रोमोद्गमे ॥ रोम्णामञ्चनंपूजनम् । भा वेघञ् ॥

रोमाञ्चिका । स्त्री॰ रुदन्तीवृक्षे ॥

रोमाञ्चित : । त्रि॰ जातपुलके । हृष्ट रोमणि ॥ रोमाञ्च : सञ्जातोस्य । तारकादित्वादितच् ।

रोमाली । स्त्री॰ वय : सन्धौ ॥ रोमा वल्याम् ॥

रोमालु : । पुं॰ पिण्डालौ ॥

रोमालुविटपी । पुं॰ कुम्भीवृक्षे ॥

रोमावली । स्त्री॰ नाभेरुपरिलोमश्रे ण्याम् ॥

रोमाश्रयफला । स्त्री॰ भिल्भिरिष्टाक्षु पे ॥

रोमोद्गम : । ) पुं॰ रोमहर्षणे ।
रोमोद्भेद: । ) पुं॰ रोमाञ्चे ॥

रोल: । पुं॰ पानीयामलके ॥

रोलम्ब : । पुं॰ भ्रमरे ॥

रोला । स्त्री॰ मात्रावृत्तान्तरे ॥ यथा । रोलावृत्तमवेहिनागपतिपिङ्गल- भणितंप्रतिपदमिहचतुरधिककला विंशतिपरिगणितम् । एकादश मधिविरतिरखिलजनचित्ताहरणं सुललितपदमदकारिविमलकविक ण्ठाभरणम् ।। यथा । तरतिपयोनि धिसलिलमयतिगिरिशिखरशिखो परि॰ विशतिरसातलमटतियशस्त वसकलदिशोपरि । गगनगमनम भिनयतिसमंशशिनाश्रियमच्युति- चित्रमिदंनतथापिभवन्तंभूपविमु- ञ्चति ॥

रोट । त्रि॰ बधके । हिंस्रे ॥ रोषति । रुष॰ । विच् ॥

रोष: । पुं॰ कोपे । क्रोधे ॥ अपमे

यमुदेतुमिच्छतातिमिरं रोषमयं धियापुर:। अविभिद्यनिशाकृतं तम: प्रभयानांशुमताप्युदीयते॥

रोषणम्। रुषहिंसायाम्। भावे घञ्॥

रोषण:। पुं॰ पारदे॥ हेमघर्षणे॥ उषरे॥ ऊषरे॥ त्रि॰ क्रोधनि। अमर्षणे॥ रोषतितच्छील:। रुष॰। क्रुधमण्डार्थेभ्यश्चेतियुच्॥

रोषमय:। त्रि॰ रोषादागते। मयड्वेतिमयट्॥

रोषित:। त्रि॰ रोषंप्रापिते। रुष्टे॥

रोह:। पुं॰ अङ्कुरे॥ सादिनि॥

रोहक:। पुं॰ प्रेतविशेषे॥ त्रि॰ रोढरि। रोहकारे॥ रुहबीजजन्मनिप्रादुर्भावे। ण्वुल्॥

रोहण:। पुं॰ गिरिप्रभेदे। विदूराद्रौ॥ न॰ शुक्रे॥ जन्मनि॥ प्रादुर्भावे॥

रोहन्त:। पुं॰ द्रुमविशेषे। हन्तात्। रुह॰। रुहिनन्दिजीविप्राणिभ्य: षिदाशिषीतिझच्॥ द्रुममात्रे॥

रोहन्ती। स्त्री॰ लतान्तरे॥ षित्वान्ङीष्॥

रोहि:। पुं॰ बीजे॥ वृक्षे॥ धार्मिके॥ व्रतत्याम्॥ रोहति। रुह॰। इगुपधात्कित्। इति शिरुहिभ्याम्... भ्यश्चेतीन्॥ गम्भगी॥

रोहिण:। पुं॰ भूतृणे॥ वटवृक्षे॥ रोहितकवृक्षे॥ न॰ कालभेदे। रौहिणे। दिनस्यनवमेमुहूर्ते॥ सचपूर्वाह्णश्राद्धस्यगौणकालत्वेनोत्तरावधि:। अपराह्णश्राद्धस्यपूर्वावधि:। एकोद्दिष्टश्राद्धस्य समानकाल:॥ रोहति। रुह॰। रुहेर्श्चेति॰ इनन्॥ त्रि॰ रोहिण्यांजाते। नक्षत्रेभ्योवहुलमितिलुक्। लुक्तद्धितलुकि॥

रोहिणि:। स्त्री॰ रोहिणीनक्षत्रे॥

रोहिणिका। स्त्री॰ रागादिनारक्तवर्णायांस्त्रियाम्॥

रोहिणी। स्त्री॰ अश्विन्यादिषुचतुर्थनक्षत्रे। ब्राह्म्याम्॥ तत्रजातस्य फलंयथा। स्याद्धर्मकार्येकुशल: कुलीन: सुचारुदेहोविलसत्कलेवर:। स्मराग्निनाचाकुलिताखिलाशयेयोरोहिणीज: सधनीसमानो॥ इति॥ रोहिणीनक्षत्रे इति गौरादिषुपाठान्ङीष्॥ कण्ठरोगविशेषे॥ अस्यनामानिसङ्ख्याचयथा। रोहिणीपञ्चधाप्रोक्ता कण्ठशालूकएवच। अधिजिह्वस्य वलयोऽलासनामैकवृन्दक:॥ ततोवृन्द: शतघ्नीचगिलायु: कण्ठविद्रधि:। गलौघ: स्वरघ्नश्च मांसतानस्तथैवच॥ विदारीकण्ठ

देशेतुरोगाश्चष्टादशस्मृता : । इति ॥ धेनौ । सौरभेय्याम् ॥ रोहित वर्णयोगात्० ङीव्नौ ॥ लोहिता याम् ॥ रोहितशब्दात्स्त्रीत्वेच्छायां०वर्णादनुदात्तात् तोपधात्तोने तिङीप् तकारस्यनकारादेशश्च ॥ तन्विति ॥ कटम्भरायाम् । कटुरोहिण्याम् ॥ सोमवल्के ॥ जिनानांविद्यादेवीविशेषे ॥ बलदेवस्य मातरि ॥ सुरभिकन्यायाम् ॥ नववर्षीयायांकन्यायाम् ॥ हरीतक्याम् ॥ वृत्तासारोहिणीस्मृतेति लक्षणात्। कपिलवर्णावत्तुलाकाराविरेचनेप्रशस्ता ॥ काश्मर्याम् ॥ रागाद्येरक्तितस्त्रियाम् ॥ रोहिण्यां जातायाम् ॥ चिचारेवतीरोहिणीभ्य: स्त्रियामितिनचत्राणोलुक् । गौरादित्वान्ङीष् ॥

रोहिणीपति : । पुं॰ इन्द्रौ ॥ रोहिण्या : पति : ॥ दुन्दुभे ॥

रोहिणीरमण : । पुं॰ वृषभे ॥ वसुदेवे ॥ चन्द्रे ॥

रोहिणीवल्लभ : । ) पुं॰ चन्द्रमसि
रोहिणीश : । ) वसुदेवे ॥

रोहिण्यष्टमी । स्त्री॰ रोहिणीयुक्तभाद्रकृष्णाष्टम्याम् ॥

रोहित् । पुं॰ अर्के । भामी ॥ स्त्री॰-मृग्याम् ॥ लताप्रभेदे ॥ रोहति ।

रुह॰ । इन्रुहियुषिभ्यइति : ॥

रोहित : । पुं॰ मीनविशेषे । रोहू॰ इतिभाषाप्रसिद्धे ॥ अस्यलक्षणंगुणाश्चयथा । कृष्णा :शल्कोश्चेतकुचिस्तुमत्स्योय : श्रेष्ठोसौलोहितोहतवक्त्र : । कोष्णंवक्त्यंरोहितस्यापिमांसंवातंहन्तिस्निग्धमृष्टातिवीर्यम् ॥ अपिच । रक्तोदरोरक्तमुखोरक्ताक्षोरक्तपक्षति : । कृष्णपक्षोभ्र षश्रेष्ठोरोहित : कथितोबुधै : ॥ रोहित : सर्वमत्स्यानांवरोहृष्योर्दितार्त्तिजित् । कषायानुरस: स्वादुर्वातघ्नोनातिपित्तकृत् ॥ ऊर्द्ध्वजत्रुगतान्रोगान्हन्याद्रोहितमुण्डकम् ॥ अस्यपाकप्रकारोयथा । रोहितोदरखण्डाश्चकासमर्दनमर्दिता : । कटुतैलपरिभृष्टाहिङ्गुसैन्धवसंयुता : ॥ शकलंपृष्ठसम्भूतंरोहितंदधिमर्दितम् । वेसवारान्वितंपाच्यंप्रलेहविधिनाभृशम् ॥ तन्मुण्डस्यतु । रोहितस्योत्तमंदेहंप्रलेहेनावलेपितम् । येश्नन्तीहनर : पूर्वंभवेत्सस्मरूपभृत् ॥ रोहित : प्रवरोमत्स्यानातिपित्तकरोगुरु : । वातघ्नापुष्टिदोहृद्य:स्निग्ध : पथ्य : समीरण : ॥ इति ॥ मृगविशेषे ॥ रोहितकद्रुमे ॥ हारभेदे ॥ रक्तवर्णे ॥ ऋषभाद्रिवासिगन्धर्वविशेषाणांसंज्ञायाम् ॥ न॰ कु

द्रुमे ॥ रक्ते । ऋजुशक्रशरासने । दण्डाकारे नानावर्णे दिविदृश्यमाने ज्योतिर्विशेषे । इन्द्रधनुरेवो-त्पातादिनाऋज्वक्रं सद्रोहितं स्यात् ॥ त्रि॰ रक्तवर्णविशिष्टे ॥ रोहति । रुह॰ । रुहेश्चलोवेतीतन् ॥ यद्वा । रोहणं रोह : । सञ्जातोऽस्य । तारकादित्वादितच् ॥

रोहितक : । पुं॰ वृक्षविशेषे । रोहिणि । प्लीहशत्रौ । दाडिमपुष्पके । सदाप्रसूने । रोहिडा॰इ॰भा॰प्र॰ ॥ रोहितोवर्णोस्यास्ति । अच् । स्वार्थेकन् ॥

रोहितगिरि : । पुं॰ पर्वतान्तरे । रोहितासइ॰भा॰प्र॰ ॥

रोहितगिरीय : । पुं॰ आयुधजीविविशेषे ॥ रोहितगिरिरभिजनो-स्यायुधजीविन : । छ : ॥

रोहिता । स्त्री॰ रागादिनारक्तवर्णा-यांस्त्रियाम् ॥ वर्णादनुदात्तादिति पाक्षिकोङीप् तकारस्यनकारादेशश्च न ॥..

रोहिताश्व : । पुं॰ अग्नौ । वैश्वानरे ॥ लोहिताश्वायस्य । वरुणस्त्व सितानश्वान्॰ कुबेर : कुमुदोपमान् । हुताशन: किंशुकाभान्॰ वायुर्वर्भूंस्तथाश्वणोदितिशालिहोत्रात् ॥ रलयो : सावर्ण्यात्रोहिताश्व : ॥ रोहितोऽग्नेर्गोवाहनमस्य

तिवा ॥ हरिश्चन्द्रनृपात्मजे ॥

रोहितिका । स्त्री॰ कोपादिनारक्तवर्णायांस्त्रियाम् ॥

रोहितेय : । पुं॰ रोहितके ॥ प्लीहारीरोहितेय : स्याद्रक्तपुष्पश्चरोहितइतिरत्नकोष : ॥

रोही । पुं॰ रोहितके ॥ अश्वत्थे ॥ वटद्रुमे ॥ अवश्यंरोहति । रुह॰ आवश्यकेणिनि : ॥

रोहिष : । पुं॰ रौहिषे ॥ न॰ तृणान्तरे ॥

रोहीतक : । पुं॰ रोहितकद्रुमे ॥ रोहीतक : प्लीहघातीरुच्योरक्तप्रसादन : रोहीतकोयकृत्प्लीहगुल्मोदरहर : स्मृत : ॥

रौक्ष्यम् । न॰ रूक्षतायाम् ॥ पारुष्ये ॥ रूक्षस्यभाव : । ष्यञ् ॥

रौच्य : । पुं॰ मनुविशेषे ॥ ॥ रुचे : प्रजापते : पुत्रोरौच्योनामभविष्यति ॥ बिल्वकाष्ठदण्डे । बैल्व ॥

रौद्र : । पुं॰ घर्मे । सूर्यतेजसि। आतपे ॥ अस्यगुणायथा । आतप : कटुकोरूक्ष: स्वेदमूर्च्छातृषावह : दाहवैवर्ण्यजननोनेत्ररोगप्रकोपण: ॥ रसविशेषे ॥ षष्टिवत्सरान्तर्गतवत्सरविशेषे ॥ तत्फलंयथा । अल्पतोयाघनास्तत्र कीटका : प्रबला : स्मृता: विरुद्धा: पार्थिवादेविरौद्रे संवत्सरेप्रिये ॥ ५४ ॥ शृङ्गाराद्यष्टर

सान्तर्गतविशेषरसे । उग्रे ॥ त्रि॰ तीव्रे ॥ भीषणे ॥ रुद्रसम्बन्धिनि ॥ रुद्रदेवत्ये । रुद्रस्येदम् । अण् ॥

रौद्री । स्त्री॰ चण्ड्याम् ॥ ङीप् ॥ रुद्रजटायाम् ॥

रौप्यम् । न॰ रूप्ये ॥

रौप्यमाक्षिकम् न॰ तारमाक्षिके ॥

रौमम् । न॰ रौमके ॥ रुमायांभव म् । अण् ॥

रौमकम् । न॰ सांभरि॰ इ॰ भा॰ प्र॰ लवणे । रौमे । वसुके ॥ रुमा यांभवम् । तत्रभवइत्यण् । संज्ञा- यांकन् त्रि॰ रोमकेभवस्ततश्चा गतोवा । पलद्यादित्वादण् ॥

रौमहर्षणि : । पुं॰ उग्रश्रवसि । सू ते ॥ रोमहर्षणस्यापत्यम् । अत इञ् ॥

रौरव : । पुं॰ नरकविशेषे । घोरे । त्रि॰ चञ्चले ॥ घोरे ॥ धूर्ते ॥ रुरु सम्बन्धिनि ॥ रुरुर्भीरशृङ्गाख्य : प्राणिविशेषः । तस्यायम् । तस्ये दमित्यण् ॥

रौहिण : । पुं॰ चन्दनद्रुमे ॥ न॰ दिनस्यनवमेमुहूर्त्ते । यथा । अत्र पूर्वाह्णे श्राद्धमभिधायरौहिणन्तु- नलङ्घयेदित्यभिधानेनपूर्वाह्ण श्राद्धस्यसङ्गवात्परोरौहिणपर्यन्तगौ णपूर्वाह्णकाल : प्रतीयते । तेन रौहिणंपूर्वाह्ण श्राद्धस्यगौणका- लत्वेनोत्तरावधि : अपराह्णश्राद् धस्यपूर्वावधिरित्यवगम्यते॰ ततश्च पूर्वदिनेसङ्गवात्परंरौहिणपर्यन्तं तिथेर्लाभेपरदिनेमुहूर्त्तत्रयमात्रे- तत्तिथिलाभेपूर्वदिनेश्राद्धम् । रौहिणान्तरूपगौणपूर्वाह्णलाभाम् नपरदिनेतथात्वभावात् । उभयदिने सङ्गवलाभेपरदिने॰ शुक्लपक्षे तिथि र्ग्राह्ये तिवचनात् । रौहिनस्तुदिव- सस्यनवममुहूर्त्तस्तस्यज्योतिषोक्त- रोहिणीदैवतत्वात्रौहिणत्वमिति इतिश्राद्धतत्वम् ॥ त्रि॰ रोहि ण्यांजाते ॥ सन्धिवेलादीत्यनेना ण् ॥

रौहिणेय : । पुं॰ बुधग्रहे ॥ हलायु धे । बलदेवे ॥ न॰ मरकतमणौ त्रि॰ गोवत्से ॥ रोहिण्याअपत्य म् । शुभ्रादित्वाट्ढक् ॥

रौहिष : पुं॰ मृगविशेषे । रोहिषंतृ णभेदमस्ति । शेषइत्यण् ॥ रोहित मत्स्ये । न॰ कत्तृणे । रोहितइति॰ रोहिसइतिचख्यातेतृणे ॥ रोहिषंतुव र्तिकं कटुपाकंव्यपोहति । हृत्क ण्ठव्याधिपित्तास्रशूलकासकफज्व- रान् । रोहति । रुह॰ । रुहेर्वृद्धि श्चेतिटिषच् ॥

रौहिषी । स्त्री॰ मृग्याम् ॥ दूर्वायाम् ॥

॥ रकारसमाप्तः ॥

र्यलोधे ॥

लः । पुं॰ इन्द्रे । शक्रे ॥ लकारे ॥ लघुस्वरे॰ । ॰ ॥ न॰पृथ्वीबीजे॥ लीयते । लीङ॰ । अन्येभ्योपिदृश्यतइतिडः ॥

लकचः । पुं॰ डहौ । लकुचे । इतिशब्दरत्नावली ॥

लकुचः । पुं॰ लिकुचे । डहौ । हृढवल्कलि । स्थूलस्कन्धे । क्षुद्रपनसे । बड़हर॰इ॰भा॰प्र॰ ॥ अस्यगुणाः । आमंलकुचमुष्णञ्चगुरुविष्टम्भकृत्तथा । मधुरञ्चतथाम्लञ्चदोषत्रितयरक्तकृत् ॥ शुक्राग्निनाशनञ्चापिनेत्रयोरहितंस्मृतम् । सुपक्वंतत्तुमधुरमम्लंचानिलपित्तकृत् ॥ कफवह्निकरंरुच्यंवृष्यंविष्टम्भकारकम् ॥ लक्यते । लकचास्वादने । बाहुलकादुचः ॥

लक्तकः । पुं॰ जीर्णवस्त्रखण्डे । कर्पटे । लत्ता॰इ॰भ॰प्र॰ ॥ द्रवद्रव्यंयेनपूयतेतच्छ्रटोयमितिस्वामी॥ तत्तुल्यं वस्त्रे पिचन्ते ॥ मलिनत्वादिदुष्टजीर्णवस्त्रखण्ड॰इतिमुकुटः ॥ प्रस्वेदादिमार्जनार्थंहस्तस्थवस्त्रखण्डस्यसंज्ञेयमितिनव्याव्याहुः॥ लक्तते । ओलजीओडे । बाहुलकात्तन्। स्वार्थेकन्। यद्वा। लक्यतेस्म । लक॰ । क्तः । स्वार्थेकन् ॥

लक्तकर्म्मा । पुं॰ पट्टिकाख्ये । रक्तव

लक्षम् । न॰ व्याजे । अपदेशे । परद्रोहफलकातिरिक्तव्याजे ॥ शरव्ये ॥ न॰ स्त्री॰ दशायुतसङ्ख्यायाम्- १००००॰ लाख॰इ॰भा॰ ॥ लक्षणम् । लक्षआलोचने । घञ् ॥ लक्ष्यतेवा ॥

लक्षकः । त्रि॰ लक्षयितरि । लक्षयतियस्तस्मिन् ॥ यथा ॥ लक्षकंनाम लक्षयति । यादृशार्थस्यसम्बन्धवति शक्तन्तुयद्भवेत् । तत्रतल्लक्षकंनामतच्छक्तिविधुरंयदि ॥ यादृशार्थसम्बन्धवतियन्नामसङ्केतितंतदेवतादृशार्थेलक्षकम्॰यदितादृशार्थेशक्तिशून्यंभवेत् । सैन्धवादयस्तुशब्दास्तुरगादिसम्बन्धिनि॰लवणादाविवतुरगादावपिशक्ताएव । गङ्गादयस्तुतीरादावसङ्केतिताः । तत्सम्बन्धिनीरादिप्रकारत्वे नगृहीताएवतीरादान्वयंबोधयन्तितत्रलक्षकाएव ॥

लक्षणम् । न॰ नाम्नि ॥ चिह्ने ॥ स्वरूपे ॥ फले ॥ लक्ष्यतेज्ञायतेपदार्थोनेन । लक्षदर्शनाङ्कनयोः । करणेल्युट् ॥ तद्द्विविधम् । इतरभेदानुमापकम्॰व्यवहारप्रयोजकञ्चेतिन्यायमतम् ॥ व्याकरणमतन्तु । कृत्तद्धितसमासानामभिधानंनियामकम् । लक्षणन्त्वनभिज्ञानांतदभिज्ञानसूचकमिति ॥ सजाती

यद्विजातीयव्यावर्त्तकोलक्ष्यगतः कश्चिल्लोकप्रसिद्धआकारोलक्षणमितिमीमांसकाः ॥ लक्षयोरपिपदार्थौमानान्तराणातिपृथक्त्वशः । लक्षणेनतुसिद्धानामन्तंयान्तिविपश्चितइतिपूर्वाचार्याः ॥ स्वरूपंतटस्थंद्विधालक्षणंस्यात्स्वरूपस्यबोधोयतोलक्षणाभ्याम् । स्वरूपेप्रविष्टात्स्वरूपेऽप्रविष्टाद्यथाकाकवन्तोगृहाः खंबिलस्य ॥ शास्त्रे ॥ इतिवैयाकरणाः ॥ पुं० रामभ्रातरि । सौमित्रौ ॥ सारसखगे ॥ लक्षेर्बुरादिभ्यन्तात्क्षचेरट्चेतिनप्रत्ययस्तस्याडागमश्च ॥

लक्षणा । पुं० वृत्तिविशेषे ॥ यथा । अभिधेयाविनाभूतप्रवृत्तिर्लक्षणोच्यते ॥ साचत्रिविधा । जहल्लक्षणा० अजहल्लक्षणा० जहदजहल्लक्षणेति । यथास्थानमासांलक्षणमनुसन्धेयम् ॥ शक्यसम्बन्धे ॥ यथा । लक्षणाशक्यसम्बन्धस्तात्पर्यानुपपत्तितः ॥ अस्यार्थः । गङ्गायांघोषइत्यादौ० गङ्गापदस्यशक्यार्थेप्रवाहरूपे० घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वायत्र प्रतिसन्धीयते तत्रलक्षणयातीरस्यबोधः । साच शक्यसम्बन्धरूपा । तथाहि प्रवाहरूपशक्यार्थसम्बन्धस्यतीरेगृहीतत्वात्तीरस्यस्मरणंततः शाब्दबोधइतिसिद्धान्तमुक्तावली ॥ शब्दानामौपचारिकीषुप्रवृत्तिषु । यथा । आधारेकारणेकार्येसमीपेचोपकारके । धर्माद्यनुकृतौचेतिलक्षणांसूरयोजगुः ॥ मुख्यार्थानुगमानुपपत्तेर्गुणार्थप्रतिप्रतीतिकारिणीलक्षणांसूरयस्तद्विदोजगुः उक्तः । कुत्रकुत्रेत्याह । आधारइत्यादि । तत्रतावदाधारेयथा । मञ्चाः क्रोशन्तीति । अत्रहिमञ्चानामधिकरणभूतानामाचेतन्यात्० रोदनलक्षणेनक्रोशनार्थेनाननुगमादानर्थक्यात्०तत्स्थानांबालानांसम्बन्धियत्क्रोशनंतत्तेषुतात्स्थ्यात्मलक्षणयोक्तम् ॥ कारणेतुलक्षणायथा । शालीन्वृष्टोदेवइति । अत्रहिमुख्ययावृत्याशालिवर्षणस्यार्थोनन्वितइतिलक्षणया० कालोचितायांवृष्टौशालिकारणभूतायांप्रतिबन्धवैकल्ययोरसम्भावनात्० सम्पन्नमेवशालिलक्षणंकार्यमुपचर्यते । अथवा आयुर्घृतमिति । आयुष्कारणेघृते० आयुषस्तत्कार्यस्योपचारः ॥ एवंकार्येपि लक्षणासम्भवति० यथा । ऊर्णाः प्रावरणाः केचिदपरे तूलावास इति । अत्रकिलसूत्रभावंविना भाविना कम्बलपटादि भाविना परिणतयोरूर्णातूलयोर्मुख्ययावृ

लक्षणा

त्याप्रावरणत्वमसम्भावितम्० तत् कार्यश्चकम्बलपटात्मनएवतदुपपत्तेः । ततश्चकम्बलिपटादौचतयोः कारणभूतयोरूर्णाकार्पासयोरुपचारः कृतः ॥ समीपार्थलक्षणायथा । गंगायांघोषइति । अत्रहिमुख्यया वृत्याप्रवहज्जलरूपस्रोतः गुणवृत्यावातद्विशेषंयद्किञ्चित्गंगाशब्दः कथयेत् तदाम्यासम्भाव्येवग्रामाधिकरणतेति सामर्थ्यात्तत्सामीप्यलक्षणात्वेनतद्दावतिष्ठते ॥ उपकारकेपिलक्षणाद्दश्यते यथा । भिक्षावासयन्तिकारीषोऽध्यापयतीति । अत्रहिकिलनभिक्षास्तत्प्रावरणांचलंकरेणगृहीत्वागमननिषेधंकुर्वन्ति० नापिसर्वथाऽस्मात्स्थानान्नगन्तव्यमितिप्रणयवचनैरवस्थापयन्ति । अपितुप्रचुरान्नव्यञ्जनश्चस्त्वस्तृप्तिहेतुत्वान्निरसनक्रियामुपकारकत्वेनसम्भाव्यमानाः प्रयोजकत्वेनोपचर्यन्ते । एवंचनकारीषोङ्गुत्राधीष्वेतिब्रुवन्माणवकमध्यापयति । नापितच्छरीरमनुप्रविश्यभूतवेतालादिभिरिवैनंपाठयति । किन्तर्हि शीतापनुतिहेतुतयाध्ययनविध्युपकारकत्वेनानुकूल्यंभजन्तत्प्रयोजकत्वेनोपन्नरितः ॥ किंचधर्माद्यनुकृताविति आदिग्रहणादाकारानुकृतौवा । तत्रधर्मानु

लक्षणीयः

कृतौयथा । सिंहोमाणवकः० गौर्वाहीकइति । अत्रकिललक्षणया सिंहधर्माणांशौर्यादीनामनुकृत्यर्थंमाणवकेसामानाधिकरण्येनसिंहशब्दः प्रवृत्तः० मुख्ययावृत्यातस्यसिंहत्वस्यासम्भवात् । वाहीकेति पृष्ठवहनत्वासम्भवात्तिष्ठद्भक्षणगच्छन्तृणादिवलीवर्द्गतधर्मानुकरणायगोशब्दः सामानाधिकरण्येनोपचरितवृत्तिरेवप्रवृत्तः० मुख्यया-वृत्यातथाऽनन्वयात् ॥ एवमाकारानुकृतौयथा । सूचिभेद्यैस्तमोभिरिति । अत्रहितमसोऽमूर्त्तत्वात्सूचिभेद्यत्वंमुख्ययावृत्यानसङ्गतमतोलक्षणयातिनिविडत्वंवस्तुमाकृतिः सूचिभेद्यत्वेनानुकृता । एवंनामघनानितमांसियद्वत्रादिवत्सूच्यादिनाभेदमप्येषांवक्तुंशक्यमित्यर्थः ॥ मानान्तरोपरोधिमुख्यार्थस्यापरिग्रहे जाते । मुख्याविनाकृतेर्येयावृत्तिः सैवलक्षणाप्रोक्तेतिपूज्यपादाचार्याः हंसयोषायाम् ॥ प्रमाणे ॥ लक्ष्यतेऽनयेतिलक्षणा । टाप् ॥ सारस्यांलक्षणाक्वचिदितिमेदिनिकरः ॥

लक्षणार्थः । पुं० लक्षणस्यप्रयोजने ॥ समानासमानजातीयव्यवच्छेदे ॥ लक्षणस्यअर्थः ॥

लक्षणीयः । त्रि० लक्ष्ये ॥ भाव

नीये ॥

लक्ष्मम् । न॰ लक्षणावृत्त्याज्ञाप्यत्वे ॥

लक्षा । स्त्री॰ दशायुतसङ्ख्यायाम् ॥

लक्षितः । त्रि॰ ज्ञापिते ॥ आलोचिते ॥ दृष्टे ॥ अङ्किते ॥ लक्षेः कर्म णिक्तः ॥ लक्षणाश्रये ॥

लक्षितलक्षणा । स्त्री॰ लक्षितेलक्षणायाम् ॥

लक्षिता । स्त्री॰ परकीयान्तर्गतनायिकाभेदे ॥

लक्ष्मणः । पुं॰ सौमित्रौ । श्रीरामभ्रातरि ॥ सारसे ॥ यक्षे । न॰ चिह्ने ॥ नामनि ॥ लक्षयति । लक्ष॰ । चुरादिण्यन्तात्लक्षे रट् चेतिनप्रत्ययस्तस्यमुडागमोपीर्थ्य के ॥ त्रि॰ श्रीयुक्तसश्रीके ॥ लक्ष्मीरस्त्यस्य । पामादित्वान्नः । लक्ष्मणामध्वेतिगणसूत्रेणात्वंबोध्यं ॥

लक्ष्मणप्रसूः । स्त्री॰ सुमित्रायाम् ॥

लक्ष्मणा । स्त्री॰ सारसस्त्रियाम् ॥ श्वेतकण्टकार्याम् । क्षुद्रवार्त्ताकिन्याम् । कटुवार्त्ताक्याम् । निःस्नेहफलायाम् । चन्द्रपुष्पायाम् ॥ औषधीभेदे । पुत्रकन्दायाम् । पुत्रदायाम् । नागपत्राम् । अस्त्रविन्दुच्छदायाम् । लक्ष्मणाकन्दइतिनाम्ना गौडदेशेप्रसिद्धे ॥ गुणास्तुयथा । पुत्रकाकारक्ताल्पबिन्दुभिर्लाञ्छितासदा । लक्ष्मणापुत्रजननी बस्तगन्धाकृतिर्भवेत् ॥ कथितापुत्रदावश्यं लक्ष्मणामुनिपुङ्गवैः ॥ षट्कत्वात्टाप् ॥ दुर्योधनकन्यायाम् । साम्बपत्न्यां ॥

लक्ष्म । न॰ चिह्ने ॥ प्रधाने ॥ लक्षयति॰ लक्ष्यतेवा । लक्ष॰ । मनिन् ॥

लक्ष्मीः । स्त्री॰ विष्णुपत्न्याम् । पद्मालयायाम् ॥ पद्मायाम् । लोकमातरि । मायाम् ॥ सम्पत्तौ ॥ शोभायाम् ॥ ऋद्ध्यौषधे ॥ वृद्धिनामौषधे ॥ फलनीवृक्षे ॥ सीतायाम् ॥ वीरभार्यायाम् ॥ स्थलपद्मिन्याम् ॥ हरिद्रायाम् ॥ शम्याम् द्रव्ये ॥ मुक्तायाम् ॥ मोक्षप्राप्तौ ॥ लक्षयति॰ पश्यतिनीतिलक्ष्मम् । लक्ष॰ । लक्षेर्मुट् चेति॰ ईप्रत्ययस्तस्यमुट् ॥ लक्षते॰ लक्ष्यतेवा दुर्गायाम् ॥

लक्ष्मी । स्त्री॰ लक्ष्म्यर्थेतु ॥ कृदिकि ङीप् ॥ लक्ष्मीर्लक्ष्मीहरिप्रिया मितिद्विरूपाभिधानम् ॥

लक्ष्मीकान्तः । पुं॰ नारायणे ॥

लक्ष्मीगृहम् । न॰ रक्तोत्पले ॥ लक्ष्म्यागृहमिवगृहम् ॥ लक्ष्म्यावेश्मनि ॥

लक्ष्मीजनार्दनः । पुं॰ शालग्रामविशेषे ॥ तल्लक्षणंयथा । एकद्वारेचतुश्चक्रं नवीननीरदोपमम् । लक्ष्मी

जनार्द्दनं न्नयंरहितं वनमालया ॥
द्युतिबल्लवर्वत्तप्रकृतिखण्डम् ॥
लक्ष्मीताल : । पुं॰ श्रीतालवृक्षे ॥
तीर्थविकल्पपरिच्छेदविशेषे ॥
लक्ष्मीनारायण : । पुं॰ शालिग्राम
विशेषे ॥ तल्लक्षणं यथा । एकद्वारे
चतुश्चक्रं वनमालाविभूषितम् ।
नवीननीरदाकारं लक्ष्मीनाराय
णाभिधम् ॥
लक्ष्मीनृसिंह : । पुं॰ शालिग्रामवि
शेषे ॥ तल्लक्षणन्तु । द्विचक्रं विस्तृ
तास्यञ्च वनमालासमन्वितम् । ल
क्ष्मीनृसिंहविर्ख्यं गृहिणास्सु
खप्रदम् ॥
लक्ष्मीपति : । पुं॰ वासुदेवे । नारा
यणे ॥ लक्ष्म्या : पति : नरपतौ
॥ पूगे ॥ लवङ्गवृक्षे ॥ सम्पत्तियु
क्ते ॥
लक्ष्मीपुत्र : । पुं॰ कामदेवे तुरङ्ग
मे ॥ लवे ॥ कुशे ॥
लक्ष्मीपुष्प : । पुं॰ पद्मरागमणौ ।
लक्ष्मीफल : । पुं॰ विल्ववृक्षे ॥ ल
क्ष्मीप्रदं प्रियं वा फलमस्य । शाक
पार्थिवादि : ॥
लक्ष्मीवान् । पुं॰ पनसवृक्षे ॥ श्वे
तरोहितवृक्षे ॥ त्रि॰ श्रीले ।
श्रीमति । श्रीसमन्विते ॥ लक्ष्मीर
स्यास्ति । मतुप् । मादुपधायाट्
तिवत्वं ॥

लक्ष्मीवेष्ट : । पुं॰ श्रीवेष्टे ॥
लक्ष्मीश : । पुं॰ श्रीशे । विष्णौ ॥
लक्ष्मीसमाह्वया । स्त्री॰ रामपत्न्या
म् । सीतायाम् ॥ लक्ष्मीसमयाह्व
येयस्या : ॥
लक्ष्मीसहज : । पुं॰ चन्द्रे ॥
लक्ष्म्याराम : । पुं॰ वनविशेषे ॥
लक्ष्म्या : आराम : ॥
लक्ष्यम् न॰ शरवेध्ये । शरव्ये ॥
व्याजे । अपदेशे ॥ त्रि॰ अनुमेये
॥ लक्षणयाबोध्ये ॥ दर्शनीये ॥
लक्षणम् । लक्ष्यतेवा । लक्षआलो
चने । ण्यत् ॥
लक्षीकृत : । त्रि॰ वेड्यमिष्ठे ॥
लगडम् । त्रि॰ चारुणि । बन्धुरे ।
मनोज्ञे ॥
लगित : । त्रि॰ सङ्गयुक्ते । लगाङ्॰
भा॰ ॥ लगेसङ्गे । क्त : ॥
लगुड : । पुं॰ दण्डे । दण्डकाष्ठे ।
लाठी॰ इ॰ भा॰ ॥
लग्न : । पुं॰ स्तुतिपाठके । प्रातर्गये
॥ न॰ मेषादिराशीनामुदये । त्रि॰
शङ्गाणात्मके ॥ त्रि॰ लज्जितेसक्ते
। लगतिफले । लगे॰ । क्तुव्यस्वा
न्ते तिक्तस्येडभावोनिष्ठानत्वमपि
निपात्यते ॥
लग्नक : । पुं॰ प्रतिभुवियोहिदायं वि
नाऽन्यकृतऋणस्य परिशोधं कर्त्तु
मात्मानं स्वीकरोति॰ यथा । यद्य

यत्नॄषापनयनं नकरिष्यति॰ तद्यं कं करिष्यामीतितस्मिन्। जामन॰ भू॰ भा॰ ॥ लजतेस्म । ष्लजी ब्रीडने । गत्यर्थे तिक्तः । स्वार्थे कः ॥

लघट्। पुं॰ पवने, वायौ ॥ लङ्घते। लघिगतौ । लङ्घेर्नलोपश्चेत्य टिः ॥

लघटिः। पुं॰ वायौ ॥

लघिमा। पुं॰ शिवैश्वर्य्यप्रभेदे ॥ येनलघुर्भवति॰ यतः सूर्य्यरश्मी नालम्ब्यादित्यलोकं याति । लघुतायाम् ॥ लघोर्भावः। इमनिच् ॥

लघिष्ठः। त्रि॰ अत्यल्पके अयमेषामतिशयेनलघुः। अतिशायने॰ इष्ठन् ॥ भले ॥

लघीयान्। त्रि॰ अतिशयेनलघौ । लघुतरे ॥ यथालघीयान्शब्दोपदेशोगरीयानपशब्दोपदेश इति ॥ अयमनयोरतिशयेनलघुः। ईयसुन् ॥

लघुः। पुं॰ एकमात्रेवर्णे ॥ यथा । गुरोर्विभिन्नोलघुरेकमात्रोह्रप्रादिपूर्व्वोपिलघुर्विकल्पात्। क्वचित्सबिन्दुः क्वचिदर्द्धबिन्दुरोकारयुक्तोपिलघुः क्वचित्स्यात् ॥ उच्चार्यमाणास्त्वरितप्रयत्नात्द्वित्राश्चवर्णाः कुचिदेकभावम् । भजन्ति भाषासुयसंस्कृतेषु विनाशमित्यं बहुधानयोज्यम् ॥ स्त्री॰ पृक्कानामौषधौ ॥ न॰ शीघ्रे ॥ कृष्णागुरुणि ॥ लामज्जके ॥ सत्वगुणे ॥ विशेषनक्षत्रादौ ॥ यथा । पुष्याश्विन्यभिजिद्धस्तालघुक्षिप्रंगुरुस्तथा । अत्रपण्यरतिज्ञानंभूषाशिल्पकलादिकम् ॥ त्रि॰ अगुरौ ॥ मनोज्ञे ॥ निःसारे ॥ ह्रस्वे ॥ लङ्घते । लघि॰ लंघिबंह्योर्नलोपश्चेति कुनलोपश्च ॥ लङ्घतेवा ॥

लघुकामः। त्रि॰ अल्पवाचके ॥

लघुकायः। पुं॰ अल्पायुषि । छागे । वर्क्करे ॥ त्रि॰ क्षुद्रशरीरे ॥

लघुकाश्मर्य्यः। पुं॰ कट्फलवृक्षे ॥

लघुक्रियः। त्रि॰ क्षिप्रव्यापारे ॥

लघुखट्विका। स्त्री॰ आसन्द्याम् । क्षुद्रखट्वायाम् ॥

लघुगर्ग्गः। पुं॰ चिकण्टकमत्स्ये ॥

लघुचर्भिटा। स्त्री॰ मृगेर्वारौ ॥

लघुजङ्गलः। पुं॰ लावकपक्षिणि ॥

लघुतमः। त्रि॰ लघिष्ठे ॥ अतिशायनेतमप् ॥

लघुदन्ती। स्त्री॰ क्षुद्रदन्तीवृक्षे ॥

लघुदुन्दुभिः। पुं॰ दृगडवाद्ये ॥

लघुद्राक्षा। स्त्री॰ काकलीद्राक्षायाम् । निर्बीजायाम् ॥

लघुनाम। न॰ अगुरुणि ॥

लघुपञ्चमूलम्। न॰ क्षुद्रपञ्चमूल.

पाचने ॥ तद्यथा । शालपर्णीपृश्निपर्णीवार्ताकीकण्टकारिका । गोक्षुरः पञ्चभिश्चैतैः कनिष्ठं पञ्चमूलकम् ॥ अस्य गुणाः । पञ्चमूलं लघुस्वादुबल्यं पित्तानिलापहम् । नात्युष्णं बृंहणं ग्राहिज्वरश्वासाश्मरीप्रणुत् ॥

लघुपञ्चमूली । स्त्री॰ लघुपञ्चमूले । शालपर्ण्यादौ ॥ पञ्चानां मूलानां समाहारः पञ्चमूली । लघ्वी चासौ पञ्चमूली चेति विग्रहः ॥

लघुपत्रिका । स्त्री॰ रोचन्याम् ॥ गुडारोचन्याम् ॥

लघुपत्री । स्त्री॰ अश्वत्थीवृक्षे ॥

लघुपिच्छिलः । पुं॰ भूकर्बुदारके ।

लघुपुष्पः । पुं॰ भूमिकदम्बे ॥

लघुबदरः । पुं॰ क्षुद्रकोलौ । सूक्ष्मफले ॥

लघुबदरी । स्त्री॰ भूबदर्याम् ॥

लघुब्राह्मी । स्त्री॰ क्षुद्रब्राह्म्याम् । जलोद्भवायाम् । सूक्ष्मपत्रायाम् ॥

लघुमन्थः । पुं॰ क्षुद्राग्निमन्थे ।

लघुमांसः । पुं॰ तित्तिरिपक्षिणि ॥

लघुमांसी । स्त्री॰ गन्धमांस्याम् । भूतकेश्याम् ॥

लघुराजमृगाङ्कः । पुं॰ औषधिविशेषे ॥ यथा । घृततोयायुतः सुरसास्वरसो लघुराजमृगाङ्क इति प्रथितः । अयहन्त्यनिलान् सबलान् बहु

लाग्निजभक्तरिपून् निवहक्रमवृद्धि लोलिम्बराजः ॥ *

लघुलयम् । न॰ वीरणमूले । नलदे ॥ लङ्घते रोगान् लङ्घ्यते वा भूस्थ्यत्वात् । लघि॰ । लंघिवंह्योरिति कुः । लीयते । लीङ् श्लेषणे । अच् । लघु च तत् लयञ्च ॥

लघुसदाफला । स्त्री॰ क्षुद्रोदुम्बरे ॥

लघुहस्तः । पुं॰ शीघ्रवेधिनि ॥

लघुहस्तकः । पुं॰ कृतहस्ते ॥

लघुहेमदुग्धा । स्त्री॰ लघूदुम्बरिकायाम् ॥

लघूदुम्बरिका । स्त्री॰ क्षुद्रोदुम्बरिकायाम् ॥ लघुसदाफलायाम् ॥

लघ्वक्षरम् । न॰ मात्राकाले ॥ निमेषोन्मेषणं मात्राकालो लघ्वक्षरन्तथेति पुराणम् ॥

लघ्वाशी । त्रि॰ परिमितभोक्तरि ॥ लघु परिमितं मेध्यञ्चाश्नातु शीलं यस्य ॥ निद्रालस्यादिचित्तलयकारिरहिते ॥

लघ्वी । स्त्री॰ लाघवयुक्तायाम् ॥ स्यन्दनस्य प्रभेदे ॥ पृक्कायाम् ॥ दन्त्याम् ॥ लघुस्त्रियाम् ॥

लङ्का । स्त्री॰ दक्षिणभारतवर्षस्य निःसन्देशे विद्यमानायां रक्षःपुर्याम् । यवनाग्रेसम्॰ इति ख्यातायाम् ॥ जम्बूद्वीपस्योपद्वीपविशेषे शाखायाम् ॥ शाकिन्याम् ॥

कुलटायाम् ॥ धान्यविशेषे । करालत्रिपुटायाम् ॥ लक्यतेमुख मस्याम् । लकआस्वादने । चुरादिः । एरच् । घञ्वा । पृषोदरादित्वान्नुम् । नुम्यनुपधत्वान्नवृत्तिः ॥ यद्वा । रमन्तेस्याम् । बाहुलकात्कोलत्वञ्च ॥

लङ्कादाही । पुं॰ हनूमति ॥

लङ्काधिपतिः ।
लङ्कापतिः । पुं॰ रावणे ॥

लङ्कापिका । स्त्री॰ पृक्कायाम् । पिडिङ्शाक॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

लङ्कामलयः । पुं॰ लङ्काद्वीपस्थमलयशैले ।

लङ्कायिका । स्त्री॰ )
लङ्कारिका । स्त्री॰ लङ्कायिकायाम् ॥

लङ्कास्थायी । पुं॰ वृक्षविशेषे । लङ्कायन्तुयाम् । लङ्कासिज॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

लङ्केशः । पुं॰ रावणे ॥

लङ्कोपिका । स्त्री॰ पृक्कौषधौ ॥ लङ्कायामुप्यते । टुवप्बीजसन्ताने । क्वुन् । अचिस्वपीतिवस्युतः ॥

लङ्कोयिका । स्त्री॰ पृक्कायाम् ॥ लङ्कायामूयते । ऊयीतन्तुसन्ताने । क्वुन् ॥

लङ्गः । पुं॰ लङ्गे ॥ पिङ्गे । नाङ्
इ॰ गौ॰ भा॰ प्र॰ विटे ॥

लङ्गूलम् । न॰ लाङ्गूले । पुच्छे ॥

लङ्घनम् । न॰ उपवासे ॥ कर्षणे ॥ चतुष्प्रकारासंशुद्धिः पिपासामारुतातपौ । पाचनान्युपवासश्च व्यायामश्चेतिलङ्घनमितिचरकोक्तौ यथानिर्णीतत्वात् ॥ चमशने ॥ लङ्घनेनक्षयंनीतेदोषेसन्धुक्षितेऽनले । विज्वरत्वंलघुत्वञ्चक्षुच्चैवास्योपजायते ॥ इत्यचानशनरूपस्य लङ्घनस्यफलकथनात् ॥ त्रिरात्रं पञ्चरात्रंवाद्शरात्रमथापिवा । लङ्घनंसन्निपातेषुकुर्यादारोग्यदर्शनादितिचक्रपाणिदत्तः ॥ क्रमणे । प्लवने । अश्वतृतीयगतौ ॥ प्लुतन्तुलङ्घनंपक्षिमृगगत्यनुकारकमितिहेमचन्द्रोक्तेः ॥ क्रमणे । यथा । नचाग्निंलङ्घयेद्धीमान् नोपदध्यादधः क्वचित् । नचैनंपादतः कुर्यान्मुखेननधमेद्बुधः ॥

लजकारिका । स्त्री॰ लज्जालौ । वराहक्रान्तायाम् । समङ्गायाम् । तिक्तगन्धायाम् । नमस्कार्याम् ॥

लज्जा । स्त्री॰ मन्दाक्षे । त्रपायाम् । सुशीलस्त्रीभार्येयम् । पद्मश्रामितम् ॥ कृतेऽकरणीयेपरज्ञानसम्भवाद्दुःखे ॥ अकरणीयाप्रवृत्तिजनकोऽन्तःकरणस्यवृत्तिविशेषे ॥ लज्जनम् । ओलस्जीव्रीडने ।

गुरोश्चहलहल्य : । भलांतश्भ-
श्चि । टाप् । लज्जालो ॥

लज्जालु : । पुं० स्त्री० वराहक्रान्ताया
म् । नमस्कार्याम् । खदिरपत्रिका
याम् । सङ्कोचिन्याम् ॥ लज्जा
लु : शीतलातिक्ताकषायाकफपि-
त्तनुत् । रक्तपित्तमतीसारंयोनिरो-
गान्विनाशयेत् ॥

लज्जाशील : । त्रि० अपत्रपिष्णौ । ल
ज्जिते ॥

लज्जित : । त्रि० लज्जायुक्ते । सल
ज्जे । ह्रीणे । ह्रीते ॥ लज्जासञ्जा-
तास्य । तारकादित्वादितच् ॥

लज्जिरो । स्त्री० लज्जालो ॥

लज्या । स्त्री० लज्जायाम् ॥ इतिश-
ब्दरत्नावली ॥

लञ्ज : । पुं० पदे ॥ कच्छे ॥ पुच्छे ॥

लञ्जिका । स्त्री० वेश्यायाम् ॥

लट : । पुं० प्रमादवचने । दोषे । ल
टति । लटबाल्ये । अच् ॥

लटक : पुं० दुर्जने ॥ संज्ञायांकन् ॥

लटपर्णम् । न० त्वचे ॥

लट : । पुं० दुर्ज्जने ॥

लट्व : । जातिविशेषे । नट० इ० भा० ॥
रागभेदे ॥ तुरङ्गमे ॥ इत्युणादि-
कोष : ॥

लट्वा । स्त्री० करञ्जप्रभेदे । फले ॥ च
वके ॥ पक्षिविशेषे ॥ कुसुम्भे ॥
लटति । लट० । अशूप्रुषिलटीति
कन् । टाप् ॥

लडह : । त्रि० मनोज्ञे ॥ इतित्रिका
गडशेष : ॥

लडु : । त्रि० दुर्जने ॥ इतिशब्दरत्ना-
वली ॥

लडुक : । पुं० मोदके । लड्डू० लाड्०
इ० भा ॥ लडुकोदुर्ज्जरोगुरुरिति-
राजवल्लभ : ॥ दधिशाल्यंतथादुग्ध
कानिक्यामाषपर्पटा : । गुरवार्द्र
ककूष्माण्डशालूकामिषमत्स्यका : ॥
नालिकेरप्रियालश्चमज्जाकूष्माण्ड-
कादय : । एतेषांलडुका : प्रो-
क्ता : सम्भवन्त्यन्यतोपिच ॥

लगड्र : । पुं० लगडनइतिख्यातेइङ्ग्
लपुरे ॥

लगड्न : पुं० लिगड्न । इङ्गेले ॥

लता । स्त्री० प्रियङ्गौ ॥ शाखाया-
म् ॥ पृक्कायाम् ॥ ज्योतिष्मत्या-
म् ॥ लताकस्तूरिकायाम् ॥ मा-
धव्याम् ॥ दूर्वायाम् ॥ शाखिशा
खायाम् ॥ अशनपर्ण्याम् ॥ कैव-
र्त्तिकायाम् । सारिवायाम् ॥ वल्
ल्याम् । व्रतती ॥ लतति । ल-
ति : सौत्रोवेष्टनार्थ : । लतत्राघा
तेवा । पचाद्यच्टाप् ॥

लताकस्तूरिका । स्त्री० लताकस्तूर्या
म् । दक्षिणदेशजायाम् । मुष्कदा
ना० इतिख्यातायाम् ॥ लताकस्तू
रिकातिक्तास्वाद्वीवृष्याहिमालघु : ।

चक्षुष्याक्ले दनीघ्नं ग्रहणावस्थास्य रोगहृत् ॥

लताजिह्व : । पुं॰ सर्पे ॥ लतेवजिह्वाऽस्य ॥

लतातरु : पुं॰ तालवृक्षे ॥ नारङ्गवृक्षे ॥ शालवृक्षे ॥

लताद्रुम : । पुं॰ लताशाले । अश्वकर्णाख्ये । तार्क्षे ॥

लतापनस : । पुं॰ चंलाले । चित्रफले । सुखाशे । नाटाम्रे । तरमुज्ञ इति॰तरबूजइ॰चख्याते ॥

लतापृक्का । स्त्री॰ समुद्रान्तायाम् । पिड्डिङ्गशाक॰इ॰गौ॰दे॰भा॰प्र॰॥

लताफलम् । न॰ पटोले । लताया : फले ॥

लताभद्रा । स्त्री॰ भद्रालीवृक्षे ॥

लतामणि : । पुं॰ विद्रुमे । प्रवाले ॥

लतामरुत् । स्त्री॰ पृक्कायाम् ॥

लतायष्टि : स्त्री॰ भण्डीर्याम् । मञ्जिष्ठायाम् ॥

लतायावकम् । न॰ प्रवाले ॥

लतारसन : । पुं॰ सर्पे ॥

लतार्क : । पुं॰ दुद्रुमे । हरितपलाण्डौ ॥ लतासुचक्र्यते अर्च्यते वा विकृहलक्षणयानिन्द्यते । चर्कास्तवने॰अर्चपूजायां॰वाघञ् ॥

लतार्कक : । पुं॰ दुद्रुमे ॥ स्वार्थेकन् ॥

लतालक: । पुं॰ गजे । हस्तिनि ॥

लतावेष्ट : । पुं॰ देशविशेषे ॥ रतिबन्धप्रभेदे ॥ यथा ॥ बाहुभ्यांपादयुग्माभ्यांवेष्टयित्वास्त्रियंभवेत् । लघुलिङ्गताडनंयोनौलतावेष्टोयमुच्यते ॥

लतावेष्टितकम् । पुं॰ आलिङ्गनभेदे॥

लताशङ्कु : । पुं॰ शालवृक्षे ॥

लताश्रम : । पुं॰ लतामण्डपे ॥ लताविशिष्ट : आश्रम : ॥

लतिका । स्त्री॰ लतायाम् । स्वार्थेकन् । प्रत्ययस्थादितीत्वम् ॥

लत्ता । स्त्री॰ योगविशेषे ॥ यथा । चन्द्राहुपूर्णेन्दुसिता : स्वपृष्टे॰भंसप्तगीजातिशरै ७ । ८ । २२ । ५ मितंहि । संलत्तयन्त्यर्कशनीज्यभौमा: सूर्याष्टतर्काग्निमितं १२ ८ । ६ ३ पुरस्तात् ॥ अस्या : फलंयथा । रवेर्लत्ताविचहरीनिस्वंकोजीविनिर्दिशेन्मरणम् । चान्द्रीनाशं कुर्यादृबोधीनाशंवदन्धवम् ॥ सौरीमरणंकरोतिवधूविनाशं ब्रूहस्पतेर्लत्ता । मरणंलत्ताराहो : कार्यविनाशंभृगोर्वदति ॥

लत्तिका । स्त्री॰ गोधायाम् । लति : सौत्र : । क्रदिभिदिललिभ्य : कि दितितिकन् ॥ लत्तायाम् ॥

लपनम् । न॰ आनने । मुखे ॥ लप्यतेनेन । लपव्यक्तायांवाचि । करणेल्युट् ॥ भाषणे ॥

लपितम् । न० वचने ॥ लप० । भावे क्तः । त्रि० उक्ते । कथिते ॥ लप्यतेस्म । लप० । क्तः ॥

लप्सिका । स्त्री० सर्पिः पयोभ्यांपक्वखाद्यवस्तुनि । लपसी० ल्लापसोतिच० ख्यातायाम् ॥ सायथा । समितांसर्पिषाभृष्टांशर्करांपयसिक्षिपेत् । तस्मिन्घनीकृतेन्यस्येल्लवङ्गमरिचादिकम् ॥ सिद्धैषालप्सिकाख्यातागुणानस्यावदाम्यहम् ॥ लप्सिकावृंहणीवृष्याबल्यापित्तानिलापहा । स्निग्धाश्लेष्मकरीगुर्वीरोचनीतर्पणीपरम् ॥

लब्ध : । त्रि० प्राप्ते ॥ सातेभवतुसुप्रीतादेवीशिखरवासिनी । उग्रेणतपसालब्धोययापशुपतिः पतिरिति लभ्यतेस्म । डु लभष् प्राप्तौ ॥ क्तः ॥

लब्धप्रशमनम् । न० न्यायलब्धधनस्य सत्पात्रेप्रतिपादने ॥ राज्यस्यचिरलब्धस्यप्रशमनंपरिपन्थिनाम् । रक्षनप्रतिकाराभ्यांलब्धप्रशमनंविदुः ॥

लब्धलक्ष : । त्रि० आयुधविदि । लक्षात्प्रच्युतशरे ॥ लब्धंलक्षंयेन ॥

लब्धवर्ण : । पुं० विचक्षणे ॥ विदुषि । पण्डिते ॥ लब्धोवर्णः स्तुतिर्येन ॥

लब्धव्य : । त्रि० प्राप्तव्ये । लभ्ये ॥

लब्धप्रवेश : । त्रि० प्राप्तप्रवेशे ॥

लब्धा । स्त्री० नायिकाभेदे ॥

लब्धि: । स्त्री० प्राप्तौ ॥ डु लभष् । स्त्रियांक्तिन्नाबादिभ्यः ॥

लभस: । पुं० धने ॥ याचके ॥ वाजिबन्धनरज्जौ ॥ लभते । डु लभष् । अत्यविचमितमीत्यादिना० असच् ।

लभ्य : । त्रि० युक्ते ॥ लब्धव्ये ॥ लभ्यते । डु लभष् । पोरदुपधादितियत् ॥ लाभे ॥

लमक: । पुं० ऋषिविशेषे ॥ रमते । रम० । रमेरश्चलोवेतिकन् ।

लम्पट: । पुं० षिड्गे ॥ मूर्खे ॥ यथा श्रीभागवते । यथैहिकामुष्मिककामलम्पटः सुतेषु दारेषु धनेषुचिन्तयन् । शङ्कत० विद्वान्कुकलेवरात्ययात्० यस्तस्ययत्नः श्रमएवकेवलमिति ॥ ऐहिकामुष्मिककामेषु०लम्पटोमूर्खः सुतादिषुयोगक्षेमंचिन्तयन्० कुत्सितस्यकलेवरस्य० अत्ययात् मृत्योः शङ्कत । तथाविद्वानपि सन्यः शङ्कत० तस्ययत्नः श्रमएवेत्यर्थः ॥ लोलुपे ॥

लम्पाक: । पुं० लम्पटे ॥ देशविशेषे ॥

लम्पापटह: । पुं० वाद्यप्रभेदे । पटहे ॥

लंफ: । पुं० प्लुतगतौ । लांफ०इ० भा० ॥

लम्ब: । पुं० नर्त्तके ॥ अङ्गे । कान्ते उत्कोचे ॥ अम्लभेदे ॥ घंटादौ लम्बमानरेखासूत्रे ॥ त्रि० दीर्घे ॥ लम्बते । लबिअवस्रंसने । अच् ॥

लम्बकर्ण : । पुं० अङ्कोठपादपे ॥

छगले । राक्षसे । हस्तिनि ।। श्ये नपक्षिणि ।। दीर्घश्रोत्रे ।। त्रि० दीर्घश्रोत्रवति ।।

लम्बकर्णी । स्त्री० गोविशेषे ।।

लम्बकेश : । पुं० विष्टरे ।। सतुविवाह कालेवरोपवेशनार्थंसार्द्धहितयवा- मात्रत्तवलिताधोमुखाग्रसङ्ख्याताद् र्भा : । यथा । ऊर्द्ध्वकेशोभवेद्ब्रह्मा लम्बकेशस्तुविष्टर : । दक्षिणावर्त्त कोब्रह्मावामावर्त्तस्तुविष्टर: ।। केशो ऽस्याग्रम् । त्रि० दीर्घकेशयुक्ते ।।

लम्बदन्ता । स्त्री० सैंहलीपिप्पल्या म् । त्रि० वृहद्दशनविशिष्टे ।।

लम्बन : । पुं० कफे ।। लम्बते । लवि० । नन्द्यादित्वाल्ल्यु : ।। न० नाभिलम्बितकण्ठिकादौ । लल न्तिकायाम् ।।

लम्बमान : । त्रि० लम्बायमानेवस्तु नि ।।

लम्बबीजा । स्त्री० सैंहल्यांपिप्पल्या म् ।।

लम्बा । स्त्री० पद्मालयायाम् । गौ र्याम् ।। तिक्ततुम्ब्याम् ।। दक्षदुहि तृविशेषे ।। हिमालयकन्याविशे षे ।

लम्बिका । स्त्री० घण्टिकायाम् । उपजिह्वायाम् । तालुस्थसूक्ष्मजिह्वा याम् ।।

लम्बित : । त्रि० लम्बमानेमाल्यादौ ।। शब्दिते ।। स्रंसिते ।। लम्बते । लवि० । क्त : । इट् ।।

लम्बोदर : । पुं० श्रीगणेशे । गजान ने ।। उड्डाने ।। त्रि० बाहुले । औदरिके ।। लम्बमुदरंयस्यस : ।।

लम्बोष्ठ : । पुं० )
लम्बौष्ठ : । पुं० ) उष्ट्रे त्रि० लम्बितौ ष्ठे ।। लम्बावोष्ठौयस्यस : । ओत्वो ष्ठयो : समासे वा ।।

लम्भनम् । न० प्रतिलम्भे । लाभे ।। ध्वनौ ।।

लम्भनीय : । त्रि० प्रापणीये ।।

लम्भा । स्त्री० वाटशृङ्खलायाम् ।।

लम्भित : । त्रि० प्रयुक्ते ।। प्रापिते याचिते ।। लभेर्ण्यन्तात्कर्म्मणि क्त : । रभेरशब्लिटोरितिनुमाग म : ।।

लम्भुक : । त्रि० लम्भनशीले । लब्ध रि ।।

लय : । पुं० विनाशे ।। संश्लेषे ।। तौर्य्यत्रिकसाम्ये । गीतवा द्यपादादिन्यासानांक्रियाकालयो: साम्ये ।। लयनम् । लीङ्श्लेषणे । एरच् ।। लीयन्तेस्मिन्ध्यंतेषनेन वा । प्रलये । मोक्षे ।। लीयतेस्या न्नहयमस्मिन्निति० सुषुप्तौ ।। अख ण्डवस्त्वनवलम्बनेनचित्तवृत्ते र्नि द्रायाम् ।। न० उशीरे । लीयते ।। लीङ् ० । पचाद्यच्

लयनम् । न० गृहे । वेश्मनि ॥ लीयतेऽस्मिन् । लीङ्‌ ल्युट् ॥

लयपुत्री । स्त्री० नर्त्तक्याम्

लयारम्भ : । ) पुं०सर्वेशिनिनटे ॥
लयालम्ब : । )

लल : । पुं० विलासे ॥ लडति । लड विलासे । ललतेवा । ललईप्सायाम् । पचाद्यच् । पूर्ववडलयोरैक्यम् ॥ ईप्सायाम् ॥

ललज्जिह्व : । पुं० क्रमेलके । उष्ट्रे ॥ शुनि ॥ त्रि० हिंस्रे ॥

ललत् । त्रि० विलासयुक्ते ॥ उन्मन्यनविशिष्टे ॥ जिह्वाक्रियाविशिष्टे ॥ सर्पे ॥ ललते : कर्त्तरिशतृ ॥ ईप्साविशिष्टे ॥ उपसेवायुक्ते ॥ भाषणविशिष्टे ॥

ललदम्बु : । पुं० लिम्पाके ॥

ललन: । पुं० बाले ॥ साले ॥ प्रियाले ॥ न० केलौ ॥ चालने ॥ अति विस्तारवदनाजिह्वाललनभीषणा॥

ललना । स्त्री० विशेषाङ्गनायाम् । कामिन्याम् । नारीभेदे ॥ जिह्वायाम् ॥ ललते । लल० चुरादीनां वाणिजितिपक्षे ल्युर्युज्वा॥ लडति । लडविलासे । बहुलमन्यत्रापीतियुच् । डलयोरैक्यम् । टाप् ॥

ललनाप्रिय : । पुं० कदम्बे । कामिनीवल्लभे ॥ न० ह्रीवेरे ॥

ललन्तिका । स्त्री० लम्बने । नाभिलंबिकण्ठिकायाम् ॥ किञ्चिदवलम्बमानकण्ठभूषणे ॥ लडति । लड० । लट : शतृ । उगितश्चेति ङीप् । डलयोरैक्यम् । ललन्त्येव । स्वार्थेकन् ॥ गोधायाम् ॥

ललाक : । पुं० मेहने ॥

ललाटम् । न० अलिके । गोधौ ॥ भाले ॥ ललंभ्रुवोरुपरिस्थाने । विलासमीप्सांवा०अटति० । अटगतौ । कर्मण्यण् ॥ लडतिललतेवा । लडललधातुभ्यांबाहुलकाट्टाटच् ॥ अस्यशुभाशुभलक्षणमुक्तं गारुडे यथा । उन्नतैर्विपुलै : शङ्खैर्ललाटैर्विषमैस्तथा । निःस्वाधनवन्तस्वर्धेन्दुसदृशैर्नरा : ॥ आचार्या : शुक्तिविशालै : शिरालै : पापकारिण : । उन्नताभिशिराभिस्तुस्वस्तिकाभिर्नेश्वरा : ॥ निम्नैर्ललाटैर्बधार्हा:क्रूरकर्मरतास्तथा । संवृत्तैश्चललाटैश्चकृपणाउन्नतैर्नृपा : ललाटोपसृतास्तिस्रोरेखास्यु: शतवर्षिणाम् । नृपत्वंस्याच्चतसृभिर यु : पञ्चनवत्यथ ॥ अरेखेणायुर्नवतिर्विच्छिन्नाभिश्चपुंस्वला : । केशान्तोपगताभिस्त्वशीत्यायुर्नरोभवेत् ॥ पञ्चभि : सप्तभि : षड्भि : पञ्चाशद्बहुभिस्तथा । चत्वारिंशच्चवक्राभिस्त्रिंशद्भ्रूलग्न

गामिभि: ॥ विंशतिर्वामवक्राभि रायु: षड्भिरल्पकम्। नपृथू बालेन्दुनिभं भ्रुवौचाथललाटकम् ॥ शुभमर्द्धेन्दुसंस्थानमतुङ्गं स्यात्तदीमशम्। इति ६५ अध्याय: ॥

ललाटकम्। न० प्रशस्तललाटे ॥ ललाटमात्रे ॥

ललाटन्तप:। पुं० सूर्ये ॥ ललाटं तपति। तपसन्तापे। असूर्यंलला टयोरितिखश्। मुम् ॥

ललाटिका। स्त्री० स्वर्णादिकृतेभाल भूषणे। पत्रपाश्यायाम्। पानेपा टी० बिन्दीबेना० टीकाटीको०इ तिख्याते ॥ ललाटस्यालङ्कार:। ललाटेभवोऽलङ्कारोवा। कर्णल लाटात्कनलङ्कारे।

ललामम्। न० पुं० लाञ्छने। ध्वजे ॥ शृङ्गे ॥ प्रधाने॥ भूषाया म्॥ रम्ये ॥ बालधौ ॥ पुण्ड्रे। अश्वादीनांभालेऽन्यवर्णचिह्ने ॥ तुरङ्गे ॥ प्रभावे। अश्वस्यभूषाया म्॥ लडनम्। लडवाल्ये० ल डविलासेवा। सम्पदादित्वाक्किप्। डलयोरेकता। ललममतिअमग त्यादौ। कर्मण्यण् ॥

ललामकम्। न० पुरोभागेन्यस्ते ललाटपर्य्यन्तमागतेशिखालंबिमा ल्ये ॥ ललाममिव। इवार्थेकन् ॥ मुण्डमालायाम्।

ललाम। न० अश्वे ॥ चिह्ने ॥ शृ- ङ्गे ॥ पताकायाम्॥ रम्ये ॥ प्रधा ने ॥ भूषायाम् ॥ पुण्ड्रे ॥ पुच्छे ॥ प्रभावे लडनम्० लल्। लल माअमति। अम०। बाहुलकात् कनिन् ॥

ललामी। स्त्री० उत्क्षिप्तिकायाम्। कर्णाभरणविशेषे ॥

ललित:। पुं० प्रातर्गेयेरागविशेषे ॥ यथा। प्रातर्गेयास्तुदेशागीललि त: पठमञ्जरी। विभाषाभैरवीचै वकामोदोगीगुण्डकीर्य्यपि ॥ अस्यस्व रूपंयथा। प्रफुल्लसप्तच्छदमाल्यधा रीयुवातिगौरोऽलसलोचनश्री:। विनि: सरन्वासगृहात्प्रभातेवि लासिवेशोललित: प्रदिष्ट: ॥ न० स्त्रीणांशृङ्गारभावजक्रियाविशेषरू- पेहावविशेषे॥ सुकुमारविधानेनभ्रू नेत्रादिक्रियासहितकरचरणाङ्गवि न्यासोललितम्। तथाच। सुकु माराङ्गविन्यासेमसृणाललितंभवेत् । यथा। सभ्रूभङ्गंकरकिशलयाव- र्त्तनैरापतन्तीसालिम्यन्तीललित- ललितालोचनस्याञ्चलेन। विन्य स्यन्तीचरणकमलेलीलयास्वैरयाते- नि: शङ्काचप्रथमवयसानर्त्तिताप ङ्कजाक्षी ॥ भ्रूनेत्रादिक्रियायालि सुकुमारविधानत:। हस्तपादाङ्ग विन्यासस्तस्यालललितंविदुरित्यन्ये

पि ॥ ग्रनाचार्योपदिष्टं स्याल्लिलितं रतिचेष्टितमित्यन्ये । ग्रपिच । विन्यासभङ्गिरङ्गानांभ्रूविलासमनोहरा । सुकुमाराभवेद्यचललितंतदुदीरितम् ॥ विषमवृत्तप्रभेदे । यथा । नयुगसकारयुगलञ्चभवतियदिचेत्तृतीयके । तदुदितमुरुमतिभिर्ललितंयदिशेषमस्यसकलंयथोद्गता ॥ यथा । व्रजसुन्दरीसमुदयेनमुदितमनसास्मपीयते । हिमकरगलितमिवामृतकंललितंमुरारिमुखचन्द्रबिम्ब्युतम् ॥ त्रि० ईप्सिते ॥ कोमले ॥ ललिते । मधुरे ॥ लडेर्लर्लिवाभाविक्त : । डलयोरभेद : ॥ सुन्दरे ॥

ललितकान्ता । स्त्री० मङ्गलचण्डिकायाम् ॥

ललिता । स्त्री० देवीविशेषे ॥ गोपीविशेषे ॥ नदीविशेषे ॥ सागराद्दक्षिणात्पूर्वंमहादेवावतारिता । वैशाखशुक्लपक्षस्यतृतीयायांनरस्तुय : । कुर्य्याद्वैललितास्नानंसशम्भुसदनंव्रजेत् ॥ कस्तूर्याम् ॥ लपसिकाभेदे ॥ मेघरागस्यरागिण्याम् ॥

ललितासप्तमी । स्त्री० भाद्रशुक्लसप्तम्याम् ॥

ललितिका । स्त्री० शार्ङ्गनुतीर्थे ॥

लल्ल : । पुं० ग्राचार्यविशेषे । वराहमिहिरसुते ॥

लव : । पुं० लेशे ॥ विनाशे । छेदने कालभेदे । ग्रष्टादशनिमेषास्तुकाष्ठाद्वयंलवइतिहेमचन्द्रोक्ते ॥ पक्षिविशेषे । लवा० इ० भा० प्र० गोपुच्छलोमसु ॥ रामनन्दने ॥ लवोमृष्टोलव : । वाल्मीकिना० लवैर्गोपुच्छलोमभिरुन्मृष्टोगर्भक्लेदोयस्य ॥ नत्रांशे ॥ लवनम् । लूयतेवा । लूञ् छेदने । ग्रदोरप् ॥ विलासे । इतिविनाशस्थानेपाठोविश्वहेमचन्द्रयो : सम्मत : ॥ न० लामज्जके ॥ जातीफले ॥ लवङ्गे ॥

लवङ्गम् । न० देवकुसुमे । श्रीसंज्ञे । श्रीपुष्पे । वारिसम्भवे । भृङ्गारे । लौंग० इ० भा० प्र० ॥ गुणास्तु । लवङ्गंकटुकंतिक्तंलघुनेत्रहितंमतम् । दीपनंपाचनंरुच्यंकफपित्तास्रनाशकृत् ॥ तृष्णांछर्दिंतथाध्मानंशूलमाशुविनाशयेत् । कासंश्वासञ्चहिक्काञ्चक्षयंक्षपयतिध्रुवम् ॥ लुनाति० लूयतेवा । लूञ् । तरत्यादिभ्यश्चेत्यङ्गच् ॥

लवङ्गकम् । न० ) लवंगे
लवंगकलिका । स्त्री० )

लवंगलता । स्त्री० पुष्पविशेषे । गन्धराजइतिकथित ॥

लवण : । पुं० समुद्रविशेषे ॥ राक्षसभेदे । लवणासुरे ॥ रसविशेषे । पटौ ॥ पृथ्व्यग्निगुणबाहुल्याल्लव

णष्ठचसम्भव :। षड्गुणायथा। लवण : शोधनोरुच्य: पाचन: कफपित्तद : । पुंस्त्ववातहर : कायशैथिल्यमृदुताकर : ॥ सोतियुक्तोऽक्षिपाकासपित्तकोष्ठक्षयापकृत् ॥ अपिच । लवणोरुचिकृद्वह्नि सेोऽग्निदायीपचन: स्वादुकरश्च । रसितोनितरांजरास्त्रपित्तं शितिमानश्चददातिकुष्ठकारी । पुनश्च । लवण : क्लेदनस्तीक्ष्ण: पाचनोदीपन : सर : स्निग्धोरुचिकर : स्यन्दीदृष्टिशुक्रहरोलघुरिति ॥ पुनश्च। षस्थिभेदे॥ न॰ सैन्धवादौ॥ तथाहि । सामुद्रंयत्तुलवणमक्षीवंवशिरश्चतत् । सैन्धवोस्त्रीशीतशिवंमाणिमन्थश्चसिन्धुजे ॥ रौमकंवसुकंपाक्यंविडश्चकृतकेद्वयम् । सौवर्चलेऽक्षरुचके॰तिलकंतत्रमेचके इत्यमर : । लवणं नेत्रयोर्हितंप्रायश : सैन्धवंविनेतिविशेष : पूर्वाह्णकालेचाश्नानांप्रायशोलवणंहितम् । शूलानाहविबन्धघ्नंलवणं सैन्धवंवरमितिसिद्धयोगीश्वरसङ्ग्रह : । त्रि॰ लवणरसयुक्ते। सलवणे । सलूणा॰ इ॰ भा॰ ॥ लुनातिजाड्यम् । लूञ्॰ । नन्द्यादित्वाल्ल्यु : । लवणाल्लुगिति लिंगात्सत्वम् ॥ लवणेनसंसृष्ट : । लवण : सूप:॰ लवणायवागू:॰

लवणंशाकम् । संसृष्टेर्थेजातस्य ठकोलवणाल्लुगितिलुक् ॥ लवणोसत्यस्मिन्नवा । अर्शआद्यच् ॥

लवणकिंशुका । स्त्री॰ महाज्योतिष्मत्याम् ॥

लवणक्षार : । पुं॰ क्षारविशेषे । लोणारे ॥

लवणखानि : । स्त्री॰ रुमायाम् । सांभरलवणोत्पत्तिस्थाने ॥ लवणाकरमात्रे ॥

लवणतृणम् । न॰ लोणतृणे । तृणाम्ले । पटुतृणके । अम्लकाण्डे ॥

लवणत्रयम् । न॰ विड्रुचकसैन्धवेषु ॥

लवणधेनु : । स्त्री॰ दानार्थंलवणादिनिर्मितधेनौ ॥

लवणपञ्चकम् । न॰ सैन्धवादिषु ॥ सैन्धवंरुचकञ्चैवविडंसामुद्रकंगडम् ॥

लवणमद : । पुं॰ लोणारे । लवणक्षारे ॥

लवणा । स्त्री॰ नदीविशेषे । त्विषिमहाज्योतिष्मत्याम् ॥ लोनाख्यशाके इतिकश्चित् ॥

लवणाकर : । पुं॰ लवणोत्पत्तिस्थले ॥ रुमायाम् ॥

लवणाकरजम् । न॰ लोणारे ॥

लवणाचल : । पुं॰ दानार्थंलवणादिकृतेपर्वते ॥

लवणाब्धि: । पुं॰ लवणोदे । क्षारा ब्धौ ॥

लवणाब्धिजम् । न॰ सामुद्रलवणे ॥

लवणाम्भा: । पुं॰ लवणाब्धौ ॥ लवणं क्षारमम्भोयस्य ॥

लवणारजम् । न॰ लोणारक्षारे ॥

लवणाष्टकम् । न॰ सैन्धवादिषु ॥ तेयथा । लवणाष्टकमेतत्स्यात्सैन्धवञ्च सुवर्चलम् । विडं समुद्रसञ्जातमुद्भिदं रोमकं गडम् ॥

लवणोत्तमम् । न॰ सैंधवे ॥

लवणोत्थम् । न॰ लोणारक्षारे ॥

लवणोद: । पुं॰ लवणार्णवे ॥ लवणमुदकं यस्य । उत्तरपदस्यचेत्युदकस्योदादेश: ॥

लवनम् । न॰ छेदने । अभिलावे । लूणनाइति भाषाप्रसिद्धे ॥ लूञ्॰ ल्युट् ॥

लवनी । स्त्री॰ फलवृक्षविशेषे । यो षाजायाम् । अयिमायाम् । लोना॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

लवपति: । पुं॰ नवांशेशे ॥

लवली । स्त्री॰ सुगन्धमूलायाम् । कोमलवल्कलायाम् । नोयाडि॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ फलवृक्षे ॥ अस्याफलगुणायथा । लवलीफलमस्रार्श: कफपित्तहरं गुरु । विशदं रोचनं रूक्षं स्वादक्षं तुवरं रसे ॥

लवाक: । पुं॰ छेदनद्रव्ये ॥

लवाणक: । पुं॰ दात्रादौ ॥ लूयतेऽनेन । लूञ्॰ । आणकोलूधूशिङ्घिधाञ्भ्यइत्याणक: ॥

लवि: । त्रि॰ छिदुरे ॥

लवित्रम् । न॰ दात्रे ॥ लूयतेऽनेन । अर्त्तिलूध्वित्यादिना॰ इत्र: ॥

लशुन: । पुं॰ न॰ रसोने । अस्यपर्यायादयोयथा । रसोनोलशुनोरिष्टोम्लेच्छकन्दोमहौषधम् । महाकन्दोरसोनोन्योगृञ्जनोदीर्घपत्रक: ॥ गन्धाकृतिरसैस्तुल्योगृञ्जनस्तुपलाण्डुना । दीर्घनालाग्रपत्रत्वाद्भिद्यतेसौपलाण्डुत: ॥ अश्नाति॰ अश्नुतेवा । अशभोजने॰ अशूव्याप्तौवा । अश्रेर्लश्चेत्युनन् ॥

लष्व: । पुं॰ नर्तके ॥ लष्यते । लषकान्तौ । सर्वनिघृष्वेतिसाधु: ॥

लसत् । त्रि॰ उल्लसति ॥ प्रकाशमाने ॥

लसमान: । त्रि॰ दीप्यमाने ॥

लसा । स्त्री॰ हरिद्रायाम् ॥

लसिका । स्त्री॰ लालायाम् ॥

लसितम् । न॰ चेष्टिते ॥

लसीका । स्त्री॰ इक्षुरसे ॥ त्वङ्मांसमध्यगेरसे ॥

लस्त: । त्रि॰ श्लिष्टे ॥ क्रीडिते ॥ शिल्पयुक्ते ॥ लस्तेस्म । लसश्लेषणक्रीडनयो: । क्त: ॥

लस्तक: । पुं॰ धनुषोमध्यभागे ॥

स्वार्थे कन् ॥

लस्तकी । पुं० कार्मुके । धनुषि ॥

लहरिः । स्त्री० )
लहरी । स्त्री० ) तरङ्गे ॥ महातरङ्गे । उल्लोले ॥ कल्लोले ॥

ला । स्त्री० दाने । ग्रहणे ॥ लातेः क्विप् ॥

लाक्षकी । स्त्री० सीतायाम् ॥

लाक्षणिकः । त्रि० लक्षणाभिज्ञे ॥ लक्षणमधीते० वेद वा । क्रतूक्थादिसूत्रान्ताट्ठक् ॥ लक्षणयाप्रतिपादके । लक्षणागम्येऽर्थे ॥

लाक्षा स्त्री० राक्षायाम् । जतुनि । यावे । पलङ्कषे । द्रुमामये ॥ लाक्षा वर्ण्याहिमाबल्यास्निग्धाचतुवराल घुः । अनुष्णाकफपित्तास्रहिक्काकासज्वरप्रणुत् । व्रणोरःक्षतवीसर्पक्रिमिकुष्ठगदापहा । अलक्तकोगुणैस्तद्विशेषाद्व्यङ्गनाशनः ॥ लाक्ष्यते । लक्ष्यिल्पयोगेचुरादिः । बाहुलकात्सः । यद्वा लक्ष्यते । लक्ष आलोचने । घञ् । पृषोदरादित्वात्० लाक्षारोचनेतिनिर्देशाद्वादीर्घः ॥ लक्ष्यतेऽनयाश्वा । गुरोश्च हलइत्यः । प्रत्ययाण् । अजादित्वाट्टाप् ॥

लाक्षातरुः । पुं० पलाशवृक्षे ॥

लाक्षातैलम् । न० लाक्षादितैलमिति प्रसिद्ध पक्वतैलविशेषे ॥ तद्द्विविधं स्वल्पंवृहच्चेति ॥

लाक्षापुष्पा । स्त्री० गुलाबाख्यशतपत्र्याम् ॥

लाक्षाप्रसादः । पुं० पट्टिकालोध्रे ॥

लाक्षाप्रसादनः । पुं० रक्तलोध्रे । क्रमुके । पट्टिकायाम् ॥ लाक्षाप्रसीदत्यनेन । षद्लृ० । करणे तिल्युट् ॥

लाक्षावृक्षः । पुं० कोशाम्रे ॥ पलाशवृक्षे ॥

लाक्षिकः । पुं० लक्षाभिज्ञे ॥

लाक्ष्यिकः । पुं० लक्ष्याभिज्ञे । अध्येतरिवेदितरि च० क्रतूक्थादिसूत्रस्यानुसूलं च्यलक्षणे० इतिवार्त्तिकात् ठक् ॥

लाघवम् । न० आरोग्ये ॥ अप्रभुत्वे अनादरविशये । लघिमनि ॥ कार्यैङ्गमनेहेतुर्धर्मोलाघवम्० गौरवप्रतिद्वन्द्वि यतोऽग्ने रूर्द्ध्वज्वलनम् भवति । तदेव लाघवंकश्चित् तिर्यग्गमनहेतुः यथावायोः । यथा कारणानांश्लिष्टत्वहेतुर्लाघवम्० गुरुत्वे मन्दाग्निरिति ॥ सत्वगुणे । लघोर्भावः । इगन्ताच्चलघुपूर्वादित्यण् ॥

लाङ्गलम् । न० कुसुमविशेषे । भूमिकर्षणयन्त्रविशेषे । गोदारणे

। सीरे । हले । हयराजे । ताले ॥ ग्रहद्रोषविशेषे । लिङ्गे ॥ लङ्ग ति । लगिगतौ । बाहुलकात्कल च् । दीर्घश्च ॥

लाङ्गलग्रह: । पुं॰ कृषके ।

लाङ्गलचक्रम् । न॰ कृषिकर्मणिह लाकारचक्रविशेषे ॥

लाङ्गलदण्ड: पुं॰ ईषायाम् । हल युगयोर्मध्यकाष्ठ ॥ लाङ्गलस्य दण्ड: ॥

लाङ्गलपद्धति:।स्त्री॰सीतायाम्। हल रेखायाम् ॥ लाङ्गलस्यपद्धति:॥

लाङ्गलिक: पुं॰ स्थावरविषभेदे ॥

लाङ्गलिका।स्त्री॰ लाङ्गलीवत् ॥

लाङ्गलिकी । स्त्री॰ अग्निशिखौष धौ ॥ लाङ्गलंपुष्पविशेषोऽस्त्य स्या: । अतइनिठनाविति ठन् । जातेरितिगौरादित्वाद्वाङीष् ॥

लाङ्गली । पुं॰ बलदेवे ॥ हलिनि ॥ नारिकेले ॥ सर्पे ॥ लाङ्गलमस्त्य स्य । इनि: ॥

लाङ्गली । स्त्री॰ लाङ्गलाकारपुष्पज लशाकविशेषे । शारद्याम् । तोय पिप्पल्याम् ॥ कांचडा॰ इ॰ गौ॰ दे॰ भा॰ लाङ्गलाकारोस्त्यस्या: अच् । गौरादि: ।

लाङ्गुलम् । न॰ पुच्छे ॥

लाङ्गुली । पुं॰ कपिकच्छ्वाम् ॥

लाङ्गूलम् । न॰ पुच्छे । लूने । वालहस्ते । वालधौ ॥ लङ्गति । लगि॰ । खर्जपिञ्जादिभ्यऊरोल चाविस्यूलच्॰ लङ्गेर्वृद्धिश्च ॥ शेफसि । शिश्ने । कुसूले ॥

लाङ्गूलिका । स्त्री॰ पृश्निपर्ण्याम् ॥

लाङ्गूली । पुं॰ वानरे ॥ ऋषभना मौषधौ ॥

लाज: । पुं॰ आर्द्रतण्डुले ॥

लाजा: ।पुं॰ भृष्टब्रीहौ। भृष्टधान्ये ॥ एतेचव्रीहयोभृष्टास्तेलाजाइतिसंज्ञि ता: । यवादयश्चयेभृष्टास्ते धाना: परिकीर्त्तिता: ॥ लाजाश्चयवधा नाश्चतर्पणा: पित्तनाशना: । गोधूमयावनालोत्था: किंचिदुष्णा श्चदीपना: । तृष्णातीसारशमनो- धातुसाम्यकरा: परा: मन्दाग्निवि षमाग्नीनांबालस्थविरयो:पिताम् ॥ देयश्चसुकुमाराणांलाजमण्ड:सुसं- स्कृत: ॥ अपिच । येषांस्युस्तण्डु लास्तानिधान्यानिसतुषाणिच। भृ ष्टानिस्फुटितान्याहुर्लाजाइतिम- नीषिण: लाजा: स्युर्मधुरा: शी तालघवोदीपनाश्चतेस्वल्पमूत्रमला रूक्षाबल्या: पित्तकफच्छिद: । छ र्द्यतीसारदाहास्रमेहमेदस्तृषापहा: ॥ न॰ उशीरे ॥ लज्यंते । लज भर्जने ॥ घञ् ॥

लाजा । स्त्री॰ अक्षते ॥

लाञ्छन: । पुं॰ रागीधान्ये ॥ न॰

नामनि ॥ चिह्ने ॥ लाञ्छ् यते। लाञ्छिलक्षणे ल्युट् ॥

लाटः। पुं॰ देशविशेषे । सयथा। अवन्तीतः पश्चिमेतुवैदर्भाद्दक्षिणोत्तरे। लाटदेशः समाख्यातस्तत्रश्रीशक्तिसङ्गमे ॥ अंशुके। वस्त्रे ॥ जीर्णभूषणादिषु ॥

लाटानुप्रासः। पुं॰ शब्दालङ्कारेषुवृत्तिप्रभेदे ॥ यथा शब्दस्तुलाटानुप्रासोभेदेतात्पर्यमात्रतः ॥ शब्दगतोनुप्रासः। शब्दार्थयोरभेदेप्यन्वयमात्रभेदाल्लाटजनवल्लभत्वाच्च॰लाटानुप्रासः॥ एषपदानुप्रासइत्यन्ये। पदानांसः। सङ्गति लाटानुप्रासः उदाहरणम्। यस्य नसविधेदयिताददहनस्तुहिनदीधितिस्तस्य। यस्यचसविधेदयितादवदहनस्तुहिनदीधितिस्तस्य ॥ पदस्यापि ॥ अपिशब्देनसङ्गतिसमुच्चीयते उदाहरणम्। वदनंवरवर्णिन्यास्तस्याः सत्यंसुधाकरः। सुधाकरः क्वनुपुनः कलङ्कविकलीभवेत् ॥

लापः। पुं॰ कथने ॥ लपनम्। लप॰। घञ् ॥

लाभः। पुं॰ मूलधनादधिकार्जिते। विक्रेयापटादीनांमूल्यादधिकयाप्यद्रव्ये। फले। दृष्टप्राप्तौ ॥ आत्मलाभात्परोलाभो नास्तीति विदुर्बुधा मतम् ॥ प्राप्तौ ॥ लब्धादिकादशेद्याने ॥ लभ्यते। दुलभप्राप्तौ। अकर्तरीतिघञ्। संज्ञायामित्यस्यप्रायिकत्वात् ॥ उत्कृष्टपुरुषार्थलाभेसत्यमत्यधर्मकामयमानोमुखः ॥

लामज्जकम्। न॰ वीरणमूले। नलदे। उशीरवत्पीतश्च्विस्तृणविशेषे ॥ लामज्जकंहिमंतिक्तंलघुदोषत्रयास्रजित्। त्वगामयस्वेदकृच्छ्रदाहपित्तास्ररोगनुत् ॥

लालनम्। न॰ अत्यन्तस्नेहकरणे। प्रेमपूर्वकबालकादरणे ॥ यथा। लालनेबहवोदोषास्ताडनेबहवोगुणाः। तस्मात्पुत्रश्चशिष्यश्चताडयेन्नतुलालयेत् ॥ चतुर्वर्षावधिसुतान्लालयेत्पालयेत्पिता। ततः षोडशपर्यन्तंगुणान्विद्याश्चशिक्षयेत् ॥ विंशत्यब्दाधिकान्पुत्रान्प्रेरयेद्गृहकर्मसु। ततस्तांस्तुल्यभावेनमत्वास्नेहंप्रदर्शयेत् ॥

लालसः। पुं॰ लालसायामर्थेषु। त्रि॰ उत्सुके। भृशंलसनमिच्छर्यङन्तादच ॥

लालसा। स्त्री॰ औत्सुक्ये। तृष्णातिरेके॥ महाभिलाषे ॥ याञ्चायाम्। लोले ॥ दोहदे ॥ लज्जायाम्। औत्सुक्यादिकौक्षसत्र ॥ यथा। लसकान्तौ। भृशंलसन

मित्यर्थे यङ्लुकाद : । टाप् ॥ यद्वा । ललसनम् । लसदीप्तौ । यगन्त : । अप्रत्ययात् । टाप् ॥

लालसीकम् । न० पिच्छिले ॥ विजिले ॥

लाला । स्त्री० सृणिकायाम् । स्यन्दिन्याम् । मुखस्रावे । लाल० इ० भा० ॥ लालयति । लल० । चुरादि : । पचाद्यच् ॥

लालाटिक : । पुं० आज्ञैकवशविशेषे ॥ मौहूर्त्तिकानांयोगविशेषे ॥ यथा । लग्ने १ऽर्के व्ययलाभयो १२ । ११ र्भृगुसुतेकर्मस्थिते १० भूमिजे ० राहौधर्मविनाशयो ९ । ८ रविसुते । द्यूने ७ ऽरिसून्वो ६ । ५ र्विधौ । बन्धौ ४ज्ञे० सहजार्थयो : ३ । २ सुरगुरावेवं ललाटोद्भवेयोगेनाशमुपैतिमानवपति : पूर्वादिकाष्ठांगत : ॥ यात्रालग्ने सूर्य स्थितेसतिपूर्वस्यांलालाटिकोयोग : स्यात् । एवंद्वादशकादशस्थानस्थितेशुक्रे आग्नेय्याम् । दशमस्थिते कुजे दक्षिणस्याम् । नवमाष्टमस्थानस्थे राहौनैरृत्याम् । सप्तमस्थे शनौपश्चिमायाम् । षष्ठपञ्चमस्थानस्थितेविधौवायव्याम् । चतुर्थस्थानस्थितेबुधे उत्तरस्याम् । तृतीय द्वितीयस्थानस्थितेगुरावैशान्यांलालाटिकोयोग : ॥ इति । एवंललाटोद्भवेयोगेपूर्वादिदिशाङ्गतोनाशमुपैतीत्यर्थ : ॥ प्रकारान्तरञ्च । यथा । दिनेशाधिष्ठितोराशिर्यदालग्नगतस्तदा । यातुर्मृत्युप्रद : प्राच्यांदिशिसूर्योललाटग : ॥ सूर्यस्थराशितस्तस्माद्द्वादशेलग्नगेगृहे । एकादशेवाग्नेय्यांदिशिशुक्रोललाटग : ॥ ललाटग : कुजोयाम्येदशमेलग्नगेगृहे ॥ लग्नगेनवमेराशावष्टमेवापिनैरृते । ललाटग : सैंहिकेयोयातुर्द्राङ्निधनप्रद : ॥ लग्नगेसप्तमेराशौशनि : प्रत्यग्ललाटग : । षष्ठराशौलग्नगतेपञ्चमेवापिचन्द्रमा : । ललाटगोवायुदिशियातुर्मृत्युप्रदस्तदा ॥ चतुर्थराशौलग्नस्थेबुध : सौम्येललाटग : राशौतृतीयेलग्नस्थेद्वितीयेचेन्द्रपूजित : । ललाटगश्चन्द्रमौलिदिंशि यातुर्विनाशद : । लालाटिनिर्दिगधीशेदिग्बलिविहगेललाटगेवापि । प्रतिभृगुजे प्रतिशशिजे कालाशुद्धो चसन्त्यजेद्यात्राम् ॥ स्पष्टमाह मार्त्तण्डे । लग्नेऽर्केन्दुजशुक्रसौरिगुरव : प्राग्व्ययेविद्भृगूखे शुक्रार्ककुजेन्दुजा अथतपो मृत्यो : सितश्चासुरा : । द्यूनेशुक्रकुजार्कजारिपुसुतेचन्द्रश्चशङ्का : सुखे चेत्तद्विकयो : सितश्चगुरव : प्राच्यादिलालाटिन : ॥ चि० प्रभेभार्

लट्दर्शिनि सेवके । प्रभुभावनिदर्शिनि ॥ ललाटं कोपप्रसादचिह्नं ललाटमेववा पश्यति । संज्ञायां ललाटकुक्कुट्यौ पश्यतीतिठक् ॥ कार्यक्षमे सेवके ॥ दूरे स्थित्वा प्रभोर्ललाटं पश्यति न तु कार्येषूपतिष्ठत इत्यर्थः ॥ त्रि॰ ललाटसम्बन्धिनि ॥

लालाभक्ष : । पुं॰ नरकविशेषे ॥

लालामिक : । त्रि॰ ललामग्राहिणि ॥ ललामं गृह्णाति । प्रतिकण्ठार्थललाम्मेतिठक् ॥

लालामेह : । पुं॰ प्रमेहविशेषे ॥ यथा । लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् । प्रमेहतीतिशेषः । औषधन्तु । गुडूच्याः स्वरसः पेयो मधुनासर्वमेहजित् । हरिद्राचूर्णयुक्तो वा रसो धात्र्याः समाक्षिकः ॥

लालाविष : । पुं॰ लूतादौ ॥

लालास्राव : । पुं॰ ऊर्णनाभे ॥

लालिक : । पुं॰ महिषे ॥

लालित : त्रि॰ पालिते ॥ उपस्कृते ॥

लालित्यम् । न॰ ललितस्यभावे ॥ ष्यञ् ॥

लाव : । पुं॰ पक्षिविशेषे । लवा॰ इ॰ भा॰ प्र॰ ॥ अस्यप्रभेदामांसगुणाश्चयथा । लावाविष्किरवर्गस्युस्ते चतुर्धामताबुधैः । पांशुलो गौरकोन्योस्तिपौण्ड्रको दर्भकस्तथा ॥ लवाविष्किरकाः स्निग्धाज्वरघ्नाग्राहिणोहिमाः । पांशुलः श्लेष्मलस्तेषु वीर्योष्णो निलनाशनः ॥ गौरो लघुतरोरूक्षो वह्निकारी त्रिदोषजित् । पौण्ड्रकः पित्तकृत्किञ्चिल्लघुर्शीतकफापहः ॥ दर्भकोरक्तपित्तघ्नोहृद्रामयहरोहिमः । पौण्ड्रकः किञ्चिदुक्तः ॥ लावयति । लूञ् ॰ । स्वार्थेण्यन्तः । पच् । छेदे ॥

लावक : । पुं॰ लावपक्षिणि । लघुजङ्गले ॥

लावणम् । न॰ लवणे ॥ नस्ये ॥ इतिरत्नमाला ॥ त्रि॰ लवणेनसंस्कृते ॥ इतिहेमचन्द्रः ॥ लवणसम्बन्धिनि ॥

लावणिक : । पुं॰ लवणवणिजि ॥ लवणंपण्यमस्य । लवणाट्ठञ् ॥ त्रि॰ लावण्यवति ॥ लावण्यंकान्तिविशेषोस्यास्ति । अतइनिठनौ विनिठन् । ठस्येकः । यस्येतिचेत्यकोपेहलस्तद्धितस्येतियलोपः ॥ लवणेनसंस्कृते ॥

लावण्यम् । न॰ कान्तिविशेषे ॥ तस्यलक्षणं यथा । मुक्ताफलेषुच्छायायास्तरलत्वमिवान्तरा । प्रतिभातियदङ्गेषु लावण्यंतदिहोच्यते ॥ लवणात्विट्विद्यतेयस्यतल्लवणम्

। अर्शआदिभ्योऽच् । लवणस्य भावः । दृढादित्वात् ष्यञ् ॥ यद्वा । लवणास्त्रिट् । सैव । चतुर्वर्णादित्वात् स्वार्थे ष्यञ् ॥ रूपे ॥

लावण्यार्जितम् । न० विवाहकाले श्वशुराभ्यां दत्तधने ॥ यथा । प्रीत्या दत्तञ्च यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा । पादवन्दनिकं यत् तत् लावण्यार्जितमुच्यते ॥ लावण्यं शीलनैपुण्यादि तथाच पादप्रणतायै शीलादिमत्त्वेवास्त्रियै श्वशुरादिना दत्तं तृतीयं स्त्रीधनमित्यर्थः ॥

लावा । स्त्री० लावपक्षिणि ।

लाबुः । ) स्त्री० तुम्ब्याम् ।
लाबुकम् । ) न०

लाबुका । स्त्री० तुम्बिकाभेदे ॥

लाबुकी० सूक्ष्मवीणायाम् ॥ इ० हा० ली० ॥

लाबू । स्त्री० तुम्ब्याम् ॥

लाषुकः । त्रि० लषनशीले ॥ लष्यति । लषतितच्छीलः । लष कान्तौ ॥ लषपतपदेत्युकञ् ॥

लासः । पुं० नृत्यमात्रे ॥ स्त्रीणां नृत्ये । यूषे ॥ लसनम् । लस श्लेषणक्रीडनयोः । घञ् ॥

लासकः । पुं० लास्यकारिणि । नर्त्तके ॥ केकिनि । मयूरे । वेष्टके ॥ लसति । लस० ण्वुल् ॥

लासिका । स्त्री० नृत्यकारिण्याम् ॥ नर्त्तक्याम् । लसति । लस० ण्वुल् । प्रत्ययस्थादितीत्वम् ॥

लास्फोटनी । स्त्री० आस्फोटन्याम् । वेधनिकायाम् ॥

लास्यम् । न० नृत्ये । सुकुमारनृत्ये । तालालयाश्रये ॥ पुंनृत्यं ताण्डवं प्राहुः स्त्रीनृत्यं लास्यमुच्यते ॥ अपिच । छुरितं यौवतञ्चेति लास्यं द्विविधमुच्यते । यत्राभिनयाद्यैर्भावै रसैराश्लेषचुम्बनैः ॥ नायिकानायकौ रङ्गे नृत्यतश्छुरितं हि तत् । मधुरं बहुलीलाभिर्नटीभिर्यन्नृत्यते ॥ वशीकरणविद्याभं तल्लास्यं यौवतं मतमिति ॥ लस० । ऋहलोर्ण्यत् ॥ तौर्यत्रिके ॥ पुं० नर्त्तके ॥

लास्यकम् । न० नृत्ये ॥

लास्या । स्त्री० नर्त्तक्याम् ॥

लिकुचः । पुं० लकुचे । डहौ । बडहल इ० भा० प्र० ॥ लक्यते । लक आस्वादने । बाहुलकादुचप्रत्ययः । पृषोदरादिः ॥ न० चुक्रे ॥

लिक्का । स्त्री० लिक्षायाम् ॥

लिक्षा । स्त्री० यूकाण्डे । लिक्षिकायाम् । लीक० लीख० इ० भा० प्र० केशकीटे । यूकाभेदे ॥ लक्ष्यते । लक्ष आलोचने । घञ् । पृषोदरादित्वादस्य त्वम् ॥ परि

मोणविशेषे । कचायाष्टके ॥ यथा । चसरेणवोष्टौविज्ञे यालिचैकाप रिमाणत :। इतिमनु : ॥ अपिच । जालान्तरगतेभानौयच्चाणु हश्य तेरज : । तैश्चतुर्भिर्भवेल्लिक्षालि क्षाषड्भिस्सर्षपइति ॥

लिक्षिका । स्त्री० लिक्षायाम् ॥

लिखनम् । न० लेखने ॥ अखण्डनीयायांविधिलिपौ । यथा । यस्ययल्लिखनंपूर्वंयत्नकालेनिरूपितम् । तद्देवखण्डितुंराधे नम्येनाहक्षमोविधि :॥ विधातुश्चविधाताहंये षांयल्लिखनंकृतम् । ब्रह्मादीनाञ्चक्षुद्राणांनतत्खण्ड्यंकदाचन ॥ इ० ब्र० वै० पु० ॥

लिखित : पुं० धर्मशास्त्रप्रवर्त्तके मुनिविशेषे ॥ न० वर्णसंस्थाने, लिपौ ॥ लिख्यतेस्म । लिखअक्षर विन्यासे । क्त :॥ त्रि० लिखितप चादौ ॥ यथा। प्रमाणंलितंभुक्ति: साक्षिणश्चेतिकीर्त्तितम् ॥ इति मिताक्षरायांयाज्ञवल्क्य : ॥

लिखिताक्षरविन्यास : । पुं० लिपौ ॥

लिगु : । पुं० मूर्खे ॥ भूप्रदेशे ॥ मृगे ॥ न० चित्ते ॥ लिगति । लगेस ङ्गे । खरुशङ्कितिकुप्रत्ययान्त : साधु : ॥

लिङ्गम् । न० चिह्ने ॥ शिवमूर्त्तिवि शेषे ॥ यथा । मेहलिङ्गार्चनात्किञ्चित्पुण्यमभ्यधिकंक्वचित् । इ तिविज्ञाययत्नेनपूजनीय : सदा शिव : ॥ तथा । दुर्गार्चनरतोनित्यंमहापातकसम्भवै :। दोषैर्न लिप्यतेवीरपद्मपत्र मिवाम्भसेत्या चारादर्शे भविष्यपुराणम् ॥ साङ्ख्योक्तप्रकृतौ ॥ हेतौ ॥ धर्मे ॥ व्याप्ये । व्यापकस्यस्मारके ॥ व्यक्ते ॥ तच्चलिङ्गंप्रधानस्य । महदादि सूक्ष्मपर्य्यन्ते ॥ लिङ्गनाज्ज्ञापना द्बुद्ध्यादिषु , लयङ्गच्छतीति० सूक्ष्मशरीरे । पञ्चज्ञानेन्द्रियाणि० पञ्चकर्मेन्द्रियाणि० पञ्चप्राणा : मनोबुद्धिश्चेतिसप्तदशात्मके ॥ यथा । बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्म नसाधिया । शरीरंसप्तदशभि : सूक्ष्मंतल्लिङ्गमुच्यते ॥ लिङ्ग्यतेगम्यतेयेनेति०बुद्ध्यादौ ॥ अनुमाने ॥ तत्त्रिविधम् । अन्वयव्यतिरेकिके वलान्वयिकेवलव्यतिरेकिचेति ॥ उपक्रमादिषट्सु ॥ यथा । उपक्र मोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्तीचलिङ्गंतात्पर्य निर्णये ॥ प्रमाणविशेषे । शब्दसा मर्थ्येलिङ्गम्। यथाहु: । सामर्थ्यं सर्वभावानांलिङ्गमित्यभिधीयते० इति० । सामर्थ्यंरूढिरेव०समा ख्यातोभेद:। तेनर्षिर्देवसदनन्दा

मीतिमन्त्रस्यकुशलत्वनाङ्गत्वंनतु॰ उत्पादित्वनाङ्गत्वम् । तस्यबर्हिर्दामीतिलिङ्गात्तत्त्ववनं प्रकाशयितुं समर्थं स्यात् । एवमन्यत्रापि लिङ्गादिविनियोगोद्रष्टव्यः । तदिदं लिङ्गंवाक्यादिभ्योबलवत् । अतएवस्योनंतेसदनंकृणोमीतिमन्त्रस्यपुरोडाशसदनकरणाङ्गत्वं सदनंकृणोमीतिलिङ्गात्॰नतु वाक्यात् ॥ मनसि ॥ अवगम्यतेज्ञायतेऽवगच्छतियेनतल्लिङ्गमितिपूज्यपादाः ॥ पुंस्त्वादौ ॥ शेफसि । मेहने ॥ अस्यशुभाशुभलक्षणं यथा । दीर्घलिङ्गेनदारिद्रं स्थूललिङ्गेननिर्धनः । कृशलिङ्गेनसौभाग्यं ह्रस्वलिङ्गेनभूपतिः॥ कर्कशैः कठिनैर्लिङ्गैः परदाररतः सदा । रमतेचसदादासीम् निर्धनोभवतिध्रुवम् ॥ कृशलिङ्गेनसूक्ष्मेण रक्तलिङ्गेनभूपतिः परस्त्रींरमतेनित्यंनारोगांश्चलभेभवेत् ॥ कृशलिङ्गेनरक्तेनलभतेचोत्तमाङ्गनाम् । राज्यंसुखञ्चदिव्याङ्ग्याः कन्यकायाः पतिर्भवेत् ॥ इतिसामुद्रकम् ॥ अपिच । दक्षिणावर्त्तलिङ्गोयः सभवेत् पुत्रवान्नरः वामावर्त्ते तथाकन्याः सुश्लक्ष्णैश्चतथैवच ॥ स्थूलैः शिरालैः कठिनैर्नरादारिद्र्यभाजनाः ॥ ऋजुभिर्वर्तुलैर्लिङ्गैः पुरुषाः सुखभागिनः ॥ यस्यपादोपविष्टस्य भूमिंस्पृशतिमेहनम् । भोगवान् सतुविज्ञेयोनरोदारिद्र्यभाजनः ॥ भूमौपादोपविष्टस्ययस्यस्पृशतिमेहनम् । भोगवान्सतुविज्ञेयस्तथातुरगमेहनः ॥ स्थूलग्रन्थियुतेलिङ्गेनरोऽतिसुखभाग्भवेत् । लिङ्गेनमृदुनामर्त्योम्रियतेकृच्छ्रपीडित इति ॥ लिङ्ग्यतेऽनेन । लिगि गतौ । हलश्चेतिघञ् । वेषे ॥

लिङ्गकः । पुं॰ दन्तशठे । कपित्थे ॥

लिङ्गधारिणी । स्त्री॰ देवीविशेषे । नैमिषेतुमहास्थानेदेवीसालिङ्गधारिणीतिदेवीगीता ॥

लिङ्गपुराणम् । न॰ शैवेमहापुराणे । तच्छ्लोकसंख्या यथा । एकादशसहस्राणिलिङ्गाख्यंचातिविस्तृतमिति ॥

लिङ्गवर्द्धनः । पुं॰ कपित्थवृक्षे ।

लिङ्गवर्द्धिनी । स्त्री॰ अपामार्गे ॥

लिङ्गवृत्तिः । पुं॰ धर्मध्वजिनि । जीविकार्थंजटादिचिह्नधारिणि ॥ जीविकादिनिमित्तन्तुयोबिभर्त्तिजटादिकम् । धर्मध्वजीलिङ्गवृत्तिरिदंयंतत्रनिगद्यते ॥ लिंगमाश्रमादिचिह्नधारणंवृत्तिर्जीविकाहेतुर्यस्यसः ॥

लिङ्गशरीरम् । न॰ सप्तदशावयवे

सूक्ष्मशरीरे ॥ सप्तदशावयवास्तु । ज्ञानेन्द्रियपंचकम् कर्मेन्द्रियपंचकं प्राणादिवायुपंचकं बुद्धिमनसीचेति ॥ लिङ्ग्यते ज्ञायते प्रत्यगात्मसद्भावो येन • तल्लिङ्गम् । लिगि • चलने इति घञ् । लिङ्गस्य तत्शरीरञ्चेति विग्रहः ॥

लिङ्गस्थः । पुं० ब्रह्मचारिणि । वर्णिनि ॥

लिङ्गानुशासनम् । न० वररुच्यादिकृतिनाम्नां लिङ्गबोधके ग्रन्थे ॥ तच्च शासनानर्हम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति समासान्ताद्धुति सूत्रभाष्योक्तेर्लिङ्गानुवदनं लोकादेव सिद्धमिति निर्णयात् ॥

लिङ्गालिका । स्त्री० दीनायाम् । क्षुद्रमूषिके ॥

लिङ्गी । पुं० प्रव्रजितादिषु । ब्रह्मचार्यादिषु ॥ धर्मध्वजिनि ॥ वेशधरे ॥ गजे ॥ आत्मनि ॥ लिङ्गमस्यास्ति । इनिः ॥ न० व्यापके ॥

लिङ्गिनी । स्त्री० लताविशेषे । बहुपत्र्याम् । शिवमल्लिकायाम् । चित्रफलायाम् । चाण्डाल्याम् । आपस्तम्भिन्याम् । पंचगुरिया० इ० भाषाप्रसिद्धे ॥

लिन्दुः । त्रि० पिच्छिले अशुद्धे ॥ वैदिकोयम् ॥

लिपिः । स्त्री० लिखिताक्षरे । लिबी ॥ सापञ्चविधा यथा । मुद्रालिपिः शिल्पलिपिर्लिपिर्लेखनिसम्भवा । गुण्डिकागुणसम्भूता लिपयः पञ्चधा स्मृताः ॥ एताभिर्लिपिभिर्व्याप्ता धरित्री शुभदा हरेति वाराहीतन्त्रोक्तेः ॥ लेखन्या लिखितं विप्रे मुद्राभिरङ्कितञ्च यत् । शिल्पादिनिर्मितं यच्च पाठ्यं प्राप्यं च सर्वदेति मुण्डमालातन्त्रोक्तेश्च ॥ लिप्यते । लिप उपलेपे । इगुपधात् किदितीन् ॥ लिपिः प्रमाणं सर्वेषां सर्वत्रैव प्रशस्यते । लिपिशास्त्रव्यवहारेषु न विनश्येच्चिरं यतः इति श्रीमहानिर्वाणतन्त्रम् ॥

लिपिकरः । पुं० लेखकी ॥ लिपिं करोति । कृञः० । दिवाविभेत्यादिना टः ॥

लिपिका । स्त्री० लिपौ ॥

लिपिकारः । पुं० लेखके ॥ लिपिं करोति । कर्मण्यण् ॥

लिपी । स्त्री० लिपौ ॥ लिप्यते लिपेरिन्नन्तात् कृदिकारादक्तिन इति ङीष् ॥

लिप्तः । त्रि० कृतलेपने । विलिप्ते ॥ विषदिग्धे विषाक्ते ॥ भुक्ते । भक्षिते ॥ दिग्धे ॥ लिप्यते स्म । लिप० । क्तः ॥ यद्वा । लिनाति । लीश्लेषणे । लीयते वा । लङ्ग्श्लेषणे । लीरीङोर्ह्रस्वः पुट्चतरौ श्लेषणकुत्सनयोरिति तप्र-

स्ययोधातोर्न्न :प्रत्ययस्पुट् ।। मिलिते ।।

लिप्तक : । त्रि॰ विषाक्तबाणे । दिग्धे ॥ स्वार्थे कन् ।।

लिप्ता । स्त्री॰ घटिकायाम् । दण्डे ॥

लिप्तिका । स्त्री॰ दण्ड ॥ लिप्तैव । स्वार्थे कन् ।।

लिप्सा । स्त्री॰ इच्छायाम् । वाञ्छायाम् ॥ लभे : सन्नन्तादप्रत्ययादिति॰अ : ॥ लाभेच्छायाम् ॥ यथा । अर्थिनिखिलसतिलिप्सादात रिदित्सातुटूरतोपास्ता । आसांक्षणकथेयंरमापतेर्नोचिताभवती-ति ।।

लिप्सु : । त्रि॰ लब्धुमिच्छौ । गृध्नौ ॥ लुब्ध । अभिलाषुके ॥ लभे : सन्नन्तादु : ।।

लिवि : । स्त्री॰ लिपौ । लिखितवर्णे ॥ लिप्यते । लिप॰ । इगुपधात्लि॰दितीन् । बाहुलकात्पस्यबत्वम् ॥ लिबि : सौत्रोधातुर्वा ।।

लिविकर : । पुं॰ लिपिकरे । लिविं करोति । डुकृञ्॰ । दिवाविभेति ट : ॥

लिम्प : । पुं॰ लेपनकर्त्तरि ॥

लिम्पट : । पुं॰ षिड्गे ॥ इतिहारावली ।

लिम्पाक : । पुं॰ जम्बीरे ॥ खर्र ॥ न॰ निम्बूके । पातनीबू॰ इ॰ भा॰ ॥

लिष्व : । पुं॰ नर्त्तके ॥ लष्यते । लषकान्तौ । सर्वनिघृष्वेतिसाधु : उपधेत्वम् ॥

ली : । पुं॰ श्लेषणे ॥ चपले । लीङ् : क्विप् ॥

लीका । ) स्त्री॰ लिक्षायाम् । इतिश
लीचा । )

ब्दरत्नावली ॥

लीढ : । त्रि॰ आस्वादिते । भक्षिते ॥ लिह्यतेस्म । लिहआस्वादने । क्त : ढत्वधत्वष्टुत्वलोपदीर्घा: ॥

लीन : । त्रि॰ प्राप्तलये । विलीने ॥ छन्ने ॥ लीयतेस्म । लीङ्श्लेषणे । क्त : । स्वादयश्रदितइतिनत्वम् ॥

लीला । स्त्री॰ केलौ ॥ विलासे ॥ शृङ्गारभावचेष्टायाम् । गतिहास्यैक्षणादिभि : शृङ्गारभावतो-जातक्रियानुकरणे ॥ प्रियस्यानुकृतिर्लीलाश्लिष्टावाग्वेषचेष्टितै: । अलब्धप्रियसमागमयास्वचित्तविनोदार्थंप्रियस्ययावेशगतिहृष्टिहसितभणितेरनुकृति क्रियतेसालीलेत्यर्थ: तथाहि । अप्राप्तवल्लभसमागमना यिकाया : सख्या : पुरोचनिजचित्तविनोदबुद्ध्या । आलापवेशगतिहास्यविलोकनाद्यै : प्राणेश्वरानुकृतिमाकथयन्तिलीलामितिभरत : ॥ शोभायाम् ॥ जयनन्दी :

लीङ्• । सम्पदादित्वात्क्विप् । लियंलाति । ला• । आतोनुपेति कः । यद्वा । लिलायनम् । लिला दीप्तौ• कण्ड्वादिः । भिदाद्यङ् । अप्रत्ययादितिवा । पृषोदरादिः ॥ यद्वा । लयनम् । लीङोबाहुल काद्गोगुणाभावश्च ॥

लीलाखेलः । पुं• अतिशर्करीछन्दः १५ प्रभेदे ॥ तल्लक्षणोदाहरणे यथा एकन्यूनौविद्युन्मालापादौचेल्लीलाखेलः । यथा । पायाद्वोगोविन्दः कालिन्दीकूलस्थोयोचक्रे• रासोल्लासः क्रीडद्गोपीभिः सार्द्धंलीलाखेलः । मन्दाकिन्यास्तीरेपान्ते स्वैरक्रीडाभिर्लीलो• यद्वद्देवानामीशः स्वर्वेश्याभिः खेलन्तीभिः ॥ त्रि• विलाससुभगे ॥

लीलावती । स्त्री• केलियुक्तायाम् ॥ विलासवत्याम् ॥ शृङ्गारभावचेष्टाऽन्वितायाम् । खेलाविशिष्टायाम् ॥ भास्कराचार्य्यस्यपत्न्याम् ॥ भास्कराचार्य्यकृतेपाटीगणितग्रन्थे ॥ न्यायग्रन्थविशेषे ॥ वेश्याविशेषे ॥ मात्रावृत्तविशेषे ॥ तल्लक्षणोदाहरणं यथा । लघुगुरुवर्णनियमविरहितमिहद्विमुकलयचतुष्कलमष्टगणम् । द्वात्रिंशत्कलविरचितमिदमतिशयसहृदयहृदयदुःखहरणम् । लीलावतिकाभवतिचकरकर्णहिजगणजगणभगणकलिता• फणिनायकपिङ्गलविरचितमङ्गलतत्त्वममलगुम्फनललिता ॥ यथा । गोकोटिंप्रतिदिनमिहवितरन्द्विजवरनिवहेमुदमातनुषेरिपुतिमिरदलनकरदृप्तकुशेशयमपिलक्ष्मीवसतिंतनुषे ।। दुरितविलयमिलितस्वजनोदयनृपराजवलयमवलयसिरणेत्वयिचलतिचलतिवसुधावसुधाधिपकीर्त्तिसिंहधरणीरमणे ॥ लीलाशोभाऽस्त्यस्याम् । मतुप् । ङीप्॥

लीलोद्यानम् । न• देववने ॥

लुक्कायितः । त्रि• अन्तर्हिते ॥

लुङ्गः । पुं• मातुलुङ्गे । बीजपूरे ॥ लुञ्ज्यते । लुजिभाषार्थः । घञ् । चजोरितिकुत्वम् । न्यङ्क्वादित्वाद्वा ॥

लुङ्गुषः । पुं• छोलङ्गे ॥

लुठनम् । न• वेल्लने । अश्वस्यभूमौ पुनःपुनः श्रमोपहनने । लोट न• द्र• भा• प्र• ॥

लुठितः । त्रि• श्रमशान्त्यर्थंमुहुर्मुहुः परावृत्तेश्वे । उपावृत्ते ॥ वेल्लते । अपावृत्ते । परावृत्ते ॥ लुठतिस्म । लुठप्रतिघाते । अकर्मकत्वात्क्तः ॥

लुण्टकः । पुं• शाकविशेषे । नव्या• द्र• गौ• भा• प्रसिद्धे ॥

लुण्टाकः । पुं• चौरे ॥

लुण्टाकी । स्त्री॰ चौरायांस्त्रियाम् ॥

लुण्ठकः । त्रि॰ लुण्ठयकारके ॥

लुण्ठनम् । न॰ हयलुठिते ॥ लूटइति प्रसिद्धे साहसे ॥ लुठिस्तेये । ल्युट् ॥

लुण्ठाकः । पुं॰ परभृत्यौ । द्विके । काके ॥

लुण्डिका । स्त्री॰ ) न्यायसारिण्याम् ।
लुण्डी । स्त्री॰ )

लौंडी॰ इ॰ भा॰ प्र॰ ।

लुप्तम् । न॰ चौर्यधने । त्रि॰ विलुप्ते । लोपवति ॥

लुप्तवर्णपदम् । न॰ ग्रस्ते ॥ लुप्तोवर्णः पदंवायत्रवाक्ये पदेवातत् ॥

लुप्तसंवत्सरः । पुं॰ विलुप्ताब्दे ॥ यथा । अतिचारगतोजीवस्तंराशिंनैतिचेत्पुनः । लुप्तसंवत्सरोज्ञेयोगर्हितः सर्वकर्मसु ॥ अस्यापवादस्तु ब्रुषिमेषेभ्रषेकुम्भे यद्यतीचारगोगुरुः । नतत्रकाललोपः स्यादित्याहभगवान्यमः ॥ अन्यच्च । मासान्दशैकादशवाप्रभुज्यराशेर्यदाराशिमुपैतिजीवः भुङ्क्तेनपूर्वंचपुनस्तथापिन लुप्तसंवत्सरमाहुरार्याः । लुप्ताब्ददोषोऽविमतेनमध्येसोमाङ्गवायाः सुरनिम्नगायाः ॥

लुप्ताब्दः । पुं॰ लुप्तसम्बत्सरे ॥

लुब्धः । पुं॰ व्याधे ॥ लम्पटे ॥ त्रि॰ आकाङ्क्षिणि । यथा । परधनाभिलाषुके ॥ धर्मार्थंस्वद्रव्यत्यागासमर्थे ॥ मातरंपितरंभ्रातॄन्सर्वांश्चसुहृदस्तथा । घ्नन्तिह्यसुतृषोलुब्धाराजानः प्रायशोभुवि ॥ लुभ्यतिस्म । लुभगार्ध्ये । गत्यर्थेतिक्तः ॥

लुब्धकः । पुं॰ व्याधे ॥ स्वार्थे॰ सं ज्ञायांवाकन् ॥ आर्द्रायाम् ॥

लुलायः । पुं॰ महिषे ॥ लुडति । लुडसंश्लेषणे । इगुपधेतिकः । डलयोरेकत्वम् । अयप्राति । अयगतौ । अच् । लुलश्चासावायश्च । यद्वा । लुडाते । लुडलोडने । भिदाद्यङ् । लुला विलोडिताचापोयेन । लुल विमर्दनेसौत्रोधातुर्वा ॥

लुलायकन्दः । पुं॰ महिषकन्दे ॥

लुलायकान्ता । स्त्री॰ महिष्याम् ॥

लुलायः । पुं॰ महिषे ॥ लुडति । लुड॰ । कः । डलयोरभेदः ॥ यद्वा । लुडाते । लुडविलोडने । भिदाद्यङ् । लुलविमर्दनेसौत्रोधातुर्वा । बाहुलकादायप्रत्ययः ॥ यद्वा । अयते । अय॰ । अच् । लुलश्चासौअयश्च ॥

लुलितः । त्रि॰ आन्दोलिते । तरलिते ॥ उत्सृष्टे ॥ लिप्ते यथा । वात्स्यद्युःखातिरेकोमललुलितवपुरिति ॥

लुषभः। पुं॰ मत्तमातङ्गे। मत्तग जे॥ रोषति। रुषहिंसायाम्। रुषेर्निंलुषचेत्यभच्॰ इतिरुषि रभच्मित्कित्वातोलुषादेशश्च॥

लूः। स्त्री॰ लवने। लवनम्। लूञ् भावेक्विप्॥ लुनातिवा। अत्रवा च्यलिङ्गः॥

लूता। स्त्री॰ ऊर्णनाभे। मर्कटके॥ पिपीलिकायाम्॥ रोगविशेषे। म र्मव्रणे॥ लुनाति। लूञ्॰। ह सिमृग्रिण्वामीतितन्। संज्ञापू र्वकत्वाद्गुणाभावः॥

लूतातन्तुः। पुं॰ मर्कटकजाले। मक डीकाजाला॰ इ॰ भा॰ लूताया न्तुः॥

लूतामर्कटकः। पुं॰ लूतामर्कटकः पुंस्त्री॰ नवमालिकयोः कपाविति-हेमचन्द्रः॥

लूतारिः। पुं॰ दुग्धफेनीक्षुपे॥

लूतिका। स्त्री॰ ऊर्णनाभौ। मर्कट-के। मकडी॰इ॰भा॰॥ लूतैव। स्वार्थेकः॥

लून:। त्रि॰ छिन्ने। लूयतेस्म। लूञ्॰। क्तः। ल्वादिभ्यश्चेतिनत्वम्॥

लूनकः। पुं॰ भिन्ने। भेदिते॥ प-शौ॥ यावादिषु॰पशौलूनवियात-इतिस्वार्थेकन्॥

लूनिः। स्त्री॰ छेदे॥

लूमम्। न॰ पुच्छे। लाङ्गूले॥ लूय-ते। लूञ्॰। बाहुलकान्मक्॥

लेखः। पुं॰ अदितिनन्दने। देवे सुरे॥ ध्यानार्थैर्विचार्यतेलिख्यते। लिखअक्षरविन्यासे। अकर्त्तरिच कारकेसंज्ञायामितिकर्मणिघञ्। ग्रीवाहस्तपादेषुतिस्रोलेखाःसन्ति यस्येतिवा। अर्शआद्यच्॥ ले-ख्ये॥

लेखकः। पुं॰ लिपिकरे। अक्षरचु-ञ्चौ। लेखनकर्त्तरि। लिखारी॰ इ॰भा॰॥ लिखति। लिख॰। शि ल्पिनिष्वुन्। ण्वुल्वा॥ अस्यल-क्षणानियथा। सर्वदेशाक्षराभिज्ञः सर्वशास्त्रविशारदः। लेखकःक थितोराज्ञः सर्वाधिकरणेषुवै॥ शी र्षोपेतान्सुसम्पूर्णान्समश्रेणिग-तान्समान्। अक्षरान्वैलिखेद्यस्तुले खकःसवरःस्मृतः॥ उपायवा क्यकुशलः सर्वशास्त्रविशारदः। बह्वर्थवक्ताचाल्पेनलेखकःस्यान्नृ गूत्तम॥ वाक्याभिप्रायतत्त्वज्ञोदेश कालविभागवित्। अनाहार्योनृपे भक्तोलेखकःस्यान्नृगूत्तम॥ इति मात्स्ये १८६ अध्यायः॥ अपि-च। सकृदुक्तगृहीतार्थोलघुहस्तो-जिताक्षरः। सर्वशास्त्रसमालोकी प्रकृष्टोनामलेखकः॥ राजलेखक लक्षणंयथा। ब्राह्मणोमन्त्रणाभिज्ञो राजनीतिविशारदः। नानालिपि

न्त्रोमेधावीनानाभाषासमन्वितः॥ मन्त्रणाचतुरोधीमान्नीतिशास्त्रार्थकोविदः। सन्धिविग्रहभेदज्ञोराजकार्यविचक्षणः॥ सदाराजहितान्वेषीराजसन्निधिसंस्थितः। कार्याकार्यविचारज्ञःसत्यवादीजितेन्द्रियः॥ स्वरूपवादीशुद्धात्माधर्मज्ञोराजधर्मवित्। एवमादिगुणैर्युक्तःसएवराजलेखकः॥ नृपानुवर्त्तीसततंनृपविश्वासरक्षकः। नृपतेर्हितकान्वेषीसएवराजलेखकः॥ इतिपत्रकौमुदी॥

लेखनः। पुं॰ काशे। न॰च्छर्दने॥ भूर्जे। लिपिन्यासे॥ लिख॰। ल्युट्॥

लेखनाञ्जनं। न॰ अञ्जनविशेषे॥ यथा। दद्यागडस्त्वक्शिलाकाचशङ्खचन्दनसैन्धवैः। चूर्णितैरञ्जनंप्रोक्तंपुष्पामार्दिनिकृन्तनम्॥ कुक्कुटाण्डस्त्वक्। शिलामनःशिला॥

लेखनिकः। पुं॰ लेखहारे॥ लिखिपुपरहस्तेनस्वहस्तस्यचलेखके। यः स्वहस्तंपरहस्तेनलिखितेपुविलेखयेत्॰तच॥

लेखनी। स्त्री॰ कलमे। वर्णतूलिकायाम्॥

लेखनीयः। त्रि॰ लेख्ये॥

लेखर्षभः। पुं॰ जिष्णौ। शक्रे। इन्द्रे॥ लेखिषुऋषभः। सप्तमीनियोगविभागात्समासः। लेखं ऋषभइवेतिवा। उपमितसमासः॥

लेखहारः।
लेखहारकः। } पुं॰ पत्रवाहके॥ लेख हरति। हृञ्॰। कर्मण्यण्॥

लेखा। स्त्री॰ लिपौ॥ राजिकायाम्। रेखायाम्॥ लिख्यते। लिख॰। भिदादिपाठादङ्गुणौ॥ ज्यायाम्॥

लेखार्हः। पुं॰ श्रीतालवृक्षे। मृदुच्छदे॥

लेख्यम्। न॰ भागदानादिव्यवहारकरणे। पत्रे॥ त्रि॰ लिखितव्ये। लेखनीये॥ व्यवहाराङ्गकक्रियापादाङ्गे। यथा। यन्मासिकेपिसमयेभ्रान्तिःसञ्जायतेयतः। धात्राक्षराणिसृष्टानिपत्रारूढन्यतःपुरा॥ लेख्यन्तुद्विविधंप्रोक्तंस्वहस्तान्यकृतंतथाअसाक्षिकंसाक्षिमञ्चसिद्धिर्देशस्थितेस्तयोः॥ मृतास्तुसाक्षिणोयत्रधनिकर्णिकलेखकाः तदप्यपार्थंकरणमृतेत्वाधेःस्थिराश्रयात्॥ दर्शितंप्रतिकालस्तुपठितंश्राविततुयत्। लेख्यसिद्ध्यतिसर्वंमृतेष्वपिचसाक्षिषु॥

लेख्यचूर्णिका। स्त्री॰ तूलिकायाम्॥

लेख्यपत्रः। पुं॰ तालद्रुमे॥ न॰ लेखनीयपत्रे॥

लेख्यस्थानम्। न॰ अन्यकुड्याम्।

दफ्तरद्दतीतरजनभा० प्र०

लेण्डम् । न० गूथे । शकृति । लेण्ड इ० भा० प्र० ॥

लेण्डूज: । पुं० इङ्गुदीजे ॥ इङ्गुदीजानवषट्पञ्चलेण्डूजास्तापिभाविनइत्यागमात् ॥

लेप: । पुं० लेपने ॥ अशनौ । अशने ॥ अनुशये । अनुबन्धे ॥ सच० इदमहमकार्षमेतत्फलंभोक्ष्ये० इत्यनुसन्धानकर्तृत्ववासनानिमित्त: । सचपुण्ये कर्मणिपुण्यरूप: ० पापेचपश्चात्तापरूपोभवति ॥ लेपनम् । लिप० घञ् ॥ सुधायाम् । चूना० इ० भा० प्र० ॥

लेपक: । पुं० पलगण्डे । राज इ० प्र० जातौ ॥ त्रि० लेपकर्त्तरि ॥ लिंपति । लिप० ण्वुल् ॥

लेपनम् । न० लेपे । चन्दनागुर्वादिनाङ्गविलेपने ॥ देवगृहादिलेपने । लीपना० इ० भा० लिपेर्ल्युट् ॥ पुं० तुरुष्कनामगन्धद्रव्ये ॥

लेपभुक् । पुं० पितामहपित्रादिषु ॥

लेपी । पुं० लेपकी । पलगण्डे । थैकर० इ० गौ० दे० भा० । राज० इ० दे० भा० ॥

लेप्य: । त्रि० लेपनीये ॥

लेप्यकृत् । पुं० लेपकी ॥

लेप्यमयी । स्त्री० काष्ठादिघटितपुत्तलिकायाम् । अङ्गुलिकारिकायाम् ।

लेभिरम् । न० उलूखले ॥

लेय: । पुं० सिंहराशौ ॥

लेलायनम् । न० चलने ॥

लेलायमान: । त्रि० अतिशयचलनविशिष्टे ॥ यथाग्निर्हविर्दहयायलेलायमानोभवति ॥

लेलिह: । पुं० सर्पे ॥

लेलिहा । स्त्री० जीवन्यासमुद्रायाम् ॥ यथा । तर्जनीमध्यमानामा:समा: कुर्यादधो मुखा: । अनामायांक्षिपेद्वामांजुलिंकृत्वाकनिष्ठिकाम् । लेलिहानाममुद्रेयंजीवन्यासेप्रकीर्त्तिता ॥

लेलिहान: । पुं० शिवे ॥ सर्पे ॥ त्रि० ललज्जिह्वे ॥ लेहातिशयकारके । पुन: पुनर्लेहनकर्त्तरि ॥ लिहेर्यङ्लुगन्तात्ताच्छील्ये चानश्प्रत्यये० गुणोयङ्लुकोरित्यभ्यासस्यगुण: ॥

लेलिहाना । स्त्री० लेलिहायांमुद्रायाम् ॥

लेश: । पुं० अल्पे कणे ॥ लिशति । लिशगतौ । पचाद्यच् ॥ लिश्यतेवा । घञ् ॥

लेशेज: । त्रि० अतिकम्पने ॥ लेशेनाल्पेनापिएजति । एजृ० । पचाद्यच् ॥

लेष्टु: । पुं० दृढमृत्पिण्डे । लोष्टे । ढीम्० ढेला० डला इ० भा० प्र० ॥

लिश्यते॰लिशतिवा । लिश॰ । बा हुलकात्तुन् ॥

लेष्टुघ्न : । पुं॰ लोष्टभेदने ।

लेष्टुभेदन : । पुं॰ कोटिशे । लोष्टभेदनमुद्गरे ॥

लेसिक : । पुं॰ काटिरोहके । हस्त्यारोहके ॥

लेह : । पुं॰ आहारे । भोजने । स्वादने ॥ लेहने ॥ लेहनम् लिहआस्वादने । घञ् ॥ लेढि । आस्वादयतिलोवा ॥

लेहनम् । न॰ जिह्वास्वादे । जिह्वयारसग्रहणे । चाटना॰ इ॰भा॰ ॥ लिहेर्ल्युट् ॥

लेह्यम् । न॰ अमृते । सुधायाम् ॥ त्रि॰लेहयोग्ये । आस्वाद्ये । यज्जिह्वायांनि :क्षिप्यरसास्वादेननिगीर्यतेकिञ्चिद्द्रवीभूतगुडरसालादित त्॥

लैङ्ग : । पुं॰ वैयाकरणे ॥ वैयाकरणाहिस्त्रीपुंनपुंसकंशब्दजातंतत्त्वमितिवर्णयंतितदयुक्तम् । स्त्रादे : शब्दस्वभावत्वे सर्वादीनांत्रिलिङ्गत्वायोगादेकस्यानेकभावत्वायोगात् । औपाधिकधर्मत्वे चतस्यावस्तुत्वात् ॥ न॰लिङ्गपुराणे ॥ त्रि॰लिङ्गसम्बन्धिनि ॥ लिङ्गस्येदम् । तस्येदमित्यण् ॥

लैङ्गी । स्त्री॰ लिङ्गिन्यामोषधौ ॥

लोक : । पुं॰ जने आत्मनि ॥ लोक्यतेअनुभूयतेशास्त्रोपदेशशीलितबुद्ध्यायमितिव्युत्पादनात् ॥ दर्शने ॥ लोक्यमानेविषये ॥ प्राणिनिकाये । भुवने ॥ त्रयोलोका : स्वर्गमर्त्यपातालानि ॥ अथसप्तलोकनामानियथा । भूर्भुव : स्वर्महश्चैवजनश्चतपएवच । सत्यलोकश्चसप्तैतेलोकास्तुपरिकीर्त्तिता : ॥ दृश्यवर्गे ॥ ग्राह्यग्राहकविषयेस्मिन्शरीरे ॥ लोकोद्विविध : प्रोक्तआत्मानात्मविभेदत : । मनुष्यपितृदेवाख्योऽनात्मलोकस्त्रिधामत : ॥ आत्मलोकस्तुस्वरूपमित्याहु : शास्त्रदर्शिन : ॥ मनुष्यलोक : पुत्रेणपितृलोकस्तुकर्मणा । विद्ययादेवलोकश्चेत्यब्रवीत्सङ्गतंश्रुति : ॥ लोक्यतेऽनुभूयते॰दृश्यते॰भुज्यते-वा । लोकृदर्शने । घञ् ॥ कर्मफले ॥ प्रसिद्धिमागमःप्राप्तोलोकइत्यभिधीयते ॥ चतुर्दशविद्यास्थानानिलोकाइतिव्याख्यातार : । लोक्यतेज्ञायतेधर्मब्रह्मादिरूपोऽर्थएभिरितिनिरुक्तेः ॥ चिदानन्दस्वरूपब्रह्मातिरिक्तस्यसर्वस्यलोकपदार्थत्वाद्देहस्यापिलोकान्तर्गतत्त्वम् ॥

लोककान्ता । स्त्री॰ ऋद्धिनामौषधे ॥

लोकचक्षु : । पुं॰ सूर्ये ॥ जनलोचने ॥

लोकजित् । पुं॰ जिने । लोकंजयति । जि॰ । सत्सूद्दिषेत्यादिनाक्किप् । तुक् । लोकान् जयत्युपरमयतीति वा । चि॰लोकजेतरि ॥

लोकतुषार : । पुं॰ कर्पूरे ॥

लोकत्रयम् । न॰ सर्वस्मिन्जगति ॥ लोकानांत्रयम् ॥

लोकदम्भक : । पुं॰ नि : क्षेपापहारादिनाजनवञ्चके ॥

लोकधातु : । जम्बुद्वीपे ॥

लोकनाथ : । पुं॰ शिवे । ब्रह्मणि ॥ विष्णौ ॥ बुद्धे ॥ लोकानांनाथ : ॥ लोकैर्नाथ्यतेयाच्यतेवाकर्मणिघञ् ॥

लोकपाल : । इन्द्रादिषु ॥ तेयथा । इन्द्रोवह्नि : पितृपतिर्नैरृतिर्वरुणोऽनिल : । धनद : शङ्करश्चैव लोकपाला : पुरातना : ॥ राजनि ॥

लोकबान्धव : । पुं॰ रवौ । सूर्य्ये ।

लोकभावन : । पुं॰ लोककर्त्तरि ॥

लोकमाता । स्त्री॰ लक्ष्म्याम् ॥ लोकानांमाता ॥

लोकयात्रा । स्त्री॰ लोकनिर्वाहे ॥ लोकाचारे । येनोपायेनमर्त्यानां लोकयात्राप्रसिद्ध्यति । तदेवकार्यं ब्रह्मज्ञैरिदंधर्मसनातनम् ॥ लोकानांयात्रा ॥

लोकलोचन : । पुं॰ सूर्ये ॥

लोकवाह्य : । त्रि॰ सर्वाचारविवर्ज्जिते । लोकाद्वाह्य : ॥

लोकवित् । पुं॰ पौराणिके भूर्भुव : स्वरितित्रयोलोका : वस्तुभूता : सन्तीतिसङ्कल्पयति ॥

लोकविनायक : । पुं॰ ग्रहविशेषे ॥

लोकविश्रुति : । स्त्री॰ जनश्रुतौ ।

लोकवृत्तम् । न॰ विचित्रपरिहासकथादिके॰ असत्प्रियाख्याने । न लोकवृत्तंवर्त्तेतवृत्तिहेतो : कथञ्चन । अजिह्मामशठांशुद्धांजीवेद्ब्राह्मणजीविकाम् ॥ लोकानाम्वृत्तम् ॥

लोकसङ्ग्रह : । पुं॰ लोकानांस्वेस्वेधर्मेप्रवर्त्तने ॥ उन्मार्गान्निवर्त्तनेच ॥ सङ्ग्रहणंसङ्ग्रह : । लोकानांसङ्ग्रहोग्रहणम् ॥

लोकसार : । पुं॰ प्रणवे ॥

लोकाकाशास्तिकाय : । पुं॰ लोकानामन्तराकाशे ॥

लोकात्मा । पुं॰ परमेश्वरे ॥ यथा । यस्याग्निरास्यंद्यौर्मूर्धाखंनाभिश्चरणौक्षिति : । सूर्यश्चक्षुर्दिश : श्रोत्रेतस्मैलोकात्मनेनम : ॥

लोकादि : । पुं॰ अग्नौ लोकानामादि : प्रथमशरीरत्वात् ॥

लोकाध्यक्ष : । पुं॰ परमेश्वरे ॥ लोकं दृश्यवर्गंस्वाभाविकेनबोधेनसाक्षात्पश्यतीति॰लोकाध्यक्ष: । लोका

नामध्येय : । लोकाध्यक्षायस्य तिवा, लोकानुग्रध्यक्षयतीतिकर्म्म ण्यण्विउपपदसमासोवा ॥

लोकापवाद : । पुं॰ लोककर्त्तृकायां निन्दायाम् ॥ लोकापवादाद्भयम् ॥

लोकायतम् । न॰ तर्कभेदे । चार्वाकदर्शने ॥ लोकेआयतम् ॥

लोकायतिक : । पुं॰ चार्वाके ॥

लोकालोक : । पुं॰ परमेश्वरे ॥ लोकमाब्रह्मस्तम्बपर्यन्त : आलोकयति प्रकाशयतेयेनस : ॥ चक्रवालेऽद्रिविशेषे ॥ लोकालोकोवह्निस्तस्या लोकालोकनियामक : । योजनायुतविष्कम्भसुङ्गशृङ्गपरिच्छद : ॥ अन्त : स्थितं लोकं वहि : स्थितञ्चालोकं नियमयतीति॰ लोकालोकनियामक : । तद्यथालोकाभावादित्यर्थ : ॥ लोकदर्शने । भावेवञ् । नलोक : अलोक : । लोकश्चालोकश्च॰ लोकालोकौ॰ प्रकाशान्धकारावत्रस्त : अन्तर्वहि : सूर्य्यकिरणानांस्पर्शास्पर्शाभ्याम् ॥

लोकालोकी । त्रि॰ अलोकदर्शिनि ॥ लोकानालोकते॰ तच्छील : । णिनि : ॥

लोकेश : । पुं॰ हिरण्यगर्भे । ब्रह्मणि ॥ लोकानामीश : ॥ बुद्धभेदे ॥ पारदे ॥

लोकेशाधिष्ठित : । पुं॰ राजनि ॥

लोकेश्वर : । पुं॰ शिवे ॥ लोकानांजनानामीश्वर : प्रभु : ॥ बुद्धभेदे ॥

लोकेश्वरात्मजा । स्त्री॰ बुद्धशक्तिविशेषे । तारायाम् । श्रियि । मनोरमायाम् ॥

लोकैषणा । स्त्री॰ देवलोकादिकामनायाम् ॥ लोकैषणेतिदेवादिलोकार्थोपासनार्थिता ॥

लोकोत्तर : । त्रि॰ लोकातीते ॥

लोकोद्धार : । पुं॰ तीर्थविशेषे ॥

लोक्य : । त्रि॰ परलोकादिसाधने । लोकायहिते ॥

लोचनम् । न॰ अश्रुणि । वाष्पे ॥

लोचक : । पुं॰ मांसपिण्डे ॥ अक्षितारकायाम् ॥ कज्जले ॥ स्त्रीभालभूषणे ॥ कदल्याम् ॥ नीलवस्त्रे ॥ कर्णपूरे । कर्णिकायाम् । कर्णाभरणे ॥ ज्यायाम् । मौर्व्याम् ॥ भूम्नयचर्म्मणि ॥ निर्म्मोके ॥ त्रि॰ निर्बुद्धौ ॥

लोचनम् । न॰ चक्षुषि ॥ अस्यशुभाशुभलक्षणंयथा । कर्णान्तै : पद्मपत्राभैर्लोचनै : सुखभागिन : । मार्जारलोचनै : पापोमहात्मामधुपिङ्गलै : ॥ क्रूरा : केकरनेत्राश्चहरिणाक्षा : सकल्मषा : । जिह्मैश्चलोचनै : क्रूरा : सेनान्योगजलोचना : । गम्भीराक्षाईश्वरा : स्युर्म

स्निग्धः स्थूलचक्षुषः। गौरोत्पला
चाविहासः सौभाग्यंश्यावचक्षुषा
म्॥ श्यामक्लखातारकाणामम-
क्षणामुत्पाटनंकिल। मण्डलाक्षा
सुपापाः स्युर्निम्ना: स्युर्दीर्घलो
चनाः॥ हक्स्निग्धाविपुलाभोगी
अल्पायुर्यातिचोन्नता। विशालोन्न
तासुखिनिर्दरिद्राविषमभ्रुवः॥ इ
तिगारुडे ६६॥ लोच्यतेनेन।
लोचृदर्शने। ल्युट्। आलोचने॥
लोचनहिता। स्त्री॰ तुत्याञ्जने॥
लोचना। स्त्री॰ बुद्धशक्तिविशेषे॥
लोचनामय। पुं॰ चक्षूरोगविशेषे।
अभिमन्ये॥
लोचनी। स्त्री॰ महाश्रावणिका-
याम्॥
लोचमर्कटः। पुं॰ लोचमस्तके॥
लोचमस्तकः। पुं॰ खराश्वायाम्।
कारव्याम्। दीप्ये। मयूरे। म
यूरशिखौषधे। रुद्रजटाइ॰गौ॰
दे॰ प्र॰। लोच्यते। लोचृदर्शने
घञ्। यद्वा। लोचयति। लोचृ
भासार्थः। पचाद्यच्। लोचोदर्श
नीयोभासमानोवा॰ मस्तकोस्य॥
लोठनम्। न॰ कृतस्ततश्चालने॥
लोडनम्। न॰ प्रतिघाते॥
लोटणम्। न॰ लवणाट्यो॥
लोणा। स्त्री॰ क्षुद्राम्लिकायाम्। चा
ङ्गेर्याम्॥ लोणीशाके। लोनिआ॰
लोणी॰ इ॰ भा॰ स्मृते॥ अस्यागु
णाः। लोणाक्षारागुरुः कट्वीवात
श्लेष्महरीपटुः। अर्शोघ्नीदीपनीचा
श्मामन्दाग्निविषनाशिनी॥
लोणाम्ला। स्त्री॰ क्षुद्राम्लिकायाम्
। चाङ्गेर्याम्॥
लोणारम्। न॰ क्षारविशेषे। लवणो
त्थे। लवणाकारजे। लवणक्षारे।
लवणमदे॥
लोणितम्। न॰ लोनियाख्यशाके॥
शाकंलोणितसंज्ञकंसुदलितंतप्तेघृते
तापितंहिंग्वाद्रैर्णविमिश्रितंसलवणं
तक्रेणसंपाचितम्। मेथास्वेदमि
दंसुहिङ्गुसहितंतैलेनवावासितं
छिन्नंतखण्डलसंयुतंसलवणंतक्रं वि-
नापाचितम्॥ लोणितंशुभशोलो
णांरुचंविष्टम्भकारकम्। दोषघ्नन्
मधुरंपाकेवातघ्नमामलपित्तकृत्॥
लोणी। स्त्री॰ लोणायाम्।
लोतः। पुं॰ न॰ वाष्पे। अश्रुणि।
नेत्राम्बुनि॥ न॰ लोप्त्रे॥ लुना
ति। लूञ्॰। हसिमृग्रिण्वित्यादिना
तन्। लोतोमेघइतिक्तत्वतत्रूनि
र्दिष्टेतिसूत्रेकैयटः॥
लोत्रम्। न॰ लोप्त्रे॥ नेत्रजले॥
लूञः सर्वधातुभ्यष्ट्रन्॥
लोध्रः। पुं॰ गालवे। शावरे। ति
रीटे। तिल्वे। मार्जने। लोध॰
इ॰ भा॰ प्र॰॥ लोध्रोग्राहीलघुः

शीतश्चक्षुष्यः कफपित्तनुत्। क
षायोरक्तपित्तास्रग्ज्वरातीसारशो
थहृत्॥ रुणद्धि। रुधिर०। वा
हुलकाट्ट्रन्। कपिलकादिः॥
लोध्रवृक्षः। पुं० गालवे॥
लोध्रपुष्पकः। पुं० शालिप्रभेदे॥
लोपः। पुं० अदर्शने॥ गम्यमाना
र्थस्याप्रयोगएवलोपः। यथाविभक्त
धनेषु० विभक्ताभ्रातरः अत्रोत्तर
पदस्यधनस्यलोपः॥ लुप्यते। लु
प्लृच्छेदने। कर्म्मणिघञ्॥ छेदे॥
लोपा। स्त्री० लोपामुद्रायां॥
लोपाकः ) लोपापकः ) पुं० शृगाले। फेरौ॥
लोपायिका। स्त्री० शृगाल्याम्॥
लोपामुद्रा। स्त्री० अगस्त्यमुनेः पत्
न्याम्॥ नमुदंरातिश्रमुद्रा आतो
नुपेतिकः। लोपिधर्मलोपाअमुद्रा
हर्षनलभतइत्यर्थः॥
लोपामुद्रापतिः। पुं० अगस्त्यमुनौ॥
लोपाशकः। पुं० शृगाले॥
लोपाशिका। स्त्री० शृगाल्याम्॥
लोप्त्रम्। न० चोरिते। चौरधने॥
लुप्तृ०। ष्ट्रन्॥
लोपञ्जी। स्त्री० हस्तलालनयाकृते०
वारिमिश्रितगोधूमादिचूर्णपिण्डे।
लोयी० पेडो० इतियलोकभाषा
यांप्रसिद्धे॥ षित्त्वान्ङीष्॥ लो
पञ्जे॥

लोभः। पुं० धनतृष्णायाम्। मत्य
तिधनागमेजायमाने व्यनुक्षणंवर्द्ध
मानेतदभिलाषे। स्वविषयप्राप्त
निवर्त्य०इच्छाविशेषे॥ आत्मनो
ऽनुकूलेषुसुखहेतुषुद्रव्यमानेषुश्रूय
माणेषुस्मर्यमाणेषुवातद्गुणानु
सन्धानाभ्यासेनयोरस्यात्मनोगर्द्धो
भिलाषस्तृष्णा० लोभः॥ धर्म
विरोधेनपरद्रव्येच्छायाम्॥ यथा
। परवित्तादिकंदृष्ट्वानेतुंयोहृदि
जायते। अभिलाषोद्विजश्रेष्ठसलो
भः परिकीर्त्तितइति॥ सतुनाश
कारणम्। यथा। लोभप्रमादवि
श्वासैः पुरुषोनश्यतेत्रिभिः।
तस्माल्लोभोनकर्त्तव्यः प्रमादोनन
विश्वसेत्॥ अपिच। त्रिविधंनर
कस्येदंद्वारंनाशनमात्मनः। का
मः क्रोधस्तथालोभस्तस्मादेतत्त्र
यंत्यजेदिति॥ अस्यस्वरूपंयथा।
सन्त्यतेमहदग्निनोमदजलप्रक्षाल
गण्डस्थलावातव्यायतपातितद्गतुर
गाभूयोऽपिलप्स्येपरान्। एतल्लब्ध
मिदंलभेपुनरिदंलब्ध्वाधिकंध्या
यतांचिन्ताजर्जरचेतसांवतनृणां
कानामशान्तिः कथा॥ अपिच।
देवग्रामवनाद्रिपत्तनपुरोद्वीपत्क्षमा
मण्डलप्रत्याशानसूत्रबद्धमनसां
लब्ध्वाधिकंध्यायताम्। तृष्णेदे
वियदिप्रसीदसितनोष्यङ्गानितुङ्गा

निर्षेत् तन्नो : प्राणभृतांकुत : शमकथाव्रह्माण्डलक्षैरपीति ॥ लोभएवमनुष्याणांदेहस्थोमहारिपु: । सर्व्वदु: खाकर: प्रोक्तोदु: खद : प्राणनाशक : ॥ सर्व्वपापस्यमूलंहि सर्व्वदाहृष्णयान्वित : । विरोधकृन्नृविवर्णानांसर्व्वार्त्ते : कारणंतथा ॥ लोभात्त्यजन्तिधर्म्मंवैकुलधर्म्मंतथैवहि । मातरंभातरंहन्तिपितरंबान्धवंतथा ॥ गुरुंमित्रंतथाभामंपुत्त्रञ्चभगिनींतथा । लोभाविष्टोनकिंकुर्यादकृत्यंपापमोहित : ॥ क्रोधात्कामादहङ्काराल्लोभएव महारिपु : । प्राणांस्त्यजन्तिलोभेनकिंपुन : स्याद्धनाहृतम् ॥ तस्माल्लोभाभिभूतस्तुकिंनकुर्य्यान्नर : क्विलेतिदेवीभागवतम् ॥

लोभनी । स्त्री॰ महाश्रावणिकायाम् ॥

लोभनीय : । त्रि॰ तृष्णोत्पादके ॥

लोभी । त्रि॰ गृध्नौ । लुब्धे । लोभयुक्ते ॥ लोभोस्त्यस्य । इनि : ॥

लोभ्य : । पुं॰ मुद्गे ॥ त्रि॰ लोभनोये ॥

लोमम् । न॰ पुच्छे । लाङ्गूले ॥

लोमकरणी । स्त्री॰ मांसच्छदायाम् ॥

लोमकर्ण्ण : । पुं॰ शशके । त्रि॰ लोमयुक्तकर्ण्णविशिष्टे ॥

लोमघ्न : । पुं॰ इन्द्रलुप्तकरोगे ॥ त्रि॰ लोमघातके ॥ लोमानिहन्ति । हन॰ । अमनुष्यकर्त्तृकेचेतिटक् ॥

लोम । न॰ तनूरुहे । रोमणि ॥ राइति । रुह॰ । नामन्सीमन्व्योमन्रोमन्लोमन्निति साधु ॥ यद्वा । लूयते । लूञ्छेदे॰ लुञ्छतीभावपक्षेवा । मनिन् । कपिलकादित्वाल्लत्वम् लूयतेवा ॥

लोमपाद : । पुं॰ ऋष्यशृङ्गमुने : पुत्रे । अङ्गदेशीयराजविशेषे ॥

लोमपादपू : । स्त्री॰ चम्पापुर्य्याम् । मालिन्याम् । कर्ण्णपुरि ॥

लोमफलम् । न॰ भव्ये ॥

लोमवान् । त्रि॰ लोमशे ॥ लोमानिसन्त्यस्य । मतुप् ॥

लोमविष : । पुं॰ व्याघ्रादौ ॥

लोमश : । पुं॰ मुनिविशेषे ॥ मेषे ॥ त्रि॰ अतिशयलोमान्विते ॥ यथा । कदाचिद्दन्तुरोमूर्ख : कदाचिल्लोमश: सुखी । कदाचित्तुन्दिलोदु : खीकदाचिच्चञ्चलामती ॥ लोमानिसन्त्यस्य । लोमादिभ्य : श : ॥

लोमशकान्ता । स्त्री॰ कर्कट्याम् ॥

लोमशपर्ण्णिनी । स्त्री॰ माषपर्ण्याम् ॥

लोमशपुष्पक : । पुं॰ शिरीषवृक्षे ॥

लोमशमार्ज्जार : । पुं॰ पूतिके । मार्जारके । सुगन्धिनि । मूत्रपतने । गन्धमार्ज्जारकेगन्धगोकुला॰ वृ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ गन्धमार्ज्जार

वीर्य्यनुवीर्य्यक्षतकफवातहृत् । क
णडूकोठहरं भेल्यं सुगन्धंसदगन्धनु
त् ॥
लोमशा । स्त्री० काकजङ्घायाम् ॥
मांस्याम् ॥ वचायाम् ॥ शुक्रशि
म्ब्याम् ॥ महामेदायाम् ॥ काशी
शे ॥ शाकिनीभेदे ॥ शृगाल्याम् ॥
अतिबलायाम् ॥ घण्टारवायाम्
। शणपुष्प्याम् ॥ एर्वारौ ॥ गन्ध
मांस्याम् ॥ लोमानिसन्त्यस्याः ।
लोमादित्वाच्छः । टाप् ॥
लोमशातनम् । न० लोमपातने ॥
लोमहर्षः । पुं० रोमहर्षे रोमाञ्चे ॥
लोमहर्षणः । पुं० सूते । व्यासशि
ष्ये ॥ न० रोमाञ्चे ॥
लोमहृत् । पुं० हरिताले ॥
लोमालिका । स्त्री० शृगालिकायाम्
। दीप्तजिह्वायाम् । उल्कामुख्यां ॥
लोमावली । स्त्री० रोमावल्याम् ॥
लोलः । त्रि० सतृष्णे ॥ चञ्चले ॥
लोडति । लुडविलोडने । क्वचिद
पवादविषयेप्युत्सर्गप्रवृत्तेश्च । ड
लयोरेकत्वम् ॥ यद्वा । लोडति
। लोडृउन्मादे । पचाद्यच् ॥ देश
विशेषे ॥
लोलमानः । त्रि० चलनशीले ॥ ता
च्छील्ये तिचानश् ॥ लुठमाने ॥
लोला । स्त्री० जिह्वायाम् ॥ कमला
याम् । श्रियि ॥ चञ्चलायांनार्या

म् ॥ कामनायाम् ॥ शक्वरीछन्दः
१४ प्रभेदे ॥ तल्लक्षणं यथा । द्विः
सप्तच्छिद्लोलाम्सौम्भौगौचरणे
चेत् ॥ यथा, मुग्धे यौवनलक्ष्मी
र्विद्युद्विभ्रमलोला० त्रैलोक्याद्भुत
रूपोगोविन्दोतिदुरापः तद्वृन्दाव
नकुञ्जे गुञ्जद्भृङ्गसनाथेश्रीनाथेनसमे
तास्वच्छन्दं कुरुकेलिम् । लोलाट्टा
प् ॥
लोलार्कः । पुं० सूर्ये । काशिस्थे
रवौ ॥ लोलार्ककेशवौ कोटीगङ्गा
ज्ञानगरं धनुः । कलिलं च शरीरं
धर्मः शिवोधन्वोपुनातुमाम् ॥
लोलिका । स्त्री० चाङ्गेर्य्याम् ॥
लोलितः । त्रि० वर्त्तुलीकृते ॥ चा
लिते ॥ श्लथे ॥ लोलः सञ्जातोऽ
स्य । इतच् ॥
लोलुपः । त्रि० अतिलुब्धे ॥ गर्हितं
लुम्पति । लुप्लृच्छेदने । लुपसदे
तियङन्तादच् ॥
लोलुभः । त्रि० लोलुपे ॥ भृशं लुभ्य
ति । लुभगार्द्ध्ये । धातोरेकाचह्
तियङन्तादच् ॥
लोष्टः । पुं० न० मृत्खण्डे । पांशु
पिण्डे । लोष्टौ । ढीम० ढेला०
इ० भा० ॥ लोष्टति । लोष्टसङ्घा
ते । पचाद्यच् ॥ यद्वा । लुनाति ।
लूञ्० लोष्टपलितावितिक्तः त
स्यसुट्० धातोर्गुणश्चनिपातनात्

॥ न० लोहमलि ॥

लोष्टघ्न : । पुं० लोष्टभेदने ॥

लोष्टभेदन : । पुं० कोटिशे । लोष्ट भञ्जसाधनकाष्ठे ॥

लोष्टमर्दी । चि० लोष्टमर्द्दनशीले ॥

लोष्टु : । पुं० लोष्टे । दृढमृत्पिण्डे ॥

लोह : । पुं० सर्वलोहितच्छागे ॥ पुं० न० लौहे । लोहविकारे ॥ जोङ्गके । अगुरुणि ॥ सर्वतैजसे रुधिरे ॥ कृष्णायसे । दृषत्सारे । शस्त्रके । कालायसे । लोहा० इ० भा० प्र० अथलोहस्योत्पत्त्यादयो यथा । पुरालोमिनदैत्यानांनिहतानांसुरैर्युधि । उत्पन्नानिशरीरेभ्यो लोहानिविविधानिच ॥ लोहोऽस्त्रीशस्त्रकंतीक्ष्णं पिण्डं कालायसायसी । गुरुतादृढतोत्क्लेदकश्मलं दाहकारिता ॥ अश्मदोष : सुदुर्गन्धो दोषा : सप्तायसस्यतु । लोहं तिक्तं सरं शीतं मधुरं तुवरं गुरु ॥ रूक्षं वयस्यं चक्षुष्यं लेखनं चानिलं जयेत् । कफं पित्तं गरं शूलं शोथार्श : प्लीहपाण्डुता : ॥ मेदो मेहकृमीन्कुष्ठं तत्किट्टं तद्वदेवहि । यत्कट्वकुष्ठामयमृत्युदं भवेद्धृद्रोगशूलौ कुरुतेश्मरींच । नानारुजानाञ्चतथा प्रकोपं करोतिहृल्लासमशुद्धलोहम् ॥ जोङ्गहारिमदकारिचायमंचेदशुद्धिमदसंस्कृतंध्रुवम् ॥ पाटवं नतनुतेशरीरकेदारुणांहृदिरुजाञ्चयच्छति ॥ अथलोहदोषप्रशान्तयेशोधनमभिधीयते । पत्तलीकृतपत्राणिलोहस्याग्नौप्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैलेतक्रे च काञ्जिके ॥ गोमूत्रे चकुलत्थानां कषायेचत्रिधात्रिधा । एवं लोहस्य पत्राणांविशुद्धि : सम्प्रजायते ॥ अथास्यमारणविधि : । शुद्धलोहभवंचूर्णंपातालगरुडीरसै : मर्द्दयित्वापुटेद्वह्नौदद्यादेवंपुटत्रयम् ॥ पुटत्रयंकुमार्याश्चकुठारच्छिन्निकारसै : । पुटषट्कंततोदद्यादेवंतीक्ष्णमृतिर्भवेत् ॥ अन्यच्च । त्रिपादहादशमांशेनदरदंतीक्ष्णचूर्णत : । मर्द्दयेत्कन्यकाद्रावैर्यामयुग्मंतत : पुटेत् ॥ एवंसप्तपुटैर्मृत्युंलोहचूर्णमवाप्नुयात् । सत्वोनुभूतोयोगीन्द्रै : क्रमोन्योलोहमारणे ॥ कथ्यतेरामराजेनकौतूहलधियाधुना सूतकाद्द्विगुणंगन्धंदत्वाकुर्याच्चकज्जलीम् । द्वयो : समंलोहचूर्णंमर्द्दयेत्कन्यकाद्रवै : ॥ यामयुग्मंतत : पिण्डंकृत्वाताम्रस्यपात्रके । घर्मेधृत्वारुबूकस्यपत्रैराच्छादयेद्बुध : ॥ यामद्वयाद्भवेदुष्णंधान्यराशौन्यसेत्तत : । दत्वीपरिशरावञ्चत्रिदिनान्तेसमुद्धरेत् ॥

पिष्ट्वाचगालयेदस्नादेवं वारितरं भवेत् । दाडिमच्छदलं पिष्ट्वातत्ततु गुंणवारिणा ॥ तद्रसेनायसञ्चूर्णं सन्नीयात्प्लावयेदपि आतपेशोषये त्तत्त्वपुटेदेवं पुन: पुन: ॥ एक विंशतिरात्रैस्तन्म्रियतेनात्रसंश य: एवं सर्वाणिलोहानिस्वर्णादीन्य पिमारयेत् ॥ एवंमारितस्यलोहस्य मात्रा । गुञ्जामेकांसमारभ्ययावत् स्युर्नवरक्तिका: । तावल्लोहंसम श्नीयाद्यथादोषामलंनर: ॥ कूष्मा ण्डं तिलतैलञ्चमाषान्नं राजिकांत था । मद्यमम्लरसञ्चैवत्यजेल्लोहसेव क: ॥ लुह्यते । लुहगार्ध्ये । घञ् । लोहतिवा । अच् ॥ यद्वा । रोह ति । रुह० । अच् । रलयोरैक्यम् ॥ रुह्यतेवा । घञ् । कपिलकादि: ॥ लूयतेऽनेनवा । लूञ्० । बाहु लकात्० होवा ॥ यदातुपायसे पात्रेपक्वमश्नातिवैद्विज: । सपा पिष्ठोपिभुङ्क्तेऽन्नंरौरवेपरिपच्य ते इतिमत्स्यसूक्तमन्त्रे लोहपात्रे भक्षणनिषेध: ॥ ब्रह्मवैवर्तेपि । यथा । पय: पात्रेपय: पानं गव्यंसिद्धान्नमेवच । भ्रष्टादिकं मधुगुडंनारिकेलोदकंतथा । फ लंमूलंचयत्किञ्चिदभक्ष्यंमुनिरब्र वीदिति ॥

लोहकण्टक: । पुं० मदनद्रुमे ॥ लोहमयकण्टके ॥

लोहकान्त: । पुं० अयस्कान्ते ॥ लो ह: कान्तोऽस्य ॥

लोहकार: । पुं० लोहकारके । व्योकारे ॥ लोहंकरोति । डुकृञ् ० । कर्मण्यण् ॥

लोहकारक: । पुं० लोहकृति । व्यो कारे । लोहार० इ० भा० । कर्म कारे ॥ सङ्करजातिरयं यथा । गो पालात्तन्तुवाय्यांवैकर्मकारोप्य भूत्सुत: । ब्र० वै० पु० ॥

लोहकिट्टम् । न० लोहमले । किट्टे ॥ यल्लोहंयद्गुणंप्रोक्तंतत्किट्टमपि तद्गुणम् ॥ लोहस्यकिट्टम् ॥

लोहचूर्णम् । न० लोहकिट्टे ॥

लोहजम् । न० कांस्ये ॥ लोहकि ट्टे ॥

लोहद्रावी । पुं० टङ्कणे ॥

लोहधमनी । स्त्री० भस्त्रायाम् ॥

लोहनाल: । पुं० नाराचे ॥

लोहपृष्ठ: । पुं० कङ्कपक्षिणि ॥ लो हमिवपृष्ठमस्य ॥

लोहप्रतिमा । स्त्री० लोहमय्यांप्रति मायाम् । सूर्म्याम् ॥

लोहमय: । त्रि० लोहात्मके ॥

लोहमारक: । पुं० शाल्मिंचशाके ॥

लोहराजकम् । न० कलधौते । रूप्ये ॥

लोहल: । पुं० शृङ्खलाधार्ये ॥ त्रि०

ऽव्यक्तशाचिनि ॥ लोहनं लोह: लुहकाल्पनाद्दाविति स्वामी । लुह मौगार्ध्ये इतिवोपदेव: । भावेघञ् । लोहं लाति । आतोनुपेतिक: ॥ यद्वा । रोहयतेर्बाहुलकादलच् । कपिलकादित्वाल्लत्वं ॥

लोहवरम् । न० स्वर्णे ॥

लोहशिङ्खाणिका । स्त्री० लोहमले । मण्डूरे ॥

लोहसंश्लेषण: । पुं० टङ्कने ॥

लोहसङ्करम् । न० वर्त्तलोहे ॥

लोहसार: । पुं० साराख्यलोहे ॥ यमा भृङ्गिखराकारान्यङ्गान्यस्मिनलेपिते । लोहैरुर्यंवसूक्ष्माणि तत्सारम भिधीयते ॥ लोहंसाराह्वयंहन्यात् ग्रहणीमतिसारकम् । अर्द्धसर्वाङ्ग जंवातंशूलञ्चपरिणामजम् । छर्द्दि स्रुपीनसंपित्तंश्वासमाशुव्यपोहति॥

लोहाख्यम् । न० अगुरुणि ॥

लोहाभिसार: । पुं० भूपानांनीराज नाविधौ । महानवम्यांप्राक्प्रस्था नाच्छस्त्रवाहनादिपूजनविधौ । लोहाभिहारे । लोहस्यशस्त्रस्यअभित: सरणम् । सृगतौ । भावेघञ् ॥ लोहाभिसारोऽस्त्रभृतांराज्ञांनीरा- जनाविधि: ॥

लोहाभिहार: । पुं० लोहाभिसारे । लोहस्यशस्त्रस्यअभितोहरणम् । हृ ञाभावेघञ् । लोहाभिहारइत्य-

त्राविधिर्नीराजनोत्तर: ॥

लोहार्गल: । पुं० तीर्थविशेषे ॥ न० स्त्री० लोहकीलके ॥

लोहि । न० श्वेतटङ्कने ॥

लोहिका । स्त्री० खरसीम्टे । खर पात्रे । लोहपात्रे ॥

लोहित: । पुं० नदविशेषे ॥ भौमे । मङ्गले ॥ रक्तवर्णे ॥ रोहित म त्स्ये ॥ मृगविशेषे ॥ सर्पे ॥ सुरा न्तरे ॥ मसूरे ॥ रक्तशाली ॥ रक्त- शाली ॥ वलभेदे ॥ न० रक्तगोशीर्षे कुङ्कुमे ॥ रक्तचन्दने ॥ पद्मरागेपतंगे ॥ हरिचन्दने ॥ लूणकुङ्कुमे ॥ रु धिरे ॥ युद्धे ॥ त्रि० रक्तवर्णान्वि ते ॥ रोहति० रुहयतेवा । रुह० । रस्यलोवेतोतन् ॥

लोहितक: । पुं० पद्मरागमणौ ॥ भौमग्रहे ॥ लोहितएवमणि: लो हितान्मणाविति कन् ॥ न० रीतौ॥

लोहितचन्दनम् । न० कुङ्कुमे ॥ लो हितश्चतच्चन्दनंच ॥ रक्तचन्दने ॥

लोहितपुष्प: )
लोहितपुष्पक: ) पुं० दाडिमवृक्षे ॥

लोहिमृत्तिका । स्त्री० गैरिके रक्तवर्ण मृत्तिकायाम् ॥ लोहिताचासौ मृत्तिकाच ॥

लोहिता । स्त्री० रागादिरक्तायाम् ॥ वराहक्रान्तायाम् ॥ रक्तपुनर्नव याम् ॥ वर्णादनुदात्तादितिपाक्षि

श्रीङीबभावस्तकारस्यनकारादेश-
श्च ।

लोहिताक्षः । पुं॰ विष्णौ ॥ प्रति
छायामग्निशेषे ॥ कोकिले ॥ त्रि॰
रक्तवर्णचक्षुर्युक्ते ॥ लोहितेचाक्षि
णोयस्यसः । बहुव्रीहौसक्थ्यक्ष्णोः
स्वाङ्गात्षच् ॥

लोहिताङ्गः । पुं॰ कुजे ॥ कम्पिल्ल
के ॥ लोहितान्यङ्गान्यस्य ॥

लोहिताननः । पुं॰ नकुले ॥ त्रि॰
रक्तवर्णमुखे ॥

लोहितायः । न॰ ताम्रे ॥

लोहितायसम् । न॰ रक्तवर्णलोहजा
तौ ॥

लोहितिका । स्त्री॰ लोहितायाम् ॥
लोहितैव । लोहितान्मणावित्यत्र
॰लोहितालिङ्गबाधनंवेतिकन् ॥

लोहित्यः । पुं॰ अब्धौ ॥ नदे ॥
व्रीहौ ।

लोहिनिका । स्त्री॰ लोहिन्याम् ॥
लोहिन्येव । लोहितालिङ्गबाधनंवे
तिकन् ॥

लोहिनी । स्त्री॰ लोहितायाम् ॥ वर्णा
दनुदात्तादितिङीप्॰ तकारस्यच
नकारादेशः ॥ गुञ्जायाम् ॥

लोहोत्तमम् । न॰ स्वर्णे काञ्चने ॥
लोहेषुसर्वतैजसेषुउत्तमम् ॥

लौकायतिकः । पुं॰ चार्वाकदर्शना
भिज्ञे ॥ लोकायतमधीतेवेदवा ।
उक्थादित्वात्॰ क्रतूक्थादिसूत्रा
न्ताट्ठक् ॥ तार्किकभेदे ॥

लौकिकः । त्रि॰ अप्राप्तशास्त्रपरिशी
लनजन्यबुद्धिप्रकर्षे । प्रतिपाद्ये ॥
लोकप्रसिद्धे ॥ लोकव्यवहारमात्र
परे ॥ लोकानुरञ्जनमेवतत्त्वमिति
लौकिकानांभ्रान्तिमात्रमेव । लोक
स्यभिन्नरुचित्वात्॰ तदनुरञ्जनस्ये
श्वरेणापिकर्त्तुमशक्यत्वात् ॥ यथा
हुः । विद्यतेनखलुकश्चिदुपायः
सर्वलोकपरितोषकरोयः । सर्व
थास्वहितमाचरणीयंकिंकरिष्यति
जनोबहुजल्पइति ॥ लोकेविदि
तः । अथशास्त्रादिज्ञाने ॥ लो
कसर्वलोकाट्ठञ् ॥ भवार्थेत्वध्या
त्मादित्वाट्ठञ् ॥ स्मृत्युपनिबद्धे
धर्मादौ । न॰ जागरिते ॥

लौकिकाग्निः पुं॰ असंस्कृताग्नौ ॥

लौल्यम् । न॰ चापल्ये ॥ लोलस्यभा
वः ष्यञ् ॥

लौहः । पुं॰ न॰ लोहे ॥ लोहएव
। प्रज्ञाद्यण् ॥ लोहस्यविकारः ।
रजतादित्वादञ् ॥

लौहदारकः । पुं॰ नरकभेदे ॥

लौहलम् । न॰ मण्डूरे ॥

लौहभाण्डः । पुं॰ अश्मभाले । हि
मामृलिस्ता, इति ग्राधारणभाषा
प्रसिद्धे ॥ न॰ लोहनिर्मितभा
ण्डे ॥

वंश :

लोहभू : । स्त्री० काठिन्याम् ॥
लोहशङ्कु : । पुं० नरकविशेषे ॥ लोहनिर्मितकीलके ॥
लोहा । ) स्त्री० काठिन्याम् ॥
लोहात्मा । ) स्त्री०
लोहित : । पुं० लोहिते ॥ त्रि० लोहितसम्बन्धिनि ॥
लोहितीक : । पुं० स्फटिके । त्रि० लोहितवर्णतुल्ये ॥ लोहितवृत्त । कर्कलोहिताट्टीकक् ॥
लौहित्य : । पुं० नदविशेषे । ब्रह्मपुत्त्रइतिप्रसिद्धे । अब्धौ । सागरे ॥ व्रीहौ ॥ न० लोहितत्वे । रक्तिमनि ॥ तीर्थविशेषे । † * †

लकारस्समाप्त :

०†—†०

वकारस्य प्रारंभ :

व० । अ० इवार्थे । औपम्ये ॥ पादपूरणे ॥
व : । पुं० वकारे ॥ सान्त्वने ॥ वाते ॥ वरुणे ॥ वातिवानंवा ॥ वागतिगन्धनयो : । ड : ॥ वाहौ ॥ मन्त्रणे ॥ कल्याणे ॥ वलवति ॥ शार्दूले ॥ वस्त्रे ॥ शालूके ॥ वन्दने ॥ न० प्रचेतसि ॥ वरुणबीजे ॥
वंश : पुं० पितृपितामहाद्युत्पादकप्रबन्धे । सन्ततौ । गोत्रे । जनने । कुले । जन्मनैकलक्षणे । सन्ताने ॥ शिष्याचार्यसन्तानाविच्छेदे ॥ त्वकसारे । कर्मारे । त्वचिसारे । तृणध्वजे । बांस० इ० भा० प्र० ॥ अस्य गुणा यथा । वंश : सरोऽहिम : स्वादु : कषायोबस्तिशोधन : । छेदन : कफपित्तघ्न : कुष्ठास्रव्रणशोथजित् ॥ तत्करीर : कटु : पाकेरसेरूक्षोगुरु : सर : । कषाय : कफकृत्स्वादुर्विदाहीवातपित्तल : ॥ तद्यवास्तुसराऽरूक्षा : कषाया : कटुपाकिन: । वातपित्तकराउष्णा- वद्धमूत्रा : कफापहा : ॥ पृष्ठावयवे ॥ वर्गे । सङ्घे ॥ वाद्यविशेषे । वंसी० वांसी० इ० भा० ॥ इक्षुविशेषे । वंशके ॥ सालवृक्षे ॥ वशति० वस्यतेवा । टूवमउद्गिरणे । वृभृवमिभ्य : शक्० इतितुन । उणादिसूत्रस्योज्ज्वलदत्तादिसूत्रवृत्तिष्वदर्शनात्० अनुनासिकस्य क्युपधादीर्घप्रसङ्गाच्च ॥ वनति० वन्यतेवा । वनशब्दे० वनसम्भक्तौवा । वाहुलकात्० श : ॥ उश्यते० वष्टिवा ॥ वशकान्तौ । घञ्० अच्वा । सञ्ज्ञायां शैनेतिनिर्देशान्नुम् । बाचक्षोस्यनुमितियोगविभागाद्वा ॥
वंशक : पुं० इक्षुविशेषे । वडोखा० इ० देशभा० प्र० । वांशा० सोमसाडा० इ० ब० गौ० दे० भा० प्र० । दीर्घ

पोरः सुकठिनः सचारोवंशकः स्मृतः ॥ वंशकस्तुनभिष्यन्दीलघुर्दोषत्रयापहः ॥ वंशद्रुम । इक्षुभेदे । तिक्तताविति कन ॥ बांशपातामाच० इ० गौ० दे० भा० प्र० मत्स्ये ॥ न० अगुरुणि ॥

वंशकठिनः । पुं० देशविशेषे ॥ वंशाः वेणवः कठिनायस्मिन्-सः ॥

वंशकफम् । न० इन्द्रतूले । वृद्धसूत्रके । बीष्मकासि । बुढियाकासूत० इ० भा० प्र० ॥

वंशकर्पूररोचना । स्त्री० वंशरोचनायाम् ॥

वंशक्षीरी । स्त्री० वंशरोचनायाम् ॥ वंशात्क्षीरमस्याः । गौरादिः ॥

वंशगुल्मः । पुं० तीर्थविशेषे ॥

वंशजः । पुं० वेणुयवे । वंशबीजे ॥ त्रि० वंश्ये । सद्वंशजाते ॥ बीज्ये ॥

वंशजातः । जनौ० । डः ॥

वंशजा । स्त्री० वंशरोचनायाम् ॥ वंशात् जायते । जनौ० । पञ्चम्यामितिडः ॥

वंशतण्डुलः । ) पुं०
वंशधान्यम् । ) न० वेणुयवे । वंशयवे ॥

वंशनालिका । स्त्री० वंशीवाद्ये ॥

वंशनेत्रम् । न० इक्षुमूले ॥

वंशपत्रः । पुं० नले ॥ न० वंशस्यदले ॥

वंशपत्रकः । पुं० श्वेतेक्षौ ॥ बांशपातामाच० इ० गौ० दे० भा० प्र० क्षुद्रमत्स्ये ॥ नले ॥ न० हरिताले ॥

वंशपत्रपतितम् । न० अत्यष्टिच्छन्दः १७ प्रभेदे ॥ यथा । दिङ्मुनिवंशपत्रपतितंभरनभनलगैः ॥ यथा । नूतनवंशपत्रपतितंरजनिजललवं पश्यमुकुन्दमौक्तिकमिवोत्तमम्रकृतगम् । एषचतंचकोरनिकरः प्रपिबतिमुदितो बान्तमवेत्य चन्द्रकिरणैरमृतकणमिव ॥

वंशपत्री । स्त्री० वेणुपत्र्याम् । हिङ्गुपर्ण्याम् ॥ हिङ्गुपत्रीगुणाविज्ञैर्वंशपत्रीचकीर्त्तिता ॥ नाडीहिङ्गुनि ॥ तृणविशेषे । वंशदलायाम् ॥ अस्यागुणाः । सुमधुरत्वशिशिरत्वपित्तरक्तदोषनाशित्वरुच्यत्वानि । पशूनांदुग्धदायित्वञ्चेतिराजनिर्घण्टः ॥

वंशपीतः । पुं० कणगुग्गुलौ ॥

वंशपुष्पा । स्त्री० सहदेवीलतायाम् ॥

वंशपूरकम् । न० इक्षुमूले ॥

वंशमूलकम् । न० तीर्थविशेषे ॥

वंशयवः । पुं० वंशधान्ये ॥ यवावंशभवाःरूक्षाः कषायाः कटुपाकिनः । बद्धमूत्राः कफघ्नाश्चवातपित्तकराः सराः ॥

वंशरोचना । स्त्री० त्वक्क्षीर्याम् वे

यव्याम् । श्वेतायाम् ॥ गुणाय-
था । वंशजात्वक्षीरव्यावल्याश्वा
शीतशीतला । तृष्णाकासज्वरश्वा
सचयपित्तास्रकामलाः । हरेत्कु
ष्ठव्रणं पाण्डुं कषायावातकृच्छ्रजि-
त् ॥ रोचते । रुच० । नन्द्यादिः ।
वंशस्यरोचना ॥

वंशरोचनिका । स्त्री० वंशरोचनाया
म् ॥

वंशलोचना । स्त्री० ) वंशरोचना
वंशशर्करा । स्त्री० ) याम् ॥

वंशशलाका । स्त्री० वीणामूले ॥

वंशस्तनितम् । न० वंशस्थविले ॥

वंशस्थम् । न० जगती १२ प्रभेदे ॥
यथा । पुरोजकारः परतस्तसंज्ञ-
कौगणौजकारोरगणस्ततः परम् ।
निवेशितश्चेद्यशवन्तभूपतेवंशीतिवं
शस्थमदस्तदाफणी ॥ जतौतुवंश-
स्थमुदीरितंजराविति चास्यलक्षण-
म् ॥ त्रि० वंशेस्थिते ॥

वंशस्थविलम् । न० जगति १२ प्रभे
दे । वंशस्थेवृत्ते ॥ यथा । वदन्ति
वंशस्थविलंजतौजरौ । यथा । वि
लासवंशस्थविलंमुखानिलैः प्रपू-
र्यः पञ्चमरागमुद्गिरम् । व्रजाङ्ग
नानामपिगानशालिनांजहारमानं
सहरिः पुनातुनः ॥

वंशाग्रम् । न० वंशाङ्कुरे ॥

वंशाङ्कुरः । पुं० करीरे । वंशाग्रे ।
यवफलाङ्कुरे ॥

वंशानुचरितम् । न० वंशचरितव-
र्णने ॥

वंशिकम् । न० अगुरुणि ॥ वंशोस्त्य-
स्य । अतइनिठनाविति ठन् ॥

वंशिका । स्त्री० वंश्याम् । वेणौ ॥ अ
गुरुणि ॥

वंशी । स्त्री० मुरलीवाद्ये । वंसरी०
इ० भा० ॥ कर्षचतुष्टये ॥

वंशीधरः । पुं० श्रीकृष्णे ॥ धरतीति
धरः । वंश्याधरः ॥ त्रि० वंश्याधा-
रके ॥

वंश्यः । त्रि० सद्वंशजाते । कुल्ये ।
बीज्ये ॥ वंशेभवः । दिगादित्वा
द्यत् ॥

वंहिष्ठः । त्रि० अत्यन्तबहुले ॥ अय-
मेषामतिशयेनबहुलः । अतिशाय
नेतमबिष्ठनाविति इष्ठन् ॥ प्रियस्थि-
रस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृ-
न्दारकाणांप्रस्थस्फवर्वंहिगर्वंषि च
त्रद्राघिवृन्दाइति बंह्यादेशेनसाधुः ।

वंहीयान् । त्रि० बहुलतरे ॥ अयमन
योरतिशयेनबहुलः । द्विवचनवि
भज्योपपदेतरबीयसुनाविति ईयसुनि
प्रियस्थिरेत्यादिनावंह्यादेशः ॥

वकः । पुं० बकार्थेषु ॥ यनृत्यविशेषे ॥
यथा । जलकच्छपपातालदोलाभूष
रबालुकाः । बकाद्यायन्तभेदाश्चवै
काम्भाद्याश्चमूषिकाः ॥ दीर्घक-

शठश्चाचक्षुष्या गिलयेत्स्वल्पभाण्ड-
कम् । तिर्यक्वक्त्रत्वात्पचेत्स्थाव-
कयन्त्रमिदं स्मृतम् ॥ असुरवि-
शेषे ॥

वकवृत्ति: । पुं० वकवृत्तौ ॥ तल्लक्ष
णं यथा । अधोदृष्टिर्नैष्कृतिकः
स्वार्थसाधनतत्परः । शठो मिथ्या
विनीतश्च वकव्रतिकदाहृतः ॥

वकुल: । पुं० वकुले ॥ न० अस्य फ
ले ॥ अस्य गुणाः । वकुलं मधुरं
ग्राहिदन्तस्थैर्यकरं परम् ॥ पुष्पगु
णास्तु । पक्वं कषायं मधुरं शीतं
पित्तकफास्रनुत् । तद्वद्वकुलपुन्ना
गकह्लारोत्पलपाटलम् ॥

वक्तव्य: । त्रि० कुत्सिते । विहितक
र्मत्यागाल्लोकविगर्हिते ॥ हीने
वचनार्हे । अधीने ॥ वचनार्ह: ।
वचपरिभाषणे० ब्रूञ् आदेशो वा
तव्य: ॥ न० वचने ॥

वक्ता । त्रि० पण्डिते ॥ वदे । वदावदे
। यो हि वक्तुं जानाति तस्मिन् औ
चित्याद्बहुविशिष्टं यो वदति तत्रेत्य
र्थ: ॥ सुष्ठुवक्तरि ॥ बहुभाषिणि
। वाचोयुक्तिपटौ । वाग्मिनि ।
वावदूके ॥ वक्ति । वचपरिभाषणे
। तृन् ॥

वक्त्रम् । न० आस्ये । मुखे ॥ यथा ।
सौम्यश्च संवृतं वक्त्रममलं यस्य देहि
न: । महाराजा भवेन्नित्यं विपरीते
तु निर्धनं इति ॥ उच्यतेऽनेन । वच
० । ब्रूञोवचिर्वा । गुधृवीपचिव
चियमिसदिक्षदिभ्यस्त्र: ॥ वस्त्रभेदे
तगरमूले । विषमवृत्तान्तरे ॥ तस्य
लक्षणादि यथा । भवत्यत्र समं वक्त्रं
विषमश्लोकदाचन । तयोर्द्वयोरुपा
न्ते च च्छन्दस्तद्बुधैरुच्यते ॥ वक्त्रं युग्माभ्या
मगौ स्यातामब्धेर्योऽनुष्टुभि ख्यात
म् ॥ अत्र हि राद्यत्याल्लोक: पूरयि
तव्य: ॥ वक्त्राम्भोजं सदास्मेरं च
क्षुर्नीलोत्पलं फुल्लम् । अन्यमीनां
मुरारातेर्येतोऽभङ्गं जहारोस्त्रै: ॥

वक्त्रखुर: । पुं० दन्ते ॥

वक्त्रज: । पुं० ब्राह्मणे ॥ त्रि० मुख
जाते ॥

वक्त्रतालम् । न० मुखवाद्ये ॥

वक्त्रपट्ट: । पुं० अश्वान्नभोजनपात्रे
। तोवड़ा० इ० भा० प्र० ॥

वक्त्रभेदी । पुं० तिक्तरसे ॥ त्रि० मु
खभेदके ॥

वक्त्रवास: । पुं० नागरङ्गे ॥ मुखग
न्धे ॥

वक्त्रशोधनम् । न० भव्ये ॥ मुखशु
द्धिकरणे ॥

वक्त्रशोधी । पुं० जम्बीरे । त्रि० आस्य
शोधके ॥

वक्त्रासव: । पुं० अधरमधुनि ॥

वक्र: । पुं० शनैश्चरे ॥ मङ्गलग्रहे ॥
रुद्रे ॥ त्रिपुरासुरे ॥ पर्पटे ॥ वक्र

गतिविशिष्टग्रहे॥ न० सरिद्भङ्गे पुटभेदे॥ त्रि० अनृजौ। अराले। कुटिले। क्रूरे॥ वक्ष्यतिस्म। वक्षुगतौ। स्फायितञ्चीति रक्। न्यङ्क्वादित्वात्कुत्वम्।

वक्रकण्टः। पुं० बदरवृक्षे॥

वक्रकण्टकः। पुं० खदिरवृक्षे॥

वक्रखड्गः। पुं० करवाले॥

वक्रग्रीवः। पुं० उष्ट्रे॥

वक्रचञ्चुः। पुं० शुके। कीरे॥

वक्रतालम्। न०)
वक्रताली। स्त्री०) मुखवाद्ये॥

वक्रतुण्डः। पुं० गणेशे॥ शुकखगे॥

वक्रदंष्ट्रः। पुं० शूकरे॥

वक्रनक्रः। त्रि० खले। पिशुने॥ पुं० शुकखगे॥

वक्रनालम्। न० मुखवाद्ये॥

वक्रनासिकः। पुं० पेचके॥ त्रि० कुटिलनासायुक्ते॥

वक्रपट्टः। पुं० तलसारके। तङ्ग० इ० भा० प्र०॥

वक्रपुच्छः। पुं० कुक्कुरे॥

वक्रपुष्पः। पुं० पलाशद्रुमे॥ वकवृक्षे॥

वक्रवालधिः। पुं० शुनि॥

वक्रभणितम्। न० वक्रोक्तौ। कुटिलवाक्ये॥

वक्रमः। पुं० पलायने

वक्रलाङ्गूलः। पुं० कुक्कुरे॥

वक्रवक्त्रः। पुं० शूकरे॥

वक्रशल्या। स्त्री० कुटुम्बिनीक्षुपे।

वक्रशृङ्गी। स्त्री० गोविशेषे॥

वक्रा। स्त्री० शृङ्गग्राम्। अजशृङ्ग्याम्॥

वक्राग्रम्। न० कबाटवक्रवृक्षे॥

वक्राङ्गः। पुं० हंसे। न० कुटिलावयवे॥

वक्री। पुं० बुद्धे॥ त्रि० वक्रगतिविशिष्टे॥

वक्रोक्तिः। स्त्री० काकूक्तौ॥ शब्दालङ्कारभेदे। यथा। यदुक्तमन्यथावाक्यमन्यथान्येन योज्यते। श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथाद्विधा॥ तयोस्तिश्लेषवक्रोक्तिः काकुवक्रोक्तिश्च॥ पदभङ्गश्लेषेण यथा। नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो वामानां प्रियमादधासि हितकृन्नैवाऽबलानां भवान्। युक्तं किं हितकर्त्तनं ननु बलाभावप्रसिद्धात्मनः सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः॥ अभङ्गश्लेषेण यथा। अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता। त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित्॥ काक्वा यथा। गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम्। अलिकुलकोकिलललिते नैष्यति सखि सुरभि

समयेसौ ॥ कुटिलोक्तौ ॥ यथा ।
वादीव्याकरणं विनैवविदुषांधृष्टः
प्रविष्टः सभांजल्पन्नल्पमतिःस्म
यात्पटुवटुभ्रूभङ्गवक्रोक्तिभिः ।
हीतःसन्नपहासमेतिगणकोगोला
नभिज्ञस्तथाज्योतिर्वित्सदसिप्रग
ल्भगणकप्रश्नप्रपञ्चोक्तिभिः ॥
वक्रोष्ठिका । स्त्री॰ स्मिते । ग्रदृष्टिर
दहास्ये । ईषद्धास्ये ॥
वक्षणम् । पुं॰ वक्षसि ॥
वक्षाः । पुं॰ अनडुहि ॥ वहति ।
वह॰ । वहिहाधाञ्भ्यश्छन्दसीत्य
सुन्॰प्रत्ययस्यचसुट्इतिदत्तिकृ
त् ॥
वक्षः । न॰ अवयवविशेषे । हृदयादु
परिकंठादधोभागे । क्रोडे । भु
जान्तरे । उरसि । वत्से ॥ अस्यशु
भाशुभलक्षणंयथा । धनवान्सम
वक्षाःस्यात्पीनैर्वक्षोभिरूर्जितः
। वक्षोभिर्विषमैर्निःस्वः शस्त्रेण
निधनस्तथेतिगारुडे ६६ ॥ अर्थ
वान्समवक्षाःस्यात्पीनैःशूरा
धनान्विताः । अल्पैस्त्वविकलादी
नाविषमैःशस्त्रमृत्यवइतिसमुद्रः
॥ वक्षति । वक्षसङ्घाते । असुन् ॥
उच्यतेऽनेनवा । वच॰ । पचिवचि
भ्यांसुट्चेत्यसुन् ॥
वक्षोजः । पुं॰ ) कुचे । स्तने ॥
वक्षोरुहम् । न॰ )

वगला । स्त्री॰ देवीविशेषे ॥ यथा ।
वैद्यनाथेतुवगलास्थानंसर्वोत्तमंम
तमिति ॥
वगलामुखी । स्त्री॰ महाविद्याविशे
षे । पीताम्बरायाम् । वगलायाम् ॥
वगाहः । पुं॰ अवगाहे ॥ भागुरीमत्त
याल्लोपः ॥
वग्नुः । पुं॰ वक्तरि ॥ वक्ति । वच॰
। वचिगंश्चेतिनुः ॥
वङ्कः । पुं॰ पर्याणभागे । पर्याणको
टौ ॥ नदीपार्श्वे ॥ भङ्गुरे । व
क्रे । इतिमेदिनिकरः ॥
वङ्कसेनः । पुं॰ अगस्तिद्रुमे ॥
वङ्का । स्त्री॰ वल्गाग्रभागे ॥
वङ्किलः । पुं॰ कण्टके । द्रुमनखे॰
इ॰ त्रि॰ शेषः ॥
वङ्क्यः । त्रि॰ वक्रे ॥
वङ्क्रिः । पुं॰ न॰ वाद्यप्रभेदे ॥
वङ्कते । वक्रिकौटिल्ये । वङ्क्याद
यश्चेतिक्रिन्नन्तः साधुः ॥ गृहदा
रुणि ॥ पार्श्वास्थनि । पर्शुके ॥
वङ्क्रिमः । त्रि॰ कुटिले ॥
वङ्क्षणः । पुं॰ वस्त्यधऊरुमेढ्रयो
रन्तरालसन्धौ ॥ वाङ्क्षति॰वाङ्
क्ष्यतेवा । वाक्षिकाङ्क्षायाम् ।
ल्युट्बाहुलकान्नातोह्रस्वः ॥
वङ्क्षतेवङ्क्षणइतिस्वामी ॥ यद्वा
। वक्षति । वक्षरोषसंहत्योः ।
ल्युट् । आच्छीनद्योर्नुमित्यत्र॰

नुमितियोगविभागान्नुम् ॥

वङ्क्षु : । स्त्री॰ गङ्गास्रोतोविशेषे । यथा । तस्या : स्रोतसिसीताचवङ्क्षुर्भद्राचकीर्त्तितेतिशब्दमाला ॥ सातत्रपतितादिक्षु चतुर्धाप्रतिपद्यते । सीताचालकनन्दाचवङ्क्षुर्भद्राचवैक्रमात् ॥ सागङ्गा ॥ वंक्षुश्चपश्चिमगिरीनतीत्यसकलंतत : । पश्चिमंकेतुमालाख्यंवर्षमन्वेतिसार्णवम् ॥

वङ्ग : । पुं॰ कार्पासे । वृन्ताके । चन्द्रवंशीयवलिराजपुत्रे । वङ्गा : पुं॰ भूम्नि॰ ॰जनपदविशेषे ॥ रत्नाकरंसमारभ्यब्रह्मपुत्रान्तगंशिवे । वङ्गदेशोमयाप्रोक्त : सर्वसिद्धिप्रदर्शक : ॥ वङ्गानांनिवासोजनपद : वङ्गा : । निवासिगोजनपदेलुप् । लुपियुक्तवद्भाव : ॥ न॰ रङ्गे । त्रपुणि । स्वर्णजे । नागजीवने । मृदङ्गे । रङ्गे । सिंहले । रांगइ॰भा॰प्र॰धातुविशेषे ॥ खुरकंमिश्रकंचापिद्विविधंवङ्गमुच्यते । उत्तमंखुरकंतत्र॰मिश्रकन्त्वहितंमतम् ॥ पश्चाचरङ्गम् ॥ सीसके ॥ वङ्गति वगिगतौ । पचाद्यच् ॥

वङ्गजम् । न॰ सिन्दूरे ॥ त्रि॰ वङ्गदेशजाते ॥

वङ्गन : । पुं॰ वार्त्ताकौ ॥

वङ्गशुल्लजम् । न॰ कांस्ये ॥

वङ्गसेन : । पुं॰ वकद्रुमे । अगस्तिवृक्षे । मुनिद्रुमे ॥ अस्यपुष्पगुणा : । वासकस्यचपुष्पाणिवङ्गसेनस्यचैवहि । कटुपाकानितिक्तानिकासक्षयकराणिच ॥
वङ्गसेनक : । पुं॰ वकद्रुमे । अगस्तिवृक्षे । मुनिद्रुमे ॥

वङ्गला । स्त्री॰ रागिणीविशेषे ॥

वङ्गारि : । पुं॰ हरिताले ॥

वङ्गाल : । पुं॰ भैरवरागपुत्रे ॥

वङ्गाली । स्त्री॰ भैरवरागस्यरागिण्याम् ॥

वच : । पुं॰ कीरे । शुकपक्षिणि । वक्ति । वचपरिभाषणे । पचाद्यच् ॥

वचक्नु : । पुं॰ विप्रे । ब्राह्मणे ॥ ऋषिविशेषे ॥ त्रि॰ वावदूके । वक्ति । वच॰ । स्युवचिभ्योन्युजागूजक्नुचइत्यक्नुच् ॥

वचण्डा । स्त्री॰ वरिण्डार्थे ॥

वचण्डी । स्त्री॰ शारिकायाम् । वर्त्तौ । शस्त्रप्रभेदे । छुरिकायाम् ॥

वचनम् । न॰ दूरायाम् । उक्तौ । वाचि । भाषणे । श्रुतिमाचातमुधातुल्यंसर्वकालसुखावहम् । सत्यंसारंहितकरंवचनंश्रेष्ठमीप्सितम् ॥ वचेर्भावेल्युट् उच्यते॰ऽनेनवा ॥ शुण्ठ्याम् ॥ वाचोक्तौ ॥

वचनग्राही । त्रि॰ अवनेस्थिते ॥

वचनीय : । त्रि॰ वक्तव्ये ॥ वचेरनीयर् ॥

वचनीयता । स्त्री० निंदायाम् । लोकापवादे ॥ भावेतल् ॥

वचनेस्थित : । त्रि० विधेये । विनयग्राहिणि । आश्रवे । प्रवृत्तिनिमित्तयोर्विधायत्तंशक्यं ॥ वचनेतिष्ठतिस्म । ष्ठा० । गत्यर्थेतिक्तः । तत्पुरुषेकृतोत्यलुक् ॥

वचनोपक्रम : । पुं० वाक्यारम्भे । उपन्यासे ॥

वचर : । पुं० कुक्कुटे ॥ शठे ॥

वचलु : । पुं० वैरिणि ॥ शत्रौ ॥

वच : । न० वाक्ये । वाचि । वचने ॥ वच० । सर्वधातुभ्योऽसुन्नित्यसुन् ॥

वचसाम्पति : । पुं० सुरगुरौ । वृहस्पतौ ॥

वचा । स्त्री० शारिकायाम् ॥ उग्रगन्धौषधौ । षड्ग्रन्थायाम् । गोलोम्याम् । शतपर्विकायाम् । अस्या गुणायथा । वचोग्रगन्धाकटुकातिक्तोष्णावान्तिवह्निकृत् । विबन्धाध्मानशूलघ्नीशकृन्मूत्रविशोधनी ॥ अपस्मारकफोन्मादभूतजन्त्वनिलान्हरेत् ॥ अपिच । वह्निर्वापयसाऽन्येनमासमेकंतुसेविता । वचाकुर्यान्नरंप्राज्ञंश्रुतिधारणसंयुतम् ॥ चन्द्रसूर्यग्रहेपीतंपलमेकंपयोन्वितम् । वचायास्तत्क्षणंकुर्यान्महाप्रज्ञान्वितंनरम् ॥ अथवचाभेदाः । पारसीकवचाशुक्लाप्रोक्ताहैमवतीतिसा । हैमवत्युदिताताद्वत्कुसंहन्तिविशेषतः ॥ अथमहाभरीवचा । यस्याः कुलञ्जन इतिभाषायांनामान्तरम् । सुगन्धाप्युग्रगन्धाचविशेषात्कफकासनुत् । सुस्वरत्वकरीरुच्याहृत्कण्ठमुखशोधनी ॥ अपरासुगन्धा स्थूलग्रन्थिर्यस्यालोकेमहाभरा इति नाम । स्थूलग्रन्थिः सुगन्धान्यात-तोहीनगुणास्मृता ॥ द्वीपांतरवचा । याचोपचीनीतिनाम्नालोकेविख्याता । द्वीपान्तरवचाकट्वीतिक्तोष्णावह्निदीप्तिकृत् । विबन्धाध्मानशूलघ्नीशकृन्मूत्रविशोधनी ॥ वातव्याधिमपस्मारमुन्मादंतनुवेदनाम्व्यपोहतिविशेषेणफिरङ्गामयमुद्धतम् ॥ वक्ति । वचेरन्तर्भावितण्यर्थात्पचाद्यच् । टाप् ।

वचोग्रह : । पुं० कर्णे ॥

वचोहर : । त्रि० दूते ॥ वचोहरति । हरतेरनुद्यमनेऽच् ॥

वज्र : । पुं० श्रीकृष्णस्यप्रपौत्रे ॥ अनिरुद्धात्सुभद्रायांवज्रोनामाभवत् इतिगारुडे १४४ऽध्याय : ॥ विष्कम्भादिषुपञ्चदशेयोगे ॥ अत्रजातस्यफलंयथा । गुणीगुणज्ञोबलवान्महौजा : सद्रत्नवस्त्रादिपरीक्षक : स्यात् । वज्राभिधानेयदि

चेत्प्रसूतौवज्रोपम : स्याद्रिपुका मिनीनाम् ॥ कोकिलाक्षवृक्षे ॥ स्नुहीवृक्षे ॥ सेहुण्डवृक्षे ॥ न॰ बालके ॥ धात्र्याम् ॥ काञ्जिके ॥ वज्रपुष्पे ॥ लौहविशेषे ॥ सच बहुविधोयथा । नीलपिण्डम्॰ अरुणाभम्॰ मोरकम्॰ नागकेश रम्॰ तित्तिराङ्गम्॰ स्वर्णवज्रम् ॰शैवालवज्रम्॰शोणवज्रम्॰ रोहि णीकाङ्कोलम्॰ग्रन्थिवज्रकम्॰ मद नाख्यमित्यादि एतेषांनामानुरूपं चिह्नमितिपुराणम् ॥ अभ्रविशेषे॥ अस्योत्पत्त्यादिर्यथा । पुरावधायव्र चस्थवज्रिणावज्रमुद्धृतम् । विस्फु लिङ्गास्ततस्तस्यगगनेपरिसर्पिता: ॥ तेनिपेतुर्घनध्वानाच्छिखरेषुम हीभृताम् । तेभ्यएवसमुत्पन्नं तत् तद्गिरिपुचाभ्रकम् । तच्चवज्र्जा तत्त्वादभ्रमभ्ररवोद्भवात् । गगना त्स्खलितंयस्मादूगगनश्चततोमत म् ॥ पिनाकंदर्दुरंनागंवज्रंचेति चतुर्विधम् । वज्रन्तुवज्रवत्तिष्ठेत् तन्नाग्नौविकृतिंभजेत् ॥ सर्वाभ्रे षुवरंवज्रंव्याधिवार्द्धक्यमृत्युहृत् । पुं॰ न॰ इन्द्रास्त्रविशेषे । अमरादि न्याम् । कुलिशे । भिदुरे । पवौ । शतकोटौ । स्वरौ । शम्बे । दम्भो लौ । अशनौ । दधीचेरस्थिसम्भवे ऽस्त्रे । आयुधानांमध्येभगवतीश्रि



भूतौ । वज्रधारकविधिर्यथामुने: कात्यायनमिचक्रजैमिनेश्चापिकीर्त्त नात् ॥ विद्युदग्निभयंनास्तिपठि तेचगृहोदरे । लिखितेचगृहोदरे॰ इतिशापाठ: ॥ जैमिनिश्चसुमन्तु श्चवैशम्पायनएवच । पुलस्त्य: पु लहश्चैवपञ्चैतेवज्रवारका: ॥ रत्न विशेषे । अभेद्ये । हीरके । हीरा॰ इ॰ भा॰ प्र॰ अत्रविशेषोयथा । स्वच्छंविद्युत्प्रभंस्निग्धंसौन्दर्यंल घुलेखनम् । षडारंतीक्ष्णधारञ्च सुशाम्यारंश्रियंदिशेत् । भस्मा भंकाकपादश्चरेखाक्रान्तश्चवर्त्तुल म् । आधारमलिनंविन्दुसन्त्रासे स्फुटितंतथा ॥ नीलाभंचिपिटं रूक्षंतद्वज्रंदोषलंत्यजेत् ॥ वज्रस्य चतुर्वर्णलक्षणंयथा । श्वेतरक्ताभि तपीतमेचकतयाच्छायाश्चतस्र क्रमा द्विप्रादिस्वमिहास्ययत्सुमनस: शं संतिसत्यंतत: । स्फीतांकीर्त्तिम नुत्तमांश्रियमिदंदत्ते यथासन्धृतं मर्त्यानामयथायथंतुकुलिशंपथ्यं हितंजायत: ॥ तस्यपरीक्षायथा । यत्पाषाणतलेनिकाशनिकरैर्नोद्व घृष्यतेनिष्ठुरैयच्चान्योपललोहमुद्गर मुखैर्लेखान्नयात्याहनम् । यश्चा न्यंनिजलीलयैवदलयेद्वज्रेणवा भिद्यतेतज्जात्यंकुलिशंवदन्तिकुश ला: श्लाघ्यंमहार्घ्यंस्मृतत् ॥ तस्य

वज्र :

वर्णगुणोयथा । विप्र : सोपिरसाय नेषुबलवानष्टाङ्गसिद्धिप्रदो राजन्य स्तुनृणांवलीपलितजिन्मृत्युंजयेद्ध्रुवा । द्रव्याकर्षणसिद्धिदस्तुसुत रांवैश्योऽथशूद्रोभवेत्सर्वव्याधिहर स्तदेषकथितोवज्रस्यवर्णोगुणः॥ अ पिच । वज्रस्यनामलक्षणगुणायथा । हीरकः पुंसि वज्रोस्त्रीचन्द्रोम णिवरश्चसः । सतुश्वेतः स्मृतो विप्रोलोहितः क्षत्रियोमतः ॥ पीतोवैश्योऽसितः शूद्रश्चतुर्वर्णा त्मकश्चसः । रसायनेमतोविप्रः सर्वसिद्धिप्रदायकः । क्षत्रियोव्या धिविध्वंसीजरामृत्युहरः परः । वैश्योधनप्रदः प्रोक्तस्तथादेहस्यदा र्ढ्यकृत् ॥ शूद्रोनाशयतिव्याधीन् वयस्तम्भंकरोतिच । पुंस्त्रीनपुंस कान्येतेलक्षणीयाश्चलक्षणैः ॥ सु वृत्ताः फलसम्पूर्णास्तेजोयुक्ताबृह त्तराः । पुरुषास्तेसमाख्यातारेखा बिन्दुविवर्जिताः ॥ रेखाबिन्दु समायुक्ताः षडस्रास्तेस्त्रियः स्मृ ताः । षडस्राः षट्कोणाः । त्रिकोणाश्चसुदीर्घास्तेविज्ञेयान पुंसकाः ॥ तेषिस्युः पुरुषाः श्रेष्ठारसबन्धनकारिणः । स्त्रियः कुर्वन्तिकायस्यकान्तिंस्त्रीणांसुख प्रदाः । नपुंसकास्त्ववीर्याः स्यु रकामाः सत्त्ववर्जिताः । स्त्रियः

वज्र :

स्त्रीभ्यः प्रदातव्याः क्लीबाः क्लीबे षुयोजयेत् । सर्वेभ्यः सर्वदादेयाः पुरुषावीर्यवर्द्धनाः ॥ अशुद्धंकुरु तेवज्रंकुष्ठंपार्श्वव्यथांतथा । पा ण्डुतापंगुरुत्वञ्चतस्मात्संशोध्य मारयेत् ॥ शोधनविधिस्तु । कुलत्थ कोद्रवक्वाथेदोलायन्त्रे विपाचयेत् । व्याघ्रीकन्दगतंवज्रंत्रिदिनं तद्वि शुध्यति ॥ व्याघ्रीकण्टकारिका । अन्यः शोधनविधिर्यथा गृहीत्वा शुभंवज्रं व्याघ्रीकन्दोदरेक्षिपे त् । महिषीविष्ठयालिप्त्वाकरी षाग्नौविपाचयेत् । त्रियामायांचतु र्यामंयामिन्यन्तेश्वमूत्रके । सेचये त्पाचयेदेवंसप्तरात्रेणशुद्ध्यति ॥ अथास्यमारणविधिः ॥ हिङ्गुसैन्ध वसंयुक्ते क्षिपेत् क्वाथेकुलत्थजे । तप्तंतप्तंपुनर्वज्रंभवेत्भस्मत्रिसप्त धा ॥ अन्योमारणप्रकारोयथा । मेषशृङ्गंभुजङ्गास्थिकूर्मपृष्ठामम्लवेत सम् । शशदन्तंसमंपिष्ट्वावज्रीक्षीरे णगोलकम् ॥ कृत्वातन्मध्यगंवज्रं म्रियतेध्मातमेवहि ॥ मारितस्य वज्रस्यगुणायथा । आयुः पुष्टिंब लंवीर्यंवर्णंसौख्यंकरोतिच । से वितंसर्वरोगघ्नं मृतंवज्रंनसंशयः ॥ शेषरत्नानांशोधनमारणविधिः ॥ वज्रवत्सर्वरत्नानिशोधयेन्मारये त्तथा । मुक्तानांमारितानाञ्च

तेषांश्रगुणानपि ॥ मणयोवीर्यतः शीतामधुरास्तुवरारसात् । चक्षुष्या लेखनाश्चापि सारकाविषहारकाः ॥ धारणात्तेतुमङ्गल्याग्रहदुष्टिहराश्चपि ॥ वज्रगणनांलक्षोत्पत्तिपरीक्षामूल्यानिचपश्यान्यत्र युक्तिकल्पतरुप्रभृतिषु ॥ मणिवेधकेरत्नविशेषे । मणिवेधकसूच्याम् ॥ वजतिगच्छतिपर्वतादौ । बजगतौ । ऋज्रेन्द्रेतिरन् ॥ सगणे ०॥८०॥

वज्रकम् । न० वज्रक्षारे ॥ दुग्धपाचणे ॥ वज्रकंदुग्धपाचनमिति हारावली ॥

वज्रकङ्कट : । पुं० हनुमति ॥

वज्रकण्टक : । पुं० कोकिलाक्षवृक्षे ॥ स्नुहीवृक्षे ॥

वज्रकण्टकशाल्मली । स्त्री० नरकविशेषे ॥

वज्रकन्द : । पुं० वज्रकर्णे । सकरकन्द इ० भा० प्र० ॥

वज्रकन्दा । स्त्री० स्नुह्यां ॥

वज्रकपाली । पुं० बुद्धविशेषे । हेरुके ॥

वज्रकालिका । स्त्री० मायादेव्याम् ॥

वज्रकूट: । पुं० प्लक्षद्वीपस्थाद्रिप्रभेदे॥

वज्रकेतु : । पुं० नरकराजे ॥

वज्रक्षारम् । न० क्षारभेदे । वज्रकेधूमोत्थे । क्षारश्रेष्ठे ॥

वज्रचर्म्मा । पुं० खड्गिनि । गण्डके

वज्रजित् । पुं० गरुडे ॥

वज्रज्वाला । स्त्री० वज्राग्नौ ॥

वज्रटीक : । पुं० बुद्धविशेषे । चक्रसंवरे । वज्रकपालिनि ।

वज्रतुण्ड : पुं० गणेशे ॥ गरुडे गृध्रे । मशके ॥

वज्रदन्त : । पुं० शूकरे ॥ मूषिके ॥

वज्रदशन : । पुं० मूषिके ॥

वज्रद्रु : । पुं० स्नुहीवृक्षे ॥ वज्रनामाद्रु : ॥

वज्रद्रुम : । पुं० स्नुहीवृक्षे ॥

वज्रधर : । पुं० इन्द्रे ॥ जिनविशेषे ॥

वज्रध्वनि : । पुं० वज्रनिर्घोषे ॥

वज्रनिर्घोष : । पुं० अशनिशब्दे ॥ वज्रस्यनिर्घोष : ॥

वज्रनिष्पेष : । पुं० स्फूर्जथौ । वज्रनिर्घोषे ॥ निष्पेषणम् । पिष्लृ सञ्चूर्णने । घञ् । इदुदुपधस्येति ष : ॥ निष्पेषशब्दस्तदुत्यशब्दपर: । सङ्घट्टमात्रपरइत्यन्ये । वज्रस्य निष्पेष : ॥

वज्रपञ्जर : । पुं० यात्रायोगान्तरे ॥ यथा । उत्तममूलविकीर्णशुभवर्गेषु शनैश्चर । वज्रपञ्जरयोगोयंहन्ति क्रूरानरीन्प्रति ॥

वज्रपाणि : । पुं० पुरन्दरे । इन्द्रे ॥ वज्रंपाणौयस्यस : ॥

वज्रपुष्पम् । न० तिलपुष्पे । वज्र

मिवपुष्पं ॥
वज्रपुष्पा । स्त्री० शतपुष्पायाम् ॥
वज्रबाहु : । पुं० वह्नौ ॥
वज्रमूली । स्त्री० माषपर्ण्याम् ॥
वज्ररथ : । पुं० क्षत्रिये ॥
वज्ररद : । पुं० शूकरे ॥
वज्रलेप : । पुं० कल्कविशेषे ॥ स चोक्तो वाराह्यांयथा । आमांतिन्दुकमामं कपित्थकं पुष्पमपिचशाल्मल्या : । बीजानिमल्लकीनांवम्धनकल्कस्त्वचाचेति ॥ एतैः सलिलद्रोण : क्वाथयितव्योऽष्टभागशेषश्च । अवतार्योऽस्यचकल्कोद्रव्यैरेतै : समनुयोज्य : ॥ श्रीवासकरसगुग्गुलुभल्लातककुन्दरूकसर्जरसैः । अतसीबिल्वैश्चयुत : कल्कोऽयंवज्रलेपाख्य : ॥ ३ ॥ अस्यगुणानाह । प्रासादहर्म्यवलभीलिङ्गप्रतिमासुकुड्यकूपेषु । सन्तप्तोदातव्योवर्षसहस्रायुतस्थायी ॥ ४ ॥ अन्यमप्याह । लाक्षाकुन्दकगुग्गुलुगृहधूमकपित्थबिल्वमध्यानि । नागफलनिम्बतिन्दुकमदनफलमधुकमञ्जिष्ठाः ॥ सर्जरससालकानिचेति कल्क : कृतोद्वितीयोयम् । वज्राख्य: प्रथमगुणैरयमपितेष्वेवकार्येषु ॥६ अपिच । गोमहिषाजविषाणै : खररोम्णामहिषचर्मगव्यैश्च । निम्बकपित्थरसै : सहवज्रतलीनामकल्को न्य : ॥ ७ ॥ अपिच । अष्टौसीसकभागा : कांस्यस्यद्वौतुरीतिकाभाग : । मयकथितोयंयोगोविज्ञेयो वज्रसङ्घात : ॥ ८ ॥ इति ॥
वज्रवल्ली । स्त्री० अस्थिसंहारलतायाम् ॥
वज्रवारक : । पुं० जैमिन्यादौ ॥ यथा । जैमिनिश्चसुमन्तुश्चवैशम्पायनएवच । पुलस्त्य : पुलहश्चैवपञ्चैतेवज्रवारका: ॥
वज्रवाराही । स्त्री० मायादेव्याम् । मारीच्याम् । त्रिमुखायाम् ॥
वज्रबीजक : । पुं० लताकरञ्जे ॥
वज्रवृक्ष: । पुं० सेहुण्डवृक्षे ॥
वज्रव्यूह : । पुं० वज्राकाररचनयाविधाव्यवस्थितबले ॥
वज्रशल्य: । पुं० शल्यकनामजन्तौ ॥
वज्रशृङ्खला । स्त्री० विद्यादेव्याम्॥
वज्रसार : । त्रि० वज्रवत्कठिने ॥
वज्रसूर्य : । पुं० बुद्धविशेषे ॥
वज्रा । स्त्री० स्नुह्याम् । गुडूच्याम् । दुर्गायाम् ॥ वज्राङ्कुशकरीदेवीवज्रातेनेहगीयतेइतिदेवीपुराणम्
वज्राङ्ग: । पुं० भुजङ्गमे ॥ त्रि० वज्रतुल्याङ्गयुक्ते ॥
वज्राङ्गी । स्त्री० अस्थिसंहारिणि । हाडजोडा इ० भा० प्र० ॥ गवेधुकायाम् ॥
वज्राभ : । पुं० दुग्धपाषाणे । त्रि०

वञ्चसमानदीप्तिमति ॥
वज्रायुधः । पुं॰ इन्द्रे ॥
वज्राशनिः । पुं॰ स्त्री॰ वज्रे ॥
वज्रासनम् । न॰ अष्टाङ्गयोगस्थतती याङ्गविशेषे ॥ यथा । ऊर्वोः पादौक्रमाद्यस्य कृत्वा प्रत्यङ्मुखाङ्गुली । करौ निदध्यादाख्यातं वज्रासनमनुत्तममिति ॥
वज्रास्थिशृङ्खला । स्त्री॰ कोकिलाचञ्चे ॥
वज्री । पुं॰ देवाधिपे । शक्रे ॥ वज्रोऽस्यास्ति अतइनिठनावितीनिः । वृद्धे ॥
वज्री । स्त्री॰ स्नुहीप्रभेदे ॥
वञ्चकः । पुं॰ जम्बुके । शृगाले । गृहबभ्रौ ॥ त्रि॰ खले । धूर्ते । परप्रतारणस्वभावे । सुवर्णादिद्रव्यं गृहीत्वा ऽपद्रव्यप्रदे पेणवञ्चनशीले ॥ वञ्चयति । वञ्चुगतौ । स्वन्तः । खवुल् । वञ्चयतेवा । वञ्चुप्रलम्भने । चौरादिकः । खवुल् ॥
वञ्चथः । पुं॰ धूर्ते ॥ वञ्चति । वञ्चु॰ । शीङ्शपीत्यादिनाऽथप्रत्ययः ॥ कोकिले । वञ्चनायाम् ॥
वञ्चनम् । न॰ प्रतारणे ॥ शाठ्ये ॥ वञ्चुप्रलम्भने । ल्युट् ॥
वञ्चना । स्त्री॰ प्रतारणायाम् । प्रमादे ॥ यथा । मन्यतेस्मपिबतांविलोचनैः पक्षपातमपिवञ्चनां मनः ॥ ११ सर्गे रघुः ॥ ३९ ॥
वञ्चनीयः । त्रि॰ प्रतारणीये ॥ वञ्चितुमर्हः । अर्हेकृत्यतचश्चेतिवञ्चेरनीयर् ॥
वञ्चितः । त्रि॰ प्रतारिते । विप्रलब्धे । वञ्चनाविशिष्टे ॥ वञ्च्यतेस्म । वञ्चु॰ । स्वन्तः । क्तः ॥
वञ्जुलः । पुं॰ तिनिशे ॥ अशोकवृक्षे ॥ वानीरे । वेतसे ॥ वञ्च्यते । बाहुलकादुलोजन्तवञ्च ॥ वञ्जतिवा । वजगतौ । बाहुलकादुलच् नुमच ॥ दीर्घपर्वे वेतसे ॥ स्थलपद्मे ॥ पक्षिविशेषे ॥
वञ्जुलकः पुं॰ कर्णशालखगे ॥
वञ्जुलद्रुमः । पुं॰ अशोकवृक्षे ॥
वञ्जुलप्रियः । पुं॰ वानीरे । वेतसे ॥
वञ्जुला स्त्री॰ बहुक्षीरायांगवि ॥
वटः । पुं॰ वृक्षविशेषे । न्यग्रोधे । बहुपदि । पादरोहणे । यक्षावासे । अस्यगुणा॰ । वटः शीतो गुरुर्ग्राही कफपित्तव्रणापहः । वर्ण्यो विसर्पदाहघ्नः कषायो योनिदोषहृदिति ॥ कपर्दे । वराटके ॥ मोले । गुणे । रज्जौ ॥ भक्ष्ये । बडा॰ इ॰ भा॰ प्र॰ ॥ साम्ये ॥ पिशाचविशेषे ॥ पश्यवरफम् ॥ वटति । वटवेष्टने । अच् ॥

बटक : । पुं० तोलके । पिष्टकप्रभेदे । वडा० भल्ला० हि० भा० प्र० भक्ष्ये ॥ तस्यनिर्माणादिर्यथा । माषाणां पिष्टिकांयुक्तांलवणार्द्रकहिङ्गुभि : । कृत्वाविदध्याद्वटकांस्तांस्तैलेषुपचेक्ष्छनै : ॥ विशुष्काबटकाबल्या हंहणावीर्यवर्द्धना : । बातामयहरारुच्याविशेषाद्दर्दितापहा : ॥ विवन्धभेदिन : श्लेष्मकारिणोत्यग्निपूजिता । सम्पूर्णनिष्चिपेत्तक्रे भृष्टंजीरकहिङ्गु च ॥ लवणंतवबटकान्सकलानपिमज्जयेत् । शुक्रलस्तवबटकोबलकृद्रोचनोगुरु : ॥ विवन्धहृद्दिदाहीचश्लेष्मल : पवनापह : । राज्यकायातिरोचन्यापाचन्यातांस्तुभक्षयेत् ॥ बटति । बट० । क्कुन् ॥

बटपत्र : । पुं० बर्बराप्रभेदे । सिताजर्के । न० न्यग्रोधपर्णे ॥

बटपत्रा । स्त्री० त्रिपुरमालीपुष्पवृक्षे ।

बटपत्री । स्त्री० मोहिन्याख्यलतायाम् । ऐरावत्याम् ॥ बटपत्रीकषायोष्णायोनिमूत्रगदापहा ॥

बटवासी । पुं० यक्षे ॥ त्रि० बटवृक्षवासकर्त्तरि ॥

बटाकर : । पुं० शुल्वे । रज्जौ । आकरोति । पचाद्यच् ॥ बटस्याकर : ॥

बटारका । स्त्री० रज्जौ ।

बटाबीक : । पुं० नामचौरे ॥

बटि : । स्त्री० उपजिह्विकायाम् ॥ बटिकायाम् ॥ बटति । बट० । सर्वधातुभ्यइन् ॥

बटिका । स्त्री० बट्याम् । मोदके गुटिकायाम् । पिण्ड्याम् ॥ व्यञ्जनोपयोगिमाषादिद्रव्ये । बड़ी० इत्युभयोर्भाषायांप्रसिद्धि : अस्या निर्माणविधिर्यथा । माषाणांपिष्टिकाहिङ्गुलवणार्द्रकसंयुता । तया विरचितावस्त्रे बटिका : साधुशोषिता : ॥ तलितास्तप्ततैलेताश्रथवासुप्रलेहिता : । बटकास्यगुणैर्युक्तास्तातव्यारुचिदाभृशम् ॥ कुष्माण्डकबटीज्ञेया पूर्वोक्तबटिकागुणा । विशेषात्पित्तरक्तघ्नीलघ्वीच कथिताबुधै : ॥ मुद्गानांबटिकातद्वद्रचितासाधितातथा । पथ्यारुच्यातत्तोलघ्वीमुद्गसूपगुणास्मृतेति ॥

बटितम् । न० शिलापिष्टमांसे ॥ त्रि० शिलापिष्टद्रव्ये ॥

बटी । स्त्री० बटिकायाम् ॥ वृक्षविशेषे । नदीबटे । यज्ञवृक्षे ॥ त्रि० रज्जौ । गुणे ॥ बटति । बट० । अच् ॥ बट्यतेवा ॥ खनोघचेतिघ : । गौरादि : । यथा । सिताचतुर्गुणादेयाबटीषुद्विगुणोगुडइति ॥

बटु : । पुं० ब्रह्मचारिणि ॥ ब्राह्मणमाणवके ॥ बालके ॥ कुटन्नटवृक्षे ।

श्वोनाके । वटति । वट० । अप सेतिसूत्रेणादु : ॥

वटुक : । पुं० बालके । माणवके । भैरवविशेषे ॥

वटुकरणम् । न० उपनयने ॥

वटेश्वरपुरम् । न० तीर्थविशेषे ॥

वठर : । पुं० मूर्खे । अम्बष्टे । शब्दकारे । वक्रे ॥ त्रि० शठे । मन्दे बक्ति । वच० । वचिमचिभ्यांकिच्चेत्यरष्टोन्तादेशश्च ॥

वडभी । स्त्री० मुदनी० गृहचूडा० इ० गौ० दे० भा० प्र० । कुड्यिपुच्छादनार्थं दत्तं वक्रकाष्ठे । गोपानस्याम् ॥ बलते । बलसंवरणे । बाहुलकादभच् । गौरादित्वान् ङीष् । चन्द्रशालायाम् ॥ चन्द्रशालाचवडभीस्यातांप्रासादमूर्द्धनीतिश्रीधर : ॥

वडवा । स्त्री० द्विजयोषिति । ब्राह्मण्याम् । अश्वायाम् । घोटक्याम् । कुम्भदास्याम् ॥ नारीजात्यन्तरे ॥ बलंसामर्थ्यमतिशयितमस्या : । अन्येभ्योपीतिव : । डलयोरेकता । वलंवातिवा । आतोनुपेतिक : ॥ वलिनवलतिवा । अन्येभ्योपीतिड : ॥

वडवाकृत : । पुं० पञ्चदशदासान्तर्गतदासविशेषे ॥ यथा । भक्तदासश्च विज्ञेयस्तथैववडवाकृत : ॥ वडवादासीतल्लोभादङ्गीकृतदासइत्यर्थ : ॥

बाडवाग्नि : । पुं० समुद्राग्नौ सलिलेन्धने । वडवाग्नौ ॥

वडवादुग्धम् । न० अश्वाक्षीरे । अस्य गुणा : ॥ रूक्षोष्णंवडवाक्षीरंबल्यंशाखानिलापहम् । अम्लंपटुलघुस्वादुसर्वंभैकाशफंतथा ॥

वडवानल : । पुं० और्वे । वाडवे । वडवाग्नौ ॥ वडवाया अनल : । आराधाधेयभावएवसम्बन्धस्तेनषष्ठ्यर्थ : । पुराकिलऔर्वेणमुनिना० अयोनिजंपुत्रमिच्छताबद्धोमथितं तत्रज्वालामय : पुरुषोजात : ० सचसमुद्रेवडवामुखेऽवस्थापितइतिपौराणिका : ॥

वडवामुख : । पुं० और्वे । अब्धग्नौ वडवानले ॥ न० पाताले ॥

वडवासुतौ । पुं० २ अश्विनीकुमारयो : स्वर्वैद्ययो : ।

वडवाहृत : । पुं० वडवाकृते । दासविशेषे ॥ वडवागृहदासीतयाहृतस्तल्लोभेनतामुद्वाह्यदासत्वं नप्रविष्ट : ॥

वडा । स्त्री० वटके ॥

वडिशम् । न० मत्स्यधरणार्थं वक्रलौहकण्टकविशेषे । मत्स्यवेधने ॥ वलिनोमत्स्यान्शश्यति । शोतनूकरणे । आतोनुपेतिक : । डलयोरेकता ॥

वडिशी । स्त्री॰ वडिशे ॥

वड्ड : । त्रि॰ वृहति । वड्डा॰ वड्डी॰ चु॰ भा॰ ॥ वलते । वलसंवरणे सञ्चरणे च । वहुलमन्यत्रापीतिर-क् । डलयोरेकत्वस्मरणाल्लस्य ड: ॥

वण : । पुं॰ शब्दे ॥

वणिक्पथ : । पुं॰ हट्टे । आपणे ॥ स्थलवणिज्यायाम् ॥ स्थलजलादि नावाणिज्यमिति कुल्लूकभट्ट : ॥

वणिक् । पुं॰ क्रयविक्रयकर्त्तरि । वाणिज्यकारके । वैदेहके । सार्थवाहे । नैगमे । पण्याजीवे । क्रयविक्रयिके ॥ करणान्तरे ॥ स्त्री॰ वणिज्यायाम् ॥ पणते । पण॰ । पणेरिज्यादेश्च व : ॥

वणिज्या । स्त्री॰ विपणे ॥ न॰ वणिज : कर्मभावयो : ॥ दूतवणिग्भ्यां चेति य: । माधवस्तु॰ वणिज्याशब्द: स्वभावात्स्त्रीलिङ्गो भावप्रधानप्रत्ययो न तु कर्मणीत्याह ॥ भाष्ये तु॰ वार्त्तिकमेव नास्ति ॥

वण्ट : । पुं॰ अंशे । भागे । वाण्टा॰ चु॰ भा॰ ॥ दात्रमुष्टौ । वैण्टा॰ चु॰ भा॰ ॥ अनूढपुरुषे ॥

वण्टक : । पुं॰ अंशे । भागे ॥ वण्टते । वटिविभाजने । कर्मणि घञ् । स्वार्थेक :

वण्टाल : । पुं॰ युद्धभेदे । शूरयुद्धे ॥ नौकायाम् ॥ खनित्रे ॥

वण्ठ : । पुं॰ अकृतोद्वाहे ॥ खर्वे । कुन्तायुधे ॥ भृत्ये । वांठ॰ चु॰ प॰ भा॰ प्र॰ वण्ठते । वठि एकचर्यायाम् । अच् ॥

वण्ठर : । पुं॰ स्थगिकायाम् ॥ रज्जौ कुक्कुरस्य लाङ्गूले ॥ करीरकोषे । तालस्य पल्लवे ॥ पयोधरे ॥ वण्ठरच् ॥

वण्ड : । पुं॰ अनावृतमेढ्रे । दुश्चर्मणि ॥ त्रि॰ हस्तादिवर्ज्जिते ॥ छिन्नलाङ्गूले । वांडा॰ दु॰ भा॰ प्र॰ ॥ छिन्नहस्त ॥ वनुते । वनु याचने । वनति वा । वन सम्भक्तौ । अमन्ताड्ड : ॥

वण्डा । स्त्री॰ पांशुलायाम् ॥ अजादित्वाट्टाप् ॥

वत् । अ॰ सादृश्ये ॥ तेन तुल्यमित्यादिभिर्विहितो वतिप्रत्यय : । यस्तूपसर्गाद्वा स्वार्थे इति विहित : स न गृह्यते ॥

वत । अ॰ आमन्त्रणे । सन्तोषे ॥ खेदे ॥ अनुकम्पे ॥ विस्मये ॥ वयतेस्म । वय गतौ । गत्यर्थेति क्त : । नेट् यलोप : ॥ वन्यतेस्म वा । वनु याचने । क्त : अनुदात्तोपदेशेति-नलोप : ॥

वतंस: । पुं॰ कर्णपूरे । कर्णाभरणे ॥ शिरोभूषणे । शेखरे ॥ अवतंस इति॰ अवतंस्यतेऽनेन वा । तसि :

सोशोभूषार्थः । पचाद्यच् । इल चेतिघञ् वा । भागुरिमतेनाका रलोपः ॥

वतण्डः । पुं॰ मुनिविशेषे ॥

वतोका स्त्री॰ अवतोकायाम् । स्खलितगर्भायाम् ॥

वत्सः । पुं॰ पुत्रादौ । वस्ता॰ इ॰भा॰ ॥ तर्णके । शक्रत्करौ ॥ वदत्यभीष्णं मातरम् । वदव्यक्तायांवाचि॰ वदस्थैर्येवा । वृतृवदीतिसः ॥ ऋषिविशेषे ॥ वर्षे ॥ न॰ । उरसि । वक्षसि ॥

वत्सकः । पुं॰ कुटजवृक्षे ॥ न॰पुष्पकासीसे ॥ संज्ञायांकन् ॥ अनुकम्पितोवत्सो अनुकम्पितोवत्सः । अनुकम्पायामितिकः ॥

वत्सकबीजम् । न॰ इन्द्रयवे ।

वत्सकामा । स्त्री॰ वत्साभिलाषिण्यां गवि । वत्सलायाम् ॥ पुत्रादिकामनाविशिष्टायांनार्याम् ॥

वत्सतरः । पुं॰ दम्ये । वत्सभावमतीत्यद्वितीयंवयः प्राप्ते ॥ तनुर्वत्सः वत्सोक्षाश्वर्षभेभ्यश्चतनुत्व इतिष्टरच् ॥

वत्सतरी । स्त्री॰ वत्सायाभावमतीत्यद्वितीयंवयः प्राप्तायाम् । त्रिहायण्यां गवि ॥ तन्वीवत्सा । ष्टरच् । ङीष् ॥

वत्सनाभः । पुं॰ विषवृक्षविशेषे । अ मृते । उग्रे । महौषधि । मारके । माहुराद्य॰ भा॰प्र॰ ॥ अस्यस्वरूपनिरूपणंयथा । सिन्धुवारसदृक्पत्रोवत्सनाभ्याकृतिस्तथा । यत्पार्श्वे नतरोर्वृद्धिर्वत्सनाभः सभाषित इति ॥ अस्यगुणाः । अतिमधुरत्वम्॰ वातकफकण्ठरुक्सन्निपातनाशित्वम्॰ पित्तसन्तापकारकत्व-ञ्चेतिराजनिर्घण्टः ॥ वत्सान्नभ्नातिहिनस्ति । णभहिंसायाम् । कर्मण्यण् ॥ वत्सस्यनाभिरिवनाभिरस्येतिवा ॥

वत्सपः । पुं॰ वत्सचारकबालके ॥

वत्सपत्तनम् । न॰ भारतवर्षस्योत्तरे देशविशेषे । कौशाम्ब्याम् ॥

वत्सपालः । पुं॰ बलदेवे ॥ श्रीकृष्णे ॥ वत्सपे ॥

वत्सरः । पुं॰ द्वादशमासात्मककाले । संवत्सरे । अब्दे । हायने । शरदि । समायाम् । वर्षे ॥ सचसंवत्सरादिभेदेनपञ्चधाभवति । तथाहि । शकाब्दात्पञ्चभिः शेषात्समाद्यादिषुवत्सराः । सम्परीद नुपूर्वास्तशेदापूर्वकामताः ॥ अथषष्टिसंवत्सराणांगणना । मानेगुरोरशभिदः परिवत्सराणांषष्टिः स्मृतामुनिवरैः प्रभवादिकानाम् । एकादिकावत्सरमितिगुरुमध्यमेकराशिस्तुभेगमितिरेवसदातथाहि ॥

प्रभवो॰विभवः॰शुक्ल, प्रमोदो॰थ॰प्रजापतिः। अङ्गिराः श्रीमुखो॰भावो॰युवा॰धातेश्वराभिधौ॥ बहुधान्यः प्रमाथीच॰विक्रमो॰वृषसंज्ञकः। चित्रभानुः सुभानुश्च॰तारणः पार्थिवो॰व्ययः सर्वजित्॰सर्वधारीच॰विरोधी॰विकृतस्ततः। खर॰नन्दनसंज्ञौच॰विजयो॰जय॰मन्मथौ॥ दुर्मुखस्तदनु प्रोक्तो॰हेमलम्बकसंज्ञकः। विलम्बाख्यो॰विकारी॰स्याच्॰छर्वरी-प्लवसञ्ज्ञकौ॥उक्तःशुभकृतस्तस्माद्व्दः शोभनकृत्स्मृतः। क्रोधी॰-विश्वावसुर्ज्ञेयो॰वत्सरोऽपिपराभवः। प्लवङ्गः कीलकाख्यो॰थसौम्यः साधारणाह्वयः ततोविरोधकृन्नामा॰परिधावि॰प्रमाथिनौ॥ आनन्दो॰राक्षसः प्रोक्तो॰ऽनलः पिङ्गलसंज्ञकः। कालयुक्ताख्यसिद्धार्थौ॰रौद्रो॰दुर्मतिदुन्दुभी। रुधिरोद्गारिरक्ताक्षौ॰क्रोधनः॰क्षयकृन्मतः। वत्सराणांगुरोर्मानैर्षष्टिरियमुदाहृता॥ वत्सरानयनंयथा। नगैर्नखैः सन्निहतोद्विधाशकः सखचिशक्रोक्षयमाङ्कभाजितः। गताः सतत्त्वश्शकोभवद्ध्रुतोऽश्शेषकैर्युः प्रभवादिवत्सराः। चत्र॰आद्यातुविंशतिर्ब्राह्मी द्वितीयावैष्णवीस्मृतातृतीयारुद्रदै

वत्याश्रेष्ठामध्याधमाभवेत्। वसन्त्यस्मिन्नयनर्तुमासपक्षादयः। वस निवासे। वसेश्चेतिसरप्रत्ययः। सम्यार्थधातुकङ्गतिसस्यतः॥

वत्सरान्तकः। पुं॰ फाल्गुनेमासि॥

वत्सलः। पुं॰ शृङ्गारादिरसान्तर्गतरसविशेषे। वात्सल्ये। तृणाग्नौ। त्रि॰स्नेहयुक्ते। स्निग्धे। वत्सेपुत्रादिस्नेहपात्रेऽभिलाषोस्यास्ति वत्सांसाभ्यांकामबले॰ इतिलच्॥

वत्सला। स्त्री॰ वत्सकामायांधेनौ।

वत्सशालम्। न॰ ) वत्सशाला। स्त्री॰ ) वत्सानांगृहे॥

वत्सानांशाला पुं॰। विभाषासेनेति॰पक्षेक्लीबता॥ त्रि॰वत्सशालोत्पन्ने॥ वत्सशालेजातः। जातार्थेस्यबालुक्॥ पक्षेपि॰वात्सशालोपि।

वत्सा। स्त्री॰ पुत्र्याम्॥ वयसिप्रथमइतिङीपंबाधित्वा॰अजादित्वाट्टाप्।

वत्साक्षी। स्त्री॰ गोडुम्बायाम्। चिचायाम्॥

वत्सादनः। पुं॰ वृके॥

वत्सादनी। स्त्री॰ छिन्नरुहायाम्। गुडूच्याम्। वत्सैरद्यते। अद॰। ल्युट्॥

वदः। त्रि॰ वक्तरि॥ वदति। वद-

व्यक्तार्यांवधि । पचाद्यच् ॥

वदनम् । न॰ आनने । मुखे । वद-

त्यनेन । वद॰ । करणेल्युट् ॥

वदनासव : । पुं॰ अधरमधुनि । वक्त्रा

सवे ॥ वदनस्यआसव : ॥

वदन्ति : । ) स्त्री॰ कथायाम् ॥
वदन्ती । )

वदन्य : । त्रि॰ वदान्ये ॥

वदान्य : । त्रि॰ अत्युदारे । दानशौ

राडे । बहुप्रदे ॥ मांयाचस्वेतिवद

ति । वद॰ । वदेरान्य : ॥ चारुवा

दिनि । प्रियवादिनि ॥

वदामम् । न॰ फलविशेषे । मुकूले ।

वातवैरिणि । वातादे ॥

वदाल : पुं॰ पाठीनमत्स्ये वोआ-

लि॰हि॰गौ॰दे॰भा॰प्रा॰ ॥

वदावद : । त्रि॰ वक्तरि ॥ वदति ।

वद॰ । पचाद्यचि॰चरिचलीतिद्वि

त्वादि ॥

वदि । अ॰ कृष्णपक्षे ॥

वध : । पुं॰ हिंसने ॥ हिंसायाम् ॥

वधुका । स्त्री॰ वध्वाम् ॥

वधू : । स्त्री॰ स्नुषायाम् । बहू॰हि॰

भा॰प्रसिद्धे ॥ वहति॰उह्यतेवा । व

हप्रापणे । वहेधश्च ऊ : ॥ शारि

वौषधौ ॥ शट्याम् ॥ नवोढायाम् ॥

भार्यायाम् ॥ पृक्कायाम् ॥ अङ्ग

नायाम् ॥

वधूजन : । पुं॰ योषिति ॥

वधूट : । पुं॰ यौवने ॥

वधूटशयनम् । न॰ गवाक्षे ॥

वधूटी । स्त्री॰ स्वल्पवध्वाम् ॥ स्नुषा

याम् ॥ सुवासिन्याम् ॥ युवतौ ॥

वयस्यचरमइतिङीप् ॥

वधूत्सवप्रसव : । पुं॰ रक्ताम्लाने ॥

वध्रम् । न॰ द्वयरज्जौ ॥ वध्यतेऽनेन ।

वधेरौणादिक : ष्ट्रन् ॥

वध्रि : । स्त्री॰ वध्रे ॥

वध्री । स्त्री॰ वध्रे ॥ षित्त्वान्ङीष् ।

चर्म्मा : पश्चवध्रिका : पश्चेतिभा-

ष्यम् ॥

वनम् । न॰ नीरे । जले ॥ निवासे ॥

आलये ॥ प्रस्रवणे ॥ कानने । स्व-

त : सिद्धवृक्षसमूहे । गहने । ब-

ना॰हि॰भा॰ ॥ प्रवासे । वन्यते॰

सम्भज्यते॰सेव्यते॰याच्यतेवा व-

नसम्भक्तौ॰वनुयाचनेवा । हलश्चेति

कर्म्मणिघञ् । संज्ञापूर्वकत्वाद्वृ-

द्ध्यभाव : ॥ कर्त्तरिपचाद्यच्च ॥

त्रि॰वननीये ॥ सम्भजनीये ॥

वनकदली । स्त्री॰ काष्ठकदल्याम् ॥

वनकन्द : । पुं॰ सितशूरणे ॥ धरणी

कन्दे ॥

वनकार्पासी । स्त्री॰ त्रिपर्णायाम् ।

भारद्वाज्याम् । वनकपास॰ हि॰

भा॰ ॥

वनकुलत्थ : । पुं॰ कुलत्थायाम् ॥

वनकोद्रव : । पुं॰ उद्दाले ॥

वनकोलि : । पुं० वनजबदर्याम् । कर्कशिकायाम् ॥

वनगौ : । पुं० स्त्री० गवये ॥

वनगोचर : । पुं० नारायणे ॥ वनं जलं गोचरो निवासस्थानं यस्य स : ॥ व्याधे ॥

वनचन्दनम् । न० अगुरुणि ॥ देवदारुणि ॥

वनचन्द्रिका । स्त्री० मल्लिकायाम् ॥

वनचम्पक : । पुं० वनदीपे । हेमाङ्ग ॥

वनचर : । पुं० किराते ॥ वनमृगे ॥ वने चरति । चर० । चरेष्ट : ॥

वनच्छाग : । पुं० वनच्छगले । एडके । शिशुवाह्यके ॥ शूकरे ॥

वनज : । पुं० मुस्तके ॥ स्तम्बेरमे ॥ वनशूरणे । अम्बुजे ॥ त्रि० वनोत्पन्ने ॥ वने जायते । जनी० । ड : ॥

वनजा । स्त्री० मुद्गपर्ण्याम् ॥ वनकार्पास्याम् ॥ वन्योपोदक्याम् ॥ अश्वगन्धायाम् ॥ गन्धपत्रायाम् ॥ मिश्रेयायाम् ॥ ऐन्द्रे । वनार्द्रकायाम् ॥

वनजायतेक्षण : त्रि० पद्मलोचने ॥

वनजीर : । पुं० सूक्ष्मपत्रे । अरण्यजीरे ॥

वनतिक्त : । पुं० रोहितकद्रुमे ॥

वनतिक्ता । स्त्री० वनतिक्तिकायाम् ॥

वनतिक्तिका । स्त्री० पाठायाम् ॥ हरीतक्यां ॥

वनद : । पुं० घने । मेघे ॥ वनं जलं ददाति । डुदाञ्० । क : ॥ त्रि० वनदातरि ॥

वनदमन : । पुं० अरण्यदमने ॥

वनदीप : । पुं० वनचम्पके ॥

वनधेनु : । स्त्री० गवय्यां ॥

वननीय : । त्रि० सम्भजनीये ॥

वनपल्लव : । पुं० शोभाञ्जनवृक्षे ॥ अरण्यजपत्रे ॥

वनपांशुल : । पुं० व्याधे ॥

वनपिप्पली । स्त्री० क्षुद्रपिप्पल्याम् ॥

वनपुष्पा । स्त्री० शतपुष्पायाम् ॥

वनपूरक : । पुं० वनबीजपूरे ॥

वनप्रिय : । पुं० परभृते । कोकिले ॥ न० त्वचे । गुडत्वचि ॥ त्रि० अरण्यप्रियमात्रे ॥

वनभुक् । पुं० ऋषभौषधे ॥

वनमक्षिका । स्त्री० दंशे ॥ वनस्थमक्षिका ॥

वनमल्लिका । ) स्त्री० वनोद्भवमल्लिकायाम् ॥
वनमल्ली । )

वनमाला । स्त्री० श्रीकृष्णस्रजि सपल्लवपुष्पग्रथितायामाजानुलम्बिन्यां स्रजि । तस्या : स्वरूपं यथा । आजानुलम्बिनी माला सर्वर्तुकुसुमोज्ज्वला । मध्ये स्थूलकदम्बाढ्या वन

मालेतिकीर्त्तिता ॥ वनपुष्पस्र
जि ॥

वनमाली । पुं॰ हरौ । श्रीकृष्णे ॥
वनं वनपुष्पं तन्मालाऽस्येति॰ वन
माली । व्रीह्यादित्वादिनिः । सप
त्रपुष्पग्रथितास्रक् वनमालेत्यन्ये
॥ आपादपद्मं यामालावनमालेति
सामतेतितुकलिङ्गः । सास्य स्ती
तिवा ॥ वनं मलितुं शीलमस्येति
वा । मलधारणे । सुपीतिणिनिः
। यद्वा भू ततन्माऽरूपांवैजयन्त्या
ख्यांवनमालांवहन् वनमाली । व
नमालापरिच्छिन्नं धन्याः पश्यंतिते
मुखमिति हरिवंशोक्तिः ॥

वनमालिनी । स्त्री॰ वाराह्याम् ॥ द्वा
रकापुर्य्याम् ॥

वनमुक् । पुं॰ जलदे । मेघे ॥ वनंनी
रमुञ्चति मुच्लृ॰ । क्विप् ॥

वनमुद्ग : । पुं॰ मकुष्ठके ॥

वनमुद्गा । स्त्री॰ मुद्गपर्ण्याम् ॥

वनमूर्द्धजा । स्त्री॰ कर्कटशृङ्ग्याम् ॥

वनमेथिका । स्त्री॰ मेथिकाप्रभेदे ॥

वनमोचा । स्त्री॰ काष्ठकदल्याम् ॥

वनर : । पुं॰ वानरे ॥

वनराज : । पुं॰ मृगेन्द्रे ॥ वनस्यरा
जनि ।

वनराजक : । पुं॰ सिंहे ॥

वनराजि : । स्त्री॰ वनवृक्षाणांपङ्
क्तौ ॥

वनरुहम् । न॰ पद्मे ॥ वनेरोहति ।
रुह॰ । इगुपधेतिकः ॥

वनलक्ष्मी : । स्त्री॰ कदल्याम् ॥

वनवर्व्वर : । पुं॰ कृष्णार्जके ॥

वनवर्व्वरिका । स्त्री॰ अरण्यजवर्वर्या
म् । सुप्रसन्नके । विषघ्ने । सूक्ष्मप
त्रके । निद्राली ॥

वनवल्लरी । स्त्री॰ निःश्रेणिकाटवे ॥

वनवह्नि : । पुं॰ दवानले ॥

वनवासन : । पुं॰ गन्धौतौ । खट्टा
शे ॥

वनवासी । पुं॰ नीलमहिषकन्दे ।
शाल्मलिकन्दे ॥ पाटल्याम् । मु
ष्ककवृक्षे ॥ शृङ्ग्याम् । ऋषभौ
षधे । शूकरकन्दे । वाराहीकन्दे
॥ त्रि॰ वनवासकर्त्तरि ।

वनवीज : ।
वनवीजक : ।
वनवीजपूरक : ।
पुं॰ मातुलुङ्गिकायाम् ॥ अरण्यजातवीजपूरे । अम्लनायाम् ॥

वनवृन्ताकी । स्त्री॰ वृहत्याम् ॥

वनव्रीहि : । पुं॰ नीवारे ॥

वनशूकरी । स्त्री॰ शूकशिम्ब्याम् ॥
अरण्यवाराह्याम् ॥

वनशूरण : । पुं॰ वनोद्भवेओले । सित
शूरणे । वनकन्दे ॥

वनशृङ्गाट : । पुं॰ गोक्षुरके ॥ वनस्य
शृङ्गाटइव ॥

वनशृङ्गाटक : । पुं॰ गोक्षुरके ॥

वनशोभनम् । न० पद्मे ॥ त्रि० वनस्यशोभाकर्त्तरि ॥
वनश्वा । पुं० गन्धमार्ज्जारे ॥ वृकौ । गोमायौ ॥ व्याघ्रे ॥
वनसङ्कट: । पुं० मसूरे ॥
वनसद् । त्रि० वनेचरे ॥
वनसमूह: । पुं० वन्यायाम् ॥ वनानांसमूह: ॥
वनसरोजिनी । स्त्री० वनकार्पास्याम् ॥
वनस्थ: । पुं० मृगे ॥ त्रि० वनवासिनि ॥
वनस्था । स्त्री० अश्वत्थीवृक्षे ॥
वनस्पति: । पुं० द्रुममात्रे ॥ विना पुष्पंफलशालिनिवृक्षे ॥ अपुष्पाफलवन्तोयेतेवनस्पतय: स्मृताइति मनु: ॥ श्योनाकवृक्षे । नन्दीवृक्षे ॥ वनस्पति: । पारस्करादित्वात् सुट् ॥ वटे ॥
वनहरिद्रा । स्त्री० काननोत्पन्नहरिद्रायाम् । शोलिकायाम् ॥
वनहास: । पुं० अश्ववाले । काशतृणे ॥ कुन्दवृक्षे ॥
वनहासक: । पुं० काशतृणे ॥
वनाखु: । पुं० शशके ॥
वनाखुक: । पुं० मुद्गे ॥
वनाज: । पुं० वनच्छागे । दुर्भिक्षे ॥
वनाट्: । पुं० स्त्री० बर्वणायाम् । नीलमक्षिकायाम् ॥
वनाधिवासी । त्रि० वनस्थे ॥ वनमधिवसतितच्छील: । णिनि: ॥
वनामल: । पुं० करमर्द्दे । कृष्णपाकफले ॥
वनाम्र: । पुं० कोषाम्रे ॥
वनायु: । पुं० हरिणे ॥ देशविशेषे ॥
वनायव: । पुं० बहुवचनान्तोयम् । देशविशेषे ॥
वनायुज: । पुं० हयविशेषे । वनायुजे ॥ वनायुषुदेशेजात: । सप्तम्या मजनेर्ड: ॥
वनारिष्टा । स्त्री० वनहरिद्रायाम् ॥
वनार्च्चक: । पुं० पुष्पजीविनि । मालाकारे ॥
वनार्द्रका । स्त्री० ऐन्द्रे । वनभवार्द्रके ॥
वनालिका । स्त्री० वज्रवल्ल्याम् । हस्तिशुण्डाम् ॥
वनाश्रय: । पुं० द्रोणकाके ॥
वनाहिर: । पुं० दन्तायुधे । शूकरे ॥
वनि: । पुं० अग्नौ ॥ वन्यतेयाचते । वनुयाचने । खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिबलिचरिभ्यश्चेति०इप्रत्यय: ॥
वनित: । त्रि० याचिते ॥ सेविते ॥
वनिता । स्त्री० उत्पादितात्यर्थानुरागनार्याम् ॥ योषिन्मात्रे ॥ वन्यतेस्म । वनुयाचने० वनसम्भक्तौवा । क्त: । यस्यविभाषेतीण्निषेधस्यानित्यत्वा

दिट् ॥ यद्वा । वनतैर्बाहुलकादि तन् ॥

वनी । पुं॰ कन्दमूलफलाद्याहारेणसा ग्निहोत्रे॰निरग्निहोत्रे॰वानप्र स्थे । तृतीयाश्रमे । वनं निवासस्था नमस्यास्ति । अतइनिठनाविती निः ॥

वनी । स्त्री॰ विपिने । गहने ॥ वनति । वन॰ । पचाद्यच् । गौरादिः ॥

वनीपकः । त्रि॰ याचके ॥ वनीपा ति । आतइतिकः । ततः संज्ञा यांकन् ।

वनीयकः । त्रि॰ याचके ॥ वननम् । वनु॰ । सर्वधातुभ्यइन् । वनि र्याच्ञा॰तामिच्छति । सुपआत्मनः क्यच् । ण्वुल् ॥

वनेक्षुद्रा । स्त्री॰ करञ्जे ॥

वनेचरः । पुं॰ किराते ॥ त्रि॰ अर ण्यचारिणि ॥ वनेचरति । चरेष्ट इतिटः ॥ तत्पुरुषेकृतीत्यलुक् ॥

वनेज्यः । पुं॰ वव्वरसाले ॥

वनेसट् । पुं॰ वनेचरे ॥ वनेसीदति । षद्लृ॰ । क्विप् । तत्पुरुषइत्या दिनाऽलुक् ॥

वनेसर्ज्जः । पुं॰ असनवृक्षे ॥

वनोद्भवा । स्त्री॰ वनकार्पास्याम् ॥ त्रि॰ वनजे ॥

वनोपलः । पुं॰ आरण्यगोमये ॥

वनौकाः । पुं॰ वानरे ॥ वनस्थिते । पुलिन्दे ॥ वनमोकोस्य ॥

वनौषधी । स्त्री॰ वनोद्भवौषधिमात्रे ॥ प्रायोजना : सन्तिवनेचराद्यागो पाद्य : प्राकृतनामतज्ज्ञाः । प्र योजनार्थाश्चन प्रवृत्तिर्यतस्ततः प्राकृतइत्यदोषः ॥ किञ्च । रसवी र्यविपाकेभ्योमूलात्स्यात्फलाद् लात् । आकाराद्देशकालादेर्वनौ षध्यर्थमुन्नयेत् ॥

वन्दकः । पुं॰ नीलवल्ल्याम् । व न्दायाम् ॥ त्रि॰ वन्दनकृति ॥

वन्दका । स्त्री॰ वृक्षादन्याम् । वन्दा याम् ॥

वन्दथः । त्रि॰ स्तोतरि ॥ स्तुत्ये ॥ वन्दते॰ वन्द्यतेवा । वदि अभिवादनस्तुत्योः । शीङ्शपिरु गमिवञ्चिजीविप्राणिभ्योऽथइत्यत्र वन्दीत्यस्यापिवन्दौतिपाठोपिवहु श्रुतैर्निर्द्धारितइतिवन्देरथः ॥

वन्दनम् । न॰ नतौ । प्रणामे ॥ वन्दे ल्युट् ॥ मुखे ॥

वन्दनमाला । स्त्री॰ तोरणे । रम्भा स्तम्भचतुष्टयवेष्टितास्रपत्ररचितमा लायाम् ॥ यथा । कुर्याद्वन्दनमा लांयोरम्भास्तम्भैः सुशोभनैः । चूत वृक्षोद्भवैः पत्रैर्नागरेचक्रपाणिनः । युगानिपञ्चसङ्ख्यानांस्वर्गेतस्यो त्सवोभवेत् । पूज्यतेवासवाद्यैस्त क्रीडतेचाप्सरोवृतः ॥

वन्दनमालिका । स्त्री॰ वहिर्द्वारोपरि शुभदायांमालायाम् ॥ यथा । तोरणोर्द्धेतुमङ्गल्यं दामवन्दनमालिका ॥

वन्दना । स्त्री॰ समीच्याम् । स्तुतौ ॥ होमभस्मनातिलके ॥ यथा । ऐशान्यामाश्वरेहस्मश्रुवावाथस्रुवेण वा । वन्दनांकारयेत्तेनशिर : कण्ठांसकेषुच ॥ काश्यपस्येतिमन्त्रेण यथानुक्रमयोगतद्धतिवशिष्ठ : ॥

वन्दनी । स्त्री॰ नतौ ॥ जीवातौ ॥ वश्याम् ॥ पाचनकर्म्मणि ॥

वन्दनीय: । पुं॰ पीतभृङ्गराजे ॥ त्रि॰ नमस्ये । वन्द्ये । स्तवनीये ॥ वन्दितुमर्ह : । वदि॰ । अनीयर् ॥

वन्दनीया । स्त्री॰ गोरोचनायाम् ॥ अजादित्वाट्टाप् ॥

वन्दा । स्त्री॰ वृक्षोपरिजातवृक्षे । वृक्षादन्याम् । वृक्षरुहायाम् । जीवन्तिकायाम् । वन्दाके ॥ वृक्षेविजातीयप्ररोहोवन्दा । वन्द्यते । वदि॰ । गुरोश्च हल : ॥ भिक्षुक्याम् । वन्द्यां ॥

वन्दाक : । पुं॰ द्रुमरुहायाम् । वन्दायाम् ॥ यथा । वन्दाक : स्याद्धिम स्तिक्त : कषायोमधुरोरसे । मङ्गल्य : कफवातास्रक्षोव्रणविषाप ह : ॥ † ॥ †

वन्दाका । ) स्त्री॰ वन्दायाम् ।
वन्दाकी । ) वृक्षादन्याम् ॥

वन्दारु : । त्रि॰ वन्दनशीले । अभिवादके ॥ वन्दते । वदि॰ । शृवन्द्योरारु : ॥

वन्दि : । स्त्री॰ निवद्धमनुजादौ । प्रग्रहे । उपग्रहे । वन्दी॰ इ॰ लोक॰ प्र॰ ॥ सोपानके ॥

वन्दिग्राह : । पुं॰ अग्न्यायुधदेवतागारभेदके ॥

वन्दिचौर : । पुं॰ माचले । सन्धिचौरे ॥

वन्दित : । त्रि॰ पूजिते ॥

वन्दी । पुं॰ राजादे : स्तुतिपाठिनि । स्तुतिपाठके । भाट॰ इ॰ प्र॰ ॥ प्रस्तावानुवक्तरि ॥ वन्दिनस्त्वमलप्रज्ञा : प्रस्तावसदृशोक्तय : ॥ वन्दते । वदि॰ । ग्रह्यादित्वादावश्यके तिवाणिनि : ॥ णत्वमध्यस्थ ॥

वन्दिपाठ : । पुं॰ भोगावल्याम् । स्तुतिग्रन्थे ॥

वन्दी । स्त्री॰ आहृतस्त्रियाम् ॥ पणमध्यस्थायाम् । वन्द्यते॰ वन्दते वा । वदि॰ इन् । ङीष् ॥ शूद्रायांचत्रियेणोत्पादितायाम् ॥

वन्दीकार : । पुं॰ वन्दिग्राहे । प्रसह्यचौरे । माचले ॥

वन्द्य : । त्रि॰ स्तव्ये । वन्दनीये ॥

वन्द्या । स्त्री॰ स्तव्यायाम् । वन्दनीयाया

म्। गोरोचनायाम् ॥ वन्दायाम् ॥
वन्द्र : । त्रि॰ पूजके ॥ पुं॰ गुरौ ॥
वन्दते॰ वन्द्यतेवा । वदि॰ ।
स्फायितञ्चीत्यादिनारक् ॥ न॰
कल्याणे ॥
वन्य : । पुं॰ वनौके । वनशूरणे ॥
वाराहीकन्दे ॥ देवनले ॥ न॰
कैवर्तीमुस्तके ॥ त्वचे ॥ त्रि॰ वने
भूते । वनेभव : । यत् ॥
वन्या । स्त्री॰ वनसमूहे ॥ अम्बुसमू
हे ॥ वनानांसमूह : । पाशादि
भ्याय : ॥ गोपालकर्कट्याम् ॥
मुद्गपर्ण्याम् ॥ गुञ्जायाम् ॥ भद्र
मुस्तायाम् ॥ गन्धपत्रायाम् ॥
मिश्रेयायाम् ॥
वन्यापोदकी । स्त्री॰ लताप्रभेदे वन
आयाम् । वनसाह्वयायाम् ॥ इ
तिराजनिर्घण्ट : ॥
वन्न : । त्रि॰ अंगिनि । भागिनि ॥
वनति । वनसम्भक्तौ । ऋज्येन्द्राग्र
त्यादिनारन् ॥
वप : । पुं॰ मेदसि ॥ केशमुण्डने ॥
बीजवपने ॥ वपति । टुवप्॰ ।
पचाद्यच् ॥ वपतियदिक्षेषाणा :
च्वेत्रमासाद्यबीजम् ॥
वपनम् । न॰ बीजाधाने ॥ मुण्डने
॥ यथा । गङ्गायांभास्करत्क्षेत्रे मा
तापित्रोर्गुरोर्मृतौ । आधानेसो
मपानेच वपनंसप्तसुस्मृतम् ॥
टुवप्॰ । ल्युट् ॥ अन्यत्रनिध
नात्पत्यु : पत्नीकेशान्नवापयेत् ॥
क्षौर्ये ॥
वपनी । स्त्री॰ नापितशालायाम् ॥
वपा । स्त्री॰ विवरे । छिद्रे ॥ मेदसि
॥ उप्यतेऽत्र । टुवप्॰ । भिदाद्य
ङ् ॥ यद्वा । वपति । पचाद्यच्
। टाप् ॥
वपिल : । पुं॰ पितरि ॥
वपुस्रव : । पुं॰ शरीरस्थरसधातौ ॥
वपुन : । पु॰ देवे । सुरे ॥
वपुषा । स्त्री॰ हवुषायाम् । ह्रीवेर॰
इ॰ भा ॥
वपुष्टमा । स्त्री॰ पद्मचारिण्याम् ॥
वपु : । न॰ तनौ । शरीरे ॥ प्रशस्ता
कृतौ ॥ वपति॰ उप्यतेवा । टुव
प॰ बीजसन्ताने । अर्तिपृवपीत्यु
सि : ॥
वप्रव्य : । त्रि॰ अपर्णीये ॥ भूमौवी
जंक्षिप्तवप्रव्य॰ मुर्वरायांनचोषरे ॥
वप्ता । पुं॰ जनके ॥ त्रि॰ बापके ।
उपति । टुवप्॰ । गवुल्तृचावि
तितृच् ॥ कवौ ॥
वप्र : । पुं॰ ताते ॥ प्रकारे ॥ न॰
सीसके ॥ पुं॰ न॰ प्राकाराधारवे
दिकायाम् । चये ॥ तथाचार्थशा
स्त्रम् । खातादुद्धृतमृदावप्रंकारये
त्॰तस्योपरिप्राकारमिति ॥ महा
वप्रोयथा । महीद्यानांमहावप्रां

तङागशतशोभिताम् । प्राकारगृह सम्बाधामिन्द्रस्येवामरावतीम् ॥ महान्वप्रोयस्याः । प्राकाराधार भूतात्कृत्रिमोच्छ्रिताभूमिर्वप्रसंज्ञ तिवि० पु० ॥ रोधसि । तटे ॥ रेणौ ॥ क्षेत्रे । केदारे । सानुनि ॥ उप्यतेऽत्र । टुवप० । वृधिवपिभ्यां रन् ॥

वप्रक्रीडा । स्त्री० वृषभादीनांवप्रक्रियायाम् ॥ यथा । उत्खातकेलिःशृङ्गाद्यैर्वप्रक्रीडानिगद्यतेइतिशब्दार्णवः ॥

वप्रा । स्त्री० मञ्जिष्ठायाम् ॥

वप्रिः । स्त्री० क्षेत्रे ॥ वपति । टुवप० । वङ्क्र्यादित्वात्साधुः ॥

वप्री । स्त्री० वल्मीके ॥

वम : । पुं० स्त्री० वमने ॥

वमथु : । पुं० वमने । गजस्यकरशीकरे ॥ वमनं० वम्यतेवा टुवमउद्गिरणे । ट्वितोथुच् ॥

वमन : । पुं० शणे ॥ न० छर्दने । अर्दने ॥ आहुतौ । आहरणे ॥

वमनी । स्त्री० जलौकायाम् ॥

वमनीया । स्त्री० मक्षिकायाम् ॥ त्रि० वमनयोग्ये ॥

वमि : । पुं० हुताशने । अग्नौ ॥ धूर्ते ॥ स्त्री० वान्तौ । छर्दने ॥ वमनम् । टुवम० । इक्कृष्यादिभ्यः ॥

वमित : । त्रि० कृतवमने ॥ यथा । वमितंलङ्घयेत्प्राज्ञोलङ्घितंतुवामयेत् । वमनेकृशवाहुल्याद्न्यायाल्लङ्घनकर्षितम् ॥

वमी । स्त्री० वमने ॥ कृदिकारादिति ङीष् ॥

वम्र : । पुं० वंशे ॥

वम्री । स्त्री० उपजिह्वायाम् । सीमक० दू० दे० भा० । वालवी० बू० महाराष्ट्रभाषा ॥ वू० पे० न्द्र : ॥

वम्रीकूट : । पुं० वल्मीके ॥

वय : । पुं० पक्षिणि । खगे ॥ तारुण्ये । यौवने ॥ कालकृतायांयौवनादिरूपायांशरीरावस्थायाम् । बाल्यादौ ॥ अवस्थात्रयः पक्षः । यथा । कौमारयौवनमध्यस्थस्थविरत्त्वानित्र्यस्त्रावयांसीत्येकः पक्षः । तथाचाहुः । आद्येवयसि नाधीतंद्वितीयेनार्जितंधनम् । तृतीयेनतपस्तप्तंचतुर्थेकिंकरिष्यतीति ॥ चौणिवयांसीत्यन्ये । यदाहुः । पितारक्षतिकौमारेभर्तारक्षतियौवने । पुत्रास्तुस्थाविरेभावेनस्त्रीस्वातन्त्र्यमर्हतीति ॥ अन्ये तु० कौमारयौवनस्थविरत्त्वानि० चीणीछन्ति । आहुश्चते । आषोडशाद्भवेद्बालोयावत्क्षीरनिवर्त्तकः । मध्यमः सप्ततिर्यावत्परतोवृद्धउच्यतइति ॥ केचित्तुउपचयापचयलक्षणेद्वेवयसी

इत्युक्तिर्यस्मिन्पर्चे यौवनस्यप्रथम वयोवाचित्वात्तायसिप्रथमइतिवधूटीचिरन्टीत्यत्रडीपिसिद्धे० वयस्यचरमइतिनवक्तव्यमितिस्थितम्॥ यस्त्वर्थप्रकरणादिकमनपेक्ष्यश्रवणमात्रेणवयः प्रतिपादयति० स वयोवाचीत्युच्यते० अन्तरङ्गत्वात्० तेनेह न । उत्तानशया० लोहितपादा । इहप्रकरणादिनावयसः प्रतीतावपि० शब्दादप्रतीतेः । अ वालापिव्याध्यादिवशादुत्तानाशेते० अलक्तकेनचरक्तचरणाभवति ॥ वयते० वेति० अजतिवा । वय गतौ० वीगत्यादौ० अजगतौश असुन् ॥ वयस्त्रिविधंबाल्यंमध्यमंवार्द्धकंतथेतिसुश्रुतः ॥

वयस्थः । त्रि० मध्यमवयसि । तरुणे ॥ वयसितिष्ठति । सुपीतियोगविभागात्कः ॥

वयःस्था । ) वयस्था । ) स्त्री० ब्राह्म्याम् ॥ गुडूच्याम् ॥ आमलक्याम् ॥ सूक्ष्मैलायाम् ॥ काकोल्याम् । पथ्यायाम् । पूतनायाम् । हरीतक्याम् ॥ सोमलतायाम् ॥ शाल्मलौ ॥ क्षीरकाकोल्याम् ॥ अध्यण्डपर्ण्याम् ॥ मत्स्याक्ष्याम् ॥ वयोयौवनंतिष्ठत्यनया । स्था० । घञर्थेकः । युवतौ । तरुण्याम् । सख्याम् । आल्याम् ॥ खर्परेशरिवाविसर्गलोपः ॥

वयस्यः । पुं० समानवयस्के । स्निग्धे । सवयसि ॥ वयसातुल्यः । नौवयोधर्मेत्यादिनायत् ॥ सख्यौ ॥

वयस्या । स्त्री० सख्याम् ॥ टाप् ॥

वयस्थो । पुं० तरुणे ॥

वयुनः । पुं० देवतालये ॥ न० प्रज्ञाने ॥ कर्मणि ॥ अजति । अज० । अजियमिशीङ्भ्यश्चेत्युनन्चित् । अजेर्वी गुणायादेशौ ॥

वयोधाः । पुं० यूनि । तरुणे ॥ वयोदधाति । डुधाञ् । वयसिधाञ इत्यसिङित् ॥

वयोरङ्गम् । न० सीसके ॥

वयोवाची । पुं० अर्थप्रकरणादिकमनपेक्ष्यश्रवणमात्रेणवयः प्रतिपादके कुमारादिशब्दे ॥

वरः । पुं० देवाहृते । देवतादेरभीप्सिते ॥ तपोभिरिष्यतेयस्तुदेवेभ्यः सवरोमतइतिभरतः ॥ भर्त्तरि ॥ जामातरि ॥ वृत्तौ । वरणे ॥ विटे । षिङ्गे ॥ गुग्गुलौ ॥ कन्यार्थिनि ॥ वरंपरीक्ष्यकन्यादेया । तथाहिविद्याप्रभावंज्ञानञ्चपरीक्ष्यवृणुयाद्वरम् । अत्रोक्तंदेवीभागवते । वरायगुणहीनायवृद्धायाज्ञानिनेतथा । दरिद्रायचमूर्खायरोगिणेकुत्सितायच ॥ अत्यन्तकोपयुक्ताय

बाऽल्यन्तदुर्मुखायच । पङ्गवेपङ्क्तिहीनायचान्धायबधिरायच ॥ जड़ायचैवमूकायक्लीबतुल्यायपापिने । ब्रह्महत्यांलभेत्सोपिय:स्वकन्यांप्रयच्छति ॥ शान्तायगुणिनेचैवयूनेचविदुषेपिच । साधकायसुतांदत्त्वादशयज्ञफलंलभेदितिनवम : स्कन्ध : ॥ न० कुङ्कुमे ॥ किञ्चिदिष्टे । मनाक्प्रिये ॥ तथाहि । वरंप्राणास्त्याज्यामचशिशुविनाशोप्यभिरतिर्वरंमौनंकार्यंनचवचनमुक्तंयदनृतम् । वरंक्लीबंभाव्यंनचपरकलत्राभिगमनंवरंभिक्षाशित्वंनचपरधनानांहरणम् ॥ त्रि० श्रेष्ठे ॥ साधुनि ॥ व्रियते०वरणंवा । वृञ्वरणे । ग्रहवृदृनिश्चिगमश्चेत्यप् ॥ यद्वा । वृणोति० वरतिवा । पचाद्यच् ॥

वरक : । पुं० वनमुद्गे ॥ पर्पटे ॥ तृणधान्यप्रभेदे । स्थूलकङ्गौ । चीणा० इ० भा० प्र० ॥ मधुरोवरकोरूक्ष : कषायोवातपित्तकृत् ॥ न० पत्रोर्णे । धौताधौतसाधारणवस्त्रे ॥ पोताच्छादने ॥

वरक्रतु : । पुं० इन्द्रे । मरुत्वति ॥

वरचन्दनम् । न० कालीये ॥ देवदारुणि ॥ वरश्चतच्चन्दनञ्च ॥

वरट : । पुं० हंसे ॥ गन्धोल्याम् । वरडे० इ० प्र० कीटे ॥ म्लेच्छजातिविभेदे ॥ न० कुन्दपुष्पे ॥ वृणोतिसेवतेसर : । वृङ्सम्भक्तौ । वृणोतिवा । वृञ्आवरणे । शकादिभ्योटन् ॥

वरटा । स्त्री० हंसस्ययोषिति । हंस्याम् ॥ गन्धोल्याम् । वरडे० इ० भा० प्र० कीटे ॥ कुसुम्भबीजे । वरट्टिकायाम् ॥ यथा । वरटामधुराक्षिग्धारक्तपित्तकफापहा । कषायाशीतलागुर्वी स्यादवृष्यानिलापहा ॥ + +

वरटी । स्त्री० हंस्याम् । वरडे०इ०प्र०सपक्षकीटे । गन्धोल्याम् ॥ गौरादि : ।

वरट्टिका । स्त्री० वरटायाम् । कुसुम्भबीजे ॥

वरण : । पुं० तिक्तशाके । वरुणद्रुमे ॥ प्राकारे । सेतौ ॥ उष्ट्रे ॥ सङ्क्रमे ॥ न०कन्यादिवरणे ॥ वेष्टने । वृत्याम् ॥ व्रियते०वृणोतिवा । वृञ्० । युच् ॥ कर्तृकारणयोर्वाल्युट् ॥ वरुणे । यथा वरंवृण्वन्तितंदेवाचरदृष्टवराधिनाम् । धातुर्वैवरणंप्रोक्तंतस्मात्रावरण : स्मृत : ॥ इति साम्बपुराणम् ॥ पूजनादौ ॥

वरणसी । स्त्री० वाराणस्याम् ॥

वरणा । स्त्री० काश्य उत्तरसीम्निस्थितायांनद्याम् ॥

वरणीय : । त्रि० उपासनीये । वरेण्ये ॥

वरण्ड : । पुं० अन्तरावेद्याम् । वरण्डके । समूहे । सङ्घे ॥ वदनामये । वयस्फोडा० इ० भा० प्र० ॥ वृणोति । वृञ् ० । अण्डन्नुक्समृ-वृञद्भ्यण्डन् ॥

वरण्डक :। पुं० अन्तर्वेदी । वरण्डे । मातङ्गवेद्याम् ॥ अभ्यासकालिकाछन्नवेदिमन्तर्बायदन्तिनोयोधयेतिद्रतिप्रसिद्धि : ॥ यौवनकण्टके ॥ संवर्तुले । गोलइतिख्याते ॥ भित्तौ ॥ त्रि० विशाले ॥ भयसम्पन्ने ॥ कृपणे ॥

वरण्डा । स्त्री० शारिकायाम् । वर्त्याम् । शस्त्रविशेषे । क्षुरिकायाम् ॥

वरण्डालु : । पुं० फलपुच्छे ।

वरतिक्त : । पुं० कुटजवृक्षे ।

वरतिक्तिका । स्त्री० पाठायाम् ॥

वरत्करी । स्त्री० रेणुकानामनिगन्धद्रव्ये ।

वरत्रा । स्त्री० नद्ध्याम् । चर्ममयरज्जौ । वरत० इ० भा० प्र० ॥ दूष्यायाम् । कक्षायाम् । गजमध्यबन्धनरज्जौ । व्रियतेऽनया । वृञ० । बाहुलकादत्र : । वृञसिद्धिस्यत्रनया । यद्वा । वरंत्रायते । चेङ्कपालने । आतोनुपर्तिक : ॥

वरत्वच : । पुं० निम्बवृक्षे । न० श्रेष्ठवल्कले ।

वरद : । त्रि० प्रसन्ने । अभीष्टदातरि । समर्द्धके ॥ शान्तचित्ते ॥ वरंददाति । डुदाञ्० । आतोनुपसर्गेकतिक : ॥ पुं० अग्नौ ॥ शान्तिकर्मणिपुष्टौचवरदोह्यव्यवाहनइत्यागमात् ॥

वरदा । स्त्री० कन्यायाम् । कुमारिकायाम् । वरदाख्याम् ॥ अश्वगन्धायाम् । आदित्यभक्तायाम् ॥ टाप् । तिथिविशेषे माघशुक्लचतुर्थ्याम् ॥

वरदाचतुर्थी । स्त्री० माघशुक्लचतुर्थ्याम् । तस्यांगौरीपूज्या । यथा । भविष्योत्तरेमाघशुक्लमधिकृत्य । चतुर्थीवरदानामतस्यांगौरीसुपूजिता । सौभाग्यमतुलंकुर्यात्पञ्चम्यांश्रीरपिश्रियम् ॥

वरदातु : । पुं० भूमिसहवृक्षे ॥

वरदाची । स्त्री० दुर्गायाम् ॥

वरदानम् । न० भौमतीर्थभेदे ॥ यत्रविष्णवेदुर्वाससावरोदत्त : ॥

वरदारु : । पुं० शाकवृक्षे ॥

वरदासङ्गम : । पुं० तीर्थविशेषे ॥

वरपर्णाख्य : । पुं० क्षीरकञ्चुकीवृक्षे ॥

वरप्रद : । त्रि० वरदे ॥

वरप्रदा । स्त्री० अगस्त्यमुने : पत्न्याम् । लोपामुद्रायाम् ॥ वरंप्रददाति । डुदाञ : क : । टाप् ॥

वरफ : । पुं० पिशाचविशेषे ॥ यथोक्तं शूलिनीमन्त्रविधाने । सहस्रं प्रजपेन्मन्त्रंशूलिन्यायंस्पृशन्नरः । वटाश्च वरफाश्चैवनस्पृशन्तिकदाचनेति ॥

वरफल : । पुं० नारिकेलवृक्षे ॥ वराणि फलानियस्य ॥ न० श्रेष्ठफले ॥

वरम् । अ० ईषदुत्कर्षे ॥ मनागिष्टे ॥

वरमुखी । स्त्री० रेणुकाभिधगन्धद्रव्ये ॥

वरम्वरा । स्त्री० पृश्निपर्ण्याम् ॥

वरयिता । पुं० भर्त्तरि ॥ वरणकारयितरि ॥

वरर् : । त्रि० वरप्रदे ॥ वरान्राति । रादाने । आतइतिक : ॥

वररुचि : । पुं० पुनर्वसौ ॥ कात्यायनमुनौ ॥ विक्रमादित्यराजसभास्थे कविविशेषे ॥ वरेषुरुचिर्यस्य ॥

वरल : । पुं० वरटे । गन्धोल्याम् ॥

वरलब्ध : । पुं० चम्पकवृक्षे ॥ त्रि० वरप्राप्ते ॥

वरला । स्त्री० गन्धोल्याम् ॥ हंस्याम् ॥

वरली । स्त्री० बरटायाम् ॥

वरवत्सला । स्त्री० श्वश्र्वाम् ॥

वरवर्णिनी । स्त्री० वरारोहायाम् । मत्तकाशिन्याम् । उत्तमायांनार्य्याम् ॥ अस्या : लक्षणंयथा । शीतेसुखोष्णसर्वाङ्गीग्रीष्मे यासुखशीतला । भर्तृभक्ताचयानारीसाभवेद्वरवर्णिनी ॥ इतिरुद्र : ॥ वरोवर्णोस्त्यस्या : । इनि : । ङीप् ॥ लाक्षायाम् ॥ हरिद्रायाम् ॥ रोचनायाम् । फलिन्याम् ॥ माधीयस्याम् वरश्चासौवर्णश्चसोस्त्यस्या : । इनि : । ङीप् ॥ श्रियि ॥ गौर्याम् ॥ सरस्वत्याम् ॥

वरबाह्लीकम् । न० कुङ्कुमे ॥

वरवृत्त : । पुं० सुप्रसादे । शिवे ॥ वरेषुवृत्त : ॥

वरा । स्त्री० फलत्रिके । त्रिफलायाम् ॥ पाठायाम् ॥ रेणुकाख्यगन्धद्रव्ये ॥ गुडूच्याम् ॥ मेदायाम् ॥ ब्राह्म्याम् ॥ हरिद्रायाम् ॥ विडङ्गे । श्रेष्ठायाम् ॥ वृञ्वृद्ध्रिस्थवन्ताइत्यप्टाप् ॥

वराक : । पुं० सङ्गरे । रणे । युद्धे ॥ त्रि० शोचनीये । शोच्ये ॥ अधरे ॥ वृणीतितच्छील : । वृङ्सम्भक्तौ । जल्पभिक्षकुट्टलुण्टवृङ : षाकन् ॥

वराकी । स्त्री० अवरोयाम् ॥ ङीष् ॥

वराङ्ग : । पुं० पुष्करिणि । गजे । मातङ्गे ॥ न० योनौ ॥ मस्तके ॥ गुडत्वचि ॥ शोभनावयवे ॥ त्रि० शोभनावयवविशिष्टे ॥ वरश्चतदङ्गञ्च । वराण्यङ्गान्यस्य ॥

वराङ्गकम् । न० गुडत्वचि । त्वक्पत्रे । त्वचे ॥ वरमङ्गमस्य । शेषा-

द्विभाषितिकप् ॥

वराङ्गना । स्त्री॰ अतिप्रशस्ताङ्गयुक्तायांस्त्रियाम् ॥ यथा । शिर: सपुष्पं चरणौसुपूजितौवराङ्गनासेवनमल्पभोजनम् । अनम्नशायित्वमपर्वमैथुनम्चिरप्रनष्टांश्रियमानयन्तिषट् ॥

वराङ्गरूपोपेत : । त्रि॰ श्रेष्ठरूपयुक्ते । सिंहसंहनने ॥ अङ्गानिचरूपञ्चअङ्गरूपाणि । वराणिचतानिचाङ्गरूपाणिच॰तैरुपेत : ॥

वराङ्गी । पुं॰ अम्लवेतसे ॥

वराङ्गी । स्त्री॰ हरिद्रायां ।

वराट : । पुं॰ कपर्द्दके ॥ तस्यभेदा: पञ्चयथा । सिंही॰व्याघ्री॰मृगी॰हंसी॰विदन्तेतिराजनिर्घण्ट: ॥ रज्जौ ॥ वरमटति । अटगतौ । कर्म्मण्यण् ॥

वराटक: । पुं॰ पद्मवीजकोषे ॥ रज्जौ ॥ कपर्द्दके कौडी॰ इ॰ भा॰ प्र॰ ॥ तस्यसङ्ख्याभेदेनसंज्ञाभेदा यथा । वराटकानांदशकद्वयंयत् साकाकिणीताश्चपणश्चतस्र : तेषोडशद्रम्मइहावगम्योद्रम्मैस्तथाषोडशभिश्चनिष्क : ॥ इतिलीलावती॥ अपिच । तान्त्रिक : कार्षिक : पणइतियाज्ञवल्क्यवचनेन॰गुञ्जा: पञ्चाद्यमाषकस्ते षोडशाच : कर्षोऽस्त्रीत्यमरसिंहोक्तेनचअशीतिरक्तिकापरिमितताम्रे पणशब्द : सङ्केतित : सचताम्रसङ्ख्यकवराटकैर्लभ्यतेइतिवराटकेष्वपितथा व्यवहार : । एतन्मूलकंभविष्यमत्स्यसूक्तयोर्वचनंयथा । अशीतिभिर्वराटकै : पणइत्यभिधीयते । तै : षोडशै : पुराणंस्याद्रजतंसप्तभिस्तु तै रितिप्रायश्चित्ततत्त्वम् ॥ तेच दक्षिणार्थंविधीयन्ते । यथा । हुतमश्रोत्रियंदानं हुतोयत्रस्त्वदक्षिण: । तस्मात्पणंकाकिणींवाफलंपुष्पमथापिवा ॥ प्रदद्याद्दक्षिणार्थंयस्मात याससफलोभवेत् । इतिशुद्धितत्त्वम् ॥ त्रिश्च्रेदल : । वृत्रश्चावरणे । अन्यभ्योपीत्याटच् । तत : स्वार्थेक : ॥ यद्वा । वरं दलवर्णमटति । अट॰ । कर्म्मण्यण् । तत : स्वार्थेकन् ॥ वराटकरजा : । पुं॰ नागकेशरवृक्षे ॥

वराटिका । स्त्री॰ कपर्द्दके ॥

वराण : । पुं॰ इन्द्रे ॥ वरुणवृक्षे ॥

वराणसी । स्त्री॰ काश्याम् ॥

वरादनम् । न॰ राजादने ॥

वराभिध : । पुं॰ अम्लवेतसे ॥ श्रेष्ठनामनि ॥

वरारकम् । न॰ हीरके ॥

वरारोह : । पुं॰ परमेश्वरे ॥ वरआरोहोस्य । पुनरावृत्त्यसम्भवात्॰वरमारोहणंयस्मिन्वा ॥ गजारो

हे ॥ अश्वरोहे ॥

वरारोहा । स्त्री॰ मत्तकाशिन्याम् । वरवर्णिन्याम् । वरआरोहोनितम्बोऽस्याः ॥ कटौ ॥

वरालिका । स्त्री॰ आर्यायाम् । पार्वत्याम् ॥ ज॰ चि॰ ॥

वराशिः । पुं॰ स्थूलवस्त्रे । स्थूलशाटके ॥ वरं श्रेष्ठवरणं वा अश्नुते । अशूव्याप्तौ । इन् ॥

वरासनः । पुं॰ षिड्गे ॥ द्वारपाले ॥ न॰ ओड्रपुष्पे ॥ श्रेष्ठासने ॥

वरासिः । पुं॰ स्थूलशाटके ॥ खड्गधरे ॥

वरासी । स्त्री॰ म्लानवस्त्रे ॥

वराहः । पुं॰ विष्णौ ॥ मानप्रभेदे ॥ तीर्थप्रभेदे ॥ अद्रिविशेषे । मुस्तायाम् ॥ शिशुमारे ॥ वाराहीकन्दे ॥ अष्टादशद्वीपान्तर्गतक्षुद्रद्वीपविशेषे ॥ यथा । गन्धर्वो॰ वरुणःसौम्योवराहः कङ्कएवच । कुमुदश्चकशेरुश्चनागोभद्रारकस्तथा ॥ चन्द्रेन्द्रमलयाः शङ्खयवाङ्गकगभस्तिमान् । ताम्राङ्गश्चकुमारीचतत्रद्वीपादशाष्टभिरिति ॥ सूकरे । कोले । भूदारे ॥ अस्यमांससाधनादियथा । वराहस्यतनुंतोयैः सम्यक्प्रक्षालितांमुहुः । दग्ध्वाग्निनाथवादग्धांकिञ्चित्तोयेनसेकिताम् ॥ शस्त्रेणार्द्धंशयेत्तान्तुयावन्निर्लोमताभवेत् । ततोतितीक्ष्णशस्त्रेणखण्डयित्वायथोचितम् ॥ गृह्णीयाच्चामिषंतस्यपृथगङ्गविभागशः । रन्ध्ययेत्बहुधाव्रह्मप्रलेहतलनादिकम् ॥ स्वेदनंबृंहणंवृष्यंशीतलंतर्पणंगुरु । श्रमानिलहरंस्निग्धंवाराहंबलवर्द्धनम् ॥ वरंश्रेष्ठमाहन्ति । हन॰ । अन्येभ्योपीतिडः ॥ तन्मांसंविष्णवेनदेयम् ॥ तदुक्तंविष्णुसूत्रे । नाभक्ष्यंनैवेद्यार्थे॰ भक्ष्येष्वजामहिषीचीरंवर्जयेत् । पञ्चनखमत्स्यवराहमांसानिचेति ॥ आरण्यवराहमांसंश्राद्धादौविहितम् । अग्न्यन्नीष्वनुवृत्तौ॰ महारण्यवासिनश्चवराहांस्तथैतिहारीतोक्तेः ॥

वराहकन्दः । पुं॰ वाराह्याम् ॥

वराहकर्णी । स्त्री॰ अश्वगन्धायाम् ॥

वराहक्रान्ता । स्त्री॰ वाराह्याम् । वदराद्रुमे ॥

वराहकाली । स्त्री॰ सूर्यमणिपुष्पवृक्षे ॥ सूर्यावर्त्ते ॥

वराहक्रान्ता । स्त्री॰ लज्जालौ । तिक्तगन्धिकायाम् । नमस्कार्याम् ॥

वराहनामा । पुं॰ वाराहीकन्दे ॥

वराहपुराणम् । न॰ वाराहे ॥

वराहव्यूहः । पुं॰ वराहाकृतिवत्क्रतरचनेव्यूहे ॥ सूक्ष्ममुखपश्चाद्भागः पृथुमध्योवराहव्यूहोभवति ।

अनेनपार्श्वयोभयेसतियातव्यंमा गंविजेत् ॥

वराङ्गाङ्गी । स्त्री० दन्त्याम् ॥

वराङ्गिका । स्त्री० कपिकच्छ्वाम् ॥

वराही । स्त्री० भद्रमुस्तायाम् ॥ शूकरकन्दे ॥

वरिमा । पुं० उरुत्वे । विशालतायाम् ॥ उरोर्भाव : । पृथ्वादित्वादिमनिच् । प्रियस्थिरेति० उरोर्वर्भाव : ॥

वरिव : । न० परिचर्यायाम् ॥ धने ॥

वरिवसित : । त्रि० उपासिते ॥ वरिव : कृतम् । नमोवरिवइतिक्यच्। क्तः क्यस्यविभाषेतिपक्षे यलोपः॥

वरिवसिता । त्रि० नमस्कर्त्तरि ॥

वरिवस्या । स्त्री० शुश्रूषायाम् । सेवायाम् ॥ वरिवस : करणम् । वरिवश्शब्द : पूजार्थ : । नमोवरिवश्चित्रङ : क्यच् । अप्रत्ययादित्य : । टाप् ॥

वरिवस्थित : । त्रि० उपासिते । वरिवसिते ॥ वरिवसः क्यच् । क्तः । क्यस्यविभाषेतिपक्षे यलोपाभावः॥

वरिशी । स्त्री० मत्स्यवेधने ॥

वरिषम् । न० वत्सरे ॥

वरिषा : । स्त्री० भूम्नि० वर्षासु । प्रावृषि ॥ *

वरिषाप्रिय : । पुं० चातकेखगे ॥

वरिष्ठ : । पुं० तित्तिरौ ॥ नारङ्गवृक्षे ॥ न० मरिचे ॥ ताम्रे । त्रि० वरतमे ॥ उरुतमे ॥ अयमेषामतिशयेनवर : ० उरुर्वा । अतिशायने० इष्ठन् । प्रियस्थिरेति०उरोर्वर्भाव :॥ वस्मे ॥

वरी । स्त्री० शतावर्याम् ॥ नीलोत्पलाकारपुष्पत्वात् । वृणोति । वृञ् । पचाद्यच् । गौरादि : ॥ सूर्यपत्न्याम् ॥

वरीयान् । पुं० विष्कम्भादिष्वष्टादशेयोगे । तत्रजातस्यफलंयथा । दातादयालु : सुतरांसुवेश : सत्कर्मकर्त्तामधुर : स्वभाव : नरोबलीयान्धनवान्जनाढ्योयोगेवरीयान् यदिजन्मकाले ॥ त्रि० अतियूनि ॥ श्रेष्ठे । अतिविस्तारे ॥ अयमनयोरतिशयितउरुर्वरोवा । द्विवचनेतीयसुनिप्रियस्थिरेति० उरोर्वरादेश : ॥

वरीवर्द : । पुं० बलीवर्दे ॥

वरुट : । पुं० म्लेच्छजातिविशेषे ॥ यथा । पुलिन्दानाहलानिष्ट्या : शवरावरुटाभटा : । मालाभिल्ला: किरातायसर्वेपिम्लेच्छजातय : ॥ इतिहेमचन्द्र : ॥

वरुड : । पुं० अन्त्यजजातिविशेषे ॥ यथा । रजकश्चर्मकारश्चनटोवरुडएवच । कैवर्त्तमेदभिल्लाश्चसप्तैतेचान्त्यजा:स्मृता :॥एतेषांचस्त्रियोगत्वाभुक्त्वाचप्रतिगृह्यच । पतत्य

ज्ञानतोविप्रोज्ञानात्साम्यन्तुगच्छ ति ॥ इतियम : ॥ अस्योत्पत्तिर्य था । कैवर्त्तस्यचकन्यायांशौण्डि कादिवसौचिक : । सौचिक्यांशौ ण्डिकाज्जातोनटोवरुडएवच॥इ॰ प॰ प॰ ॥

वरुण : । पुं॰ पश्चिमाशापतौ । प्रचे तसि । पाशिनि । यादसांपतौ । अप्पतौ ॥ यादसामर्ध्येतेषांराजा वरुणोनामभगवतोविभूति:॥ व्रिय ते॰वृणोतिवा । वृञ॰ । कृवृदा रिभ्यउनन् ॥ अप् । जले ॥ स्वर ग्मिसंवरणात्सायङ्कतेसूर्ये ॥ तरु विशेषे । वरणे । सेतौ । तिक्तशा के । कुमारके । अश्मरीघ्ने । श्वेत वृक्षे । तमाले । वरुणा॰ इ॰ भा॰ प्र॰ ॥ अस्यगुणा : । वरुण : पित्त लोभेदीश्लेष्मकृच्छ्राश्ममारुतान् । निहन्तिगुल्मवातास्र कृमींश्चोष्णो ग्निदीपन: ॥ कषायोमधुरस्तिक्त : कटुकोरूक्षकोलघु : ॥ अपिच । वरुणोनिलशूलघ्नोभेदीचोष्णोश्मरो हर : । पुष्पंवरुणजं ग्राहीपित्तघ्न मामवातजित् ॥ *

वरुणजा । स्त्री॰ मदिरायाम् ॥

वरुणात्मजा । स्त्री॰ मदिरायाम् ॥ व रुणालयेपिवरुण: । तस्यआत्मजा॥

वरुणानी । स्त्री॰ वरुणस्यपत्न्याम् ॥ वरुणस्यस्त्री॰ । इन्द्रवरुणेतिङी षानुकौ ॥

वरुणालय : । पुं॰ समुद्रे ॥ वरुणस्य आलय : ॥

वरुतम् । न॰ प्रावरणे । उत्तरीयव स्त्रे ॥ वृणोति । वृञ् । अशिवा दिभ्यइचोत्वाविति उत्प्रत्यय : ॥

वरुल : । पुं॰ सम्भक्ते ॥

वरुथ : । पुं॰ रथगुप्तौ । परप्रहरणा भिघातरक्षार्थंरथस्यसन्नाहवदावर णकद्रव्ये ॥ वरूथोरथगुप्तिर्यातिरो धत्तेरथस्थितमितिसज्जन : ॥ पिकि ॥ काले ॥ समूहे ॥ त्रि॰ वरणीये ॥ न॰ चर्मणि ॥ वर्मणि ॥ वेश्मनि ॥ व्रियतेरथोऽनेन । वृञ्वरणे । जूवृञ्भ्यांमूथन् ॥

वरूथाधिपति : । पुं॰ सेनान्याम् ॥

वरूथी । त्रि॰ गुप्तिमति ॥ रथिनि ॥

वरूथिनी । स्त्री॰ सेनायाम् ॥ वरू था : सन्त्यस्याम् । इनि : ङीप् ।

वरेण्य : । पुं॰ वह्नौ ॥ प्रजापतौ ॥ ध्यानेनसूर्यमण्डलेद्रष्टव्ये पुरुषे ॥ तथाचयोगियाज्ञवल्क्य : । वरेण्यं वरणीयंत्वजन्मसंसारभीरुभि : ॥ आदित्यान्तर्गतंयच्चभर्गाख्यंवामु मुक्षुभि : । जन्ममृत्युविनाशाय दु : खस्यत्रिविधस्यच । ध्यानेनपु रुषोयस्तुद्रष्टव्य : सूर्यमण्डलेइति ॥ न॰ कुङ्कुमे ॥ त्रि॰ प्रधाने ॥ वरणीये ॥ व्रियते । वृञ॰ ।

बृ अएध्य : ॥

बरेन्द्री । स्त्री॰ गौडदेशे ॥

बरेश्वर : । पुं॰ सदाशिवे । बराणा मीश्वर : ॥

बरोटम् । न॰ मरुवकपुष्पे ॥

बरोल : । ) पुं॰
बरोली । ) स्त्री॰ बरटे ॥

बर्क्कर : पुं॰ नर्म्मणि । परिहासे ॥ युवपशौ ॥ छागे । बकरा॰इ॰भा॰ प्र॰ अस्यमांसगुणा: । यथा सहिङ्गु नाज्येनयुतंसुपक्कमजासुतस्यामिष मल्पकस्य । एलालवङ्गोषणयोगयोगात्करोतिपुष्टिंजठरानलस्य ॥ अजासुतस्यबालस्यमांसंगुरुतरंस्मृतम् । हृद्यंमृदुतरंश्रेष्ठंसुस्वादुबलदंस्मृतम् ॥ बर्क्कर्यास्तु । सिद्धार्थसम्भवेतैलेघृतेवोपस्करान्विते । साधितस्याप्रसूताया : पलमाजंगुणोत्तमम् । अजाऽप्रसूतासम्भूतंमांसंपीनसनाशनम् । शुक्रकासारुचिशोफेहितमग्नेश्चदीपनम् ॥ अजासुतस्यपीनस्ययौवनस्यस्यसाधितम् । घृतरामठसंयुक्तोपस्करैरसवत्पलम् ॥ वातपित्तहरंबल्यंसुस्वादुरुचिकारकम् । हृद्यंपीनसकासार्शः : शोषघ्नंपुष्टिकृत्परम् ॥ इतिपिठौरा ॥ अथछिलाधिया । स्थूलनिष्कासितान्त्रस्यमांसंकृतमजस्यच । रन्धितं बहुधासूदैरावृतादिकमस्तकम् ॥ तन्मांसंमांसदंबल्यंरुच्यंपित्तानिलापहम् । सुस्वादुमधुरंपाकेकिञ्चित्कफकरंस्मृतम् ॥ बर्कते । ह्रकथादाने । बाहुलकादरन् ॥

बर्क्कराट : । पुं॰ कटाक्षे ॥ तरुणादित्यरोचिषि ॥ नारीपयोधरोत्सङ्गकान्तदन्तनखक्षते ॥ इतिमेदिनिकर : ॥

बर्ग : । पुं॰ स्वजातीयसमूहे । समानधर्मिभि : प्राणिभिरप्राणिभिर्वोपलक्षितेवृन्दे ॥ यथा । कवर्ग : पशुवर्ग : । इति ॥ ग्रन्थपरिच्छेदे ॥ यथा । सर्गोवर्गपरिच्छेदोद्घाताध्यायाङ्कसङ्ग्रहा : । उच्छ्वास : परिवर्त्तस्पटल : काण्डमस्त्रियाम् ॥ स्थानंप्रकरणंपर्वाह्निकञ्चग्रन्थसन्धय : ॥ समानाङ्कद्वयस्यपूरणे । कृतौ ॥ वृज्यते । वृजीवर्जने । घञ् । कुत्वम् ।

बर्गोत्तम : । पुं॰ नवांशानांमध्येस्वांशे ॥ यथाचराणांमेषकर्कटतुलामकरराशीनांप्रथमोंश : । स्थिराणां वृषसिंहवृश्चिककुम्भानांपञ्चमोंश: । द्व्यात्मकानांमिथुनकन्याधनुर्मीनानांनवमोंश : । चराणांप्रथमेचांशेस्थिराणांपञ्चमेतथा । नवमेद्व्यात्मकानाञ्चवर्गोत्तमइतिस्मृत : ॥ अपिच । मेषाद्यामकराद्यास्तुलाद्या : कर्कटादय : । क्रमान्नवांशा

राशीनांखांशाबर्गीत्तमाःस्मृताः॥ इति ॥

वर्णाः। पुं० चन्द्रात्मजे ॥ यथा। रोहिण्यामभवद्वर्णावर्चस्वीयेनचन्द्रमाः। त्रि० ॥ न०रूपे ॥ विष्ठायाम् ॥ तेजसि ॥ वर्चते। वर्चदीप्तौ। सर्वधातुभ्योऽसुन् ॥

वर्चस्कः। पुं० न०गूथे। पुरीषे। विष्ठायाम् ॥ वर्चते०वर्च्यतेवा। वर्च०। असुन्। कुत्सायांकन्॥

वर्चस्वी। पुं० चन्द्रमसि॥ त्रि०वर्चोविशिष्टे ॥ अस्मायामेधेतिमत्त्वर्थीयोविनिः॥

वर्जनम्। न० हिंसायाम्॥ त्यागे॥

वर्जनीयः। त्रि० त्यागार्हे। वर्ज्ये॥

वर्जितः। त्रि० परित्यक्ते ॥ वृजेः॥ क्तः॥

वर्ज्यः। त्रि० त्याज्ये। वर्जनीये॥

वर्णः। पुं० द्विजादौ। ब्राह्मणादौ। ब्राह्मणे। क्षत्रिये। वैश्ये। शूद्रे ॥ देवेषुवर्णायथा। आदित्याःक्षत्रियास्तेषांविशश्चमरुतस्तथा। अश्विनौचस्मृतौशूद्रौतपस्युग्रेसमाश्रितौ। स्मृतास्त्वाङ्गिरसादेवाब्राह्मणाइतिनिश्चयः। अपिच। चत्वारःकथितावर्णाश्रमाअपिसुव्रते। आचाराश्चापिवर्णानामाश्रमाणांपृथक्पृथक् ॥ कृतादौकलिकालेतुवर्णाःपञ्चप्रकीर्तिताः। ब्राह्मणःक्षत्रियोवैश्यःशूद्रःसामान्यएवच ॥ सामान्योवर्णसङ्करः॥ शुक्लादौ ॥ सचबहुविधोयथा। श्वेतः १। पांडुः २ धूसरः ३। कृष्णः ४। पीतः ५। हरितः ६। रक्तः ७। शोणः ८। अरुणः ९। पाटलः १०। श्यावः ११। धूम्रः १२। पिङ्गलः १३। कर्बुरः १४। यथाहामरः। शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः। अवदातःसितोगौरोऽवलक्षोधवलोऽर्जुनः॥ १ ॥ हरिणः पाण्डुरःपाण्डुः २। ईषत्पाण्डुस्तुधूसरः ३। कृष्णेनीलासितश्यामकालश्यामलमेचकाः ४॥ पीतोगौरोहरिद्राभः ५ पालाशोहरितोहरित् ६ लोहितोरोहितोरक्तः ७। शोणःकोकनदच्छविः ८॥ अव्यक्तरागस्त्वरुणः ९। श्वेतरक्तस्तुपाटलः १०। श्यावःस्यात्कपिशः ११ धूम्रधूमलौकृष्णलोहिते १२॥ कडारःकपिलःपिङ्गपिशङ्गौकद्रुपिङ्गलौ १३। चित्रंकिर्मीरकल्माषशबलैताश्चकर्बुरे १४॥ गुणेशुक्लादयःपुंसिगुणिलिंगास्तुतद्वति। इति। यशसि॥ गुणे। गजच्छित्रकम्बले। प्रवेण्याम्। आस्तरणे। हाथीकीझूल० इ० भा०॥ स्तुतौ ॥ काञ्चने ॥

व्रते ॥ गीतक्रमे ॥ न॰ कुङ्कुमे । पुं॰ न॰ भेदे ॥ रूपे ॥ विलेपने ॥ अक्षरे । अकारादिवर्णसत्त्वद्विविध: । ध्वन्यात्मकोऽक्षरात्मकश्च ॥ अक्षरात्मकस्योच्चारणमुक्तं वरदात्मे । यथा । श्रीशिवउवाच । विशेषंशृणुवाम्यद्यप्रोच्चार्या: कण्ठत: स्वरा: । कद्वयंजिह्वयामूर्द्धद्वयं जिह्वदन्तजम् ॥ मुखस्थानाद्वलोबाच्या: षकार: कण्ठयातनइति ॥ चित्रे ॥ शब्दे ॥ तालविशेषे ॥ षड्जादिगतौ ॥ षड्गरागे ॥ व्रिय तेऽनेन । वृञ् । कृवृजृसिद्रुपन्य निस्वपिभ्योनिदितिन: ॥ यद्वा । वर्ण्यतेवर्णा: सन्त्यस्य । अर्श आद्यच् ॥ वर्ण्यतेऽर्थोऽनेनवा । वर्णवर्णने॰ वर्णप्रेरणे वा । घञ् ॥ वर्णयतिवा । अच् ॥

वर्णक: । पुं॰ चारणे ॥ मण्डले ॥ न॰ हरिताले ॥ वृष्टचन्दनादिलेपमात्रे ॥ गात्रानुलेपनयोग्यपिष्टे वृष्टे वासुगन्धिद्रव्ये ॥ चन्दने ॥ पुं॰ स्त्री॰ हिङ्गुलहरितालकाचनीलीकादौ ॥ पुं॰ न॰ चन्दने ॥ विलेपने ॥ त्रि॰ वक्तरि ॥ वर्णकरोति॰ वर्णयति॰ वक्तीतिवा । वर्ण॰ ॥ ण्वुल् ॥

वर्णकम्बल: । पुं॰ आस्तरणे ॥

वर्णकवि: । पुं॰ कुबेरात्मजे ॥

मायुराजे ॥

वर्णका । स्त्री॰ प्रावर्णभेदे ॥ वर्णवर्णक्रियाविस्तारगुणवचनेष्विति चौरादिक: । ततोण्वुल् । वर्णकातान्तश्चुतोष्वंन ॥

वर्णकूट: । पुं॰ योटकविशेषे ॥ यथा । क्षात्रविट्शूद्रविप्रा: स्युः क्रमान्मेषादिराशय: । तत्रवर्णाधिकाकन्यानैवोद्वाह्याकदाचन ॥ दोषस्तु । वर्णज्येष्ठातुयानारीवर्णहीनस्तुय: पुमान् ॥ विवाहंयदिकुर्वीततस्याभर्ताविनश्यतीति ॥

वर्णकूपिका । स्त्री॰ मसीधान्याम् ॥

वर्णक्रिया । स्त्री॰ वर्णकरणे ॥ यथा । वर्णस्यकरणे देयंकुङ्कुमंरक्तचन्दनम् । ताम्बूलंयवयद्युक्तंतवतत्त्व प्रयोजयेत् ॥ पार्थिवगुरुणादेयो-गोत्यजैत्तौरजेषुच ॥ शेषिषुपावकयोगेषधूपयेद्धिङ्गुसर्पिषा ॥

वर्णचारक: । पुं॰ चित्रकारे ॥

वर्णज्येष्ठ: । पुं॰ ब्राह्मणे ॥ वर्णानां॰ वर्णेषुवाज्येष्ठ: ॥ त्रि॰ स्वरर्णापिचयोसमवर्णे ॥

वर्णतूलि: । )
वर्णतूलिका । ) स्त्री॰ लेखन्याम् ॥
वर्णतूली । )

वर्णदम् । न॰ कालीयके ॥ त्रि॰ वर्णदातरि ॥

वर्णदात्री । स्त्री॰ हरिद्रायाम् ॥

त्रि० वर्णदातरि ॥

वर्णदूत : । पुं० लेखे । वाचिकहार के ॥

वर्णधर्म्म : । पुं० न० वर्णाधिकृत धर्म्मे ॥ वर्णत्वमेकमाश्रित्ययोधर्म: सम्प्रवर्त्तते । वर्णधर्म : सउक्तस्तु यथोपनयनं नृपेतिभविष्यपुराणम् ॥ अपिच । यजनं याजनं दानं ब्राह्मणस्यप्रतिग्रह:। अध्यापनं चाध्ययनं षट्कर्माणिद्विजोत्तमा : ॥ दानमध्ययनं यज्ञोधर्मं क्षत्रियवैश्ययो : । दण्डोयुद्धं क्षत्रियस्यकृषिर्वैश्यस्यशस्यते ॥ शुश्रूषैवद्विजातीनां शूद्राणां वर्णसाधनम् । कारुकर्मं तथाजीव: पाकयज्ञोपिधर्म्मत: ॥ क्षमादमोदयादानमलोभस्त्याग एवच । आर्जवं चानसूयाचतीर्थानुसरणं तथा ॥ सत्यंसन्तोषआस्तिक्यं श्रद्धाचेन्द्रियनिग्रह : । देवताभ्यर्चनं पूजाब्राह्मणानांविशेषत : ॥ अहिंसाप्रियवादित्वमपैशुन्यमकल्कता । सामासिकमिमं धर्मं चातुर्वर्ण्येऽब्रवीन्मुनि : ॥ प्राजापत्यं ब्राह्मणानांस्मृतं स्थानं क्रियावताम् । स्थानमैन्द्रं क्षत्रियाणां सङ्ग्रामेष्वपलायिनाम् ॥ वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्त्तताम् । गान्धर्वं शूद्रजातीनांपरिचारेतुवर्त्तताम् । इतिकौर्मे २ अध्या

य : ॥

वर्णनम् । न० उपवर्णने ॥ स्तवने ॥ शुक्लपीतादिवर्णयोजने ॥

वर्णना । स्त्री० प्रशंसायाम् । गुणकथने । स्तवे ॥

वर्णनीय : । त्रि० वर्ण्ये । वर्णितव्ये ॥

वर्णपात्रम् । न० चित्रकारस्यनील्यादिवर्णाधारे ॥

वर्णपुष्प : । )
वर्णपुष्पक : । ) पुं० महासहायाम् । राजतरुणीपुष्पवृक्षे । अम्लाने ॥

वर्णपुष्पी । स्त्री० उग्रकाण्डीपुष्पवृक्षे ॥

वर्णप्रसादनम् । न० अगुरुणि ॥

वर्णमाता । स्त्री० भारत्याम् ॥ लेखन्याम् ॥

वर्णमातृका । स्त्री० सरस्वत्याम् ॥

वर्णमाला । स्त्री० क्रमागताकाराद्यक्षरसमूहे । मातृकायाम् ॥ वर्णानांमालेव ॥ तत्रसंस्कृतवर्णा: ५० । जपमालायाम् ५१ । इङ्गलिशीयवर्णा: २६ । फरासीया : २३ । हिब्रु० अर्थात्इहूदीया: २२ । आरबीया : २८ । पारसीया : ३१ । तुरस्कीया: ३३ । रूसीया: ४१ । ग्रिक् ० अर्थात्इयुनानीया : २४ । लाटिन्देशीया०: २२ । डच्० अर्थात्होलन्दाजीया: २६ । स्पान्

देशीया : २७ । इटेलीदेशीया : २० । तातारीया : २०२ । वर्म्म देशीया : १८ । चीनदेशीयवर्णा : शब्दात्मका : तच्छब्दसङ्ख्या : ८०००० ॥ इतिशब्दकल्पद्रुमेरा धाकान्तदेव : ॥

वर्णरेखा । )
वर्णलेखा । ) स्त्री० कठिन्याम् ॥
वर्णलेखिका । )

वर्णवती । स्त्री० हरिद्रायाम् । त्रि० वर्णविशिष्टे ॥ वर्णोस्त्यस्याम् । रसादिभ्यश्चेतिमतुप् । उगित्वान् ङीप् ॥

वर्णविक्रिया । स्त्री० वर्णापचारे ॥ +

वर्णविलोडक : । पुं० श्लोकस्तेने । काव्यच्छायाहृति ॥ सन्धिचौरे ॥

वर्णसङ्कर : । पुं० सङ्कीर्णाचरे ॥ मिश्रितजातौ । मूर्द्धाभिषिक्तमाहि ष्यकरणाद्यनुलोमप्रतिलोमजातेऽ न्तरालजातौ ॥ वर्णयोर्वर्णानांवास ङ्करोयस्मिन्जनयितव्येसवर्ण: सङ्क र :॥ व्यभिचारेणवर्णानामवेद्यावे दनेनच । स्वकर्मणाञ्चत्यागेनजाय न्तेवर्णसङ्करा : ॥

वर्णसङ्घात: । पुं० अक्षरसमाम्नाये॥

वर्णसमाम्नाय : । पुं० वर्णमालाया म् ॥

वर्णसि : । पुं० जले । वृणोति । वृ अ० । सानसिवर्णसीत्यादिना०

असिप्रत्ययेधातोर्नुक्च ॥

वर्णा । स्त्री० आढक्याम् ॥

वर्णाङ्का । स्त्री० लेखन्याम् ॥

वर्णाट : । पुं० गायने ॥ चित्रकरे ॥ स्त्रीकृतजीवने ॥

वर्णात्मा । पुं० शब्दे ॥

वर्णाश्रमधर्म्म : । पुं० वर्णाश्रमोभयाऽ धिकृतधर्मे ॥ यथा । वर्णत्वमाश्रम त्वञ्चयोधिकृत्यप्रवर्त्तते । सवर्णाश्र मधर्मस्तुमौञ्जीयामेखलायथा ॥ वर्णाश्रमयोर्धर्म्मे ॥ सचोक्त : श्री महानिर्वाणतन्त्रे । यथा । श्रुत्वा धर्मान्बहुविधान्भवानीभवमोचि नो । हितायजगतांमाताभूय : श ङ्करमब्रवीत् ॥ श्रीदेव्युवाच। श्रुतं बहुविधंधर्ममिहामुत्रसुखप्रदम् । धर्मार्थकामदंविघ्नहरंनिर्वाणकार णम् ॥ साम्प्रतंश्रोतुमिच्छामित्व द्विवर्णाश्रमान्विभो । यत्रयेविहि ताचारा : कृपयावदतानपि ॥ श्री सदाशिवउवाच ॥ चत्वार : कथि तावर्णाआश्रमाअपिसुव्रते । आचा राअपिवर्णानामाश्रमाणांपृथक्पृ थक् ॥ कृतादौ० कलिकालेतुव र्णा : पञ्चप्रकीर्त्तिता : । ब्राह्मण: क्षत्रियोवैश्य : शूद्र:सामान्यएवच ॥ एतेषांसर्ववर्णानामाश्रमौद्वैमहे श्वरि । तेषामाचारधर्मांश्चशृणुष्वा द्यवदामिते ॥ पुरैवकथितंतावत्

कलिसम्भववर्ज्जितम् ॥ तप : स्वाध्यायहीनानांनृणामल्पायुषामपि। क्लेशप्रयासाशक्तानांकुतोदेहपरिश्रम : ॥ ब्रह्मचर्याश्रमोनास्तिवानप्रस्थोपिनप्रिये। गार्हस्थोभैक्षुकश्चैवआश्रमौद्वौकलौयुगे ॥ गृहस्थस्य क्रिया : सर्व्वाआगमोक्ता : कलौयुगे। नान्यमार्गै : क्रियासिद्धि : कदापिगृहमेधिनाम् ॥ भैक्षुकेप्याश्रमेदेविवेदोक्तंदण्डधारणम्। कलौनास्त्येवतत्त्वज्ञे यतस्तच्छ्रौतसंस्कृति :॥ शैवसंस्कारविधिनाऽवधूताश्रमधारणम्। तदेवकथितंभद्रे संन्यासग्रहणंकलौ ॥ विप्राणामितरेषाञ्चवर्णानांप्रबजेकलौ। उभयत्राश्रमेदेविसर्व्वेषामधिकारिता ॥ सर्व्वेषामेवसंस्कारा : कर्माणिशैववर्त्मना। विप्राणामितरेषांञ्चकर्म्मलिङ्गंपृथक् पृथक् ॥ जातमात्रोगृहस्थ : स्यात्संस्कारादाश्रमीभवेत्। गार्हस्थ्यंप्रथमंकुर्याद्यथाविधिमहेश्वरि ॥ तत्त्वज्ञानेसमुत्पन्ने वैराग्यंजायतेयदा। तदासर्वंपरित्यज्यसंन्यासाश्रममाश्रयेत् ॥ विद्यामुपार्ज्जयेद्बाल्ये धनंदारांश्चयौवने। प्रौढे धर्म्याणिकर्माणिचतुर्थेप्रब्रजेत्सुधी: ॥ मातरंपितरंवृद्धंभार्याञ्चैवपतिव्रताम्। शिशुञ्चतनयंहित्वानावधूताश्रमंब्रजेत् ॥ मातॄ :



पितॄन्शिशून्दारान्स्वजनान्बान्धवानपि। य : प्रब्रजतिहित्वैतान्समहापातकीभवेत् ॥ मातृहापितृहासस्यात्स्त्रीवधीब्रह्मघातक : । असमर्प्यस्वपित्रादीन्योगच्छेत्भिक्षुकाश्रमे ॥ ब्राह्मणोविप्रभिन्नश्चस्वस्ववर्णोक्तसंस्क्रिया: । शैवेनवर्त्मनाकुर्यादाश्रम : कलौयुगे ॥ श्रीदेव्युवाच। कोवाधर्मोगृहस्थस्यभिक्षुकस्यचकिंविभो। विप्रस्यविप्रभिन्नानांसंस्कारादीनिमेवद ॥ श्रीसदाशिवउवाच ॥ गार्हस्थ्यंप्रथमंधर्म्मंसर्व्वेषामनुजन्मनाम्। तदेवकथयाम्यादौशृणुकालिनितत्त्वत: ॥ ब्रह्मनिष्ठोगृहस्थ : स्याद्ब्रह्मज्ञानपरायण : । यद्यत्कर्मप्रकुर्वीततत्तद्ब्रह्मणिसमर्पयेत् ॥ नमिथ्याभाषणंकुर्यात्नचशाठ्यंसमाचरेत् ॥ देवतातिथिपूजासुगृहस्थोनिरतोभवेत् ॥ मातरंपितरञ्चैवसाक्षात्प्रत्यक्षदेवताम्। मत्वागृहीनिषेवेतसदासर्व्वप्रयत्नत : ॥ तुष्टायांमातरिशिवेतुष्टे पितरिपार्वति। तवप्रीतिर्भवेद्देवि परब्रह्मप्रसीदति ॥ त्वमाद्या जगतांमातापिताब्रह्मपरात्परम्। युवयो : प्रीणनंयस्मात्तस्मात्किंगृहिणांतप : ॥ आसनंशयनंवस्त्रंपानंभोजनमेवच। तत्तत्समयमाज्ञायमात्रे

पित्रे नियोजयेत् ॥ श्रावयेन्मृदुलां वाणीं सर्वदाप्रियमाचरेत्। पित्रोराज्ञानुसारी स्यात्सत्पुत्रः कुलपावनः ॥ औद्धत्यं परिहासञ्च तर्ज्जनं परिभाषणम्। पित्रोरग्रे न कुर्वीत यदीच्छेदात्मनो हितम् ॥ मातरं पितरं वीक्ष्य नत्वोत्तिष्ठेत्ससम्भ्रमः। विनाज्ञया नोपविशेत्संस्थितः पितृशासने ॥ विद्याधनमदोन्मत्तो यः कुर्यात्पितृहेलनम्। स याति नरकं घोरं सर्वधर्मवहिष्कृतः ॥ मातरं पितरं पुत्रं दारानतिथिसोदरान्। हित्वा गृही न भुञ्जीयात्प्राणैः कण्ठगतैरपि ॥ वञ्चयित्वा गुरून्बन्धून् यो भुङ्क्ते स्वोदरम्भरः। इहैव लोके गर्ह्योऽसौ परत्र नारकी भवेत् ॥ गृहस्थो गोपयेद्दारान्विद्यामभ्यासयेत्सुतान्। पोषयेत्स्वजनान्बन्धूनेष धर्म्मः सनातनः ॥ जनन्या वर्द्धितो देहो जनकेन प्रपोषितः। स्वजनैः शिक्षितः प्रीत्या सोऽधमस्तान्परित्यजेत् ॥ एषामर्थे महेशानि कृत्वा कष्टशतान्यपि। प्रीणयेत्सततं शक्त्या धर्म्मोह्येष सनातनः ॥ स धन्यः पुरुषो लोके सत्कृतोपरमार्थवित्। ब्रह्मनिष्ठः सत्यसन्धो यो भवेन्नु विमानवः॥ न भार्यां ताडयेत्क्वापि मातृवत्पालयेत्सदा। न त्यजेद्घोरकष्टेऽपि यदि साध्वी पतिव्रता ॥ स्थितेषु स्वीयदारेषु स्त्रियमन्यां न संस्पृशेत्। दुष्टेन चेतसा विद्वानन्यथा नारकी भवेत् ॥ विरले शयनं वासं त्यजेत्प्राज्ञः परस्त्रिया। अयुक्तभाषणञ्चैव स्त्रियं शौर्यं न दर्शयेत् ॥ धनेन वाससा प्रेम्णा श्रद्धयामृतभाषणैः। सततं तोषयेद्दारान्नाप्रियं क्वचिदाचरेत् ॥ उत्सवे लोकयात्रायां तीर्थेष्वन्यनिकेतने। न पत्नीं प्रेषयेत्प्राज्ञः पुत्रामात्यविवर्ज्जिताम् ॥ यस्मिन्नरे महेशानि तुष्टा भार्या पतिव्रता। सर्वधर्मकृतं तेन भवतीप्रियएव सः ॥ चतुर्वर्षावधि सुतान्लालयेत् पालयेत्पिता। ततः षोडशपर्य्यन्तं गुणान्विद्याः सुशिक्षयेत् ॥ विंशत्यब्दाधिकान् पुत्रान्प्रेरयेद्गृहकर्मसु। ततस्तांस्तुल्यभावेन मत्वा स्नेहं प्रदर्शयेत् ॥ कन्याप्येवं पालनीया शिक्षणीयातियत्नतः। देया वराय विदुषे धनरत्नसमन्विता ॥ एवं क्रमेण भ्रातॄन् स्वस्रभ्रातृसुतानपि। ज्ञातीन्मित्राणि भृत्यांश्च पालयेत्तोषयेद्गृही ॥ ततः स्वधर्म्मनिरतानेकग्रामनिवासिनः। अभ्यागतानुदासीनान् गृहस्थः परिपालयेत् ॥ यद्येवं नाचरेद्देवि गृहस्थो विभवे सति। पशुरेव स विज्ञेयः स पापी लोकगर्हितः ॥ निद्रालस्यं देहयत्नं केशवि

न्यासमेश्च । आसक्तिमशनेवस्त्रे-
नातिरिक्तंसमाचरेत् ॥ ५१ ॥ यु
क्ताहारोयुक्तनिद्रोमितवाङ्मितमै
थुन : । स्वच्छोनम्रः शुचिर्दक्षोयु-
क्त : स्यात्सर्वकर्मसु ॥ शूर : श-
त्रौविनीत : स्याद्बान्धवेगुरुसन्नि-
धौ । जुगुप्सितान्नमन्येतनात्मम-
न्येतमानिन : । सौहार्दंव्यवहारांश्च
प्रवृत्तिंप्रकृतिंनृणाम् । सहवासे
नतर्कैश्चविदित्वाविश्वसेत्तत : ॥
वसेद्द्वेष्टुरपिक्षुद्रात्सम्यंवीक्ष्य
बुद्धिमान् । प्रदर्शयेत्स्वप्रभावा-
न्नैवधर्मंविलङ्घयेत् ॥ स्वीयंय
श : पौरुषञ्चगुप्तयेत्कथितञ्चयत् ।
कृतंयदुपकारायधर्मज्ञोनप्रकाशये
त् । जुगुप्सितप्रवृत्तौचनिश्चितेपि
पराजये । गुरुणालघुनाचापियश
स्वीनविवादयेत् ॥ विद्याधनयशो-
धर्मान्यतमानउपार्जयेत् । व्यस
नञ्चासतांसङ्गंमिथ्याद्रोहंपरित्यजे
त् । अवस्थानुगताश्चेष्टा : समया
नुगता : क्रिया : । तस्मादवस्थांस
मयंवीक्ष्यकर्मसमाचरेत् ॥ योगर्त्ते
मरतोदक्षोधार्मिकः प्रियबान्धव :
। मितवाङ्मितहास : स्यान्मा-
न्यार्येतुविशेषत : ॥ जितेन्द्रिय :
प्रसन्नात्मासुचिन्त्य : स्याद्दृढव्र-
त: । अप्रमत्तोदीर्घदर्शीमात्रास्व-
र्थान्विचारयेत् । सत्यंमृदुप्रियं

वर्णाश्रमधर्म्मः

धीरोवाक्यंहितकरंवदेत् । आत्मो
त्कर्षंतथानिन्दांपरेषांपरिवर्जये-
त् । जलाशयाश्चवृक्षाश्चविश्रामगृ
हमध्वनि । सेतु : प्रतिष्ठितोयेनते
नलोकत्रयंजितम् ॥ सन्तुष्टोपितरौ
यस्मिन्ननुरक्ता : सुहृद्गणा : । गाय
न्तियद्यशोलोकास्तेनलोकत्रयंजित
म् ॥ सत्यमेवव्रतंयस्यदयादीनेषु-
सर्वथा । कामक्रोधौवशेयस्यतेनलो
कत्रयंजितम् ॥ विरक्त : परदारे
षुनिस्पृह : परवस्तुषु । दम्भमात्स
र्यहीनोयस्तेनलोकत्रयंजितम् ॥ न
बिभेतिरणाद्योवैसङ्ग्रामेप्यपराङ्
मुख : । धर्मयुद्धेमृतोवापितेनलो
कत्रयंजितम् ॥ असंशयात्मासुश्र
द्ध : शास्त्राचारतत्पर : । मच्छास
नेस्थितोयश्चतेनलोकत्रयंजितम् ॥
ज्ञानिनालोकयात्रायेसर्वत्रसमदृष्टि
ना । क्रियन्तेयेनकर्माणितेनलोक
त्रयंजितम् ॥ शौचन्तुद्विविधंप्रोक्तं-
बाह्याभ्यन्तरभेदत : ब्रह्मण्यात्मा
र्पणंयत्तच्छौचमान्तरिकंस्मृतम् ॥
अद्भिर्वाभस्मनावापिमलानामपक-
र्षणम् । देहशुद्धिर्भवेद्येनबाह्य :
शौचंतदुच्यते ॥ गङ्गानद्योह्रदावा
प्यस्तथाकूपाश्चचुल्लकाः । सर्वंपवित्र
जननंस्वर्णादीक्रमतः प्रिये ॥ भस्माच
याज्ञिकंश्रेष्ठंमृत्स्नातुमलवर्जिता ।
वासोऽजिनतृणादीनिमृदच्छानी-

वर्णाश्रमधर्म्म :

हिसुव्रते ॥ किमत्र बहुनोक्तेनशौचाशौचविधौशिवे । मन : पूतभवेद्यैमगृहस्थस्ततत्तदाचरेत् ॥ निद्रान्तेमैथुनस्यान्तेत्यागान्तेमलमूत्रयोः । भोजनान्तेमलेस्पृष्टेवह्नि : शौचंविधीयते । सन्ध्यात्रेकालिकीकार्या वैदिकीतान्त्रिकीक्रमात् । उपासनायाभदेनपूजांकुर्याद्यथाविधि ॥ ब्रह्ममन्त्रोपासकानांगायत्रीजपनात्प्रिये । स्नानाद्द्यूत्तेतितद्वाच्यंसन्ध्याभवतिवैदिकी ॥ अन्येषां वैदिकीसंध्यान्सूर्य्योपस्थानपूर्वकम् । अर्घ्यदानंदिनेशायगायत्रीजपनंतथा । अष्टोत्तरंसहस्रंवा शतंवादशधापिवा । जपानांनियमोभद्रेसर्वंवाह्निककर्म्मणि ॥ शूद्रसामान्यजातीनामधिकारोस्तिकेवलम् । आगमोक्तविधौदेविसर्वसिद्धिस्ततोभवेत् ॥ प्रात : सूर्य्योदय : कालोमध्याह्न स्तदनन्तरम् । सायंसूर्यास्तसमयस्त्रिकालानामयंक्रम : ॥ श्रीदेव्युवाच । विप्रादिसर्ववर्णानांविहितातान्त्रिकीक्रिया । त्वयैवकथितानाथसम्प्राप्ते प्रबलेकलौ ॥ तदिदानींकथं देवविप्रानृवैदिककर्मणि । नियोजयसिततस र्वं विशेषाद्वक्तुमर्हसि । श्रीसदाशिवउवाच । सत्यं ब्रवीषितत्त्वज्ञे सर्वेषांतान्त्रिकीक्रिया । लोकानांभो

गमोक्षायसर्वंकर्म सुसिद्धिदा ॥ द्वयन्तुब्रह्मसावित्रीयथाभवतिवैदिकी । तथैवतान्त्रिकीज्ञेयाप्रशस्ताभयकर्म्मणि ॥ अतोवकथितं देविद्विजानांप्रबलेकलौ । गायत्र्यामधिकारोस्तिनान्यमन्त्रेषुकर्हिचित् ॥ तारोद्याकमलायावबागभवाद्यायथाक्रमात् । ब्राह्मणश्चिरविशांसाविनीकथिताकलौ ॥ द्विजातीनां प्रभेदार्थं शूद्रेभ्य : परमेश्वरि । सन्ध्येयं वैदिकीप्रोक्ताप्रागेवाह्निककर्म्मणाम् ॥ अन्यथाशांभवैर्मार्गै : केवलै : सिद्धिभाग्भवेत् । सत्यं सत्यंपुन : सत्यं सत्यमेतन्नसंशय : ॥ कालात्ययेपिसन्ध्येयंकर्त्तव्यादेववन्दिते । ओंतत्सद्ब्रह्मचोच्चार्य्यमोक्षमुभिरनातुरै : ॥ आसनं वसनं पात्रं शय्यांयानं निकेतनम् । गृह्यकं वस्तुजातञ्चस्त्रचातत्स्वच्छं प्रशस्यते ॥ समाप्याह्निककर्म्माणिस्वाध्यायं गृहकर्म्म वा । गृहस्थोनियतं कुर्यान्नैवतिष्ठन्निरुद्यम : ॥ पुण्यतीर्थे पुण्यतिथौयहणे चन्द्रसूर्ययो : । जपं दानं प्रकुर्वाण : श्रेयसांनिलयोभवेत् ॥ कलावन्नगता:प्राणानोपवास:प्रशस्यते । उपवासप्रतिनिधावेकं दानं विधीयते ॥ कलौदानं महेशानिसर्वसिद्धिकरंभवेत् । ततपात्रं

वर्णाश्रमधर्म्म :

केवलं स्यादरिद्र : सत् क्रियान्वित : ॥ मासश्च न् सरपखाणामारम्भ दिनमम्बिके । चतुर्दश्यष्टमीशुक्ला तथैवैकादशीकुहू : ॥ निजजन्म दिनं चैव पित्रोर्म्मरणवासर : । वैधोत् सवदिनञ्चैवपुण्यकाल : प्रकीर्त्तित : ॥ गङ्गानदामहानद्यो गुरो : सदनमेवच । प्रसिद्धदेवता स्थं च पुण्यतीर्थं प्रकीर्त्तितम् ॥ त्यक्त्वास्वाध्ययनं पित्रा : शुश्रूषां दारचणम् । नरकायभवेत्तीर्थं तीर्थयज्ञततांन्नृणाम् ॥ नतीर्थसेवा नारीणांनोपवासादिका : क्रिया : । नैवव्रतानांनियमोभर्त्तु : शुश्रूषणं विना भर्त्तैवयोषितांतीर्थंत पोदानं व्रतं गुरु : । तस्मात् सर्वात्मनानारोपतिसेवांसमाचरेत् ॥ १०१ ॥ पत्यु : प्रियं सदाकुर्याद्वच सापरिचर्य्यया तदाज्ञानुचरीभूत्वातोषयेत् पतिबान्धवान् ॥ नेचेतत्पतिं क्रूरदृष्ट्याश्रावयेन्नैवदुर्व्व : । नाप्रियं मनसावापिचरेद्भर्त्तु : पतिव्रता ॥ कायेनमनसावाचासर्व्वदाप्रियकर्म्मभि : । याप्रीणयतिभर्त्तारं सैवब्रह्मपदं लभेत् ॥ नान्यवक्त्रंनिरीक्षेतनान्यै : सम्भाषणं चरेत् । नचाङ्गं दर्शयेदन्यानांभर्त्तुराज्ञानुसारिणी ॥ तिष्ठेत् पित्रोर्व्वशेबाल्येभर्त्त : समप्राप्तयौवने

। वार्द्धक्येपितृबन्धूनांनसृतन्त्राभवेत् क्वचित् ॥ अज्ञातपतिमर्य्यादामज्ञातपतिसेवनाम् । नोद्वाहयेत् पिताबालामज्ञातधर्म्मशासनाम् ॥ नरमांसंनभुञ्जीयान्नराकृतिपशूंस्तथा । बहुपकारकान्गाश्चमांसादान् रसवर्ज्जितान् फलानिग्राम्यवन्यानिमूलानिविविधानिच । भूमिजातानिसर्वाणिभोज्यानिस्वेच्छयाशिवे ॥ १०८ ॥ अध्यापनंयाजनञ्चविप्राणांवृत्तमुत्तमम् । अशक्तौक्षत्रियविशांवृत्तैर्निर्व्वाहमाचरेत् ॥ राजन्यानाञ्चमहृत्संसङ्ग्रामेभूमिशासनम् । अचाशक्तौवणिग्वृत्तं शूद्रवृत्तमथाश्रयेत् ॥ वाणिज्याशक्तवैश्यानांशूद्रवृत्तमदूषणम् । शूद्राणांपरमेशानिसेवा वृत्तं विधीयते ॥ सामान्यानान्तुवर्णानांविप्रवृत्त्यन्यवृत्तिषु । अधिकारोस्तिदेवेशिदेहयात्राप्रसिद्धये ॥ अदुष्टोनिर्म्ममःशान्त : सत्यवादौजितेन्द्रिय : । निर्म्मत्सरोनिष्कपटः स्ववृत्तौब्राह्मणो भवेत् ॥ अध्यापयेत् पुत्रबुद्धाशिष्यान्सन्मार्गवर्त्तिन : । सर्व्वलोकहितैषीस्यात् पक्षपातविनिर्मुख : ॥ मिथ्यालापमसूयांचव्यसनाप्रियभाषणम् । नीचै : प्रसक्तिं दम्भञ्चसर्व्वथाब्राह्मणस्त्यजेत् ॥ युयुत्सागर्व्वितासम्मौसम्मानै : सम्भिकृत

मा । मृत्यु र्योवायुः षुराजन्या नांवशानने ॥ बलीभीस्यात प्रजा वित्ते गृह्णीयात सम्मितं करम । रचन्नक्रीकृतं धर्म्म पुत्रवत पालयेत प्रजा : ॥ न्यायंयुक्त तथासन्धिं कर्मा ण्यन्यानियानिच । मन्त्रिभि : सह कुर्वीतविचार्यसर्वथान्नृप : ॥ धर्म युक्ते नयोहव्यं न्यायदण्डपुरस्क्रिया : । करणीयायथाशास्त्रं सन्धिंकुर्याद्य थाबलम् ॥ उपायै : साधयेत्कार्यं युद्धंसन्धिञ्चचतुभि : । उपाया- नुगता : सर्वाजयश्चेमविभूतय: ॥ ध्याग्नौचसङ्गाहिरत : सदाविदज्ज नप्रिय : । धीरोविपत्तौदचश्शी लवान सम्मितव्ययी ॥ निपुणोदु र्गसंस्कारेशस्त्रशिक्षाविचक्षण : । स्वसैन्यभावान्वेषीस्यात शिक्षयेद्र- णकौशलम् ॥ नहन्यान्मूर्च्छिता न युद्धेत्यक्तशस्त्रान्पराङ्मुखान् । बलानीतान रिपून देविरिपुदा रशिशूनपि ॥ जयलब्धानिवस्तूनिस न्धिप्राप्तानियानिच । वितरेत ता निसैन्येभ्योयथायोग्यविभागत : ॥ शौर्यंवृत्तं चयोस्तूर्णाञ्चे यंराज्ञापृथ क्पृथक् । बहुसैन्याधिपं नैकं कुर्यादात्महितेरत : ॥ नैकस्मिन्- विश्वसेद्राजानैकंन्याये नियोजयेत । साम्यंक्रोडोपहासञ्चनीचै : सह विवर्ज्जयेत ॥ बहुश्रुत: स्वल्पभा

षीजितात्मासुर्गाणगानपि । बहुमा नोपिनिर्दम्भोधीरोदण्डप्रसादयो : स्वयंवाचारदृष्ट्यावाप्रजाभावान्वि लोकयेत । एवं स्वजनभृत्यानांभावा न पश्येन नराधिप : ॥ क्रोधाद्द- म्भात प्रमादाद्वासम्मानंशासनंतथा । सहसानैवकर्त्तव्यंस्वामिनातत्त्वद दर्शिना ॥ सैन्यसेनाधिपामात्यव- नितापत्यसेवका : । पालनीया : सदोषाश्च दद्दण्डाराज्ञायथाविधि ॥ उन्मत्तानसमर्थांश्चबालांश्चमृत- बान्धवान् । ज्वराभिभूतान्वृद्धां श्चरचयेत पितृवन्नृप : ॥ वैश्यानां कृषिवाणिज्यवृत्तंविद्धिसनातन- म । येनोपायेनलोकानांदेहयात्रा प्रसिध्यति ॥ अत: सर्वात्मनादे विवाणिज्यकृषिकर्मसु । प्रमादव्य सनालस्यं मिथ्याशाठ्यं विवर्ज्जयेत् निखिलवस्तुतन्मूल्यमुभयो: सम्म तौशिवे । परस्पराज्ञाकरणं क्रय सिद्धिस्ततोभवेत ॥ मत्तशिशि प्रबालानामरियस्तनूणांप्रिये । रो गविभ्रान्तबुद्धीनामसिद्धौदान विक्रयौ ॥ क्रयसिद्धिरदृष्टानांगुण श्रवणतोभवेत । विपर्यये तद्गुणा नामन्यथाभवतिक्रय : ॥ कुञ्जरोष्ट्र तुरङ्गाणांगुणदोषप्रकाशनात् । वर्षातीतेपितत्क्रेयमन्यथाकर्त्तुम र्हति ॥ धर्मार्थकाममोक्षाणांभाज

नं मानवं वपुः। अतः कुलेशित त्क्रियोनसिद्धं न्ममशासनात् ॥ यवगोधूमधान्यानांलाभो वर्षं गते प्रिये। युक्तश्चतुर्थोधातूनामष्टमः परिकीर्त्तितः॥ ऋत्वं कृषौचवाणि ज्ये तथासर्व्वेषुकर्मसु। यद्यदङ्गीकृतं मर्त्यैस्तत्कार्यं शास्त्रसम्मतम् ॥ दक्षः शुचिः सत्यभाषीजितनिद्रो जितेन्द्रियः। अप्रमत्तोनिरालस्यः सेवाव्रत्तीभवेन्नरः प्रभुर्विष्णुसमो मान्यस्तज्जायाजननीसमा। मान्यास्तद्बान्धवाभृत्यैरिहामुत्रसुखेप्सुभिः॥ भर्त्तुर्मित्राणिमित्राणिजानीयात् तद्वैरीनरीन्। सभीतिः सदा तिष्ठेत्प्रभोराज्ञांप्रतीक्षयन्। अपमानं गृहच्छिद्रं गुप्त्यर्थं कथितञ्चयत्। भर्त्तुर्ग्लानिकरं यच्चगोपयेद्दतियत्नतः॥ अलोभः स्यात्स्वामिधनेसदास्वामिहितेरतः तत्सन्निधावसन्नाथ क्रीडांहास्य परित्यजेत् ॥ नपापमनसापश्येद्दपितद्गृहकिङ्करीः। शिविकाशय्यांहास्यञ्चताभिः सहविवर्ज्जयेत्॥ प्रभोः शय्यासनं यानं वसनं भाजनानिच। उपानद्भूषणं शस्त्रं नात्मार्थं विनियोजयेत् ॥ क्षमांकृतापराधश्चेत्प्रार्थयेद्यत्नतः प्रभोः। प्रागल्भ्यं प्रौढवादञ्चसाम्याचारं विवर्ज्जयेत्॥ सर्व्वे वर्णाः स्वस्वयर्णैर्ब्राह्मोद्वाहं तथाश्रनम्। कुर्वीरन्भैरवीचक्रात्तत्त्वचक्रादृतेशिवे॥ उभयत्रमहेशानि शैवोद्वाहः प्रकीर्त्तितः। तथाद्वेचपात्रेचवर्णभेदोनविद्यते॥ श्रीदेव्युवाच॥ गृहस्थानामशेषेणधर्म्मानकथयः प्रभो। संन्यासविहितान्धर्म्मान्कृपयावक्तुमर्हसि॥ श्रीसदाशिवउवाच॥ अवधूताश्रमोदेविकलौसंन्यासउच्यते। विधिनायेनकर्त्तव्यस्तत्सर्वं शृणुसाम्प्रतम्॥ ब्रह्मज्ञानेसमुत्पन्नेविरतेसर्वकर्म्मणि। अध्यात्मविद्यानिपुणः सन्न्यासाश्रममाश्रयेत्॥ विहायवृद्धौ पितरौशिशुंभार्यांपतिव्रताम्। त्यक्त्वाऽसमर्थान्बधून्प्रव्रजन्नारकीभवेत्॥ ब्राह्मणः क्षत्रियोवैश्यः शूद्रः सामान्यएवच। कुलावधूतसंस्कारे पञ्चानामधिकारिता॥ सम्पाद्यगृहकर्माणिपरितोष्यपरानपि। निर्ममोनिलयाद्गच्छेन्निष्कामोविजितेन्द्रियः॥ आहूयस्वजनान्बन्धून्ग्रामस्थान्प्रतिवासिनः। प्रीत्यानुमतिमन्विच्छेद्गृहान्निर्गमिपुर्जनः॥ तेषाम-नुज्ञामादायप्रणम्यपरदेवताम्। ग्रामं प्रदक्षिणीकृत्यनिरपेक्षोगृहाद्दियात्॥ मुक्तः संसारपाशेभ्यः परमानन्दनिर्वृतः। कुलावधूतं ब्रह्मज्ञं गत्वासम्प्रार्थयेदिदम्॥ गृ

ह्याश्रमेपरब्रह्मन् ममे तद्विगतं वय:
। प्रसादं कुरुमेनाथसन्न्यासग्रहणं
प्रति ॥ निवृत्तगृहकर्माणं विचा-
र्य विधिवद्गुरु: । शान्तं विवेकिनं
वीक्ष्य द्वितीयाश्रममादिशेत् तत:
शिष्य: कृतस्नानोयतात्माविहिता
ह्निक: । ऋणत्रयविमुक्त्यर्थं देव
र्षीन् चर्चयेत्पितृन्नित्यादिविधानेन
द्वितीयाश्रमं स्वीकृत्य यथातिष्ठत्त
दाह । ततोनिर्द्वन्द्वरूपोऽसौनिष्का
म : स्थिरमानस: । विहरेत्स्वेच्छ
याशिष्य : साक्षाद्ब्रह्ममयोभुवि ॥
आब्रह्मस्तम्बपर्यन्तं सद्रूपेणविभाव
यन् । विस्मरन्नामरूपाणिध्यायन्ना
त्मानमात्मनि ॥ अनिकेत : क्षमा
वृत्तोनि : शङ्क : सङ्गवर्ज्जित : ।
निर्ममोनिरहङ्कार : सन्न्यासीविह
रेत्क्षितौ ॥ मुक्तोविधिनिषेधेभ्यो
निर्योगक्षेमआत्मवित् ॥ सुखदु :
खसमोधीरोजितात्माविगतस्पृह ·
स्थिरात्माप्राप्तदु : खोपिसुखेप्राप्ते
पिनिस्पृह : । सदानन्द : शुचि :
शान्तोनिरपेक्षोनिराकुल: ॥ नोद्वे
जक: स्याज्जीवानांसदाप्राणिहिते
रत : । विगतामर्षभीर्दान्तोनिस्स
ङ्कल्पोनिरुद्यम : ॥ शोकद्वेषविमु
क्त:स्याच्छत्रौमित्रेसमोभवेत् । शी
तवातातपसह : समोमानापमान
यो : ॥ सम : शुभाशुभेतुष्टोयदृ-

वर्णाश्रमधर्म्म :

च्छाप्राप्तवस्तुना । निस्त्रैगुण्योनिर्वि
कल्पोनिर्लोभ : स्यादसञ्चयी ॥ य
थासत्यमुपाश्रित्यमृषाविश्वंप्रतिष्ठ-
ते । आत्माश्रितस्तथादेहोजानन्नेवं
सुखीभवेत् ॥ इन्द्रियाण्येवकुर्वन्ति
स्वंस्वंकर्मपृथक्पृथक् । आत्मासा
क्षीविनिर्लिप्तोज्ञात्वैवमोक्षभाग्भ
वेत् ॥ धातुप्रतिग्रहंनिन्दामनृतंक्री
डनंस्त्रिया । रेतस्त्यागमसूयाञ्चसं
न्यासीपरिवर्ज्जयेत् ॥ सर्वत्रसमदृ-
ष्टि : स्यात्कीटेदेवेतथानरे । सर्वं
ब्रह्मेतिजानीयात्परिव्राट्सर्वकर्म
सु ॥ विप्रान्नंश्वपचान्नंवायस्मात्त-
स्मात्समागतम् । देशंकालंतथा-
पात्रमश्नीयादविचारयन् ॥ अध्या
त्मशास्त्राध्ययनै : सदातत्त्वविचार
णै : । अवधूतोनयेत्कालंस्वेच्छा
चारपरायण : ॥ सन्न्यासिनांमृतं-
कायंदाहयेन्नकदाचन सम्पूज्यगन्ध
पुष्पाद्यैर्निखनेद्वाप्सुमज्जयेत् ॥ अ
प्राप्तयोगमर्त्यानांसदाकामाभिला-
षिणाम् । स्वभावाज्जायतेदेविप्रवृ-
त्ति: कर्मसङ्कुले ॥ तत्रापितेसानु
रक्ताध्यानार्चाजपसाधने । श्रेयस्त-
देवजानन्तस्तत्रैवदृढनिश्चया: ॥ अ
त : कर्मविधानानिप्रोक्तानिचित्त
शुद्धये । नामरूपंबहुविधंतदर्थंक-
ल्पितंमया ब्रह्मज्ञानादृतेदेविक
र्मसन्न्यसनंविना । कुर्वन्कल्पशतं

कर्मनभवेन्मुक्तिभाग्जान :॥ कुलावधूतस्तत्त्वज्ञोजीवन्मुक्तोनराकृति :। साक्षान्नारायणंमत्त्वागृहस्थस्तंप्रपूजयेत् ॥ यतेर्दर्शनमात्रेणविमुक्त:सर्वपातकात् । तीर्थव्रततपोदानसर्वयज्ञफलंलभेत् ॥ इतिश्री महानिर्वाणतन्त्रेऽष्टमोल्लासेवर्णाश्रमधर्मनिरूपणम् ॥

वर्णाङ्क :। पुं० मुद्ग ॥

वर्णि :। न० सुवर्णे ॥ वर्णिर्वलिस्याद्धिरण्यइत्युक्त :। अहिरण्येतु०वलि :॥

वर्णिक :। पुं० लेखके ॥

वर्णिका। स्त्री० कथनस्योत्कर्षे ॥ कठिन्याम् ॥ मसौ ॥ नील्यादिरागे ॥ व्याख्यायिकायाम् । ग्रन्थविशेषस्यव्याख्यायाम् ॥ स्रोत्रकल्याम् ॥ वर्ण०। चौरादिक :। ततोण्वुल् । प्रत्ययस्थादितीत्त्वं ॥

वर्णित :। त्रि० स्तुतियुक्ते । अभिष्टुते । ईडिते । वर्ण्यतेस्म । वर्णवर्णक्रियाविस्तारगुणवचनेषु । क्त :॥

वर्णी। पुं० लेखके॥ चित्रकरे ॥ ब्रह्मचारिणि ॥ वर्णः अष्टविधमैथुनाऽभावरूपास्तुति :सास्यास्ति । वर्णाब्रह्मचारिणीति०इनि :। त्रि० वर्णवति ॥

वर्णिनी। स्त्री० वनितायाम् ॥ हरिद्रायाम् ॥

वर्णिलिङ्गी। पुं० ब्रह्मचारिवेशवति ॥ वर्णीब्रह्मचारी० तस्यलिङ्गंचिह्नमस्यास्ति । इनि :॥

वर्णु :। पुं० सूर्ये ॥ नदविशेषे ॥ वृणोति । वृञ्० । अजिवृरीभ्योनिच्चेतिणु :॥ देशविशेषे ॥ वर्णुनदसमीपदेशोवर्णु :। अदूरभवश्चेत्यर्थे० सुवास्त्वाद्यणोजनपदेलुबितिलुप् ॥

वर्ण्य :। त्रि० वर्णनीये। श्लाघ्ये ॥ व्याख्यातव्ये ॥

वर्त्तक :। पुं० अश्वस्यखुरे ॥ व्याघ्राटपक्षिणि । भाषाइ बटेर इ० गौ० दे० भा० प्र० ॥ अस्यमांसगुणाय था। वर्त्तकोग्निकर :शीतोज्वरदोषत्रयापह :। सुरुच्य :शुक्रदोबल्योवर्त्तकाल्पगुणाततः ॥ वर्त्ततेवृतुवर्त्तने । ण्वुल् । न० वर्त्तलोहे। नीललोहे । बिट्टर० इ० भा० इ० केचित् ॥

वर्त्तका । स्त्री० वर्त्तिकायाम् । व्याघ्राटशकुनौ । बटेर० इ० भा० प्र० खगे ॥ वर्त्तकाशकुनौप्राचामितीत्त्वंन ॥

वर्त्तकी। स्त्री० अश्वस्यखुरे। व्याघ्राटे॥

वर्त्तजन्मा । पुं० अम्बुदे । मेघे ॥

वर्त्तन :। पुं० वामने ॥ न० वृत्तौ । जीविकायाम् ॥ वहवोवर्त्तनोपायाऋषिभि :परिकीर्त्तिता :।

सर्वेषामपिचैवैषांकुसीदमधिकंवि टु : ॥ विशेष : कुसीदेद्रष्टव्य : ॥ वर्त्ततेऽनेन, हतुश्चर्मे। ल्युट् ॥ साधारणवर्त्तुले ॥ न॰ स्त्री॰ तूल मालायाम् ॥ तकुंपीठे ॥ जीवने ॥ त्रि॰ वर्त्तिष्णौ ॥ वर्त्तनशील: । हतु॰ । अनुदात्ततश्चेतियुच् ॥

वर्त्तनि : । पुं॰ पूर्वदेशे ॥ स्त्री॰ प थि ॥ वर्त्ततेऽनया । हतु॰ । वृतेश्च स्यनि : ॥

वर्त्तनी । स्त्री॰ पथि । वर्त्तने ॥ त कुंपीठे । प्रेषणायाम् ॥ कृदिका रादितिङीष् ॥

वर्त्तमान : । पुं॰ अतीतानागतभि न्नकाले ॥ आरब्धापरिसमाप्तिव र्त्तमान : काल : । यथा । महा भारतंपठति । सचतुर्विध : यथा । प्रवृत्तोपरतश्चैव॰ वृत्ताविरत एवच ॥ नित्यप्रवृत्त : सामीप्यो वर्त्तमानश्चतुर्विध : ॥ क्रमेणोदा हरणानि । मांसंनखादति । अा दौप्रवृत्तंमांसभोजनंनिवर्त्तय- ति॰ इत्यर्थ : । इहकुमारा : क्री डन्ति॰ तदानीन्तनक्रीडनाभावेपि पूर्वक्रीडामादायवर्त्तमानत्वा त् । पर्वतास्तिष्ठन्ति॰ नित्यप्रवृत् तत्वात् । किञ्चपर्वतानांस्थितत्वं वर्त्तमानत्वमपिभूतभविष्यत्काला भ्यांसम्बन्धविवक्षयापर्वतास्तस्थु:॰ स्थास्यन्तीत्यपिस्यात् । सामीप्यो द्विविध : । भूतसामीप्यं यथा । कदाअागतोसि॰ इतिप्रश्ने॰ अ यमेवेदादेवर्त्तमानत्वात्॰ एषो हमागच्छामि॰इत्यागतोपिवदति भविष्यत्सामीप्यं यथा । कदा॰ गमिष्यसीतिप्रश्ने॰ एषोहंगच्छा- मीतिगमनक्रियमाणोद्यमोपिवद ति॰ इतिमुग्धबोधटीकायांदुर्गा- दास : ॥ प्रयोगाधिकरणीभूतश्चा लोवर्त्तमान : कालइतिनैयायि का : ॥ अद्यतने । अधुनातने ॥ त्रि॰ तत्कालवृत्ते । विद्यमाने । स्थिते ॥ वर्त्तते । हतु॰ । शानच् । मुक् ॥

वर्त्तुक : । पुं॰ द्वौ : साधिके । द्वारपाले ॥ नदीभेदे ॥ काकनीडे जलावटे ॥

वर्त्तलोहम् । न॰ लोहविशेषे । लो हसंकरे । नीललौहे । विद्र॰ इ॰ भा॰ प्र॰ इतिकेचित् ॥

वर्त्ति : । स्त्री॰ बटिकायाम् । भेष जनिर्माणे ॥ नयनाञ्जने । लेखे ॥ गात्रानुलेपन्याम् ॥ दीपकस्यद शायाम् ॥ दीपे ॥ वर्त्यते । हतु॰ । घ्यन्त : अचइ : वर्त्ततेऽनया वा हतु॰ । इपिशिरुहीत्यादि नेन्वा ॥ वृतेश्छन्दसीति॰ इर्वा । स्वरभेद : । बाहुलकाल्लोकेपि ॥

वर्त्ति विशेषे ॥ यथा ! कतकस्य फलं शङ्खः सैन्धवं त्र्यूषणं वचा । फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनः शिला ॥ एषां वर्त्तिर्हन्त्याशु काचं तिमिरं पटलं तथेति ॥

वर्त्तिक : । पुं० पक्षिविशेषे । वर्त्तकी । बटेर० इ० भा० प्र० ॥

वर्त्तिका । स्त्री० वर्त्तकायाम् । व्याघ्राटे । बटेर । इ० भा० प्र० खगे ॥ अस्या मांसगुणा यथा वर्त्तिका मधुरा रूक्षा कफमारुतनाशिनी ॥ अजशृङ्ग्याम् ॥ वर्त्ती । वर्त्तौ० इ० भा० ॥ सापञ्चविधा यथा । पद्मसूत्रभवा दर्भगर्भसूत्रभवाथवा । शणजा बादरी वापि फलकोषोद्भवाथवा । वर्त्तिका दीपकृत्येषु सदा पञ्चविधा स्मृता ॥ वर्त्तते० वर्त्यते वा । वृतु० णवुल् । उदीचां मते० प्रत्ययस्थादितीत्वम् ॥ वस्तुतस्तु वर्तेस्तिकन्निति कन् बोध्य : ॥

वर्त्तित : । त्रि० नीते ॥ निष्पादिते ॥ ग्रथिते ॥

वर्त्तितव्य : । त्रि० वर्त्तितुमर्हे ॥

वर्त्ती । त्रि० वर्त्तिष्णौ ॥

वर्त्तिष्णु : । त्रि० वर्त्तने ॥ वर्त्तनशील : । अलङ्कृञितीष्णुच् ॥ वर्त्तिनि ॥

वर्त्तिष्यमाण : । त्रि० भविष्यत्कालादौ ॥ वर्त्तनप्रागभावाश्रये ।

वर्त्ती । स्त्री० वर्त्तौ ।

वर्त्तुल : । पुं० कलायविशेषे । बाटुला० इ० गौ० दे० भा० प्र० ॥ यथा । कलायस्त्वपरो भेदास्त्रिपुटो वर्त्तुलोऽङ्कटी । इति शब्दमाला ॥ न० गृञ्जने ॥ त्रि० गोलवस्तुनि । निस्तले । वृत्ते ॥ वर्त्तते । वृतु० । बाहुलकादुलच् ॥

वर्त्तुला । स्त्री० तर्कुपीठ्याम् । टेकोरबांटुल इ० गौ० भा० ॥ इति हारावली ॥

वर्त्तुली । स्त्री० गजपिप्पल्याम् ॥

वर्त्म । न० नेत्रच्छदे ॥ मार्गे । अध्वनि ॥ वर्त्ततेऽनेनास्मिन् वा । वृतु० । मनिन् ।

वर्त्मनि : । स्त्री० पथि ॥ वर्त्तन्तेऽनया । वृतु० । वृतेश्छन्यनि : । चान्मुडितिगोवर्द्धन : ।

वर्त्मनी । स्त्री० पथि । कृदिकारादितिङीष् ॥

वर्त्स्यन् । त्रि० वर्त्तिष्यमाणे । लृट : सद्वेतिसदादेशे० वृद्भ्य : स्यसनोरितिविभाषयापरस्मैपदम् ॥

वर्द्ध : । पुं० ब्राह्मणयष्टिकायाम् । पूर्त्तौ ॥ छेदे ॥ न० सीसके ॥

वर्द्धक : । पुं० ब्राह्मणयष्टिकायाम् । भार्ग्याम् ॥ वर्द्धते । वृधु छेदने । णवुल ॥ त्रि० पूरके । छेदके ॥

वर्द्धकि : । पुं॰ त्वष्टरि । रथकारे तक्षणि । बढ़ई॰ इ॰ तखाण॰ इ॰ भा॰ प्र॰ । वर्द्धते । वर्द्धच्छेदने । अच् । वर्द्ध कषति । कष हिंसायाम् । बाहुलकादि : ॥

वर्द्धकी । पुं॰ बढ़ई॰ इ॰ भा॰ प्र॰ वर्णसङ्करजातौ । त्वष्टरि । सूत्रधारे । रथकारे । काष्ठतक्षके ॥

वर्धनम् । न॰ वृद्धौ ॥ छेदने । वर्धच्छेदनपूरणयो : ल्युट ॥ त्रि॰ वर्धिष्णौ ॥ वर्धतेत च्छील : । वृधुवृद्धौ । अनुदात्ते तश्चेतियुच् । वर्धयति । नन्द्यादित्वाल्ल्युर्वा ॥

वर्धनी । स्त्री॰ गलन्तिकायाम् । सनालजलपात्रे । बधना॰ बधनी॰ इ॰ भा॰ सम्मार्जन्याम् । बढनी॰ इ॰ भा॰ ॥

वर्धमान : । पुं॰ प्रश्नभेदे ॥ शरावे । एरण्डे । वीरजिने । चरमतीर्थकृति । महावीरे । विष्णौ । नारायणे । स्वस्तिके । राजगृह विशेषे । दक्षिणद्वाररहितोवर्द्धमानोधमप्रद: ॥ वर्धते । वर्धच्छेदनपूरणयो : । शानच् । स्वनामप्रसिद्धेदेशविशेषे । त्रि॰ वृद्धिमति ॥

वर्धमानक : । पुं॰ शरावे ॥ वर्धते । वृधु॰ । शानच् । शप् । लुक् । संज्ञायांकन् ॥ त्रि॰ वृद्धिविशिष्टे ॥

वर्धापनम् । न॰ नाडीच्छेदने ॥ *

वर्धित : । त्रि॰ प्रवृद्धे ॥ छिन्ने ॥ पूरिते ॥

वर्धिष्णु : । त्रि॰ वर्धने । वृद्धिशीले ॥ वर्धिते॰ तच्छील: वृधु॰ । अलङ्कृञितीष्णुच् ॥

वर्ध्र : । पुं॰ न॰ त्रपुणि । सीसे ॥ वरत्रायाम् ॥ वर्द्धते॰ इढबन्धनेन दीर्घीभवति । वृधु॰ । वृधिवपिभ्यां रन् । लघूपधगुणोरपर : ॥

वर्ध्री । स्त्री॰ नद्धाम् । वरत्रायाम् । चर्म्मरज्जौ । बद्धी॰ इ॰ भा॰ ॥ वर्द्धते । वृधु॰ । रन् । गौरादित्वान्ङीष् ॥ यद्वा । औणादिक : ष्ट्रन् । गुणोरपर: । प्रत्ययतकारस्य॰ झषस्तथोर्धोधइतिधत्वे॰ षित्वान्ङीष् ॥

वर्प : । न॰ रूपे ॥ वृणोति । वृञ्सम्भक्तौ । वृञ्शीङ्भ्यांरूपस्वाङ्गयो: पुट्चेत्यसुन्॰ प्रत्ययस्यपुट् ॥

वर्म्मकण्टक : । पुं॰ पर्पटे ॥

वर्म्मकषा । स्त्री॰ चर्म्मकषायाम् । सप्तलायाम् ॥

वर्म्मा । पुं॰ क्षत्रियस्यपद्धतौ ॥ यथा । शर्म्मान्तंब्राह्मणस्यस्याद्वर्मान्तं क्षत्रियस्यच । गुप्तदासात्मकंनाम प्रशस्तंवैश्यशूद्रयो : ॥ न॰ कवचे.

। तनुत्वे । बृणोतिदेहम् । बृञ् व रणे । मनिन् ॥
बर्म्मिः । पुं॰ मत्स्यविशेषे । बाँबो॰ बामी॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥
बर्म्मिकः । त्रि॰ बर्म्मिणि । बर्म्मास्या स्तित्रीह्यादित्वात्॰ ठक् ॥
बर्म्मितः । त्रि॰ धृतसन्नाहे । सन्नद्वे । सज्जे । बर्म्मसञ्जातमस्य । तार कादित्वादितच् ॥
बर्म्मी । त्रि॰ बर्म्मवति । बर्म्मिके ॥ ब र्म्मास्यास्ति ब्रीह्यादित्वादिनिः ॥
बर्म्मिमत्स्यः । पुं॰ बांबोतिख्याते मत्स्ये । बर्म्मिमत्स्योहरेद्वातपि त्तंरुचिकरोलघुः ॥
बर्म्मुषः । पुं॰ बामिरूप॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ मत्स्ये ॥
बर्य्यः । पुं॰ कन्दर्पे । स्मरे ॥ त्रि॰ बरेण्ये ॥ बर्य्यते, बरईसायां चुरादावदन्तः । यचोयत् ॥
बर्य्या । स्त्री॰ पतिंवरायाम् ॥ अब द्यपण्यबर्य्यागर्ह्यपणितव्यानिरोधे- ष्विति॰ अप्रतिबन्धविषये॰ बृङ् सम्भक्तावित्यस्मात्॰ यत् ॥
बर्व्वणा । स्त्री॰ बृहन्मक्षिकायाम् । नीलमक्षिकायाम् ॥ बरिति । ब णति । बणशब्दे । अच् ॥ यद्वा । बर्व्वति । बर्व्वगतौ । युच् ॥
बर्व्वरः । पुं॰ पामरे । नीचे ॥ केशे । बक्र केशे । बाबरी॰इ॰भा॰ ॥ चक्राले ॥

देशविशेषे ॥ यथा । मायापुरंसमा रभ्यसप्तशृङ्गात्तथोत्तरे । बर्व्वरा ख्योमहादेशः प्रोक्तः श्रीशक्तिसङ्ग मे ॥ पारसिकेजने ॥ हस्तविशेषे । सुमुखे । गरन्ने । गन्धपत्रे । का लबाबुइ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ बर्व्वर्त्ति । बृञ्॰ । यङ् लुगन्त । पचाद्यच् ॥ यद्वा । बृणोति । बृ ञ्॰ । कृगृशृबृञ्चतिभ्यः ष्वर च् ॥ न॰ हिङ्गुले ॥ पीतचन्दने घोले ॥ हिमवत्प्रान्ते यरू॰ बहु॰ प्र॰ यूपविशेषे ॥ यथा । जलेना लोडितं शालिपिष्टंखण्डमिश्रित म् । धाराय पक्कशतपाच्यं तद्भवे द्बर्व्वराख्यकम् ॥ बर्व्वरंजलक्कतमद्यः श्रेष्ठंपित्तानिलापहम् । रोचनं कफकृच्छीतं हृद्यं ह्लासनाशनं ।
बर्व्वरकम् । न॰ चन्दनभेदे । श्वेत बर्व्वरके ॥
बर्व्वरा । स्त्री॰ शाकविशेषे । तुङ् ग्याम् । खरपुष्पायाम् । अजग न्धिकायाम् । बाबुइ॰ इ॰ भा॰ प्र॰ ॥ कृष्णार्ज्जकस्तथाशुक्लोवटप त्रस्ततोपरः । बर्व्वराचितयंरूक्षं शी तंकटु विदाहिच ॥ तीक्ष्णंरुचिकरं हृद्यं दीपनं लघुशाकिच । पित्त ल कफवातास्रदद्रुकृमिविषापहम् । पुष्पप्रभेदे ॥ बृणोति । बृञ्॰ कृगृशृबृञ्चतिभ्यः ष्वरच् । अनि

स्य : षितांङीष् ॥
वर्वरी । स्त्री० बर्बराऽर्थे ॥ षित्वान् ङीष् ॥
वर्व्वरीक : । पुं० भार्ग्याम् । ब्राह्म णयष्टिकायाम् ॥ कुटिलकुन्तले । वाबरी०इ०भा० ॥ अजगन्धिकाया म । बाबुइ०इ०भा० ॥ यूनि ॥ वृणुते । वृञ्० । शृपृवृञांद्वेदक् चाभ्यासस्येति० ईकन् ॥
वर्व्वा । स्त्री० वर्षर्य्याम् ॥
वर्व्वि : । पुं० घस्मरे ॥ वृणुते । वृ- ञ्० । वहृभ्यांविन् ॥
वर्व्वुर : । पुं० युगलाक्षे । तीक्ष्णकण्ट के । गोशृङ्गे । कफान्तके । वबूर० ववूल०इ०प्र०वृक्षे ॥ बर्व्वुर : कफ नुद्गाही कुष्ठक्रमिविषापह : ॥
वर्व्वूर : । पुं० वर्व्वुरे ॥ इतिराजनि- र्घण्ट : ॥
वर्ष : । पुं० न० भारतादौ ॥ जम्बुद्वी पे ॥ अब्दे । समायाम् । वत्सरे ॥ वृष्टौ ॥ वर्षधरे । मेघे ॥ वर्षणम्० वृष्यतेर्वा । वृषुसेचने । अज्विधौ- भयादीनामुपसङ्ख्यानंमित्यच् ॥ वर्षयति०वर्षतिवा । पचाद्यच् ॥ यद्वा ॥ वृणाति । वृञ्वरणे । वृ- तृवदीतिस : ॥ वर्षशब्दोदिवसप- रोपिदृश्यतेच०दीर्घसत्राणिवार्षश तिकानि०वार्षसहस्त्रिकाणिचेति ॥
वर्षकरी । स्त्री० झिल्लिकायाम् ॥

वर्षकेतु : । पुं० रक्तपुनर्नवायाम् ॥
वर्षकोष : । पुं० दैवज्ञे ॥ मासि ॥ वर्ष : कोषोऽस्य
वर्षज : । त्रि० वृष्टिजाते ॥
वर्षणम् । न० वृष्टौ ॥ वृषुसेचने । ल्युट् ॥ नचाऽचाल्युटोबाध : वृष भेोवर्षणादितिभाष्यप्रयोगात्० ल्यु ड़पिभवतीतिकैयटादय : ॥
वर्षणि : । स्त्री० वर्तने ॥
वर्षपर्वत : । पुं० वर्षविभक्तौ । भाजकगिरौ ॥ यथा । हिमवान्हेमकूटश्चनिषधोमे रुरेवच । चैत्र : कर्णीचशृङ्गीचसप्तै तेवर्षपर्वता : ॥ इतिहारावली ॥
वर्षपाकी । पुं० आम्रातके ॥
वर्षपुष्पा । स्त्री० सहदेवीलतायाम् ॥
वर्षप्रिय : । पुं० चातकपक्षिणि ॥
वर्षवर : । पुं० शण्ढे । अन्तःपुर- महल्लके । खोजा०इ०भा०प्र० ॥ वृणोति०वरतिवा । वृञ्वरणे०- वरआवरणेवा । अच् । वर्षस्यव- र : । येत्त्वल्पसत्त्वा : प्रथमक्लीबा- स्स्त्रीस्वभाविन : । जात्यानदु- ष्टा : कार्येषुतेवैवर्षवरा : स्मृता : ॥
वर्षवृद्धि : । स्त्री० जन्मतिथौ ॥
वर्षा : । स्त्री० भूम्नि० प्रावृट्काले । नभोनभस्ययो : । श्रावणभाद्रयो : ॥ आषाढादिचतुर्मासेषु । यथा । वर्षासुसविषंतोयंदिव्यमप्याश्विनं- विनेति ॥ वर्षवर्षणमत्रास्ति ।

अर्श आद्यच् । टाप् ॥
वर्षांश : । पुं० मासि ॥
वर्षाघोष : । पुं० महाभेके ॥
वर्षाङ्ग : । पुं० मासि ॥
वर्षाभव : । पुं० रक्तपुनर्नवायाम् ॥ त्रि०वर्षासुजाते ॥
वर्षाभू : । पुं० भेके । मण्डूके ॥ भूलतायाम् । गण्डूपदे । किञ्चुलुके ॥ इन्द्रगोपे ॥ वर्षासुभवति । भू० । भुव : संज्ञान्तरयोरितिक्विप् ॥
वर्षाभू: । स्त्री० शोथघ्न्याम् । पुनर्नवायाम् ॥ भेक्याम् ॥
वर्षाभ्वी । स्त्री० भेक्याम् । वर्षासुभवति । भू० । क्विप् । वर्षाभ्वीत्यसाधु : । ङीष्विधायकाभावात् ॥ गौरादित्वाद्वाङीष् ॥ पुनर्नवायाम् ॥
वर्षार्चि : । पुं० कुजे । भौमे ॥
वर्षावसान : । पुं० शरत्काले ॥
वर्षिष्ठ : । त्रि० अतिवृद्धे ॥ अयमेषामतिशयेनवृद्ध : । इष्ठनि० प्रियस्थिरेति-वृद्धस्यवर्षि० आदेश : ॥
वर्षीयान् । त्रि० वृद्धतरे । ज्यायसि ॥ अयमनयोरतिशयेनवृद्ध : । द्विवचनेतीयसुनि० प्रियस्थिरेतिवर्षिआदेश : ॥
वर्षुक : । त्रि० वृष्टिकारिणि ॥ वर्षतितच्छील : । वृषुसेचने । लषपतपदेत्यादिनोकञ् ॥
वर्षुकाब्द : । पुं० वर्षणशीलमेघे ॥
वर्षेज : । त्रि० वर्षाकालजाते । वर्षेजे ॥ विभाषावर्षक्षरशरवरादित्यलुक् ॥
वर्षोपल : । पुं० करकायाम् ॥ वर्षायाउपल : ॥
वर्ष्मम् । न० देहे ॥ इतिद्विरूपकोष : ॥
वर्ष्म । न० देहे । तनौ ॥ प्रमाणे ॥ प्रमाणमारोन्नतिरितिस्वामी । इयर्त्तिभरत : ॥ अतिसुन्दराकृतौ ॥ वर्षति० वृष्यतेवा । वृषु० । मनिन् ॥
वर्हम् । न० पुं० कलापे । मयूरपिच्छे ॥ दले ॥ न० ग्रन्थिपर्णे । स्थौणेये ॥ परीवारे ॥ वर्हति । वृहवृद्धौ । पचाद्यच् ॥ वर्ह्यतेवा । वर्हहिंसायां । घञ् ॥
वर्हणम् । न० पत्रे ॥
वर्हि : । पुं० पावके ॥
वर्हि : पुष्पम् । न० ग्रन्थिपर्णे ॥
वर्हि : शुष्मा । पुं० अग्नौ ॥ वर्हि : कुश : शुष्मबलमस्येतिविग्रह : ॥
वर्हि । न० स्थौणेये । कुकुरौंधा० इ० भा० ॥ वर्हं अत्र प्रशस्तमस्य । अतइनि : ॥
वर्हिकुसुमम् । न० ग्रन्थिपर्णे ॥
वर्हिचूडा । स्त्री० खराश्वायाम् । मयूरशिखेतिप्रसिद्धायामोषधौ ॥

बर्हिण : । पुं० मयूरे ॥ बर्हमस्त्यस्य । फलबर्हाभ्यामिनच् ॥

बर्हिणवाहन : । पुं० षडानने ॥

बर्हिध्वजा । स्त्री० पार्वत्याम् ॥

बर्ही । पुं० मयूरे ॥ बर्होस्त्यस्य । इनि : ॥

बर्हिपुष्पम् । न० ग्रन्थिपर्णे ॥

बर्हिर्ज्योति : । पुं० अग्नौ ॥

बर्हिमुख : । पुं० गीर्वाणे । देवे ॥ बर्हिरग्निर्मुखं यस्यस : ॥

बर्हिषद् । पुं० दैत्यदानवादीनांपितृषु ॥ यथा । दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम् । सुपर्णकिन्नराणाञ्चस्मृतावर्हिषदोचिता : ॥

बर्हिष्ठम् । न० वाले । क्लीवेरे । बाला० । द्व० भा० प्र० ओषधौ । वर्हिषिकुशेतिष्ठति । सुपिस्थइति क : । अम्बाम्बेतिषत्वम् ॥

बर्हि : । पुं० हुताशने । चित्रके ॥ यज्ञे ॥ दीप्तौ ॥ न० ग्रन्थिपर्णे ॥ पुं० न० कुशे । दर्भे ॥ बर्हिर्द्विविधम् । मुख्यंगौणञ्च । तत्रमुख्यं कुशकाशादिदशदर्भमयम् । गौणन्तु० तत्सदृशंद्रव्यान्तरम् । बृंहति बर्हिर्वद्धौ । ओण्यादि : । बृंहेर्नलोपश्चेति० इसि : । बर्हि : सान्त : ॥

बलम् । न० सैन्ये ॥

बलक्ष : । पुं० शुक्लवर्णे । धवले ॥ त्रि० तद्वति ॥ बलते । बलसंवरणे सञ्चरणेच । क्विप् । बलमक्षत्यस्मिन् । अक्षू० । घञ् ॥ अवलक्षतेवा । अकारलोप : ॥

बलक्षगु : । पुं० चन्द्रे ॥ बलक्षा : गावोयस्यस : । गोस्त्रियोरितिह्रस्व : ॥

बलभी । स्त्री० गोपानस्याम् । कुड्यच्छादनार्थंदत्तवक्रकाष्ठे । वडभ्याम् ॥ पटलाधारवंशपञ्जरे ॥ बलति । बल० । बाहुलकादभच् । गौरादि : ॥

बलय : । पुं० कण्ठरोगे ॥ वेलायाम् ॥ पुं० न० कङ्कणे । कटके । प्रकोष्ठाभरणे ॥ बल्यते । बल० । वलिमलितनिभ्य: कयन् ॥ अस्थिविशेषे ॥ यथा । पाण्यो : पार्श्वयुगेपृष्ठेवक्षोजठरपायुषु । पादयोरपिचास्थीनिवलयानिबभाषिरे ॥ लघ्वादित्रिकले० । ऽऽ० ॥ गुर्वक्षरे पुं० ॥

बलयित : । त्रि० वेष्टिते । नद्यादिनाकृते ॥ बलयंजातमस्य । तारकादित्वादितच् ॥ यद्वा । बलयवत्कृतम् । तत्करोतीतिणिच् ॥ क्त : ॥

बला । स्त्री० बलायाम् । वाट्यालके ॥ विद्याविशेषे ॥

बलाक : । पुं० क्षुद्रबके । बलायाम् ॥

वलाहक: । पुं॰ बलाहके ॥

वलिकर: । त्रि॰ बलिकर्त्तरि ॥ वलिं करोति । डुकृञ्॰ । दिवाविभेतिट: ॥

वलित: । त्रि॰ वेष्टिते ॥

वलिर: । त्रि॰ केकरे । निम्नोन्नताच्छिद्या ॥ वलते । वल॰ । बाहुलकात्किरच् ॥

वलिशम् । ) न॰
वलिशि: । ) स्त्री॰ बलिशे । बडिशे ॥
वलिशी । )

वली । स्त्री॰ मध्यमरेखायाम् ॥ ऊर्म्याम् ॥ जीर्णत्वचि ॥ गृहदारुणि ॥

वल्क: । पुं॰ न॰ त्वचि । वल्कले ॥ शल्के । खण्डे । पुं॰ पट्टिकालोध्रे ॥ वलते । वल॰ । शुल्कवल्कोल्कादयश्च ॥ यद्वा । वल्कयति । वल्कपरिभाषणे । पचाद्यच् ॥

वल्कतरु: । पुं॰ पूगवृक्षे ॥

वल्कद्रुम: । पुं॰ भूर्जवृक्षे ॥

वल्कल: । पुं॰ न॰ द्रुमत्वचि । वल्के वक्कल॰ हू॰ भा॰ प्र॰ ॥ त्वचे । दालचीनीतिभा॰ प्र॰ ॥ वलति । वल॰ । बाहुलकात्कल: ॥ वल्कं लातीतितुस्वामी ॥

वल्कला । स्त्री॰ शिलावल्कायाम् ॥

वल्कलोध्र: । पुं॰ पट्टिकालोध्रे ॥

वल्कवान् । पुं॰ मत्स्ये ॥ त्रि॰ वल्कयुते ॥

वल्गिल: । पुं॰ कण्टके ॥

वल्ग: । पुं॰ न॰ अभ्यवहारे । जेमने ॥ वलाभोजने । अच् ॥

वल्गन् । त्रि॰ धावति ॥

वल्गनम् । न॰ बहुभाषणे ॥ प्लुतगमने ॥

वल्गा । स्त्री॰ दन्तालिकायाम् । अवचेपण्याम् । अश्वमुखरज्जौ ॥ साचोत्क्षिप्तादिभेदेनचतुर्दशविधोक्ताहयलीलावल्याम् । उत्क्षिप्ता शिथिलातथोत्तरवतीमन्दाचवेहायसीविक्षिप्तेकरालकन्धरसमोत्कीर्णाविभक्तातथा । अत्युत्क्षिप्ततलोद्धृतेखलुतथा व्यागूढगोकर्णिके वाहानाङ्कथितास्चतुर्दशविधावल्गाप्रभेदाश्चमीति ॥ तल्लक्षणानितुतत्रैवद्रष्टव्यानि ॥ अश्वप्रेरणविशेषे ॥

वल्गाविभागकुशल: । त्रि॰ वाहानां षड्विधप्रेरणाभिज्ञे ॥ यथाहभोज: । वाहनंप्रतिवाहानांषड्विधंप्रेरणंविदु: । रागावल्गाकषापार्ष्णिप्रतोदरवभेदत: ॥ वल्गायाविभागोविविच्यप्रयोग: तत्रकुशल: ॥

वल्गितम् । न॰ घोटकस्यविशेषगमने । देशेनर्विाञ्ज्याेपरिचरणे ॥ गमने ॥ बहुभाषणे ॥ वल्गनम् । वल्गगतौ । भावेक्त: ॥

वल्गु: । पुं॰ छागे ॥ त्रि॰ मनोज्ञे । सुन्दरे ॥ यथोक्तम् । चणमाच

मतिवल्गु जगदेतदतिफल्गु। धनलोभमपहायनमपद्मनयनाय॥ वलते। वल०। वलिगुर्कचेल्युः॥ वाचाले॥

वल्गुकम्। न० चन्दने॥ विपिने॥ पणे॥ त्रि० रुचिरे॥

वल्गुपत्रः। पुं० वनमुद्गे॥

वल्गुला। स्त्री० वाकुच्याम्॥ पक्षिविशेषे। बल्लविष्ठायाम्। बादुड० इतिभाषा॥

वल्गुलिका। स्त्री० तैलपायिकायाम्॥

वल्गुली। स्त्री० खविष्ठादिपक्षिविशेषे॥

वल्भनम्। न० भक्षणे॥

वल्मीकः। पुं० न० वामलूरे। वल्मीके॥ तन्मृत्तिकयाशौचनिषेधोयथा। वल्मीकमृत्तिकोत्खातांमृदमन्तर्जलांतथा। शौचावशिष्टांगेहाच्चनादद्याल्लेपसम्भवाम्। अन्यः प्राग्ग्रथपन्नाश्च हलीत्खातानकर्दमाम्॥

वल्लरिः। स्त्री० मञ्जर्याम्॥ वल्लते। वल्ल०। क्विप्। ऋच्छति। ऋगतौ अचइः। वल्लचासावरिश्च॥ मेथिकायाम्॥ चित्रमूले॥

वल्लवः। पुं० गोदोग्धरि। गोपे॥ भीमसेने॥ त्रि० सूपकारे॥ वल्लनम्। वल्लसंवरणे सञ्चरणे च। वल्लिः सौभोवाप्रीतौ। भावेघञ्। वल्लोऽस्यास्ति। अन्येभ्योपीतिवः॥ वल्लंवाति० वायतिवा। वाशति गन्धनयोः ओवैशोषणे वा। आतोनुपर्सिकः॥

वल्लवी। स्त्री० आभीर्याम्। गोपिकायाम्। महाशूद्राम्॥

वल्लिः। स्त्री० वल्ल्याम्। लतायाम्॥ पृथिव्याम्॥ वल्लते। वल्ल०। सर्वधातुभ्यइन्॥

वल्लिकण्टकारिका। स्त्री० अग्निदमनीक्षुपे॥

वल्लिदूर्वा। स्त्री० मालादूर्वायाम्॥

वल्लिशाकटपोतिका। स्त्री० मूलपोत्याम्॥

वल्लिशूरणः। पुं० अल्पपर्ण्याम्॥

वल्ली। स्त्री० व्रतत्याम्। गुडूच्यादिलतायाम्॥ याभूमेर्द्यमारोहन्तिताबल्ल्यः॥ अजमोदायाम्॥ कुसुमान्तरे। वेलाइ० भा० प०॥ कृदिकारादितिङीष्॥

वल्लीगडः। पुं० मत्स्यविशेषे॥ भेला० बालिकडा० इ० च० गौ० दे० भाषाप्रसिद्धे॥

वल्लीजम्। न० मरिचे। वेल्लजे॥

वल्लीबदरी। स्त्री० भूबदर्याम्॥

वल्लीमुद्गः। पुं० मकुष्ठके॥

वल्लीहद्गः। पुं० सालहद्गे॥

वल्लुरम्। न० शाद्वले॥ क्षेत्रे॥ गहने॥ औषधे॥ कुञ्जे॥ मञ्ज

र्याम् ॥ औषधे । निर्जलस्थाने ॥ विश्वधरणिशब्दरत्नावलिषु ॰ वश्वरमितिपाठ : ॥

वश्वूरम् । त्रि॰ आतपादिनाशुष्कमांसे ॥ वनक्षेत्रे ॥ वाहने ॥ ऊषरभूमौ ॥ कोलमांसे ॥ वल्लते॰वल्ल्यतेवा । वल्ल॰ । खर्जादित्वादूर: ॥

वल्ल्या । स्त्री॰ धात्रीवृक्षे ॥

वल्वजा : पुं॰ भूम्नि॰उलपे । बघ-शौ॰इ॰प्र॰तृण ॥ वलते । वल॰ । क्विप् । वजति । वजगतौ । अच् । वल्वासौवजश्च । एकोवल्वज इतिभाष्यादेकत्वेपि ॥ यद्वा । बलतिभुवंवेष्टयतिविग्रादित्वात्प्रत्यये॰ वल्व : पर्वत : तत्रजाता : वल्वजा : । इत्यन्ये । स्वभावाद्बहुत्वेवल्वजा : ॥ अतएव॰सुमनोऽप्सरोवल्वजादेर्वेतिपाक्षिकबहुत्वाऽर्थंक्रमदीश्वरसूत्रम् ॥

वल्वजा । स्त्री॰ तृणविशेषे । दृढपत्र्याम् । तृणाख्यौ । मौञ्जीपत्रायाम् । सावेवागे॰इ॰भा॰ ॥

वश : । पुं॰ एकादशकर्णान्तर्गतप्रथमकरणे ॥ तत्रजातस्यफलंयथा । ववाभिधानेजननंहियस्यशूरोतिधीरोमनुज : क्षतीस्यात् । पद्मालयातन्निलयेनिवासंकरोतिनित्यंसुविचक्षण : स्यात् ॥

वशंवद : । त्रि॰ आयत्तस्वरवाक्यस्यकारि । इष्टवादिनि ॥ वशंवशकरंमधुरंवर्तते । प्रियवशेवद : खच् । मुम् ॥

वश : । पुं॰ कान्तौ । स्पृहायाम् । इच्छायाम् ॥ वेश्यागृहे ॥ आयत्ततायाम् ॥ योयस्यवशमापन्न : सतस्यकिङ्कर : किल ॥ प्रभुत्वे ॥ जन्मनि ॥ न॰ आयत्तत्वे ॥ इच्छायाम् ॥ प्रभुत्वे ॥ त्रि॰आयत्ते ॥ वशनम । वशकान्तौ । वशिरण्योरुपसङ्ख्यानमित्यप् ॥ वष्टि । अच्वा ॥

वशका । स्त्री॰ वश्यायांनार्याम् ॥

वशक्रिया । स्त्री॰ वशीकरणे । संवदने ॥ मणिमन्त्रौषधैरायत्तीकरणे ॥ वशस्यकरणम् । कृञ : शच ॥

वशग : । त्रि॰ वशीभूते ॥

वशा । स्त्री॰ वन्ध्यायाम् ॥ सुतायाम् । दुहितरि ॥ योषायाम् । नार्याम् ॥ वन्ध्यगव्याम् ॥ करिण्याम् । हस्तिन्याम् ॥ वष्टि । वश॰ । पचाद्यच् । उश्यतेवा । वशिरण्योरुपसङ्ख्यानमित्यप् ॥

वशाव्यक : । पुं॰ शिशुमारे ॥

वशापायी । पुं॰ कुक्कुरे ॥

वशि । न॰ वशित्वे ॥

वशिक: । त्रि॰ रिक्ते । शून्ये ॥ उश्यते । वश॰ । सर्वधातुभ्यइन् । संज्ञायांकन् ॥

वशिका । स्त्री॰ अगुरौ ॥

वशिता । स्त्री० वशित्वे ॥ वशोऽस्या स्ति । इनि : । वशिनोभाव : । तल् ॥

वशित्वम् । न० शिवैश्वर्यविशेषे । अष्टभूतिर्व्यैकस्याम् । येनभूतंभौतिकञ्चावश्यमेववशीभवति ॥

वशी । पुं० जितेन्द्रिये ॥ अव्यसनिनि ॥ स्ववशीकृतकार्यकरणसङ्घाते ॥ स्वतन्त्रे । परमेश्वरे ॥ यत: सर्वंह्यस्यजगद्वशेवर्त्तते॰इतिवशी ॥

वशिनी । स्त्री० शमीवृक्षे ॥वन्दायाम् ॥

वशिर : । पुं० किणिह्याम् । अपामार्गे ॥ हस्तिपिप्पल्याम् ॥ चव्ये ॥ वचायाम् ॥ न०यवीवे । सामुद्रलवणे ॥ वष्टि । वश० । बाहुलकात्किरच् । संज्ञापूर्वकत्वान्नसम्प्रसारणम् ॥ यद्वा । वशनम् । वश० । क्वन् । वशिंराति । रा० । आतोनुपेतिक : ॥

वशिष्ठ : । पुं० स्वनामप्रसिद्धेमुनौ । अथर्वनिधौ । अरुन्धतीपतौ ॥ त्रि० वशकर्त्तरि ॥ श्रेष्ठतमे ॥

वशीकरणम् । न० मणिमन्त्रौषधैराय त्तीकरणे । वशक्रियायाम् ॥

वशीकारसञ्ज्ञा । स्त्री० ज्ञानप्रसाद रूपायांतष्णाविरोधिन्याम्चित्तवृत्तौ । दृष्टानुश्रविकविषयवितृष्णास्यवैराग्ये ॥ औत्सुक्यमात्रस्यापि निवृत्तिरुपस्थितेष्वपिदृष्टानुश्रविकविषयेषुयासंज्ञात्रयात्मपराधीना सावशीकारसंज्ञावैराग्यम् । उक्तञ्चपतञ्जलिना । दृष्टानुश्रविकविषयवितृष्णस्यवशीकारसंज्ञावैराग्यमिति ॥

वशीकृत : । त्रि० जिते ॥

वशीभूत : । त्रि० वश्यताम्प्राप्ते ॥ अवशोवशीभवति । च्वि : । अस्य च्वि ॥

वशीर : । पुं० गजपिप्पल्याम ॥

वश्यम् । नलवङ्गे ॥ आयत्तीकरणे ॥ वश्यंजनानांसर्वेषांविधेयत्वमुदाहृतम् ॥ त्रि० प्रणये । प्रवर्त्तयितुंनिवर्त्तयितुंवाशक्ये ॥ वशमधीनत्वंगत : । वशंगतइतियत् ॥

वश्यका । स्त्री० वशगायाम् ॥

वश्यकूट : । पुं० वैवाहिकविचारविशेषे । यथा । सिंहस्यसर्वेवशगाविनालिंविहायसिंहंवशिनोनराणाम् । भक्ष्यास्तथैषांजलराशयस्ते वश्यास्तुलोकव्यवहारतोन्ये ॥ एवं वश्यसमायोगेदम्पत्यो : प्रीतिरुत्तमा । वश्याभावेपिदम्पत्योर्विवाह: कलहप्रद : ॥

वश्या । स्त्री० वशगायाम् ॥ टाप् ॥

वश्यात्मा । पुं० स्वाधीनान्त: करणे ॥ वैराग्यपरिपाकेण॰वासनाक्षयेसति॰वश्य : स्वाधीनोविषयपा

एतल्लाशून्यः आत्मोपन्नः कर्णयशसः ॥

वषट् । अ० देवहविर्दानमन्त्रे ॥ उह्यतेऽनेन । वह० बाहुलकात्० डषट् ॥

वषट्कारः । पुं० देवयज्ञे । आहुतौ । होमे ॥ वषट्क्रियाक्रियतेयस्मिन्नधिकरणे घञ् ॥ विष्णौ ॥

वषट्कृतम् । त्रि० हुते । अग्नौप्रक्षिप्ते ॥ अग्नौहुतन्तुयद्द्रव्यं तत्स्यात्त्रिषुवषट्कृतम् ॥ वषडितिमन्त्रोपलक्षणम् । वषट्मन्त्रेणकृतम्०अग्नौप्रक्षिप्तम् ॥

वष्कयः । पुं० तरुणवत्से ॥ एकहायनेवत्से । वष्कते । वष्कगतौ । बाहुलकादयन् ॥

वष्कयणी । स्त्री० वष्कयिण्याम् । चिरप्रसूतायांगवि ॥ वष्कयस्त्वेकहायनोवत्स इतिशाकटायनः । तेननीयते । णीञ् ० । क्विप् । सर्वतोक्तिन्नर्थादितिङीष् । गौरादित्वाद्वा । पूर्वपदादितिणत्वम् ॥

वष्कयिणी । स्त्री० वष्कयण्याम् ॥ वष्कयस्तरुणोवत्सः । सोस्त्यस्याः । अतइनिः । अट्कुप्वाङितिणत्वम् ॥

वसतिः । स्त्री० वासे । अवस्थाने ॥ यामिन्याम् । निशायाम् ॥ निकेतने । सदने ॥ वसन्त्यस्याम् ०वसनं वा । वसनिवासे । वहिवस्यर्त्तिभ्यश्चिदित्यतिः ॥

वसती । स्त्री० वसतौ ॥ कृदिकारादितिङीष् ॥

वसनम् । न० छादने । वस्त्रे ॥ असाधारणेनचवाद्येयथा । धातानुराधवसुपुष्यविशाखहस्ताचित्रोत्तराश्विपवनादितिरेवतीषु । जन्मचंजीववुधशुक्रदिनेत्सवादौधार्यं-नवंवसनमीश्वरविप्रतुष्टाविति समयप्रदीपः ॥ वस्यतेऽनेनवा । वस आच्छादने ॥ ल्युट् ॥ निवासे ॥ स्त्रीकटीभूषणे ॥

वसना । स्त्री० स्त्रीकटीभूषणे । सारसने ॥

वसन्तः । पुं० ऋतुराजे । पुष्पसमये । कुसुमाकरे । सुरभौ । पिकानन्दे । कामसखे । मधुमाधवयोः । चैत्रवैशाखयोः ॥ वसन्त्यत्रपठनोस्मवाः । वस० । तॄभूवहिवसिभासीतिझच् ॥ अतिसारे ॥ रागविशेषे ॥ तालविशेषे ॥ वसन्ततालेकर्त्तव्योनगणोमगणास्तथा ॥ छन्दोनामविशेषे ॥ कतुविशेषे ॥

वसन्तकः । पुं० छन्दःनामकप्रभेदे ॥ वसन्ते ॥

वसन्तकुसुमः । पुं० शेलुवृक्षे ॥

वसन्तकुसुमाकरः । पुं० औषधवि

शेषि ॥ यथा । प्रवालरसमौक्तिका
भ्वरमिदंचतुर्भागभाक्पृथक्पृथग
थस्मृतेरजतहेमतीक्ष्णशक्ते । चयो
भुजगरङ्गकंचिलवकंविमर्द्याखिलं-
शुभेहनिविभावयेद्भिषगिदंधिया
समश : ॥ द्रवैर्वृषनिशेच्चुजे : क
मलमालतीपुष्पजे : पय : कदलि
कन्दजैर्मलयजैर्घनाभ्युद्भवै : । व
सन्तकुसुमाकरोरसपतिर्हिंबक्षोभि
त : समस्तगदहृद्भवेत्किलनिजानु
पानैरयमितिह्रदयोगतरङ्गिणी ॥

वसन्तजा । स्त्री॰ वासन्तीलतायाम् ॥

वसन्ततिलकम् । न॰ शर्करीछन्द: १४
प्रभेदे । सिंहोद्धतावृत्ते ॥ यथा ।
ज्ञेयंवसन्ततिलकंतभजाजगौग : ।
यथा फुल्लंवसन्ततिलकंतिलकंवना
ल्यालीलापरंपिककुलंकलमत्ररौति ।
वात्येषपुष्पसुरभिर्मलयाद्रिवातो-
यातोहरि : समधुरांविधिनाहता
स्म : ॥ पुष्पविशेषे ॥ औषधविशे
षे ॥ यथा । अचारलवङ्गनसैन्धववि
श्वशक्रचूर्णंकरञ्जसहितंमथितेनपी
तम् । नैवंप्ररोहतिपुनर्गुदज : स्व
हेतोस्तस्माद्वसन्ततिलकैरपिकल्पक
ल्पम् ॥

वसन्ततिलका । स्त्री॰ वसन्ततिलके ॥
यथा । उक्तावसन्ततिलकातभजा
जगौग : ॥

वसन्तदूत : । पुं॰ चूते ॥ पिके पञ्च
मरागे ॥ चाम्रे ॥

वसन्तदूती । स्त्री॰ पाटलीवृक्षे ॥ य
तिमुक्तं । माधवीलतायाम् ॥ ग
णिकार्याम् । कोकिलायाम् ।
पिक्याम् ॥

वसन्तद्रु : ।
वसन्तद्रुम: । पुं॰ चाम्रवृक्षे ॥

वसन्तमालिका । स्त्री॰ विषमवृत्तप्र
भेदे ॥ यथा । विषमेससजागुरूस
मेचेत्सभरायवसन्तमालिकासा ॥

वसन्तसख : । पुं॰ कामदेवे ॥

वसन्तोत्सव : । पुं॰ होलाकायाम् ॥

वसा । स्त्री॰ मांसप्रभवधातुविशेषे
कायस्नेहे । मेदसि । वपायाम् ॥
वसति॰ दस्ते वा । वसनिवासे॰
वसचाच्छादनेवा । पचाद्यच्॰ भि
दाद्यङ्वा ॥ मांसरोहिण्याम् ॥

वसाढ्य : । पुं॰ शिशुमारे ॥

वसादनी । स्त्री॰ सिंहमुख्याम् ॥ वा
सके ॥

वसान: । त्रि॰ आच्छादयति ॥ वस॰
। शानच् ॥

वसापायी । पुं॰ कुक्कुरे ॥

वसि । : पुं॰ वसने ॥ वस्ते॰ वस्यतेवा
वसचाच्छादने । खनिकष्यज्यसी
त्यादिनाइ : ॥

वसिरम् । न॰ चवीवे । सामुद्रलव
णे । वशिरे वस्ते वस॰ । बा
हुलकात्किरच् ॥ यथा । वसनम् ।

। वसुस्तम्भे । इन् । वसिंराति । रात्।गे । आतोनुपेतिकः । करि पिप्पल्याम् ।

वसिष्ठः । पुं० वसिष्ठमुनौ । अरुन्धती जानौ । अरुन्धतीनाथे ॥

वसु : । पुं० देवभेदे । गणदेवता विशेषे ॥ यथा । धरोध्रुवश्चसोमश्च विष्णुश्चैवानिलोऽनलः । प्रत्यूष श्चप्रभासश्चवसवोऽष्टौक्रमात्स्मृताः ॥ धनाधिपे ॥ आयाम् । दीप्तौ ॥ अग्नौ ॥ योक्त्रे ॥ वकवृक्षे । शिवमल्ल्याम् । पाशुपते ॥ राजनि ॥ साधौ ॥ पीतमुद्गे ॥ शिवे ॥ सूर्ये ॥ अष्टसङ्ख्यायाम् ॥ धनिष्ठानक्षत्रे ॥ पुष्करिण्याम् ॥ क्लीबे ॥ वृद्ध्यौषधे ॥ अश्वे ॥ विष्णौ ॥ वसन्तिसर्वभूतान्यत्र०तेष्वयमपिवसतीतिवावसुः ॥ न०रत्ने ॥ धने । रायि ॥ हाटके ॥ जले ॥ स्त्री०दीप्तौ । वृद्ध्यौषधे ॥ त्रि०मधुरे ॥ शुष्के ॥ वसतिसर्वत्र०उष्यतेवागुणैः सर्वत्रोष्यतेऽनेनवा०वस्ते०वस्यतेवा । वसनिवासे०वसआच्छादनेवा । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च्यु : ॥

वसुक : । पुं० शिववल्ल्याम् । वकपुष्पे । सुरेष्टे ॥ अर्कपर्णे । रक्तार्के । मन्दारे ॥ न०रोमके । साम्भरिलवणे ॥ पांशवे ॥ वासूके ॥ स्वार्थेकन् ॥ वसुकायतिवा । कै० । आतोनुपेतिकः । वसेव । यावादित्वात्कन्वा ॥ वसवस्त्यस्मिन् । व्रीह्यादित्वाट्ठन् । वसुस्तिकीवा ॥

वसुकीट : । पुं० याचके ॥

वसुचरणम् । न० भगण०ऽ ॥ ० ॥

वसुच्छिद्रा । स्त्री० महामेदावृक्षे ॥

वसुद : । पुं० धनाधिपे । कुबेरे ॥ हरौ ॥ त्रि०धनदातरि ॥ वसुदयते । देङ्पालने । वसुददातिवा । डुदाञ्० । आतश्चोपसर्गेकः ॥

वसुदान : । त्रि० सर्वफलदे ।

वसुदेव : । पुं० श्रीकृष्णजनके । आनकदुन्दुभौ । शूरे । वसुषुधनेषुदीव्यतिमोदते । दिवु० । पचाद्यच् ॥

वसुदेवता । स्त्री० धनिष्ठानक्षत्रे ॥

वसुदेवभू : । पुं० श्रीकृष्णे ॥

वसुधा । स्त्री० क्षितौ ॥ वसुदधाति । डुधाञ्० । आतश्चोपसर्गेकः ॥

वसुधाखर्जूरिका । स्त्री० भूखर्जूरिकायां ॥

वसुधाधिप : । पुं० भूपतौ ॥ नगणे० । ऽ । ० ॥

वसुधान : । पुं० कोशे ॥ वसुधीयतेस्मिन् ।

वसुधारा । स्त्री० वृद्धिश्राद्धपूर्वकर्त्तव्यचेदिराजवसूद्दश्यकाकुड्यालग्नघृत

धारायाम् ॥ यथा । कुडालम्नांव सोर्धारांसप्तधारान् घृतेनतु । कार येत्पञ्चधारान्वानातिनीचांनचो च्छ्रिताम् ॥ आयुष्मान्तिशान्त्य र्थंजमुतसमाहित : । षड्भ्य : पितृभ्यस्तदनुश्राद्धदानमुपक्रमेत् ॥ इतिकात्यायन : । अपिच । देह ल्यांनाभिमात्रायांप्रादेशपरिमाण त : । सप्तवापञ्चवाबिन्दून्दद्यात् सिन्दूरचन्दनै : । प्रत्येकबिन्दुंम तिमान्कामंमायांरमांस्मरन् । घृ तधारामविच्छिन्नांदत्वातत्रवसुंयजे त् ॥ कुवेरपुर्याम् ॥ धनसम्पत्तौ ॥ जिनशक्तिविशेषे । तारायाम् ॥ व सोर्वेदिराजधारा ॥ भौमेतीर्थ- विशेषे ॥

वसुनन्दक : । पुं॰ खेटके । धनवृद्धि जीवके ॥

वसुन्धरा । स्त्री॰ गोचायाम् । उर्व्यां म् ॥ वसूनिधारयति । संज्ञायांभृ तृवृजिधारीतिखच् । खचिह्रस्व : । अरुर्द्विषदितिमुम् ॥

वसुप्राण : । पुं॰ वह्नौ ।

वसुमती । स्त्री॰ भुवि ॥ यथासप्तद्वी- पावसुमतीति । वसुधनमस्त्यस्या म् ॥ मतुप् । ङीप् ॥

वसुमना : । पुं॰ विष्णौ ॥ वसुशब्दे नप्राशस्त्यंलक्ष्यते । वसुप्रशस्तंमनो यस्य । रागद्वेषादिभि : क्लेशैर्म

द्वादिभिरुपक्लेशैश्चयतोनकलुषि तंचित्तंततस्तन्मन : प्रशस्तम् ॥

वसुरोचि : । न॰ यज्ञे ॥ वसव : रोचन्तेयस्मिन् । रुचदीप्तौ । वसौ रुचे : संज्ञायामिति॰ इसिन् ॥

वसुल : । पुं॰ देवतायाम् ॥

वसुश्रेष्ठम् । न॰ रूप्ये ॥

वसुषेण : । पुं॰ कर्णे । चम्पाधि पे ॥

वसुस्थली । स्त्री॰ कुवेरपुर्याम् ॥

वसुहट्ट : । पुं॰ बकद्रुमे ॥

वसूक : । पुं॰ बकवृक्षे ॥ न॰ साम्भ रिलवणे ॥

वसूत्तम : । पुं॰ भीष्मपितामहे ॥

वस्क्रय : । पुं॰ वष्क्रये ॥

वस्क्रयनी । ) स्त्री॰ बष्कयिण्याम् । <br>वस्क्रयिनी । )

चिरप्रसूतायांधेनौ ॥ वस्क्रयिन्या स्त्रिदोषघ्नंतर्पणंबलकृत्पय : ॥

वस्कराटिका । स्त्री॰ वृश्चिकायाम् । कालिकारूपे ॥

वस्त : । पुं॰ छागे ॥ वस्तयति । वस्त अर्द्दनेचुरादि : । पचाद्यच् ॥

वस्तकम् । न॰ कृत्रिमलवणे ॥ वस्त इव । अजगन्धित्वात् । इवेप्रति कृताविति कन् ॥

वस्तकर्ण : । पुं॰ शालवृक्षे ॥

वस्तगन्धा । स्त्री॰ अजगन्धायाम् ॥ वस्तस्येवगन्धोऽस्या : । वस्तशब्द :

स्वगन्धेलाक्षणिक : ॥

वस्तमोदा । स्त्री० अजमोदायाम् ॥ वस्तं मोदयति । मुद० । ण्यन्त : कर्मण्यण् ॥

वस्तान्त्री । स्त्री० छगलान्त्रीक्षुपे । वृ षगन्धायाम् । मेषान्त्र्याम् ॥ व स्तस्येवान्त्रमस्या : । गौरादि : ॥

वस्ति : । पुं० स्त्री० नाभेरधोभागे । नाभिलिंगयोरन्तरे ॥ मूत्राशये धनुर्वस्त्राव स्तिरित्यभिधीयते ॥ नाभेरधस्तादलाबूसदृशमधोनालमन्ने कच्छिद्रं मूत्रभाजनं वस्तिरुच्यते ॥ अस्यालक्षणं यथा । विस्तीर्णामांस लास्निग्धावस्ति : पुंसांप्रशस्यते । निर्मांसाकर्कशारूक्षादु : खदारिद्रा दाम्मृता ॥ गोमायुसदृशायस्यखरो ष्ट्रमहिषस्यच । सभवेद्दु : खितो नित्यं धनहीनस्समानव : ॥ वसति मूत्रमत्र । यद्वा । वस्ते ० वस्यते वा । वस० निवासे० आच्छादने वा । वस्यतिवा । वसुस्तम्भे ॥ व सेस्ति : ॥ चिकित्साविशेषे ॥ य था । वस्तिर्द्विधानुवासाख्योनिरूह स्ततः पर : । य : स्नेहैर्दीयतेस स्यादनुवासननामक : ॥ कषाय क्षीरतैलैर्योनिरूह : सनिगद्यते । वस्तिभिर्दीयतेयस्मात्तस्माद्वस्तिरि तिस्मृत : ॥ वस्तिभि : मृगादीनां मूत्राशयै : ॥ भूम्नि० वस्तय : --

वस्त्रान्तावयवेषु ॥ दशासु ॥

वस्तिकर्माढ्य : । पुं० अरिष्टवृक्षे । फेनिले ॥

वस्तिमलम् । न० मूत्रे ॥

वस्तु । न० द्रव्ये ॥ पदार्थे ॥ जग तिवस्तुद्वयंभावोऽभावश्चेतिन्याय शास्त्रम् ॥ वस्तु० सच्चिदानन्दा द्वयंब्रह्मेतिवेदान्तशास्त्रम् ॥ वस ति । वस० । वसेस्तुन् ॥ लक्षणप्र माणाभ्यांहिवस्तुसिद्धिर्भवतीतिव्या ख्यातार : ॥

वस्तुकम् । न० वास्तुके ॥

वस्तुकी । स्त्री० श्वेतचिल्लीशाके ॥

वस्तुपरिच्छेद : । पुं० सजातीयभेदो विजातीयभेद : स्वगतभेदश्चेतिचि विधभेदे ॥ जीवेश्वरभेद:० जीवज गद्भेद:०जीवपरस्परभेद:०ईश्वरजग द्भेद:० जगत्परस्परभेदइतिपञ्चवि धभेदे ॥ वस्तुन : परिच्छेद : परि च्छिन्नत्वम् ॥

वस्तुविवेक : । पुं० अनित्यान्नित्यस्य पृथक्करणे ॥ नित्यमात्मस्वरूपं हिदृश्यंतद्विपरीतगम् । एवंयोनि श्चय : सम्यक्विवेकोवस्तुन : सवै ॥ वस्तुनोविवेक : ॥

वस्ता । पुं० वास्तव्ये ॥ वसति । व स० । तृच् ॥

वस्त्यम् । न० निशान्ते । गृहे ॥ वस नम् । वस० वसेस्ति : ॥ तत्वसा

धुरितियत् । यद्वा । अवस्याय ति । छ्येस्येशब्दसङ्घातयो: । आतस्रोपसर्गइतिक : । वष्टीस्य स्रोप : ॥

वस्त्रम् । न० आच्छादने । वाससि । चेले । वसने । अंशुके । कपडा० इ० भा० प्र० ॥ वस्यतेऽनेन । व सआच्छादने । सर्वधातुभ्य: ष्ट्रन् ॥

वस्त्रकुट्टिमम् । न० वस्त्रजालये । तंबूटी० इ० भा० प्र० ॥ वस्त्रस्यकुट्टिममल्पगृहम् ॥ छत्रे ॥

वस्त्रगृहम् । न० पटवेश्मनि । पटवापि । पटमये । दूष्ये । स्थले । तम्बू० इ० भा० प्र० ॥ वस्त्रस्य गृहम् ॥

वस्त्रग्रन्थि: । पुं० उच्चये । नीव्याम् । परिधान वस्त्रस्यग्रन्थने ॥

वस्त्रपञ्जल : । पुं० कोलकन्दे ॥

वस्त्रपुत्रिका । स्त्री० वस्त्रनिर्मितपुत्त लिकायाम् । गुडिया० इ० भा० ॥

वस्त्रभूषण : । पुं० शाकरगडवृक्षे ॥

वस्त्रभूषणा । स्त्री० मञ्जिष्ठायाम् ॥

वस्त्रयोनि : । पुं० स्त्री० वसनोत्पत्ति कारणे त्वगादौ । त्वक्फलक्रमिरो मसु ॥ वस्त्रस्ययोनि: कारणम् ॥

वस्त्ररञ्जकम् । न० कुसुम्भे । वह्निशिखे ॥ वस्त्राणांरञ्जकम् ॥ त्रि०व स्त्राणांकुसुम्भादिनारञ्जनकर्त्तरि ॥

वस्त्ररञ्जन : । पुं० कुसुम्भे ॥

वस्त्ररञ्जनी । स्त्री० मञ्जिष्ठायाम् ॥

वस्त्राभास : । पुं० मायामयेरज्जुसर्प्पादौ० कृष्णोगौरोदीर्घोह्रस्वइति व्यवहारे ॥ वस्तुधर्मिद्रव्यम्० त द्वदवभासते० इतितथा ॥

वस्न : । पुं० मूल्ये । अवक्रये ॥ न० वेतने ॥ वस्ने ॥ धने ॥ मूल्ये ॥ मृतौ ॥ द्रव्ये ॥ त्वचि ॥ वसत्यनया । वस० । धाप्वस्यज्य तिभ्योन : ॥

वस्नम् । म० कटिभूषणे ॥

वस्नसा । स्त्री० वायुवाहिन्यांनाड्याम् । स्नायौ ॥ वस्तेशरीरम् । व सआच्छादने । धापृवस्यज्यतिभ्यो न: । वस्नंचर्म० स्यति । षोअन्तक र्म्मणि । आतोनुपसर्गइतिक : । टाप् ॥

वस्निक : । त्रि० वस्नजीवातौ ॥ व स्नेनमूल्येनजीवति । वस्नक्रय विक्रयाट्ठन् । यद्वा । वस्नंमूल्यंहरति० वहति० आवहतिवा । वस्नद्रव्याभ्यांठन्कनाविच्याष्टीय ष्ठन् ॥

वस्त्रौकसारा । स्त्री० अलकायाम् । कुबेरपुर्याम् ॥ कुबेरनलिन्याम् ॥ मानसोत्तरशिखरवर्त्तिन्यामिन्द्रस्य नगर्याम् । इन्द्रपुर्याम् ॥ इन्द्रन लिन्याम् ॥

वल्मीकसारिका । स्त्री॰ वल्मीकसारायाम् ॥

वहंलिहः । पुं॰ गवि ॥ वहः स्कन्धं संलेढि । लिह॰ । वहाभ्रे लिहइति खश् । मुम् । खशोङित्त्वान्नगुणः ॥

वहः । पुं॰ वृषभस्कन्धे ॥ वाहे । हये ॥ गन्धवहे । वायौ ॥ पथि ॥ नदे ॥ वहतियुगमनेन । वहप्रापणे । गोचरसञ्चरेतिसाधुः ॥

वहतः । पुं॰ वृषे ॥ पान्थे ।

वहतिः । पुं॰ गवि ॥ सचिवे ॥ वायौ ॥ वहति । वह॰ । वहिवस्यर्त्तिभ्यश्चिदित्यतिः ॥

वहतुः । पुं॰ पथिके ॥ वृषभे ॥ वहति । वह॰ । एधिवह्योश्चतुः ॥

वहनम् । न॰ प्रापणे ॥ होडे । तरास्त्री । हुडि॰डु॰गो॰भा॰प्र॰नौका विशेषे ॥ वह॰ । ल्युट् ॥

वहन्तः । पुं॰ वायौ ॥ त्रि॰ वालके । वहति । वह॰ । तृभूवहिवसी-भ्यादिनाझच्पित् ॥

वहलम् । न॰ वार्वटपोते ॥ त्रि॰ वहुले ॥ दृढे ॥

वहलगन्धम् । न॰ शम्बरचन्दने ॥

वहलचक्षुः । पुं॰ मेषशृङ्गाम् ॥

वहलत्वचः । पुं॰ श्वेतलोध्रे ॥

वहला । स्त्री॰ शतपुष्पायाम् ॥ स्थूलैलायाम् ॥

वहा । स्त्री॰ नद्याम् ॥ वहति । वह॰ । अच् ॥

वहिःकुटीचरः । पुं॰ तिर्यग्यामे । कुलीरे ॥

वहिःप्रज्ञः । पुं॰ विश्वस्मिन् । व्यष्टिपुंहितचैतन्ये ॥ वहिःस्वात्मव्यतिरिक्ते विषयेप्रज्ञायस्यसः ॥

वहितः । त्रि॰ अवहिते ॥ अवधीयतेस्म । डुधाञ् । क्तः । दधातेर्हिः । भागुरिमतेऽल्लोपः ॥

वहित्रम् । न॰ पोते । वार्वटे ॥ वहति । वह॰ । अशित्रादिभ्यइत्रो-त्राविति॰इत्रप्रत्ययः ॥

वहित्रकम् । न॰ जलयाने । यानपात्रे ॥

वहिर्द्वारम् । न॰ द्वारवाह्यभागे । तोरणे ॥ वहिर्द्वारात् । वहिस्तद्वारस्थेतिवा ॥

वहिर्द्वारप्रकोष्ठकम् । न॰ प्रघाणे ॥

वहिर्भूतः । त्रि॰ वहिर्गते ॥

वहिर्मुखः । त्रि॰ विमुखे ॥ यथा । शैवोवावैष्णवोवापियोवास्यादन्यपूजकः । सर्वंपूजाफलंहन्तिशिवरात्रिवहिर्मुखः ॥

वहिश्चरः । पुं॰ कर्कटे ॥

वहिष्ठः । त्रि॰ वहिर्भवे । वहिःस्थिते ॥

वहिष्पवमानः । पुं॰ याज्ञिकस्तोत्रे । सामगानांसूक्तत्रयगानसाध्ये

स्तोत्रे ॥

वहि : । अ० वाह्ये ॥ वहति । वह० । इस् ॥

वहुल : । पुं० अग्नौ ॥ कृष्णपक्षे ॥ न० आकाशे ॥ सितमरिचे । त्रि०-प्राज्ये । प्रचुरे ॥ कृष्णवर्णे ॥ वहून् अर्थान् लाति । ला० । आतइति-क : ॥ वहति । वह० । वाहुलकात् उलच् ॥ वहुलायांजाते ॥ सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् । तस्यश्रविष्ठा षाढेतिलुक् ॥

वहुला । स्त्री० नीलिकायाम् ॥ एलायाम् ॥ गवि ॥ मानसाचलस्थदेवी-विशेषे ॥

वहुला : । स्त्री० भू०न० कृत्तिकासु ॥

वहेडुक : । पुं० विभीतकवृक्षे । व-हेडा० इ० भा० प्र० ॥

वह्नि : । पुं० वैश्वानरे । चीतिहोत्रे । धनञ्जये । अग्नौ । स्वाहादेवीवह्निपत्नी ॥ चित्रकाख्यौषधौ ॥ भल्लातके ॥ निम्बूके ॥ वहतिहव्यम् ० देवेभ्योहवि : प्रापयतिवा । वहप्रापणे । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनिरितिनि : ॥

वह्निकरी । स्त्री० धातपुष्प्याम् । धातक्याम् ॥

वह्निकाष्ठम् । न० दाहागुरुणि । दारुकाष्ठे ॥

वह्निगन्ध : । पुं० यक्षधूपे ॥

वह्निगर्भ : । पुं० वंशे ॥

वह्निगर्भा । स्त्री० शमीद्रुमे ॥

वह्निचक्रा । स्त्री० कलिकारीवृक्षे ॥

वह्निज्वाला । स्त्री० धातकीवृक्षे ॥ वह्नेरिवज्वालाऽस्या : । वह्नेर्ज्वालेवबा । रक्तपुष्पत्वात् ॥

वह्निदमनी । स्त्री० अग्निदमनीक्षुपे

वह्निदीपक : । पुं० कुसुम्भे ॥

वह्निदीपिका । स्त्री० अजमोदायाम् ।

वह्निनामा । पुं० चित्रके ॥ भल्लातके ॥

वह्निनी । स्त्री० जटामांस्याम् ॥

वह्निपुष्पी । स्त्री० धातक्यां ॥

वह्निभोग्यम् । न० घृते ॥

वह्निमन्थ : । पुं० गणिकारिकावृक्षे ॥

वह्निमन्थक : । पुं० अग्निमन्थे ॥

वह्निमारकम् । न० जले ॥

वह्निमित्र : । पुं० वायौ ॥

वह्निरेता : । पुं० शिवे । कृशानुरेतसि ॥ वह्नीरेतोऽस्य ॥

वह्निलोहकम् । न० कांस्ये ॥

वह्निवक्त्रा । स्त्री० कलिहार्याम् । लाङ्गल्याम् ॥

वह्निवधू : । स्त्री० अग्नाय्याम् । स्वाहायाम् ॥

वह्निवर्णम् । न० रक्तोत्पले ॥

वह्निवल्लभ : । पुं० सर्जरसे । धूनके ॥ अनिले ॥ वह्नेर्वल्लभ : ॥

वह्निबीजम् । न० निम्बूके ॥ स्व र्णे ॥

वह्निशिखम् । न० कुसुम्भे ॥ वह्निवत् शिखाऽस्य ॥

वह्निशिखर : । पुं० लोमस्तके ॥

वह्निशिखा । स्त्री० अनंतायाम् ॥ फलिन्याम् ॥ कलिकार्याम् ॥ धातक्याम् ।

वह्निसञ्ज्ञ : । ) वह्निसञ्ज्ञक: । ) पुं० चित्रकाख्यौ षधौ ॥ वह्नि : संज्ञायस्य स: ॥

वह्निसख : । पुं० वायौ ॥ जीरके॥

वह्यम् । न० वाहने ॥ शकटे ॥ वहन्त्यनेन ॥ वह० । वह्यं करण मितियत् ॥

वह्या । स्त्री० मुनिपत्न्याम् ॥

वह्लीक : । देशविशेषे ॥ वह्लते । व ह्लप्राधान्ये । बाहुलकाट्टीकन् ॥

वा । विकल्पे ॥ उपमायाम् । उप माने ॥ वितर्के ॥ पादपूरणे ॥ समुच्चये ॥ विस्मये ॥ नानार्थे ॥ अतीते ॥ एवार्थे ॥ अवधारणे वाति । वागतिगन्धनयो : । क्वि प् ॥

वांश : । त्रि० वंशसम्बन्धिनि ॥

वांशिक : । पुं० वंशीवादके । वैणविके ॥ वंशीवादनं शिल्पमस्य । ठक् ॥ भारभूतान्वंशान्हरति ० वहति० आवहतिवा । तद्धरति वहतीत्यादिनाठञ् ॥

वांशी । स्त्री० वंशरोचनायां ॥

वा: किटि : । पुं० शिशुमारे ॥ कु म्भीरे ॥ वारीजलस्थकिटि:शूकर:॥

वा : सदनम् । न० जलाधारे ॥ ज लान्तस्थगृहे । जलमन्दिर० इ० भा० प्र० ॥

वाक : । पुं० वाचि ॥ उच्यतेऽनये ति । वचपरिभाषणे । करणे घञ् ॥ न० वकसमूहे ॥ वकानांसमू ह: तस्यसमूहइत्यण् ॥ त्रि० व कसम्बन्धिनि ॥ वकस्यावयवोवि कारोवा । प्राणित्वादञ् ॥

वाकी । त्रि० वाग्विशिष्टे ॥ वाकोवि द्यतेऽस्य । अतइनि : ॥

वाकुची । स्त्री० ओषधिविशेषे । सो मराज्याम् ॥ सुप्रभायाम् । काम्बो ज्याम् । पूतिगन्धायाम् ॥ वाकु चीमधुरातिक्ताकटुपाकारसायनी । विष्टम्भहृद्धिमारुच्यासरास्रश्वास पित्तनुत् ॥ रूचाहृद्याश्वासकुष्ठमे हज्वरकृमिप्रणुत् । तत्फलंपित्त लंकुष्ठकफानिलहरंकटु ॥ केश्यं त्वच्यंकृमीश्वासकासशोथामपाण्डु हृत् ॥ वातंसञ्जीवयति । कुचश ब्दतारे । मूलविभुजादित्वात्क : पृषोदरादि : ॥

वाकुलम् । न० वकुलफले ॥ वाकु लंमधुरंग्राहिदन्तस्थैर्यकरंपरम् ॥

वाकोवाक्यम् । न॰ तर्कशास्त्रे ॥ उक्तिप्रत्युक्तिरूपेवैदिकग्रन्थे ॥ यथा किंस्विदावपनंमहत्॰ भूमिरावपनंमहदिति ॥

वाक्कीरः । पुं॰ श्यालके ॥

वाक्छलम् । न॰ छलविभेदे । वाक्यव्याजे ॥ यथा । अविशेषाभिहितेर्थेवक्तुरभिप्रायादर्थान्तरकल्पना-वाक्छलम् ॥ यत्रशक्यार्थद्वयेसम्भवति॰ एकार्थनिर्णयेकविशेषाभावादनभिप्रेतशक्यार्थकल्पनेनदूषणाभिधानंतद्वाक्छलम् । लक्षणन्तु॰ शक्यैकार्थशाब्दबोधतात्पर्यकशब्दस्यशक्त्यार्थान्तरतात्पर्यकत्वकल्पनयादूषणाभिधानम् । यथा । नेपालादागतोयंनवकम्बलवत्त्वादित्युक्ते॰ कुतोस्यनवसङ्ख्याकाः कम्बलाइति ॥ एवंगौर्विषाणीत्युक्ते॰ कुतोगजस्यशृङ्गम् श्यं तोधावतीतिश्वेतरूपवदभिप्रायेणोक्ते॰ श्वेतोनधावतीत्यभिधानमित्यादिकमूह्यम् ॥

वाक्पतिः । पुं॰ बृहस्पतौ ॥ वाचांपतिः ॥ त्रि॰ वागीशे । पटुवचने ॥

वाक्पारुष्यम् । न॰ अप्रियवाक्योच्चारणे । तत्तुसप्तधाव्यसनान्तर्गतव्यसनविशेषः । यथा । मृगयाक्षाः स्त्रियः पानंवाक्पारुष्यार्थदूषणे । दण्डपारुष्यमित्येतज्ज्ञेयंव्यसनसप्तकम् ॥ तल्लक्षणमाहनारदः । देशजातिकुलादीनामाक्रोशन्यङ्गसंयुतम् । यद्वचः प्रतिकूलार्थंवाक्पारुष्यंतदुच्यतइति ॥ देशादीनामाक्रोशन्यङ्गसंयुतम् । उच्चैर्भाषणमाक्रोशः॰ न्यङ्गमवद्यम्॰ तदुभययुक्तंयत्प्रतिकूलार्थमुद्वेगजननार्थंवाक्यंतद्वाक्पारुष्यंकथ्यते ॥

वाक्यम् । न॰ परस्पराकाङ्क्षोपेतपदचये॰ तिङ्सुबन्तचये । तिङन्तानांचयेयथा । पचतिपश्यत्यादिवाक्यम् । सुबन्तानाञ्चयेयथा । प्रकृतिसिद्धमिदंहिमहात्मनामित्यादि । कारकान्वितक्रियायाम् ॥ धात्वर्थः क्रिया॰ कारकैः कर्त्रादिभिरन्विताम्सम्बद्धार्थाकारकान्विता॰ अन्वितत्वञ्चक्रियाकारकाणामाकाङ्क्षायोग्यतासन्निधिवशाज्ज्ञेयम्॰ तिङ्सुबन्तचयात्मकोपिसम्बद्धार्थताबोध्या॰ असम्बद्धार्थस्याप्रयोगात्॰ अतएवपरस्पराभिसम्बन्धः पदसमूहोवाक्यमितिवृद्धाः । कारकान्विताक्रियायथा॰ घटमानयेत्यादि ॥ वाक्यस्वरूपमाह । वाक्यंस्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः । वाक्योच्चयोमहावाक्यमित्थंवाक्यंद्विधामतम् ॥ उक्ताञ्च । स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया ।

वाक्यानामेकवाक्यत्वंपुन : सम्भूय जायतइति ॥ अत्रवाक्यंयथा । शून्यंवासगृहमित्यादि । महावाक्यंयथा । रामायणमहाभारतरघुवंशादि । इति ॥ पुनश्चतद्द्विविधम् । लौकिकंवैदिकञ्चेति । वैदिकमीश्वरोक्तत्वात्सर्वमेवप्रमाणम् लौकिकन्त्वाप्तोक्तंप्रमाणम् । अन्यदप्रमाणम् ॥ समभिहारोवाक्यम् । समभिहारश्चसाध्यत्वादिवाचकद्वितीयाद्यभावेपिवस्तुत: शेषशेषिवाचकपदयो : सहोच्चारणम् । यथा । यस्यपर्णमयीजुहूर्भवतिनसपापंश्लोकंशृणोतीत्यत्र० पर्णताजुह्वा : समभिहारादेवपर्णताया : जुह्वङ्गत्वम् । नचानर्थक्यं जुह्वा : सिद्धत्वादितिवाच्यम् । जुहूशब्देनतत्साध्यापूर्वलक्षणात् तथाचवाक्यार्थ:० पर्णतयाऽवद्यहविर्धारणद्वाराजुहूपूर्वंभावयेदिति । एवञ्चपर्णतयायदिजुहू : क्रियतेत दैवतत्साध्यमपूर्वंभवतिनान्यथेतिगम्यते०इतिपर्णतायावैयर्थ्यम् । अवद्यहविर्धारणद्वारेतिचावश्यंवक्तव्यम्०अन्यथास्रुवादिष्वपिपर्णतापत्ते : ।सेयंपर्णता०अनारभ्याधीतापिसर्वप्रकृतिष्वेवान्वेतिनविकृतिषु •तत्रचोदकेनापितत्प्राप्तिसम्भवात् पौनरुक्त्यापत्ते : । तदिदंवाक्यंप्रकरणादिभ्योबलवत् । अतएवैन्द्रा ग्नौइदंहविरित्यादेरेकाशाक्यत्वाद्दर्शाङ्गत्वम् । नतुप्रकरणाद्दर्शपूर्णमासाङ्गत्वम् ॥ उच्यतेइतिवाक्यम् । वचेर्ण्यत् । चजोरितिकुत्वम् । शब्दसंज्ञात्वात्०वचोऽशब्दसंज्ञायामितिनिषेधोन ॥ शुभाशुभवाक्यानितु । नैवराज्येनमहतानचैवार्थस्वराशिभि : । प्राप्यतेज्ञानकथनं परलोकसुभाषितम् ॥ स्वर्गापवर्गसिद्ध्यर्थंभाषितंयत्सुशोभनम् । वाक्यंमुनिवरै : शान्तैस्तद्विज्ञेयंसुभाषितम् ॥ रागद्वेषानृतक्रोधकामतृष्णानुसारियत् । वाक्यंनिरयहेतुत्वात्तद्दुर्भाषितमुच्यते ॥ संस्कृतेनापिकिंतेनमृदुनाललितेनवा । अविद्यारागवाक्येनसंसारक्लेशहेतुना ॥ यच्छ्रुत्वाजायतेपुण्यंरागादीनाञ्चसङ्क्षय : । निकृष्टमपितद्वाक्यंविज्ञेयमतिशोभनम् ॥ इतिवह्निपुराणम् ॥

वाक्यलक्षणवित् । पुं० मीमांसाशास्त्रज्ञे ॥

वाक्याध्याहार : । पुं० आकाङ्क्षितेकदेशपूरणे ॥वाक्यस्यअध्याहार:॥

वाक्याभिधायी । त्रि० पृष्ठमांसादे ॥ वाक्यंभिधायीपुरुष : पृष्ठमांसादउच्यतइतिचिकाण्डशेष : ॥

वागधिप : । पुं० बृहस्पतौ ॥ वाचा

मधिप : ॥

वागर : । पुं॰ गतातङ्के । परित्यक्तभये । मुमुक्षौ ॥ वातवेष्टके ॥ विशारदे । पण्डिते ॥ विषाणे ॥ निर्णये ॥ वारके ॥ शाणे ॥ वाडवे ॥ वृके ॥

वागारु : । त्रि॰ आशाहन्तरि ॥ यथा । आशांबलवतीन्दत्त्वायोहन्तिपिशुनोजन : । सजीवासीपिवागारुद्रुणो॰दानुस्सुदातरि ॥ इतिशब्दमाला

वागाशनि : । पुं॰ बुद्धे ॥

वागाशी : । पुं॰ शुभवाचि ॥ वाचि आशीर्यस्य स : ॥

वागीश : । पुं॰ जीवे । बृहस्पतौ ॥ त्रि॰ वाक्पतौ ॥

वागीशा । स्त्री॰ सरस्वत्याम् ॥ वाचामीशा ॥

वागीश्वर : । पुं॰ ब्रह्मणि ॥ बृहस्पतौ ॥ स्वर्वेदादिरूपाणांवाचामीश्वर : । मञ्जुघोषे ॥ त्रि॰वाचामीश्वरे ॥

वागीश्वरी । स्त्री॰ सरस्वत्याम् ॥

वागुजी । स्त्री॰ सोमराज्याम् ॥ वाचं गुञ्जति । गुजिअव्यक्तशब्दे । मूलविभुजादित्वात्क: । पृषोदरादि: ॥

वागुण : । पुं॰ कर्मरङ्गे ॥

वागुरा । स्त्री॰ मृगबन्धनार्थजाले । मृगबन्धन्याम् ॥ खावल॰खावली॰ इ॰जाल॰इ॰च॰भषा ॥ अवागुरते । गुरीहिंसायाम । इगुपधेतिक : । वष्टिभागुरीत्यवाकारलोप : ॥

वागुरिक : । पु॰ व्याधविशेषे । जालिके ॥ वागुरयाचरति । चरतीतिठक् ॥

वाग्गुद : । पुं॰ पक्षिविशेषे । वागुड॰वाड॰इ॰भा॰प्र॰ ॥

वाग्गुलि : । पुं॰ ताम्बूलिनि । राज्ञांताम्बूलदातरि ॥ जातिविशेषे ॥

वाग्गुलिक : । पुं॰ ताम्बूलदे ॥

वाग्जालम् । न॰ शास्त्रमात्रे ॥ यथा । परिनिर्मथ्यवाग्जालंनिर्णीतमिदमेवहि । नोपकारात्परोधर्मोनापकारादघंपरम् ॥

वाग्दरिद्र : । त्रि॰ वाग्ये । मितभाषिणि ॥ वाचादरिद्र : ॥

वाग्दलम् । न॰ दन्तवाससि । ओष्ठाधरयो : ॥

वाग्दुष्ट : । पुं॰ व्रात्ये ॥ त्रि॰ वाचादूषिते । परुषभाषिणि ॥ वाचादुष्ट : ॥

वाग्देवता । ) स्त्री॰ सरस्वत्याम् ॥
वाग्देवी । )

वाग्बन्ध : । पुं॰ पथे । समये ॥ *

वाग्मी । पुं॰ सुराचार्ये ॥ त्रि॰ पटौ ॥ वक्तरि । विविधशास्त्राभ्यासाधिवासितप्रशस्तवाग्युक्ते ॥ वाग्मीसत्य

वागभवतीतिनिश्चिवोर्थः ॥ प्रश स्ताबागस्य । वाचोग्मिनिः । गकारोच्चारणं प्रत्ययेभाषायामित्यनुनासिकाभावाय । उत्तरसूत्रस्थवहुभाषिणीत्यस्यापिसम्बन्धात् । सम्यग्वहुभाषिणि॰वाग्मीतिबोध्यम् ॥

वाग्य: । त्रि॰ निर्वेदे ॥ कल्पे ॥ वाग्दरिद्रे ॥

वाग्यत: । त्रि॰ यतवाचि । मौनिनि ॥ वाचियत: ॥

वाग्याम: । त्रि॰ योच्चशक्त्यादिनावाचंयच्छतितस्मिन् ॥

वाग्वज्र: । पुं॰ शापे ॥ वागेवयज्रोहिंसकत्वात् ॥

वाग्वित् । त्रि॰ वैयाकरणे । वाक्यकोविदे ॥ वाच: विन्दति॰वक्तुं॰विवेकञ्चजानातिवा । सत्सूद्विषेत्यादिनाक्विप् ॥

वाग्विसर्ग: । पुं॰ वाच: प्रयोगे ॥

वाङ्ग: । पुं॰ कचङ्गले । समुद्रे ॥

वाङ्मती । स्त्री॰ नदीविशेषे ॥ यथा । हिमाद्रेस्तुङ्गशिखरात्प्रोद्भूतावाङ्मतीनदी । भागीरथ्या: शतगुणंपवित्रंतज्जलंस्मृतम् ॥

वाङ्मय: । त्रि॰ वाक्यात्मके ॥ यथा । स्परस्तजभूगैर्लान्तैरेभिर्दशभिरक्षरै: । समस्तंवाङ्मयंव्याप्तं त्रैलोक्यमिवविष्णुना ॥

वाङ्मयी । स्त्री॰ परापश्यन्तीमध्यमावैखरीरूपायांवाण्याम् । सरस्वत्याम् ॥

वाङ्मात्रा । स्त्री॰ वाचोमात्रायाम् ॥ यथा । निमेषोन्वेषणं पुंसामङ्गुल्याःछोटिकाथवा । गुर्वक्षरोच्चारणं वावाङ्मात्रेयंस्मृताबुधै: ॥

वाङ्मुखम् । न॰ वचनोपक्रमे । उपन्यासे ॥ वाचोमुखमिवमुखम्॰उपक्रम: ॥

वाक् । स्त्री॰ वाण्याम् । भारत्याम् । अर्थपरिज्ञानफलायाम् । सर्वस्यार्थस्यप्रकाशिकायांसंस्कारवाण्याम् ॥ येोच्चार्थं सम्यगवबुध्यतेतेनैवसासम्यक्श्रुताभवति । प्रत्यक्षेणशब्दस्वरूपमुपलभमानोऽपिअर्थापरिज्ञानान्नपश्यतिनशृणोतीत्यनुभवात् ॥ शब्दसामान्ये ॥ वचने । वाक्ये ॥ तीक्ष्णानारुन्तुदावुद्धि: कर्मशान्तप्रतापवत् । नोपतापिमन: सोष्मवागेकावाग्मिन: सत: ॥ कण्ठताल्वादिस्थाने॰इन्द्रिये ॥ जिह्वामूलादिष्वष्टसुस्थानेषुविषक्तेनाग्नेयेवर्णानामभिव्यञ्जकेकरणे ॥ अकारादिवर्णेषु ॥ वर्णाद्यार्थसङ्केतपरिच्छिन्नाएतावन्तएवंक्रमप्रयुक्ताइत्येवंतदभिव्यङ्ग्य: शब्द: पदंवागित्युच्यते ॥ इतिभाष्यम् ॥ वक्तीति॰उच्यते॰ऽनयावा । वचपरिभाषणे । क्विब्वचीत्यादिनाक्विप्॰दीर्घोऽसम्प्रसारणञ्च ॥

वाच : । पुं० मत्स्यविशेषे । वाचा० ञ०गौ०दे०भा० ॥

वाचंयम : । पुं० मुनौ । मौनव्रतिनि ॥ वाचंयच्छति।यमउपरमे । वाचि यमोव्रतइतिखच् । वाचंयमपुरन्द रौचेत्यमन्तत्वम् ॥

वाचक : । पुं० शब्दे ॥ यथा । शास्त्रे शब्दस्तुवाचक : । शास्त्रे व्याकरणा दौयोवाचक : साधुशब्द : सएवनि रूपपदेनशब्दशब्देनव्यपदिश्यते ॥ वर्णव्यतिरिक्तस्यपदस्यवाक्यस्यवावा चकत्वमिच्छन्तिवैयाकरणा: । वर्णा नांप्रत्येकंवाचकत्वेद्वितीयादिवर्णो च्चारणानर्थक्यप्रसङ्गादितिकैयट : ॥ कथके। पुराणादिपाठके॥सचव्रा ह्मणएवभवति । यथा । ब्राह्मणंवा चकंविद्यान्नान्यवर्णजमादरात् । श्रुत्वान्यवर्णजाद्राजन्वाचकान्नरकं व्रजेदिति ॥ त्रि०वक्तरि ॥ वक्ति ॥

वाचक्नवी । स्त्री० वचक्नोर्दुहितरि । गार्ग्याम् ॥

वाचनम् । न० कथने ॥ पठने ॥ यथा । शुद्धेनानन्यचित्तेनपठितव्यंप्रयत्न त : । नकार्यासक्तमनसाकार्यंस्तो त्रस्यवाचनमितिवाराहीतन्त्रम् ॥

वाचनकम् । न० प्रहेलिकायाम् ॥ वा यने ।व्रतोपायने । यूपविशेषे ॥

वाचनिक : । त्रि० वचनप्राप्ते ॥ वच नादागत : । ठक् ॥

वाचनीय : । त्रि० वाचयितुमर्हे ॥

वाचस्पति : । पुं० जीवे । बृहस्पतौ ॥ वाच : समस्तविद्यारूपस्यवचस : पति: । षष्ठ्या: पतिपुत्रपृष्ठपारपद पयस्पोषेष्वितिसत्वविधानात् ०ष ष्ठ्याअलुक् ॥

वाचस्पतिवल्लभ : । पुं० पुष्परागमणौ । पोखराज०इतिभाषाप्र० ॥

वाचस्पत्यम् । न० वाग्मित्वे ॥ ब्राह्म णादित्वाद्भावेष्यञ् ॥

वाचा । स्त्री० वाचि । वाण्याम् ॥ क्वि बन्ताद्वाचो०भागुरिमतेटाप् ॥

वाचाट : । त्रि० जल्पाके । वाचाले । बहुगर्ह्यवाचि ॥ कुत्सितं बहुभाष ते । आलजाटचौबहुभाषिणि । कु त्सितइतिवक्तव्यमितिवाक्शब्दादा टच् ॥ सुबहुभाषिण्यपिजल्पाकवा चाटवाचालावर्त्तन्ते । वाचाटोवा चालोजल्पाक : सुबहुभाषीत्यादि तिशब्दार्क्कपर्यायेवीपालित : । निश्यप्रगल्भवाचालामुपतिष्ठे सर स्वतीमितिमुरारिश्च ॥

वाचारम्भणम् । न० अनृतजडानात्म रूपे ॥ निरूप्यमाणेस्वत : सत्ताही नमपियदपरोक्षव्यवहारगोचरतया गम्यतेतदित्यर्थ : ॥

वाचाल : । त्रि० वाचाटे ॥ कुत्सितं बहुभाषते । वाचोवक्ष्योऽस्यसन्निति। आलजाटचौबहुभाषिणि । कुत्सित

द्भुतिवक्तव्य मितिवाचवालच् ॥
वाचिकम् । न० सन्देशवाचि ॥
वाचोव्याहृतार्थाया मितिठक् ॥
वाचिकंतस्त्रवेदयदूतत्वे नाभिशंसन मितिशब्दरत्नावली ॥ पुं० वाक्यारम्भे ॥ यथा । आलापश्चविलापश्च संलापश्चविलापक : । अनुलापोपलापश्चसन्देशश्चातिदेशिक : ॥ अपदेशोपदेशौचनिर्देशोव्यपदेशक: । कीर्त्तितावचनारम्भा द्वादशामीमनीषिभिरित्युज्ज्वलनीलमणि : ॥ त्रि०वाचा०वचसाकृते ॥ यथा । कायिकंवाचिकंवापिमानसंवायथामति । आराधनेपरेशस्यभावशुद्धिर्विधीयते ॥
वाचिकहारक : । पुं० लेखे । वर्णदूते ॥
वाचोयुक्ति : । त्रि० वाग्मिनि ॥ वाचोवचस : युक्ति : सयुक्तिकस्त्वम् । वाक्दिक्पश्यद्भ्योयुक्तिदण्डहरेष्विति षष्ठ्याअलुक् ॥
वाचोयुक्तिपटु : । त्रि० सुवक्तरि । वाग्मिनि । वाचोयुक्तिस्तासोपटुश्च ॥
वाच्यम् । न० प्रतिपादने । दूषणे ॥ त्रि०कुत्सिते । हीने ॥ वचनार्हे ॥ अभिधेये ॥ यद्यस्माच्छब्दान्नियमत : प्रतीयते०तत्तस्यवाच्यम् । यथा । गामानयेत्यस्मिन्वाक्ये०गो।शब्दस्यगोत्वम् ॥ उच्यते । वचपरिभाषणे । ण्यत् । वचोऽशब्दसंज्ञायामितिनकुत्वम् ॥ अर्थोवाच्यश्चलक्ष्यश्चव्यङ्ग्यश्चेतित्रिधामत : । वाच्योर्थोभिधयावोध्योलक्ष्योलक्षणयामत : । व्यङ्ग्योव्यञ्जनयाता : स्युस्तिस्र : शब्दस्यशक्तय : ॥
वाच्यमान : । त्रि० प्रस्तूयमाने ॥ वचेर्णौरादिकात्कर्मणिलट : शानच् ॥
वाज : । पुं० निस्वने । शब्दे ॥ पर्णे ॥ शरपक्षे ॥ वेगे ॥ मुनौ ॥ न० घृते । यज्ञे । अन्ने ॥ वारिणि ॥ वजत्यनेन । वजगतौ । हलश्चेतिघञ् । निष्ठायांसेटत्वान्नकुत्वम् ॥ वाजयतिवा । अच् : । पचाद्यच् ॥
वाजपेय : । पुं० न० अन्नसुराप्रधाने यागविशेषे । वाजपेयप्रतिपादके ग्रन्थे ॥
वाजपेयिक : पुं० वाजपेययागविदितरि ॥ वाजपेयप्रतिपादकग्रन्थाध्येतरि ॥ वाजपेयमधीते० वेदवा । क्रतूक्थादिसूत्रान्ताट्ठक् ॥
वाजभोजी । पुं० वाजपेययज्ञे ॥
वाजश्रवा : । पुं० अन्नदानादिनिमित्तयशोविशिष्टे । वाजमन्नंतद्दानादिनिमित्तंश्रवोयशोयस्यस : ॥
वाजश्रवस : । पुं० वाजश्रवसोपत्ये ॥
वाजसनेय : । पुं० जनमेजयकृतवेदा

र्थयन्थे ॥ सतुवैशम्पायनशापाहु

च्छिन्न : ॥

वाजसनेयी । पुं॰ यजुर्वेदिनि ॥

वाजिगन्धा । स्त्री॰ अश्वगन्धायाम् ॥

वाजिता । स्त्री॰ अश्वत्वे ॥ पक्षे ॥

वाजिदन्त : । पुं॰ वासके ॥ वाजी

दन्तोऽस्य॰ वाजिदन्ताभकेशरत्वा

त् ॥

वाजिदन्तक : । पुं॰ वैद्यमातरि ।

अटरूषे ॥ स्वार्थेक : ॥

वाजी । पुं॰ अश्वे ॥ पक्षिणि । खगे

॥ बाणे ॥ वाजा : पक्षा : सन्त्य

स्य । अतइनि : । पूर्वेह्यश्वा : स

पक्षाआसन् । तथाचशालिहोत्र

म् । सपक्षावाजिन : पूर्वेसञ्जा

तोव्योमचारिण : गन्धर्वेभ्योयथा

कामंगच्छन्तिचसमन्ततइति ॥

अवश्यंव्रजति । व्रजगतौ । आव

श्यकेणिनिर्वा ॥

वाजिनम् । न॰ आमिक्षाजले ॥ घ

नीभूत: पिण्डआमिक्षा॰ जलंवा

जिनमितिव्यवहारात् ॥

वाजिनी । स्त्री॰ अश्वगन्धायाम् ॥

अश्वायाम् । वडवायाम् ॥

वाजिपृष्ठ : । पुं॰ अम्लानवृक्षे ॥

वाजिभक्ष : । ) पुं॰ चणके ॥ वाजि
वाजिभक्ष्य : । ) नोभक्ष्य : ॥

वाजिभोजन : । पुं॰ मुद्गे ॥

वाजिमान् । पुं॰ पटोले ॥

वाजिवाहन : । पुं॰ गन्धर्वे ॥

वाजिशाला । स्त्री॰ मंदुरायाम् । घ

ुडशाल॰ इ॰ भा॰ ॥ वाजिनां

शाला ॥

वाजीकर : । त्रि॰ वाजीकरणे ॥

वाजीकरणम् । न॰ वीर्यवर्धकद्र

व्ये ॥ येनस्त्रीषुविषयेशाजीवनर :

सामर्थ्यंप्राप्नोति । अस्यलक्षणन्तु ।

यद्द्रव्यंपुरुषंकुर्यात्वाजिवत्सुरत-

क्षमम् । तद्वाजीकरमाख्यातंमुनि

भिर्भिषजांवरैरिति ॥ वाजीकरणत

न्त्रंनाम॰ अदुष्टविशुष्कक्षीणरेत

सामाप्यायनप्रसादोपचयजननिनि-

मित्तंप्रहर्षजननार्थंचेतिसुश्रुत: ॥

विधिमाह । नरोवाजीकरान्यो

गान्सम्यक्शुद्धोनिरामय : । स

प्तत्यन्तंप्रकुर्वीतवर्षाद्दूर्ध्वन्तुषोडशा

त् ॥ नचवैषोडशादर्वाक्सप्तत्या:

परतोनच । आयुष्कामोनर : स्त्री

भि : संयोगंकर्त्तुमर्हति ॥

वाञ्छनम् । न॰ वाञ्छायाम् ॥

वाञ्छा । स्त्री॰ इच्छायाम् । काङ्

क्षायाम् । स्पृहायाम् । वाञ्छ

नम् । वाञ्छिइच्छायाम् । गुरोश्च

ल्य : । टाप् ॥ आत्मवत्तिगुणवि

शेषइतिनैयायिका : । साद्विविधा

॥ यथा । उपायविषयिणी॰ फल

विषयिणीवा । फलंसुखंदु : खा

भावस्य । तत्र॰ फलेच्छांप्रतिफल ज्ञानंकारणम् । उपायेच्छांप्रति॰ इष्टसाधनताज्ञानंकारणमितिसि- द्धान्तमुक्तावली । ननाकपृष्ठंनच सार्वभौमंनपारमेष्ठ्यंनरसाधिपत्य म् । नयोगसिद्धीरपुनर्भवंवावा ञ्छन्तितत्पादरजः प्रपन्ना: ॥

वाञ्छितम् । त्रि॰ अभिलषिते ॥

वाञ्छिनी । स्त्री॰ वाञ्छनीयायांना र्याम् । लज्जिकायाम् । कुलटा लिकायाम् ॥

वाटः । पुं॰ पथि । मार्गे ॥ वृत्ति स्थाने । वृत्तौ । वाड॰ वृ॰ भा॰ ॥ न॰ वरण्डे ॥ अङ्गे ॥ अन्नप्रभे दे । पुष्पादिवाटिकायाम् ॥

वाटधनः । पुं॰ भूर्जकण्टकोद्भस वर्णजातौ ॥

वाटरम् । न॰ मधुविशेषे ॥ वटरे: कृतम् । क्षुद्राभ्रमरवटरेभ्यश्च ॥

वाटशृङ्खला । स्त्री॰ पथरोधकशृङ्ख लायाम् लंभायाम् ॥

वाटिका । स्त्री॰ हिङ्गुपत्र्याम् ॥ कु ट्याम् ॥ वास्तुनि ॥ वाट्यालक्यां ॥ गृहोद्याने ॥ वट्यते । वटवेष्टने । संज्ञायामितिण्वुल् । टाप् । प्र त्ययस्थादितीत्वम् ॥

वाटी । पुं॰ वाट्याले ॥ त्रि॰वेष्टित- स्थले ॥

वाटी । स्त्री॰ कुट्याम् ॥ वास्तौ ॥ गृ- होद्याने । पूगपुष्पादिकृतोपवने ॥ वाट्यालके ॥

वाटीदीर्घः । पुं॰ इक्षुकाण्डे ॥

वाट्टकम् । न॰ भृष्टयवे ॥

वाट्यपुष्पी । स्त्री॰ वाट्यालके ॥

वाट्या । स्त्री॰ बलायाम् । बरिया- रा॰इ॰भा॰ ॥

वाट्याल: । पुं॰ वाट्यायाम् ॥

वाट्यालकः । पुं॰ क्षुपविशेषे । वा ट्यायाम् ॥ वाटीमलति । अलभू षणादौ । कर्मण्यण् । स्वार्थेकन् । गवलुत्रा ॥ वाट्याआलकोवा ॥

वाट्याली । स्त्री॰ वाट्यालके ॥

वाड: । पुं॰ वेष्टने ॥

वाडव: । पुं॰ ब्राह्मणे ॥ वडवानले ॥ न॰ स्त्रीणांकरणे ॥ घोटकौघे ॥ पुं॰ न॰ पाताले ॥ बडबायां भव: । तत्रभवइत्यण् ॥ बडबा यांजात: । तत्रजातइत्यण्वा ॥ बडबानांसमूह: । खण्डिकादि भ्यश्चेत्यञ् ॥

वाडवाग्नि: । पुं॰ वाडवाग्नौ ॥ वा डवस्यासावग्निश्च ॥

वाडवाग्र्य: । पुं॰ ब्राह्मणश्रेष्ठे ॥

वाडवेय: । पुं॰ अश्विनीसुते ॥ वीजा ऽश्वे ॥ वडवायाऽपत्य: । बडवा यावृषेवाच्ये॰इतिढक् ॥

वाडवेयौ । पुं॰ द्विवचनान्त: नासत्य यो: ॥

बाडव्यम् । न॰ विप्रवृन्दे ॥ वाडवा नांसमूह : । ब्राह्मणमाणवबाडवा द्यन् ॥ बाडवतायाम् ॥ बाडवस्यक र्म भावोवा । ब्राह्मणादित्वात्ष्यञ् ॥

वाड्वलि: । पुं॰ वाग्वादस्यापत्ये ॥ अपत्ये॰ अतइञ् । वाचोवादेड त्वं बल्भावश्चोत्तरपदस्येञि ॥

वाढम् न॰ दृढे । भृशे । अतिशये ॥ प्रतिज्ञायाम् ॥ त्रि॰ अतिशयि नि ॥ आविष्टकी ॥ बाहते । बाहृप्र यत्ने॰ क्षोष्ठ्यादि : । गत्यर्थेतिक्त प्रत्यये॰ क्षुब्धस्वान्तेतिनिपातित म् ॥ उह्यतेस्मवा । वहप्रापणे । क्त : । क्षुब्धस्वान्तेतिसाधु : ॥

वाढम् । अ॰ स्वीकारे । अङ्गी- कृतौ ॥

बाण : । पुं॰ काण्डे । शरे । पृषत्के । विशिखे । अजिह्मगे । खगे । क लम्बे । मार्गणे ॥ गोस्तने ॥ के वले ॥ अग्नौ ॥ शरस्यावयवे ॥ वृक्षविशेषे ॥ भद्रमुञ्जे ॥ दैत्यवि शेषे । बलेर्ज्येष्ठपुत्रे ॥ कविवरे ॥ मुञ्जे ॥ नीलझिण्ट्याम् ॥ ध्वनौ ॥ त्रि॰ ध्वनियुक्ते ॥ बाण यति॰ रोषमुत्पादयतिशत्रुम् । वणशब्दे । स्वार्थण्यन्त : । पचा द्यच् ॥ वण्यते । कर्मणिघञ्वा ॥ वणनम् । भावेघञ्वा ॥ बाण : शब्दोऽस्त्यस्य । अर्श आद्यजवा ॥

बाणगङ्गा । स्त्री॰ रावणबाणनिर्भि न्नसोमेश्वरगिरिप्रभवनदीविशेषे ॥ यथा । सोमेशाद्दक्षिणेभागेबाणे नाद्रिं विभिद्यवै । रावणेनप्रकटि ताजलधारातिपुण्यदा ॥ बाणगङ्गे तिविख्यातायास्नानादघहारिणी ॥ स्नात्वातुबाणगङ्गायां दृष्ट्वाबाणे- श्वरं विभुम् । गङ्गास्नानफलंप्राप्य मोदतेदेववद्दिवि ॥

बाणदण्ड : । पुं॰ वापदण्डे । वे मनि ॥

बाणपुङ्खा । स्त्री॰ शरपुङ्खायाम् ॥

बाणपुरम् । न॰ देवीकोटे । शो णितपुरे ॥ बाणस्यासुरविशेषस्य पुरम् ॥

बाणभट्ट : । पुं॰ ग्रन्थकारविशेषे ॥

बाणयुद्धम् । न॰ बाणासुरेणसहश्री कृष्णस्ययुद्धे ॥ शरैर्युद्धे ॥

बाणलिङ्गम् । न॰ नर्मदानद्युद्भ वशिवलिङ्गे ॥ यथा । नर्मदाजल मध्यस्थं बाणलिङ्गमितिस्मृतम् । बा णलिङ्गं स्वयंभूतंचन्द्रकान्ताद्वयंस्थि तम् ॥ चान्द्रायणशतंकार्यंशम्भोर्नै वेद्यभक्षणात् । ग्राह्याग्राह्यविभा- गोयंबाणलिङ्गेनविद्यते ॥ तदर्पि तं जलंबाणं ग्राह्यं प्रासादसंज्ञया । शिवनाभमयंलिङ्गं सदापूज्यं महर्षिभि : ॥ यतस्सर्वलिङ्गेभ्यस्त- द्धिपूज्यतमंमतम् । चतुरङ्गुल

मुच्छ्रायंरम्यं वेदिकयायुतम् ॥ उत्तमं लिङ्गमाख्यातं पञ्चसूत्रसुसाधितम् । तदर्धंमध्यमं प्रोक्तं तदर्धमवरंस्मृतम् ॥ तस्मान्न्यूनं पूजनीयं नकदापिनतत्फलम् ॥ रुद्राच शिवलिङ्गस्य स्थूलस्थूलं प्रशस्यते । शास्त्रामीनामंदस्वसूक्ष्मसूक्ष्मोविशिष्यते ॥

बाणवार : । पुं॰ भटादेर्दोलाकृतिसन्नाहे । वारवाणे । चोलके ॥

बाणवारक : । पुं॰ कञ्चुके । बाणस्य वारकः ॥

बाणसुता । स्त्री॰ ऊषायाम् ॥ बाणस्यसुता ॥

बाणाह्वा । पुं॰ विष्णौ ॥

बाणा । स्त्री॰ बाणमूले । पुं॰ स्त्री॰ नीलझिण्टायाम् ॥ बण्यते । बणशब्दे । कर्मणिघञ् ॥

बाणाह्व : । पुं॰ मुञ्जे ॥ बाणतुल्याख्यास्य ॥

बाणाश्रय : । पुं॰ धनुषि ॥

बाणासनम् । न॰ धनुषि ॥

बाणि : । स्त्री॰ वस्त्रादेर्वयनक्रियायाम् । व्यूतौ ॥ वयने ॥ वायदण्डे अम्बुदे ॥ मूल्ये ॥ सरस्वत्याम् ॥ बाणनम् । बण॰ । चुरादि : । अचइ : ॥

बाणिनी । स्त्री॰ नर्तक्याम् ॥ मत्तायांनार्याम् ॥ विदग्धवनितायाम् ॥ अवश्यंवणति । वण॰ । आवश्यके णिन्यादित्वाद्वाणिनि : ॥ अष्टिसंज्ञकछन्द : १६ प्रभेदे ॥ नजभजरैर्यदाभवतिवाणिनीगयुक्तै : ॥ यथा । स्फुरतुममाननेऽनुवाणिनीतिरम्यं तवचरणप्रसादपरिपाकत : कवित्वम् । भवजलराशिपारकरणक्षमंमुकुन्दं सततमहंस्तवै : स्वरचितैस्तवानिनित्यम् ॥

बाणी । स्त्री॰ सरस्वत्याम् । भारत्याम् ॥ वायक्रियायाम् । व्यूतौ ॥ वचने ॥ वण्यते । वण॰ । सर्वधातुभ्यइन्निति॰ इन् । कृदिकारादक्तिनइतिङीष् ॥

बात : । पुं॰ पवने । श्वसने । वायौ ॥ निमित्तभेदेनास्यगुणायथा । व्यजनस्यानिलस्तृष्णास्वेदमूर्च्छाश्रमापह : ॥ तालवृन्तभवोवातस्त्रिदोषशमनोमत : ॥ वंशव्यजनज: सोष्णोरक्तपित्तप्रकोपन : । चामरोत्थसमभूतौमायूरोवेत्रजस्तथा ॥ एतेदोषजितावाता: स्निग्धाहृद्यास्तुपूजिता : ॥ वाति । वागतिगन्धनयो : । हसिमृग्रिण्वाऽमिदमिलूपूधूर्विभ्यस्तन्निति तन् ॥ स्वातिनक्षत्रे ॥ रोगविशेषे ॥ हेमन्तवर्षाशिशिरेषुवायो : प्रकोपोभवति । यत : । मार्गेपौषेतथामाघे आषाढे श्रावणेपिच । भाद्रेमासेपिचक्रि

स्माद्वर्तितोराजाप्रकीर्त्तितइति ।
वातक: । पुं० शीतले । अपराजिआयाम् । शणपर्ण्याम् । वातंकरोति । डुकृञ्० । अन्येभ्योपीतिड: ॥
वातकर्म्म । न० मरुत्क्रियायाम् । पर्द्दने ॥
वातकी । त्रि० वातरोगयुक्ते । वातरोगिणि ॥ वातोऽतिशयितोऽस्य । वातातीसाराभ्यांकुक्चेतीनि: ॥
वातकुम्भ: । पुं० गजकुम्भाधोभागे ॥
वातकेतु: । पुं० पांशौ । धूलौ ॥
वातकेलि: । पुं० कलालापे । षड्गरीधि ॥ षिड्गदन्तक्षते ॥
वातखुडा । स्त्री० वात्यायाम् ॥ पिच्छिलस्फोटे ॥ वामायाम् ॥ वातशोणिते ॥
वातगुल्म: । पुं० वातूले ववण्डर० बवूला० इतिभाषाप्रसिद्धे ॥
वातघ्नम् । न० तैले ॥ त्रि० वातनाशकर्त्तरि ॥ वातंहन्ति । हन० अमनुष्यकर्त्तृकेचेतिटक् ॥
वातघ्नी । स्त्री० अश्वगन्धायाम् ॥ शालपर्ण्याम् ॥ शिम्ब्डीक्षुपे ॥
वातचक्रम् । न० आषाढ्यांवायुविचारे ॥ तच्चोक्तंवाराह्यांभट्टोत्पलेन । यथा । आषाढपौर्णमास्यान्तुयदोशानेनिलोभवेत् । अस्तंगच्छतितोक्ष्णांशौसस्यसम्पत्तिरुत्तमा ॥ पूर्वसमुद्रवीचिशिखरप्रस्फालनाघूर्णितश्चन्द्रार्कांशुसटाकलापकलितोवायुर्यदाकाशत: । नैकान्तस्थितनीलमेघपटलाशारदसंवर्द्धितावासन्तोत्कटसस्यमण्डिततलासर्वामहीशोभते ॥ यदाग्नेयोवायुर्दहतिगगनेखण्डिततनु: प्रवत्यस्मिन्योगेभगवतिपतङ्गे प्रवसति । तदानित्योद्दीप्ताज्वलनशिखरालिङ्गिततलास्तगोचाषोच्छ्वासैर्वमतिवसुधाभस्मनिकरम् ॥ तालीपत्रलतावितानतरुभि: शाखामृगान्नर्त्तयन्योगेस्मिन्प्रवतिध्वनि: सुपरुषोवायुर्यदादक्षिण: । तद्योगसमुत्थितस्तुगजवत्तालाङ्कुशैर्घट्टिता: कीनाशाइवमन्दवारिकणिकामुञ्चन्तिमेघास्तदा ॥ सूक्ष्मैलालवलीलवङ्गनिचयान्व्याघूर्णयन्सागरेभानोरस्तमयेप्रवत्यविरतोवायुर्यदानैर्ऋत: । क्षुत्तृट्क्षामृतमानुषास्थिशकलप्रस्तारभारच्छदामत्ताप्रेतवधूरिवाशचपलाभूमिस्तदालक्ष्यते ॥ (*) यदारेणूत्पातै: प्रविचलसटाटोपचपल: प्रवात: पश्चात्चेद्दिनकरकरापातसमये । तदासक्षोपेताप्रवरनिकरावद्धसमराचितिः स्थानस्थानेष्वविरतवसामांसरुधिरा ॥ आषाढीपर्वकालेयदिकिरणपतेरस्तकालोपपत्तौ वायव्योत्थवेग:

पवनघनवपु : पन्नगार्धानुकारी । आनीवाकारिधाराप्रमुदितमुदितां मुत्तमण्डूककण्ठांसघोद्दासं कचि पुंसुखबहुलतया भाग्यसेनामिवोर्वीम् ॥ मेरुग्रस्तमरीचिमण्डलतस्तीमाग्रसानैरवो वात्यामोदिकदम्बगन्धसुरभिर्वायुर्यदाचोत्तर : । विद्युद्भाभिसमस्तकान्तिकलनाभास्तदातोयदा उन्मत्ताइवष्टचण्डकिरणागांपूरयन्त्यम्बुभि : ॥ इतिवातचक्रनामाध्याय : । १७ ॥ तृप्तायामाषाढ्यांकृष्णाचतुर्थ्यामजैकपादर्च्चे । यदिवर्षतिपर्जन्य : प्रावृट्शस्तानचेन्नतत : ॥

वातचटक : । पुं॰ वार्त्तिकेखगे । बटेर॰ इ॰ भा॰ ॥

वाततूलम् । न॰ मरुद्भुजे । वृद्धसूत्रे । आकाशे॰ उड्डीयमानसूत्रे । ग्रीष्महासे ॥

वातधुडा । स्त्री॰ वातखुडायें ॥

वातध्वज : । पुं॰ मेघे ॥

वातपित्तजशूलम् । न॰ शूलरोगविशेषे ॥ तस्यौषधं यथा । मातुलुङ्गस्यनिर्यासं गुडाढ्येनसमन्वितम् । वातपित्तजशूलानिहन्तिवैपानयोगत : ॥

वातपुत्र : । पुं॰ महाधूर्त्ते ॥ भीमसेने ॥ हनूमति ॥

वातपोत : । ) पुं॰ पलाशे ॥
वातपोतक : । )

वातपोथ : । पुं॰ पलाशे । किंशुके । पर्णे । कीसू॰ इ॰ भा॰ प्र॰ वृक्षे ॥ वातंपोथयति । पुथहिंसायाम् । कर्मण्यण् ॥

वातप्रमी । पुं॰ स्त्री॰ वातमृगे । वातादहरिणे । नि : शृङ्गमृगाकृतौ ॥ वातंप्रमिमीते॰ वाताभिमुखधावनात् । माङ्माने । वातप्रमीलुगादिसूत्रेणमाङईप्रत्यय : कित् । स्त्रीत्वंतुदिकारादितिवाङीषित्येके । अन्येतुकारग्रहणस्यतपरार्थत्वाद्दीर्घान्तान्ङीष्नेत्याहु : नहिकारग्रहणे केवलग्रहणमितिमुनित्रयेणपरिभाषितम् । अतएव॰ वातप्रमीश्रीलक्ष्मीतिपद्येङान्ता : सुसाधवइतिरचित : ॥ अश्वे ॥ नकुले ॥

वातफुल्लान्त्रम् । न॰ पुपफुसे

वातमज : । पुं॰ वातप्रमी । वाताटहरिणे ॥ वातमजति । अजगतिक्षेपणयो : । यातशुनीतिलमर्द्दे व्वजधेटतुदजहातिभ्यउपसङ्ख्यानमितिखश् । अरुर्द्विषदितिमुम् ॥

वातमजा । स्त्री॰ वातमृग्याम् ॥

वातमण्डली । स्त्री॰ वायुसंहतौ । वात्यायाम् ॥

वातमृग : । पुं॰ वातमर्जे । वातप्रमी ॥ वातहुष॰ वातस्यवामृग : ॥

वातरक्तम् । न॰ रोगविशेषे ॥

वातरक्तघ्न: । पुं॰ कुक्कुरे । ग्रन्थिपर्णे ॥

वातरक्तारि : । पुं॰ पित्तघ्नाम् । गुडूच्याम् ॥

वातरङ्ग : । पुं॰ अश्वत्थे ॥

वातरथ : । पुं॰ मेघे ॥ वातोरथोस्य ॥ गन्धे ॥

वातरशन: । त्रि॰ दिग्वाससि । दिगम्बरे ॥

वातरायण : । पुं॰ उन्मत्ते ॥ निष्प्रयोजनपुरुषे ॥ काण्डे । सायके । करपत्रे । क्रकचे ॥ कूटे ॥ शरसङ्क्रमे ॥ परसङ्क्रमे॰ इ॰ मेदिनी ॥ सरलद्रुमे ॥

वातरूष : । पुं॰ वातूले ॥ शक्रकार्मुके ॥ उत्कटे । इ॰ मेदिनी ॥ उत्कोचे । इ॰ हेमचन्द्र: ॥

वातरोग : पुं॰ वायुव्याधौ । चलातङ्के । अनिलामये ॥

वातरोगी । त्रि॰ वातरोगयुक्ते । वातकिनि ॥ वातरोगोस्यास्ति । इनृद्दोपतापेत्तीनि : ॥

वातर्षि: । पुं॰ काष्ठलोष्टाभयनिमित्तपात्रे । काष्ठलोष्ठाम् ॥

वातल : । पुं॰ चणके ॥ त्रि॰ वायुकारके ॥ वातंलाति । ला॰ । क : ॥

वातलमण्डली । स्त्री॰ वात्यायाम् ॥

वातवैरी । पुं॰ वाताङ्के [illegible] त्रि॰ वातवैरे ॥ वातस्यवैरी ॥

वातव्याधि: । पुं॰ वातरोगे ॥ [illegible] श्लिष्मि । उत्तवे ॥

वातशीर्षम् । न॰ वस्तौ ॥

वातशोणितम् । न॰ वातरक्तरोगे ॥

वातष्ठीला । स्त्री॰ वातव्याधिविशेषे ॥ यथा । नाभेरधस्तात्सञ्जात : सञ्चारीयदिवाचल : । अष्ठीलावद्घनोग्रन्थिरूर्ध्वमायतमुन्नत: । वातष्ठीलांविजानीयाद्वहिर्मार्गनिरोधिनीम् ॥

वातसह : । त्रि॰ अत्यन्तवायुयुक्ते । वातूले ॥

वातसारथि : । पुं॰ अग्नौ ॥

वातस्कन्ध : । पुं॰ आकाशस्यभागविशेषे ॥

वातहा । त्रि॰ वातघ्ने । वायुनाशकौषधौ ॥

वातहुडा । स्त्री॰ वातयुक्तार्ये ॥

वातह्व : । पुं॰ वायुग्रस्ताङ्गे । वातह्व : पारदारिक : ॥

वाताट: । पुं॰ सूर्यघोटके । वातमृगे ॥

वाताण्ड : । पुं॰ मुष्करोगविशेषे ॥ तल्लक्षणं यथा । प्रपश्चौदूषयेद्वायु : शुक्रमाणायस्यसंवृत: । तस्यमुष्काश्चलत्येवोरोगोवाताण्डसंज्ञक : ॥

वातात्मज : । पुं॰ हनुमति ॥

वाताद : । पुं० वदामपादपे । नेत्रो पमफले ॥ वातादउष्णः सुस्निग्धो वातघ्नः शुक्रकृद्गुरुः । वातादम ज्जामधुरोवृष्यः पित्तानिलापहः॥ स्निग्धोष्णः कफकृन्नेष्टोरक्तपित्त विकारिणाम् । वातमत्ति । अद० । कर्मण्यण् ॥

वाताध्वा । पुं० वातायने ॥

वातापि : । पुं० इल्वलभ्रातर्यसुरवि शेषे । वातमाप्नोति । आप्नृ० । फ लेग्रहिरात्मम्भरिश्चेतिचकारादिन्॥

वातापिद्विट् । } पुं० अगस्त्यमु
वातापिसूदनः । } नौ ॥
वातापिहा । }

वाताम : पुं० वातादे ॥

वातायन : । पुं० एकशफे । अश्वे । हये ॥ न० गवाक्षे ॥ ईयतेऽनेन । इण० । करणेल्युट् वातस्याय यनम् ॥ त्रि० शीघ्रगे ॥

वातायु : । पुं० मृगे । कुरङ्गे । हरि णे ॥ वातमयते । अय० । बाहुल कादुण् ॥

वातारि : । पुं० रक्तैरण्डे ॥ सयथा । वातारिबीजं प्रस्थञ्चसुपक्वं निस्तु षीकृतम् । क्षीरंद्रोणार्द्धसंयुक्तं भिषक्मन्दाग्निनापचेत् ॥ घृत प्रस्थार्द्धसंयुक्तं खण्डप्रस्थद्वयं क्षिपेत् । त्र्यूषणञ्चचतुर्जातंग्रन्थिकंवह्निचि त्रकम् ॥ कृष्णामिसीशटीबिल्वं दो प्यकौरीनिशायुगम् । अश्वगन्धा बलंपाठाश्वपुषावेरपौष्करम् ॥ श्व दंष्ट्रारग्वधादारुवेल्लजंबालकंवरी । एतानिपिचुमात्राणिचूर्णयित्वावि निःक्षिपेत् ॥ वातव्याधिंसशूलञ्च राजयक्ष्मांतथोदरम् । आनाहंव र्ध्मंगुल्मञ्चआमवातंकटिग्रहम् ॥ ज ङ्घयोश्चतथाहिध्माश्वासकासहृद्राम यान् । अर्दिताक्षेपविश्वाचीगृध्र सीमपतन्त्रकम् ॥ पक्षाघातंपाण्डु वातंभङ्गंदण्डापतानकम् । मन्या स्तम्भंहनुस्तम्भंनाशयेदपिवेगतः इ ति ॥ पुत्रदावल्लतायाम् ॥ यवा न्याम् ॥ शेफालिकायाम् ॥ स्नु ह्याम् ॥ भार्ग्याम् ॥ विडङ्गे ॥ शू रणे ॥ भल्लातके ॥ जतुकायाम् ॥ शतमूल्याम् ॥

वाताली । स्त्री० वातसंहतौ । वा त्यायाम् ॥

वाताश्व : । पुं० कुलीनाश्वे । हयोत्त मे । जात्ये । आजानेये ॥

वातासह : । त्रि० वातूले ॥

वाति : । पुं० अनिले । वायौ ॥ सू र्ये ॥ सोमे ॥ वाति । वागतिगन्ध योः । क्तिच् । वातेर्नित्थ्य तिर्वा ॥

वातिक : । पुं० वायुजव्याधौ ॥ न० वातस्यशमने ॥ वातस्यकोपने ॥ वातपित्तश्लेष्मभ्यः शमनकोपनयोः

रूपसङ्ख्यानमितिठञ् ॥

वार्तिग : । पुं॰ भण्टाक्याम् ॥ त्रि॰ धातुवादिनि ॥

वार्तिगम : । पुं॰ वार्त्ताकौ ॥

वार्तिङ्गण: । पुं॰ वार्त्ताकौ । भण्ट॰ भटा॰ डू॰ च॰ प्र॰ फलशाके ॥

वार्तीयम् । न॰ काञ्जिके ॥

वातुल : । पुं॰ वात्यायाम् ॥ त्रि॰ वायुरोगिणि ॥ वातसुखसेवनयोर दूल : । बाहुलकादुलच् ॥ उ न्मत्ते ॥

वातुलि : । स्त्री॰ तरुतूलिकायाम् । बादुड॰ डू॰ भा॰ ॥

वातूल : । पुं॰ वात्यायाम् ॥ त्रि॰ वा तासहे । मारुतासहे ॥ वातानांस मूह : । वातंनसहतेवा । वातात् समूहेचेत्यूल : । चात्तदसहने ॥ यद्वा । वाता : सन्त्यस्मिन्नृवा । सिध्मादित्वाल्लच् । वातदन्तबलल लाटानामूङ्चेत्यूङ् ॥ उन्मत्ते ॥

वाता । पुं॰ वाते ॥ वाति । वागति गन्धनयो : ॥ तृच् ॥

वातोना । स्त्री॰ गोजिह्वाचुपे ॥ त्रि॰ वायुहीने ॥

वातोर्मी । स्त्री॰ त्रिष्टुप्छन्द : ११ प्रभेदे ॥ तल्लक्षणादियथा । वातो र्मीयंगदितार्भौतगौग : । यथा ॥ ध्यातामूर्त्ति : क्षणमप्यच्युतस्यश्रे णीनाम्नांगदितार्हेलयापि । संसा रेऽस्मिन्दुरितंहन्तिपुंसांवातोर्मी पोतमिवाम्भोधिमध्ये ॥

वात्या । स्त्री॰ वातसमूहे । वातात्या म् ॥ वातानांसमूह : । पाशादिभ्यो य : ॥

वात्सकम् । न॰ वत्सानांवृन्दे । वत्सा नांगणे ॥ वत्सानांसमूह : । गोत्रो क्षोष्ट्रेतिवुञ् ॥

वात्सल्य : । पुं॰ रसविशेषे ॥ न॰ प्रेम्णि ॥ त्रि॰ तद्वति ॥

वात्सल्यता । स्त्री॰ कृपालुत्वे ॥

वात्सीपुत्र : । पुं॰ नापिते ॥

वात्स्य : । पुं॰ मुनिविशेषे ॥ वत्सस्य गोत्रापत्यम् । गर्गादिभ्योयञ् । ब हुत्वे॰ वत्सा : । यञञोश्चेतिलु क् ॥

वात्स्यायन : । पुं॰ शब्दादयोविषया भूयोभूयोभुज्यमानास्तत्त्वमितिकल्प नापरेऋषिविशेषे । मन्दनागे । प क्षिले । स्वामिनि ॥

वाद : । पुं॰ यथार्थबोधेच्छोर्वाक्ये ॥ वरिविहिषिर्हयो: कथायाम् । व्य क्तवाक्ये ॥ भगवद्विभूतिविशेषे ॥ यथोक्तंभगवद्गीतायांवाद : प्रवद तामहमिति । अस्यार्थ : । प्रवद तांवादिनांसम्बन्धिन्योवादजल्पवि तण्डाख्यास्तिस्र : कथा : प्रसिद्धा:॰ तासांमध्येवादोऽहम् । यत्र द्वाभ्यामपिप्रमाणतस्तर्कतश्चस्वपक्ष:

स्थापयति॰ परपक्षञ्छलजातिनिग्रह
स्थानैर्दूषयतिसजल्पोनाम। यत्रत्वे
कः स्वपक्षं स्थापयति॰ अन्यस्तु॰
छलजातिनिग्रहस्थानैस्तत्पक्षं दूष
यति॰ नतुस्वपक्षंस्थापयति॰ सा
वितण्डानामकथातत्रजल्पवितण्डे
विजिगीषमाणयोर्वादिनोः ग्रक्ति
परीक्षामात्रफले॰ वादस्तुवीतराग
योः शिष्याचार्ययोरन्ययोर्वातत्त्व
निरूपणफलः। अतोऽसौश्रेष्ठत्वा
आदिभूतिरित्यर्थः॥ इतिश्रीध
रस्वामिनः॥ अस्यलक्षणंगौतमो
क्तंयथा। प्रमाणतर्कसाधनोपाल
म्भः सिद्धान्ताविरुद्धः॥ १।
४१॥ अत्र॰ वादइतिलक्ष्यमि
दंधः॰ पक्षप्रतिपक्षौविप्रतिपत्ति
कोटी॰ तयोःपरिग्रहस्तत्साधनो
देश्यकोक्तिप्रत्युक्तिरूपवचनसन्दर्भः
तावन्मात्रञ्चकथान्तरसाधारणम
तआह॰प्रमाणेत्यादि। प्रमाण
तर्काभ्यांतद्रूपेणज्ञाताभ्यांसाधनो
पालम्भौयत्रसतथा। उभयत्रापि
प्रमाणादिसञ्ज्ञावकोटिद्वयस्यापिसि
द्धिः स्यादतस्तद्रूपेणज्ञाताभ्यामि
ति। ज्ञानमनाहार्यंविवक्षितम्॰
उपालम्भोदूषणम्॰ जल्पादौतुप्र
माणाभासत्वादिनाज्ञाताभ्यामपि
साधनोपालम्भौभवतइतितद्वारणं
तथा॰ इतरथातुतद्धेतोरेवदुष्टत्व

म्॰ इत्यत्रचप्रमाणाभासत्वप्रका
रकज्ञानविषयत्वरणकसाधनोपाल
म्भयोग्यान्यत्वेसतीत्यर्थः। तेन
तादृशजल्पविशेषेनातिव्याप्तिः। तत्र
चनिग्रहस्थानविशेषनियमार्थसिद्धा
न्तेत्यादिविशेषणद्वयम् अन्येतुतदपि
लक्षणघटकमेव॰ तदर्थञ्च॰ तावन्मा
त्रनिग्रहस्थानयोग्यत्वम्॰ तावद
तिरिक्तनिग्रहस्थानोपन्यासायोग्य
त्वंवा॰ निग्रहस्थानंप्रतिज्ञाहान्या
दीनामेकंधृत्वा॰ तदुपन्यासायोग्य
त्वमितिनिष्कर्षः। तेनोक्तजल्प
विशेषवारणमित्याहुः। सिद्धा
न्ताविरुद्धइत्यनेनापसिद्धान्तो
द्भावनम्॰ पञ्चावयवोपपन्नइत्य
नेनन्यूनाधिकोद्भावने। अवयवा॰
भासस्यहेत्वाभासस्यादेश्चोद्भावनम्
॰प्रमाणेत्यनेनचप्रमाणाभासत्वेनहे
त्वाभासानांतर्काभासस्यचोपन्यासो
नियम्यतेतथाचाचहेत्वाभासन्यूनाधि
कापसिद्धान्तरूपनिग्रहस्थानचतुष्ट
योद्भावनमितिवदंति। वस्तुतस्तुवाद
स्यवीतरागकथात्वेन॰तत्त्वनिर्णयस्यो
द्देश्यतयापुरुषदोषस्यानिज्ञातार्थादे
रिवन्यूनाधिकयोरपिनोद्भावनमुचि
तम्। अतएवपञ्चावयवावश्यकत्व
मपिभाष्यकारोनानुमेने। हेत्वाभा
सोद्भावनेनापिचतदेवकथाविच्छे
दोयदिहेत्वन्तरेणापिसाधयितुंनश

वादः

क्यते॰ इतरथातुतद्‌र्ध्वं तोरेवदुष्टत्वम्। इत्यत्र च पत्र चावयवोपपन्नइतिप्रायिकत्वाभिप्रायेणेतितत्त्वम्। वादाधिकारिणस्तुतत्त्वबुभुत्सवः॰ प्रकृतोक्तिकाः॰ अविप्रलम्भकाः॰ यथाकालस्फूर्त्तिकाः॰ अनाक्षेपकाः युक्तिसिद्धप्रत्येतारः। अनुविधेयश्चेयः सभ्यपुरुषवतीजनतासभा अनुविधेयो राजादिः स्थेयान्मध्यः सात्वावादेनावश्यकोवीतरागकथात्वादिति ॥ १ । ४१ ॥ अपिच। वादफलस्यतत्त्वनिर्णयस्यदुर्दुरूढवादिनिराकरणेन॰ संरक्षणार्थं विजगीषुकथेजल्पवितण्डे॰ जयपराजयमात्रपर्य्यन्ते। तदुक्तम्। तत्त्वाध्यवसायसंरक्षणार्थंजल्पवितण्डेबीजप्ररोहसंरक्षणार्थं कण्टकशाखाप्रावरणवदिति ॥ छलजातिनिग्रहस्थानैः परपक्षोदूष्यते॰ इतिजल्पे वितण्डायाञ्चसमानम्। तत्रवितण्डायामेकेनस्वपक्षस्थाप्यतएव॰ अन्येनचसदूष्यतएव। जल्पे तु॰ उभाभ्यामपिस्वपक्षः स्थाप्यते॰ उभाभ्यामपिपरपक्षोदूष्यतइतिविशेषः। तदुक्तम्। यथोक्तोपपन्नश्छलजातिनिग्रह स्थानसाधनोपालम्भोजल्पः ॥ १ । ४२ ॥ सप्रतिपक्षस्थापनाहीनोवितण्डेति। १ ॥ ४३।

यतोवितण्डादृय शरीरत्वाज्जल्पोनामनकाचकथा॰ किन्तुशक्त्यतिशयज्ञानार्थं समयबन्धमात्रेणप्रवर्त्ततइतिखण्डनकाराः॥ तत्त्वाध्यवसायपर्य्यवसायित्वेनतुवादस्यश्रेष्ठत्वमेव ॥ सङ्घातादिवादेषु ॥ तेचोक्तारामणीतीत्सवेयथा। सङ्घातवादोलौकायतिकानांनास्तिकानाम्। अनादौचविकीलोकीनैश्वरादिरपेच्यते। प्रत्यक्षसङ्घातभेदशक्तिभिः सर्वसिद्धितः॥ यथौषधानांसङ्घातेमादोरोगीरसायनम्। तथैवभूतसङ्घाते चैतन्यंकान्यजीवता ॥ १ ॥ यथाचारम्भवादस्तौकिकानांमीमांसकानाञ्च। आत्माकाशाणुसुखतः कारणंपूर्वमिष्यते। कुलालादिवदण्डन्तुघटवज्जन्मनाशभाक् ॥ पृथिव्यम्भोग्निवायूनांकर्मसंयोजिताणवः। द्याणुकादिक्रमेणाण्डमारभन्तइदंमहत् ॥ २ ॥ यथाचपरिणामवादः साङ्ख्यपातञ्जलपाशुपतानाम्। गुणसाम्यंप्रधानं स्याद्गुणाः सत्त्वंरजस्तमः। सुखदुःखमोहरूपं दृश्यतेद्विस्फुटंजगत् ॥ प्रधानंस्यान्महान्सोऽहङ्कारोऽसौषोडशात्मना। जायतेपञ्चतन्मात्राण्यक्षाणिदशापिवत् ॥ तन्मात्राणितुभूतानिजायन्तेतत्रसङ्ख्यया। चतुर्विंशति

रेतानितत्वात्मापञ्चविंशति : ॥ स देवकार्यमुत्पत्ते : पूर्वं कारकरूप कम् । आविर्भावतिरोभावौजन्म नाशावुदीरितौ ॥ ३ ॥ यथाचजी वोत्पत्तिवाद : पाञ्चरात्राणाम् । ब्रह्मणोवासुदेवाख्याज्जीव : सङ्कर्ष णाभिध : । जायतेचमनस्तस्मात्प्र द्युम्नाख्यंतत : पुन : ॥ अहङ्कारोऽ निरुद्धाख्यस्तत्वारोविश्वरूपका: । वासुदेवाराधनाद्यै र्जायतेवस्यमोच्च णम् ॥ ४ ॥ यथाचक्षणिकविज्ञा नातिरिक्तभावाभाववादोबौद्धाना म् । विज्ञानंबुद्धिरितिनार्थान्तर म् । यद्बाह्यंयतत्त्वं तद्धिर्वदव भासते । स्वप्नवज्जागरेसुप्तावभाव: स्फुटएवहि ॥ ५ ॥ यथाचबाह्या स्तित्ववादिबौद्धैकदेशिनाम् । समु दायेऽणुसम्भूतोबाह्योभूम्यापगादि क : । आन्तर : स्कन्धजस्तिस्त्र स्थरूपस्ततोजगत् ॥ क्ष्मम्बुवह्निवा यूनांखरस्निग्धोष्णचञ्चला : । चतु र्धाणव : पञ्चस्कन्धारूपादिभेद त : ॥ रूप : शब्दादयस्तेषांव्यक्ति विज्ञानमुच्यते । वेदनासुखदु : खि त्व : संज्ञाडित्थादिनामयत् ॥ सं स्कारोवासनाचैवमुक्तसङ्घद्वया त्मकम् । जगत्प्रत्यक्षत : सिद्धं किमन्यपरिकल्पनै : ॥ ६ ॥ यथा चसप्तपदार्थवादआर्हतानाम् । जी वाजीवात्मकंविश्वंचेतन : स्वशरी रवत् । परिणामावयववानऽजीव : षड्विध : स्मृत : ॥ भूमीधरादिरे क : स्यात् पञ्चधाचास्रवादिक : । आस्रव : संवरोनिर्जरोबन्धोमोक्ष एवच ॥ इन्द्रियाद्यविवेकादि : के शोल्लुञ्चादिभिस्तप : । अस्मान्यूर्द्ध्व गतिश्चेतिपञ्चानामर्थउच्यते ॥ स्या दस्तीत्यादिनासप्तभङ्गीन्यायेनवा दिन : । सप्तैवक्रमशोऽपास्यस्वमतं साधयेत्सुधी : ॥ सत्वासत्त्वोभयाऽ वाच्यवादिन : स्युश्चतुर्विधा : । द्वि धाऽऽद्यात्रावाच्यतोक्तावादिन : स प्तकीर्त्तिता : ॥ ७ ॥ एतेषांवादा नांप्रमाणानपेक्षत्वात्स्वमात्रमूलत्वा ह्वच्यमाणप्रमाणबाधितत्वाच्चनसाम ञ्जस्यम् । तथाहि । तावत्सङ्घा तवादोनयुक्तिसह : । घटोपलब्धि वत् सङ्घोपलब्धिर्भिद्यतेस्फुटम् । साजीवोममदेहोयमितिभेदानुभूति त : ॥ योगिनश्चाथभूतादेर्देहान्तर गति : स्फुटम् । आत्माभावेकृत ध्वंसोह्यकृताभ्यागमस्तथा ॥ क्षणि कान्नोकार्यजन्मसहकार्यप्रतीक्षि ण : । सहकारिप्रतीक्षायांचक्षणिक त्वं पराहतम् ॥ ईशानुमानन्तुपुष्प दन्त : समर्थयामास । अजस्याभो सोक्ता : किमवयववत्त्वोपिजगताम धिष्ठातारंकिंभवविधिरनादृत्यभ

वति। अनौग्रीवाकुर्यादृश्वनजननी
का: परिकरोयतीमन्दास्त्वांप्रथमरव
रसंशेरतद्रूमे ॥ इति। यतोवाइमा
निभूतानिजायन्ते येनजातानिजीव
न्तियत्प्रयन्त्यभिसंविशन्तितद्ब्रह्म
त्यादिश्रुतयस्तु स्वतन्त्रमेवप्रमाणम्
॥ १ ॥ आरम्भवादोपिनयुक्तिस
हः। यथा। अणुसंयोजकंकर्म्म
निर्निमित्तंयदाभवेत् प्रलयस्तर्हि
नभवेत्सनिमित्तंकथंवद ॥ शरी
राभावतस्तत्रप्रयत्नादेरसम्भवात्।
नित्यत्वादीशयत्नोपिकादाचित्कोऽ
र्हितोनहि ॥ जीवात्मसमवेतत्वाद
दृष्टंनाणुषुक्वचित्। एवमादिवि
चारेणदुष्टाणुपरिकल्पना ॥ कुला
लवत्तटस्थश्चेदीश्वरस्तर्हिमत्सम:
। शरीरोपस्कराकाङ्क्षीविषमोनि
र्घृणस्तथा। ईशेवेद: प्रमाणञ्चेत्त्वा
न्यातर्हितटस्थता। यत: स्फुटं निरा
बाधंमायित्वंतत्रवर्ण्यते ॥ अखण्डस
च्चिदानन्दोजगद्रूपेणभासते। मा
यायांदुर्घटंनास्तिकिञ्चित्तद्रूप
णादिसा ॥ परमाणवादिकल्पना
विरोधिन्य: श्रुतय:। एकोऽहं
बहुस्यांप्रजायेयेति। एतस्मादात्म
नआकाश: सम्भूत: आकाशाद्वा
युर्वायोरग्निरग्नेराप: अद्भ्य: पृ
थिवीति। मायान्तुप्रकृतिंविद्या
न्मायिनन्तुमहेश्वरमिति। इन्द्रो
मायाभि: पुरुरूपईयते। इत्येव
मायावसङ्ख्याताएव। एवंस्मृ
तीतिहासवाक्यान्यपि। २ ॥ परि
णामवादोपिनयुक्तिसह:। यथा।
विचित्रजगतोहेतुर्नप्रधानमचेतन
म्। चेतनोपिहिनिस्सङ्गोनसहाय
त्वमर्हति ॥ गुणकार्यंसुखादीना
मान्तरत्वस्यनिश्चयात्। घटादावन्व
येनास्तिकथमव्यक्तकार्यता ॥ कि
ञ्चापरिणतेतस्मिन्नकार्योत्पत्ति
र्नयुज्यते। परिणामेतन्नाश:
कार्यस्यापिनिराश्रयात् ॥ नचप्र
धानकल्पनायाम्। अजामेकांलो
हितशुक्लकृष्णामित्यादिश्रुति: प्र
माणम्। तस्या: यदग्नेरोहितं
रूपंतेजसस्तद्रूपंयच्छुक्लंतदपांय
त्कृष्णंतदन्नस्येतिच्छान्दोग्योक्तते
जोबन्नात्मकप्रकृतिपरत्वेनमायापर
त्वेनापिसूरिभिर्व्याख्यातत्वात्। ए
वमन्यत्स्वयंसमाधेयम्। ३ ॥ जीवो
त्पत्तिश्चनयुक्तिसहा। यथा। जीवोत्प
त्तिर्नयुक्तेतिजीवस्यानादिताश्रुता।
विनाशेकृतनाश: स्यादकृताभ्या
गमस्तथा ॥ ४ ॥ विज्ञानवादोपि
नयुक्तिसह:। यथा। जागरेबाध्य
तेस्वप्नोजागरोनैवबाध्यते। तयत
द्बाधकाभावाद्बाह्यमस्त्युपलब्धित:
॥ वहिर्वदितितेप्युक्तिर्बाह्यमर्थं
प्रसाधयेत्। एवंनयुज्यतेबुद्धे

र्जगदाकारतात्र ॥ स्थिरचेतन राशिस्यात्स्वयञ्चघ्यविकारत: । स्मृत्यादिव्यवहारस्यलोपश्चतत्र दोषत: ॥ ममतु॰जागरादिभ्रमाधिष्ठानस्याखण्डबोधानन्दरूपब्रह्मण: साक्षात्कारोबाधकोस्ति ॥ ५ ॥ बाह्यास्तित्ववादो ऽपिनयुक्तिसह: । यथा । स्थिरचेतनराशित्वात्स्वयञ्चाचेतनत्वत: । नस्कन्धानामणूनांवासमुदायोऽत्रयुज्यते ॥ ६ ॥ सप्तपदार्थोवादस्तनयुक्तिसह: । यथा । एकस्मिन्सदसत्वादिविरुद्धप्रतिपादनात् । अपन्याय: सप्तभङ्गीनचजीवस्यसांशता ॥ अस्यार्थ: । स्यादस्ति १ । स्यान्नास्ति २ । स्यादस्तिचनास्ति च ३ । स्यादवक्तव्य: ४ । स्यादस्तिचाऽवक्तव्य: ५ । स्यान्नास्तिचावक्तव्य: ६ । स्यादस्तिचनास्तिचावक्तव्यश्चेति ७ । सप्तभङ्गीवाक्यानि । तेषुचस्याच्छब्द: ईषदर्थवाची निपात: । तदयंचपूर्वपक्षश्लोकोक्तानांसद्वाद्यसद्वाद्युभयवाद्यनिर्वचनीयवाद्यसदनिर्वचनीयवादाद्युभयानिर्वचनीयवादिनांमतानि । क्रमेणाभिहितानि । तेचवादिन: समागत्याहन्मंप्रतिकिन्तत्वम्मतेमोक्षोस्तीत्यादिस्वस्वमतंक्रमेणपृच्छन्ति । तदाहन्तान्प्रतिप्रत्ये



कंक्रमेणतान्येववाक्यानीषत्तन्मताभ्युपगमनार्थंकानिपृथक्पृथगेवोत्तरत्वेनब्रूते । तावतासर्ववादिनोनिर्विषण्णा: सन्तोनोत्तरंप्रतिपद्यन्तएवंविधस्तेषांसप्तभङ्गीरूपोयंन्यायोऽपन्याय एव॰ अपकृष्टोन्यायोन्यायाभ्यास एवेत्यर्थ: । कुतइत्यतआह । एकस्मिन्निति । एकस्य जीवपदार्थस्यसद्वादिनंप्रतिसद्रूपत्वम्॰ असद्वादिनंप्रत्यसद्रूपत्वञ्चेत्येवमादिविरुद्धधर्म्मप्रतिपादकत्वात् । नचजीवस्यसावयवत्वंयुज्यते॰ शरीरादिवदनित्यत्वप्रसङ्गात् । तदनित्यत्वेमोक्ष: कस्यपुरुषार्थ: स्यात् । तस्मान्न्यायाभासेनसप्तभङ्ग्याख्यनजीवादिपदार्थानांनसिद्धिरिति ॥ ततश्चपारिशेष्याज्जगतोमायामयत्वसिद्धि: । तदुक्तम् । ततोनिरंशआनन्दे विवर्त्तोजगदिष्यताम् । अवस्थान्तरभानन्तुविवर्त्तोरज्जुसर्पवत् ॥ मायाशक्ति: कल्पिकास्यादिन्द्रजालिकशक्तिवत् । शक्ति: शक्तात्पृथङ्नास्तितद्दृष्टेनचाभिदा ॥ प्रतिबन्धस्यदृष्टत्वाच्छक्त्यभावेतुकस्यस: । शक्ते:कार्यानुमेयाया अनिर्वाच्यत्वमिष्यताम् ॥ इति ॥ वदनम् । वदव्यक्तायाम्वाचि । घञ् ॥

वादक: । त्रि० वाद्यकारे ॥ वक्तरि ॥

वादनम् । न० वाद्ये ॥ शिवागारेभ ल्लकघ्नसूर्यागारेचशङ्खकम् । दु र्गागारेवंशिवाद्यंमधुरींस्तनवादयेत्

वादफलम् । न० तत्त्वनिर्णये ॥

वादरम् । न० कृष्णालाबीजे । कार्पा सिजस्याबीजे ॥ दक्षिणावर्त्तश ङ्खे ॥ वीरे ॥ कार्पासिकायाम् ॥ भारत्याम् ॥ कृमिजे ॥ जले ॥ कार्पासीफले ॥ बदराया विकार: फलम् । अवयवेचेत्यण् । तस्यफ लेलुक् । बदरस्यविकार: । तस्य विकारइत्यण् । त्रि० कार्पासी निर्मितवस्त्रादौ ॥

वादरङ्ग: । पुं० अश्वत्थवृक्षे ॥

वादरा । स्त्री० कार्पास्याम् ॥

वादरायण: । पुं० व्यासदेवे ॥

वादरायणि: । पुं० शुकदेवे ॥ व्यास तनये ॥ वादरायणस्यापत्यम् । अ तइञ् ॥ व्यासदेवे ॥

वादलम् । न० मधुयष्टिकायाम् ॥

वादयाती । पुं० जिनभेदे । आर्हते ॥

वादवित् । त्रि० धातुवादीमन्त्रशद ष्टैत्यादयोवादावस्तुभूतामवन्तीति वादव्ये ॥ अल्पनैवैषां० तान्मादि भावेस्थितैनष्टेचकानकादिस्वभावा सम्भावात् । मन्त्रवादेपि० कालद ष्टोनजीवति । अकालदष्ट: स्वय मेवोत्याश्रतीत्यभ्युपगमात्० व्या मोहमात्रमेव ॥ वादज्ञे ॥

वादान्य: । त्रि० बहुदातरि । बहु प्रदे ॥

वादमम् । न० वादामे । वातादे ॥

वादाल: । पुं० मत्स्यप्रभेदे । सहस्र दंष्ट्रे । बोयालि० इ० गौ० दे० भाषाप्रसिद्धे ॥

वादि: । त्रि० विदुषि ॥ वक्तरि । वा दयति । वद० । वसिवपियजिरा जिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् । सूत्रे वादीतिण्यन्तोनिर्दि ष्ट: । बाहुलकादण्यन्तादपि । त थाचभूवादिसूत्रे० वदन्तीतिवाद योवाचकाइतिन्यासकारादय: ॥

वादित्रम् । न० आतोद्ये । वाद्ये ॥ वाद्यते० ध्वन्यते । वदेर्ण्यन्तात् । भूवदिगृभ्योणित्रन्० इति० णि त्रन् ॥

वादी । त्रि० वक्तरि । वदनशीले ॥ अर्थिनि । विवादकर्त्तरि । पुका ह० वादू० इ० भा० प्र० पूर्व्वप क्षकर्त्तरि । वादोऽस्यास्ति । इनि: ॥

वादिरम् । न० बदरीसदृशस्वल्पफल वृक्षे ॥

वादिराट् । पुं० पूर्वजिने । मञ्जु घोषे ॥

वादिराज: । त्रि० वादिश्रेष्ठे ॥ वा दिनांराजा । टच् ॥ पुं० मञ्जु घोषे ॥

वादित्र : । त्रि० साधुवादिनि ॥

वाद्यम् । न० वादनीये । वादित्रे । आतोद्ये ॥ वाद्यते० ध्वन्यते । वदेर्ण्यं आदचोयत् ॥ तच्चतुर्विधं यथा । ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंश्यादिकन्तु सुषिरं कांस्यतालादिकं घनम् ॥ अथवा द्यानि । तालेनराजतेगीतं तालो वादित्रसम्भव : । गरीयस्तेन वादित्रं तच्चतुर्विधमुच्यते ॥ ततं सुषिरमानद्धं घनमित्थं चतुर्विधम् । ततं तन्त्रीगतं वाद्यं वंशाद्यं सुषिरन्तथा । चर्मावनद्धमानद्धं घनं तालादिकं मतम् ॥ तत्र ततं यथा । अलावनी ब्रह्मवीणा किन्नरी लघुकिन्नरी । विपञ्ची वल्लकी ज्येष्ठा चित्राघोषवती जया ॥ हस्तिकाकुब्जिकाकूर्मी शारङ्गी परिवादिनी । त्रिशवी शतचन्द्री च नकुलौष्ठी च ढंसवी ॥ औडम्बरी पिनाकी च निबन्ध: शुष्कलस्तथा । गदावारणहस्तश्च रुद्रोऽथ शरमण्डल : ॥ कपिलासो मधुस्यन्दी घोणेत्यादि ततं भवेत् ॥ अलावणी यथा । कनिष्ठिका परिध्यर्द्धमध्यच्छिद्रे णसंयुत : । दशयष्टिमितोदण्ड: खादिरो वैणवोऽथवा ॥ अध : करभवानूर्ध्व छवावल्याभिशोभित : । नवाङ्गुलादधश्छिद्रोपरि चन्द्रार्द्धसन्निभाम् ॥ निवेश्य चुम्बिकां भद्रालाबुखण्डं निवेशयेत् । द्वादशाङ्गुलविस्तारं दृढपक्वं मनोहरम् ॥ तुम्बिकाविधमध्येन दण्डच्छिद्रे तु निर्मिताम् । अलाबुमध्यगां डोरीं कृत्वा स्वल्पान्तु काष्ठिकाम् ॥ तथा संवेष्ट्य तन्मध्ये काष्ठिकां भ्रामयेत्तत : । यथा स्यान्निश्चलालाबुर्बन्धश्चकरभोपरि ॥ पञ्चाङ्गुलिषु सन्त्यज्यालाबुं स्वल्पाश्च बन्धयेत् । केशान्तनिर्मितापट्टमयी सूत्रकृताथवा ॥ समा सूक्ष्मा दृढा तन्त्रतत्र देया विचक्षणै : । एतल्लक्षणसंयोग्यान्यालावणी प्रकीर्त्तिता ॥ विन्दुनानसमुपेतं तुम्बं नि: क्षिप्य वक्षसि । मध्यमानामिकाभ्याञ्च वाद्या दक्षिणपाणिना ॥ तारे मद्रे च घोषे च विस्थाने विन्दुरिष्यते । तुम्बीमूलं समुत्पन्नवामाङ्गुष्ठेन धारयेत् ॥ ततस्ताभिस्तु सर्वाभि : स्वरव्यक्तिर्विधीयते । त्रिस्वरो दक्ष : पाणिर्वामस्तत्र चतु : स्वर : ॥ अलावण्यां स्थिता ज्ञेया : सप्तषड्जादय : स्वरा: । रागव्यक्तिर्यथा रागे भवेत् षड्जादिभेदत : ॥ अंशन्यासविभेदाश्च तथा चापि विधीयते । द्वयमलावणी प्रोक्ता मन : श्रवणरञ्जनी ॥ प्रत्यक्षा शारदादेवी वीणारूपेण संस्थिता । द्युस्थलावणी ॥ अन्ये षां लक्षणं विस्तरभयान्नोक्तम् ॥ शुषिरं यथा । वंशीयपारीमधु

रीतिस्तिरीशङ्खकाहला:। तोडही मुरलीबुक्का शृङ्गिका स्वरनाभय:॥ शृङ्गं कापालिकं वंशश्चमं वंशस्तथा पर:। एते शुषिरभेदास्तु कथिता: पूर्वसूरिभि:॥ वर्त्तुल: सरलश्चैकपर्वदोषविवर्ज्जित:। वैणव: खादिरोवापिरक्तचन्दनजोऽथवा॥ श्रीखण्डजोऽथसौवर्णोदन्तिदन्तमयोऽपिवा॥ राजतस्ताम्रजोवापिलौहज: स्फाटिकोऽथवा। कनिष्ठाङ्गुलितुल्येनगर्भरन्ध्रेणशोधित: शिल्पविद्याप्रवीणेनवंश: कार्योमनोहर:॥ वंशेनैवमतोपीतिमतङ्गमुनिनोदितम्। ततोन्येपितदाकारावंशाएवप्रकीर्त्तिता:॥ तत्रस्यान्माशिरोदेशा द्वौ द्वि मितमङ्गुलम्। फूत्काररन्ध्रं कुर्वीतमितमङ्गुलिपर्वया॥ पञ्चाङ्गुलानिसन्त्यज्यतावद्रन्ध्राणिकारयेत्। कुर्यात् तथान्यरन्ध्राणिसप्तसङ्ख्यानिकौशलात्॥ वदरीबीजतुल्यानिसन्त्यज्यार्द्धार्द्धमङ्गुलम्। प्रान्तयोर्वन्धनं कार्यंस्वराद्यैर्नादहेतवे॥ सिक्थकेनकलादेयातेनसुस्वरता भवेत्। पञ्चाङ्गुलोऽयंवंश: स्यादेकैकाङ्गुलिवर्द्धित:॥ षडङ्गुलानिनाम्नास्याद्यावदष्टादशाङ्गुलम्। फूत्कारताररन्ध्रस्ययावदङ्गुलिमन्तरम्॥ तदेवनामवंश



स्यवांशिकै: परिकीर्त्त्यते। एकाङ्गुलोद्वाङ्गुलस्त्र्यङ्गुलश्चतुरङ्गुल:॥ अतितारतरत्वेनवांशिकै: समुपेक्षित:। अयोदशाङ्गुलोवीणापर:। निन्दितोयंशतत्त्वम्नै स्तथासप्तदशाङ्गुल:॥ महानन्दस्तथानन्दोविजयोऽथजयस्तथा। चत्वारउत्तमावंशामतङ्गमुनिसम्मता:॥ दशाङ्गुलोमहानन्दोनन्दएकादशाङ्गुल:। द्वादशाङ्गुलमानस्तुविजय: परिकीर्त्तित:॥ चतुर्दशाङ्गुलमितोजयइत्यभिधीयते। ब्रह्मारुद्रौरविर्विष्णु: क्रमादत्रव्यवस्थिता:॥ नैविडंप्रौढताचापिसुस्वरत्वञ्च शीघ्रता। माधुर्यमितिपञ्चामीफूत्कृतेषु गुणा: स्मृता:॥ शीत्कारबहुल: स्तब्धोविस्वर: स्फुटतोलघु:। अमधुराद्यविज्ञेया: षड्दोषा: फूत्कृतेक्रमात्॥ यथाप्रयोगबाहुल्यमल्पतागीतशादने। एभिर्दोषैर्युतोतोवनिन्दितोवांशिकोमत:॥ स्थानकादिलयाभिज्ञोगमकाढ्या: स्फुटाक्षर:। शीघ्रहस्त: कलाभिज्ञोवांशिकोरक्तउच्यते॥ प्रमुक्तिर्वद्धमुक्तिश्चयुक्तिश्चेत्यङ्गुलेर्गुणा:। मुख्यानत्वंसुस्वरत्वमङ्गुलीसावनक्रिया॥ समस्तगमकज्ञानंरागरागाङ्गवेदिता। क्रियाभाषाविभा

णामुद्यतागीतवादने ॥ स्वस्थाने वादितुः स्थानेनादनिर्माणकौशलं । गातृणांस्थानदातृत्वं तद्दोषाच्छादनं तथा ॥ वांशिकस्यगुणा एतेमयासङ्क्षिप्यदर्शिताः ॥ इति वंशः ॥ ॥ काष्ठलास्त्रीनिषङ्गः । तोडङ्गीमुरलीवुक्काइत्यं तेचस्त्रियांसप्तस्वराणांनाभिरिवस्वरनोभिः स्त्रियांवर्त्तते । इतरेषांविस्तरभया न्नोक्तम् ॥ ॥ आनद्धं यथा । आनद्धेमर्द्दलः श्रेयान् इत्युक्तं भरतादिभिः । अपिच । मुरजपटहढक्काविश्वकौदर्पवाद्यंपणवघनसरूसालावजाल्लविरुल्यः । करठकमठभेरीख्यात्कुडुक्काहुडुक्काभनसमुरलीभल्लीढुक्कलीदौंडिगाना ॥ डमरुटमुकिमड्डुः कुराडलीस्तङ्गनामारणमभिघटवाद्यं दुन्दुभीचरजघ । क्वचिदपिटट्टकौख्यादुर्दुरं चाप्युपाङ्गंप्रकटितमनवद्धंवाद्यमित्यं जगत्याम् ॥ त्रिपुरमथनकर्त्तुस्ताराडवेतत्प्रयाणे ततमुखशुषिरस्थानतुमित्यंघनस्य ॥ ॥ मर्द्दलः खादिरः श्रेष्ठोक्षीनः स्यादन्यदारुजः । रक्तचन्दनजोवाद्योगभीरध्वनिरुचकैः ॥ सार्द्धहस्तप्रमाणस्तुदैर्घ्यमस्यविधीयते । पयोदशाङ्गुलं वाममथवाद्वादशाङ्गुलम् ॥ दक्षिणस्यभवेद्धीनमेकेनार्द्धाङ्गुलेन वा । करणानहवदनेमर्थ्यं चैवपृथुर्भवेत् ॥ षण्मासीयोभवेद्दस्तसत्त्वमंकरणंमतम् । मृत्तिकानिर्मितश्चैवमृदङ्गः परिकीर्त्तितः ॥ पातयेत्खरलिं वाद्यसादनार्थं चमर्द्दले । विभूतिर्गैरिकं भक्तं किन्तु कीनचसंयुतम् ॥ यद्वाचिपीटकं देयं जीवनीसत्त्वमिश्रितम् । सर्वमेकत्रपिष्टं तल्लेपः खरलिरुच्यते ॥ वामार्थेपूरिकांकृत्वालेपंदद्यात्ददक्षिणे ॥ एवं मर्द्दलकः प्रोक्तः सर्ववाद्योत्तमोमतः ॥ अस्यसंयोगमासाद्यसर्ववाद्यंशोभते । एतदङ्गेशेजकाष्ठेदलमर्द्धाङ्गुलंविदुः ॥ तथिधोतैमितिर्द्धयाः पाठवर्णाः मृदङ्गजाः । थोंदं ढंधिकटस्तद्धीताकंदंदंधेगंधिधि ॥ खर्भ्भिंनंगटंदंथाकुटपाटामताथभी । तथिंथोंढंतकधीदों दंदंधिगणांततंतथि ॥ तकतंधंधिदोंताधिपाटखण्डेत्वयंक्रमः ॥ तथाचयतिमानेपाटखराडः । द्रगतथेजांद्रगतथेजांधेधेधिकताधिकाथेजांथेजांतकततधिकाथेतात्द्रगततधिधिधिधिकततताकडनाथेधिकथेजांधेताद्रगततात्द्रततधि । इतियतिमानेपाटखराडः ॥ ॥ यतिरोढाप्यवक्कोदेगजरोरूपकंध्रुवम् । गलपः सारिगेणीचनाद

स्वकथितं तथा ॥ प्रहरणं ब्रह्मनन्दनश्च प्रबन्धाद्वाद्यसम्मताः । यथा । दं थातद्रुत्यं कताल्यांयति ॥ चोढवाद्यं यथा । दांतथोतधिकतधिकदं थादंथाथोधिथोधितत्ततथथिथत्रिदिग्धादिग्धाटट नकिटट नकितदटङ्गतंटंगथवटङ्गथवटङ्गतगिनगितगिनगिदांदांदंदंदींदींदंता तथा । इत्योढवाद्यम् ॥ अवच्छेद्यवाद्यं यथा । दंथात: दंथात: धिक्किधिक्किदिगणं दंथात: । इत्यवच्छेदवाद्यम् ॥ ॥ गजावाद्यं यथा । थोकटे जनेजढें ङं गथोगथोङ्गटेङ्कथोगतखिधिकटे ङ्कनधिधिकटतकथोकतधिकटतकतथोगतद्धीम् । इत्येकताल्यांगजर: ॥ रूपकवाद्यं यथा । तकधिक्तकधिक्कथवितकिथवितक्किधिकदंथात: । इतिरूपकवाद्यम् ॥ ध्रुवकवाद्यं यथा । तक्कतक्कटधिक्कधिक्कट । इतिनिसारतालेध्रुवक: ॥ ॥ गलपोयथा । तधिद्धिभिकतकतधिगलगंथाथादेंतथाढेनञ ॥ इत्येकताल्यांगलप: ॥ ॥ सारिगोणीयथा । थोङ्गटे ञ तक्कधिक्कतकधिक्तकथोइटङ्गनइटङ्गनथोगकथो: । इतिप्रथमखण्ड: ॥ ॥ टे अथो: धिथोइ: टे ञटे ञदक्कतगदक्कधिक्कतदिदक्कटंगदं

गथोगथोक तकतक धिकत धिकत धोटे ञधोटे ञथटे गलखोगगलखो गखोइटगेंटगेंखोइटञ । इत्यस्यक्रन्दनम् । इतिसारिगोणी ॥ ॥ नादोयथा । दांकारचितयंपूर्वं दां धिगिति ततश्चयम् । दांदांधिक चयंयश्चइतिनाद: शचीप्रिय: ॥ इतिनाद: ॥ ॥ द्रुतं मानसमारब्धं शुद्धं कूटविनिर्मितम् । सप्तखण्डमयं वाद्यं कथितं तद्विशेष्यते ॥ द्रुतमानत्वात्प्रतितालेयथा । तत्ततततततक्कितक्किदिदंधिगनथोधिगनथोधिक्कधिक्धिक्कधिक्कधिकनगिनगमिथोथोधिधिधि: दांदांधिक्कथोथोथोइथोञ नजिथोनजिथोथोइथोइडं ढिडं ढिथोइथोइतटितटितट कगींगींधगिधगिततधे ततधेततगिञीं ञीथोगथोगथोंथोगगथोगथोतत्ता ता । इतिसप्तपदान्याहु: कथितं वाद्यपण्डितै: । प्रतितालेनतालेन पादवर्णसमासत: ॥ गन्धर्वपतिनापूर्वं मूर्वं शीलाख्यनर्तने । सुधर्मारश्मनार्यस्वकथितं प्रकटीकृतम् ॥ ॥ प्रहरणं यथा । थोगक्कता तद्धिकाथागकटगगोंदंथोगदिद्धिकधिक्कदिकटे ञ । इत्येकताल्यांप्रहरणम् ॥ ॥ वाद्यं विमुच्यतेयेनक्रन्दनं तन्निगद्यते । यथा ।

तद्द्विधेरादिजटैजतन्न: । इति च्छन्दनम् ॥ ॥ कालासोविवालास घटाकलीचार्द्धटाकली । जोला टाकलिकाचैव गोमुद्रीमुरजस्तथा ॥ अलाबुजवाद्यमन्ये च्चवाद्यम् । मर्द्दलस्येदशाङ्गुलवाममुखोद्वाद शाङ्गुलदचिणमुख: । मुरजस्त्वष्टा दशांगुलवाममुख : सप्तदशांगुलद चिणमुख : । मर्द्दलमुरजयोरयंभे द : ॥ -॥ घनंयथा । अनुरक्तं विर क्तञ्चद्विविधंघनवाद्यकम् । गीता नुगमनुरक्तं विरक्तंतालसंश्रयम् ॥ कर ताल : कांस्यबलोजयघण्टोयशुक्ति का । कम्बिकापटवाद्यञ्चपट्टा तोघर्घरम् ॥ झञ्झातालश्च मञ्जीरकर्त्तर्युड्डुरइत्यपि । द्वादशै तेमुनीन्द्रैणकथिताघनसंज्ञका : ॥ चयोदशाङ्गुलव्यासैाशुद्धकांस्यवि निर्म्मितौ । मध्यमुखौस्तनाकारौत न्मध्येरज्जुगुम्फितौ । पद्मिनीपत्र सदृशौकराभ्यांरज्जुयन्त्रितौ । कर तालाबुभौवाद्यौपाठैर्भ्नटकैरि ति ॥ यद्वाचयोदशयवव्यासंवक्रय वोर्न्मितम् । यवपञ्चकगम्भीरंमध्ये चयवसम्मकम् ॥ विस्तृतंवर्त्तुलंनि म्नंयवचयमितंतत: । पृष्ठतोमध्य देशेचयिवलिंगसमाकृतिम् ॥ च च्यमल्पेष्टोनिर्दिग्धशुद्धकांस्यवि- निर्म्मितम् । संरक्ताङ्गुलिमुक्ति



ग्धमुदीर्घमधुरध्वनिम् ॥ घनानि साविसंरक्तं दृढंशुष्कंमनोहरम् । काश्मीरादिसमुद्भूतंतालमाहुर्मनी षिण : ॥ सुनादंदक्षिणतालंततो हीनञ्चवामकम् । कुर्व्वीततद्द्व यंकार्य्यंतज्ज्ञैन्यङ्गुष्ठयोगत: । वा महस्तस्थतालस्यमध्यमंसन्निनादि- तम् । तिर्य्यग्दक्षिणतालस्यपरि व्यंशेनतालयेत् ॥ तालादौवाद्ये च्चैवम्नुतदीर्घलघुद्रुतै: । इतिक रतालविशेष : । कर्त्तरीघनविशे ष: । उड्डुरश्चघनविशेषोऽढ्‌क्कारिफा लपुंल्लिङ्ग: अन्येषांलचणंविस्तर भयान्नोक्तम् ॥ ॥ रुक्मिण्या : स त्यभामाया : कालिन्दीमित्रविन्द ये : । जाम्बवत्यानाग्निजित्याल क्ष्मणाभद्रयोरपि ॥ कृष्णस्याष्टमहि षीणांपुरोद्वाहमहोत्सवे । ततंशुषिर मानद्धंघनञ्चयुगपज्जना: ॥ अवा द्यन्नसङ्ख्यातमितिपौराणिकी- श्रुति : । ततंवाद्यन्तुदेवानांगन्ध र्व्वाणाञ्चशौषिरम् ॥ आनद्धं राचसानान्तुकिन्नराणांघनंविदु : । निजावतारेगोविन्द : सर्व्वमेवानय त्‌चितौ ॥ यावन्तिवाद्यभांडानि रामरावणयोर्युधि । तावन्त्योनाभ वन्सेना: कुरुपाण्डवसङ्गरे ॥ ॥ किञ्च । निलिम्पहृत्कम्पनतोम रोरणं सुरारेर्म्मथनात्सुरेण । च

भूत्ततादृयैरपिसिंहनादैः साप
अ्वशब्दीतिकाणादवादः ॥ युद्धे
सैन्यानांयोऽस्कारस्य : ससिंहना
दः । ततादिभिरेभिश्चतुर्भिर्वाद्यैे
स्सम्नासिंहनादैश्चपञ्चशब्दीवाद्या
मभूत् । सिंहनादेनसहवाद्यंपञ्च
विधंभवतीत्यर्थः ॥ इतिसङ्गी
तदामोदरः ॥ शिवागारेभाल्लक
अ्वसूर्यागारेचशङ्खकम् । दुर्गा
गारेवंशीवाद्यंमाधुरीञ्चनवाद
येत् ॥ झल्लकंकांस्यनिर्मितकर
तालम् । इतियोगिनीतन्त्रम् ॥
मत्स्यपुराणेपि । गीतवादित्रनि
र्घोषंदेवस्याग्रेचकारयेत् । विरि
ञ्चिसग्टहेढक्कांघण्टांलक्ष्मीगृहेत्यजेत्
॥ घण्टाभवेद्शक्तस्यसर्ववाद्यमयी
यतः ॥
वाद्याभाण्डम् । न० वादनीयपात्रे ॥
वाद्याकरः । त्रि० वादित्रकर्त्तरि ।
वजन्त्रीतिभाषाप्रसिद्धे ॥
वाधनम् । न० बाधायाम् ॥
वाधुक्यम् । न० विवाहे ॥
वाधूः । पुं० वहित्रे ॥
वाध्रीणसः । पुं० खड्गी । गण्डके
॥ वार्ध्रीणसे ॥ पक्षिविशेषे ॥
यथा । रक्तग्रीवोरक्तशिराः श्वेत
पक्षोविहङ्गमः । सवैवाध्रीणसः
प्रोक्तइत्येषानैगमीश्रुतिः ॥
वानम् । न० स्यूतिकर्म्मणि । सीवने
॥ कटे ॥ गतौ । गमने ॥ जलस
मस्रुतवातोर्म्याम् ॥ सुरुङ्गायाम्
॥ सौरभे ॥ गोक्षीरजीतवक्षीरे ॥
वाजिनांगतौ ॥ त्रि० शुष्कफले ॥
शुष्के ॥ वनजे ॥ वनसम्बन्धिनि
॥ वायतिस्म । मैशोषेशोषणे ।
गत्यर्थाकर्मकेतिक्तः । ओदितश्चे
तिनत्वम् ॥ वन्यते । वनुयाचने ।
घञ्वा ॥
वानप्रस्थः । पुं० मधूकवृक्षे । गुड
पुष्पे । किंशुके । पलाशवृक्षे ॥
तृतीयाश्रमे ॥ सचकलौनाध्येयः ॥
वनमिवप्रस्थोवनस्यवाप्रस्थः प्रवे
शः । वनप्रस्थेवनैकदेशेभवः ।
तत्रभवः इत्यण् ॥
वानरः । पुं० मर्कटे । कपौ । प्लव
ङ्गे । शाखामृगे । वन्दर० इ०
भा० ॥ वनेभवम्० फलादि० वा
नम् । अण् । वानंराति । रा० ।
आतोनुपसर्गेकः ॥ यद्वा । वान
म् । वा० । सम्पदादित्वात्क्विप्
। वा० गमनेपि० नृणाति० वाल
कम् नॄनये । पचाद्यच् ॥
वानरप्रियः । पुं० क्षीरिवृक्षे ॥
वानराक्षः । पुं वनच्छागे ॥
वानराघातः । पुं० लोध्रवृक्षे ॥
वानरी । स्त्री० मर्कव्याम् । बांदरी
० इ० भा० ॥ वानरस्यस्त्री । ङीष्
॥ शूकशिम्ब्याम् ॥ वानरीवृषविवि

धचेष्टाहेतुत्वात् ॥

वानरेन्द्रः । पुं॰ सुग्रीवे ॥ वानराणामिन्द्रः ॥

वानलः । पुं॰ वाधवे । कालीवावुइ॰इ॰ भा॰ ॥

वानस्पत्यः । पुं॰ पुष्पजातफलवृक्षे ॥ वानस्पत्यः फलैः पुष्पादित्यमरः ॥ वनस्पतिः । पारस्करादित्वात्सुट् । वनस्पतौभवः । दित्यदित्यादित्यपत्युत्तरपदाण्यः वनस्पतिसमूहे ॥ तस्यसमूहइत्यर्थे॰पूर्वेण॰ण्यः ॥

वाना । स्त्री॰ वर्त्तिकापक्षिणि ॥

वानायुः । पुं॰ हरिणे ॥ वनंवनभुवमयते । अय॰ । वाहुलकादुण् ॥ भारतवर्षस्योत्तरपश्चिमस्थेदेशविशेषे ॥ बहुवचनान्तः ॥

वानायुजः । पुं॰ हयविशेषे ॥ वनायुषुजातः । सप्तम्यांजनेर्डः । सएव । प्रज्ञादाण् ॥

वानीरः । पुं॰ वेतसे । वञ्जुले ॥ वायति । पैओवैशोषणे । क्विप् वाशुष्कमासमन्तान्नीरमस्य ॥

वानीरकः । पुं॰ मुञ्जतृणे ॥

वानीरजम् । न॰ कुष्ठे । कूठइ॰ प्र॰ औषधौ ॥

वानेयम् । न॰ कैवर्त्तीमुस्तके । मोथाख्ये ॥ वनेपानीयेजायते । नद्यादिभ्योढक् ॥

वान्तम् । न॰ उद्गीर्णे ॥ त्रि॰ कृतवमने ॥

वान्तादः । पुं॰ कुक्कुरे ॥ वान्तमत्ति । अण् ॥

वान्ताशी । त्रि॰ उद्गीर्णाशिनि ॥ पुं॰ शुनि ॥

वान्तिः । स्त्री॰ उल्लेखने । वमने ॥

वान्तिकृत् । पुं॰ मदनद्रुमे । मयनफल॰इ॰भा॰प्र॰ ॥ वान्तिंकरोति । डुकृञ्॰ । क्विप् । तुक् ॥

वान्तिदा । स्त्री॰ कटुक्याम् ॥

वान्या । स्त्री॰ वनसमूहे ॥

वापः । पुं॰ क्षेत्रे ॥ उप्यतेऽस्मिन् । डुवप् घञ् ॥ वपने ॥

वापकः । त्रि॰ वपनकारयितरि ॥

वापदण्डः । पुं॰ तन्तुवायदण्डे । वेमनि ॥ वपनम् । डुवप्॰ । घञ् । वापस्यदण्डः ॥

वापिः । स्त्री॰ वापिकायाम् ॥ उप्यतेपद्मादात्राम् । डुवप् बीजसन्ताने । वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्यइञ् ॥ भावे इञ्॰वपादिभ्यइतीञ् वा ।

वापिका । स्त्री॰ वाप्याम् ॥

वापितः । त्रि॰ मुण्डिते ॥ बीजाकृते । उप्तकृष्टे ॥ न॰धान्यविशेषे । वीयाधान॰इ॰भा॰ ॥ वापितंशुक्लद्धान्यंकिञ्चिद्धीनमवापितं ॥

वापी । स्त्री॰ दीर्घिकायावे ॥ वद्धसो

पानकूपे ॥ पाषाणैरिष्टिकाभिर्वा बद्धकूपाह्वस्तरा । ससोपानाभवे द्वापीप्राहुः शास्त्रविशारदाः ॥ प परिमाणेनदीर्घाणद्रशगुणावापीति । यथा । नव्यवर्द्धमानधृतोवशिष्ठः । शतेनधनुर्भिः पुष्करिणी० चि भिः शतैर्दीर्घिका० चतुर्भिर्द्रोणः पञ्चभिस्तडागः द्रोणाद्दशगुणावा वापी। तेनचतुर्विंशत्पञ्चविंशद्ध स्तान्यूनतायांद्वादशशतहस्तान्तरा न्यूनत्वेनदीर्घिका ॥ चतुर्दिक्षुच त्वारिंशद्धस्तान्यूनतायांषोडशश तहस्तान्तरान्यूनत्वेनद्रोणः । चतु र्दिक्षुविंशदधिकशतहस्तान्यून तायाम्षोडशसहस्रहस्तान्तरान्यून त्वेनवापीतिजलाशयोत्सर्गतत्त्वम्॥ येवापीमथवाकूपंदेशेवारिविवर्ज्जि ते । खानयेत्सदिवंयातिविन्दौ विन्दौशतंसमाः ॥ तज्जलगुणा स्तु । वाप्यंगुरुकटुक्षारंपित्तलंकफ वातजित्० इ० । उप्यतेपद्मादिक मस्याम् । डुवप० । वसिवपोत्या दिना० इञ् । ततः कृदिकारा तिपाक्षिकोङीष् ॥ याचायोमा न्तरे ॥ यथा । एकान्तरगतेलग्ना च्छुभेखेटेऽथवाऽशुभे । वापीयो गस्त्वरित्राततिमिरौघदिवाकरः ॥

वापीहः । पुं० चातकखगे ॥

वाप्यम् । न० कुष्ठौषधे । पारिभा व्ये ॥ वाप्यांभवम् । दिगादिभ्यो यत् ॥ वापीजले ॥ वाप्यंवारियदि क्षारंपित्तकृत्कफवातहृत् । तदे वमिष्टंकफकृद्वातपित्तहरंभवेत् । त्रि० वापीभवे ॥

वाभ्रवी । स्त्री० चण्डयाम् । दुर्गाया म् ॥ बभ्रोरपत्यंस्त्री । अण् । ङीप् ॥ बभ्रोर्विष्णोरियंवा ॥

वाम् । अ० युवामित्यर्थे ॥

वामः । पुं० उमानाथे । हरे ॥ कामदेवे । पयोधरे ॥ न० धने ॥ वास्तूके ॥ पुण्यकर्मफले ॥ त्रि० वल्गौ । चारौ । शोभने । अ तिसुन्दरे ॥ प्रतीपे । प्रतिकूले ॥ सव्ये ॥ वमति० वम्यतेवा । टु वमउद्गिरणे । ज्वलितिकसन्तेभ्योणः भावेघञ्वा ॥ यद्वा । वाति । वागतिगन्धनयोः । अर्त्तिस्तुस्रि तिमन् ॥

वामदृक् । स्त्री० वनितायाम् ॥ वामामनोहराहक्दृष्टिर्यस्याः सा॥

वामदेवः । पुं० शिवे ॥ वामयति० दुष्टानांमदमितिवामः । टुवम्० । णिजन्तात्पचाद्यच् । वामश्चासौ देवश्च ॥ लोकविपरीतत्वात्० सुन्दरत्वाद्वावामः । सचासौदेव श्च ॥ ऋषिविशेषे ॥

वामदेव्यम् । न० सामविशेषे ॥ वामदेवेनदृष्टम् । वामदेवात्

डात्डाी ॥
वामन: । पुं॰ अच्युते । हरी । मन्व न्तरेप्यसम्प्राप्तेतथावैवस्वतेद्विज । वामन : कश्यपाद्विष्णुरदित्यांस म्भूबइतिविष्णुपुराणम् । अङ्कोठवृचे । दक्षिणाशास्थ।दिग्गजे॥ मुमुक्षुभि : सम्भजनीये ॥ त्रि॰ अ तिखर्वे । ह्रस्वे । बौना॰इ॰भा प्र॰ ॥ खर्वत्त्वाद्वामन : वामयति- त्याजयतिमदम् । टुवम्॰ । नन्द्या दित्वाल्ल्यु :॥ वामशब्दादस्त्यर्थे पाणिकीनोवा ॥ न॰अयुतंवामना ख्यसंख्युक्तसङ्ख्याविशिष्टेमहा- पुराणविशेषे ॥
वामनतीर्थम् । न॰ तीर्थविशेषे ॥ त त्रकौशिकीदेवीतिष्ठति ॥
वामनी: । पुं॰ अचिस्थेनिरञ्जनेपुरु षे ॥ वामानिपुण्यकर्मफलानि॰पु ण्यानुरूपंप्राणिभ्योनयतिप्रापयती तितथा ॥
वामनी । स्त्री॰ खर्वायांगवि ॥ वमन प्रदौषधिप्रभेदे ॥
वामनेत्रम् । न॰ सव्येचक्षुषि ॥ नेत्र स्याधः स्फुरणमसकृत्सङ्गरेभङ्गहेतु र्नेत्रोपान्ते हरतिनयनंनेत्रमूलेच- मृत्युः । नेत्रस्योर्द्धंहरतिसकलं मानसंदु : खजातंवामेचैवंफलम विकलंदक्षिणेवैपरीत्यम् ।
वाममार्गः । पुं॰ पुन : पुनर्गम- नागमनवर्ज्जितेविद्याक्ताांमार्गे । देवयानाख्येऽर्चिरादिमार्गे शुक्लक ष्णगतीद्येतेजगत : शाश्वतेमते । एकयायात्यनावृत्तिमन्ययावर्त्तते पुन :॥ दक्षिणादुत्तमंवाममित्यु क्तंकुलार्णवे ॥ अग्नेनयसुपथेति मन्त्रे॰सुपथेतिविशेषणंदक्षिणमा र्गनिवृत्त्यर्थम्॰ निर्विण्णोऽहंदक्षि णेनमार्गेणगतागतलक्षणेन॰अतो याचेत्त्वांपुन : पुनर्गमनागमनव र्ज्जितेनशोभनेनपथानयेत्याचार्य्य भाष्यम् ॥
वामलूर : । पुं॰ नाकौ । वल्मीके । वांबी॰ इ॰ भा॰ प्र॰ ॥ वामैर्वा मबा॰ लूयते । लूञ् छेदने । बा हुलकाद्रक् ॥
वामलोचना । स्त्री॰ उत्कृष्टस्त्रीविशे षे ॥ वाम : कामोलोचनेयस्यालोच ने॰ नेत्रेवा॰ यस्या : यद्वा । वा मेसुन्दरेलोचनेचक्षुषीयस्या : ॥
वामशील : । त्रि॰ वक्रस्वभावे ॥ सु न्दरस्वभावे ॥
वामा । स्त्री॰ नार्याम् । वनिताया म् ॥ वमतिस्नेहम् । टुवम्॰ ज्व लादित्वाण्ण :॥ यद्वा वाम: का मोस्त्यस्या :। अर्शआद्यच् ॥ दुर्गायाम् ॥ बंमंविरुद्धरूपन्तुविप रीतन्तुगीयते । वामेनसुखदादेवी वामातेनमताबुधैः । पक्षिविशेषे ॥

वामाक्षी । स्त्री॰ वामलोचनायाम् ॥ वामेमनोहरेअक्षिणीयस्याः । ष च् । ङीष् ॥

वामाचारः । पुं॰ देवयानमार्गसाधकेदक्षिणाचारादुत्तमेसदागमविहिताचारविशेषे ॥ वामश्चासावाचारश्च॥

वामापीडनः । पुं॰ पीलुवृक्षे ॥

वामिका । स्त्री॰ चण्डिकायाम् ॥

वामी । पुं॰ वामाचारयुक्ते ॥ वामः सव्यः सुन्दरोवादक्षिणादुत्कृष्टत्वा दाचारः॰ सोऽस्यास्ति । अतइनि ठनावितीनिः । नतवदक्षिणाया न्तिनाविद्वांसस्तपस्विनः । तत्र ह्मलोके ॥

वामिलः । त्रि॰ दाम्भिके । वामे ॥

वामी । स्त्री॰ शृगाल्याम् ॥ वडवायाम् ॥ रासभ्याम् ॥ करभ्याम् वामयति । टुवम्॰स्वार्थण्यन्तः । मितांह्रस्वइत्यत्रवेत्यनुवृत्तेर्न ह्रस्वः ॥ यद्वा । वंवरुणममति । अमगत्यादौ । कर्मण्यण् । घञ्वा । गौरादिः ॥

वामोरूः । स्त्री॰ नारीविशेषे ॥ वामौसुन्दरौऊरूयस्याः । संहितशफलक्षणवामादेश्चेत्यूङ् ॥

वायकः । पुं॰ गणे । समूहे ॥ तन्तुवायविशेषे ॥

वायदण्डः । पुं॰ वेमनि । वापदण्डे ॥ वयनम् । वेञ्तन्तुसन्ताने । भावेघञ् । आतोयुक् । वायस्यदण्डः ॥

वायनम् । न॰ व्रतोपायने । प्रहेणके । वायना॰ इ॰ भा॰ प्र॰ पूपादिद्रव्ये ॥

वायवी । स्त्री॰ वायुकोणे ॥

वायव्यम् । न॰ वायुदेवताकहविषि ॥ वायुदेवताकेऽस्त्रविशेषे ॥ वायुर्देवतास्य । वायृतुपित्रुषसोयत् । गुणावादेशौ । त्रि॰ वायुसम्बन्धिदिगादौ ॥ न॰ षट्शतश्लोकाधिकचतुर्विंशतिसहस्रश्लोकात्मकेमहापुराणविशेषे ॥ वायव्यं षट्शतानिचचतुर्विंशतिसङ्ख्या तइतिदेवीभागवतोक्तेः ॥

वायसः । पुं॰ अगुरुवृक्षे ॥ श्रीवासे ॥ ध्वाङ्क्षे । काके ॥ वयते । वयगतौ । वयस्तेत्यसच् । णित् ॥ वायससमूहे ॥ तस्यसमूहइत्यण् ॥

वायसविरुतम् । न॰ शकुनविशेषे ॥

वायसादनी । स्त्री॰ तेजोवत्याम् ॥ महाज्योतिष्मत्याम् ॥ काकतुण्डाम् ॥

वायसारातिः । पुं॰ पेचके ॥ वायसस्यकाकस्यआरातिः ॥

वायसाह्वा । स्त्री॰ काकनामनि ॥ काकमाच्यां ॥

वायसी । स्त्री॰ काकोदुम्बरिकाया

म् ॥ काकमाच्याम् । महाज्योतिष्मत्याम् ॥ काकनामनि ॥ काकतुण्डाम् ॥ वायसानामियम् । तस्येदमित्यण् । ङीप् ॥ काक्याम् ॥

वायसेक्षु: । पुं० काशे । इक्षुगन्धायाम् ॥

वायसोलिका । स्त्री० काकोल्याम् ॥

वायसोली । स्त्री० काकोल्याम् ॥ वायसान्कोलयति । कोलडिउत्क्षेपे । अन्येभ्योपीतिड: । शकन्ध्वादि: ॥

वायु: । पुं० श्वसने । स्पर्शने । मातरिश्वनि । शब्दतन्मात्रसहितात् स्पर्शतन्मात्रादुत्पन्ने शब्दस्पर्शगुणे सर्वदाचलनस्वभावे रूपरहितस्पर्शवति मारुते ॥ शरीरान्तर्वायुभेदेन वायुर्दशविधोयथा । प्राण: ॥ १ ॥ तस्यकर्म बहिर्गमनम् । अपान: ॥ २ ॥ तस्यकर्माधोगमनम् । व्यान: ॥ ३ ॥ तस्यकर्म कुञ्चनप्रसारणादि । समान: ॥ ४ ॥ तस्यकर्माऽशितपीतादीनांसमं नयनम् । उदान: ॥ ५ ॥ तस्यकर्म० ऊर्ध्वनयनम् । उद्गारेनाग ॥ ६ ॥ आख्यात: कूर्म ॥ ७ ॥ उन्मीलनेस्मृत: । कृकर: ॥ ८ ॥ क्षुत्करोज्ञेयो देवदत्तो ॥ ९ ॥ विजृम्भणे ॥ नजहातिमृतञ्चापिसर्वव्यापीधनञ्जय: ॥ १० ॥ अन्यदप्युक्तं यथा । द्वितीयं मारुतोभूतं त्वगध्यात्मञ्चविश्रुता । स्प्रष्टव्यमधिभूतञ्चविद्युत्तत्राधिदैवतम् ॥ अस्यगुणायथा । स्पर्शस्त्वगिन्द्रियञ्चापिलघुतास्पन्दनं तनो: । चेष्टासर्वशरीरस्थवायोरेतेगुणाम ता: ॥ अपिच । वायोरनियमस्य शीतादस्थानं स्वतन्त्रता । बलं शैघ्र्यञ्चमोक्षञ्चकर्म चेष्टात्मताभव: ॥ इ० म० भा० मोक्षधर्म: । अस्यार्थ: । अनियमस्पर्श: अनुष्णाशीतस्पर्श: ॥ १ ॥ वादस्थानम्० श्रोगिन्द्रियगोलकानि ॥ २ ॥ स्वतन्त्रता० गमनादौ ॥ ३ ॥ बलम् ॥ ४ ॥ शैघ्र्यम् ॥ ५ ॥ मोक्ष: सूत्रादे: ॥ ६ ॥ कर्म० उत्क्षेपणादि ॥ ७ ॥ चेष्टा० श्वासप्रश्वासादि ॥ ७ ॥ आत्मता० प्राणरूपेणचिद्वृधित्वम् ॥ ९ भव: जन्ममरणे ॥ १० ॥ इतित ट्टीका ॥ न्यायमतेऽस्यगुणादिर्यथा । अपाकजानुष्णाशीतस्पर्शस्तु पवनेमत: । तिर्यग्गमनवानेषज्ञेय: स्पर्शादिलिङ्गक: ॥ पूर्ववन्नित्यताद्युक्तं देहव्यापित्वगिन्द्रियम् । प्राणादिस्तुमहावायुपर्यन्तोविषयोमत: ॥ वायुं निरूपयति० अपाकज इति । अनुष्णाशीतस्पर्शस्यपृथिव्यामपिसत्त्वात्० अपाकजइति । अपाकजस्पर्शस्यजलादावपिसत्त्वादुक्तम्० अनुष्णाशीतइति । एतेन

वायोर्विजातीयस्पर्शादिर्गितः । तज्जनकतावच्छेदकं वायुत्वमितिभावः।एषवायुःस्पर्शादिलिङ्गकः।वायुर्हिस्पर्शशब्दधृतिकम्पैरनुमीयते। विजातीयस्पर्शेन॰विलक्षणशब्देन ॰ तृणादीनांधृत्या॰शाखादीनांकम्पनेनच॰वायोरनुमानात् । तथा च वायुर्नप्रत्यक्षः । वायुर्नित्योऽनित्योवा॰परमाणुरूपोनित्यस्तदन्योऽनित्यः समवेतश्च । सोऽपित्रिविधः शरीरेन्द्रियविषयभेदात् । अत्रशरीरमयोनिजं पिशाचादीनाम् । देहव्यापीति । शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक् । तच्च वायवीयम्रूपादिषुमध्ये स्पर्शस्यैव व्यञ्जकत्वात् । अङ्गसंगिसलिलशैत्यव्यञ्जकव्यजनवातवत् । विषयं दर्शयति॰प्राणादिरितियद्यप्येकोवायुस्तथाप्यौपाधिकभेदाच्चतुर्विधः तच्चातुर्विध्यंनागादिना॰ इत्युक्तमाकरे । तथापिसङ्क्षेपात्तच्चतुर्विध्यमुक्तम् ॰ प्राणस्त्वेकएवहृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च॰नानासंज्ञांलभतइत्यर्थः ॥ ॥ सप्तवायवोयथा । भूवायुरावहइहप्रवहस्तद्‌र्ध्वः स्यादुद्वहस्तदनुसंवहसंज्ञितश्च । अन्यस्ततोपिसुवहः परिपूर्वकोऽस्मादबाह्यः परावहइमेपवनाः प्रदिष्टाइतिशिरोमणिः ॥ प्रावाहीनिवहश्चैवउद्वहः संवहस्तथा । विवहः प्रवहश्चैवपरिवहस्तथैव च ॥ अन्तरीक्षे चवायोर्वै तेपृथङ्मार्गविचारिणः । महेन्द्रप्रविभक्ताङ्गामरुतः सप्तकीर्त्तिताः ॥ ॥ वायोः सप्तस्कन्धायथा । वायुस्कन्धाः सप्ततेषामेकैकं सप्तसप्तभिः । आमेयादिवावहादिरुपर्युपरिसंस्थिताः ॥ आवहप्रवहानुवहउद्वहइ॰पाठान्तरम् संवहविवहपरावहान्वपरिवहेति पाठान्तरम् वर्त्मेतिभेदात्सप्तवायोः स्कन्धाः ॥ तथाचपुराणम् । आवाहः प्रवहश्चैवतथान्वोवहः परः । संवहोविवहश्चैवतदूर्द्ध्वंस्यात्परावहः ॥ तथापरिवहश्चोर्ध्वं वायोर्वै सप्तनेमयइति ॥ तेषांस्थानानियथा । मध्ये भूमेघयोर्वायुरावहः प्रवहस्ततः । मेघभास्करयोः सूर्यशशिनोरुद्वहस्ततः ॥ चन्द्रनक्षत्रगणयोः संवहोविवहस्ततः । नक्षत्रग्रहमध्यस्थोग्रहसप्तर्षिमध्यगः ॥ परावहः परिवहः सप्तर्षिध्रुवमध्यगः ॥ इत्येवं वायवः सप्त वहन्तिभुवनत्रयमिति ॥ वाति । वा॰ । कृवापाजीत्युण् । आतोयुगितियुक् ॥ वायुरायुर्बलं वायुर्वायुर्धाता शरीरिणाम् । वायुर्विश्वमिदं सर्वं प्रभुर्वायुः प्रकीर्त्तितः ॥ वाह्यम

मण्डलचक्रेषु यथा राजा प्रशस्यते ।
तथा शरीरमध्येपि वायुरेक: परोविभु: ॥ वायो: पत्नी स्वस्तिदेवी ॥

वायुकेतु: । पुं॰ खितिकर्णे । धूलौ ॥

वायुगण्ड: । पुं॰ अजीर्णे ॥

वायुगुल्म: । ) पुं॰ आवर्त्ते । अम्भसां
वायुगुल्मक: ) भ्रमे ॥

वायुग्रस्त: । त्रि॰ विचिप्तचित्ते ॥

वायुदारु: । पुं॰ व्योमधूमे । मेघे ॥

वायुपुत्र: । पुं॰ भीमसेने ॥ हनूमति ॥

वायुफलम् । न॰ शक्रकार्मुके ॥ जलदोपले ॥

वायुभक्ष्य: । पुं॰ सर्पे ॥ त्रि॰ वातभक्षके ॥

वायुवर्त्म । न॰ ख । नभसि ॥ वायोर्वर्त्म ॥

वायुवाह: । पुं॰ धूमे ॥

वायुवाहन: । पुं॰ विष्णौ ॥ वहत: सप्त॰ आवहादीन् वाहयतीति शब्दकल्पद्रु: ॥

वायुवाहिनी । स्त्री॰ वायुसञ्चारिण्यां शिरायाम् ॥

वायुष: । पुं॰ मत्स्यविशेषे । कालवायुषपीना॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ । वायुषोष्ण हर्षोष्णोमधुरो धातुवर्द्धन: ॥

वायुसख: । पुं॰ पावके । वह्नौ ॥ वायो: सखा । राजाह: सखिभ्यष्टच् ॥

वायुसखा । पुं॰ अनले ॥ अग्नौ ॥ वायु: सखास्येतितथा । टजभावादनङ्सावित्यनङ् ॥

वाय्वास्पदम् । न॰ आकाशे ॥

वा: । न॰ जले ॥ वारयति । वृञो ययन्तात्क्विप् ॥

वार: । पुं॰ सूर्यादिवासरे ॥ यथा । रवि: सोमोमङ्गलश्चबुधोजीव: सित: शनि: । एतेषांनामतोवाराविख्याता: सर्वकर्मसु ॥ सितेन्दुबुधजीवानांवारा: सर्वत्रशोभना: भानुभूसुतमन्दानांशुभकर्मसुकेष्वपि ॥ द्वारे ॥ हरे ॥ कुब्जवृक्षे ॥ निवहे । वृन्दे ॥ अवसरे ॥ क्षणे ॥ वारयति॰ व्रियतेवा । वृञ्॰ । पचाद्यच् । घञ्वा । यद्वा । वार्यते॰ आच्छाद्यतेऽनेन । वृञश्छ्रादे: पुं॰ सौतिघ: ॥ स्यन्दने ॥ न॰ मदिरापात्रे ॥

वारक: । पुं॰ अश्वगतौ ॥ अश्वविशेषे ॥ न॰ कष्टस्थाने ॥ ह्रीवेरे ॥ त्रि॰ कार्य्यनिषेधके ॥ वारयति वृञ्॰ । ण्वुल् ॥

वारकी । पुं॰ शत्रौ । निषेधके ॥ पर्णाशे ॥ जीवे ॥ पर्णाजीविनि पयोधौ ॥ इ॰ मेदिनिकर: ॥

वारकीर: । पुं॰ श्याले ॥ द्वारयाष्टि

षि ॥ वाडवे ॥ यूकायाम् ॥ वेधि
वेधिन्याम् ॥ जलौकायाम् ॥ नी
राजितहये ॥
वारङ्ग : । पुं० पक्षिणि ॥
वारङ्ग : । पुं० खड्गादिमुष्टौ ॥ वा
रयति० व्रियतेवा । वृञ्० । खड़
ञोर्वृद्धिश्च त्वङ्गच् ॥
वारटम् । न० चेत्रे ॥ चेत्रसमूहे ॥
वारटा । स्त्री० हंस्याम् ॥
वारण : । पुं० मतङ्गजे । गजे ॥
वारणवारे ॥ न० प्रतिषेधे । प्रवृ
त्तिविघाते ॥ नदेवगुरुविप्राणांदी
यमानन्तुवारयेत् । नचात्मानंप्रशं
सेद्वापरनिन्दाञ्चवर्ज्जयेत् ॥ वार
यतिशत्रुबलम् । वृञ्वारणे ।
ल्यु : ॥
वारणवल्लभा । स्त्री० कदल्याम् ॥
वारणबुसा । स्त्री० कदल्याम् । र
म्भायाम् ॥ बुस्यते । बुसउत्सर्गे ।
इगुपधज्ञाप्रीकिर : क : । वारणा
नांबुसा ॥
वारणसी । स्त्री० वाराणस्याम् । का
श्याम् ॥ वरश्चतदनश्च० वरान :
श्रेष्ठोदकम् । तस्यअदूरेभवा । अ
दूरभवश्चेत्यण् । वृद्धि : । ङीप्
। पृषोदरादि : ॥
वारप्रवृत्ति : । स्त्री० रेखादेशस्थलोका
नांसूर्यावलोकनसमये ॥ रेखाभूमौ
हिवारप्रवृत्तिर्भवति । रेखाभूमि

स्थ० लङ्का सुमेरुपर्वतयोर्मध्यसूत्रग
तोदेश : । यथा । यल्लङ्कोज्जयनीपु
रोपरिकुरुक्षेत्रादिदेशान्स्पृशन्
सूत्रंमेरुगतंबुधैर्निगदितासामध्य
रेखाभुव : । आदौप्रागुदयोऽपरत्रवि
षयेपश्चाद्धिरेखोदयात्स्यात्त
स्मात्क्रियतेतदन्तरभुवंखेटेष्वृणं
स्वंफलम् ॥ इतिसिद्धान्तशिरोमणि :
॥ अपिच । रेखोक्तासूर्यसिद्धा
न्ते यथा । रेखामधिकृत्य । राक्ष
सालयदेवौकःशैलयोर्मध्यसूत्रगा :
। रोहितकमवन्तीचतथासन्निहितं
सर : ॥ अस्यार्थ : । लङ्कासुमेरुप
र्वतयोर्मध्यसूत्रगादेशारेखासंज्ञि
ता : । तान्देशानाह । रोहितक
देशोऽवन्तीदेश : सन्निहितंसर : कु
रुक्षेत्रमित्यर्थ : । रेखाया : पूर्व
देशे० परदेशेच० यथासङ्ख्यंसूर्यो
दयकालात्परकालम्० पूर्वकाल
ञ्च०वारप्रवृत्ति : स्यादित्यर्थ : । ए
तेनैतदुक्तंभवति० रेखासंज्ञकदेशस्थ
लोकायदासूर्यंपश्यन्ति० तदैवसर्व
देशेवारप्रवृत्तिरित्यर्थ : । तत्र० रे
खापूर्वस्था : सन्निहितत्वादादौ
सूर्यंपश्यन्ति० तदनन्तरंरेखास्था :
। अतोरेखापूर्वे० सूर्योदयात्परं
वार : । तथारेखास्थै : सूर्येदृष्टेस
ति । पश्चात्रेखापरस्था : पश्यन्ति
अतोरेखापरदेशेसूर्योदयात्पूर्ववार

कृत्यर्थः । तत्तत्कालपरिमाणमाह । रेखातोयावन्तिदेशान्तरयोजनानि॰ तत्परिमिताभिर्विघटीभिः पलैः पादहीनाभिः चतुर्थभागहीनाभिर्वारप्रवृत्तिः स्यादित्यर्थः । देशान्तरसाधनप्रकारस्तु सूर्यसिद्धान्ते॰ उक्तः ॥ रामदैवज्ञोप्याह । पादोनरेखापरपूर्वयोजनैः पलैर्युतोनास्तिथयोदिनार्द्धतः । जनाधिकास्तद्विवरोद्भवैः पलैरूनं तथाधोदिनपप्रवेशनमिति ॥

वारमुख्या । स्त्री॰ जनैः सत्कृतायां वेश्यायाम् ॥ वारे॰ वेश्यावृन्दे मुख्या ॥

वारम्वारम् । अ॰ पौनःपुन्ये ॥

वारम्वारेण । अ॰ शश्वदर्थे ॥

वारयिता । पुं॰ भर्त्तरि ॥ त्रि॰ निषेधके ॥

वाररुचः । पुं॰ वररुचिनाकृतेग्रन्थे॥ कृतेग्रन्थइत्यण् ॥

वारला । स्त्री॰ गन्धोल्याम् । वरटायाम् ॥ हंसकान्तायाम् ॥

वारलीकः । पुं॰ बल्वजायाम् । वावुट॰ ब॰ भा॰ ॥

वारवधूः । स्त्री॰ वेश्यायाम् ॥ वारस्य॰ समूहस्यवधूः साधारणत्वात् ॥

वारवन्तीयम् । न॰ सामविशेषे ॥ वारवन्तशब्दोऽस्मिन्नस्ति । मतौच्छः सूक्तसाम्नोरितिच्छः ॥

वारवाणः । पुं॰ न॰ लोहचर्मणि । कवचे । कञ्चुके । चोलकाकृतिसन्नाहे ॥ वाणं वारयति॰ वृणोतिवा । वृञ॰ ण्यन्तोवा । कर्मण्यण् । राजदन्तादित्वात्परनिपातः ॥ वारमाच्छादकं बाणमस्यवा । पूर्वपदादितिणत्वम् ॥

वारयाणिः । पुं॰ वंशीवादके ॥ उत्तमगायके ॥ धर्माध्यक्षे ॥ संवत्सरे ॥

वारवाणिः । ) स्त्री॰ वेश्यायाम् ।<br>वारवाणी । ) शूलायाम् । भर्म्मरायाम् ॥

वारविलासिनी । स्त्री॰ वेश्यायाम् ॥ वारे॰ जनसमूहे॰ विलासिनी॰ विलसनशीला ॥

वारवेला । स्त्री॰ यामार्द्धविशेषे ॥ यथा । चतुः सप्तद्विपञ्चाष्टत्रिषट् सूर्यादिवारतः । यामार्द्धं वारवेला स्यान्नशुभाशुभकर्मसु ॥ अपिच । कृतमुनियमशरमङ्गलरामर्त्तुभास्करादियामार्द्धे । प्रभवतिच्छिवारवेलानशुभाशुभकार्यकरणाय ॥ इति ॥

वारसिद्धा । स्त्री॰ वासरविशेषेनन्दादितिथौ ॥ यथा । वारेनन्दापूर्वदेवाचितान्तर्भे द्राविद्याऽऽरेजया॰ सैनिरिक्ता । पूर्णागीर्वाणेशवन्द्ये

ऽखिलेपुकर्म्मस्वे वन्दोषवच्चस्तिसि द्धा ॥ भौमादिवारेएताएवनेष्टा यथा। सर्वारम्भे भूमिदायादभान्वो र्नन्दा॰गुर्विन्दुष्वभद्राजयार्च्चे । रिक्ताधिष्णे॰ हेलिसूनौष्विपूर्णा॰ स्ते यायास्यागारदा॰कालविद्भिः ॥

वारसुन्दरी । स्त्री॰ वेश्यायाम् । म ञ्जिकायाम् ॥ वारःजनतायाः सुन्दरी॰स्त्रीसामान्यत्वात् ॥

वारस्त्री । स्त्री॰ गणिकायाम् । वेश्या याम् ॥ वारस्यवृन्दस्यस्त्री । साधार णत्वात् ।

वारांनिधिः । पुं॰ अम्बुधौ । समु द्रे ॥

वाराणसी । स्त्री॰ विश्वनाथनगर्याम् । काश्याम् । तपस्थल्याम् । महा श्मसाने ॥ अविमुक्ते । आनन्दका नने ॥ मोक्षंसुदुर्लभंमत्वा॰सं सारञ्चातिभीषणम् । अश्मनाचर णौहत्वा वाराणस्यांवसेन्नरः ॥ वरणायास्तथाचास्यामध्यंवाराणसी पुरी । वाराणस्यांमहादेशाज्ज्ञानं लब्ध्वाविमुच्यते ॥ वरणासीचन द्यौद्वे पुण्येपापहरेउभे । तयोरन्त र्गतायातुसैषावाराणसीस्मृता ॥ विशेषोऽसिशब्दे द्रष्टव्यः ॥ वरजूच तत् अनस्ववरानः श्रे छोटक्रम् । तस्यअदूरेभवा । अदूरभवश्चेत्यण् । आदिवृद्धिः । ङीप् । पूर्वप

दादसंज्ञायामगइतिणत्वम् ॥

वाराणसीक्षेत्रम् । न॰ सिद्धक्षेत्रविशे षे । काश्यां ॥

वाराणसेयः । त्रि॰ वाराणसीभवे ॥ वाराणस्यांजातादिः । नद्यादिभ्यो ढक् ॥

वारासनम् । न॰ जलालये । वाःस दने ॥

वाराहः । पुं॰ महापिण्डीतकवृक्षे ॥ वराहःअर्थं ॥ वगाहएव । अण् ॥ त्रि॰ वराहसम्बन्धिनि ॥ न॰ चतु र्विंशतिसहस्रश्लोकात्मकेमहापुरा णविशेषे ॥ चतुर्विंशतिसाहस्रंवारा हंपरमाद्भुतमितिभागवतोक्तेः ॥

वाराहकर्णी । ) स्त्री॰ अश्वगन्धायाम् ॥<br>वाराहपत्री । )

वाराहाङ्गी । स्त्री॰ दन्तीवृक्षे ॥

वाराही । स्त्री॰ मातृप्रभेदे ॥ योगिनी विशेषे ॥ तीर्थविशेषवराहदेवस्यशक्तौ श्यामापक्षिणि॰विष्वक्सेनप्रियाया म् । घृष्टिभेषजे । गेंठी॰ वृ॰भा॰ । अस्यगुणायथा । वाराहीपित्तला वल्याकटुतिक्तारसायनी । आयुः शुक्राग्निकृन्मेहकफकुष्ठानिलापहा ॥ वाराहीकन्दसंज्ञस्तुपश्चिमेगृष्टि संज्ञकः । वाराहीकन्दएवान्यैश्च र्मकारालुकोमतः ॥ अनूपेसभ वेद्देशेवाराहइवलोमवान् ॥ वराह स्येयम्॰प्रियत्वात् । तस्येदमित्यण् ।

वाराह्या । स्त्री॰ शूकर्याम् ॥ वराह स्यापत्यं स्त्री । यतञ्ञ् । तस्य॰ यञिञोरनार्षयोगुंरूपोत्तमयो: ष्यङ्गोत्रे॰ इतिष्यङादेश: ॥

वारि: । स्त्री॰ वाचि । सरस्वत्याम् । गजबन्धनभूमौ ॥ वन्द्याम् । वारयति॰ वार्यते ऽनयावा । व सिवपियजिराजीतीञ् ॥ न॰ वालके । ह्रीवेरे ॥ अम्बुनि । जले । नीरे । रसोरसेन्द्रियंग्राह्यं स्पर्श इस गुरुतातथा । सर्वद्रवसमूहश्चशुक्ल वारिगुणास्मृता: ॥

वारिकण्टक: । पुं॰ शृङ्गाटके । सिंघाड़ा॰ इ॰ भा॰ ॥

वारिकर्णिका । स्त्री॰ कुम्भिकायाम् । खमूलिकायाम् ॥

वारिकर्पूर: । पुं॰ इल्लिशमत्स्ये ॥

वारिकुब्ज: | वारिकुब्जक: } पुं॰ वारिकण्टके । शृङ्गाटके ॥

वारिक्रिमि: । पुं॰ जलमक्षिकायाम् ॥

वारिचत्वर: पुं॰ कुम्भिकायाम् ॥

वारिचर: । पुं॰ मत्स्ये ॥ यादोमात्रे ॥

वारिचामरम् । न॰ शैवले ॥

वारिज: । पुं॰ शङ्ख ॥ शम्बूके ॥ न॰ पद्मे ॥ द्रोणीलवणे ॥ गौर सुवर्णे । लवङ्गे ॥

वारितस्कर: । पुं॰ सूर्ये ॥ मेघे ॥

वारित्रा । स्त्री॰ छत्रकुत्याम् । रा जानके॰ वारिवस्त्रे॰ चलती तम्बू॰ इ॰ भा॰ यथा । छत्रा छत्रमकुटीकावारीम् छेकव्यं रीति हारावली । छत्रे ॥

वारिद: । पुं॰ जलदे । मेघे । मुस्तके ॥ वारिददाति । डुदाञ्॰ । आतोनुपसर्गेक: ॥ न॰ बालायाम् । ह्रीवेरे ॥

वारिधर: । पुं॰ मेघे ॥

वारिधार: । पुं॰ अद्रिविशेषे ॥

वारिधारा । स्त्री॰ जलधारायाम् ॥

वारिधि: । पुं॰ समुद्रे । अकूपारे । अर्णवे ॥ वारीणिधीयन्तेऽत्र । डुधाञ्॰ । कर्मण्यधिकरणे चेति॰ कि: ॥

वारिनिधि: । पुं॰ वारिधौ ॥

वारिपथिक: । त्रि॰ जलपथेनागते ॥ जलपथगामिनि ॥ वारिपथेनाहृतम्॰ तेनगच्छतिवा॰ । ठक् ॥

वारिपर्णिका । स्त्री॰ वारिपर्ण्याम् ॥

वारिपर्णी । स्त्री॰ कुम्भिकायाम् । खमूल्याम् । वारिपर्णीहिमातिक्तालघ्वीस्वाद्वीसरापटु: । दोषघ्न यकरीरूक्षाशोणितज्वरशोषकृत् ॥ वारीणिपर्णान्यस्या: ॥ पाककर्णे तिङीष् ॥ यद्वा वारिपिपर्त्ति । पृ॰ । धापृवस्यज्यतिभ्योन: । जाते रितिङीष् ॥

वारिपालिका । स्त्री॰ खमूल्याम् ॥

वारिप्रवाह : । पुं० निर्भरे । झरे । उत्सान्निर्गतजलप्रवाहे । वारिणः प्रवाहः ॥
वारिप्रश्नी । स्त्री० कुम्भिकायाम् ॥
वारिबदरम् । न० प्राचीनामलके ॥
वारिभवम् । न० स्रोतोऽञ्जने ॥
वारिमसि : । स्त्री० पाथोदे । मेघे ॥
वारिमुक् । पुं० खतमालि । मेघे ॥
वारिमूली । स्त्री० वारिपर्ण्याम् ॥ वारिणिमूलं यस्याः । पाककर्णेति ङीष् ॥
वारिरथ : पुं० नावि । तरिके ॥
वारिराशि : । पुं० समुद्रे ॥
वारिरुहम् । न० कमले ॥ वारिणि रोहति । रुह० । इगुपधेतिकः ॥
वारिलोमा । पुं० अप्पतौ । वरुणे ॥
वारिवल्लभा । स्त्री० विदार्याम् ॥
वारिवास : । पुं० सुराजीविनि । शौण्डिके ॥
वारिवाह : । पुं० जलदे । मेघे ॥ वारिवहति । वह० । कर्म्मण्यण् ॥ मुस्तायम् ॥
वारिवाहक : । पुं० बलाहके । मेघ ॥ वारिणोवाहकः ॥
वारिवाहन : । पुं० वारिदे ॥
वारिश : पुं० विष्णौ ॥
वारिशिरीषिका । स्त्री० शिरीषिकायाम् ।
वारिसम्भव : । पुं० यावनालशरे ॥

न० उशीरे ॥ लवङ्गे ॥ सौवीराञ्जने ॥
वारी । स्त्री० गजबन्धन्याम् । हस्तिशालायाम् ॥ कलस्याम् ॥ वार्यतेऽनया । वृञ्० । घञन्तः । बसिवपियजिराजीतीञ् । बह्वादित्वान् ङीष्वा ॥
वारीट : । पुं० गजे । हस्तिनि ॥
वारीश : । पुं० समुद्रे ॥
वारु : । पुं० विजयकुञ्जरे ॥
वारुठ : । पुं० अन्तशय्यायाम् ॥
वरुडकि : । पुं० वरुडापत्ये ॥ व्यामवरुडभ्यादिनेञ् । अकङादेशश्च ॥
वारुण : । पुं० भारतवर्षीयोपद्वीपविशेषे ॥ न० उपपुराणविशे ॥ शतभिषर्क्षे ॥ जले ॥ त्रि० वरुणसम्बन्धिनि ॥
वरुणकर्म्म । न० जलाशयखननादौ ॥
वारुणव्रतम् । न० नृपतेर्नियमविशेषे ॥ यथा । वरुणेनयथापाशैर्बद्धएवाभिदृश्यते । तथापापान्निगृह्णीयाद्व्रतमेतद्धिवारुणम् ॥
वारुणि : । पुं० अगस्त्यमुनौ ॥ वसिष्ठे ॥
वारुणी । स्त्री० गण्डदूर्वायाम् ॥ पश्चिमायाम् । प्रतीच्यांदिशि ॥ इन्द्रवारुण्याम् ॥ दूर्वायाम् । शतभिषानक्षत्रे ॥ तिथिविशेषे ॥ यथा । वारुणेनसमायुक्तमधौकृष्णा

चतीदशी । गङ्गायांयदिलभ्येत सू र्य्यग्रहशतै : समा ॥ वरुणं • शतभि षा ॥ इयमेववनिवारयुक्ताचेन्महा वारुणीतिशुभयोगयुताचेन्महाम हावारुणीतिसंज्ञांलभते । यथा । शनिवारसमायुक्तासमहावारुणी- स्मृता । गङ्गायांयदिलभ्येत कोटिसू र्य्यग्रहैः समा ॥ शुभयोगसमायुक्ता शनौशतभिषायदि । महामहेति ख्याताचिकोटिकुलमुद्धरेत् ॥ सुराधिदेवतायाम् । प्रथमाभिमा निन्यांमहत्त्यांदेवतायाम् । अन्ना वारुणीतिस्मुतै : ॥ ६ ॥ अन्नमय्यां सुरायाम् । पैष्याम् ॥ पुनर्नवा- शालिपिष्टैर्विहिताबारुणीस्मृता। संहितैस्तालखर्जूररसैर्यासापिवारु णी ॥ सुरावद्वारुणीलघ्वीपीनसा ध्मानशूलनुत् ॥ वरुणप्रेरितवृ न्दावानस्थकदम्बतरुकोटरनि : सृतायांबलदेवपीतवारुण्याम् ॥ यथा । पराशरउवाच । वनेविचर तस्तस्यसहगोपैर्महात्मन : । मा नुषच्छद्मरूपस्यशेषस्यधरणीभृतः निष्पादितोरुकार्य्यस्यकार्य्येणोर्वी- विचारिण : । उपभोगार्थमत्यर्थंव रुण : प्राहवारुणीम् ॥ अभीष्टा सर्वदायस्यमदिरेत्वंमहौजसः । अ नन्तस्योपभोगायतस्यगच्छमुदेशुभे । इत्युक्तावारुणीतेनसन्निधानमथाक

रोत्वृन्दावनवनोत्पन्नकदम्बतरुको टरे ॥ विचरन्बलदेवोपिमदिराग न्धमुत्तमम् । आघ्रायमदिरातर्षम वापाथपुरातनम् ॥ ततः कदम्बात् सहसामद्यधारांसलाङ्गली । पतन्तीं वीक्ष्यमैत्रेयप्रययौपरमांमुदम् ॥ प पौचगोपगोपीभि : समवेतोमुदा न्वित : । उपगीयमानोलखित गीतवाद्यविशारदै : ॥ इतिविष्णु पुराणे पञ्चमांशे २५ अध्याय: ॥ अ चाराधिकारिण : प्रतिश्रीसदाशि व : । सम्यग्विधिविधानेनसुस माहितचेतसा । पिबन्तिमदिरांम र्त्याअमर्त्याएवतेचितौ ॥ इयञ्च द्वा रुणीदेवीनिपीताविधिवर्ज्जिता । नृ णांविनाशयेत्सर्वंबुद्धिमायुर्यशोध नमितिकुलार्णवसेतु ॥ कुलार्ण वेपिनिसङ्गोनिर्भयोधीरोनिर्लज्जो निष्कृतूहल: । निर्णीतवेदशास्त्रा र्थोवरदावारुणींपिबेदिति ॥ वरुण स्येयम् । तस्येदमित्यण् । ङीप् ॥

वारुणीवल्लभ : । पुं॰ वरुणे ॥ वारु णीवल्लभायस्य स : ।

वारुण्ड: । पुं॰ फणिनांराज्ञि ॥ पुं॰ न॰ सेकपात्रे । नौस्थजलनिस्सा रणभाजने ॥ नेत्रमले ॥ कर्णमले ॥

वारुण्डी । स्त्री॰ द्वारपिण्डाम् ॥

वारुढ : । पुं॰ वस्त्राञ्चले ॥ कपाटे ॥ अग्नौ ॥ पञ्जरे ॥ शम्बले ॥

इतिमेदिनिकर : ।।

वारेन्द्र : । त्रि० वरेन्द्राजाते । अण् ।।

वरेन्द्री । स्त्री० देशविशेषे । राजसा त्री० इतिगौडदेशभाषाप्रसिद्धे ।।

वार्श्मम् । न० वर्मे । वचानांसमूहः । तस्यसमूहइत्यण् ।। त्रि० वचस न्वधिनि ।।

वार्ध्यदुर्गम् । न० वृत्ते : समन्ताद्वृ ष्टितेपुरेपुराद्वहि : सर्वतोयोजनमा त्रंव्याप्यतिष्ठतिमहावृत्तकण्टकिगु- ल्मलताद्याचितेराज्ञोवासस्थाने ।।

वार्ची । स्त्री० स्त्रीविशेषे । इतिमहाभा रतम् ।।

वार्ज्जम् । न० पद्मे ।।

वार्णव : । त्रि० वर्णुदेशजे । कच्छा द्यण् ।।

वार्णिक : । त्रि० लेखके ।।

वार्त्तम् । न० निस्सारे ।। आरो ग्ये । पाटवे । स्वास्थ्ये ।। त्रि० वृ त्तिमति । वृत्तिशालिनि ।। नीरो गे ।। वृत्तिरस्त्यस्य वृत्तेत्तियण् : ।।

वार्त्तक : । पुं० पचिविशेषे । बटे रइ० भा० । वर्त्तके ।। न० वर्त्त कानांगणे ।। वर्त्तकानांसमूह : । तस्यसमूहइत्यण् ।।

वार्त्ता । स्त्री० वर्त्तने ।। वातिङ्गने ।। वार्त्ताकयाम् ।। कृष्यादीवृत्तौ ।। यथा । कृषिर्वणिज्यातद्वत्तृतीयं पशुपालनम् । विद्यादेतामहाभा गवार्त्तांवृत्तित्रयाश्रया ।। चतुर्विधा पितामोक्ताकृष्णेनपितरंप्रति । कृ षिर्वणिज्यागोरचाकुसीदन्तुर्यमुच्य तेइति ।। जनश्रुतौ ।। उदन्ते ।। वृत्तान्ते ।। वृत्तिर्लौकवृत्तम् । तदस्यस्याम् । वृत्तेरितिवार्त्ति कैन० ण : । दुर्गायाम् ।। यथा । पश्वादिपालनाद्बीकृषिकर्मादिका रणात् । वर्त्तनाद्धारणाद्वापिवार्त्ता साएवगीयते ।।

वार्त्ताक : । पुं० वार्त्ताकी ।। वातिङ्ग णे । वनभण्टा० इतिख्याते ।। वा र्त्तामारोग्यमाकयति । अककुटि लायाङ्गतौ । अन्त : कर्मण्यण् । वार्त्तफलमकयस्वा ।। वार्त्तक पचिणि ।।

वार्त्ताकी । स्त्री० हिंगुल्याम् । भ ण्टाकयाम् ।। जातेरितिङीष् । वृह त्याम् ।। वातिङ्गणे । वनभण्टा० इतिभा० ।।

वार्त्ताकु : । स्त्री० हिंगुल्याम् । भ ण्टाक्याम् । वृन्ताके । अस्यागुणा यथा । अग्निप्रदामारुतनाशिनीच शुक्रप्रदाशोणितवर्द्धिनीच । हृद्या लघ्वासारुचिनाशिनीचवार्त्ताकुरे षागुणसम्प्रयुक्ता ।। साबालाकफ वातघ्नीपक्वासक्षारपित्तला । सदा फलात्रिदोषघ्नीरक्तपित्तप्रसादनी ।

अङ्गारपक्वावार्त्ताकु : किञ्चित्पित्त करीमता । कफमेदोऽनिलश्वासरा लघुतरापरा ॥ पुंलिङ्गोपीतिचिका गडशेष : ॥ वर्त्तते । वृतु० । वृतेर्वृ हिश्चेतिकाकु : ॥ बाहुलकाट्टुका रश्चाप्त्वे वार्त्ताकमपि ॥

वार्त्तायन : । पुं० हेरिके । गूढपुरुषे । प्रवृत्तिज्ञे । प्रणिधौ । चरे ॥ इतिहेमचन्द्र : ॥

वार्त्तावह : । पुं० कृषिवाणिज्यादि जीवे । वैवधिके ॥ वार्त्तायाव ह : ॥

वार्त्ताहारी । पुं० चारे । यथार्हव र्णे ॥

वार्त्तिक : । पुं० वर्त्तिके । बटेर० हू० भा० ॥ वार्त्तिकोमधुरोरूष : शीतश्चकफपित्तनुत् ॥ वार्त्ताकी॥ चरे । स्पशे ॥ वैद्ये । न० उक्ताऽ नुक्तदुरुक्तार्थव्यञ्जकसङ्ग्रहे ॥ उक्ता नुक्तदुरुक्तार्थचिन्ताकारितुवार्त्तिक मितिहेमचन्द्र : ॥ वृत्तिमधीते० वेदवा । उक्थादित्त्व ठक् ॥ वृ त्तौसाधुर्वा । कथादिभ्यष्ठक् ॥

वार्त्तिका । स्त्री० वर्त्तिकायाम् । विषाणुलिङ्गाम् । बटेर० हू० भा० ॥ वर्त्तिकेतिहारावली ॥

वार्त्तघ्न : । पुं० पार्थे । अर्जुने ॥ वृ त्रघ्नोऽपत्यम् । अण् ॥ जयन्तचि० वृत्रहसम्बन्धिनि ॥

वार्दल : । पुं० मेलानन्दायाम् ॥ न० दुर्दिने । बादला० हू० भा० ॥ मस्याम् ।

वार्द्धकम् । न० वृद्धसङ्घाते ॥ वृ द्धानांसमूह : । वृद्धाच्चेतिवक्त व्यमितिवुञ् ॥ वृद्धस्यभावकर्म णो : । वृद्धत्वे । यौवनात्पराव स्थायाम् ॥ यथा । तिथिवर्षमत बाल्यंचिंशद्वर्षन्तुयौवनम् । मु ख्यंगौणंद्विधाभिन्नंवार्द्धकन्तुतत : परम् ॥ वृद्धस्यकर्मभावोवा । मनोज्ञादित्त्वाद्वुञ् ॥ वार्द्धकेतप आतिष्ठेदितिशास्त्रोदितंवच : ॥

वार्द्धक्यम् । न० वृद्धत्वे । वार्द्धके ॥ वृद्धसङ्घाते ॥ वार्द्धकमेव । चतु र्वर्णादित्त्वात्० स्वार्थेष्यञ् ॥

वार्द्धि : । पुं० समुद्रे ॥ वारीणिधीय न्तेऽत्र । कर्मण्यधिकरणेचेतिधा ञ : कि : ॥

वार्द्धिभवम् । न० द्रोणीलवणे ॥ *

वार्द्धुषि : । त्रि० वृद्ध्याजीवे ॥ वृद्ध्य र्थंद्रव्यंवृद्धि : तत्प्रयच्छति । प्रयच्छतीतिगर्ह्यं मितिठक् । वृ द्धेर्वृधुषिभाव : ॥ पृषोदरादि त्वात्कलोप : ॥

वार्द्धुषिक : । त्रि० कुसीदिके । वृद्ध्याजीवे । वार्द्धुषौ । बहुरा० हू० भा० ॥ तल्लक्षणंयथा । समर्घंधा न्यमादायमहार्घंय : प्रयच्छति ।

सवे वार्द्धुषिकोनाम हव्यकव्यबहि
ष्कृत : ॥ तत्रवृद्धिग्रहणनियमो
यथा । अशीतिभागं गृह्णीयान्मा
साद्वार्द्धुषिक: शतात् । द्विकं शतं
वागृह्णीयात्सतांधर्ममनुस्मरन् ।
द्विकं शतन्तुगृह्णानोनभवत्यर्थकि
ल्विषीति । शतकार्षापणे ऽशीति
भागं विंशतिपणा : । द्विकं पुराण
द्वयम् । एवं विधं नियममतिक्रम्य
अनापदि• स्वयमन्यद्वाराबास्वाच्छ
न्द्येनयोव्यवहरतितस्यैवप्रायश्चित्त
म् । आपदितुस्वयङ्करणे • नियमा
तिक्रमेचनदोष : । इतिप्रायश्चित्त
विवेक : ॥ वृद्ध्यर्थं द्रव्यं वृद्धि :
। तांप्रयच्छति । प्रयच्छतिगर्ह्यमि
तिठक् । वृद्धेर्वृधुषिभावोवक्त
व्य : ॥

वार्द्धुष्यम् । न० धान्यवर्द्धने ॥

वार्धेयम् । न• द्रोणीलवणे ॥

वार्द्ध्रम् । न० स्त्री• चर्म्मणि ॥ व-
ध्र्यैइदम् । चर्मणोऽञ् त्रि० वध्र
स्यविकारे । तस्यविकारइत्यण् ॥

वार्ध्री । स्त्री० चर्मरज्ज्वाम् । बह्नी•इ•
भा• । वार्ध्रान्•ङीष् ।

वार्ध्रीणस : । पुं• वाध्रीणसे । छाग
विशेषे ॥ यथा । त्रिपिवंस्त्विन्द्रिय
क्षीणं श्वेतं वृद्धमजापतिम् । वा
र्ध्रीणसमितिप्राहुर्याज्ञिका: पितृक
र्मणीतिनिगमे । एकचरे । गण्ड

के । गैंडा•इ•भा० ॥ पक्षिविशे
षे । यथा । नीलग्रीवोरक्तशीर्ष :
कृष्णपाद : सितच्छद : । वार्ध्रीण
स : स्यात्पक्षीशोममविष्णोरतिप्रि
य : ॥ रोहितश्चतुमत्स्यस्यमांसैर्वा
र्ध्रीणसस्यच । तृप्तिमाप्नोतिवर्षाणां
शतानिन्त्रीणिमत्प्रिया ॥ महिषा
णाञ्चखड्गानांरुधिरे : शतवार्षि
कीम् । तृप्तिमाप्नोतिपरमांशार्दूल
रुधिरैस्तथा ॥ इतिकालिकापुरा
णे ६६ ऽध्याय : । वार्ध्रीवनासि
काऽस्य । अञ्नासिकायाइत्यच्•
नसादेशश्च । पूर्वपदादितिणत्वम् ।

वार्भट : । पुं० नक्रे । कुम्भीरे । वा
रिजले•भट : ॥

वार्म्मणम् । न• वर्मसमूहे ॥ वर्मणां
समूह : । भिक्षादिभ्योण् ॥

वार्म्मिणम् । न• वर्मिणांसमूहे ॥

वार्म्मुक् । पुं० अम्भोदे । मेघे ॥
वा : मुञ्चति । मुच्लृ• । क्विप् ॥

वार्य्य : । पुं• ऋत्विजि ॥ व्रियते ।
वृङ्सम्भक्तौ । यत् । क्यप्तु•व
हुअएव । —*— ॥

वार्य्य : । त्रि• वरणीये । वारिसम्ब
न्धिनि ॥

वार्य्युद्भवम् । न• पद्मे । त्रि•जलजे ।

वाराशि : । पुं• समुद्रे । इतिपुरा
णम् ॥

वाव्वट : । पुं• वहित्रे ॥

वार्व्वणा । स्त्री० वर्वणायां ॥
वार्षकम् । न० सुश्रुतकृतपृथिवीद्रभागान्तर्गतभागविशेषे ॥
वार्षगण्य : । पुं० पतञ्जलौ ॥ वृषगणस्यगोत्रापत्यम् । गर्गादिस्वाद्यञ् ॥
वार्षभानवी । स्त्री० वृषभानुकन्यायाम् । श्रीराधायाम् ॥ यथापरात्पर : कृष्णस्तथेयं वार्षभानवीति पद्मपुराणम् ॥
वार्षलम् । न० वृषलकर्मणि ॥ यथा । नकथञ्चनकुर्वीतब्राह्मण : कर्मवार्षलम् । वृषल : कर्मचब्राह्मपतनीयेच्छितेतयो : ॥
वार्षिकम् । न० त्रायमाणायाम् । वलभद्रिकायाम् ॥ वृष्टिजले ॥ यथा । वार्षिकंतद्दृष्टंभूमिष्ठमहितंजलम् । चिरावमुषितंतत्तु प्रसन्नममृतोपमम् ॥ त्रि०वर्षाभवे ॥ वर्षासुभवम् । जातम्०साधु वा । वर्षाभ्यष्ठक् । ठञेक : ॥ वर्षभवे । वात्सरिके । वर्षासम्बन्धिनि ॥ यथा । वार्षिकांश्चतुरोमासादुर्गमा : पथिसर्वदा । तस्मादेकत्रविबुधै : स्थातव्यमितिनिश्चय : । अष्टौमासांस्तुप्रवसेत्सदाकार्यवशाद्विज : । वर्षाकालेनगन्तव्यंप्रवासेसुखमिच्छतेतिभागवते नारद : ॥
वार्षिकी । स्त्री० त्रायमाणायादमोषधौ ॥ वेलड़० प्र० पुष्पविशेषे ॥ यथा । श्रीपट्टोषटपदानन्दावार्षिकोमन्नतन्मनेतिभावप्रकाश: । वार्षिकीशीतलालघ्वीतिक्तादोषत्रयापहा । कर्णाक्षिमुखरोगघ्नी०तत्तैलं तद्गुणंस्मृतम् ॥ इतिच ॥ वर्षकर्त्तव्यपूजादौ ॥ वर्षासुभवा । ठक् । ङीप् । कालाट्ठञ्वा ॥
वार्षिला । स्त्री० करकायाम् ॥
वार्ष्णेय : । त्रि० वृष्णिवंशोद्भवे ॥
वार्हतम् । न० वृहतीफले ॥ वृहत्या: फलम् । प्लक्षादिभ्योण् विधानसामर्थ्यात्तस्यफलेनलुक् ॥
वार्हद्रथ : । वार्हद्रथि: । पुं० न.पि ॥ वृहद्रथस्यापत्यम् । अण् इञ्वा ॥
वार्हस्पत्य : । पुं० नास्तिके ॥ यथा । स्याद्वादवाद्यार्हत :स्या० च्छून्यवादीतुसौगत: । नैयायिकस्त्वक्षपादो० योग: साङ्ख्यस्तुकापिल: वैशेषिक : स्यादौलूक्यो० वार्हस्पत्यस्तुनास्तिक : । चार्वाकोलौकायतिकश्चैतेषडपितार्किका : ॥ मैत्रेये । कस्याश्चिद्दिशायांमेत्रेयोवृहस्पते : शिष्य : ॥ न० नीतिशास्त्रे ॥ वृहस्पतिदेवताके त्रि० वृहस्पतिसम्बन्धिनि ॥ वृहस्पतिर्देवताऽस्य० वृहस्पतेरिदंवा । दित्य

दिष्यादिष्वपद्युत्तरपदाण्य : ॥

वालक : । पुं० न० पारिहार्ये ॥ त्रि० अङ्गुरीयके । बालकोऽस्त्रीपारिहार्ये० मिषुस्यादङ्गुरीयके । इ०मेदिनि : ॥ बालके ॥

वालव : । पुं० द्वितीयकरणे ॥ तत्र जातस्य फलंयथा । कार्यंस्वकर्तास्वजनस्यभर्तासेनाप्रणेताकुलशीलयुक्त : । उदारबुद्धिर्बलवान्मनुष्यश्चेद्वालवाख्ये जननंहियस्य ॥

वाल्कन् । न० चौमादिवस्त्रे ॥ त्रि० वल्काभवे ॥ बल्कस्यवल्कलस्य० विकार : । तस्यविकारइत्यण् ॥

वाल्कलम् । त्रि० वल्कलनिर्मिते ॥ वल्कलस्येदम् । अण् ।

वाल्कली । स्त्री० मदिरायाम् ॥

वाल्मिकि : ।
वाल्मीक : । पुं० } कविश्रेष्ठे ॥
वाल्मीकि : ।

प्राचेतसेभृगुवंशीयमुनिविशेषे ॥

वाव । अ० अवधारणार्थे ॥ प्रसिद्धौ ॥

वावदूक : । त्रि० वाचोयुक्तिपटौ । वाग्मिनि । वक्तरि ॥ कुर्वादिषु वावदूकशब्दपाठसामर्थ्याद्वदेरूक : ॥ यद्वा । पुन : पुनरतिशयेनवावदति० इति० वदेर्यङन्तात्० उलूकादयश्चेत्यूक : ॥

वावय : । पुं० तुलसीविशेषे । वाबुइ० इ० भा० ॥ इतिशब्दचन्द्रिका ॥

वावृत : । त्रि० कृतवरणे । वृते । वृतौ । स्वयंवरादिनास्त्रीकृतवरादौ ॥ वावृत्यतेस्म । वावृतुवर्त्तने । क्त : ॥

वाशा । स्त्री० वासके ॥ वाश्यते । वाशृशब्दे । गुरोश्चेत्य: । टाप् ॥

वाशि : । पुं० छेदनसाधने । कुठारप्रभेदे ॥ अग्नौ ॥ वाश्यते । वाशृ० । वसिवपीत्यादिनाइञ् ॥

वाशिका । स्त्री० वासके ॥ वाश्यते । वाशृ० । गुरोश्चहलइत्य : टाप् । क : । यद्वा । उश्यते । वशकान्तौ । संज्ञायामित्यनेन० ण्वुल् ॥

वाशितम् । न० पशुपक्ष्यादिशब्दे ॥ वाशनम् । वाशृ० भावेक्त : ॥

वाशिनायनि : । पुं० वाशिनोपत्ये ॥ उदीचांवृद्धादगोत्रादिति० फिञ् दाण्डिनायनेति० टिलोपाभाव : ॥

वाशिष्ठ : । त्रि० वशिष्ठसम्बन्धिनि ॥

वाशिष्ठी । स्त्री० । गोमत्यांनद्याम् ॥ तीर्थविशेषे ॥ अर्वैवक्तेषिकुल्यातीर्थम् ॥ वशिष्ठसम्बन्धिन्याम् ॥

वाशुर : । पुं० गर्दभे ॥ वाश्यते । वाशृ० । मन्दिवाशिमथिचतिचङ्क्यङ्किभ्यउरच् ॥

वाशुरा । स्त्री० रात्रौ ॥ वाश्यन्तेऽस्याम् । वाशृ० । मन्दिवाशी

ष्युरच्। टाप्॥

वाश्रः। पुं॰ दिवसे॥ शकुनौ॥ रासभे॥ न॰ मन्दिरे॥ चतुष्पथे॥ वाश्यते। वाश्र॰। स्फायितञ्चिव ञ्चीत्यादिना - रक्।।

वाष्पः। पुं॰ न॰ नेत्रजले। भाफइ॰ भा॰ प्र॰॥ ऊष्मणि॥ वायति। ओवै शोषणे॰ वातिवा। वागस्था टी। खष्पशिल्पशष्पवाष्परूपपर्प तल्पाः इतिसाधुः। बाधतेनेत्र मितिवा। बाधतेः पोनिपातना त्॥ लोहे॥ इतिमेदिनीकरः॥

वाष्पकः। पुं॰ मारिषे। यथा। मारिषोवाष्पकोमार्षः श्वेतोरक्तश्चस स्मृतः॥

वाष्पका। स्त्री॰ हिङ्गुपत्र्याम्॥

वाष्पायमाणः। त्रि॰ वाष्पमुद्वमति॥

वाष्पिका। स्त्री॰ हिङ्गुपत्र्याम्। कार व्याम्॥ वाष्पमिव इवेप्रतिकृता विति कन्॥

वाष्पी। स्त्री॰ वाष्पिकायाम्॥

वाष्पीका। स्त्री॰ त्वक्पत्र्याम्। वाष्पि कायाम्। रांधुनी॰ इ॰ गौ॰ दे॰ भा॰ प्र॰॥ वाष्पमिव। कन्। टाप्। पृषोदरादिः॥

वासः। पुं॰ वेश्मनि॥ अवस्थाने॥ वासके॥ वसन्त्यत्र। वसनिवासे। हलश्चेतिघञ्॥ लघ्वादिविक ले॰। ९॰॥

वासकोषः। पुं॰ वस्त्रपेटके॥

वासकः। पुं॰ वैद्यमातरि। वृषे। अटरूषे। सिंहास्ये। बांसा॰ वासु टी॰ इ॰ भा॰ प्र॰ ख्याते॥ अस्य गुणायथा। वासकोवातकृत्स्वर्यः कफपित्तास्रनाशनः। तिक्तस्तुवर कोहृद्योलघुः शीतस्तृड्वर्तिहृत्॥ श्वासकासज्वरच्छर्दिमेहकुष्ठक्षया पहः॥ नानाङ्गविशेषे॥ त्रि॰ गन्ध कृति॥ वासयति। ण्वुल॥ यद्वा। वस्ते॰ आच्छादयति। वसआ च्छादने। ण्वुल्॥

वासकर्णी। स्त्री॰ यज्ञशालाया म्॥

वासकसज्जा। स्त्री॰ स्त्रीयादिनायिका भेदे॥ अद्यमेप्रियवासरः॰ इत्य निश्चित्य॰या॰ सुरतसामग्रींसज्जी करोतिसा॰ वासकसज्जा। वास कोवासरः॥

वासका। स्त्री॰ वासकवृक्षे॥

वासगृहम्। न॰ गर्भागारे। गृहमध्य भागे॥ शयनगृहे॥ स्थितिगेहे॥ वासार्थं॰ वासस्य वागृहम्॥

वासतेयी। स्त्री॰ रात्रौ॥ वसनम्॰ वसतिः वसतौसाधुः। पथ्यति थिवसतिस्वपतेर्ढञ्॥

वासनम्। न॰ धूपने॥ वारिधान्या म्॥ वस्त्रे॥ निक्षेपाधारे॥ वासि॥ ज्ञाने॥ त्रि॰ वसनेनक्रीते॥

शतमानविंशतिकसहस्रशसमादया् ॥

वासना । स्त्री० प्रत्याशायाम् ॥ ज्ञाने ॥ देहात्मबुद्धिजन्यमिथ्यासंस्कारे ॥ दुर्गायाम् ॥ यथा । वसस्यद्दृष्टा सर्वेषुभूतेष्वन्तर्हितायच । धातुर्वसनिवासितोवासनातेनसास्मृतेति ॥ स्मृतिहेतौ । संस्कारे । भावनायाम् ॥ धर्माधर्मरूपेजीवगतसंस्कारविशेषे ॥ वासनाद्विविधा । मलिना० शुद्धाच । शुद्धा० दैवीसम्पत् ० शास्त्र संस्कारप्राबल्यात्तत्त्वज्ञानसाधनत्त्वेनैकरूपैव । मलिनातु० त्रिविधा । लोकवासना० शास्त्रवासना० देहवासनाचेति । सर्वेजनायथा ननिन्दन्ति० तथैवाचरिष्यामीति०अशक्यार्थाभिनिवेशो लोकवासना । तस्याश्चकोलोकमाराधयितुमसमर्थइतिन्यायेन०सम्पादयितुमशक्यत्वात् ० पुरुषार्थानुपयोगित्वाच्चमलिनत्वम् । शास्त्रवासनातु०त्रिविधा । पाठव्यसनम् ० बहुशास्त्रव्यसनम् ० अनुष्ठानव्यसनञ्चेति । क्रमेण० भरद्वाजस्य० दुर्वाससो० निदाघस्यचप्रसिद्धा । मलिनत्वमस्याः : क्लेशावहत्वात् ० पुरुषार्थानुपयोगित्वात् ० दर्पहेतुत्वात् ० जन्महेतुत्वाच्च । देहवासनापित्रिधा । आत्मत्वभ्रान्तिः ० गुणाधानभ्रान्तिः ० दोषापनयनभ्रान्तिश्चेति । तत्रात्मत्वभ्रान्तिर्विरोचनादिषुप्रसिद्धा० सोर्वलौकिकी । गुणाधानंद्विविधम्० लौकिकं० शास्त्रीयञ्च । समीचीनशब्दादिविषयसम्पादनम् लौकिकम् ० गङ्गास्नानशालग्रामतीर्थादिसम्पादनं शास्त्रीयम् । दोषापनयनमपिद्विविधम् ० लौकिकं ० शास्त्रीयञ्च । चिकित्सकोक्तैरौषधैर्व्याध्याद्यपनयनंलौकिकं ० स्नानाचमनादिभिरशौचाद्यपनयनंवैदिकम् । एतस्याश्चसर्वप्रकारायामलिनत्वम् ० अप्रामाणिकत्त्वात्० अशक्यत्त्वात् ० पुरुषार्थानुपयोगित्वात्० पुनर्जन्महेतुत्त्वाच्चशास्त्रप्रसिद्धम् । तदेतल्लोकशास्त्रदेहवासनात्रयमविवेकिनामुपादेयत्त्वेनप्रतिभासमानमपि ० विविदिषोर्वेदनोत्पत्तिविरोधित्वात्० विदुषोज्ञाननिष्ठाविरोधित्वाच्च० विवेकिभिर्हेयम् । तदेवंबाह्यविषयवासना० त्रिविधानिरूपिता । अभ्यन्तरवासनातु०कामक्रोधदम्भदर्पाद्यासुरसम्पद्रूपासर्वानर्थमूलंमानसीवासनेत्युच्यते । तदेवंबाह्याभ्यन्तर वासनाचतुष्टयस्य० शुद्धवासनयाक्षयः सम्पादनीयोविवेकिभिः ॥ अत्रवशिष्ठः

॥ शुभाशुभाभ्यांमार्गाभ्यांवहन्तीवा सनासरित् । पौरुषेणप्रयत्नेनयोज नीयाशुभेपथि ॥ अशुभेषुसमाविष्टं शुभेष्वेवावतारयेत् । स्वमनः पुरु षार्थेनबलेनबलिनांवर ॥ अशुभा च्चालितंयातिशुभंतस्मादपीतरत् । जन्तोश्चित्तन्तुशिशुवत्तस्मात् तच्चालयेद्बलात् । अपिच । वास नानांपरित्यागेयदियत्नंकरोष्यलम् । ततस्तेशिथिलतांयान्तिसर्वाधिव्या धयः क्षणात् । पौरुषेणप्रयत्नेन बलात्सन्त्यज्यवासनाः । स्थितिं बध्नासिचेत्तर्हिपदमासादयस्यल मिति ॥

वासनाक्षयः । पुं॰ वासनानाशे ॥ यथा । पूर्वापरपरामर्शमन्तरेण॰ सहसोत्पद्यमानस्यक्रोधादिवृत्तिवि शेषस्य॰ हेतुश्चित्तगतः संस्कार विशेषोवासना । पूर्वपूर्वाभ्यासेन॰ चित्तेवास्यमानत्वात् । तस्याः क्षयोनाम॰ विवेकजन्यायांचित्तप्र शमवासनायांदृढायांसत्यपिबाह्ये निमित्ते क्रोधाद्यनुत्पत्तिः । तत्र॰ तत्त्वज्ञानेसति॰मिथ्याभूतेजगति ॰ नरविषाणादाविव॰ धीवृत्त्यनुद यात्॰आत्मनश्चद्रष्टृत्वेन॰ पुनर्वृ त्त्यनुपयोगात्॰ निरिन्धनाग्निवत् मनोनश्यति॰नष्टेचमनसि॰संस्का रोद्बोधकस्यबाह्यस्यनिमित्तस्याऽप्र तिपत्तौ॰ वासनाक्षीयते । एवं क्षीयमाणायांवासनायां॰ हेतुभावे नक्रोधादिवृत्त्यनुदयात् मनोनश्य ति॰नष्टेचमनसि॰शमदमादिसम्प त्त्या॰तत्त्वज्ञानमुदेति॰एवमुत्पन्ने तत्त्वज्ञाने॰रागद्वेषादिरूपावासना क्षीयते॰ क्षीणायाञ्चवासनायांप्रति बन्धाभावात् तत्त्वज्ञानोदय इति परस्परत्वंद्रष्टव्यम् ॥ वासनायाः क्षयः ॥

वासनाक्षयाभ्यासः । पुं॰ वासनाक्ष यस्याभ्यासे । यथा । दृश्यासम्भव बोधेनरागद्वेषादितानवे । रति र्घनोदितायासौवृत्त्यभ्यासः सउ च्यते ॥

वासनात्यागः । पुं॰ पूर्वसंस्कारो पेक्षायाम् ॥ वासनायाः त्या गः ॥

वासनापरित्यागः । पुं॰मनोनिग्रह स्योपायविशेषे ॥ यस्तु॰ विद्यामदा दिदुर्वासनयापीडमानोनसाधून नुवर्त्तितुमुत्सहते॰ तस्यविवेकेन वासनापरित्यागएवोपायः ॥ वास नायाः परित्यागः ॥

वासनिकः । पुं॰ निवासे । मार्गे निवासे ॥

वासन्तः । पुं॰ परपुष्टे । कोकिले । करभे । उष्ट्रे ॥ विटे ॥ मुद्गे ॥ कृष्णमुद्गे ॥ मदनवृक्षे ॥ त्रि॰ अव

ष्ठिते ॥ वसन्तोद्भवे ॥ वसन्ते भव: सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥

वासन्तक :। त्रि॰ वसन्तसम्बन्धिनि ॥

वासन्तिक :। पुं॰ विदूषके। केलिकिले ॥ त्रि॰ वसन्तजोत्सवे ॥ वसन्तसहचरिताध्ययनवति ॥ वसन्तमधीते वेद वा । वसन्तादिभ्यष्ठक् ॥

वासन्ती। स्त्री॰ लताविशेषे। माधव्याम् ॥ यूथ्याम् ॥ पाटलायाम् ॥ स्मरोत्सवे। चैत्रावल्याम्। मधूत्सवे। गणिकार्याम् ॥ पुष्पलताविशेषे। प्रहसन्त्याम्। वसन्तजायाम् ॥ नवमल्लिकायाम्। नेवारा॰ निवारी॰ इ॰ प्र॰ पुष्पवृक्षविशेषे ॥ यथा। नेपालीकथिता तज्ज्ञै : सप्तलानवमालिका। वासन्तीशीतलालघ्वीतिक्तादोषत्रयापहा जित् वसन्ते पुष्प्यति। कालात् साधुपुष्प्यत्पच्यमानेष्विति अण् ॥ शक्करीच्छन्द : १४ प्रभेदे ॥ तल्लक्षणं यथा। मात्तौ नौ मो गौ यदि गदितं वासन्तीयम्। यथा। भ्राम्यद्भृङ्गीनिर्भरमधुरालापैर्गीतै : श्रीखण्डाद्रेरङ्गत्पवनैर्मन्दान्दोला। लीलालोलापल्लवविलसद्धस्तोल्लासै : कंसारातेर्नृत्यतिसदृशी वासन्तीयम् ॥ वासन्तीदुर्गापूजा प्रमाणं यथा। चैत्रे मासि सिते पक्षे सप्तम्यादिदिनत्रये। पूजयेद्विधिवद्दुर्गां दशम्यां तु विसर्जयेत् ॥ अपिच। श्रीनारायण उवाच। पुरा स्तुता सा गोलोके कृष्णेन परमात्मना। सम्पूज्य मधुमासे च प्रीतेन रासमण्डले ॥ मधुकैटभयोर्युद्धे द्वितीये विष्णुना पुरा। तत्रैव काले सा दुर्गा ब्रह्मणा प्राणसङ्कटे ॥ इति ब्रह्मवैवर्ते प्रकृतिखण्डे ६३ अध्याय : ॥

वासयोग :। पुं॰ चूर्णायाम्। पाटवासादिक्षोदे। गन्धचूर्णे ॥ वासे सुगन्धीकरणे योग उपाय : ॥

वासर :। पुं॰ न॰ अह्नि। दिने ॥ रागप्रभेदे ॥ वासयति वसतेर्ण्यन्तात् "अर्त्तिकमिभ्रमीत्यादिना" र : ॥

वासरच्छवि :। स्त्री॰ प्रकाशे। आतपे ॥

वासव :। पुं॰ इन्द्रे। मरुत्वति। मघोनि। देवाधिपतौ ॥ सप्तदेशनामध्येभगवतोविभूति : ॥ वसवो देवा : वसूनि रत्नानि वा अस्य सन्ति। ज्योत्स्नादित्वादण् ॥ वासो रपत्यं वा ॥ दैत्यानां वासं वाति। वागतिगन्धनयो :। आतोऽनुपसर्गे क : ॥ त्रि॰ वसुदेवताके। सास्य देवतेत्यण् ॥ वसुशब्दात् स्वार्थिक : प्रज्ञाद्यण् वा ॥

वासवदत्ता । स्त्री० गद्यरूपे० आख्यायिकाग्रन्थविशेषे ॥ वासवदत्तामधिकृत्यकृता० आख्यायिका । वृद्धाच्छ: । तस्यलुक् ॥

वासवानुज: । पुं० उपेन्द्रे ॥ वासवस्यअनुज: ॥

वासवी । स्त्री० व्यासमातरि । सत्यवत्याम् । दासेय्याम् । उपरिचरवसोर्वीर्य्येजातायाम् ॥ वसोरास्त्रापत्यम् । अण् । ङीप् ॥ इन्द्राण्याम् ॥

वासवेय: । पुं० व्यासे । पाराशर्य्ये ॥ वासव्याअपत्यम् । स्त्रीभ्योढक् ॥

वास: । न० वस्त्रे ॥ वस्यतेऽनेनवा० वस्तेशरीरंवा । वसआच्छादने । वसेर्णिदित्यसुन् ॥

वाससज्जा । स्त्री० नायिकाप्रभेदे ॥

वासा । स्त्री० क्षुपरूपे । वासके ॥ वासायांविद्यमानायामाशायांजीवितस्यच । रक्तपित्तक्षयीकासीकिमर्थमवसीदति ॥ वासयति । वसनिवासे । ण्यन्त: । पचाद्यच् ॥

वासागारम् । न० भोगगृहे । कन्यादि ॥ वासस्यआगारम् ।

वासि: । पुं० कुठारभेदे । छेदनसाधने । वसूला० इ० भा० ॥ वास्यादीनामिवकरणानांकर्तृव्यापार्यत्वनियमादितिवैशेषिका: ॥ वसति० वस्तेवा । वसनिवासे० आच्छादनेवा । वसिवपियजीत्यादिना० इञ् ॥

वासिका । स्त्री० वासके ॥ वासैव । स्वार्थेकन् । प्रत्ययस्थादितीत्वम् ॥

वासितम् । न० रुते । खगाऽऽरावे॥ ज्ञानमात्रे ॥ त्रि०सुरभीकृते । धूपितव्यञ्जनादौ । भाविते ॥ वस्त्रच्छन्ने ॥ वासयतिस्म । वासस्नेहनादौ । चुरादि: । क्त: । वासउपसेवायाम्वा ॥ ख्याते ॥

वासिता । स्त्री० करिण्याम् ॥ नार्य्याम् ॥ वासयति । वसनिवासे० ण्यन्त: । वासउपसेवायाम्वा । क्त: । टाप् ॥

वासिनी । स्त्री० सितझिण्टयाम् ॥

वासिष्ठ: । पुं० वसिष्ठात्मजे ॥ ऋष्यण् । बहुत्वे० वसिष्ठा: ॥ न० रुधिरे ॥ उपपुराणविशेषे ॥ वसिष्ठकृतेयोगशास्त्रादौ ॥ त्रि० वसिष्ठसम्बन्धिनि ॥

वासी । स्त्री० तक्षण्याम् । वसूली० इ० भा० प्र० ॥

वासु: । पुं० विष्णौ । नारायणे ॥ वसतिसर्वभूतेषु जीवरूपेणान्तर्यामिरूपेणवा०वासयतिसर्वाणिभूतानिस्वात्मनिवा । वस० । बाहुलका

दुण् ॥ पुनर्वसौ ॥ विश्वरूपे ॥
वासुकि : । पुं॰ अहिराजे । सर्पराजे । सर्पजातिभेदानांमध्ये॰ भगवतोविभूतौ ॥ वसु : रत्नंकेमूर्द्धि यस्य । वसुकायतिवा । कैशब्दे । आतोनुपसर्गेक : । वसुकस्यापत्यम् । अतइञ् ॥
वासुकेय : । पुं॰ अहिराजे ॥
वासुकेयस्वसा । स्त्री॰ विषहर्याम् । मनसादेव्याम् ॥ आस्तीकस्यमुनेर्माताभगिनीवासुकेस्तथा । जरत्कारुमुने : पत्नी मनसादेविनमोस्तुते ॥
वासुदेव : । पुं॰ चित्ताधिष्ठातरि । विष्णौ । नारायणे । वृष्णीनांमध्ये॰ वसुदेवपुत्रत्वेनप्रसिद्धे॰ऽर्जुनोपदेष्टरिभगवद्विभूतौ ॥ तस्येश्वरस्यापिविभूत्यन्त : पाठस्तेनरूपेणचिन्तनार्थ : । एवंरामादावप्यवगन्तव्यम् ॥ वसुदेवस्यापत्यम् । ऋष्यन्धकेत्यण् ॥ यद्वा । वसतीति वासु : । वस॰ बाहुलकादुण् । वासुश्चासौदेवश्च ॥ विष्णुपुराणे नामव्युत्पत्तिर्यथा । सर्वत्रासौसमस्तञ्चवसत्यत्रेतिवैयत: । ततोसौ वासुदेवेतिविद्वद्भि : परिगीयते ॥ इतिविष्णुपुराणम् ॥ यद्वा । वस्ते आच्छादयति॰ स्वमायया आवृणोतिजगदितिवासु : । वसेरौणादिकउ : । अन्येषामपिदृश्यतइतिवसुशब्दाकारस्यदीर्घ: । बाहुलकादुण्प्रत्ययेोवा । दीव्यतिप्रकाशतइति देव : वासुश्चासौदेवश्च ॥ छादयामिजगत्सर्वंभूत्वासूर्यइवांशुभिरितिमोक्षधर्मेभारतम् ॥ लक्षणं यथा । दक्षिणे तुकरेचक्रंधस्तात्पद्ममेवच । वामेशङ्खंगदाधस्ताद्वासुदेवस्यलक्षणमित्यग्निपुराणम् ॥
वासुदेवप्रियङ्करी । स्त्री॰ शतावर्याम् ॥ श्रीकृष्णप्रियकारिण्याम् ॥
वासुदेववरीयसी । स्त्री॰ शतावर्याम् ।
वासुपूज्य : । पुं॰ जिनविशेषे ॥
वासुभद्र : । पुं॰ श्रीकृष्णे ॥
वासुरा । स्त्री॰ वासितायाम् ॥ रात्रौ ॥ भुवि । वासतेयभूमौ ॥
वासू : । स्त्री॰ नाट्योक्त्याबालायाम् ॥ वास्यते॰ स्वगृहे । वसेर्ण्यन्ताद्बाहुलकादूः ॥
वासौक : । न॰ शयनास्पदे । वासमन्दिरे ॥
वास्तवम् । न॰ परमार्थभूते । परमात्मनि ॥ वस्त्वेव । स्वार्थेऽण् ॥ जीवे ॥ वस्त्वंशत्वात् ॥ मायायाम् ॥ वस्तुन: शक्तित्वात् ॥ जगति वस्तुन : कार्य्यत्वात् ॥
वास्तविक : । त्रि॰ परमार्थभूतेवस्तुनि ॥
वास्तव्य : । त्रि॰ वस्तरि । वासकर्त्त

रि । वसति । वस० । वसेस्तव्यत् कर्त्तरिणिच्चेतितव्यत् । वासयोग्ये ॥ पुं० वसतौ ॥

वास्तु । न० वास्तुकशाके । वास्तूके ॥ पुं० न० पुर्याम् । सीम्नि ॥ सुरङ्गायाम् । गृहार्हभूमौ । वेश्मभूमौ । वसन्त्यत्र । वसनिवासे । वसेस्तुन् । अगारेणिच्च । पुं० दैत्यविशेषे ॥ जलाशयगृहारामसेतुसङ्क्रमशाखिनाम् । देवतानांप्रतिष्ठायांवास्तुदैत्यंप्रपूजयेत् ॥ अनर्चयित्वा योवास्तुंकुर्यात्कर्माणिमानवः । विघ्नंतस्यचरेद्वास्तुः परिवारगणैः सहेतिनिर्णयामृतम् ॥ अपिच । मारीभयेरोगभयेडाकिन्यादिभयेतथा । औत्पातिकेपत्यदोषेव्यालिरक्षोभये पिचेति ॥ ध्यात्वाचपूजयेद्वास्तुं सर्वशान्तिस्ततो भवेदित्युक्तः ॥

वास्तुकम् । न० वास्तूकशाके । वथुवा० इ० भा० प्र० ॥ यथास्यगुणाः । लघुदीर्घपत्रभेदाद्वास्तुकद्वितयंमतम् । वास्तुकद्वितयंस्वादुक्षारंपाकेकटूदितम् ॥ दीपनंपाचनंरुच्यंलघुशुक्रबलप्रदम् । सरंप्लीहास्रपित्तार्शः कृमिदोषत्रयापहम् ॥ वास्तौभवम् । अध्यात्मादित्वाट्ठञ् । इसुसुक्तान्तात्कः ॥

वास्तुकी । स्त्री० चिल्लीशाके । क्षुद्रवास्तुके ॥

वास्तुपुरुष: । पुं० वास्तुरक्षसि । पूर्वमासीन्महद्भूतंसर्वलोकभयङ्करम् । तद्देवैर्निहतंभूमौसवास्तुपुरुषः स्मृतः ॥

वास्तुविद्या । स्त्री० वास्तुविधानशास्त्रे ॥ पञ्चवाराहीमन्यत्रच ॥

वास्तूकम् । न० वास्तुके । वथुवा० इ० प्र० शाके ॥ वसतिदेहेचिरम्० गुणावाऽस्मिन्वसन्ति । वस० । उलूकादयश्चेतिसाधु ॥

वास्तेयम् । त्रि० वस्तिसदृशे ॥ वस्तिरिव । वस्तेर्ढञ् । ङीपि० वास्तेयी ॥

वास्तोष्पति: । पुं० सुरपतौ । वलारातौ । इन्द्रे ॥ वास्तोर्गृहस्येवस्य० पतिरधिष्ठाता । वास्तोष्पतिगृहमेधाच्छचेतिनिपातनादलुक् ० षत्वञ्च्छंत्यके । इण: परत्वात् ० कस्कादिषुचेतिषत्वम् ॥ देवे ॥

वास्तोष्पतीयम् । न० वास्तोष्पतत्ये० हविषि ॥ वास्तोष्पतिर्देवतास्य । द्यावापृथिवीत्यादिनाछः ॥

वास्तोष्पत्यम् । न० वास्तोष्पतीये । वास्तोष्पतिर्देवताऽस्य । द्यावापृथिवीत्यादिनायत् ॥

वास्त्र: । त्रि० वस्त्राच्छन्नरथे ॥ वस्त्रेणपरिवृतोरथः परिवृतोरथइत्यण् ।

वास्थ: । त्रि० जलस्थे ॥

वाह्य : । त्रि० आच्छाद्ये ॥ वसआच्छादने । कर्म्मणिण्यत् ॥

वाह : । पुं० भुजे ॥ धान्यमानभेदे यथाहु : । पलंप्रकुञ्चकंमुष्टि : कुडवस्तच्चतुष्टयम् । चत्वार : कुडवा : प्रस्थस्तु : प्रस्थमथाढकम् ॥ अष्टाढकोभवेद्द्रोणोद्विद्रोणः सूर्प उच्यते । सार्द्धसूर्पोभवेत्खारीद्वेखार्य्यौगोण्युदाहृता ॥ तामेवभारंजानीयाद्वाहोभारचतुष्टयमिति ॥ अश्वे ॥ वृषे ॥ वायौ ॥ वहति वहप्रापणे । हलश्चेतिघञ् ॥ उह्यते॰ऽनेनवा । वहे : कर्मणि॰ करणेवा॰ घञ् वाह्यतेवा । ण्यन्त : । अच् ॥ वाहतेवा । वाहृप्रयत्ने । अच् ॥ रथादौ ॥ त्रि॰ वहनकर्त्तरि ॥

वाहक : । त्रि॰ वहनकर्त्तरि ॥ वहति । वह॰ ण्वुल् ॥

वाहद्विषन् । पुं॰ महिषे ॥ वाहानांद्विषन्॰ वाहेषुद्विषन्वा । सप्तमीतियोगविभागात्समास : ॥

वाहनम् । न॰ हस्त्यश्वरथादौ । याने । युग्ये । पत्रे । धोरणे ॥ देव्यावाहनानियथा । विष्णुब्रह्मशिवैर्देवैर्ध्रियतेसाजगन्मयी । सितप्रेतोमहादेवोब्रह्मालोहितपङ्कज : ॥ हरिर्हरिस्तुविज्ञेयोवाहनानिमहौजस: । स्वमूर्त्यावाहनत्वन्तुतेषांयस्मान्नयुज्यते ॥ तस्मान्मूर्त्यन्तरंकृत्वावाहनत्वंगतास्त्रय : । यस्मिन्यस्मिन्महामायाप्रीणातिसततंशिवा ॥ तेनतेनैवरूपेणआसनान्यभवंस्त्रय : । इतिकालिकापुराणम् ॥ वहत्यनेन । वह॰ । करणेतिल्युट् । वाहनमाहितादितिनिपातनाद्दीर्घ: ॥ यद्वा । वाहयति । वहे: स्वार्थण्यन्तात्कर्त्तरिल्युट् ॥ वाहानांप्रेरणे ॥ यथा । वाहनंप्रतिवाहानांषड्विधंप्रेरणंविदु: । रागावलगाकषापार्ष्णिप्रतोदरवभेदत:॥ चतुर्थभवने ॥

वाहनश्रेष्ठ : । पुं॰ अश्वे । हये ॥

वाहना । स्त्री॰ निर्वाहयितृत्वे ॥ ण्यासश्रन्थोयुच् ॥

वाहवेग : । पुं॰ पशुभेदे ॥

वाहा : । पुं॰ अनडुहि ॥ वहति । वह॰ । वहिहाधाञ्भ्यश्छन्दसीत्यसुन्॰ णित् । णोणाभ्याणून्वाहसा ॥

वाहस : । पुं॰ अजगरे । शयौ । शयालौ ॥ जलनिर्याणे ॥ सुनिषण्णके ॥ वहति । वह॰ । वहियुभ्यांणिदित्यसच् । णित्वाद्वृद्धि: ॥ वाहंगतिंस्यतीतिवा । षोन्तकर्मणि । आतोनुपेतिक : ॥

वाहा । स्त्री॰ बाहौ । भुजे ॥ अजादित्वाट्टाप् ॥

वाहिक : । पुं॰ ढक्कायाम् ॥ गोवा
ह्नि । शकटादौ ॥

वाहित : । त्रि॰ लङ्घिते ॥

वाहित्थम् । न॰ हस्तिकुम्भाधोभागे ॥
कुम्भोऽत्रवातकुम्भ : । वाहित्थंवा
तकुम्भाधइतिभागुरि : । सचललला
टाधोभाग : । अवश्यंवहति । वह॰
। आवश्यकेणिनि : । सतिष्ठत्यत्र ।
घञर्थेक : । पृषोदरादित्वात्स
क्षत : ॥

वाहिनी । स्त्री॰ तरङ्गिण्याम् । शैव
लिन्याम् ॥ सेनायाम् ॥ सेनावि
शेषे । विबुगणेषु ॥ यथा । इभा :
८१ । रथा : ८१ । अश्वा : २४३ ।
पदातय : ४०५ । एततपरिमाण
परिमितायांसेनायामित्यर्थ : ।
समस्तसङ्ख्यया ८१० ॥ वहति ।
वह॰ । ग्रह्यादित्वाण्णिनि : ॥
वाहा:सन्त्यस्यांवा । इनि : ॥

वाहिनीपति : । पुं॰ सेनापतौ । से
नान्याम् ॥ समुद्रे ॥ वाहिन्या :
सेनाया : ॰ वाहिनीनांनदीनांवा
पति : ॥

वाहीक : । पुं॰ देशविशेषे ॥ जर्त्ति
कजातौ जाट॰ जट्ट॰ इ॰ भा॰
प्र॰ जातौ ॥ यथोक्तंकर्णपर्वणि
४०॰ अध्याये । तत्रहइ : पुराह
ता : कथा : कश्चिद्॰ द्विजोत्तम :
। वाहीकदेशंमद्रांश्चकुत्सयन्वाक्य
मब्रवीत् ॥ पञ्चानांसिन्धुषष्ठाना
मन्तरंयेसमाश्रिता : । तान्धर्म
वाह्यानशुचीन्वाहीकान्परिवर्ज
येत् ॥ शाकलंनामनगरमापगा
नामनिम्नगा । जर्त्तिकानामवाही
कास्तेषांवृत्तंसुनिन्दितमिति ॥
शतद्रुविपाशैरावतीवितस्ताचन्द्र
भागेतिपञ्चनद्य : सिन्धु : षष्ठ :
तन्मध्यदेशीवाहीकाइतिव्याख्याता
र : ॥ म्लेच्छप्रभेदे ॥ गवि ॥ वाह
के ॥ वहति । वह॰ । अलीकादि
त्वात्कीकन्॰ वहतेर्वृद्धिश्च ॥
त्रि॰ वाह्ये ॥ प्राग्दीव्यतीयेष्वर्थे
षु॰ ईकक्चेतिवार्त्तिकेन॰ ईकक्
॰ वहिषष्टिलोपश्च ॥ वाहीका :
पुं॰ भूम्नि॰ देशविशेषे । टक्कनाम
सु ॥ वाहीकाष्टक्कनामानोवाह्ली
कावल्हिकाह्वयाइतिहेमचन्द्र : ॥

वाहुशर । पुं॰ क्षेमान्तके । वहु
वारे ॥

वाह्यम् । न॰ याने । युग्ये । पत्रे ।
वाहने । वह्ये ॥ त्रि॰ वहनीये ।
वलीवर्दादौ ॥ वहिरर्थे ॥ वहिर्भ
वे ॥ वाहयितुंयोग्य : । वहेर्ण्यत्
॥ वहिर्भवोवा । वहिषष्टिलोपोय
ञ्चेतियञ् ॥

वाह्यप्रपञ्च : । पुं॰ आन्तरप्रपञ्चाति
रिक्ते ॥ सयथा । पृथिव्यादिपञ्च
भूततज्जन्यब्रह्माण्ड तदन्तर्भूतेप

र्घ्युपरिविद्यमानभूर्भुवः स्वर्महर्जनस्तपः सत्यनामकाधोधोविद्यमानातलवितलसुतलतलातलमहातलरसातलपातालनामकचतुर्दशभुवनतन्निष्ठजरायुजाण्डजस्वेदजोद्भिज्जचतुर्विधभूतग्रामसमुदायोयथायोग्यं विविधनाम रूपगुणधर्मंश्चाश्रयो० बाह्यप्रपञ्चः ॥ *

बाह्यमानः। त्रि० पृष्ठेनोह्यमाने ॥

बाह्यवृत्तिः। पुं० श्रोत्रवागादौ ॥

बाह्यास्तित्ववादः। पुं० बौद्धैकदेशिनांवादे ॥ सयथा। समुदायोऽणुसम्भूतोबाह्योभूम्यापगादिकः। आन्तरः स्कन्धजश्चित्तचैत्यरूपश्चतौजगत् ॥ मृदम्बुवह्निवायूनां खरस्निग्धोष्णचञ्चलाः। चतुर्धाचाणवः पञ्चस्कन्धारूपादिभेदतः ॥ रूपशब्दादयस्तेषांव्यक्तिर्विज्ञानमुच्यते। वेदनासुखदुःखेस्तः संज्ञाडित्थादिनामयत् ॥ संस्कारोवासनाचैवमुक्तसङ्घद्वयात्मकम्। जगत्प्रत्यक्षतः सिद्धंकिमन्यपरिकल्पनैरिति ॥ नायंवादोयुक्तिसहः। यतः। यथा। स्थिरचेतनराहित्यात्स्वपञ्चाचेतनत्त्वतः। नस्कन्धानामणूनांवासमुदायोवयुज्यते।

बाह्येन्द्रियम्। न० श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणेषु ॥ वाक्पाणिपादपायूपस्थेषु ॥ बाह्येन्द्रियविषयम्। न० श्रोत्रादिविषयेषु ॥ यथाहुः। बुद्धीन्द्रियाणितेषांपञ्चविशेषाविशेषविषयाणि। वाग्भवतिशब्दविषयाशेषाणितुपञ्चविषयाणि ॥ अस्यार्थः। तेषांदशानामिन्द्रियाणांमध्ये० पञ्च० विशेषाविशेषविषयाणि० विशेषाः० स्थूलाः शब्दादयः शान्ताघोरामूढाः पृथिव्यादिरूपाः० अविशेषाः तन्मात्राणि० सूक्ष्माः शब्दादयः। तन्मात्रग्रहणेन० स्थूलभूतभावमपाकरोति० विशेषाश्चाविशेषाश्वविशेषाविशेषाः० तएवविषयायेषांबुद्धीन्द्रियाणांतानि० तथोक्तानि। तत्रोर्द्ध्वरेतसांयोगिनां चश्रोत्रम्० शब्दतन्मात्रविषयंस्थूलशब्दविषयञ्च० अस्मदादीनान्तुस्थूलविषयमेव। एवंतेषांत्वक्० स्थूलसूक्ष्मस्पर्शविषया० अस्मदादीनान्तुस्थूलस्पर्शविषयेव। एवंचक्षुरादयोपि० तेषामस्मदादीनाञ्चरूपादिषुस्थूलेषुद्रष्टव्याः एवंकर्मेन्द्रियेषुमध्ये० वाग्भवतिशब्दविषया० स्थूलशब्दविषया० तद्धेतुत्त्वात्० नतुशब्दतन्मात्रस्यहेतुः० तस्याहङ्कारकार्यत्त्वेन० वागिन्द्रियेणसहैककारणत्त्वात्। शेषाणितुचत्त्वारि० पाणिपादपायूपस्थानि० पञ्चविषयाणि० पाण्य

द्यात्वर्णापटादीनामपञ्चशब्दा-
द्यात्मकत्वात् ॥

वह्लि : । पुं॰ अश्वयोनौदेशविशेषे ॥

वाह्लिक : । पुं॰ वाह्लीकदेशे ॥ वाह्लीकदेशोत्पन्नेऽश्वे ॥ न॰ धीरे । कुङ्कुमे ॥ हिङ्गुनि ॥ वह्लिकदेशेभव : । कोपधादित्यण् ॥

वाह्लिज : । पुं॰ वाह्लिदेशोत्पन्नेतुरगे ॥

वाह्लीक : । पुं॰ बलख॰ इ॰ भा॰ प्र॰ देशविशेषे ॥ यथोक्तंशक्तिसङ्गमे । काम्बोजदेशमारभ्यमहाम्लेच्छात्पूर्वके । वाह्लीकदेशोदेवेशिअश्वोत्पत्तिपरायण : ॥ तद्देशोत्पन्नाश्वे ॥ न॰ हिङ्गुनि ॥ धीरे । कुङ्कुमे ॥ उच्यते॰ वहतिवा । वहप्रापणे । अलीकादयश्चेतिसाधु : ॥ यद्वा । वह्लते । वह्लप्राधान्ये । बाहुलकादीकन् ॥ त्रि॰ वह्लीकदेशोद्भवे ॥ वह्लीकदेशभव : कच्छादिभ्यश्चेत्यण् ॥ पुं॰ गन्धर्वविशेषे ॥

। अ॰ निग्रहे ॥ नियोगे ॥ पदपूरणे ॥ निश्चये । सहमे ॥ हेतौ ॥ अव्याप्तौ ॥ विनियोगे ॥ ईषदर्थे ॥ परिभवे ॥ शुद्धावलम्बने ॥ विज्ञाने ॥ श्रेष्ठे ॥ अतीते ॥ विगतौ ॥ विशेषे ॥ गतौ ॥ आलम्भे ॥ पालने ॥ नानार्थे ॥ गते ॥ विरुद्धे ॥

वि : । पुं॰ स्त्री॰ पक्षिणि । वागतिगन्धनयो : । वातेर्डिच्चेतीण् ॥

विंश : । त्रि॰ विंशते : पूरणे विंशतितमे ॥ तस्यपूरणे डट् ॥

विंशक : । त्रि॰ विंशतौ ॥ विंशत्या क्रीते ॥ विंशतित्रिंशद्भ्यांड्वुन्न संज्ञायाम् । तिविंशतेर्डितीतिलोप : ॥

विंशति : । स्त्री॰ सङ्ख्याविशेषे । एकाऽधिकोनविंशतौ ॥ सङ्ख्यार्थे॰एकद्विबहुवचनान्त : । सङ्ख्येये॰एकवचनान्त : । यथा । विंशत्याद्या : सदैकत्वे सर्वा : सङ्ख्येयसङ्ख्ययो : । सङ्ख्यार्थेद्विबहुत्वेस्तस्तासुचानवते : स्त्रिय : ॥ द्वौदशतौपरिमाणमस्य । पङ्क्तिविंशतीतिनिपातनात्॰प्रकृतेर्विन्भाव : शतिप्रत्ययश्च ॥

विंशतिक : । त्रि॰ विंशत्याक्रीतद्रव्याद्यर्थे ॥ विंशतित्रिंशद्भ्यांड्वुन्नसंज्ञायामित्यत्रयोगविभागात्कन् ॥

विंशतितम : । त्रि॰ विंशे ॥ विंशते : पूरण : ॥ तस्यपूरणे डट् । विंशत्यादिभ्यस्तमडन्यतरस्याम्॰ इतिडटस्तमडागम : ॥

विंशी । पुं॰ विंशतौ ॥

विक्रम् । न॰ सद्य : प्रसूताया : गो : क्षीरे ॥ यथा । क्षीरंसद्य : प्रसूताया : पेयूष : पालनंविक्रमितिशब्द

चन्द्रिका ॥

विकङ्कट : । पुं॰ गोक्षुरे ॥ इतिशब्द माला ॥

विकङ्कत : । पुं॰ स्वादुकण्टके । स्रुवावृक्षे । ग्रन्थिले । व्याघ्रपादि । मृदुफले । वंद्रू च॰ द्रू॰ गौ॰ दे॰ मा॰ प्र॰ विकङ्कते । कङ्किगतौ । अतच् प्रत्यय : ॥ विकङ्कतफलं पक्वं मधुरं सर्वदोषजित् ॥

विकङ्कता । स्त्री॰ अतिबलायाम् ॥

विकच : । पुं॰ क्षपणे ॥ केतुग्रहे ॥ त्रि॰ अकेशे । केशशून्ये ॥ विकसिते । स्फुटिते ॥ कचति । कचबन्धने । पचाद्यच् ॥ विगत : कचोऽस्माद्वा ॥

विकचा । स्त्री॰ महाश्रावणिकायाम् ॥

विकच्छ : । त्रि॰ कच्छरहिते । मुक्तकच्छे ॥

विकट : । पुं॰ विस्फोटके ॥ साकुरुण्डवृक्षे ॥ त्रि॰ उरौ । विशाले । पृथुले ॥ पृथौ ॥ विकराले ॥ रम्ये । सुन्दरे ॥ दन्तुरे ॥ कटाभावे । विकटति । कटे वर्षावरणयो : । पचाद्यच् ॥ यद्वा । सम्प्रोदश्चेतिचकारादुरपिकटच् ॥

विकटा । स्त्री॰ बौद्धदेव्यन्तरे । मायादेव्याम् । मारीच्याम् । त्रिमुखायाम् । वज्रकालिकायाम् । वज्रवाराह्याम् । गौर्याम् । पीचिरथायाम् ॥

विकटानन : । पुं॰ राक्षसान्तरे ॥ त्रि॰ भीषणास्ये ॥

विकण्टक : । पुं॰ विकङ्कते ॥ दुरालभायाम् ॥ विरुद्ध : कण्टकोऽत्र ॥

विकत्थनम् । न॰ मिथ्याश्लाघायाम् ॥ यथा । श्लाघाप्रशंसार्थवाद : सातुमिथ्याविकत्थनम् । इ॰ हेमचन्द्र : ॥ विकत्थ्यते । कत्थ श्लाघायाम् । भावेल्युट् । त्रि॰ तच्छीले ॥ ताच्छीलिकेषु॰वासरूपविधिर्नास्तीत्यस्याप्यायिकत्वात्॰ चैकचलसितिघिनुण् विषये॰ चलनशब्दे तियुच् ॥ स्वगुणश्लाघनादौ ॥

विकत्थी । त्रि॰ विकत्थनशीले ॥ विकत्थते । तच्छील : । कत्थ॰ । चैकचलसकत्थस्रम्भ : । इतिघिनुण् ॥

विकथा । स्त्री॰ अध्ययनेऽनुपयुक्तायां कथायां ॥

विकनीनिक : । त्रि॰ काणे ॥ विगताकनीनिकातारायस्मात् ॥

विकम्पित : । त्रि॰ विशेषेणकम्पविशिष्टे ॥

विकर : । पुं॰ रोगे ॥ विकीर्यते । कॄ॰ । ऋदोरप् ॥ त्रि॰ करशून्ये ॥

विकराल : । त्रि॰ भयानके ॥

विकर्ण : । पुं॰ शिरिशि । कोर्णे ।

द्वयोर्मध्ये ॥ यथा । शक्रादीनां पुरेतिष्ठन्स्पृशन्त्येषपुरन्दरम् । विकर्णौद्वौविकर्णस्यक्षीनकोणान्द्वेपुरेतथेतिविष्णुपुराणम् ॥ दुर्योधनानुजे ॥ त्रि० कर्णरहिते ॥

विकर्णिक : । त्रि० कर्णिकारहिते ॥ पुं० भूमि० सारस्वतदेशे ॥ यथा । काश्मीरस्तुमाधुमता : सारस्वता विकर्णिका : । इतिहेमचन्द्र : ॥

विकर्णी । स्त्री० अयाङ्कुशेशरे० उद्दारेऽन्त्वष्टारिणि ॥

विकर्त्तन : । पुं० अर्के । मार्त्तण्डे । सूर्ये ॥ विकर्त्तयतिभक्तरागात् । कृतीछेदने । णिजन्ताल्ल्युट् ॥ यद्वा । विशेषेणकर्त्तनं यस्य । विश्वकर्मणोयन्त्रोल्लोढत्वात् ॥ अर्कवृक्षे ॥

विकर्म्मकृत् । त्रि० निषिद्धकर्मकारिणि ॥

विकर्म्म । न० शास्त्रप्रतिषिद्धे० व्यापारे ॥

विकर्म्मस्थ : । त्रि० निषिद्धकृति । श्रौतस्मार्त्तैहिकस्वकर्मणोविरोधीनि यानिकर्माणि० अगम्यागमनादीनि तत्कारिणि ॥

विकर्ष : पुं० । कर्षणे ॥ विकर्षणम् । कृष० । घञ् ॥ बाणे ॥

विकर्षणम् । न० आकर्षणे ॥

विकल : । त्रि० ऊने ॥ विह्वले ॥ स्वभावहीने ॥ विगताकलायस्य ॥ निष्कले ॥

विकलपाणिक : । पुं० कुणौ । कुकरे । विकृतकरे ॥ विकल : पाणिर्यस्य ॥

विकला । स्त्री० ऋतुहीनायाम् ॥ राश्यादिकलाया : षष्टितमांशे ॥

विकलाङ्ग : । त्रि० स्वभावतोन्यूनाधिकाङ्गे । अपोगण्डे ॥ विकलमङ्गमस्य ॥

विकली । स्त्री० ऋतुहीनायाम् । गौरादित्वान्ङीष् ॥

विकल्प : । पुं० भ्रमे । भ्रान्तौ ॥ कल्पने ॥ सङ्कल्पविपर्यये ॥ वितर्के ॥ संशये ॥ तुल्यबलरूपविरोधे विकल्पोभवति । शब्दज्ञानानुपातीवस्तुशून्योविकल्प : ॥ विकल्पनम् । कृपू सामर्थ्ये । भावेघञ् । विविधकल्पे । विशिष्टकल्पे ॥

विकल्पक : । त्रि० निर्मातरि ॥

विकल्पित : । त्रि० विपरीतत्वेनकल्पिते ॥

विकषा । स्त्री० मांसरोहिण्याम् ॥ मञ्जिष्ठायाम् । विकषति । कषहिंसायाम् । पचाद्यच् ॥

विकस : । पुं० सिन्धुनन्दने ॥ चन्द्रे ॥

विकसत् । त्रि० जृम्भमाणे ॥

विकसनम्। न॰ स्फुटने॥

विकसा। स्त्री॰ मञ्जिष्ठायाम्॥ विकसति। कसगतौ। अच्॥

विकसित:। त्रि॰ उज्जृम्भिते। विनिद्रे। दलानामन्योन्यविश्लेषे। दलिते॥ व्यकासीत्। कस॰। गत्यर्थेतिक्त:॥

विकस्वर:। त्रि॰ विकसनशीले। विकाशिनि॥ विकसति। कस॰। स्थेशभासपिसकसोवरच्॥

विकस्वरा। स्त्री॰ रक्तपुनर्नवायाम्॥

विकार:। पुं॰ प्रकृतेरन्यथाभावे। विकृतौ॥ स्वरूपपरित्यागेनरूपान्तरापत्तौ। कार्ये॥ पञ्चमहाभूतान्येकादशेन्द्रियाणीतिषोडशकोगण:॥ जन्मादिनाशान्तपरिणामे। सचयास्केनपठितोयथा। जायते॰अस्ति॰वर्द्धते॰विपरिणमते॰अपक्षीयते॰विनश्यतीतिषट्भावविकारा:इति॥ शान्तंज्योति:कथमनुदितानस्तनिच्यप्रकोशंविश्वोत्पत्तौव्रजतिविकृतिंनिष्कलंनिर्म्मलञ्च। शश्वन्नीलोत्पलदलरुचांमम्बुवाहावलीनांप्रादुर्भावेभवतिनभस:कीदृशोवाविकार:॥ विकरणम्। कृञ्॰। घञ्। रुजि। रोगे॥

विकारहीन:। त्रि॰ निर्विकारे। जायतेऽस्तीत्यादिषड्भावविकारशून्ये॥

विकारावर्त्ति। न॰ निर्गुणे॰भगवद्रूपे॥ विकारेषुनवर्त्ततइतितथा॥

विकारी। पुं॰ षष्टिवत्सरान्तर्गतत्रयस्त्रिंशे॥ विषमस्थंजगत्सर्वंविरोधिभयसम्भ्रमम्। विकारीसर्वतोऽपायोममवाक्यमुनान्यथा॥ ३३॥ त्रि॰ उपचयादिमति। परिणामिनि॥ विकारोऽस्त्यस्य। इनि:॥ षड्भावविकारयुक्तेदेहवति॥ तथाहि। ब्रह्मादिस्तम्बपर्य्यन्तादेहवन्तोविकारिण।किंविष्णु:किंशिवोब्रह्मामघवाकिंबृहस्पति:। देहवान्प्रभवत्येवविकारै:संयुत:सदेतिव्यास:॥

विकार्य्य:। पुं॰ सोमादौ॰ कर्म्मणि॥ विक्रियते। डुकृञ्॰। विभाषाकृवृषोरितिक्यबभावे॰ऋहलोर्ण्यत्। वृद्धि:॥ अहङ्कारे॥ विविधंकार्य्यमस्य। सचत्रिविध:।तामसोराजस:सात्विकइतिभेदात्। तत्रतामसाज्जडानिभूतसूक्ष्माणिजायन्ते॰ राजसाद्बहिर्मुखानिदशेन्द्रियाणि॰ सात्त्विकान्मनइन्द्रियदेवताश्चजायन्ते॥

विकाल:। पुं॰ दिनान्ते। सायाह्ने॥ दैवपैत्र्यादिकर्म्मणिविरुद्ध:काल:॥

विकालक:। पुं॰ विकाले॥

विकालिका। स्त्री॰ ताम्याम्। मा

नरन् प्रायाम्। तांबी॰ इ॰ गी दे॰ भा॰ प्र॰ बार्ये ॥

विकाश:। पुं॰ विजने। रहसि॥ प्रकाशे। व्यक्ते॥ विकाशनमस्मिन् वा। काशृदीप्तौ। भावेऽकर्त्तर्य्यधिकरणे वा घञ्॥ यद्वा। विकाशनमनया काशशब्दे। पूर्ववद्घञ्॥ विजृम्भणे॥

विकाशनम्। न॰ विकाशे॥

विकाशी। त्रि॰ विकस्वरे। विकासशीले॥ विकाशोऽस्यास्ति। अतइनि:॥

विकाषी। त्रि॰ विकाशिनि॥ वौकषितिघिनुण्॥

विकास:। पुं॰ विस्फुरे॥

विकासी। त्रि॰ विकस्वरे। विकसति। कसगतौ॥ वौकषेतिघिनुण्। पृषोदरादि:॥ विकासोऽस्यास्ति वा। अतइनि:॥

विकिर: पुं॰ खगे। पक्षिणि। विकिरति। कॄविक्षेपे। इगुपधेति क:॥ कूपे॥ पूजासमयेविघ्नोत्सारणार्थं प्रक्षेपणीयलाजादौ। यथा। लाजाचन्दनसिद्धार्थभस्मदूर्वांकुशाक्षता:। विकिराइतिसन्दिष्टा: सर्वविघ्नौघनाशका:॥ अग्निदग्धादीनांपिण्डदाने॥ न॰ जलविशेषे॥ यथा। नद्यादिनिकटे भूमिर्यभवेद्वालुकामयी। उद्धृत्य तीयन्तु तज्जलं विकिरं विदु:॥ विकिरं शीतलं स्वच्छं निर्दोषं लघु चस्मृतम्। तुवरं स्वादुपित्तघ्नं मनाक्कफकरं स्मृतम्॥

विकीरण:। पुं॰ रक्तार्कवृक्षे॥ विकिरति। कॄविक्षेपे। कॄवृदृतिक्युन्। इत्वं रपरत्वम्। बाहुलकाद्दीर्घ:॥ विक्षेपणे। वखेरणा॰ इ॰ भा॰॥ विहिंसने। विज्ञाने॥

विकीर्ण:। त्रि॰ विस्तीर्णे। लुलिते कीर्णे। विक्षिप्ते। विख्यातेइति ख्याते॥ विललापविकीर्णमूर्द्धजेति॰ कुमारसम्भव:॥ विकीर्यते स्म। कॄ॰। क्त:॥

विकीर्णरोम। न॰ स्थौणेये। कुकुरौंधा॰ इ॰ भा॰ प्र॰ ओषधौ॥ विकीर्णानिरोमाण्यस्मिन्॥

विकीर्णसञ्ज्ञम्। न॰ स्थौणेये॥ *

विकुण्ठित:। त्रि॰ कुण्ठीकृते॥

विकुर्वाण:। त्रि॰ हर्षमाणे। हृष्टचित्ते॥ विकुरुते। करोतेश्शानश्शानच्वा॥ विक्रियमाणे॥ विकृते॥

विकुस:। पुं॰ चन्द्रे॥ विकसति। वौकसेरितिरक्॰ उत्वोपधाया:॥

विकूणिका। स्त्री॰ नासिकायाम्॥

विकूननम्। न॰ आस्यगतविकारे। विराबना॰ कूटकढाबना॰ छोलना॰ इत्यादिभाषाप्रसिद्धे॥

विकृतम् । न० विकारे ॥ तल्लक्षणं यथा । स्त्रीमतेर्ष्यादिभिर्यत्र नोच्यते स्वं विवक्षितम् । व्यज्यते चेष्टया वेदं विकृतं तद्विदुर्बुधाः ॥ पुं० वत्सरविशेषे ॥ तत्फलं यथा । सर्वाः प्रजाः प्रपीड्यन्ते व्याधिः शोकश्च जायते । शिरोवक्षोक्षिरोगाश्च पापाद्धि विकृते जनाः ॥ २४ ॥ त्रि० बीभत्से ॥ रोगिते ॥ असंस्कृते । बीभत्साख्यरसान्विते ॥ विकरणं विकृतम् । जुगुप्साप्रभवत्त्वात् ॥ विक्रियते स्म यत् । क्तः ॥

विकृतिः । स्त्री० विकारे ॥ रुजि ॥ डिम्बे ॥ यत्र न समग्राङ्गोपदेशः सा विकृतिरिति मीमांसकाः । यथा सौर्यादिः । तत्र कतिपयाऽङ्गानामतिदेशेनापि प्राप्तत्वात् ॥ मद्यादौ ॥ विकरणम् । कृञ् : क्तिन् ॥

विकृष्टः । त्रि० दीर्घे ॥ आकृष्टे ॥ विकृष्यते स्म । कृषविलेखने । क्तः ॥

विकेशः । त्रि० केशरहिते ॥

विकेशी । स्त्री० केशशून्यायाम् ॥ पटवर्त्याम् ॥

विकोकः । पुं० वृकासुरपुत्रे ॥

विकोषः । त्रि० कोषरहिते । निष्कोषे ॥

विक्कः । पुं० करिशावके । कलभे ॥

विक्रमः । पुं० पादविन्यासे ॥ आक्रमे । क्रान्तिमात्रे ॥ शक्तिसम्पत्तौ ॥ यथा । प्रमत्तेष्वभियुक्तेषु दैवेन प्रहृतेषु च । विक्रमास्तत्र सिद्ध्यन्ति परीक्ष्य विधिना कृताः ॥ इति युद्धकाण्डे रावणं प्रति विभीषणवाक्यम् ॥ शौर्यातिशये ॥ चरणे ॥ शिक्षाशास्त्रप्रयोगकौशले ॥ लग्नात्तृतीयभवने ॥ प्रभवादिषु चतुर्दशवर्षे ॥ यथा । जायन्ते स सर्वशस्या मेदिनी निरुपद्रवा । गावश्च मधुगव्यस्य मह्यर्घं विक्रमे प्रिये ॥ विक्रमादित्यभूपतौ ॥ विक्रमणम् । क्रमेण वा । क्रमु पादविक्षेपे । घञ् ॥ त्रि० क्रमात् च्युते ॥

विक्रमादित्यः । पुं० स्वनामख्यातप्रसिद्धे नृपतिश्रेष्ठे । साहसाङ्के । शकारौ ॥ विक्रमे चादित्य इव ॥ अथ विक्रमार्कवर्णनम् सन्दधाति- ज्योतिर्विदाभरणसमाप्तौ श्रीकालिदासः । वर्षे श्रुतिस्मृतिविचारविवेकरम्ये श्रीभारते खधृतिसम्मित १८० देशपीठे । मत्तोऽधुना कृतिरियं सति मालवेन्द्रे श्रीविक्रमार्कनृपराजवरे समासीत् ॥ प्रथमं नृपसभायां पण्डितवर्गं वर्णयति । शङ्कुः सुवाग्वररुचिर्मणिरंशुदत्तो जिष्णुस्त्रिलोचनहरो घटखर्पराख्यः । अन्येपि सन्ति कवयोऽमरसिंहपूर्वा यस्यैव विक्रमनृपस्य सभासदोऽमी ॥

सत्योवराहमिहिर : श्रुतसेननामाश्री बादरायणमणित्थकुमारसिंहा : । श्रीविक्रमार्कनृपसंसदिसन्ति चैतेश्रीकालतन्त्रकवयस्त्वपरे मदाद्या : ॥ धन्वन्तरि : क्षपणकोऽमरसिंहशङ्कु वेतालभट्टघटखर्परकालिदासा : । ख्यातोवराहमिहिरो नृपते : सभायांरत्नानिवैवररुचिर्नवविक्रमस्य ॥ अथपरिजनान् वर्णयति । अष्टौयस्यशतानिमण्डलधराधीशा : सभायांसदास्यु : संसत्परिवाहकोटिसुभटा : सत्पण्डिता : षोडश । दैवज्ञादशषण्मिता० सभिषजो० भट्टा० स्तथा० ठङ्ठिनो० वेदज्ञारसचन्द्रमा १६ विजयते श्रीविक्रम : सोधिभू : ॥ अथास्य सैन्यंवर्णयति । यस्याष्टादशयोजनानि कटके० पादातिकोटित्रयम् ३००००००० वाहानामयुतायुतम् १०००००००० च० नवतेस्त्रिघ्ना । कृति २४३०० हस्तिनाम् । नौकालक्षचतुष्टयं० विजयिनोयस्यप्रयाणे भवेत्० सोयंविक्रमभूपतिर्विजयते० नान्योधरित्रीबले । अथास्यशाकप्रवृत्तिंदर्शयति । येनास्मिन् वसुधातलेबकमवान् सर्वादिश : सङ्करेत्वापश्चमवप्रमान् ५५५५५५५५५ कलियुगेशाकप्रवृत्ति : [illegible] । श्री [illegible] विक्रमभूमुजाप्रति [illegible]



मणिस्वर्णगोसम्पत्तिभोग्यपवर्ज्जनेनविहितोधर्म : सुवर्णानन : ॥ अथास्यदिग्विजयमाह । उद्दामद्रविडद्रुमैकपरशुर्लाटाटवीपावको वल्लाद्वङ्गभुजङ्गराजगरुडोगौडाब्धिकुंभोद्भव : । गर्व्वज्ज्वरराजसिन्धुरहरिर्धाराध्यकारायमाकाम्बोजाम्बुजचन्द्रमाविजयतेश्रीविक्रमार्कोनृप : ॥ अथास्यप्रभुत्त्वादिगुणान् वर्णयति । येनाप्युग्रमहीधरात्रिषयेदुर्गाण्यसह्यान्यहीनोत्त्वायानिनतीकृतास्तदधिपाद्दत्तानितेषांपुन : । वृन्दाभोध्यमरद्रुमम्मरसुरद्धाभद्रुणेनाप्तुसाश्रीमद्विक्रमभूभृताखलजनाभोजेंदुनामण्डले ॥ अस्यपुरींवर्णयति । यद्राजधान्युज्जयिनीमहापुरीसदामहाकालमहेशयोगिनी । समाश्रितप्राप्यपवर्गदायिनी श्रीविक्रमार्कोऽवनिपोजयत्यपि ॥ योरुमदेशाधिपतिंशकेश्वरंजित्वागृहीत्वोज्जयिनीमहाहवे । आनीयसम्भ्राम्यमुमोचतन्नृहिश्रीविक्रमार्क : समसह्यविक्रम : ॥ तस्मिन् सदाविक्रममेदिनीशेविराजमानेसमवन्तिकायाम् । सर्वप्रजामण्डलसौख्यसम्पद्वभूवसर्वत्रचवेदकर्म ॥ शङ्क्वादिपण्डितवरा : कवयस्त्वनेकेज्योतिर्विद : समभवंश्चवराहपूर्वा : । श्रीविक्रमार्कनृपसंसदिमा

म्युविस्तेरप्यहंनृपसखाकिलका लिदास : ॥ इतिज्योतिर्विदाभरण म् ॥ पाकविशेषे ॥ यथा । घृतेगु ल्स्पलं विंशत्पचेत्सम्यग्भिषग्वर: । उत्तार्य्यं चक्षिपेदेषांखण्डस्यपलविं शति : ॥ तालमूलीतुरङ्गीचशुण्ठी चेतिपलार्द्धकम् । जातीफलंचक क्कोलं लवङ्गञ्च तिकार्षिकम् ॥ मा लतीस्यकुलिञ्जस्यकर्षावंकरभंस्यच म् । एतेषांकोलमात्रास्यआयसस्य पलद्वयम् ॥ पलैकं मोदकंकृत्वाए कैकं भक्षयेद्दिने । धातुक्षीणोग्नि क्षीणस्यबलानलकरंपरम् ॥ मेच रोगेषुसर्वेषुकासश्वासेचकामले । प्रमेहान्विंशतिंहन्याद्विक्रमादि त्यमोदकइति ॥

विक्रमार्क : । पुं॰ विक्रमादित्ये ॥

विक्रमी । पुं॰ सिंहे ॥ त्रि॰ शक्ति मति ॥ विक्रम : शौर्य्यम्॰ तद स्यास्मिन्वाअस्ति । अतइनिठना विती नि : ॥

विक्रय : । पुं॰ विक्रयणक्रियायाम् । विपणे । मूल्यग्रहणपूर्वकद्रव्य त्यागे । वेचा॰ इ॰ भा॰ ॥ क न्याविक्रयेदोषो यथा । य : कन्या पालनंकृत्वाकरोतिविक्रयंयदि । वि...धनलोभेन कुम्भीपाकं सग ...न्याम्मूत्रपुरीषयुतमभक्ष ...भिर्दंशित : का

लं यावदिन्द्राश्चतुर्दश ॥ मृतश्चव्याध योनौच सलभेत्स्मनिश्चितम् । विक्रीणीतेमांसभारंबहन्वेवदिवा निशमितिब्रह्मवैवर्त्तपुराणे ॥ विक्रयणम् । डुक्रीञ् द्रव्यविनिम ये । एरच् ॥

विक्रयणम् । न॰ विक्रये ॥ यथा । यमाहियक्षाग्निहुताशपूर्वानिष्टा : क्रयेविक्रयणे प्रशस्ता : । पौष्णाग्नि चित्राशतविन्दुवातिता : क्रयेहिता विक्रयणे निषिद्धा : ॥

विक्रयिक : । त्रि॰ विक्रेतरि ॥ विक्र येणजीवति । वस्नक्रयविक्रयाट्ठ न् । क्रयविक्रयग्रहणंसङ्घातविगृ हीतार्थम् ॥

विक्रयी । त्रि॰ विक्रयकर्त्तरि ॥

विक्रान्त : । पुं॰ शूरे ॥ विक्रान्तस्य लज्जाभूषणम् ॥ सिंहे ॥ न॰ वैक्रान्तमणौ ॥ नीचवज्रे । कुव ज्रे ॥ विक्रामतिस्म । क्रमु॰ गत्य र्थेतिक्त : ॥

विक्रान्ति: । स्त्री॰ अश्वगतौ । पुला यिते ॥ विक्रमे ॥

विक्रायिक : । त्रि॰ विक्रेतरि ॥

विक्रिया । स्त्री॰ विकारे । विकृतौ ॥ विकरणम् । कृञ : शच ॥ विविधत्वेनक्रियतेइतिवा ॥ विशे षाकारे ॥

विक्रीत : । त्रि॰ कृतविक्रये । वेच

दिया० भा० ॥ विक्रीतेकरिणिविवि
मसु शिविवाद : ॥

विकृष्ट : । वि० निष्ठुरे ॥

विक्रेता । वि० विक्रयकर्त्तरि ॥ वि
क्रयिणि ॥ विक्रीणाति । डु क्रीञ्
०तृच् ॥

विक्रेय : । त्रि० विक्रययोग्यद्रव्ये ।
पणितव्ये । विक्रयक्रियाकर्म्मणि
॥ विक्रीयते । डु क्रीञ् ० । अचो
यत् । गुण : ॥

विक्लव : । त्रि० विह्वले । भयादिना
भिभूते ॥ विक्लवते । क्लु ङ्गतौ । प
चाद्यच् ॥

विक्लवता । स्त्री० भीरुतायाम् ॥ भव
तिहिविक्लवतागुणोङ्गनानाम् ॥

विक्लित्ति : । स्त्री० विक्लेदने ॥ क्ति
न् ॥

विक्लिधि: । पुं० विचर्चिकादियुक्त दे
हे ॥

विक्लिन्न : । त्रि० जरसाजीर्णे ॥ शी
र्णे ॥ आर्द्रे ॥ विक्लिद्यतिस्म ।
क्लिदू० । कर्त्तरिक्त : ॥

विक्षत : । पुं० विशेषेणक्षते ॥

विक्षर : । त्रि० अविनाशिनि ॥ वि
विगत : क्षरोविनाशोयस्यस : ॥

विक्षवणम् । न० विक्षावे । कासे ॥
टु क्षु शब्दे । ल्युट् ॥

विक्षार : । पुं० भोजनादौ ॥

विक्षालित : । त्रि० धौते ॥

विक्षाव : । पुं० विक्षवणे ॥ शब्दे ॥
विक्षवणम् । टु क्षु० । वौक्षु श्रु व
वृतिघञ् ॥

विक्षिप्तम् न० चित्तस्य भूमिकाविशे
षे ॥ यथा । सर्वदाविषयासक्तम
पि०कदाचिद्ध्याननिष्ठंक्षिप्ताद्विशि
ष्टतया० विक्षिप्तम् ० चित्तस्यतृतीया
भूमि : । तत्र० क्षिप्तमूढयो : स
माधिशङ्कैवनास्ति० विक्षिप्ते तु चे
तसि० कादाचित्क : समाधिर्वि
क्षेपप्राधान्याद्योगपक्षेनप्रवर्त्तते०
किन्तु । तीव्रपवनविक्षिप्तप्रदीपवत्
स्वयमेवनश्यति ॥ त्रि० विप्रसृते
॥ विक्षेपयुक्ते ॥ विक्षिप्यतेस्म ।
क्षिपप्रेरणे । क्त : । त्यक्ते ॥

विक्षीर : । पुं० अर्कवृक्षे ॥

विक्षुब्ध : । त्रि० कुट्टिते । कूटागश्या
द० भा० ॥

विक्षेप: । पुं० प्रेरणे । त्यागे । वि
क्षेपणे ॥ ताडने ॥ अखण्डवस्त्व
नवलम्बनेन० चित्तवृत्तेरन्यावल
म्बने । विषयस्फुरणे ॥ ज्ञानेना
वरणे नष्टे विक्षेपस्त्वविशिष्यते० इ
त्यारादृष्टिः ॥ विक्षेपंलक्षयति
गौतम : कार्यव्यासङ्गात्कथाविच्छे
दोविक्षेप : । इति ॥ अस्यार्थ: ।
कार्यव्यासङ्गात्० कार्यव्यासङ्गमु
द्दिश्येत्यर्थ:० ल्यब्लोपेपञ्चमी ।
कार्यव्यासङ्गस्यासम्भवात्कालान्त

रकत्वेनारोपितः॰ तेनतादृशकथा विच्छेदोविक्षेपः। तेनराजपुरुषादिभिराकारणं॰गृहत्यजनादि मिर्वा वय्यकार्यार्थमाकारणं॰ स्वगृहद्वारादिकं पश्यतोगमनेवा॰ शिरोरोगादिनाप्रतिबन्धेवा॰ नविक्षेपः। ननुकार्यव्यासङ्गेऽप्यावनं कुतः॰ सभाक्षोभादिनाचेत्॰ अननुभाषणमेव॰ उत्तराप्रतिपत्त्याचेत्॰ अप्रतिभैवेतिचेन्न। उत्तराबसराभावात्। वस्तुतस्तूत्तरस्फूर्त्तावपि॰ तद्दूषणसम्भावनयाविक्षेपसम्भवात्। यथाचितिः सकर्तृकाकार्यत्वादित्युक्तम्॰अत्राङ्कुरेव्यभिचारस्तावन्मयोद्भाव्यः॰तत्रचेदयंपक्षसमत्वंब्रूयात्॰ तदामेकिमुत्तरम्॰ अतोऽयमत्रार्थंबलिखितंमयाचविचारितम्॰ किञ्चित्कार्यमुपाब्यगृहेगन्तव्यादद्यतेइ॰ कुत्र्यं वंविक्षेपसम्भवादिति॥ विक्षेपणम्। क्षिप॰। भावे॰ घञ्॥

विक्षेपशक्तिः। स्त्री॰ अज्ञानसामर्थ्यं। मायाशक्तिः॥ यथा॰रज्ज्वज्ञानं॰ स्वाहृतरज्जौ॰ स्वशक्त्या॰ सर्पादिकमुद्भावयति। एवम्॰ अज्ञानमपि॰ स्वाहृतात्मनि॰ तया विक्षेपशक्त्या॰ आकाशादिप्रपञ्चमुद्भावयतितादृशंसामर्थ्यम्। वि... शक्तिर्लिङ्गादिब्रह्माण्डान्तं जग

त्सृजेदित्युक्तेः। विविधस्वरूपेण भवनंविक्षेपशक्तिः॥

विक्षेपसहभूः। पुं॰ अन्तरायविशेषः॥ तेचयोगसूत्रे प्रदर्शिताः। यथा। दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासाविक्षेपसहभुवः॰ इति॥ अस्यार्थः। कृतश्चिन्निमित्तादुत्पन्नेषु विक्षेपेषु॰ एतेदुःखादयः प्रवर्त्तन्ते। तत्रदुःखं चित्तस्यराजसः परिणामोबाधनालक्षणः॰ यद्बाधात्प्राणिनस्तदुपघाताय प्रवर्त्तन्ते। दौर्मनस्यंबाह्याभ्यन्तरैः कारणैर्मनसोदौस्थ्यम्। अङ्गमेजयत्वं सर्वाङ्गीणोवेपथुरासनमनःस्थैर्यस्यबाधकः। प्राणोयद्बाह्यंवायुमाचामतिसश्वासः। यत्कौष्ठ्यमायुं निःश्वसितिसप्रश्वासः। तएतेविक्षेपैः सहप्रवर्त्तमानायथोदिताभ्यासवैराग्याभ्यांनिरोद्धव्याः समाहितचित्तस्यैतेनभवन्ति॰विक्षिप्तचित्तस्यैवभवन्तीतिविक्षेपसहभुवोऽन्तरायाएव। एतेअभ्यासवैराग्याभ्यांनिरोद्धव्याः ईश्वरप्रणिधानेनवा॥

विख्रः। वि॰ विगतनासिकः।

विखना। पुं॰ सष्टरि। ब्रह्मणि॥

विख्रुः। वि॰ गतनासिकः॥ विगतानासिकाऽस्य। खुखौप्रत्ययव्याविगतनासिकायाः खुः॥

विखुर : । पुं॰ राक्षसे । चौरे ।

विखिद : । त्रि॰ गतमोहे ॥ विगत : खेदोस्य ॥

विख्य : । त्रि॰ विखौ ॥ विगतानासिकाचस्य । ख्यश्चेतिनासिकाया ख्यादेशोऽच्प्रत्ययश्च ॥

विख्यात : त्रि॰ प्रसिद्धे । ख्यापन्न ॥ विपूर्वात्ख्याते : क्त : ॥

विख्याति : । स्त्री॰ अतिप्रसिद्धौ ॥ विख्यानम् । ख्याप्रकथने । स्त्रियां क्तिन् ॥

विख्यापनम् । न॰ व्याख्याने ॥ प्रकाशने ॥

विखु : । त्रि॰ विख्ये । विगतानासिकास्य । खुखौचवक्तव्याविति नासिकाया : खु : ॥

विगणनम् । न॰ ऋणमुक्तौ । ऋणादिनिर्यातने ॥

विगत : । त्रि॰ निष्प्रभे । अरोके । प्रभारहिते ॥ वीते । गते । विगच्छतिस्म । गम्लृगतौ । गत्यर्थेति क्त : । च्युते ॥

विगतकल्मष : । त्रि॰ निर्गतमले । निर्मले । स्वच्छे ॥ संसारहेतुधर्माधर्मरहिते ॥

विगतक्लम : । त्रि॰ शरीरक्लेशरहिते ॥

विगतज्वर : त्रि॰ ऐहिकपारत्रिकदुर्यशोनरकपातादिनिमित्तशोकरहिते ॥ ज्वरहीने ॥

विगतशोक : । त्रि॰ नि : शोके । शोकरहिते ॥ विगताशोकोयस्य स : ॥

विगतस्पृह : । त्रि॰ देहजीवितभोगेष्वपिवाञ्छारहिते । सर्वदृश्येषुदोषदर्शनेन॰नित्यबोधपरमानन्दरूपे॥गुणदर्शनेनच॰सर्वतोविरक्ते ॥ स्पृहारहिते ॥ विगतास्पृहायस्य ॥

विगतार्त्तवा । स्त्री॰ निष्कलायाम् । पञ्चपञ्चाशदब्दे भ्योनिवृत्तरजसिस्त्रियाम् ॥ विगतमार्त्तवंरजोऽस्या : ॥

विगन्धक : । पुं॰ इङ्गुद्याम् ॥

विगन्धिका । स्त्री॰ हबुषायाम् ॥

विगम : । पुं॰ नाशे । यथा । एकदेशिनोवेदान्तिनस्तु॰यदुपाध्यनवच्छिन्नस्यब्रह्मणोविशुद्धरूपता॰तादृशोपाधिविगमएवकैवल्यम् । चिद्देशिनस्तु॰आनन्दमयपरमात्मनि॰जीवात्मनोलयोमोक्ष : । जीवात्मपरमात्मनोरभेदेपि॰उपाधिविशेषविशिष्टस्यात्मनोजीवरूपतया॰तस्यौपाधिक : परमात्मभेद : । इतिभेदकोपाधिविगमएवजीवस्यपरमात्मनिलय : । यथाघटाकाशस्यघटविगमएवशुद्धआकाशेतस्यलय : । लिङ्गशरीरावच्छिन्नस्यैवात्मनोजीवभाव : इतिलिङ्गशरीरनाश

एवपथ्यं वसितीमोच्चः । द्रुतिमुन्निपादः ॥
विगर्हणम् । न० विगर्हणयाम् ।
विगर्हणा । स्त्री० निन्दने । भर्त्सनायाम् ।
विगर्हितः । त्रि० जुगुप्सिते । निन्दिते ॥ निषिद्धे ॥
विगलितः । त्रि० स्खलिते ॥ यथा । विगलितवसनं परिहृतवसनं घटय जघनमपिधानम् । किसलयशयने पङ्कजनयने निधिमिवहर्षनिधानम् ॥
विगाढः । त्रि० प्रविष्टे ॥ विगाहते स्म । गाहूविलोडने । क्तः ॥ कठिने ॥ प्ररूढे ॥ स्नाते । अवगाहिते ॥
विगाथा । स्त्री० मात्रावृत्तप्रभेदे ॥ यथा । गाथाद्वितीयतुर्यौ पादौभवतोयदाचविपरीतौ । सेयंभवतिविगाथा॰फणिनायकपिङ्गलेनोक्ता॥ यथा । वृन्दारण्यविहारी॰वल्लवनारीमनोहारी । गोपालीकरतालो॰नर्त्तनशालीपुनातुवनमाली ॥
विगानम् । न० निन्दायाम् ॥ परदेवते ॥ विरुद्धगानम् ॥
विगाहनम् । न० स्नाने ।
विगाह्यमानः । त्रि० प्रविश्यमाने ॥ विगाहते । गाहू० । शानच् । मुक् ॥

विगीतः । त्रि० निन्दिते ॥
विगुणः । त्रि० गुणवैपरीत्यविशिष्टे ॥ यथा । यथामनोममाचष्टेयंमातातथामम । विगुणेष्वपिपुत्रेषुनमाताविगुणाभवेत् ॥ व्यङ्गविकले ॥
विगूढः । त्रि० गर्हिते ॥ गुप्ते ॥
विगृह्यवादः । पुं० जयपराजयप्रधानेजल्पन्यायवे ॥
विग्नः । त्रि० भीते ॥
विग्रः । त्रि० गतनासिके ॥ विगतानासिकाऽस्य । वेर्ग्रोवक्तव्यः । प्रादिभ्योधातुजस्येतिसमासः ॥
विग्रहः । पुं० काये । शरीरे ॥ विभागे ॥ विस्तारे ॥ समासवाक्ये । विस्तरे । व्युत्पत्त्यर्थबोधकेवाक्ये॥ पुं० न० राज्ञांगुणभेदे । वैरे । रणे । युद्धे । कलहे । सङ्ग्रामे ॥ समज्यायोभ्यांसन्दधीत॰ हीनेनविगृह्णीयात् । यथा । बालोवृद्धोदीर्घरोगी तथाज्ञातिवहिष्कृतः । भीरुकोभीरुकजनोलुब्धोलुब्धजनस्तथा ॥ विरक्तप्रकृतिश्चैवविषयेष्वतिशक्तिमान् । अनेकचित्तमन्त्रश्चदेवब्राह्मणनिन्दकः ॥ दैवेनोपहतश्चैवदैवचिन्तकएवच । दुर्भिक्षव्यसनोपेतोबलव्यसनसंयुतः ॥ अदेशस्थोबहुरिपुर्युक्तकालविपर्ययः । सत्यधर्मव्यपेतश्चविंशतिः पुरुषा

धमाः ॥ एतैः सम्बिंनकुर्वीत विग्रहंचीयात्‌ क्षिलम्‌ सूतिकामन्द शीलिः ॥ विरुद्धं विविधंवा॰ ग्रहणम्‌ । ग्रह॰ । ग्रहवृद्दिश्चप्‌ ॥ विविधैर्व्याधिभिर्गृह्यतेवा । अप्‌ ॥ विविधंसुखदुःखादिगृह्णाति वा । अच्‌ ॥ चि॰ ग्रहगृह्ये ॥

विग्रहावरम्‌ । न॰ पृष्ठे ।

विग्लापनम्‌ । न॰ अमर्द्दने ॥ विग्ला पयति । ग्लै॰ । ल्युट्‌ ॥

विघटनम्‌ । न॰ विरुद्धनिर्माणे ॥

विघटिका । स्त्री॰ पले ॥

विघटितः । त्रि॰ नाशिते ॥

विघटी । स्त्री॰ पले ॥

विघट्टनम्‌ । न॰ सङ्घर्षे ॥

विघट्टितः । त्रि॰ अभिहते ॥ विशेषे णचालिते ॥ विपूर्वात्‌ ॰ घट्टतेः क्तः ॥ इट्‌ ॥

विघसः । पुं॰ भुक्तशेषे । अतिथिगु र्वादिभुक्तावशेषे ॥ विशिष्टैरद्यते । अद॰ उपसर्गेऽदङ्घस्लृप्‌ । घञपो श्चेतिघसलृ ॥ आहारे ॥ न॰ सि क्थके ॥

विघसाशी । त्रि॰ अतिथिगुर्वादिभुक्त शेषभुजि ॥ विघसंभुक्तशेषमेवाश्ना ति । अश॰ । णिनि ॥ विघसा शीभवेन्नित्यंनित्यंवाऽमृतभोजनः । विघसोभुक्तशेषन्तुयज्ञशेषंतथा मृतम्‌ ॥

विघातः । पुं॰ मारणे ॥ हननंघातः । विशिष्टोघातः ॥ व्याघाते । आघाते ॥

विघाती । त्रि॰ निवारके । घातके ॥

विघूर्णम्‌ । त्रि॰ भ्रमति ॥ घूर्णघू र्णभ्रमणे । अनुदात्तेत्वप्रयुक्तात्म नेपदस्य॰ अपिङ्गोङित्वे नाभित्त्वत्व प्रापणात्‌ ॰ परस्मैपदम्‌ ॥ ॥

विघ्नः । पुं॰ अन्तराये । प्रत्यूहे । समाप्तिप्रतिबन्धकदुरिते ॥ विहन नम्‌॰ विघ्नन्तिमनांस्यस्मिन्‌वा॰ विहन्यतेऽनेनवा । हन॰ । घञ र्थेकः ॥

विघ्नकारी । त्रि॰ घोरदर्शने ॥ वि घातिनि । विघातस्यकारके ॥

विघ्नचतुष्टयम्‌ । न॰ लयविक्षेपकषा यरसास्वादलक्षणेषु चतुर्षु ॥ नि र्विकल्पसमाधौक्रियमाणेएतेचत्वा रोविघ्नाः सम्भवन्ति ॥ विघ्नानांच तुष्टयम्‌ ॥

विघ्ननायकः । पुं॰ गणेशे । विघ्नानां नायकः ॥

विघ्ननाशकः । पुं॰ विनायके । गणे शे ॥ विघ्नानांनाशकः ॥

विघ्ननाशनः । पुं॰ गणेशे ॥

विघ्नराजः । पुं॰ विनायके । गणा धिपे ॥ विघ्नानांराजा । राजाहः सखिभ्यष्टच्‌ ॥

विघ्नविनायकः । पुं॰ श्रीगणेशे ॥

विघ्नहारी । पुं॰ गणाधिपे । लम्बोदरे ॥ अवग्रं हरति । हृञ्॰ । णिनिः । विघ्नस्य हारी ॥

विघ्नितः । त्रि॰ सञ्जातविघ्ने ॥ तृतच् ॥

विघ्नेशः । पुं॰ हेरम्बे ॥ विघ्नानामीशः ॥

विघ्नेशवाहनः । पुं॰ महामूषके ॥ विघ्नेशस्य वाहनः ॥

विघ्नेशानकान्ता । स्त्री॰ श्वेतदूर्वायाम् ॥

विङ्कः । पुं॰ अश्वखुरे । पुटे ॥

विङ्गा । स्त्री॰ अश्वगतिप्रभेदे ॥ शूश्मिम्व्याम् ॥ नर्त्तने । इ॰ मेदिनिकरः ॥

विचकिलः । पुं॰ मल्लीप्रभेदे । हिपुटायाम् ॥ मदनवृक्षे ॥ इतिमेदिनिकरः ॥

विचक्षणः । पुं॰ पण्डिते ॥ विचष्टे चक्षिङ्॰ । अनुदात्तेतश्चहलादेरितियुच् । कर्त्तरिल्युडितिन्यासकारः ॥ त्रि॰ विचारकुशले ॥ निपुणे । ततत्तत्कालकर्त्तव्यतायां चतुरे ॥ निपुणतरवस्तुदर्शिनि ॥

विचक्षणा । स्त्री॰ नागदन्त्याम् ॥

विचक्षुः । त्रि॰ विमनसि ॥ चक्षुर्हीने ॥

विचयः । पुं॰ अन्वेषणे ॥ विचीयते । विञ् चयने । कर्मण्येरच् ॥

विचयनम् । न॰ मार्गणे ॥ संवीक्षणे ॥ विविधम्॰ चयनम् ॥ चिञ्॰ । ल्युट् ॥

विचर्चिका । स्त्री॰ रोगविशेषे । पामनि । पामायाम् ॥ दाल्यतेत्वक् खराकृत्यापाण्योर्य्याविचर्चिका । पादेविपादिकाश्चैया स्थानभेदाद्विचर्चिका ॥ दाल्यते॰ ॥ विदार्यते ॥ विचर्च्यते । चर्च अध्ययने । रोगाख्यायांण्वुल्बहुलम् । प्रत्ययोपसर्गाभ्यांरोगप्रतीतिः ॥

विचलः । त्रि॰ अस्थिरे ॥

विचलनम् । न॰ विभ्रमे ॥

विचलितः । त्रि॰ स्खलिते । पतिते ॥ स्थानान्तरप्राप्ते ॥

विचारः । पुं॰ कार्य्याकार्य्यरूपेविमर्शे ॥ तत्त्वनिर्णये । सन्दिग्धेवस्तुनिप्रमाणेनतत्त्वपरीक्षायाम् । वितर्के । प्रमाणैर्वस्तुतत्त्वपरीक्षायाम् । चर्चायाम् । सङ्ख्यायाम् ॥ सन्दिग्धंसप्रयोजनञ्च॰ विचारमर्हति ॥ विवेके ॥ कोऽहंकथमिदंजातंकोवैकर्त्तास्यविद्यते । उपादानंकिमस्तीहविचारः सोयमीदृशः ॥

विचरणम् । न॰ विचरत्यनेनवा । चर॰ । घञ् ॥

विचारणा । स्त्री॰ विद्यायाम् ॥ यथा । परीक्षापरीक्षाचविद्याद्वैधाविचारणा । तत्रापरीक्षविद्यायां

विचारेऽयंसमाप्यते ॥ त्रि॰वि चारोत्पन्न । विचाराज्जाते ॥ जनी॰ । ड: ॥

विचारणम् । न॰ विचारे ॥ चरसंश येचुरादि : युच् ॥

विचारणा । स्त्री॰ विचारे । चर्चायाम् ॥ मीमांसाशास्त्रे ॥चरसंशये॰ चुरादि : । ण्यासश्रन्थोयुच् । टाप् ॥

विचारणीयम् । न॰ शास्त्रे ॥ त्रि॰ विचार्ये ॥

विचारित : । त्रि॰ कृतविचारे । विम्ने । विन्ते ॥ विचार्यतेस्म । चरगतौ॰ण्यन्त : । क्त : ॥ विचार : सञ्जातोऽस्यो । तारकादित्वादितच् ॥

विचार्य्य : । त्रि॰ विचारयोग्ये । विचारितव्ये । विचारणीये ॥

विचार्य्यमाण : । त्रि॰ चिन्त्यमाने ॥ ज्ञानंज्ञेयंतथाज्ञाताचितयंभाति मायया । विचार्यमाणेचितयेआत्मैवैकोऽवशिष्यतइतिश्रीमहानिर्वाणतन्त्रम् ॥

विचाल : । पुं॰ न॰अन्तरे । अभ्यन्तरे । अन्तराले ॥ रूपान्तरापत्तौ ॥ यथापयसोदध्यादिरूपताविचाल : ॥

विचि : । पुं॰ स्त्री॰अल्पतरङ्गे ॥

विचिकित्सा । स्त्री॰ संशये । विरुद्धानेककोट्यवगाहिज्ञाने ॥ विचिकित्सनम् । कितसंशये । गुप्तिज्किद्भ्य : सन् । तत : अप्रत्ययादित्यकारप्रत्यय : । टाप् ॥

विचिकित्सित : । त्रि॰ संशयिते । सन्दिग्धे ॥ विचिकित्सासञ्जाताऽस्य । तारकादित्वादितच् ॥

विचिकिल : । पुं॰ त्रिपुटायांमल्लिकायाम् ॥ दमनके ॥ इ॰त्रि॰चन्द्र: ॥

विचित : । त्रि॰ अन्विष्टे ॥

विचित्त : । त्रि॰ उन्मत्ते ॥

विचित्रम् । न॰ कर्बुरवर्णे ॥ पुं॰ न॰अलङ्कारविशेषे ॥ विचित्रंस्वविरुद्धयत्नफलस्येष्टात्समुद्यमइतिलक्षणात् ॥ त्रि॰विचित्रवर्णवति ॥ नानाविधे ॥

विचित्रक : । पुं॰ भूर्जद्रुमे ॥

विचित्रदेह : । पुं॰ मेघे ॥ त्रि॰आश्चर्यशरीरे ॥ नानावर्णदेहे ॥

विचित्रवीर्य्य : । पुं॰ चन्द्रवंशीयनृपतिविशेषे ॥

विचित्रवीर्य्यसू : । स्त्री॰ सत्यवत्याम् ॥

विचित्रा । स्त्री॰ मृगेर्वारौ ॥ चित्रोस्यनाडाम् ॥

विचित्राङ्ग : । पुं॰ कोकिले । मयूरे । व्याघ्रे ॥ त्रि॰आश्चर्यशरीरे ॥ विचित्राणि॰अङ्गानियस्यस : ॥

विचिन्वन् । त्रि॰ मृगयमाणे । अन्विष्यति ॥

विची । स्त्री० वीच्याम् । तरङ्गे ॥ द्रु० हिरूपकोष : ॥

विचेतन : । त्रि० चेष्टारहिते । विगताचेतनायस्य स : ॥ ( ० ) ॥

विचेता : । त्रि० दुर्मनसि । अमनसि । विमनसि । विगतचित्ते ॥ भगवद्ध्यानजनितदुरितप्रतिबन्धविविक्तविध्याने । खिन्नचित्ते ॥ उद्विग्नचित्ते ॥

विचेय : । त्रि० मृग्ये ॥

विचेष्टकम् । न० अङ्गपरिवर्त्तने ॥

विचेष्टितम् । न० विरुद्धाचरणे ॥ व्यापारे ॥

विच्छन्द : । पुं० विचछन्दके ॥ विशिष्टश्छन्दोऽत्र ॥

विच्छन्दक : । पुं० ईश्वरसद्मप्रभेदे ॥ विशिष्टश्छन्दोऽभिप्रायोऽत्र ॥ यद्वा । विशिष्टाम् • छन्दयति • साभिलाषान् करोति । छदि० । णवुल् • कुन् वा ॥ उपर्य्युपरियन्नेषु तद्विच् छन्दकसंज्ञकमितिभरत : ॥

विच्छर्दक : । पुं० विचछन्दके ॥ उच्छृदिर् दीप्तौ ॥ णवुल् ॥

विच्छाय : । पुं० मणौ ॥ न • पक्षिणां छायायाम् ॥ त्रि० हतप्रभे ॥ छायारहिते ॥ विगताछायायस्य ॥

विच्छाया । स्त्री० पक्षिच्छायायाम् ॥ क्लीवतोचिता • छायाबाहुल्यइतिस्मरणात् ॥

विच्छित्ति : । स्त्री० अङ्गहारे ॥ विच्छेदे ॥ हावभेदे ॥ यथा । मण्डनानादरन्यासोविच्छित्तौरूपदर्पत : । या भरणविलेपनादौनांकुतश्चित्प्रियापराधादीर्ष्यानादरेणध्यक्तानांसखीनांप्रयत्नतोधारणंविच्छित्ति : ॥ प्रियेणदत्तंप्रीतिनिबन्धनंस्वल्पमपिविभूषणंविच्छित्तिरित्यन्ये । आकल्पकल्पनाल्पापिविच्छित्ति : कान्तिपोषक्रदित्युज्ज्वलनीलमणि : ॥ विच्छेदनम् । छिदिर् द्वैधीकरणे । क्तिन् ॥ छेदे • विनाशे • विच्छित्तिरितिविश्वात् अशेष : ॥ गेहाद्यवधौ ॥ इतिहेमचन्द्र : ॥

विच्छिन्न : । त्रि० समालब्धे । छन्ने । काटा • द्रु • मा • ॥ विभक्ते ॥ कुटिले ॥ विशेषेणच्छिन्न : ॥

विच्छिन्नावस्था । स्त्री० विच्छेदावस्थायाम् । अभिव्यक्तस्यजनितकार्य्यस्यापि • क्षीनचिद्बलवताभिभवे ॥

विच्छेद : । पुं० वियोगे । विरहे ॥ कान्तायाः : कान्तविच्छेदोमरणादतिरिच्यते ॥ विच्छेदनम् । छिदिर् • । घञ् ॥

विच्छेदावस्था । स्त्री० विच्छिन्नावस्थायाम् ॥

विच्युत : । त्रि० विचरिते ॥ विगते ॥

विच्युति : । स्त्री० वियोगे ॥

विजन : । त्रि० निर्जने । विविक्ते ।

नंपश्येज्जलगोगोष्ठसन्निधौ ॥ द
र्शनानन्तरंतन्नमस्कारमन्त्रोयम् ।
नीलग्रीवशुभग्रीवसर्वकामफलप्रद
। पृथिव्यामवतीर्णोसिखञ्जरीटन
मोस्तुते ॥ त्वंयोगयुक्तोमुनिपुत्रक
स्त्वमदृश्यतामेषिशिखोद्गमेन । त्वं
दृश्यसेप्रावृषिनिर्गतायांत्वंखञ्जना
श्चर्यमयेनमस्ते ॥ द्रव्यविशेषेपरि
स्थितस्यतस्यदर्शनफलंयथा ॥ अ
ब्जे षुगोषु गजवाजिमहोरगेषु राज्य
प्रदः कुशलदः शुचिशाद्वलेषु ।
भस्मास्थिकेशमखलीमतुषेषुदृष्टो-
दुःखंददातिबहुशः खलुखञ्जन
रीटः । अशुभदर्शनेप्रायश्चित्तंय
था । अशुभंखञ्जनंदृष्ट्वादेवब्राह्म-
णपूजनम् । दानंकुर्वीतकुर्याच्चस्ना
नंसर्वौषधीजलैरिति ॥ मादकद्रव्य
विशेषे । भङ्गायाम् ॥ तस्याना
मानिगुणाश्चयथा । भङ्गागञ्जा
मातुलानीमादनीविजयाजया ।
भङ्गाकफहरीतिक्ताग्राहिणीपाच
नीलघुः । तीक्ष्णोष्णापित्तलामोह
मदवाग्वह्निवर्द्धनी ॥ इतिभावप्र
काशः ॥ अपिच । शक्राशनंतुती
क्ष्णोष्णंमेहकृत्कुष्ठनाशनम् । बल
मेधाग्निकृच्छ्लेष्मदोषहारिरसाय-
नम् ॥ जातामन्दरमन्थनाज्जलनि
धौपीयूषरूपापुरात्रैलोक्ये विजय-
प्रदेतिविजयाश्रीदेवराजप्रिया ॥ लो

कानांहितकाम्ययाक्षितितलेप्राप्ता
नरैः कामदासर्वातङ्कविनाशहर्ष
जननीयैः सेवितासर्वदा ॥ इतिरा
जवल्लभः ॥ वचायाम् ॥ यमभार्या
याम् ॥ हरीतक्याम् ॥ अलाबुव
त्ताविजयेतिलक्षणम् ॥ जयन्त्या
म् ॥ शेफालिकायाम् ॥ मञ्जि
ष्ठायाम् ॥ शमीभेदे ॥ अग्निमन्थे
। गणिकार्याम् ॥ अष्टमद्वादश
प्रस्त्यगतद्वादशीविशेषे ।

विजयासप्तमी । स्त्री॰ सप्तमीतिथिप्र
भेदे ॥ सायथा । शुक्लपक्षस्यसप्तम्यां
सूर्यवारोयदाभवेत् । सप्तमीविज
यानामतत्रदत्तंमहाफलम् ॥

विजयी । त्रि॰ विजयशीले ॥ विशेषे
णजेतुंशीलमस्य । जिदृक्षीत्यादि
ना॰ इनिः ॥

विजरः । पुं॰ वेदान्तवेद्यआत्मनि ॥
त्रि॰ जरारहिते ॥ विगताजरा
यस्य ॥

विजलम् । न॰ विजिले । पिच्छिले
इतिहेमचन्द्रः ॥ त्रि॰ जलशून्ये ॥

विजल्पः । पुं॰ वाक्यविशेषे ॥ यथा
। व्यक्तयासूययागूढमानमुद्रान्तरा
लया । अघद्विषिकटाक्षोक्तिर्विज
ल्पोविदुषांमतः ॥ इत्युज्ज्वल
नीलमणिः ॥

विजातः । त्रि॰ विकृते ॥ जाते ॥

विजाता । स्त्री॰ जातापत्यायाम् ।

प्रज्ञातायाम् ॥
विजातीय : । त्रि॰ विभिन्नधर्माक्रान्ते ॥ विलक्षणे । भिन्ने ॥ यथाश्वाद्विजातीय : शिलादि : ॥
विजिगीष : । त्रि॰ जयेच्छौ ॥
विजिगीषा । स्त्री॰ विजयेच्छायाम् ॥ स्वोदरपूरणासक्तिनिमित्तकनिन्दात्यागेच्छायाम् ॥
विजिगीषाविवर्ज्जित : । त्रि॰ आद्यूने । औदरिके ॥ स्वोदरपूरणासक्तिनिमित्तकनिन्दात्यागोविजिगीषा॰व्यवसाय : कश्चित्प्रकर्षोवा॰आलस्यात्तेनविहीनोय : केवलमुदराधीनइतिभाव : ॥
विजिगीषु : । त्रि॰ जयैषिणि । जयेच्छाशीले । प्रतिवादिजयकामे ॥ यथा । जेतुमीषणशीलश्चविजिगीषुरितिस्मृत : । इति ॥ शक्तस्यहि विजिगीषो : कार्यसाधनंप्रधानम्॰अन्यत्समयरक्षणायशक्तस्येतिनीति : ॥ विजेतुमिच्छाधातो : कर्मणइतिसन् । सनाशंसभिक्षउ : ॥
विजिघत्स : । त्रि॰ विगताशनेच्छे ॥ विगताजिघत्साक्षुधायस्य ॥
विजिज्ञासितव्य : । त्रि॰ स्वसंवेद्यतामापादयितव्ये॰निजात्मनि ॥ विशेषेणज्ञातुमेष्टव्य : ॥
विजित : । त्रि॰ पराजिते ॥ विजीयतेस्म । जिषभिभवे । क्त : ॥

विजितात्मा । त्रि॰ स्ववशीकृतदेहे ॥ वशीकृतात्म : करणे ॥ विजितआत्मादेहो॰मनोवायेन ॥
विजिताश्व : । पुं॰ पृथो : पुत्रे ॥ त्रि॰वशीकृततुरगे ॥
विजिति : । स्त्री॰ विजये ॥ यथाहदण्डी । क्षितिविजितिस्थितिविहितिव्रतरतय : परगतय : । उरुरुधुर्गुरुदधुवुर्युधिकुरव : स्वमरिकुलम् ॥ इति ॥
विजिलम् । त्रि॰ पिच्छिले । मण्डयुक्तजलयुक्तव्यञ्जनयो : ॥ विजनंविजि : । ओविजीभयचलनयो : । इगुपधात्कितीन् । विजिंलाति । ला॰ । आतोनुपसर्गेक : ॥
विजिविल : । त्रि॰ विजिले ॥ इतिहेमचन्द्र : ॥
विजिहीर्षा । स्त्री॰ विहर्त्तुमिच्छायाम् ॥
विजिह्म : । त्रि॰ कुटिले । वक्रे ॥ विशेषेणजिह्म : ॥
विजुल : । पुं॰ शाल्मलीकन्दे ॥
विजृम्भणम् । न॰ विभ्रमे ॥ विकासे ॥ जृम्भणे ॥
विजृम्भितम् । न॰ चेष्टायाम् ॥ त्रि॰ विकस्वरे । विकासनशीले ॥ अभ्यूर्ज्जिते ॥ उल्लसिते ॥ जृम्भायुक्ते ॥ विजृम्भासञ्जाताअस्य । तारकादित्वादितच् ॥

त्यर्थ इतिकल्पतरु: । अहमितिप्रत्ययेविज्ञानस्कन्धइत्यानन्दगिरि: ॥

विज्ञानावसित : । त्रि॰ विज्ञानेननिश्चिते ॥

विज्ञानिक : । त्रि॰ वैज्ञानिके । प्रवीणे ॥ विज्ञानमस्त्यस्य । अतइनिठनावितिठन् ॥ स्वानुभवत्वर्थीयठन् ॥

विज्ञापनम् । न॰ बोधने । जनावना॰ बुझावना॰इ॰भा॰प्र॰ ॥ विपूर्वाण्यन्तज्ञानातेर्ल्युट् ॥

विज्ञेयम् । न॰ परमात्मतत्त्वे ॥ त्रि॰ विज्ञातव्ये । इदमेवमितिविस्पष्टज्ञानार्हे ॥ विज्ञातुंयोग्य:। ज्ञा॰ । अचोयत् । ईद्यति ॥

विज्यम् । न॰ निर्गुणे धनुषि ॥ विगताज्यायस्मिन्॰यस्माद्वा॰तत् ॥

विज्वर : । त्रि॰ विगतज्वरे ॥ विगतमनस्तापे ॥ विगतोज्वरोयस्य ॥

विझर्झर : । त्रि॰ विषमे ॥

विझामरम् । न॰ चक्षुष: शुक्लचर्मे ॥ इतिकश्चित् ॥

विञ्झोली । स्त्री॰ वीथ्याम् । पङ्क्तौ ॥

विट : । पुं॰ अद्रौ ॥ लवणविशेषे ॥ षिङ्गे । स्वैणे ॥ मूषिके ॥ खदिरे ॥ कामुकानुचरे ॥ धूर्त्ते ॥ कामतन्त्रकलाकोविदे ॥ नारङ्गवृक्षे ॥ वेटति । विटशब्दे । इगुपधलक्षण : क: ॥

विटका । स्त्री॰ वीटिकायाम् ॥ इतिकश्चित् ॥

विटङ्क : । पुं॰ न॰गृहप्रान्तेरचितपक्षिस्थाने । कपोतपालिकायाम् ॥ विशेषेणटङ्क्यन्तेऽत्र । टङ्किबन्धने । हलश्चेतिघञ् ॥ तोरणस्तम्भयोरुपरितर्यङ्निहितेदारुणि ॥ त्रि॰सुन्दरे ॥ यथा । तस्मिन्प्रतीच्छमुनय: षडसज्जमाना : कक्षा : समानवयसावथसप्तमायाम् । देवावचक्षतगृहीतगदौपरार्द्ध्यकेयूरकुण्डलकिरीटविटङ्कवेषौ ॥ इतिभा॰स्क॰स्कन्धे १५ अध्याय : ॥

विटङ्कित : । त्रि॰ अलङ्कृते ॥

विटप:। पुं॰ विटाधिपे । पारदारिकश्रेष्ठे ॥ आदित्यपत्रे ॥पुं॰न॰शाखापल्लवसमुदाये । विस्तारे ॥ स्तम्बे । गुल्मे ॥ शाखायाम् ॥ पल्लवे ॥ मुष्कवङ्क्षणयोरन्तरे मध्यवीच्ये ॥ विटान्पाति । पा॰ । आतोनुपसर्गे क : ॥ यद्वा । विटानांपानम् । पा॰ । घञर्थेक : ॥ वेटति॰विस्थ्यैवा । विटआक्रोशे॰शब्दे च । विटपविष्टपविशिपोलपा : ॰इ॰साधु : ॥

विटपी । पुं॰ पादपे । तरौ । वृक्षे ॥ वटे ॥ विटप : शाखाविस्तारोऽस्यास्ति । अतइनि : ॥

विटप्रिय. । पुं॰ मुद्गरवृक्षे । मोगरा॰इ॰ भा॰ प्र॰ ॥ विटानांप्रिय : ॥

विटमाक्षिक : । पुं॰ धातुविशेषे । ताप्ये । नदीजे । कामारी ।

विटि : । स्त्री॰ पीतचन्दने ॥

विट्कारिका । स्त्री॰ पक्षिविशेषे । गोराख्याम् ॥

विट्खदिर : । पुं॰ दुर्गन्धिखदिरे । अरिमेदे ॥ विड्गन्धि : खदिर : ॥

विट्चर : । पुं॰ ग्राम्यशूकरे ॥ विषं विष्ठांचरति । चर॰ । पचाद्यच् । मूलविभुजादित्वात्कोवा ॥ विषचरोवा ॥

विट्ठल : । पुं॰ अज्ञानुग्राहकेदेवे ॥ यद्वा।दुर्वाचीनाद्यौ।क्षिणाख्या : । विदाज्ञानेनठाम्शून्यान्॰लाति अङ्गस्त्यात्मीयतयागृह्णाति । ला॰ । आतोनुपसर्गइतिक : । विदाज्ञानेनठान्शून्यान्लातिगृह्णातिय : स्वयम् । अज्ञानुग्रह कृद्देवोविठ्ठल : कथ्यतेबुधैरिति प्रक्रियाप्रसाद : ॥

विट्पति : । पुं॰ जामातरि ॥ यथा । मातामहंमातुलञ्चस्वस्रीयंश्वशुरंगुरुम् । दौहित्रंविट्पतिंबन्धुमृत्विग्याज्यौचभोजयेत् ॥ एतान्मातामहादीन्॰दशमुख्यमोभिया द्यसश्रवेभोजयेद् गुरुर्विद्यागुरुराचार्यादि : । विट्दुहितातस्या : पति : । इतिकुल्लूकभट्ट : ॥ भोजयेत्॰श्राद्धे॰इतिशेषोबोध्य : ॥ नृपतौ ॥ वैश्यवर्य्ये ॥

विट्सारिका । स्त्री॰ पक्षिविशेषे । कुणाख्याम् । गुयासाल्क्॰इ॰गौ॰दे॰भा॰प्रसिद्धे ॥

विठर : । पुं॰ वाग्मिनि ॥

विडम् । न॰ कृत्रिमलवणे । पाक्ये । खारीलूण॰इ॰भा॰ ॥ अस्यगुणायथा । विडंसक्षारमूर्द्ध्वाध:कफवातानुलोमनम् । अर्द्ध्वंकफमधोवातंसम्यक्करोतीत्यर्थ : । दीपनंलघुतीक्ष्णोष्णंरूक्षंरुच्यंव्यवायिच । विबन्धानाहविष्टम्भहृद्गग्गौरवशूलनुत् ॥ विडति । विडभेदने ॥ इगुपधज्ञाप्रीकिर:क : ॥

विडङ्ग : । पुं॰ न॰ वेल्ले । चित्रतण्डुलायाम् । कृमिघ्ने ॥ विडङ्गंकटुतीक्ष्णोष्णंरूक्षंवह्निकरंलघु । शूलाध्मानोदरश्लेष्मकृमिवातविबन्धनुत् ॥ त्रि॰अभिज्ञे ॥ विडति ॥ विड॰ । विडआक्रोशेवा । विडादिभ्य : कित्॰इत्यङ्गच् ॥

विडम्बनम् । न॰ अनुकरणप्रतारणे ॥

विडम्बना । स्त्री॰ विडम्बने । अनुकृतौ ॥

विडम्बमान: । त्रि॰ अनुक्रियमाणे ॥

विडम्बित : । त्रि॰ अनुकृते ॥ व्यस्ते ॥ दुर्गते ॥ उपहसिते ॥

विडम्बा : । त्रि॰ उपहासास्पदे ॥

विडार : । पुं० विडाले ॥ रलयोर भेद : ॥

विडारक : । पुं० विडाले ॥

विडाल : । पुं० ओतौ । मार्जारे । वृषदंशके ॥ नेत्रपिण्डे ॥ विडति० विडातिवा । विडआक्रोशे । तमि विशिविडिमृणिकुलिकपिपलिपञ्चि भ्य: कालन् ॥ नेत्रौषधविशेषे ॥ र गण०ऽ । ऽ० ॥

विडालकम् । न० हरिताले ॥ पुं०ने त्ररोगौषधविशेषे ॥

विडालपद : । पुं० तोलकद्वयपरिमा णे ॥ न०मार्जारचरणे ॥

विडालपदकम् । न० कर्षपरिमाणे ॥

विडाली । स्त्री० भूमिकुष्माण्डे । वि दार्याम् ॥ मार्ज्जार्याम् ॥

विडीनम् । न० खगानांगतिप्रभेदे ॥ विशिष्टंडयनम् । डीङ् विहायसा गतौ । स्वादि: । नपुंसकेभावेक्त : । स्वादयओदितइत्यतिदेशात्ओदि त्त्वान्निष्ठानत्त्वम् ॥ विडीनंविचि त्रंपक्षिण : पतनमितिमहाभा- रतं ॥

विडुल : । पुं० वेतसवृक्षे ॥

विडोजा : । पुं० इन्द्रे ॥ वेवेष्टि । विष्लृव्याप्तौ । क्विप् । विट् व्या पकम् ओजस्तेजोऽस्य ॥ विट् सुप्रजासु० मनुष्येषुवा० ओजोयस्ये तिवा ॥

विडौजा : । पुं० पाकशासने । इ न्द्रे ॥ विडति । विडभेदने । इगु पधेतिक : । विडंभेदकमोजोऽ स्य । सान्त : ॥

विड्भम् । न० विड्लवणे ॥

विड्ज : । त्रि० विष्ठायांजाते ॥

विड्लवणम् । न० विडे ॥

विड्वराह : । पुं० विट्चरे ॥

वितंस : । पुं० वीतंसे ॥

वितण्डा । स्त्री० कच्चीशाके ॥ शिला ह्वये ॥ करवीर्याम् ॥ दर्व्याम् ॥ वा दप्रभेदे । परपक्षप्रतिवादे । स्वपक्ष स्थापनहीनायामृविजिगीषुकथाया म् ॥ तथाचन्यायसूत्रम् । सप्रतिप क्षस्थापनाहीनोवितण्डा । यद्यपि तच्छब्देनजल्पोनपरामष्टुंशक्यते० जल्पस्यस्थापनाद्वयवत : प्रतिपक्ष स्थापनाहीनत्त्वस्यविरुद्धत्त्वात् । त थापिस्थापनाद्वयवत्त्वंविहाय० जल्पै कदेश : परामृश्यते । प्रतिपक्षोद्वि तीयपक्ष : । तथाच० प्रतिपक्षस्थाप नाहीनाविजिगीषुकथा० वितण्डेति । नचस्वस्यस्थापनीयाभावात्कथमि यंकथाप्रवर्त्तामितिवाच्यम् । पर पक्षखण्डनेनजयस्यैवोद्देश्यत्त्वात् । परैतु० यत्परपक्षखण्डनेनैवस्वपक्ष सिद्धेरर्थादेवसिद्धे तत्साधनाभावेपि नप्रवृत्त्यनुपपत्तिरितिवदन्ति ॥ १ । ४२ ॥ वितण्डातेपरश्चोऽनया

। तड्भिघाते । गुरोश्चेत्य: ॥

विततः । त्रि० विस्तृते ॥ विशेषेणतत: ॥

विततिः । स्त्री० विस्तारे ॥

वितथम् । न० अनृतेवचसि ॥ त्रि० तद्वति ॥ विगतंतथासत्यंयस्मात्० तत्०वितथम् । अजितियोगविभागात्समासान्तोऽच् ॥

वितन्द्रः । त्रि० जागरूके ॥ तन्द्रारहिते ॥ विगतातन्द्रायस्यसः ॥

वितन्यमानः । त्रि० वितायमाने ॥ तनोतेः कर्मणिलटः शानजादेशः ॥

वितन्वन् । त्रि० विस्तारयति ॥

वितमाः । त्रि० तमोगुणरहिते ॥

वितरणम् । न० दाने ॥ तॄप्लवनतरणयोः विपूर्वः । भावेल्युट् ॥

वितर्कः । पुं० ऊहे ॥ संशये ॥ विपरीततर्के ॥ वितर्कणम् । तर्कभाषार्थश्चुरादौ । भावेघञ् ॥ ज्ञानसूचके ॥

वितर्कणम् । न० वितर्के ॥ तर्क० । ल्युट् ॥

वितर्द्दिः । स्त्री० वेदिकायाम् ॥ विगतातर्द्दिः हिंसाऽस्याः । तर्द्दहिंसायाम् । सर्वधातुभ्यइन्नितीन् ॥

वितर्द्दिका । स्त्री० वेदिकायाम् ॥ स्वार्थेकः ॥

वितर्द्दी । स्त्री० वेदिकायाम् ॥ कृदिकारादितिङीष् ॥

वितलम् । न० पातालप्रभेदे ॥

वितस्ता । स्त्री० नदीविशेषे ॥ तीर्थविशेषे ॥ काश्मीरेवितस्ताख्यंनागसदनमस्ति ॥

वितस्तिः । पुं० स्त्री०कनिष्ठयासहविततेङ्गुष्ठे । द्वादशाङ्गुलपरिमाणे ॥ वितस्यति०वितस्यतेवा । तसु उपक्षये । वौतसेरितिति: ॥

वितानः । पुं० न०यज्ञे ॥ क्रतुकर्मणि । गार्हपत्यकुण्डस्य नामग्नीनामाहवनीयदक्षिणाग्निकुण्डयोर्विहारे ॥ कदके । उल्लोचे चन्द्रातपे ॥ विस्तारे ॥ न०वृत्तविशेषे । अवसरे त्रि०मन्दे ॥ तुच्छे । शून्ये ॥ मन्दे ॥ विताननम्०वितन्यतेवा । तनुविस्तारे । घञ् ॥

वितानकः । पुं० माडहृक्षे ॥ पुं०न० चन्द्रातपे ॥

वितानतनिका । स्त्री० पटमण्डपरज्जौ ॥

वितानमूलकम् । न० उशीरे ॥

वितायमानः । त्रि० वितन्यमाने । विस्तीर्यमाणे । वितनोतेः कर्मणिलटः शानजादेशः । तनोतेर्यक्ीति० वा० आकारादेशः ॥ क्ङिति । अनाङ्क्ते ॥

वितिष्ठमानः । त्रि० अवतिष्ठमाने ॥ समवप्रविभ्यस्थइत्यात्मनेपदम् ॥

वितीर्णः । त्रि॰ दत्ते ॥ अवगाढे ॥

वितुन्नम् । न॰ सुनिषण्णे । विषखप रिया॰ इ॰ भा॰ प्र॰ शाके ॥ शै वाले ॥ विगतन्तुन्नं व्यथनमस्मात् ॥ त्रि॰ व्यथिते ॥

वितुन्नकः । पुं॰ न॰ धन्याके ॥ भाटा मल्योषधौ । तामलक्याम् । भू म्यामलक्याम् ॥ मुस्तावत्पेलवपु रंगुका भंस्या वितुन्नकम् ॥ वितुन्न कं हिमं तिक्तं कषायं कटु कान्तिदम् ॥ कफपित्तास्रश्वासर्प कुष्ठकण्डुविषप्र णुत् ॥ वितुद्यतेऽस्म । तुद् व्यथने कर्मणि क्तः । स्वार्थे कन् ॥ विगत न्तुन्नं दुःखमस्माद्वा । कप् ॥

वितुन्ना । ) वितुन्निका । ) स्त्री॰ तामलक्याम् । भूम्यामलक्याम् ॥ वितुन्नके ॥

वितृप्तः । त्रि॰ सन्तुष्टे ॥ विशेषेण तृप्तः ॥

वितृष्णः । त्रि॰ निष्कामे ।

वित्तम् । न॰ धने । न्यायार्जितध मे ॥ धर्माय यशसेऽर्थाय कामाय स्वज नाय च । पञ्चधा विभजन् वित्तमि हामुत्र च मोदते । प्रभृतिर्हिरण्य रत्नादौ ॥ ज्ञाने ॥ लग्नाद्द्वितीय भवने । त्रि॰ ख्याते । विज्ञाते ॥ विचारिते ॥ विद्यतेऽस्म । विद विचार णे । क्तः ॥ नुदविदेतिपक्षे नत्वा भावः ॥ यद्वा । अवेदि । विद्ऌ लाभे । क्तः । वित्तो भोगप्रत्यय योरिति साधुः ॥ लब्धे ॥

वित्तदः । पुं॰ पूर्वदक्षिणोत्तरद्वारे गृहे ॥ त्रि॰ धनदातरि ॥ वित्तं ददाति । डुदाञ् दाने । आतश्चो पसर्गे इति कः ॥

वित्तपः । पुं॰ कुबेरे ॥ त्रि॰ धनर क्षके ॥ वित्तं पाति । पा॰ कः ॥

वित्तमयः । त्रि॰ धनप्राये ॥

वित्तिः । स्त्री॰ विचारे । ज्ञाने ॥ यथा । सत्यं भावनवित्तिर्व्यपनुद तियतः कर्म नाश्योघटादिर्मिथ्या भूतं च कर्म चपयति न तथा वित्तिघा- त्यं यतस्तत् । इत्थं सिद्धे विभागे स्तु तिभिस्तरगिरा वित्तिघात्यप्रतीतेर्व्य स्तोमिथ्येति सिद्धं न तदपवृतये क र्मजातं समर्थम् ॥ इति ॥ लाभे ॥ सम्भवे ॥ विदेर्भावादौ स्त्रियां क्तिन् ॥

वित्तेशः । पुं॰ धनपतौ । कुबेरे ॥

वित्तैषणा । स्त्री॰ धनलाभेच्छायाम् ॥ कर्मणां साधनं वित्तं तृष्णा वित्तैष- णामता ।

विवस्त्रः । त्रि॰ वासयुक्ते ॥ विपू र्वात् वसेः क्तः ॥

वित्रासः । पुं॰ भये । त्रसी उद्वे गे॰ विपूर्वः । घञ् ॥

विथुरः । पुं॰ वृषभे ॥

विधुरः । पुं॰ चौरे । राक्षसे ॥ व्य थते ॥ व्यथ भयचलनयोः । व्य थेः

सम्प्रसारणं किञ्चेत्युरच् ॥

विद्या । स्त्री० गोजिह्वायाम् ॥

विदत् । त्रि० विदुषि ॥ न० ज्ञाने ॥ वेदनम् । विदज्ञाने । सम्पदादित्वात् भावेक्विप् ॥

विदः । पुं० पण्डिते । वेत्ति । विद० कः ॥

विदंशः । पुं० अवदंशे ॥ विदंश्यते । दंश० । कर्मणि० भावेवाघञ् ॥

विदग्धः । त्रि० चतुरे । दग्धे ॥ नागरे ॥ पण्डिते ॥ अपक्वपक्वे ॥

विदग्धता । स्त्री० विदग्धत्वे ॥

विदग्धा । स्त्री० परकीयान्तर्गतनायिकाप्रभेदे ॥

विदथः । पुं० योगिनि ॥ कृतिनि । प्राज्ञे ॥ वेत्ति । विदज्ञाने । रुदिविदिभ्यांङिदित्यथः ॥ यज्ञे ॥ वेत्ति० अस्मिन्देवान् ॥

विदन् । त्रि० पण्डिते ॥

विदन्दशुः । त्रि० विदंष्टुमिच्छौ । उपदंशेच्छावति । दंशेः सन्नन्ताद्रु प्रत्ययः ॥

विदन्ता । स्त्री० नातिदीर्घायांवराटिकायाम् ॥

विदरः । पुं० स्फुटने । भिदायाम् । फटना०इ०भा० । विदरणम् । दृविदारणे । ऋदोरप् ॥ न०विश्वसारके । नागफणीथूहर०इ०भा० ॥ त्रि० दरशून्ये । निर्भये ॥

विदरणम् । न० विदरे ॥ विद्रधौ ॥

विदर्भः । पुं० कुण्डिनपुरे ॥ सतुवङ्गदेशस्यदक्षिणपश्चिमेवर्त्तते० अधुना० वडानागपुर० इतिख्यातः । भद्रकालीमहापूर्वेरामदुर्गाच्चपश्चिमे । श्रीविदर्भाभिधोदेशोवैदर्भीतत्रतिष्ठति ॥ त्रि० दर्भशून्ये ॥ कर्मठे ॥ विशिष्टेनदर्भेणोपलक्षितः ॥

विदर्भजा । स्त्री० अगस्त्यमुनेः पत्न्याम् । कौशीतक्याम् । लोपामुद्रायाम् ॥ दमयन्त्याम् । रुक्मिण्याम् ॥

विदर्भराजः । पुं० विदर्भदेशाधिपतौ । भीमाभिधे पुराणप्रसिद्धे राजनि । दमयन्तीजनके ॥

विदर्भसुभ्रूः । स्त्री० दमयन्त्याम् ॥

विदर्भाधिपतिः । पुं० कुण्डिनपतौ । भीष्मकाभिधे । रुक्मिणीजनके ॥

विदलः । पुं० रक्तकाञ्चने । पिष्टके ॥ न० वंशादिकृतपात्रविशेषे ॥ वेणुदले ॥ शिफाविदलरज्ज्वाद्यैर्विंदध्यान्नृपतिर्दममितिमनुः ॥ दाडिमवल्कले ॥ द्विधाकृतकलायादौ । दाल०इ०भा० ॥ स्वर्णादिरवयवे ॥

विदला । स्त्री० त्रिवृति ॥ पत्रशून्यायाम् ॥

विदा । स्त्री० ज्ञाने ॥ मनीषायाम् ॥ भिदादित्वाद्विदेरङ् । टाप् ॥

विदायः । पुं० गमनानुमतौ ॥ यथा । क्षणंवाचम्पकवनंगच्छवातिष्ठसु

न्तरि । चणांगदृष्ट्वयाश्यामिविशिष्टं कार्यमस्तिमे । विदार्यदेहिसम्प्रीत्या चणंमांप्राणवल्लभे ॥ इतिब्रह्मवैवर्त्ते श्रीराधांप्रतिश्रीकृष्णवाक्यम् ॥

विदार : । पुं० जलोच्छ्वासे । श्राजौ । युधि ॥ दारणे ॥ विदार्य्यते । इ० । कर्मणिघञ् ॥

विदारक : । पुं० शुष्कनद्यादौवार्य्यर्थंकृतगर्त्ते । कूपके ॥ नद्यादौस्रोतोद्भूधकारिणितरुशिलादौ । कूपके ॥ यात्रायोगान्तरे ॥ यथा । मार्गेश : शनिसंयुक्त : सप्तमेऽस्तगतोयदि : ॥ विदारकमिमं मन्ये प्राहु : पत्नीविनाशकम् ॥ पुनश्च । मार्गेशात्सप्तमेभानु : पञ्चमेक्रूरखेचर : । विदारकाख्यएवासौभार्य्यामरिवशंनयेत् ॥ न० वञ्चचारे ॥ विदार्य्यते । इ० वि दारणे । णिच् । वाहुलकात्कर्मणिएवुल् ॥ यद्वा । विदार्य्यते । कर्मणिघञ् ॥ कुत्सितोविदार : । कुत्सायांक : ॥ त्रि०विदारणकर्त्तरि ॥ विद्दणाति । इ० । एवुल् ॥

विदारकसमाख्य : । पुं० यात्रायांनिषिद्धयोगान्तरे ॥ यथा । भार्य्येशोव्ययगोनीचपुत्रस्थानेशनैश्चर : । विदारकसमाख्योयंयातु : पत्नींनिहन्तिवै ॥ विदारकेणसमाख्यायस्य स : ॥

विदारण : । पुं० कर्णिकारवृक्षे ॥ न० विडम्बे । विडम्बने ॥ भेदे ॥ भेदने ॥ पुं० स्त्री० रणे । सम्पराये । समीके ॥ विदार्य्यतेऽनेन इ० । करणे : । ल्युट् ॥ विदारयतिवा ॥

विदारिका । स्त्री० शालपर्ण्याम् ॥ विदार्य्यर्थे ॥ विदार्य्येव । स्वार्थेक : ॥

विदारिगन्धा । स्त्री० अंशुमत्याम् । शालपर्ण्याम् ॥ विदार्या : गन्ध : विदारिगन्ध : । ङ्यापोरितिह्रस्व : । सोऽस्त्यस्या : ॥

विदारिणी । स्त्री० काश्मर्य्यां ॥

विदारित : । त्रि० भेदिते ॥ विदार्य्यतेस्म । इ० । करण : । क्त : ॥

विदारी । त्रि० विदारणकर्त्तरि ॥ विपूर्वाद्दृणाते: कर्त्तरिणिनि : ॥

विदारी । स्त्री० शालपर्ण्याम् ॥ अष्टादशप्रकारकण्ठरोगान्तर्गतरोगविशेषे ॥ यथा । सदाहतोयंश्वयथुंसुतास्यमन्तर्गलेपूतिविशीर्णमांसम् । पित्तेनविद्याद्वदनेविदारीपार्श्वेविशेषात्सतुयेनशेते ॥ सपुरुषोयेनपार्श्वेन० विशेषाद्वाहुल्येनशेते० तस्मिन्पार्श्वेसाविदारीभवतीत्यर्थ : ॥ इक्षुगन्धायाम् । श्वेतभूकूष्माण्डे ॥ विदारीचीरशुक्लेक्षुगन्धाक्रोष्ट्रीचेत्यमर : ॥ अस्या: गुणास्तु । विदारीमधुरास्निग्धावृंहणीस्तन्यशुक्रदा । शीतास्वर्य्यामूत्रलाचजीवनीवलवर्णदा ॥ गुरु: पित्तास्रपव

नदाहंहन्तिरसायनीति ॥ विदारयति । दृविदारणे० ण्वुल: । पचाद्यच् । गौरादि: ॥ विदार्या:फलं मूलञ्च० विदारी । अनुदात्तादेश्च अ: ०पुष्पमूलेषुबहुलमिति० लुपि० युक्तवद्भाव: ॥

विदारु: । पुं० क्रकचपादे । क्रकलासे ॥

विदाहि । न० परिणामेऽम्लपाकमुपयाते० दाहजनकद्रव्ये ॥ विदाहिद्रव्यमुद्गारमम्लं कुर्यात्तथातृषाम् । हृदिदाहञ्चजनयेत्पाकंगच्छतितच्चिरात् ॥

विदिक्चक्र: । पुं० हरिद्राङ्गपक्षिणि ॥

विदित: । पुं० कवौ ॥ त्रि० बुधिते । अवगते । ज्ञाते । विदिक्रिययातिशयेनाप्ते । विदिक्रियाकर्मभूते । यथा । तस्मिन्ब्रह्मणिविदितेविश्वमशेषंभवेदिदंविदितम् । कारणमृदिविदितायांघटकर्कादायथाऽवगम्यन्ते ॥ ७५ ॥ श्रुते ॥ अर्थिते ॥ वृत्तान्तज्ञानवति ॥ अभ्युपगते ॥ व्याकृते ॥ विद्यतेस्म । विदज्ञाने । क्त: । यस्यविभाषेतीट् ॥ विदितंवेदनमस्यास्तिवा । अर्शआद्यच् ॥

विदिक् । स्त्री० अपदिशं । अपदिशे । दिशोर्मध्ये । अग्निनिर्ऋतिवायवीशानकोणचतुष्टये ॥ दिग्भ्यां विनिर्गता० शान्ताविदिक् ॥

विदिशा । स्त्री० नगरीविशेषे ॥

विदीर्ण: । त्रि० कृतविदारणे । चीरा० फाडा इ० भा० ॥ दृ० । कर्मणिक्त: । ऋतद्रुत्० रपर: । रदाभ्यामितिनत्वम् । णत्वम् ॥

विदु: । पुं० हस्तिकुम्भयोर्मध्यभागे ॥ कुम्भौतुपिण्डौशिरसस्तयोर्मध्ये विदु: पुमान् ॥ वेत्तिसंज्ञामनया तेन । विद० । बाहुलकात्कु: ॥

विदुर: । पुं० नागरे ॥ धीरे ॥ धृतराष्ट्रानुजे । कौरवाणांमन्त्रिणि ॥ त्रि०ज्ञानशीले ॥ वेदनशील: । विदिभिदिच्छिदे: कुरच् ॥

विदुल: । पुं० अम्बुवेतसे ॥ वेतसे ॥ गन्धरसे । बोले ॥ वेत्तिविद्यतेवा । बाहुलकादुलच्०गुणाभावश्च ॥ नम्रवेतसे ॥

विदुषी । स्त्री० पण्डितायांनार्याम् ॥ वेत्ति । विदे: शतुर्वसु: । उगितश्चेतिङीप् ॥

विदुष्मती । स्त्री० पण्डितवत्यांपुर्याम् ॥

विदून: । त्रि० परितप्ते ॥ विदूयतेस्म । टुदुउपतापे । क्त: । ल्वादिभ्यश्चेतिनिष्ठानत्वम् ॥ विशेषेणाटूनोवा ॥

विद्रम् । न० देशविशेषे । बालवा

ये ॥ वालवायाद्रेः समीपवर्त्ति निनगरे ॥ त्रि॰ अतिदूरस्थदेशा दौ। विप्रकृष्टे ॥
विदूरजम्। न॰ वैदूर्यमणौ ॥
विदूरथः। पुं॰ राजविशेषे ॥
विदूरभूमिः। स्त्री॰ विदूरदेशे ॥
विदूराद्रिः। पुं॰ रोहणपर्वते ॥
विदूषकः। पुं॰ क्रीडनीयैकपात्रे। षिड्गे। विटे। व्यलीके। कामकेलौ। चाटुवटौ। वासन्तिके। वैहासिके। प्रहासिनि। परनिन्दाकरे। खले। अभीरौ। सूचके। कण्टके। परद्वेषिणि ॥ नायकविशेषे ॥
विदेशः। पुं॰ परदेशे ॥ कोतिभारः समर्थानां किं दूरं व्यवसायिनाम्। को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥
विदेहः। पुं॰ जनकान्वयभूमिपे। मैथिले ॥ विदेहाः पुं॰ भूम्नि। देशविशेषे। तीरभुक्तौ। तिरहुत इ॰ भा॰ प्र॰ ॥ यथा। गण्डकीतीरमारभ्य चम्पारण्यान्तकं शिवे। विदेहभूः समाख्याता तीरभुक्त्यभिधः स तु ॥ त्रि॰ कायशून्ये। निर्देहे ॥
विदेहमुक्तिः। स्त्री॰ मुक्तिविशेषे ॥ सा यथा। ततः कालवशादेव प्रारब्धे तु क्षयङ्गते। वैदेहीमामकीमुक्तिं याति नास्त्यत्र संशय इति ॥ ततो जीवन्मुक्त्यनन्तरम् ॥
विदेहा। स्त्री॰ मिथिलायाम् ॥
विद्धः। त्रि॰ वेधिते। क्षतच्छिद्रे ॥ क्षिप्ते ॥ सदृशे ॥ बाधिते ॥ ताडिते ॥ विध्यते स्म। व्यधताडने। क्तः। ग्रहिज्येति सम्प्रसारणम् ॥
विद्धकर्णः। पुं॰ विद्धकर्ण्याम् ॥ त्रि॰ कृतकर्णवेधे ॥ विद्धौ कर्णौ यस्य ॥
विद्धकर्णा। ) विद्धकर्णिका। ) स्त्री॰ विद्धकर्ण्याम् ॥
विद्धकर्णी। स्त्री॰ पाठायाम्। अम्बष्ठायाम् ॥ विद्धौ कर्णौ यया॰ यस्या वा। पाककर्णेति ङीप् ॥
विद्ध्यर्थः। पुं॰ विधिफले ॥ कृतिसाध्यत्वमर्थहेतुत्वमनर्थाहेतुत्वञ्चेति तार्किकाणां दर्शनम् ॥ भाट्टमते विद्ध्यर्थस्तु॰ श्येनफलस्यैवाभिचारस्यानर्थहेतुत्वादधर्मत्वम्॰ श्येनस्य तु विहितस्य समीहितसाधनस्य धर्मत्वमेव। अर्थपदव्यावर्त्यन्तु॰ कलञ्जभक्षणादेर्निषिद्धस्यैवेति। फलतोऽनर्थहेतुत्वेन तु॰ शिष्टानां श्येनाभौ नधर्मत्वेन व्यवहारः। तदुक्तम्। फलतोऽपि च यत् कर्म नानर्थेनानुबध्यते। केवलप्रीतिहेतुत्वात् तद्धर्म इति कथ्यते ॥
विध्वंसः। पुं॰ विनाशे ॥ विशि

ष्टोध्वंस : ॥

विद्यमान : । त्रि॰ वर्त्तमाने ॥

विद्या । स्त्री॰ उमायाम् । शिवायाम् । दुर्गायाम् ॥ मन्त्ररूपायाम् ॥ देवताज्ञाने । उपासनायाम् ॥ विज्ञाने ॥ श्रेयोविषयायाम् ब्रह्मविद्यायाम् ॥ अनावृतसंवित्तादात्म्यापन्नायांब्रह्माकारान्त : करणवृत्तौ ॥ आत्मसाक्षात्कारे ॥ वेदार्थपरिज्ञाने ॥ शास्त्रे ॥ आन्वीक्षिकीत्रयीवार्त्तादण्डाख्यासुचतसृषु ॥ यथा । आन्वीक्षिकीं त्रयींवार्त्तांदण्डनीतिञ्चपार्थिव: । तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वित : ॥ आन्वीक्षिक्यात्मविज्ञानं॰धर्माधर्मौत्रयीस्थितौ । अर्थानर्थौतुवार्त्तायांदण्डनीत्यांनयानयौ ॥ विद्याश्चतस्रएवैतायोगक्षेमायदेहिनाम् । विद्याविनीतोनृपतिर्नकृच्छ्रेष्ववसीदति ॥ इति ॥ पुराणादिचतुर्दशसु ॥ यथा । पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदा : स्थानानिविद्यानांधर्मस्यचचतुर्दश ॥ इति ॥ अष्टादशविद्यासु ॥ यथोक्तं विष्णुपुराणे । अङ्गानिवेदाश्चत्वारोमीमांसान्यायविस्तर : । धर्मशास्त्रंपुराणञ्चविद्याह्येताश्चतुर्दश ॥ आयुर्वेदोधनुर्वेदोगान्धर्वश्चेतितेत्रय : । अर्थशास्त्रंचतुर्थन्तुविद्याह्यष्टादशैवता : ॥ इति ॥ तत्राङ्गानिषट्॰यथा । शिक्षाकल्पोव्याकरणंनिरुक्तंछन्दोज्योतिषमिति । ऋग्यजु : सामाथर्वाख्या : वेदाश्चत्वारईरिता : । विचारोवेदवाक्यानांमीमांसाप्रोच्यतेबुधै : ॥ साचपूर्वोत्तरभेदाद्द्विधा । तथाहि । कर्मप्रतिपादनपराजैमिनिप्रणीताद्वादशाध्यायी॰पूर्वमीमांसा । ब्रह्मप्रतिपादनपराव्यासप्रणीताचतुरध्यायी॰उत्तरमीमांसेति । पदार्थनिर्णयपरंतर्कशास्त्रंन्याय: ॰अत्रैववैशेषिकनयस्यान्तर्भाव : । मन्वत्रिविष्णुहारीतादिप्रणीतंधर्मशास्त्रम् । कापिलपातञ्जलपाशुपतपाञ्चरात्रादीनामागमानामपिधर्मशास्त्रएवान्तर्भाव : । सर्गादिपञ्चलक्षणलक्षितम्॰मत्स्यमार्कण्डेयभविष्यभागवतब्रह्मब्रह्माण्डब्रह्मवैवर्त्तवायुवामनविष्णुवराहाग्निनारदीयपद्मलिङ्गगरुडकूर्मस्कन्दभेदादष्टादशविधंपुराणम् । तदुक्तम् । मद्वयंभद्वयञ्चैव॰ब्रत्रयंवचतुष्टयम् । अनापलिङ्गकूस्कानिपुराणानिविदुर्बुधा : ॥ उपपुराणानामप्यत्रैवान्तर्भाव : । रोगोपशमपूर्वकानन्दफलकोऽष्टस्थानसंयुतआयुर्वेद : । शस्त्रास्त्रप्रयोगोपसंहारप्रतिपादकमन्त्रसहित : पादचतुष्टयात्मकोधनुर्वेद: । पदावच्छिन्नतानपरिच्छेदप्रयुक्तावधानेपृथक्षड्जादि

स्वरसमुदायोगान्धर्ववेद : । चतु : षष्टिकलासङ्ग्राहकमीशनसादिशास्त्रमर्थशास्त्रमिति ॥ सर्वद्रव्येषु विद्यैवद्रव्यमाहुरनुत्तमम् । अहार्य्यत्वादनर्घ्यत्वादक्षयत्वाच्चसर्वदा ॥ विद्याददातिविनयं विनयाद्याति पात्रताम् । पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखमितिविष्णुशर्म्मा ॥ दानैनतपसायज्ञैरुपवासव्रतैस्तथा । नतांगतिमवाप्नोतिविद्यायामवाप्नुयादितियम : ॥ विद्यत्यनया॰चात्मामितिवा । विद्-ज्ञाने । संज्ञायांसमजनिषदनिपतमनविदषुञ्शीङ्भृञिणइतिक्यप् ॥ ब्रह्मविद्याक्ति॰हृदयमिथ्यात्वं दृश्यस्तुन : स्वकाशत्वं बोधयति ॥ परापरविभेदेनविद्याद्वैविध्यमीरितम् । ऋग्वेदाद्याऽपराविद्यापरात्त्वचरतत्परा ॥ व्यवहारस्यदृश्येयंविद्याविद्येतिभेदपरिभाषा । नास्त्येवतत्त्वदृष्ट्यातत्त्वं ब्रह्मैवनान्यदस्यस्मात् ॥ तत्त्वदृष्ट्या॰ब्रह्मात्मैकत्वसिद्धान्तदृष्ट्या । तत्त्वम्॰यथार्थस्वरूपम् ॥ गणिकार्यामेधधौ ॥

विद्यागुरु : । पुं॰ आचार्यातिरिक्तउपाध्यायादौ ॥

विद्यातीर्थम् । न॰ सन्ध्यातीर्थे ॥ विद्यादानपात्रे ॥

विद्यादल : । पुं॰ भूर्जवृक्षे ॥

विद्यादाता । त्रि॰ विद्यादानकर्त्तरि ॥ यथा । अन्नदाताभयत्राताप शीतातसत्येवच । विद्यादाताजन्मदातापञ्चैतेपितरोनृणाम् ॥

विद्यादानम् । न॰ अध्यापने ॥ पुस्तकदाने ॥ अन्नदानंमहादानंविद्यादानंततोधिकम् । अन्नेनक्षणिकातृप्तिर्यावज्जीवन्तुविद्यया ॥ अपिच । वाजपेयसहस्रस्यसम्यगिष्टस्ययत्फलम् । तत्फलं समवाप्नोतिविद्यादानोन्नसंशय : ॥ तस्माद्दै बालयेनित्यं धर्मशास्त्रसुवाश्रुते । पठनं कारयेद्राजन्यदीच्छेद्धर्ममात्मन : ॥ गोभूहिरण्यवासांसिशयनान्यासनानिच । प्रयच्छन्तैमदत्ताभिभवन्तिन्नृपसत्तम ॥ धर्माधर्म्मं नजानातिलोकोयं विद्यया विना । तस्मात्सदैवधर्मात्मन् विद्यादानरतोभव ॥ इतिवह्निपुराणे विद्यादाननामाध्याय : ॥ अपिच गारुडे ५१ अध्याये । विद्यांदत्त्वाब्राह्मणायब्रह्मलोकेमहीयते । दद्यादहरहस्तान्तुश्रद्धयाब्रह्मचारिणे ॥ सर्वपापविनिर्मुक्तोब्रह्मस्थानमवाप्नुयात् इति ॥ यस्तुदेव्या गृहेनित्यंविद्यादानंप्रवर्त्तयेत् । सभवेत्सर्वलोकानांपूज्य : पूजापदंव्रजेत् ॥ धर्मार्थंयचनस्यातांशुश्रूषावापितद्विधा । तत्रविद्यानवप्तव्याशुभंबीजमिवो

धरे ॥ विद्यायैवसमंकामंमर्त्तव्यंब्र
ह्मवादिना । आपद्यपिहिघोरायां
नत्वेनामिरिणेवपेत् ॥ विद्याब्रा
ह्मणमेत्याहशेवधिस्तेऽस्मिरक्षमाम्
। असूयकायमांमादास्तथास्यांवीर्य
वत्तमा ॥ यमेवतुशुचिंविद्यान्निय
तंब्रह्मचारिणम् । तस्मैमांब्रूहिवि
प्रायनिधिपायाप्रमादिने ॥ इति-
मनु : ॥

विद्यादेवी । स्त्री० विद्याधिष्ठात्या
म् । सरस्वत्याम् ॥ जिनषोडश
देवीषु ॥ यथा । विद्यादेव्यस्तुषोड
श ॥ १५२ ॥ रोहिणीप्रज्ञप्तीवज्रशृ
ङ्खलाकुलिशाङ्कुशा : । चक्रेश्व
रीनरदत्ताकाल्यथोऽसौमहापरा ॥
गौरीगान्धारीसर्वास्त्रामहाज्वालाच
मानवी । वैरोट्याच्छुप्तमानसीमहा
मानसिकेतिता : ॥ १५४ ॥ इ०
हे०च०॥

विद्याधनम् । न० विद्ययोपार्ज्जिते
वित्ते ॥ यथाहकात्यायन : । उप
न्यस्तेतुयल्लब्धंविद्ययापणपूर्वक
म् । विद्याधनन्तुतद्विद्याद्विभा
गेननियोजयेत् ॥ शिष्यादार्त्विज्य
त : प्रश्नात्सन्दिग्धप्रश्ननिर्णयात्
। स्वज्ञानशंसनाद्वादाल्लब्धंप्राध्यय
नाच्चयत् ॥ विद्याधनन्तुतत्प्राहु
र्विभागेनप्रयोजयेत् । शिल्पेष्वपि
हिधर्मोयं० मूल्याद्यच्चाधिकंभवेत्

साधारणसुवर्णादिकमादाय० कुण्ड
लादिकंनिर्माय० सुवर्णादिमूल्यात्०
शिल्पगुणेनयदधिकमूल्यंस्यात्त
दित्यर्थ : ॥ परंनिरस्ययल्लब्धंविद्य
याद्यूतपूर्वकम् । विद्यातिशयनै
पुण्येन०द्यूतपूर्वकंयल्लब्धमित्यर्थ :
॥ विद्याधनन्तुतद्विद्यान्नविभाज्यं
बृहस्पति : ॥ अस्यार्थंवचनार्थानु
क्रमेणाह । यदीति । यदिभवान्भ
द्रमुपन्यस्यति० तदाभवते० एवम
येतद्देयमितिपणितंयत्रोपन्यासंनि
स्तीर्यलभतेतन्नविभाज्यम् ॥ शिष्या
दध्यापितात्० आर्त्विज्यत : ६
यजमानाद्दक्षिणयालब्धंधनम्० द
क्षिणावनप्रतिग्रहेवेतनरूपत्वात्त
स्या : तथायत्किञ्चिद्विद्ययाप्रश्नं
निस्तीर्य० अपणितमेवयदिकश्चि
त्प्रीतोदद्याति०प्रश्नं निस्तीर्य०
प्रश्नस्यसम्यगुत्तरेदत्तइत्यर्थ : सन्दि
ग्धप्रश्ननिर्णयादितिव्याचष्टे । तथे
ति० तथायोच्चस्मिन्शास्त्रार्थेममसं
शयमपनयति० तस्मैसुवर्णमिदंद
दानीत्युपस्थितस्यसंशयमपनीययल्ल
ब्धम् । तत्रैवविकल्पेनव्याख्यान्तर-
माहयद्वेति । यद्वा० वादिनोवा
दसन्देहे०न्यायकरणार्थमागतयो :
सम्यङ्निरूपणेनयल्लब्धंषष्ठांशादि
कम् । स्वज्ञानशंसनादितिव्याच
ष्टे० तथेति० तथाशास्त्रादिषुप्रक

ष्टज्ञानंविभाव्ययत्प्रतिग्रहादिनाल
ब्धम् । वादादित्यस्यार्थमाह• तथे
ति । तथाद्वयोः शास्त्रज्ञानविवादे•
अन्यथापियत्रकुत्रचिदन्योन्यज्ञान-
विवादे• निर्जित्ययल्लब्धम्• नि
र्जित्य• एककोटिव्यवस्थापनेनवि
वादमपनीय• लब्धम्• वादिपणि
तंराज्ञावाप्रसाददत्तमित्यर्थः । प्रा
ध्ययनादितिव्याचष्टे• तथेति• त
थैकस्मिन्देयेबहूनामुपप्लवे• येन
प्रकृष्टमधीत्य• यल्लब्धम् । शिल्पे
ष्वपीत्यस्यार्थमाह• तथेति• तथा
शिल्पादिविद्यया• चित्रकारसुवर्ण
कारादिभिर्यल्लब्धम्• शिल्पगुणेन
यदधिकंलब्धम् । तथाद्यूतेनापि
परंनिर्जित्ययल्लब्धं• तत्सर्वंविद्या
धनमविभाज्यमितरैरित्यर्थः । त
स्मादायाकयाचविद्यायालब्धमर्ज-
कस्यैवतन्नेतरेषामिति• प्रदर्शना
र्थन्तुकात्यायनेनविस्तारितमितिदा-
यभागः ॥ अत्रनारदः । कुटुम्बं-
बिभृयाद्भ्रातुर्योविद्यामधिगच्छतः
। भागंविद्याधनात्तस्मात्सलभे
ताश्रुतोपिसन्निति ॥ बिभृयादित्ये
कवचननिर्देशान्नवहवः । यदिवि
द्यामभ्यस्यतोभ्रातुः कुटुम्बमपरो
भ्रातास्वधनव्ययशरीरायासाभ्यांसं-
वर्द्धयति• तदातद्विद्यार्जितधने
तस्याधिकारः• अश्रुतोमूर्खः ॥

विद्याधरः । पुं• देवयोनिविशेषे ।
जीमूतवाहनपुष्पदन्तादौ• कामरू
पिणि• खेचरे ॥ विद्यायागुटिका
ञ्जनादिविषयिण्याः• धरोधारकः
॥ रतिबन्धविशेषे ॥ यथा । नार्याञ्ज
ङ्घयुगंधृत्वाकराभ्यांताडयेत्पुनः ।
कामयेन्निर्भयंकामीबन्धोविद्याधरो
मतः ॥ यक्षविशेषे ॥ यथा ॥
विद्याधरयन्त्रम् । न• डमरुयन्त्रे ॥
विद्याधारः । पुं• वर्णवृत्तान्तरे ॥
यथा । नागाधीशैर्नोक्तंवृत्तंविद्या
धारम्• षड्भिः कर्णैः शेषे पूर्णंभू
मौसारम् । स्यादस्मिन्विश्रामोवेदै
र्वेदैर्वेदैः• कृत्वायत्नात्पूर्णंधीरः की
र्त्यायुक्तः ॥ यथा । वन्दे पादाम्भो
जन्नित्यंसीताभर्त्तुः कृत्वासिन्धौ
सेतुंरक्षोनाथंहन्तुः । पैत्र्यामाज्ञां
ज्ञात्वाप्राप्तंराज्यंभ्रातुः स्वीयैः स
र्वैर्लोकैः साकंनाकंयातुः ॥ वि
द्यां धरति । धृञ्• । कर्म्म
ण्यण् ॥
विद्याधिकारी । त्रि• उपनिषन्निषेव
णेनोक्ते ॥ विद्यायाः ब्रह्मविद्या
याः अधिकारी ॥ सद्विविधः•
कृतोपास्तिरकृतोपास्तिश्च । तत्रो
पास्तिसाक्षात्कारपर्यन्तामुपासनां
कृत्वायोज्ञानेप्रवर्त्ततेसमुख्योविद्या
धिकारी । इदानीन्तनस्तुप्रायेणा
कृतोपासनएवौत्सुक्यमात्रात्सहसा

विद्यायांप्रवर्त्ततेसतुगौणोधिकारी॰ तस्यज्ञानस्यसवासनप्रदेशप्रदीपवत्स हसानिवर्त्तनात् । ननु सर्वेषाम पिविदुषामात्मनोनित्यप्राप्तिरूपो मुख्याधिकारः किम्नस्मादविशेषा दविद्यानिवृत्तिरितिचेत्॰शृणु॰अ स्नायमभावः । यस्तूपास्यदेवतासा साक्षात्कारपर्य्यन्तंसगुणोपासनंवि धायविद्यायांप्रवृत्तस्तस्यविचारेयत्ना भावात्पत्तौविघ्नपाभावात्॰आत्मधी र्नित्यप्राप्तैव । यः पुनरुपासनमकृ त्वाश्रवणाद्यनुष्ठायतत्त्वंनिश्चिनोति तस्यचित्तवशीकरणाभावेविघ्नपस भवात्तत्प्रतिनियमविधिः । नच तत्त्वज्ञानेनाज्ञानस्यनष्टत्वाद्विघ्नैवै यर्थ्यमितिशङ्क्यम्॰वशीकरणा भावे॰शास्त्रीयनश्येत्परमार्थबुद्धिरि त्यज्ञानेपरमार्थत्वांशनाशेपि॰जन्म हेतुत्वज्ञानमायायोगात् । अन्यथा वेदान्तेषूपास्तिविधीनामेकाग्रयद्वा राऽद्वितीयब्रह्मपरत्वंनस्यात् । अ तत्तत्पांश्रुतिप्रसिद्धप्रणवोच्चारणपूर्व कमप्रतिबद्धसाक्षात्कारायनिरन्तरं निर्गुणब्रह्मभावनाकार्या । अतएव शास्त्रे॰विदुषोविधिर्नास्तीत्युक्त्वा॰ पुनर्विद्वान्कर्तविधिमर्हतीतिब्रह्म निष्ठाविधीयते॰इत्याद्युक्तिर्नविरु ध्यते । अधिकारिभेदेनव्यवस्थास म्भवात् ॥

विद्यानिधिः । पुं॰ विद्यासम्प्रदाय प्रवर्त्तके ॥

विद्यानैपुण्यकामः । त्रि॰ विद्याति शयमात्रार्थिनि ॥

विद्याप्रयोजनम् । न॰ आत्यन्तिकसंसं सारनिवृत्तौब्रह्मप्राप्तिलक्षणायाम्॥ विद्यायाः प्रयोजनम् ॥

विद्याभीप्सी । त्रि॰ विद्यार्थिनि ॥

विद्यारम्भः । पुं॰ प्राप्तेतुपञ्चमेवर्षे विद्यारम्भञ्चकारयेदितिवचनबोधि तेविद्यायाः प्रारम्भे ॥

विद्यार्थी । त्रि॰ विद्याभीप्सिनि ॥ विद्यैवार्थः सोस्यास्तीति॰इ- नि ॥

विद्यावान् । त्रि॰ विद्याविशिष्टे ॥ पण्डिते ॥ विद्यास्त्यस्य । म- तुप् ॥

विद्याविषयः । पुं॰ परब्रह्मणि॰प्र त्यगात्मभूते ॥ विद्यायाः विष यः ॥

विद्युज्जिह्वः । पुं॰ राक्षसविशेषे ॥ त्रि॰तडिदाभजिह्वे ॥

विद्युज्ज्वाला । स्त्री॰ कलिकारीवृ- क्षे ॥ तडित्प्रभायाम् ॥

विद्युत् । स्त्री॰ मेघे पुष्टप्ये॰दीर्घाका रे॰ज्योतिषि । तडिति । सौदा मिन्याम् । चञ्चलायाम् ॥ साचतु र्विधायथा । वाताय कपिलाविद्युदा तपायहिलोहिता । पीतावर्षायवि

स्रयादुर्भिर्यायासिताभवेत् ॥ सन्यायाम् ॥ विशेषेणद्योतते । द्युतदीप्तौ । भाजभासीतिक्विप् ॥ चि० निष्प्रभे ॥

विद्युत्केश : । पुं० राक्षसविशेषे ॥

विद्युत्प्रियम् । न० कांस्ये ॥

विद्युत्वान् । पुं० मेघे ॥ विद्युत : सन्त्यस्मिन् । मतुप् ॥

विद्युन्माला । स्त्री० अनुष्टुप्छन्दोभेदे ॥ यथा । मोमोगोगोविद्युन्माला । वासोवल्लीविद्युन्मालावर्हश्रेणीशाक्रश्चाप : । यस्मिन्नास्तांतापोच्छित्यैगोमध्यस्थ : कृष्णाम्भोद : ॥ अपिच । उक्तायस्यामष्टौवर्णा : पादेपादेसर्वेदीर्घा: । विश्राम : स्याद्द्वैर्वेदै : साविद्युन्मालानिर्दिष्टा ॥ यथा । आगामिन्योनीयामिन्यो यायायाताभूयोभूय : । अभ्रच्छाया वत्तारुण्यंमानेनानेनस्यात्किन्ते ॥

विद्युन्माली । पुं० राक्षसविशेषे ॥

विद्योपयोग : । पुं० विद्यायेष्टसिद्धौ ॥ चतुर्भिश्चप्रकारैर्विद्योपयुक्ताभवति । आगमकालेन०आगमकालश्चविद्याग्रहणकाल : । १ । स्वाध्यायकालेन०स्वाध्यायकालश्चाभ्यासकाल : । २ । प्रवचनकालेन०प्रवचनकालोऽध्यापनकाल: । ३ । व्यवहारकालेन० व्यवहारोयज्ञानुष्ठनकर्म्मणि । ४ । तत्राद्ययोर्विद्याध्ययंबुद्धिमानित्वाद रपूर्वकमन्नवस्त्रादिलाभरूपोपयोग: । तृतीयेप्रतिष्ठा०सच्छिष्यलाभद्वारार्थप्राप्ति : सत्कारविशेषश्च । चतुर्थे०यज्ञादानुष्ठानकालेऽपशब्दप्रयोगप्रयुक्तप्रायश्चित्ताभाव: ०कर्म्मसाङ्गता०दक्षिणालाभ : प्रतिष्ठाचेत्युपयोग : ०तादृशश्चोपयोग : सर्वाध्ययनएवेतिमहाभाष्यकारादय : ॥

विद्रम् । न० छिद्रे ॥

विद्रधि : । पुं० रोगविशेषे । हृद्रन्थौ । हृद्व्रणे ॥ अस्यसम्प्राप्तिपूर्व्वकंसामान्यंलक्षणंयथा । त्वग्रक्तमांसमेदांसिप्रदुष्यास्थिसमाश्रिता : । दोषा : शोथंशनैर्घोरंजनयन्त्यायताभृशम् ॥ महामूलंरुजावन्तंवृत्तंव्याप्यथवायतम् । सविद्रधिरितिख्यातोविज्ञेय : षड्विधश्चस : ॥ पृथग्दोषै : समस्तैश्चक्षतेनाप्यसृजातथा । विद्रधि : षड्विध: प्रोक्तोविशेषोभाश्वसङ्कटे ॥ जलौकापातनंशस्तंसर्वस्मिन्नपिविद्रधौ । मृदुर्विरेकोलघ्वन्नंस्वेद : पित्तोत्तरंविना ॥ वेदनम् । भिदेर्वहुलमन्यत्रापिसंज्ञाछन्दसोरितिवारक् । यद्वा । विद्रात्सप्रे पलायने । आतश्चोपसर्ग इतिक: । विद्रंधीयतेऽस्याम् । डुधाञ्० । कर्मण्यधिकरणेचेतिकि : ॥ यद्वा । विद्रस्यधानम् । इकृक्ष्यादिभ्य : ॥

विद्रधिनाशन : । पुं० शोभाञ्जनवृक्षे ॥

विद्रवः। पुं॰ विद्रुतौ । पलायने॥ धियि । बुद्धौ ॥ विद्रवणम् । द्रुगतौ । ऋदोरप् ॥ निन्दायाम् ॥ क्षरणे ॥

विद्रावितः। त्रि॰ पलायिते ॥

विद्रुतः। त्रि॰ पलायिते ॥ प्रचलिते ॥ द्रवीभूतेस्वतः प्राप्तद्रवीभावे । विलीने । द्रुते ॥ विद्रवतिस्म । द्रुगतौ । गत्यर्थेतिक्तः ॥

विद्रुतिः। स्त्री॰ पलायने । प्रद्रावे ॥

विद्रुमः। पुं॰ रत्नवृक्षे ॥ प्रवाले ॥ किशलये ॥ विशिष्टोद्रुमः ॥ यद्वा । विशिष्टेद्रौवृक्षेभवः । विशिष्टोद्रुर्मूलोस्यस्यवा । व्युद्रुम्यांमः ॥ त्रि॰विगतद्रुमेभूमिपर्वतादौ ॥

विद्रुमलता । स्त्री॰ नलीनामौषधौ ॥ शुषिराविद्रुमलताकपोताङ्घ्रिर्नटी नली ॥ विद्रुमस्येवलता ॥

विद्रुमलतिका । स्त्री॰ विद्रुमलतायाम् ॥

विद्वत्कल्पः। त्रि॰ ईषदूने विदुषि । विद्वद्देशीये ॥

विद्वत्संन्यासः। पुं॰ सम्यगनुष्ठितैः श्रवणमनननिदिध्यासनैः परन्तत्त्वं विदितवद्भिः सम्पाद्यमाने॰ स्वा मफलभूतेचतुर्थाश्रमे ॥ तस्ययाज्ञवल्क्यादयः सम्पादयामासुः ॥

विद्वान्। त्रि॰ प्राज्ञे । दक्षे ॥ पण्डिते ॥ वेदविदि ॥ विदितसकलवेद्ये । आत्मविदि ॥ व्युत्थानमपरिग्रहञ्चेतिद्वयंविविदिषुणांसाधनत्वेनोक्तम्॰ तत्॰ विदुषांस्वतःसिद्धमित्याह । लोकाश्चयार्थेष णाभ्योव्युत्थानस्वापरिग्रहः । द्वयंयोधमस्मिन्नैवविदुषांनतुयत्नतः ॥ आनन्दैकस्वभावंस्वमात्मानंपश्यतः कुतः । कामः परिग्रहोवास्याद्योकामइतिचश्रुतेः ॥ वेत्ति । विदज्ञाने । विदेः शतुर्वसुरिति पाणिनीयसूत्रादेशः ॥ नञिस्यादिच्छानयुक्तौ विद्वच्छब्दः प्रयुज्यते ॥ विद्वत्त्वञ्चनृपत्वञ्चनैवतुल्यंकदाच न।स्वदेशेपूज्यतेराजाविद्वान्सर्वत्रपूज्यते ॥

विद्विट्। त्रि॰ शत्रौ ॥

विद्वेषः। पुं॰ विद्वेषणे । द्विषअप्रीतौ । घञ् ॥

विद्वेषकः। त्रि॰ विद्वेष्टरि । द्वेषकर्त्तरि ॥ विद्वेष्टि। द्विष॰ण्वुल् ॥

विद्वेषणम्। न॰ विद्वेषे । वैरे ॥ अभिचारकर्मविशेषे ॥ स्निग्धानां द्वेषजननंमिथोविद्वेषणंमतम् ॥

विद्वेषणी। स्त्री॰ स्त्रीविशेषे ॥

विद्वेषी। त्रि॰ शत्रौ । वैरिणि ॥ विद्वेषोस्यस्यास्मिन्वा । इनिः ॥

विधनम्। त्रि॰ विनाशयति ॥

विधवनम्। न॰ कम्पने ॥

विधरणः। त्रि॰ विधारयितरि ॥

विधवा । स्त्री॰ रण्डायाम् । मृतभर्तृकायाम् । विश्वस्तायाम् । पतिहीनाचयानारीकामंभवतुपुत्रिणी । धनधान्यसमृद्धापिविधवेत्युच्यतेबुधैः । विगतोधवोभर्त्तायस्याः ॥

विधा । स्त्री॰ गजान्नने । ऋद्धौ । विधौ । विधानम् । डुधाञ् धारणपोषणयोः । आतश्चोपसर्गे ॥ वेतने ॥ कर्मणिविधीयतेऽनया ॥ प्रकारे ॥ वेधने ॥

विधाता । पुं॰ वेधसि । द्रुहिणे ॥ स्मरे । कामदेवे ॥ विशेषेणदधाति । डुधाञ्॰ । तृच् । विरन्योपसर्गनिवृत्त्यर्थः ॥ मदिरायामितिराजनिर्घण्टः ॥ भृगुमुनेः पुत्रे ॥ विधत्ते कर्माणिदर्शपूर्णमासादीनि॰ तत्फलानिस्वर्गादीनिचविदधातिसजति । पूर्ववत्तृच् ॥

विधातृभूः । पुं॰ नारदमुनौ ॥

विधातायुः । पुं॰ सूर्यशोभायाम् ॥ ब्रह्मणोवयसि ॥

विधात्री । स्त्री॰ पिप्पल्याम् ॥ मद्ये ॥ विधानकर्त्र्याम् ॥

विधानम् । न॰ हस्तिकवले ॥ विधौ ॥ करणे ॥ अप्रवृत्तप्रवर्त्तने ॥ वेदे ॥ विधीयन्तेऽनेनकर्माण्यग्निहोत्रादीनि । डुधाञ्॰ । ल्युट् ॥

विधानगः । पुं॰ पण्डिते ॥ विधानं गायति । गैशब्दे । गापोष्टक् ॥

विधानोक्तः । त्रि॰ विधिशास्त्रबोधिते ॥ विधानेनउक्तः ॥

विधाय । अ॰ कृत्वेत्यर्थे ॥

विधायकः । त्रि॰ विधेर्ज्ञापके । विधानस्यकर्त्तरि ॥ विपूर्वोधाञो ण्वुल् ॥

विधायी । त्रि॰ विधानकर्त्तरि ॥

विधारकः । पुं॰ विधरणे ॥

विधिः । पुं॰ ब्रह्मणि । परमेष्ठिनि । काले ॥ दैवे । नियतौ ॥ विधाने ॥ विधिवाक्ये ॥ प्रकारे ॥ कल्पे ॥ क्रमे ॥ नियोगे ॥ विष्णौ ॥ वैद्ये ॥ यागोपदेशग्रन्थे ॥ कर्मणि ॥ लिङाद्यर्थे ॥ वेदे ॥ कुर्यात्क्रियेतकर्त्तव्यं भवेत्स्यादितिपञ्चमम् । एतत्स्यात्सर्ववेदेषुनियतंविधिलक्षणमितिन्यायविदांस्मरणम् ॥ तथाच॰ पुरुषार्थमुद्दिश्य॰ कर्मोपासनाज्ञानात्मककाण्डत्रयविधायको वेदो॰ विधिरितिफलितोर्थः ॥ प्रमाणान्तरेणाप्राप्तज्ञापकोवेदभागो॰ विधिरितिमीमांसकाः । सचताहशप्रयोजनवदर्थविधानेनार्थवान्॰ याहशंचार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते । यथा॰ अग्निहोत्रंजुहुयात्स्वर्गकामइतिविधिर्मानान्तरेणाप्राप्तं स्वर्गप्रयोजनवद्धोमंविधत्ते॰ अग्निहोत्रहोमेनस्वर्गंभावयेदितिवाक्यार्थबोधः । यत्रकर्म मानान्तरेणाप्राप्तं॰

तत्रतदुद्देशेनगुणमात्रं विधत्ते । यथादध्नाजुहोतीत्यत्र० होमस्याग्निहोत्रं जुहुयादित्यनेनप्राप्तत्वाद्धोमोद्देशेन० दधिमात्रविधानं० दध्नाहोमंभावयेदिति । यत्रतूभयमप्राप्तं० तत्रविशिष्टं विधत्ते । यथा० सोमेनयजेतेत्यत्र० सोमयागयोरप्राप्तत्वात्० सोमविशिष्टयागविधानम् सोमपदेमत्वर्थलक्षणया० सोमवतायागेनेष्टं भावयेदिति० वाक्यार्थबोध :। नचोभयविधानेवाक्यभेद : ० प्रत्येकमुभयस्याविधानात्० किन्तु० विशिष्टस्यैकस्यविधानात्॥ विधिश्चतुर्विध : नियोगविधिरधिकारविधि : प्रयोगविधिश्चेति।। विधिरत्यन्तमप्राप्तौनियम : पाक्षिकेसति । तत्रचान्यत्रचप्राप्तौ परिसङ्ख्याविधीयते ॥ अप्राप्तप्रापकोविधिरितिवैयाकरणा :।। न्यायमतेविधिर्यथा । प्रवृत्ति : कृतिरेवात्रसाचेच्छातोयतश्चसा । तज्ज्ञानं विषयस्तस्यविधि० स्तज्ज्ञापकोयवा ।। विधिजन्यज्ञानात्० प्रवृत्तिर्दृश्यते० सा० इच्छात : ० चिकीर्षात : ० चिकीर्षाचकृतिसाध्यत्वेष्टसाधनत्वज्ञानात्० तज्ज्ञानस्यविषय: कार्यत्वमिष्टसाधनत्वञ्चविधिरितिप्राचीनमतम् । स्वमतमाह० तज्ज्ञापकोयवेति । इष्टसाधनत्वानुमापकप्राप्ताभिप्रायोविधिप्रत्ययार्थ :। इति

हरिदासीयकुसुमाञ्जलि : ॥ विधिविधायकइतिन्यायसूत्रम् । इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यंविधि : ० अग्निहोत्रं जुहुयात् स्वर्गकामइत्यादि ॥ विधीयतेऽनेनसुखदु : खे । डुधाञ : ० उपसर्गेघो : कि : ० ॥ विधत्तइतिविधिर्वा । बाहुलकात्कर्त्तरिकि :॥ यद्वा । विधविधाने । इन् । इगुपधात्किदितिकित्त्वान्नगुण : ॥ विधानमनेनवा । पूर्ववत्कि : ॥

विधिगोचर :। त्रि० विधिकिङ्करे ॥

विधिज्ञ :। त्रि० शास्त्रज्ञे ॥

विधित्समान :। त्रि० विधातुमिच्छति ॥

विधित्सा । स्त्री० विधातुमिच्छायाम् ॥ विपूर्वाद्दधाते : सनिमीमेत्यादिना० इकार: । अत्रलोपोभ्यासस्येत्यभ्यासलोप : तत : स्त्रियामित्यनुवृत्तौ० अप्रत्ययादितिअप्रत्ययेटाप् ॥

विधित्सित :। त्रि० विधातुमीप्सिते । कर्त्तुमिष्टे ॥

विधित्सु :। त्रि० विधातुमिच्छौ ॥ विपूर्वाद्दधाते : सन्नन्तादुप्रत्यय : ॥

विधिदर्शी । पुं० सदस्ये । न्यूनाधिकविचारकेऽऽत्त्विग्विशेषे ॥ विधिंद्रष्टुंशीलमस्य । णिनि : ॥

विधिदृष्ट :। त्रि० यथाशास्त्रंनिश्चिते॥ विधिनादृष्ट : ॥

विधिदेशक : । पुं॰ सदस्ये । विधिदर्शिनि ॥

विधियज्ञ : । पुं॰ विधितोनुष्ठीयमानेवाज्ययज्ञे । दर्शपौर्णमासादौ ॥ विधिविषयोयज्ञ : ॥

विधिवत् । अ॰ यथाविधि । विध्यनुसारेणेत्यर्थे ॥

विधिविषय : । त्रि॰ विधिजन्यप्रयत्नभाव्ये ॥ विधेर्विषय : ॥

विधिहीन : । त्रि॰ यथाशास्त्रबोधितविपरीते ॥ विधिनाहीन : ॥

विधु : । पुं॰ सुधांशौ । सोमे । चन्द्रे ॥ कर्पूरे । अच्युते । हरौ ॥ ब्रह्मणि ॥ राक्षसे ॥ विध्यतिविरहिणम् ॰विध्यत्यसुरान्वा । व्यधताडने । पृभिदिव्यधिगृधिधृषिभ्य : कु : । ग्रहिज्येतिसम्प्रसारणम् ॥

विधुक्षय : । पुं॰ अमावास्यायाम् ॥

विधुत : । त्रि॰ त्यक्ते ॥ निरस्ते ॥ कम्पिते ॥ विशेषेणधुत : ॥

विधुति : । स्त्री॰ कम्पने ॥

विधुन्तुद : । पुं॰ राहौ । सैंहिकेये ॥ विधुंतुदति । तुद॰ । विध्वरुषोस्तुदइतिखश् । मुम् ॥

विधुपञ्जर : । पुं॰ खड्गे ॥

विधुप्रिया । स्त्री॰ चन्द्रपत्न्याम् ॥ दाक्षायिण्योविधुप्रिया : । इतिकोषामरम् ॥

विधुरम् । न॰ प्रविश्लेषे ॥ वैकल्ये त्रि॰विकले ॥ विगताधू : कार्यभार : । ऋक्पूरित्यप् । धुरोविगतइतिप्रादिसमासोवा ॥ न॰प्रत्यवाये ॥ कष्टे ॥

विधुरा । स्त्री॰ रसालायाम् ॥ इ॰मे॰ ॥

विधुरित : । त्रि॰ विश्लिष्टे ॥

विधुवनम् । न॰ विधूनने । कम्पने ॥ धूविधूनने । ल्युट् । गाङ्कुटादिभ्यइतिङित्वाद्गुणाभाव : ॥

विधूत : । त्रि॰ कम्पिते ॥ त्यक्ते ॥ विधूयतेस्म । धूञ्कम्पने । क्त : । यस्यविभाषेतिनेट् ॥

विधूननम् । न॰ कम्पने । विधुवने । धूञ्कम्पनेचुरादि : । ल्युट् । धूञ्प्रियोर्नुग्वक्तव्य : ॥ अश्वादीनामृगाणांकम्पने ॥

विधूनित : । त्रि॰ व्याहते ॥ कम्पिते ॥ धूञोण्यन्तात्कर्मणि॰क्त : । धूञ्प्रीञोरितिनुगागम : ॥

विधूम्र : । पुं॰ धूसरे । कृष्णरक्तमिश्रितवर्णे ॥ त्रि॰तद्वति ॥

विधृत : । त्रि॰ विधारिते ॥ विशेषेणधृते ॥ विष्टब्धे ॥

विधृति : । स्त्री॰ विधरणे ॥

विधेय : । पुं॰ मन्त्रे ॥ विधीयतेविनियुज्यतेत्राह्मणवाक्येनकर्माङ्गत्वेनेतिहरिहरभाष्यम् ॥ त्रि॰विनयग्राहिणि । वचनेस्थिते ॥ विधिजन्यबोधविषये ॥ यथा । अनुवाद्यम

मुख्यातुनविधेयमुदीरयेत् । नह्यल
ब्धास्पदंकिञ्चित्कुत्रचित्प्रतितिष्ठति
॥ विधातुंशक्य : । अचीयत् । ई
प्सति । । गुण :॥ विधिगम्ये । अ
नुष्ठेये । कर्त्तव्ये ॥ वश्ये ॥

विधेयता । स्त्री॰ विधेयत्वे । विधिज
न्यबोधविषयत्वे ॥ यथा ॥ यथात्र
स्नानदानादिषुपापस्यनिषिततयोपयुक्ता
त्राह्मणादित्नानेद्वैगुण्यं॰तथागङ्गा
स्नानादिषुपुण्यस्यविधेयतावच्छेदक
गङ्गादिस्नानेद्वैगुण्यमितिप्रायश्चित्तत
त्त्वम् ॥

विधेयवर्त्ती । त्रि॰ वशवर्त्तिनि ॥ वि
धेयेवर्त्तते॰विधेयंवर्त्तयतिवा । णि
नि :॥

विधेयात्मा । पुं॰ वशीकृतान्त :कर
णे ॥ विधेयआत्माअस्य ॥

विनत :। त्रि॰ प्रणते ॥ भुग्ने ॥ शि
क्षिते ॥ विनमतिस्म । णम॰। क्त :
॥ विशेषेणनतोवा ॥

विनता । स्त्री॰ तार्क्ष्यस्त्रजनन्याम् । सुप
र्णायाम् ॥ पिटकाभेदे ॥

विनतासूनु :। पुं॰ अरुणे । सूर्यसा
रथौ ॥ गरुडे । खगेश्वरे ॥ विनता
या : सूनु :॥

विनति :। स्त्री॰ विनये ॥ विशिष्टान
ति :॥

विनद :। पुं॰ छयाकी । शिलीन्ध्रे ॥

विनम्र :। त्रि॰ विनयिनि ॥ विशेषे
णनम्र :॥

विनम्रकम् । न॰ तगरपुष्पे ॥

विनय :। पुं॰ शिक्षायाम् ॥ प्रणतौ
। विनीतत्वे । निरहङ्कारे । सौशी
ल्ये । अनौद्धत्ये । अवनतौ ॥ वि
नयप्रशंसायथा । विनयोपपन्नान्प्रभू
त्यै कुर्वीतनृपति : सुतान् । अवि
नीतकुमारंहिकुलमाशुविशीर्यते ।
विनीतमौरसंपुत्रंयौवराज्येऽभिषिच
येत् ॥ अपिच । वृद्धांश्चनित्यंसेवेत
विप्रान्वेदविद : शुचीन् । वृद्धसे
वीहिसततंरक्षोभिरपिपूज्यते ॥ ते
भ्योधिगच्छेद्विनयंविनीतात्मापिनि
त्यश :॥ विनीतात्मादिनृपतिर्नवि
नश्यतिकर्हिचित् ॥ बहवोऽविनया
न्नष्टाराजान : सपरिच्छदा :। वन
स्थाअपिराज्यानिविनयात्प्रतिपेदि
रे ॥ वेणोविनष्टोऽविनयान्नहुषश्चैव
पार्थिव :। सुदासोयवनश्चैवसुमुखो
निमिरेवच ॥ पृथुस्तुविनयाद्राज्यंप्रा
प्तवान्मनुरेवच । कुवेरश्चधनैश्वर्यं
ब्राह्मण्यञ्चैवगाधिज :। इतिमनु :
॥ द्विविधोविनय : स्वाभाविक: कृ
त्रिमश्चेतिकौटिल्य :। विशिष्टोन
य :॥ दण्डे ॥ त्रि॰ वणिजि ॥ क्षि
प्ते ॥ निभृते ॥ जितेन्द्रिये ॥

विनयग्राही । त्रि॰ विधेये । वचनेस्थिते
। आश्रवे ॥ विनयंग्रहीतुंशीलमस्य
। सुपीतिणिनि :॥

विनयस्थ : । त्रि० विधेये । आश्रवे । वचनेस्थिते । आज्ञाकारिणि ॥ विनयेतिष्ठति । ष्ठा० । क : ॥

विनया । स्त्री० बलौषधौ । बाट्याल के ॥

विनयी । त्रि० विनयान्विते ॥ विनयोस्यास्ति । इनि : ॥

विनर्द : । पुं० ऋषभकूजितसमस्वरविशेषे ॥ विशिष्टोनर्द : ॥

विनशनम् । न० तीर्थविशेषे । कुरुक्षेत्रे । सरस्वत्या : प्रथमादर्शनस्थले ॥ विनाशे ॥

विनष्ट : । त्रि० अन्तर्हिते ॥ विनश्यति स्म । णश्अदर्शने । गत्यर्थेतिक्त : ॥ छिन्ने । भिन्ने ॥ नाशाश्रये । ध्वंसविशिष्टे ॥ पतिते ॥

विनष्टि : । स्त्री० विनाशे ॥ णशेर्भावेक्तिन् ॥

विनस : । त्रि० विग्रे । गतनासिके ॥

विना । अ० वर्जने । पृथक् । अन्तरेण । ऋते । हिरुक् । विनञ्भ्यांनानाञौनसहेति० निषेधार्थाद्विशब्दान्ना ॥

विनाकृत : । त्रि० विरहिते । भिन्ने ॥ द्वि०त्रि० ॥

विनाम : । पुं० शरीरस्यनम्रतायाम् । व्यथयावपुषोनमने ॥ विनमनम् । णम । घञ् ।

विनामक : । पुं० अधिमासे ॥

विनायक : । पुं० विघ्नराजे । गजानने । हेरम्बे ॥ तार्क्ष्ये ॥ विघ्ने ॥ ॥ जिने ॥ गुरौ ॥ विनयतिहितमनुशास्ति । णीञ् । ण्वुल् ॥ विशिष्टोनायकइतिवा ॥ विगतोनायकोनियन्ताऽस्येतिवा ॥ त्रि०नायकवर्जिते ॥

विनायिका । स्त्री० तार्क्ष्यपत्न्याम् ॥

विनारुहा । स्त्री० विपर्णिकायाम् ॥

विनाश : । पुं० अदर्शने । विनष्टे ॥ ध्वंसे ॥ विनशनम् । णशअदर्शने । । घञ् ॥

विनाशक : । त्रि० विनाशकर्त्तरि ॥ विनाशयतितच्छीलादि : । णश० । विपूर्वोहितुमण्यन्त: । निन्दहिंसक्लिशखादिविनाशपरिक्षिपेत्यादिनावुञ् ॥

विनाशी । त्रि० अनित्ये । देशकालवस्त्वात्मकत्रिविधपरिच्छेदवति ॥ विनष्टंशीलमस्य । णिनि : ॥ विनाशकारणशीले ॥

विनाशोन्मुख : । त्रि० पक्के ॥ नाशोद्यते ॥ विनशनंविनाश : । भावेघञ् । उद्गतंमुखमारम्भोऽस्य । विनाशेउन्मुख : ॥

विनासक : । त्रि० अनासिके । गतनासिके ॥ विगतानासायस्यस : ॥

विनाह : । पुं० कूपाननपिधानके ॥ णहबन्धने । हलश्चेतिघञ् ॥

विनिगमक : । त्रि॰ विशेषेणनितरां बोधके । ज्ञापके ॥
विनिगमना । स्त्री॰ एकतरपक्षपातिन्यांयुक्तौ । वैकल्पिकेषुवस्तुष्वेकस्मिन्नवधारणायुक्तौ ॥
विनिद्र : । त्रि॰ उन्मीलिते । विकसिते । स्फुटिते । निद्रारहिते ॥ विगतानिद्राऽस्य ॥
विनिद्रत्वम् । न॰ निद्रारहितत्वे ॥ प्रबोधे ॥
विनिनीषु : । त्रि॰ विनेतुमिच्छौ ॥
विनिपात : । पुं॰ निपाते । अपपाते । दैवादिव्यसने । दैविकानर्थे । विशिष्टोनिपात : ॥ अवमाने ॥
विनिमय : । पुं॰ परिदाने । प्रतिदाने ॥ व्यतिहारे ॥ व्यत्यये । अन्यस्मिन्नन्याऽभासे ॥ बन्धके ॥ यथा । विक्रयेगोविनिमयैर्दस्वागोमांसखादकेे । व्रतंचान्द्रायणंकुर्याद्वधे साखाद्वधीभवेत् ॥ इतिगोभिलवचनम् ॥ विशेषेणनिमीयते । मीञ् हिंसायाम् । एरच् ॥
विनियोग : । पुं॰ विनियोजने ॥ अनेनेदन्तुकर्त्तव्यंविनियोग : प्रकीर्त्तित : ॥ विशिष्टोनियोग : ॥ विभजने । विनियोगोऽर्पणंफले॰ इ॰ हेमचन्द्र : ॥
विनियोगविधि : । पुं॰ अङ्गप्रधानसम्बन्धबोधकेविधौ ॥ यथा । दध्नाजुहोतीति । सहितृतीयाप्रतिपन्नाङ्गभावस्यदध्नोहोमसंबन्धंविधत्ते॰ दध्नाहोमंभावयेदिति । गुणविधौच धात्वर्थस्यसाध्यत्वेनैवान्वय : । क्रियाश्रयत्वेनापि । यथादध्नेन्द्रियकामस्यजुहुयादित्यत्र॰ दधिकरणत्वेनेन्द्रियंभावयेत् । तत्रकिन्निष्ठमित्याकाङ्क्षायां॰ सन्निधिप्राप्तहोमआश्रयत्वेनान्वेति । एतस्य धे : सहकारिभूतानि॰ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि षट्प्रमाणानि । एतत्सहकृतेनानेनविधिनाङ्गत्वंपरोद्देशसाध्यप्रवृत्तकृतिसाध्यत्वरूपंपाराथ्यपिरपर्यायं ज्ञाप्यते ॥
विनियोजित : । त्रि॰ प्रवर्त्तिते । विनियुक्ते ॥
विनिर्णीत : । त्रि॰ विचार्यस्थापिते ॥ विशेषेणनिर्णीत : ॥
विनिर्देश्य : । त्रि॰ वक्तव्ये ॥
विनिर्धूत : । त्रि॰ दुरवस्थयाचलिते ॥ विशेषेणनितरांकम्पिते ॥ समुन्मूलिते ॥ परित्यक्ते ॥
विनिर्भय : । पुं॰ साध्यगणविशेषे । त्रि॰भयरहिते ॥
विनिर्मुक्त : । त्रि॰ वियुक्ते ।
विनिर्मोक्ष : । पुं॰ विनिर्मुक्तौ ॥
विनिर्वृत्त : । त्रि॰ निष्पन्ने । समाप्ते ॥

विनिवृत्त : । वि॰ प्रवृत्तिविशिष्टे । निरस्ते । शान्ते ॥

विनिवृत्तकाम : । त्रि॰ विवेकवैराग्यद्वारात्यक्तसर्वकर्मणि ॥ विशेषेणनिवृत्त : कामोऽस्य ॥

विनिवेशित : । त्रि॰ प्रतिष्ठापिते । स्थापिते ॥

विनिश्चित : । त्रि॰ प्रमाणतोनिर्णीते ॥

विनिष्कल : । त्रि॰ निरवयवे ॥ विशेषेणनिर्गता : कला : यस्मात् ॥

विनिष्ट : । त्रि॰ विनष्टे ॥

विनीत : । पुं॰ सुवहाश्वे । साधुवाहिनि ॥ वणिजि ॥ दमनकवृक्षे शिक्षितसभ्यभाषे ॥ त्रि॰ जितेन्द्रिये । अपनीते । हृते । निभृते । विनयान्विते । अनुद्धते । नम्रे । शिक्षिते ॥ क्षिप्ते । कृतदण्डे ॥ व्यनायि॰ विनीयतेस्मवा । णीञ् प्रापणे । क्त : ॥

विनीतक : । पुं॰ दमनकवृक्षे ॥ पुं॰ न॰ वैनीतके । परम्परावाहने ॥

विनीय : । पुं॰ पिष्टौषधिविशेषे । कल्के ॥ कपटे । विनीयतेसिद्धिं प्राप्यते ॥ णीञ् । निपूर्वविनीयेतिक्यप् ॥

विनीयमान । त्रि॰ शिक्ष्यमाणे ॥

विनेता । पुं॰ देशके । नियामके ॥ राजनि । इ॰ मे॰ ॥ विशिष्टोनेता ॥ देशिके ॥ इ॰ हे॰ चन्द्र: ॥

विनेय : । त्रि॰ नेतव्ये ॥ विनेतुंयोग्य: । णीञ् । अचोयत् ॥ दण्ड्ये ॥

विनेयक : । पुं॰ आदेशके ॥ राज्ञि ॥

विनोक्ति : । स्त्री॰ अलङ्कारविशेषे ॥ यथा । विनोक्तिश्चेद्विनाकिञ्चित् प्रस्तुतंहीनमुच्यते । विद्याहृद्यापि सावद्याविनाविनयसम्पदम् ॥ किञ्चित्॰ विनाप्रस्तुतंयद्यहीनंदुष्टमुच्यतेचेत्तदाविनोक्तिर्नामालङ्कार इत्यर्थ : ॥ प्रकारान्तरमपि । तत्र त्किञ्चिद्विनारम्यंविनोक्ति : सापि कथ्यते । विनाखलैर्विभात्येषाराजेन्द्रभवत : सभा ॥ तत्प्रस्तुतंकिञ्चिद्विनारम्यञ्चेत्सापिविनोक्तिर्नामालङ्कार : कथ्यते ॥

विनोद : । पुं॰ क्रीडायाम् ॥ यथा । विनोदायचैतन्यमेकंविभज्यद्विधादेवि॰जीवस्वरूपेतिनाम्ना । शिवस्याजीवत्वमापादयन्तीपुनर्जीवमेनंशिवंवाकरोषीति ॥ कुतूहले ॥ चमत्कारविशेषे ॥ अपनोदे ॥ राजगृहविशेषे ॥ आलिङ्गनविशेषे ॥ तल्लक्षणंयथा । नायकोनायिकायादक्षिणपादंवामपादंवास्वमध्यदेशे॰स्वदक्षिणपादंवामपादंवा॰नायिकामध्यदेशेनिधाय॰वक्षसिवक्ष : ॰चोष्ठेष्ठंदत्त्वायदाश्लिष्यतितदेतिकामशास्त्रम् ॥

विनोदित : । त्रि॰ अपनीते ॥ सम्पा

तविशेदे ॥ तारकादित्वादितच् ॥

बिन्दु : । पुं॰ विजयाख्येमुहूर्ते ॥ बिन्दति । विदूलाभे । अनुपसर्गाल्लिम्पविन्दधारीत्यादिनाश : । शेमुचादीनामितिनुम् ॥

बिन्दु : । पुं॰ जलकणायाम् । विप्रुषि । पृषते ॥ दन्तक्षतान्तरे ॥ भ्रुवोर्मध्ये ॥ रूपकार्यप्रकृतौ ॥ लवे ॥ अनुस्वारे ॥ नादोद्भवे ॥ त्रि॰ वेदितरि । ज्ञातरि ॥ विज्ञानशीले ॥ बिन्दति॰ बिदिअवयवे । बाहुलका दुः । पवर्गीयादि : ॥ यद्वा । वेत्तितच्छील: । बिन्दुरिच्छुरितिसाधु : ॥ दातरि ॥ वेदितरि ॥

बिन्दुचित्रक : । पुं॰ मृगविशेषे ॥

बिन्दुभिद्धव : ॰सएयक : ॥

बिन्दुजालम् । न॰ बिन्दुजालके ॥

बिन्दुजालकम् । न॰ तारुण्याज्जायमानेगजमुखादिस्थबिन्दुसमूहे । पद्मके ॥ बिन्दूनांजालकमिव ॥

बिन्दुतन्त्र : । पुं॰ शारिफलके ॥ तुरङ्गके ॥

बिन्दुपत्र : । पुं॰ भूर्जवृक्षे ॥

बिन्दुरेखक : । पुं॰ पक्षिविशेषे ॥

बिन्दुसर : । न॰ हैमवतेसरोविशेषे ॥ यथा । अभ्युत्तरेणकैलासंशिवंसर्वौषधिंगिरिम् । गौरन्तुपर्वतंश्रेष्ठंहरितालमयंप्रति ॥ हिरण्यशृङ्ग : सुमहान्दिव्यौषधमयोगिरि : । तस्यपादेमहद्दिव्यंसर : काञ्चनसन्निभम् ॥ रम्यंबिन्दुसरोनामयत्रराजाभगीरथ : । गङ्गार्थंसतुराजर्षिरुवासबहुला : समा : ॥ दिवंयास्यन्तिमेपूर्वेगङ्गातोयपरिप्लुता : । तत्रत्रिपथगादेवीप्रथमन्तुप्रतिष्ठिता ॥ सोमपादात्प्रसूतासासप्तधाप्रतिभज्यते । यूपामणिमयास्तत्रचितयश्चहिरण्मया : ॥ तत्रेष्ट्वाक्रतुभि : सिद्ध : शक्र : सुरगणै : सह । दिव्यच्छायापथस्तत्रनक्षत्राणान्तुमण्डलम् ॥ दृश्यतेभास्वरारात्रौदेवीत्रिपथगातुसा । अन्तरीक्षंदिवञ्चैवभावयित्वाभुवंगता । भवस्याङ्गेपतितासंरुद्धायोगमायया । तस्यायेबिन्दव : केचित्क्रुद्धाया : पतिताभुवि ॥ कृतस्तुतैर्बिन्दुसरस्ततोबिन्दुसर : स्मृतम् ॥ इतिमात्स्ये १०१ अध्याय : ॥

विन्ध्य । पुं॰ जलयालके । विन्ध्याचले ॥ व्याधे ॥ विरुद्धंध्यायति । ध्यैचिन्तायाम् । आतश्चोपसर्गइतिक: पृषोदरादि : ॥ यद्वा । विद्धस्यते । जिदृशोदीर्घायत् । अन्तर्भावितण्यर्थ: । शकन्ध्वादि: । अघन्यादिर्वा ॥ नर्मदासुरसाद्याश्चनद्योविन्ध्यविनिर्गता : ॥

विन्ध्यकूट : । पुं॰ अगस्त्यमुनौ ॥ विन्ध्याद्रिशृङ्गे ॥

विन्ध्यवासिदेश : । पुं॰ विन्ध्यस्थदेशेषु ॥ यथा । मालवाश्चकरूषाश्चमेकलाश्चोत्कलै : सह । उत्तमार्णा दशार्णाश्चभोजा : किष्किन्धकै : सह ॥ तोषला : कोशलाश्चैवत्रैपुरावैदिकास्तथा । तुमुरास्तुम्बुराश्चैवपट्मान्निषधै : सह । अनूपास्तुण्डिकेराश्चवीतिहोत्रास्त्ववन्तय: । एतेजनपदा:ख्याताविन्ध्यपृष्ठनिवासिन : ॥ इतिमत्स्यपुराणम् ॥

विन्ध्यवासी पुं॰ व्याडिमुनौ ॥

विन्ध्यवासिनी । स्त्री॰ विन्ध्याचलनिवासिन्यांदुर्गायाम् ॥ विन्ध्येनतीर्थेदेवार्थेइतीधीरोमवाभट : । यथा पितृवसावासातिमसाविन्ध्यवासिनी ॥ इतिदेवीपुराणम् ॥

विन्ध्यस्थ : । पुं॰ व्याडिमुनौ ॥ त्रि॰ विन्ध्याचलस्थिते ॥ विन्ध्ये तिष्ठति ष्ठा॰ । क : ॥

विन्ध्या । स्त्री॰ लवलीवृक्षे ॥ त्रुटौ । सूक्ष्मैलायां ॥

विन्ध्याचलनिवासिनी । स्त्री॰ विन्ध्यवासिन्याम् ॥ नन्दगोपगृहेजातायशोदागर्भसम्भवा । ततस्तौनाशयिष्यामिविन्ध्याचलनिवासिनी ॥ विन्ध्याचलेतत्रापिगङ्गातीरेनिवासिनीतिबोध्यम् । अयमवतारोभगवत्याजातएवेतिपुराणप्रसिद्धम् ॥

विन्ध्यावली । स्त्री॰ बलिपत्न्याम् । बाणराजमातरि ॥

विन्ध्यावलीपुत्र: । पुं॰ बाणासुरे ॥

विन्ध्यावलीसुत : । पुं॰ बाणराजे ॥

विन्न : । त्रि॰ विचारिते । लब्धे ॥ स्थिते ॥ जाते । विद्यतेस्म । विद् विचारणे । क्त: । नुदविदेतिवा नत्वम् ॥

विन्यस्त : । त्रि॰ क्रमेणस्थापिते । रचिते ॥ कृतविन्यासे ॥ निक्षिप्ते न्यस्ते ॥ विन्यस्यतेस्म । असु॰ । क्त : ॥

विन्याक : । पुं॰ इक्षाके ॥

विन्यास : । पुं॰ विभज्यस्थापने ॥ यथा । गृहेषुमणिविन्यासोविस्तीर्णोनवदण्डवत् । विष्णुवक्षोरकन्यासोविधेय : सदनोपरि ॥ तेनसर्वाणिनश्यन्तिभरिष्टानिमहीभुजामितियुक्तिकल्पतरु : ॥ विन्यसनम् । असुक्षेपणे । विनिपूर्व : । ततोघञ् ॥ सन्निवेशे ॥ विशिष्टोन्यास : । रचने ॥

विपक्ष : । पुं॰ रिपौ । द्विषि । प्रतिते । भवी ॥ स्वाभाववति । निश्चितसाध्याभाववति ॥ यथा॰ धूमवान्वह्नेरितौ ह्रद : ॥ विरुद्ध: पक्षोस्य । विविध : पक्षोऽस्यवा ॥

विपक्षिका । स्त्री॰ विपक्ष्याम् ॥

विपञ्ची । स्त्री वीणायाम् । वल्लकर्या

म् ॥ विपञ्चीषु सप्तस्वरान् वा दयन्त्यस्तवद्वारिगायन्तिगन्धर्वकन्या : । चत्वंसावधानेनचित्तेनमनात: समाकर्णयत्वंमयाप्रार्थितासि विपंचपतिविस्तारयतिशब्दं । पचि विस्तारे । अन्तादच् । गौरादि : । केलौ । लीलायाम् ॥

विपण : । पुं॰ विक्रये । विक्रयक्रियायाम् ॥ विपणनम् । पणव्यवहारे । घञ् । संज्ञापूर्वकत्वान्नवृद्धि: । खनोघचेतिघोवा ॥

विपणि : । पुं॰ स्त्री॰ विक्रयार्थप्रसारितनानाद्रव्यायांवणिग्वीथ्याम् । पण्यवीथिकायाम् । वणिज्व्यवहार॰बजार॰वाणिज्यावीथी॰इतिच भाषाप्रसिद्धायाम् । पण्यवीथ्याम् । वणिजांविक्रयस्थाने । विपणन्ति॰ अस्यांवा । पण॰ । सर्वधातुभ्यइन् । विपणन्त्यस्यांवा । इकृकृष्यादिभ्य: ॥

विपणी । पुं॰ वणिजि । विपणीव्यवहार : सोऽस्यास्ति । इनि : । बुध भेदे ॥

विपणी । स्त्री॰ पण्यवीथ्याम् । कृदिकारादितिङीष् ॥

विपण्यु : । त्रि॰ विगतव्यवहारे ॥

विपति : । पुं॰ खगेश्वरे । गरुडे ।

विपत्ति : । स्त्री॰ यातनायाम् । आपदि । विपदि । मरणे । विनाशे । यथा । यस्मिन्राशिगतेभानौविपत्तिंयान्तिमानवा : । तेषांतत्रैवकर्त्तव्यापिण्डदानोदकक्रिया ॥ विपदनमनयावा । पदगतौ । स्त्रियांक्तिन् ॥ पुं॰ विशिष्टपदातौ ।

विपथ : । पुं॰ निन्दितपथि । व्यध्वे । दुरध्वे । कदध्वनि । कापथे ॥ विरुद्ध : पन्था : । प्रादयोगताद्यर्थइतिसमास : । ऋक्पूरित्य : ॥

विपत्॰द् । स्त्री॰ विपत्तौ । विपदनमनयावा । सम्पदादित्वात्क्विप् । तृतीयतारायाम् ॥

विपदम् । न॰ नभसि ॥ वीनांवयसां पदंविहारस्थानम् ॥ त्रि॰विगतप्रतिष्ठे ॥

विपदा । स्त्री॰ विपदि ॥

विपन्न : । पुं॰ भुजङ्गमे ॥ त्रि॰विपदाक्रान्ते ॥ नष्टे ॥ विपद्यतेस्म । पद॰ । क्त : । नत्वम् ॥

विपरिणाम : । पुं॰ विशिष्टे : परिणामे ॥

विपरिश्रम : । पुं॰ आयासेसत्यपिश्रमरहिते ॥

विपरीत : । त्रि॰ तम : प्रकाशवदिवान्योन्यव्याहतरूपे । प्रतिकूले । उलटा॰इ॰भा॰ ॥ यथा॰धर्मविपरीतोऽधर्म : ॥ पुं॰रतिबन्धविशेषे ॥ यथा । पादमेकमुरौकृत्वाद्वितीयंकटिसंस्थितम् । नारीषुरमते कामीविपरीतस्तुबन्धक : ॥ अपिच

। पादमेकमुरौकृत्वा द्वितीयंस्कन्धसं स्थितम । कामिन्याः कामयेत्का मौयन्ध : स्याद्विपरीतकः ॥
विपरीतभावना । स्त्री॰ अतस्मिंस्तद्बुद्धौ ॥ यद्यथावस्तुतेतस्यतत्त्वं हित्वा ऽन्यथात्वधीः । विपरीताभावना स्यात्पिचादावरिधीर्य्यथा ॥
विपरीता । स्त्री॰ कामुक्याम् ॥
विपर्ण : । त्रि॰ पर्णरहिते ॥
विपर्णक : । पुं॰ पलाशवृक्षे ॥ त्रि॰ पत्ररहिते ॥
विपर्य्यय : । पुं॰ व्यतिक्रमे । व्यत्यासे । विपर्यासे । व्यत्यये ॥ मिथ्याज्ञाने ॥ यथाशुक्तिं विन्दु रजतमिति ॥ अन्यथाभावे । देहादिष्वात्माभिमानलक्षणे ॥ यथार्थानिश्चये । अतत्त्वज्ञाने ॥ विपर्ययादिष्यतेबन्धः । अविद्यास्मितारागद्वेषाभिनिवेशाः यथासङ्ख्यंतमोमोहमहामोहतामिस्रान्धतामिस्रसञ्ज्ञकाः पञ्चविपर्ययभेदाभवन्ति ॥ लक्षणन्तुयथा । किञ्चित्साभान्यतोन्यत्रमतिरन्याविपर्ययः । किञ्चित्साधारण्यादन्यस्मिन्नन्याहङ्गौबुद्धिर्विपर्यय : । मरुमरीचिकास्विवजलावगति : ॥ अपिच । विपर्ययस्तमोयोनिर्मिथ्यारूपतयासच । सामान्यमात्रकाभासात्सत्त्वात्मेतिविनिश्चितः ॥ विपर्ययस्यमिथ्यारूपत्वात्तमः प्रभवत्वम्॰ सचविपर्ययः साधारण्यमात्रप्रथनात्प्रकाशरूपः सत्त्वात्मकोपिनिश्चितः ॥ विपर्ययणम् । दूणगतौ । एरच् ॥
विपर्य्यस्त : । त्रि॰ मिथ्याज्ञानविशिष्टे ॥ विपरीते ॥
विपर्य्याय : । पुं॰ विपरीतमयने । अन्यथाऽन्यरूपग्रहणे ॥
विपर्य्यास : । पुं॰ विपर्यये । व्यत्यये । व्यतिक्रमे । अतस्मिंस्तद्बुद्धौ । अविवेके ॥ विपर्य्यसनम् । असु॰ । घञ् ॥
विपव्य : । त्रि॰ शोधनीये ॥
विपश्चित् । त्रि॰ विदुषि । दोषज्ञे । पण्डिते । अत्यन्तविवेकिनि । मेधाविनि ॥ सर्वज्ञे॰निरस्तभेदे॰अविपरिच्छिन्नचैतन्यस्वभावे ॥ परमात्मनि ॥ विप्रकृष्टंनिश्चिनोति॰चेतति॰चिन्तयतिवा । पृषोदरादिः ॥
विपाक : । पुं॰ पचने ॥ स्वादे ॥ कर्मणोविसदृशफले ॥ कर्मणः परिणामे । दुर्गतौ ॥ जात्यायुर्भोगात्मकेकर्मफले ॥ पचनंपाकः विशिष्टपाकः विरुद्धः पाकोऽस्यवा ॥ विपच्यतेवा । घञ् ॥ विपाककटुयत्कर्मनतच्छंसन्तिपण्डिताः ॥ जाठरेणाग्निनायोगात्यदुदेतिरसान्तरम् । रसानांपरिणामान्तेसविपाकइति

स्मृतइतिसुश्रुत : ॥ अपिच । मि
ष्ट : कटुश्चमधुरममूलोऽम्लं पच्य
ते रस : । कटुतिक्तकषायाणांपा
क : स्यात्प्रायश : कटु : ॥ तथा
चवाग्भट : । त्रिधारसानांपाक :
स्यात्स्वाद्वम्लकटुकात्मक : । प्रा
य : पदेन॰ व्रीहि : स्वादुरम्लविपा
क : शिवाकषायामधुपाका । शु
ण्ठीकटुकमधुरपाकीत्यादि : ॥
विपाकानांगुणायथा । स्निग्धकृन्म
धुर : पाकोवातपित्तहरोमत : ।
अम्लस्तुकुरुतेपित्तंवातघ्नं पूगदा-
पह : ॥ कटु : करोतिपवनंकफं
पित्तञ्चनाशयेत् । विशेषएषरसतो
विपाकानांनिदर्शित : ॥

विपाचनम् । न॰ नरके ॥

विपाट : । पुं॰ वाणे अस्त्रकण्टके
। शरे ॥ विपाटयति । पचाद्यच् ॥

विपाण्डु : । पुं॰ शुभ्रे ॥ अति
शुभ्रे ॥ त्रि॰ तद्वति ॥

विपादिका । स्त्री॰ । पादस्फोटे । बि
वाइ॰ इ॰ भा॰ ॥ प्रहेलिकायाम् ॥
वैपादिकंपाणिपादेस्फुटनंतीव्रवेद
नम् । कण्डुमद्भि : सरागैश्चग
ण्डैरलसकंचितम् ॥ विपादिका
वातश्लेष्मोद्भवेतिमाधव : । अयंकु
ष्ठरोग : ॥

विपाट् । स्त्री॰ विपाशायाम् ॥ पा
शंविमोचयति । सख्यापपाशेस्या

दिना॰पाशान्मोचनइतिणिच् ।
क्विप्चेतिक्विप् ॥

विपाश : । त्रि॰ पाशरहिते ॥

विपाशा । स्त्री॰ नदीविशेषे । विपा
शि ॥ पाशंविमोचयति । सत्या
पपाशेत्यादिना॰पाशान्मोचनइति
णिच् । तत : पचाद्यच् । पुत्र
शोकादेवगलेपाशंबद्ध्वाप्रविष्टंवशिष्ठं
पाशच्छेदात्विपाशितवतीविमुक्त
पाशंकृतवतीतिविपाशा । अस्या
जलस्यगुणायथा । शतद्रोर्विपा
शायुज : सिन्धुनद्या : सुशीतंल
घुस्वादुसर्वामयघ्नम् । जलंनिर्मलं
दीपनंपाचनञ्चप्रदत्तेवलंबुद्धिमेधा
युषञ्चेतिराजनिर्घण्ट : ॥

विपिनम् । न॰ अरण्ये । गहने ।
वने ॥ वेपन्तेऽत्र । टुवेपृकम्पने ।
वेपितुह्योर्ह्रस्वश्चेतीनन् ॥ विशेषि
णापिय्यन्वा । पिगतौ । वाहुल
कान्नक् ॥

विपिनतिलकम् । न॰ अतिशक्वरी
छन्द : प्रभेदे ॥ तल्लक्षणंयथा ।
विपिनतिलकंनसनरेफयुग्मैर्भवे
त् । यथा । विपिनतिलकंविकसि
तंसिन्नागमेमधुकृतमदैर्मधुकरै :
क्वणद्भिर्वृतम् । मलयमरुतारचित
लास्यमालोकयन्व्रजयुवतिभिर्विह
रतिस्ममुग्धोहरि : ॥

विपीड : । त्रि॰ निर्बाधे ॥

विपुल: । पुं॰ मेरुपश्चिमभूधरे । मेरो: स्थैर्यायविधसासृष्टा पुष्पतुष्टुवि ष्कम्भशैलेषु॰प्रतीच्यांविपुलोनाम विष्कम्भशैलोनीलवर्ण: पञ्चाश त्सहस्रयोजनोच्छ्रायोस्ति॰यच्चयोज नसहस्रोन्नतिमानश्वत्थपादपोस्ति ॥ सुमेरौ ॥ हिमाचले ॥ त्रि॰पृथुले । विशाले ॥ अगाधे । दक्षिणपश्चिमो त्तरोरस्के ॥ विपोलति । पुलमह त्त्वे । इगुपधेतिक: ॥ विशिष्टपुलके ॥

विपुलपुलिना । स्त्री॰ नद्याम् ॥

विपुलरस: । पुं॰ इक्षौ ॥

विपुला । स्त्री॰ पृथ्व्याम् । क्षितौ ॥ आर्याप्रभेदे । यथा । पथ्याविपुला चपलामुखचपलं जघनचपलाच । गीत्युपगीत्युद्गीतयआर्यागीतिश्चन वधार्या ॥ संलङ्घ्यगणत्रयमादिमं शकलयोर्द्वयोर्भवतिपादः । यस्या स्तांपिङ्गलनागोविपुलामितिसमा ख्याति ॥ पुंसांकालिकालव्यालह तानांनास्त्यपहतिरत्यापि । वीर्यं विपुलामुखेचेत्स्यात्‌गोविन्दाख्यम न्त्रोक्ति: ॥

विपुलांस: । त्रि॰ मांसलोन्नतभुज शिरस्के ॥

विपुलाश्रवा । स्त्री॰ गृहकुमार्याम् ॥

विपूय: । पुं॰ रज्ज्वादिकरणाय शोधयितव्ये॰ मुञ्जे ॥ विपूयते । पूञ्पवने । विपूयविनीयेतिक्यप्। मुञ्जे ॥ यथा । वसानां वल्कलेशुद्धेर्विपूयै: कृतमेखला म्। वामामञ्जनपिण्डाभांदशिड नीमजिनान्तरामितिभट्टि: ॥

विपोथित: । त्रि॰ आघातेनाध: पातिते ॥ आमर्दिते ॥

विप्र: । पुं॰ ब्राह्मणे ॥ तल्लक्षणं यथा । जन्मनाब्राह्मणोज्ञेय: संस्कारैर्द्विजउच्यते । विद्यायाया तिविप्रत्वंत्रिभि: श्रोत्रियलक्षणमि तिप्रायश्चित्तविवेक: ॥ विशेषेणप्रा प्रातिपूरयतिषट्कर्माणि । प्रा पूर्त्तौ । आतश्चोपसर्गेकृतिक: ॥ उप्यतेधर्मबीजमत्रवा । डुवप्॰ ऋज्रेन्द्रेतिसाधु: ॥ क्षिपातिवा॰ विपतिवा । विपक्षेपे ॥ अश्व त्थे ॥

विप्रकर्ष: । पुं॰ विशेषे ॥ विशि ष्ट: प्रकर्ष: ॥

विप्रकार: । पुं॰ अपकारे । निकारे ॥ विप्रकरणम् । कृञोभावेघञ् ॥ तिरस्कारे ॥

विप्रकाष्ठम् । न॰ तूलवृक्षे ॥

विप्रकृत: । त्रि॰ तिरस्कृते । निकृते । यस्यापकार: कृतस्तस्मि न् ॥ विप्राकारि । क्त: ॥ विप्रियाकृते ॥

विप्रकृति: । स्त्री॰ विप्रकारे ।

विप्रकृष्टम् । न॰ ब्राह्मणपक्षसंज्ञे ॥

यथा । अध्यापनमध्ययनं यजनं याजनं दानं द्विजेषु यजनं प्रतिग्रह : । कर्माणि षड् यज्ञापवर्गे नैष्कर्म्यं वा अध्ययनं तथेति राट् ॥ वैश्य : सदा प्रापविकोक्ति जन्मा द्विजन्मसेवारतिरेतदीयम् । कर्मेत्यऽकृत्यव्यवहार आनि कर्माण्यनेकान्यपरान्यजानाम् ॥ यद्वर्ण कर्माणि तदेवकालेसंसाधितान्येव हि यन्ति सिद्धिम् । ततस्ववर्णं व्यवहारकालं नयेन्मनीषीयुगपन्नयद्विम् ॥ अथ विप्रादीनां स्वभावकृत्यमाह । शमोदम : सत्यमथार्जवं क्षमा शौचं तपोज्ञानकथामराधनम् । तीर्थं तथास्तिक्यमभिज्ञसङ्गति : स्वभावकर्माग्रजनेर्मखव्रतम् ॥ शौर्यं बलं धैर्यं धृतिर्धृतिर्मृधं विद्या सुदौष्ठ्यं स्वरतापवर्ज्जनम् । क्षमाभृत : कर्मनिसर्गजं विशोवाणिज्य गोजीवनकर्षणन्त्विति ॥ द्विजाति सेवावनिदेवताश्रयाधर्मो विधि : शूद्रनिसर्गकर्मच । स्वभावकर्मप्रविहाय योऽन्यथास्वयमाचरेत् सोऽन्यकर्मनर्माक् ॥ इतिकालिदास : ॥

विप्रकृष्ट : )<br>विप्रकृष्टक : ) त्रि॰ दूरे ॥ विप्रकृष्यते स्म । कृषि : क्त : । स्वार्थेकनि विप्रकृष्टकोपि ॥

विप्रचित्ति : । पुं॰ दनोर्गर्भेकश्यपात्जातेऽसुरविशेषे ॥



विप्रतिपत्ति : स्त्री॰ विरुद्धकोटिद्वयोपस्थापकेशब्दे । विरुद्धाप्रतिपत्ति : ॥ विरोधे ॥ विकृतौ ॥

विप्रतिपन्न : । त्रि॰ विरुद्धतयावगते ॥

विप्रतिषिद्ध : । त्रि॰ निषिद्धे ॥

विप्रतिषेध : । पुं॰ तुल्यबलविरोधे ॥ परस्परविरोधे । विप्रतिपूर्वात् कर्मव्यतिहारे वर्त्तमानात् सेधतेर्घञ् ॥

विप्रतिसार : । पुं॰ पश्चात्तापे ॥ विप्रतिसरणम् । सृगतौ । घञ् । उपसर्गस्य घञीति पाक्षिको दीर्घाभाव: ॥

विप्रतीसार : । पुं॰ पश्चात् तापे । अनुतापे । कौकृत्ये ॥ अनुशये ॥ रुषि । रोषे ॥ विप्रतिसरणम् । सृ॰ । घञ् । उपसर्गस्य घञीति दीर्घ : ॥

विप्रदेश : । पुं॰ फलमूलादिशुष्कद्रव्ये ॥ व्राह्मणतमो ॥ विगत : प्रदेशो ॰ विशेषेण प्रकृष्टो वा देशोस्य । विप्रस्य वा देश : ॥

विप्रप्रिय : । पुं॰ पलाशे ॥ विप्राणां प्रिय : ॥ विष्णौ । श्रीरामचन्द्रे । त्रि॰ व्राह्मणवल्लभे । विप्रा : प्रिया यस्य स : ॥

विप्रदास : । पुं॰ कायस्थे । मसीशे ॥

विप्रयाणम् । न॰ पलायने ॥

विप्रयुक्त : । त्रि॰ विभिन्ने । विश्लिष्टे ॥

विप्रयोग : । पुं॰ विरहे । व्राह्मणे : सहसङ्गमे ॥ विप्रयोजनम् । युजिर् योगे । घञ् ॥ विरुद्ध : प्रयोगो वा ॥ विशेषेण प्रकृष्टो वा योग : ॥ विप्राणां वा योग : ॥ विप्रलम्भे ॥

विरहोविसम्वादेवीतिस्वामी ॥ रागिणोर्विच्छेदे ॥ इतिसुभूति: ॥

विप्रलब्ध: । त्रि॰ वञ्चिते ॥ विप्रलभ्यतेस्म । डुलभष्प्राप्तौ । क्त: ॥

विप्रलब्धा । स्त्री॰ स्वीयादिनायिकाभेदे ॥ सङ्केतनिकेतनेप्रियमनवलोक्य समाकुलहृदयाविप्रलब्धेतिलक्षणम् ॥

विप्रलब्धा । त्रि॰ प्रतारके ॥

विप्रलम्भ: । पुं॰ विसंवादे । अभीष्टतासम्पादने ॥ वञ्चने ॥ वियोगे । विरहे । रागिणोर्वियोजने ॥ विप्रविप्रलम्भनम् । डुलभष्प्राप्तौ । घञ् । उपसर्गादितिनुम् ॥ विप्रलब्धि: । लभेर्घञ्वा ।

विप्रलम्भक: । पुं॰ मिथ्यावचने: परस्ववञ्चके । ठग१इ॰भा॰प्र॰ ॥

विप्रलाप: । पुं॰ विरोधोक्तौ । अन्योन्यविरुद्धवचने ॥ यथा॰एकोब्रूते॰ आगताकल्याणीति॰अन्योब्रूतेनहीति । तथाभ्युदाजहारसर्वानन्द: । एक:स्वमन्मधुसरोजमवैतिवक्त्रमन्य: सुधाकिरणविम्बमदोमृगाक्ष्या: । यूनोर्मुहुर्विवदतोर्वदनेनभूसु: सिञ्चान्तरन्मधुपराविगतागतानीति ॥ विरुद्ध: प्रलाप: ॥ अनर्थकवाक्ये । अपार्थवचने ॥

विप्रलिप्सा । स्त्री॰ वञ्चनेच्छायाम् ।

विप्रलिप्सु: । त्रि॰ वञ्चके ॥

विप्रलुम्पक: । त्रि॰ अन्यायेनधनग्राहिणि ॥

विप्रलोभी । पुं॰ अशोकपादपे । किङ्किराते ॥

विप्रवसित: । त्रि॰ कृतदूरदेशगमने ॥

विप्रश्निका । स्त्री॰ अनागतलक्षणादिनाशुभाशुभनिरूपिण्याम् । ईक्षणिकायाम् । दैवज्ञायाम् ॥ विविध: प्रश्नोस्त्यस्या: । ठन् ॥

विप्रसृत: । त्रि॰ विक्षिप्ते ॥ विप्रसरतिस्म । सृगतौ । गत्यर्थेतिक्त: ॥

विप्रिय: । पुं॰ अपराधे । आगसि । त्रि॰ अप्रिये ॥

विप्रियकृत् । त्रि॰ शठे ॥

विपुट् । स्त्री॰ विन्दौ । जलकणे ॥ प्रुषुदाहे । सम्पदादित्वाद्भावेक्विप् । विगताप्रुडाप्रुट्दाहोऽस्मात् ॥

विप्लव: । पुं॰ डिम्बे । धाकडलुण्टनादौ ॥ अश्वस्त्रकलहे ॥ विप्लवनम् । प्लुङ्गतौ । ऋदोरप् ॥ परचक्रादिभये ॥ राष्ट्राद्युपद्रवे ॥ नाशे ॥ मतिसम्मोहे ॥

विप्लाव: । पुं॰ अश्वस्यप्लुतगतौ ॥

विप्लुत: । त्रि॰ व्यसनार्ते । विह्वले । खण्डिते ॥ विप्लवनम् । प्लुङ् । क्त: ॥

विप्लुताक्ष: । त्रि॰ अश्रुपूर्णनयने ।

विप्रुति : । स्त्री॰ स्वभावच्युतौ ॥

विप्रुष्ट : । त्रि॰ निर्दग्धे ॥ त्रिशेषि पप्रुष्ट : ॥

विफल : । त्रि॰ निरर्थके । मोघे ॥ विगतंफलंयस्य ॥

विफला । स्त्री॰ शीतकाम् ॥ ऋतुहीनायाम् ॥

विवध : । पुं॰ पर्याहारे । उभयतोबद्धशिक्यस्कन्धवाह्यकाष्ठे ॥ अध्वनि ॥ भारे ॥ विगतोवधोऽस्मात् ॥

विवधिक : । त्रि॰ वैवधिके ॥ विवधेनचरति । विभाषाविवधादितिष्ठन् । ङीपि॰विवधकी ॥

विबन्ध : । पुं॰ आनाहे । आध्माने । मूत्रादिरोधे ॥ अथास्यचिकित्सा । तुल्यकारणकार्यत्वादुदावर्त्तहरींक्रियाम् । अनाहेपिचकुर्वीतविशेषश्चाभिधीयते ॥ पिप्पल्यकुष्ठवचावीतक्योविचतुष्पञ्चभागिका : । गुडेनतस्यावटिकाहरत्यानाहमुल्बणम् ॥ वर्तिस्त्रिकटुकसैन्धवसर्षपगृहधूमकुष्ठमदनफलै: । मधुनिगुडेवापक्वैर्निर्मितास्वाङ्गुष्ठपरिमाणा ॥ वर्त्तिरियंदृष्टफलाशनै : प्रणिहितागुदेघृताभ्यक्ते । आनाहोदावर्तौशमयतिजठरंतथा गुल्मम् ॥ त्रिकटुकाद्यावर्तिर्भावप्रकाशे ॥ विबन्धनम् । बन्धबन्धने

। घञ् ॥ करणेवाघञ् ॥

विबाधा । स्त्री॰ विहेठने ॥

विविध : । त्रि॰ नानाप्रकारे ॥

विबुद्ध : । त्रि॰ तत्त्वसाक्षात्कारवति ।

विबुध : । पुं॰ ज्ञे । पण्डिते ॥ सुरे । देवे ॥ चन्द्रे ॥ विशिष्टोबोधोयस्य । विशेषणबुध्यतेतत्त्वमितीतिवा । बुधअवगमने । इगुपधेतिक : ॥

विबुधान : । पुं॰ आचार्ये ॥ पण्डिते ॥ देवे ॥

विबुधानुग : । पुं॰ किन्नरादिषु ॥

विबुभूषु : । त्रि॰ विविधंभवितुमिच्छौ ॥

विबोध : । पुं॰ प्रबोधे ॥

विबोधनम् । न॰ प्रबोधने । जागरणा॰ इ॰ भा॰ ॥

विभक्त : । त्रि॰ विभज्यस्थापिते । कृतविभागे ॥ विभिन्ने । परस्परव्यावृत्ते ॥ प्राप्तविभागे ॥ विभज्यतेस्म । भज॰ । कर्मणिक्त : ॥ विभक्ताभ्रातरइत्यत्र तु॰ विभक्तमेषामस्तीतिमत्वर्थीयोऽर्शआद्यजित्यच् । नतुकर्त्तरिक्त : । सकर्मकेभ्यस्तस्यविधानाभावात् ॥ अथवोत्तरपदलोपोद्रष्टव्य : । विभक्तधनाविभक्ता : । गम्यार्थस्याप्रयोगएवलोपोभिमत : । तेनविभक्ताभ्रा

तरघ्नत्वधनस्ययद्विभक्तस्वंतत् भातृत्वाचेष्यते ॥ विभक्ताः पितृधनं यस्तुस्वीयांशंप्रतिपादयेत् । पुनर्विभज्यतद्द्रव्यमप्राप्तांशायदापयेत् ॥

विभक्तज: । पुं० विभागानन्तरंजाता पत्ये ॥ पुत्रे : सहविभक्तेनपि चायत्स्वयमर्जितम् । विभक्तजस्यतत्सर्वमनीशा : पूर्वजा: स्मृता : ॥

विभक्ति: । स्त्री० विभागे ॥ सुप्तिङो : ॥ यथा । सङ्ख्याख्यव्याप्यसामान्ये : शक्तिमान्प्रत्ययस्तु य : । साविभक्तिर्द्विधाप्रोक्तासुप्तिङ्चेतिप्रभेदत: ॥ सङ्ख्यात्वावान्तरजात्यवच्छिन्नशक्तिमान्य : प्रत्यय : साविभक्ति : । सुप्तिङितिभेदात्साद्विधेतिशब्दशक्तिप्रकाशिका ॥ कारकशक्तौ ॥ विभज्यतेप्रातिपदिकार्थोऽनया । स्त्रियांक्तिन् ॥

विभजनीय: । त्रि० विभाज्ये । विभागयोग्ये ॥ भज नार्हे ॥

विभज्य: । त्रि० विभक्तव्ये ॥ ऋतद्धोर्ण्यतिप्राप्ते । हिवजनविभज्योपपदे० इतितद्पवादोयन्निपात्यते । तेनविभाज्यमितिनभवति ॥

विभव: । पुं० रायि । धने ऐश्वर्ये ॥ विभवति । भू० । पचाद्यच् ॥ भिक्षाप्राणस्यरक्षार्थंकन्या शीतनिवारणी । अथलाकेश्चवेभक्तिर्विभवे : किंप्रयोजनमितिसन्न्यासिधर्म्म : ॥ निवृत्तौ ॥ मोक्षे ॥ विगत : भवोयस्मिन् ॥ प्रभवत्सरान्तर्गतद्वितीयवत्सरे । यथाभविष्ये भैरवउवाच । सुभिक्षंक्षेममारोग्यं सर्वेव्याधिविवर्जिता: । प्रशान्तामानवास्तत्रबहुशस्याबसुन्धरा । हृष्टास्तुष्टाजना: सर्वेविभवेवत्सरागमे ॥ २ ॥

विभवी । त्रि० ऐश्वर्यवति ॥ विभवोऽस्यास्ति ॥ इनि : ॥

विभा । स्त्री० शोभायाम् ॥ प्रकाशे ॥ किरणे ॥ उदीच्यांसोमस्यपुर्याम् ॥

विभाकर: । पुं० अग्नौ । वह्नौ ॥ सूर्ये । विभांकरोति । दिवाविभानिशेतिट : ॥ अर्कवृक्षे । चित्रकवृक्षे ॥

विभाग: । पुं० अंशे । भागे ॥ विवेके । विविच्यप्रयोगे । संयोगनाशकोनवद्द्रव्यवृत्तिर्निगुणे ॥ स्वत्वनिर्णयानुकूलेव्यापारे ॥ विभज्यते० विभजनंवा । भज० । भावेवाघञ् ॥

विभागी । त्रि० अंशिनि ॥ विभागोऽस्यास्ति । अतइनिठनावितीनि : ॥

विभाजित: । त्रि० विभागेनस्थापिते ॥

विभाज्यः । त्रि॰ विभजनीये । विभागयोग्ये ॥ विपूर्व्वाद्भजेर्ण्यत् । न्यङ्क्वादित्वात् कुत्वाभावः ॥

विभाण्डकः । पुं॰ ऋष्यशृङ्गपितरि॰ मुनिविशेषे ॥

विभाण्डी । स्त्री॰ आवर्त्तकीलतायां ॥

विभात् । त्रि॰ भासमाने ॥ शत्रन्तः ॥

विभातम् । न॰ प्रभाते । प्रत्यूषे ॥ विभातुं प्रवृत्तम् । भा॰ । आदिकर्म्मणि क्तः ॥

विभातकम् । न॰ प्रत्यूषे ॥

विभावः । पुं॰ परिचये ॥ रसस्योद्दीपनादौ ॥ रत्यादीनां कारणेषु । ललनोद्यानादिष्वालम्बनोद्दीपनकारणेषु ॥

विभावनम् । न॰ विभावनायाम् ॥

विभावना । स्त्री॰ अलङ्कारविशेषे ॥ विभावना विनापि स्यात्कारणं कार्यजन्म चेत् । अप्यलाक्षारसासिक्तं रक्तं तच्चरणद्वयम् ॥ अत्रलाक्षारसासेककारणाभावेपि रक्तिमा कथितः स्वाभाविकत्वेन विरोधपरिहारः ॥

विभावरी । स्त्री॰ तमस्विन्याम् । रजन्याम् । यामिन्याम् ॥ निशायाम् । हरिद्रायाम् । कुट्टन्याम् ॥ वक्रयोषिति ॥ विवादवत्स्त्रियाम् ॥ विभातिनक्षत्रादिभिः । क्वनिप् । वनोरचेति ङीब्रौ ॥ मौखर्यनिरतस्त्रियाम् ॥ मेदावृक्षे ॥

विभावसुः । पुं॰ ग्रहपतौ । सूर्य्ये ॥ अर्कवृक्षे ॥ पावके ॥ हारभेदे ॥ चित्रकवृक्षे ॥ चन्द्रे ॥ विभाप्रभावसुधनं यस्य ॥ असुरविशेषे ॥ मणौ ॥

विभावितः । त्रि॰ अभ्यूहिते । ज्ञाते ॥ विचिन्तिते ॥ विशेषेणोत्पादिते ॥ विशेषेणप्रापिते ॥ विमिश्रयिते ॥ विशेषेणभावितः ॥

विभावी । त्रि॰ प्रभावसम्पन्ने ॥ विभावोस्यास्ति । इनिः ॥

विभाव्यः । त्रि॰ संलक्ष्ये ॥

विभाषा । स्त्री॰ विकल्पे ॥ विभाष्यते विकल्पते । भाषव्यक्तायां वाचि । गुरोश्च हलइत्यकारः । ततष्टाप् ॥

विभिन्नः । त्रि॰ मिश्रिते ॥ विदारिते ॥ विदीर्णे ॥ विभक्ते ॥ समालब्धे । परिभिन्ने ॥ विकसिते ॥

विभीतः । त्रि॰ विभीतके ॥ विगतं भीतं रोगभयमस्मात् ॥ त्रि॰ निर्भये ॥

विभीतकः । त्रि॰ कर्षफले । भूतवासे । कलिद्रुमे बहेडुके । बहेडा॰ इति ख्याते ॥ विभीतकं स्वादुपाकं कषायं कफपित्तनुत् । उष्णवीर्यं हिमस्पर्शं भेदनं कासनाशनम् ॥ रूक्षं नेत्रहितं केश्यं कृमिवैस्वर्यनाशनम् । विभीतमज्जा तृट्छर्दिकफवातहरो

लघु : ॥ कषायोमदकृच्चायधात्म्यापित्तद्रुधा ॥ विगतंभीतंरोगभयमस्मात् ॥ स्वार्थेक : स्त्रियां॰आतेरितिङीष् ॥

विभीषण : । पुं॰ रावणानुजे ॥ नलतृणे । त्रि॰भयानके ॥विशेषेणभीषयते । ञिभीभये । नन्द्यादित्वाल्ल्यु : । भियोहेतुभयेषुक् ॥ निरस्ताविद्ये ॥ विगतंभीषणंभयङ्करमज्ञानंयस्य स : ॥

विभीषिका । स्त्री॰ भयप्रदर्शने ॥ यथा । कृत्वाशस्त्रविभीषिकांकतिपयग्रामेषुदीना : प्रजा : ॰मधून्तोविटजल्पितैरुपहृता :चोणीभुजस्तेकिल । विद्वांसोपिवयंपरंत्रिजगतांसर्गस्थितिव्यापदामीशस्तत्परिचर्ययामगणितोयैरेषनारायण :॥इतिशिह्लणमिश्र : ॥

विभु : । पुं॰ शङ्करे । सदाशिवे ॥ परमेश्वरे ॥ सर्वमूर्त्तसंयोगिनि । परममहत्त्ववति ॥ सतु॰आत्मादिर्यथा । आत्मेन्द्रियाद्यधिष्ठाताकरणंहिसकर्तृकम् । विभुर्बुद्ध्यादिगुणवाननुद्धिस्तुद्विविधामतेतिभाषापरिच्छेद : । विभुरिति॰विभुत्त्वपरममहत्त्वमितिसिद्धान्तमुक्तावली ॥ कालखात्मदिशांसर्वगतत्त्वंपरमंमहदिति भाषापरिच्छेद : ॥प्रहति ॥ नित्ये ॥ भृत्ये ॥ विष्णौ ॥ त्रि॰व्यापके ॥ प्रभौ ॥ सर्वगते । दृढे ब्रह्मणि ॥ यथा । नित्यत्व : सर्वदु:खानामीशान : प्रभुरव्यय : । चतेत : सर्वभावानांदेवस्तुर्योविभु : स्मृतइत्यागम : ॥ विविधंभवतिषस्मात् । भू॰ । विप्रसम्भाद्द्रुतिडु : ॥

विभुता । स्त्री॰ सामर्थ्ये ॥ भावेतल् ॥

विभूति : । स्त्री॰ भूतौ । ऐश्वर्ये । अणिमादिषु ॥ यथा । अणिमालघिमाप्राप्ति : प्राकाम्यंमहिमातथा । ईशितावशिताचैवतथाकामावशायितेति ॥ भस्मनि ॥ शिवधृतभस्मनि ॥ अंशे ॥ विविधभावे । विशेषेणभवनम् । स्त्रियांक्तिन् ॥विभूतिरितिकथनमन्यप्रादिनिवृत्त्यर्थम् ॥

विभूतिद्वादशी । स्त्री॰ विष्णोर्व्रतविशेषे ॥

विभूतिमत् । त्रि॰ ऐश्वर्ययुक्ते ॥ विभूतिर्विद्यतेऽस्य । मतुप् ॥

विभूमा । त्रि॰ परिपूर्णे ॥ विगतोभूमायस्मात् । यमपेक्ष्यान्यत्रमहत्त्वंनास्तीति ॥

विभूषणम् । न॰ अलङ्कारे । आभरणे ॥ विशिष्टंभूषणम् । विभूष्यतेऽनेनवा । भूषअलङ्कारे । ल्युट् ॥ पुं॰मञ्जुघोषे ॥

विभूषा । स्त्री॰ शोभायाम् ॥ आभरणे ॥

विभूषित : । त्रि॰ अलङ्कृते ॥

विभृत : । त्रि० धृते ॥ पुष्टे ॥

विभ्यत् । त्रि० भयंकुर्वति ॥

विभेद : । पुं० विशेषे ॥

विभ्रंस : । पुं० नाशे ॥

विभृत् । त्रि० धारणकर्त्तरि ॥ पोषणकर्त्तरि ॥

विभ्रम : । पुं० भ्रान्तौ ॥ संशये ॥ शोभायाम् ॥ भ्रमणे ॥ हावप्रभेदे । स्त्रीणांशृङ्गारभावजातक्रियाविशेषे । तथाहि । मद्रागहर्षजनितविपर्यासोविभ्रम : । यथा । अन्यनिमित्तमानसादुत्थायान्यत्रगमनं • प्रियारब्धकथामाक्षिप्यसख्यासहालपनं • मुधैवहसितक्रोधौ • पुष्पादीनांग्राह्या • सहसैवतत्परित्याग : । वस्त्राभरणमाल्यानामकारणत: खण्डनंमाननञ्च । यदुक्तम् । क्रोध: स्मितञ्चकुसुमाभरणादियोग्यातद्वर्जनञ्चसहसैवविमण्डनञ्च । आक्षिप्यकान्तवचनंलपनंसखीभिर्निष्कारणोत्थितगतंबदविभ्रमंतत् ॥ इति ॥ चित्तवृत्त्यनवस्थानंशृङ्गाराद्विभ्रमोमत: । इत्यन्यच ॥ अपिच । विभ्रमस्त्वरयाकालेभूषास्थानविपर्यय : । यथा । श्रुत्वायान्तंबहि: कान्तमसमापितभूषया । भालेञ्जनंदृशोर्लाक्षाकपोलेतिलक : कृत : । इति ॥ योषितांयौवनजोविकारोविभ्रमइत्येके ॥ अपिच । वल्लभप्राप्तिवेलायांमदनावेशसम्भ्रमात् । विभ्रमोहारमाल्यादिभूषास्थानविपर्यय : ॥ विविधंभ्रमणम् । भ्रमुअनवस्थाने । घञ् । नोदात्तोपदेशेतिनवृद्धि : ॥

विभ्रमा । स्त्री० विस्रसायाम् । जरायाम् । वार्द्धक्ये ॥

विभ्राट्•ड् । त्रि० भ्राजिष्णौ । रोचिष्णौ । अलङ्कारादिनाशोभमाने ॥ विशेषेणभ्राजते । भ्राजृदीप्तौ भ्राजभासेतिक्विप् ॥

विभ्रान्त : । त्रि० विभ्रमयुक्ते ॥ यथा । विभ्रान्तबुद्धेर्मनुजात्कार्याकार्यमजानत : । स्वानिष्टञ्चपरानिष्टंजायतेस्मात्पदेपदे ॥ इतिमहानिर्वाणतन्त्रम् ॥

विभ्रान्ति : । स्त्री० विभ्रमे ॥

विमत : । त्रि० विरुद्धमतिविशिष्टे ॥

विमति : । स्त्री० नानामतौ ॥ विरुद्धमतौ ॥

विमत्सर : । त्रि० मात्सर्य्यरहिते ॥ अद्वितीयात्मदर्शनेननिर्वैरबुद्धौ । विगतोमत्सरोयस्मात् ॥

विमना : । त्रि० दुर्मनसि । अन्तर्मनसि । चिन्तादिनाव्याकुलचित्ते ॥

विमनस्क : । त्रि० विमनसि ॥

विमनीकृत : । त्रि० वैमनस्यंप्रापिते ॥ अविमना : विमना : सम्पद्यमान : कृत : । अरुर्मनश्चक्षुश्चेतोरहोरजसांलोपश्चेतिच्विप्रत्ययसलोपौ ।

अल्पच्यावितोकार : ॥

विमय : । पुं॰ परिवर्तने । विनिमये ॥ विमीयते । मीञ्॰ । एरच् ॥

विमर्द : । पुं॰ कालक्रुतवृद्धे । चक्रमर्द ॥ युद्धे ॥ व्यालोडने ॥ सङ्घर्षे ॥

विमर्दक : । पुं॰ चक्रमर्दे । कसौं॰दीतिप्रसिद्धक्षुपे ॥

विमर्दनम् । न॰ कुङ्कुमादिनामर्दने । परिमले । मृदक्षोदे । ल्युट् ॥

विमर्दना । स्त्री॰ कुङ्कुमादिमर्दे ॥

विमर्दोत्थ : । पुं॰ परिमले । मर्दनाज्जातिसुगन्धादौ ॥ यथा । अथगन्धे परिमलोविमर्दोत्थे मनोहरे । दूरगामीमनोहारीगन्धआमोदईरितइति शब्दरत्नावली ॥

विमर्श : । पुं॰ विचारे ॥ न्यायमार्गेणविचारे ॥ संशयात्मिकायांवृत्तौ ॥

विमर्शनम् । न॰ परामर्शे । वितर्के ॥

विमर्शित : । त्रि॰ विचारिते ॥ विमर्श : सञ्जातोस्य । तारकादित्वादितच् ॥

विमर्ष : । पुं॰ विचारणायाम् ॥ इतिजटाधर : ॥ विशिष्टायांक्षमायाम् ॥

विमर्षणम् । न॰ ज्ञाने ॥ कर्मणाकर्मनिर्हारोनह्यात्यन्तिकइष्यते । अविद्वदधिकारित्वात्प्रायश्चित्तंविमर्षणम् ॥ इतिभागवतेषष्ठस्कन्ध : ॥

विमल : । पुं॰ सूर्यपरिवारे ॥ अर्हति । जिने ॥ न॰तारक्षेमाक्षिकधातौ॰उपरसविशेषे । निर्मले । स्वच्छधातुके ॥ त्रि॰निर्मले । शोभ्रे ॥ विगतंमलंयस्मात् ॥ चारौ ॥ रागादिशून्ये ॥

विमलतीर्थम् । न॰ तीर्थविशेषे ॥ यथा द्यापिसौबर्णराजतमत्स्याद्दश्यन्ते ॥

विमलदानम् । न॰ नित्यनैमित्तिककाम्यदाने ॥ यथोक्तंगरुडपुराणे । नित्यंनैमित्तिकंकाम्यंविमलंदानमीरितम् । चेतनासत्त्वयुक्तेनदानंतद्विमलंस्मृतमितिग॰पु॰ ॥ ईश्वरप्रीणनार्थदाने ॥

विमलमणि : । पुं॰ स्फटिके ॥

विमला । स्त्री॰ शीतलायाम् । सप्तलायाम् । सौरगण्डप्रभेदे ॥ भुव : प्रभेदे ॥ देवीप्रभेदे ॥ यथा । उत्कलेनाभिदेशस्तुविरजाक्षेत्रमुच्यते । विमलाचमहादेवीजगन्नाथस्तुभैरव :॥

विमलात्मक : । त्रि॰ शोभ्रे । निर्मले । स्वभावनिर्मले ॥ विमलआत्मास्वभावोस्य ॥

विमलाद्रि : । पुं॰ शत्रुञ्जयपर्वते ॥

विमलेश्वर : । पुं॰ शिवे ॥ विश्वेशादेव्यधिष्ठितेपुण्यस्थाने ॥

विमाता । त्रि॰ गणयितरि ॥

विमाता । स्त्री॰ मातु : सपत्न्याम् ॥ विरुद्धामाता । प्रादयोगतेतिसमास : ॥

विमातृज : । पुं॰ सापत्नभ्रातरि ।

वैमात्रेये ॥ विमातुर्जातः । पञ्चम्यामजाताद्दितिड : ॥

विमानः । पुं॰ न॰ देवतायाने । व्योमयाने । सार्वभौमगृहे । घोटके । यानपात्रे । विशिष्टं मानयन्त्यनेन । पुंसि संज्ञायामिति करणे घः ॥ विशेषेणमान्त्यस्मिन्निति वा । अधिकरणे ल्युट् ॥ विगतं मानमुपमाऽस्येति वा ॥ त्रि॰ मानहीने ॥

विमानकः । पुं॰ विमाने ॥

विमानता । स्त्री॰ तिरस्कारे ॥

विमानितः । त्रि॰ अनादृते ॥

विमार्गः । पुं॰ कुपथे ॥

विमिश्रः । त्रि॰ विभिन्ने ॥

विमुक्तः । त्रि॰ विरहिते ॥ पृथग्भूते ॥ सर्वेषणाविनिर्मुक्ते ॥ नित्यमुक्ते चिदानन्दरसआत्मनि ॥ विशेषेण॰ अविद्याकामक्रोधादिभिर्मुक्तः परित्यक्तः ॥ क्तिप्ते ॥ जीवन्मुक्ते ॥ जीवन्नेवदृष्टबन्धात्कामादेर्विशेषेणमुक्तः सन् देहपातेभाविबन्धाद्विशेषेणमुच्यते । विमुक्तश्चविमुच्यतइतिश्रुतेः ॥

विमुक्तिः । स्त्री॰ मोक्षे ॥ विमोचने । अनुध्यानरूपेऽनुग्रहे ॥

विमुखः । त्रि॰ पराङ्मुखे ॥ विरुद्धं मुखं यस्य ॥

विमुद्रः । त्रि॰ प्रस्फुटे । प्रफुल्ले ॥ मुद्रारहिते ॥

विमूढः । त्रि॰ विक्षिप्ते ॥ अनुत्पन्नब्रह्मात्मैक्यसाक्षात्कारे । दृष्टादृष्टविषयभोगवासनाकृष्टचेतस्तयाऽनात्मानात्मविवेकायोग्ये । अदूरदर्शिनि ॥ विगतमूढभावोऽतिचतुरे॰ शुद्ध्यर्थविवेचनकुशले ॥

विमूढभावः । पुं॰ व्याकुलचित्तत्वे ॥

विमूढात्मा । त्रि॰ रागद्वेषादिदूषितान्तःकरणे ॥ विमूढआत्मायस्य सः ॥

विमूढेनः । त्रि॰ मूर्खशिरोमणौ । देहात्मवादिनि । शुध्यनादरकारिणि ॥ विमूढानामिनः ॥

विमूल्यः । त्रि॰ अमोलविमोलइतिभाषायांख्याते । महार्घे ॥

विमृत्युः । पुं॰ विगतकामाविद्ये । वेदान्तवेद्यआत्मनि ॥

विमृशः । पुं॰ विमर्शे ॥

विमृष्टः । त्रि॰ विभाविते ॥

विमृष्य । त्रि॰ विचार्ये ॥ विमृषेः ऋदुपधाच्चाक्लृपिचृतेरिति क्यप् ॥

विमृष्यकारी । त्रि॰ विवेकिनि ॥ विमृष्यकरोति । णिनिः ॥

विमोकः । पुं॰ विमोचने ॥

विमोक्षः । पुं॰ मुक्तौ ॥

विमोक्षणम् । न॰ विमोचने । परित्यजने ॥

विमोचनम् । न॰ दूरीकरणे । विमुक्तौ । विपूर्वान्मुचेर्ल्युट् ॥ तीर्थविशेषे ॥

विमोह : । पुं॰ भ्रमपरम्परायाम् । विशिष्टोमोह : ॥

विमोहनम् । न॰ आकुलीकरणे । वैचित्तीकरणे ॥

विमोहित : । त्रि॰ विविधं मोहं भ्रमपरम्परांप्रापिते । मोहयुक्ते ।

विम्ब : । पुं॰ कृकलासे ॥ न॰प्रतिबिम्बे ॥ विम्बीफले ॥ वर्णवृत्तान्तरे ॥ नगणकरगणद्वकर्णैभवतिनवबर्णपूर्णम् । कथितद्दनभूषणं यत्तदितिकिलविम्बमेतत् ॥ यथा । कपटकृतगोपवेश : शयनवरभूतशेष : । जयतिकृतनन्दहर्षोगिरिविधुतशातवर्ष : ॥ पुं॰ न॰सूर्यचन्द्रमण्डले ।। वेतिशोभते । वीगत्यादिषु । उल्वादयश्चेति॰वन्नुमोगमङ्गत्वानि ॥ विम्बश्रोष्ठाद्यवान्॥जात्यन्तरे ॥

विम्बकम् । न॰ मण्डले ॥ विम्बीफले ॥

विम्बजा । स्त्री॰ विम्बिकायाम् ॥

विम्बट : । पुं॰ सर्षपे ॥

विम्बभूत: । त्रि॰ कारणभूते ।

विम्बा । स्त्री॰ विम्बिकायाम् ॥

विम्बिका । स्त्री॰ तुण्डिकेर्याम् । रक्तफलायाम् । पीलुपर्ण्याम् । कंदूरी॰कंदुरुइतिभाषा ॥ विम्बीं कायति ॥ कैशब्दे । आतोनुपसर्गेक : । ङ्यापोरितिह्रस्व : ॥

विम्बी । स्त्री॰ विम्बिकायाम् ॥ गौरादित्वान्ङीष् ॥

विम्बीफलम् । न॰ विम्बिकायाम् । कंदूरी॰इ॰प्र॰फले । बिंम्बीफलंस्वादुशीतंगुरुपित्तास्रवातजित् । स्तम्भनंलेखनं रुच्यं विबन्धाध्मानकारकम् ॥

विम्बु : । पुं॰ गुवाके ॥

वियच्चारी । पुं॰ चिल्लखगे ॥ त्रि॰आकाशगामिनि ॥

वियत् । न॰ विष्णुपदे । गगने । आकाशे ॥ विविश्वतएतिव्याप्नोति । इण : शत । यद्वा । वियच्छति॰नविरमति । विपूर्वाद्यमेरन्येभ्योपीतिक्विप् । अनुदात्तोपदेशेतिमलोपितुक् ॥

वियद्गङ्गा । स्त्री॰ मन्दाकिन्याम् । स्वर्णद्याम् । सुरदीर्घिकायाम् ॥ वियति॰वियतीयागङ्गा ॥

वियद्भूति : । स्त्री॰ तमसि । अन्धकारे ॥

वियन्मणि: । पुं॰ सूर्ये । सहस्रांशौ ॥ वियतोमणिरिव ॥

वियम : । पुं॰ संयमे ॥ विविधयमने ॥ वियमनम् । यम : समुपनिविषुचेतिपक्षे॰अप् ॥

वियात : । पुं॰ धृष्टे । निर्लज्जे ॥ विरुद्धं यातंचेष्टितं यस्य । विरुद्धमयासीद्वा । गत्यर्थेतिक्त : ॥

वियामः। पुं॰ संयमे। विविधयमने ॥ वियमनम्। यमः समुपनिविषु चेति॰ अबभावेघञ्॥

वियुक्तः। त्रि॰ वियोगविशिष्टे॥

वियोगः। पुं॰ विच्छेदे। विप्रलम्भे। रागिणोर्वियोजने। विरहे॥ स्मृत्वावियोगजंदुःखंत्यजस्नेहंप्रिये जने। अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्रापिदह्यते॥ वियोजनम्। युजिर्योगे। घञ्। वियुज्यतेऽनेनवा॥

वियोगभाक्। त्रि॰ विच्छेदयुक्ते।

वियोगी। पुं॰ चक्रवाके। कोके॥ त्रि॰ विरहिणि। वियोगयुक्ते॥ वियोगोऽस्यास्ति। इनिः॥

वियोगिनी। स्त्री॰ विरहिण्याम्॥

वियोजितः। त्रि॰ पृथक्कृते। वियोगंप्रापिते

विरक्तः। त्रि॰ विरागवति॥ सच॰ कुटीचकबहूदकहंसपरमहंसभेदाच्चतुर्विधः॥ विपूर्वाद्रञ्जेः क्तः॥ अतिरक्तवर्णे॥

विरक्ता। स्त्री॰ सांसारिकविषयेषुविरागविशिष्टायाम्॥ दुर्भगायाम्॥ अननुकूलायाम्॥ यांचिन्तयामिसततंमतिसाविरक्ता॥

विरक्तिः। स्त्री॰ वैतृष्ण्ये॥ तीव्रातीव्रतराचेतिविरक्तिर्द्विविधामता। तत्रसत्यान्तुतीव्रायांन्यसेद्योगीकुटीचके। शक्तोबहूदकेतीव्रतरायांहंसमं

स्थिते। मुमुक्षुःपरमेहंसेसाक्षाद्विज्ञानसाधने॥ रञ्जेःक्तिन्॥

विरङ्गम्। न॰ कङ्कुष्ठे॥

विरचनम्। न॰ निर्माणे॥ विशेषेणरचनम्॥

विरचितः। त्रि॰ निर्मिते॥ विशेषेणरचितः॥

विरजम्। न॰ तीर्थविशेषे॥

विरजाः। त्रि॰ विगतधर्माधर्मे॥ रजोगुणरहिते॥ विगतंरजोयस्य सः॥

विरजाः। स्त्री॰ विगतार्त्तवायाम्॥

विरजस्तमाः। पुं॰ द्व्यातिगे। निवृत्तरजस्तमोगुणे॥ रजस्तमोभ्यांविगतः। निरादयइतिसमासः॥ विगतेरजस्तमसीयस्मादितिवा॥

विरजा। स्त्री॰ कपित्थपर्ण्याम्॥ दूर्वायाम्॥ ययातिमातरि॥ गोलोकेश्रीकृष्णसखीविशेषे॥ तीर्थविशेषे॥ देवयानपथवर्त्तिन्यांनद्याम्॥ जगन्नाथक्षेत्रे॥ यथा। मुण्डनञ्चोपवासश्चसर्वतीर्थेष्वयंविधिः। वर्जयित्वागयांगङ्गांविशालांविरजांतथा॥

विरजाक्षेत्रम्। न॰ पुरुषोत्तमतीर्थे॥ यथा। उत्कलेनाभिदेशन्तुविरजाक्षेत्रमुच्यते। विमलासामहादेवीजगन्नाथस्तुभैरवः इतितन्त्रचूडामणौपीठनिर्णयः॥

विरजाहोम:। पुं॰ अवधूतत्वस म्पादकेो॰ आगमप्रोक्तकर्मविशेषे॥

विरञ्च:। पुं॰ द्रुहिणे। ब्रह्मणि॥ विरचयति। रचप्रतियत्ने। पचाद्यच्। पृषोदरादित्वान्नुमागम:॥

विरिञ्चि:। पुं॰ स्रष्टरि। ब्रह्मणि॥ विरचयति। रच॰। स्वार्थण्य न्तादचइ:। पृषोदरादित्वान्नुम्॥

विरणम्। न॰ वीरणतृणे॥

विरत:। त्रि॰ निवृत्ते। विरक्ते॥

विरति:। स्त्री॰ आरतौ। उपरामे। निवृत्तौ॥ विरमणम्। रमक्रीडायाम्। क्तिन्॥

विरथ:। त्रि॰ भग्नरथे॥

विरमणम्। न॰ विरतौ॥ विपूर्वाद्रमेर्ल्युट्॥

विरमित:। त्रि॰ निरस्ते॥

विरलम्। न॰ दध्नि॥ त्रि॰अवकाशे। पेलवे। तनौ। सान्तरे॥ विराति। राशब्दे। बाहुलकात्कलन्॥ पुं॰ निर्जने॥

विरलजानुक:। त्रि॰ वक्रजानुविशिष्टे। प्रज्ञौ। प्रज्ञे॥ वु॰ हि॰ चन्द्र:॥

विरलद्रवा। स्त्री॰ श्लक्ष्णयवाग्वाम्॥ यथा। यवागुरुष्णिकाश्राणा सैवतुद्रुतसिकथिका। विलेपीत रलाचस्य तसाश्लक्ष्णा विरलद्रवा॥

विरस:। त्रि॰ रसहीने॥ विगतोरसोयस्मात्॥

विरह:। पुं॰ विप्रलम्भे। वियोगे। विच्छेदे॥

विरहिणी। स्त्री॰ वियोगिन्याम्॥ विच्छेदविशिष्टायाम्॥ नार्याम्भृतौ॥ ङीप्॥

विरहित:। त्रि॰ त्यक्ते। विहीने विशेषेणरहित:॥

विरही। पुं॰ वियोगिनि। विरहविशिष्टे॥ विरहोस्यास्ति। अत इनि:॥रहतेराभीक्ष्ण्येघञिनिर्वा॥

विरहोत्कण्ठिता। स्त्री॰ नायिकाविशेषे॥ चिरम्प्रत्युरनालेके विरहोत्कण्ठितोन्मनेतिलक्षणात्॥

विराग:। पुं॰ वैराग्ये। रागप्रतिबन्धहिनि॥ त्रि॰ गताभिलाषे॥ विगत:रागोस्य॥

विरागार्ह:। त्रि॰ विरागयोग्ये। वैरङ्गिके॥ अर्हति। अर्ह॰। पचाद्यच्। विशिष्टोराग:विराग:। विरागस्यअर्ह:॥ धनवति॥

विरागी। त्रि॰ विरक्तिमति॥

विराट्। पुं॰ विविधंराजमानत्वात्स्थूलसमष्ट्युपहितचैतन्येभगवत: स्थूलरूपे॥ यथा ततकार्यस्यविराड्देह: स्थूलदेहोयमात्मनइति। पञ्चीकृतभूतानांयत्कार्यंततका-

यैंविराट्देहोभवतिसचदेह : परमेश्वरस्यस्थूलदेह:॥आत्मनोममभगवस्थाद्र॰दे॰भो॰॥ विराडात्मानाम॰स्थूलप्रपञ्चाभिमानीसूर्यमण्डलात्मक: समष्टिदेहश्चगोलकहयानुयाहकोहिरण्यगर्भ: चचन्द्राभ्यामर्थान्तरमितिव्याख्यातार :॥ विशेषेणराजते। राज् दीप्तौ। विविधंराजतेवा। सत्सूद्विषेतिक्विप्। ष्वर्विषे॥ स्त्री॰टयाच्चरायांवती॥

विराज :। पुं॰ विराजि॥

विराजमान :। त्रि॰ दीप्तिविशिष्टे। शोभमाने॥

विराजित :। त्रि॰ शोभिते। दीप्ते॥

विराट :। पुं॰ मत्स्यदेशे॥ वैदर्भदेशादूर्ध्वंस्वइन्द्रप्रस्थाच्चदक्षिणे। मरुदेशात्पूर्व्वभागेविराट: परिकीर्त्तित :॥ मत्स्यदेशाधिपे॥ नगरविशेषे॥

विराटक :। पुं॰ राजपट्टे॥ इतिहेमचन्द्र :।

विराटज :। पुं॰ विराटदेशोयहीरके। राजपट्टे। राजावर्त्ते॥ त्रि॰ विराटराजजाते॥

विराणी। पुं॰ हस्तिनि॥ इतिशब्दमाला॥

विराद्ध :। त्रि॰ विप्रकृते॥ राधेर्निट : कर्मणिक्त :॥

विराध :। पुं॰ रामायणप्रसिद्धेराच सविशेषे॥

विराधनम्। न॰ पीडायां॥

विराध्यन्। त्रि॰ अपकुर्वाणे॥

विराम:। पुं॰ अवसाने॥ वितर्कविचारानन्दास्मितादिरूपचिन्तात्यागे। वृत्त्युपरमे॥ विपूर्वाद्रमेर्भावेघञ्॥ विरमन्तेनिवर्त्तन्तेऽस्मिन्नितिवा॥

विराव :। पुं॰ शब्दे। रवाणे। आरावे॥ विरवणम्। रु॰उपसर्गेरुवइतिभावेघञ्॥

विरिक्त :। त्रि॰ सञ्जातविरेके॥

विरिञ्च :। पुं॰ वैकुण्ठे। विष्णौ॥ परमेष्ठिनि॥ शिवे॥ इ॰श॰रत्नावली॥

विरिञ्चन :। पुं॰ विरञ्चने। द्रुहिणे॥ इ॰हे॰चन्द्र :॥

विरिञ्चि :। पुं॰ शिवे। विष्णौ॥ विधातरि। परमेष्ठिनि। सुरज्येष्ठे॥ भूतानिविरचयति। रचप्रतियत्ने। स्वार्थण्यन्तात्टचइ :। पृषोदरादित्वादकारस्येत्त्वंनुमागमश्च॥

विरिब्ध :। पुं॰ स्वरे। रेभृशब्दे सौत्र:। क्त:। घुब्धस्वान्तध्वान्तेत्यादिनानिपातित:॥

विरिष्ट :। त्रि॰ विच्छिन्ने॥

विरुद्ध :। पुं॰ हेत्वाभासान्तरे। साध्याभावव्याप्तेहेतौ॥ यथाशब्दोनि

स्य : कृतकत्वादिति । कृतकत्वं हि नित्यत्वाभावेनानित्यत्वे नव्याप्तम् ॥ न्यायसूत्रञ्च 'सिद्धान्तमभ्युपेत्यतद्विरोधीविरुद्ध : । अत्र चसिद्धान्तं साध्यम् ०प्रतिज्ञार्थांश्पक्षस्यसिद्धत्वान्तसाध्यमभिधीयते० तथाचसाध्यमभ्युपेत्यतद्विरुद्धप्रयुक्तस्तद्विरोधीसाध्याभावव्याप्तइतिफलितार्थ : । यथावह्निमान् हृदत्वादिति । एतच्चसाध्याभावानुमितिसामग्रीत्वेनसाध्यानुमितिप्रतिबन्धोदूषकताबीजम् । नच सत्प्रतिपक्षाविशेष : । तत्रहेत्वन्तरं साध्याऽभावसाधकम् ०इहतुहेतुसाध्याभावसाधक : साध्यसाधकत्वेनत्वयोपन्यस्तत्वस्यशक्तिविशेषोज्ञापकत्तुनविशेषात् ॥ १ । ४६ ३० ॥ विपरीतधर्माक्रान्ते ॥ विरोधविशिष्टे ॥

विरूढ : । त्रि० अङ्कुरिते । विरूढा० इतिख्याते ॥ विपूर्वाद्रुहेर्गत्यर्थेक्त : । ढत्वधत्वष्टुत्वढलोपदीर्घा : ॥ आरोहणार्थे शष्ट ॥

विरूपम् । न० पिप्पलीमूले ॥ त्रि० कुरूपे ॥ विरुद्धंरूपंयस्यस : ॥

विरूपा । स्त्री० अतिविषायाम् ॥ दुरालभायाम् ॥ कुरूपायाम् ॥

विरूपाक्ष : । पुं० त्रिलोचने । अशौ । ईशे । शिवे ॥ रुद्रविशेषे ॥ विविधानिरविचन्द्राग्निरूपाण्यक्षीणियस्य । बहुव्रीहौसक्थ्यक्ष्णो: स्वाङ्गात्षच् ॥ विरूपेष्वपि० अ त्रिरूपाक्ष्टियेत्यशौ तिवा ॥ विविधरूपाणि० विविधरूपेषु ० अक्षाणीन्द्रियाण्यस्येतिवा ॥ असुर विशेषे ॥

विरूपिका । स्त्री० कुरूपायाम् ॥

विरूपी । पुं० जाहके ॥ त्रि० कुरूपविशिष्टे ॥

विरेक : । पुं० मलभेदे । रेचने । रेके । रेचनायाम् । विरेचने ॥ पृथक्ते ॥ यथा । यत्रयदध्यासस्तद्विवेकाग्रहणनिबन्धनोभ्रमइतिभाष्यम् ॥

विरेचक : । त्रि० विरेककारके ॥ यथा । चूर्णमध्ये त्रिवृच्चूर्णंस्वरसेकारवेल्लकम् । स्नेहेष्वेरण्डजंतैलंफलेष्वेवहरीतकीतिवाग्भट :

विरेचनम् । न० विरेके ॥ तत्कारकौषधंयथा । हरीतकीसमगुडामधुनासहपेषिता । विरेचनकरीहृद्भवतीतिनसंशय : ॥ त्रिफलाचित्रकंचित्रंतथाकटुकरोहिणी । जलस्त्रहरोह्येषउत्तममनुविरेचनम् ॥ अपिच । त्रिफलाबदरंद्राक्षापिप्पलीचविरेचकृत् । हरीतकीसोष्णनीरालवणाच्चविरेचकृत् । इतिगरुडपुराणे ॥ पुं० पीलुवृक्षे ।

विरेफ : । पुं॰ मदमात्रे ॥ त्रि॰ रेफशून्ये ॥

विरेभित : । त्रि॰ शब्दिते ॥

विरोक : । पुं॰ सूर्यकिरणे ॥ न॰ छिद्रे रन्ध्रे ॥ विरोचतेऽनेन । रुच॰ । घञ् । चजो : कु घिण्यतोरिति कुत्वम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति नपुंसकत्वाविरोध : ॥

विरोचनम् । न॰ स्फुरणे ॥

विरोचन : । पुं॰ प्रह्लादतनये ॥ अर्के । सूर्ये ॥ अग्नौ ॥ चन्द्रे ॥ अर्कवृक्षे ॥ रोहितकवृक्षे ॥ श्योनाकप्रभेदे । पूतकरञ्जे ॥ विशेषेण रोचते । रुचदीप्तौ ॥ अनुदात्तेतश्चहलादेरितियुच् ॥ वि॰ रोचके ।

विरोचनसुत : । पुं॰ बलिराजाख्यदैत्ये ॥ विरोचनस्यसुत : ॥

विरोध : । पुं॰ वैरे । विद्वेषे ॥ यथा । प्रधानस्याप्रधानेनसहविरोधेनतुदुर्बलेनेति ॥ विरोधकरणे दोषोयथा । अथपुत्र रेणुकासाक्षात्क्रोधोऽत्रस्वत्सि । उवाचकिञ्चिद्वचनंपरिणामसुखावहम् ॥ अविरोधोभवाब्धौहसर्वमङ्गलमङ्गलम् । विरोधोनाशबीजञ्चसर्वोपद्रवकारणम् ॥ अकर्त्तव्योविरोधश्चदारुणै : सवियै : सह । प्रतिज्ञाचैवाकर्त्तव्या मदीयंवचनंशृणु ॥ इति ॥ अपिच । नकुर्याद्बुधभि : सार्द्धंविरोधंबंधुभिस्तथा । आत्मन : प्रतिकूलानिपरेषांनसमाचरेदिति ॥ विरोधंनोत्तमैर्गच्छेन्नाधमैश्चसदाबुधइतिच ॥ विरोधनम् । रुधिर् आवरणे । घञ् ॥ अलङ्कारविशेषे । यथा । विरोध : सोऽविरोधेपिविरुद्धत्वेनयद्वच : । वस्तुवृत्तेरविरुद्धेपिविरुद्धयोरिवयदभिधानंसविरोध : । जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धास्याद्गुणस्त्रिभि : । क्रियाद्वाभ्यामपिद्रव्यंद्रव्येणैवेति तेदश ॥ अभिनवनलिनीकिसलयमृणालवलयादिदवदहनराशि : । सुभगकुरङ्गदृशोऽस्याविधिवशतस्त्वद्वियोगपविपाते ॥ गिरयोऽप्यनुन्नतियुजोमरुदप्यचलोऽब्धयोऽप्यगम्भीरा: । विश्वम्भराप्यतिलघुर्नरनाथतवान्तिकेतिनियतम् ॥ ( * ) येषांकण्ठपरिग्रहप्रणयितांसम्प्राप्यधाराधरस्तीक्ष्णा सोऽप्यनुरज्यतेचकमपिस्नेहंपराप्नोतिच । तेषांसङ्गरसङ्गसक्तमनसांराज्ञांत्वया । नूपतेपांशूनांपटलै : प्रसाधनविधिर्निर्वर्त्यतेकौतुकम् ॥ सृजतिचजगदिदमवतिच संहरतिचहेलयैवयोनियतम् । अत्र सरवगत : शफरोजनार्दन : सोपि चित्रमिदम् ॥ सततंमुसलासक्ताब

इतरगृहकर्मघटनयान्यपते । हिज पल्लीनांकठिनाः सलिभवतिकराः सरोजकुसुमाराः ॥ पेशलमपिखलवचनंदहतितरांमानसंसुतत्त्वविदाम् । परुषमपिसुजनवाक्यंमलयजरसवत्प्रमोदयति ॥ कौस्ताद्रिरुद्दामदृषदृढोयंयन्मार्गणानर्गलशातपाते अभून्नवाम्भोजदलाभिजातःस भार्गवःसत्यमपूर्वसर्गः । परिच्छेदातीतःसकलवचनानामविषयः पुनर्जन्मन्यस्मिन्ननुभवपथंयोनगतवान् । विवेकप्रध्वंसादुपचितमहामोहगहनोविकारःकोप्यन्तर्जडयतिचतापञ्चकुरुते । अयंवारामेकोनिलयइतिरत्नाकरइतिश्रितोऽस्माभिस्तृष्णातरलितमनोनिर्जलनिधिः । कएवंजानीतेनिजकरपुटीकोटरगतंक्षणादेनंताम्यत्तिमिमकरमापास्यतिमुनिः ॥ समदमतङ्गजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् । क्षितितिलकत्वयितटजुषिशङ्करचूडापगापिकालिन्दी । इति ॥ अनैक्ये । विपरीतार्थे ॥ यथा । श्रुतिस्मृतिविरोधेतुश्रुतिरेवगरीयसी । अविरोधेसदाकार्यंस्मार्त्तंवैदिकवत्सता ॥ असामानाधिकरण्ये ॥ न्यायमते ० साध्यव्यापकाभावप्रतियोगित्वमितिचिन्तामणिः । साध्यासमानाधिकरण्यमितिदीधितिः । अहिनकुलादेरन्यतरेणापरस्मरणे ॥ विरोधनाम्नवस्तुनि ॥

विरोधकृत् । पुं० वत्सरविशेषे ॥ तत्फलंयथा । वासवोवर्षतेदेविदेशेचाखण्डमण्डले । अहिच्छत्रेकान्यकुब्जेविरोधीकृषिनाशकृत् ॥ ४५ ॥ त्रि० विरोधकर्त्तरि ॥

विरोधनः । पुं० विद्विषि । न० पर्यवस्थायाम् । विरोधे ॥ रुधिर्० । ल्युट् वा ।

विरोधी । पुं० शत्रौ ॥ विरोधोस्यास्त्यस्मिन्वा । इनिः ॥ वत्सरविशेषे ॥ यथा । अनग्निप्रबलालोकाधान्यौषधिप्रपीडनम् । जायतेमानुषेकष्टंविरोधिनिनसंशयः ॥ त्रि० विवादिनि । विरोधविशिष्टे ।

विरोधिनी । स्त्री० विरोधकारिकायाम् ॥ विरोधविशिष्टायाम् ॥

विरोधोक्तिः । स्त्री० विप्रलापे । परवचनविरोधिवचने । विरोधस्योक्तिः ॥

विलः । पुं० उच्चैःश्रवसि । इन्द्रस्यहये । वेतसे ॥ न० छिद्रे । रन्ध्रे । गुहायाम् ॥ बिलतिभिनत्ति । बिलभेदने० पोठ्यादिः । इगुपधेतिकः ॥ बिल्यतेवा । कृत्यल्युटोबहुलमिति० इगुपधेतिकः । घञर्थेकोवा । खनोघचेतिघे० संज्ञापूर्वकत्वाद्गुणाभावोवा ॥

विलकारक : । पुं॰ मूषके ॥

विलकारी । पुं॰ मूषिके ॥ गर्त्त कारके ॥

विलक्ष : । त्रि॰ विस्मयान्विते । परकीयधर्मशीलादौप्राप्ताश्चर्ये ॥ विशेषेणलक्षयति । लक्षआलोचने । पचाद्यच् ॥ लक्षाद्भ्रष्टे ॥ लज्जिते ॥ विलक्षणे ॥

विलक्षणम् । न॰ हेतुशून्यायांस्थितौ । निष्प्रयोजनस्थितौ ॥ यथा । विलक्षणं मतं स्थानं यत्रवैन्निष्प्रयोजनमितिभागुरि : ॥ त्रि॰भिन्ने । अन्यलक्षणे ॥ विशेषलक्षणयुक्ते ॥ विगतंलक्षणमालोचनं यत्र ॥

विलक्षणा । स्त्री॰ शय्याविशेषे ॥

विलक्षित : । चिह्निते ॥ विशेषेणलक्षित : ॥

विलग्न: । पुं॰ न॰ मध्ये ॥ न॰जन्मलग्ने ॥ मेषादिलग्नमात्रे ॥ त्रि॰ लग्ने । संसक्ते ॥ विशेषेणलग्न : ॥ वियुक्ते ॥

विलङ्घनम् । न॰ अतिक्रमणे ॥

विलङ्घित : । त्रि॰ अतिक्रान्ते ॥

विलङ्घ्य : । त्रि॰ अतिक्रमणीये ॥

विलज्ज : । त्रि॰ लज्जयाहीने ॥ विगतालज्जायस्यस : ॥

विलपनम् । न॰ विलापे ॥ भाषणे ॥

विलम्ब : । पुं॰ उचितकालाधिककाले ॥ लम्बने ॥ गौणे ॥ वत्सरविशेषे ॥ तत्फलं यथा । तस्करै : पार्थिवैश्चैवअभिभूतमिदं जगत् । अर्घौभवतिसामान्योविलम्बे तुभयं महत् ॥ ३२ ॥

विलम्बनम् । न॰ अशीघ्रे ॥

विलम्बितम् । न॰ तत्त्वाख्यनृत्यादौ ॥ विशेषेणलम्बन्तेकालयत्राद्य : प्रत्ययं कं गतिविशेषप्रदर्शनायात्र । लविअवस्रंसने॰ओष्ठ्योप ध : क्तोधिकरणे चेतिक्त : ॥ त्रि॰ आश्रिते । विलम्बमाने ॥

विलम्बी । त्रि॰ लम्बमाने ॥ विशेषेणलम्बमाने ॥

विलम्भ : । पुं॰ अतिसर्ज्जने । दाने ॥ विलब्धि : । डुलभष् प्राप्तौ । घञ् । उपसर्गात्खलघञोरिति नुम् ॥

विलय : । पुं॰ प्रलये ॥ विशेषेण लीयन्तेपदार्थाअस्मिन् । लीङ् श्लेषणे । एरच् ॥ यथालवणस्य तोये ॥

विलला । स्त्री॰ श्वेतवलायाम् ॥ इ॰राजनि॰ ॥

विलवास : । पुं॰ खाद्दकजन्तौ ॥

विलवासी । पुं॰ सर्पे ॥ विलेवसति । णिनि : ॥

विलशय : । पुं॰ विलेशये ॥

विलसन् । त्रि॰ विलासयुक्ते ॥

विलसितम् । न० चेष्टिते ॥ भावे क्त: ॥ उद्गते ॥

विलाप: । पुं० परिदेवने । अनुशोचनेोक्तौ । शोकोक्तौ ॥ विलपनम् । लपेर्भावेघञ् ॥ टु: खजे वचसि ॥

विलापित: । त्रि० घृतवद्द्रवीकृते । विलीनतांप्रापिते ॥

विलाल: । पुं०मर्के ॥

विलास: । पुं० लीलायाम् ॥ हावभेदे । सयथा । प्रियसमीपगमने य: स्थानासनगमनविलोकनेषुविकारोऽकस्माच्चक्रोधस्मितचमत्कारमुखविकूननं सविलास: । तथाहि । योषन्नभांवानुगतोविकारोगस्यासनस्थानविलोकनेषु । तथास्मितं क्रोधचमत्कृतोचविकूननस्मास्मगतं विलास: ॥ अपिच । विलासोऽङ्गविशेषोय: प्रियाप्रावासनादिषु । इति । विलसनम् । लसश्लेषणे । घञ् । प्रकाशे ॥ शारीरिकसुखानुभवे ॥

विलासकाननम् । न० क्रीडावने ॥

विलासायुध: । पुं० कामदेवे ॥

विलासी । पुं० भोगिनि ॥ व्यालिसर्पे । विष्वक्सेने । हरौ । अग्नौ ॥ चन्द्रे ॥ विलसनशील: । विपूर्वाल्लसेर्वाकषलसेतिघिनुण् ॥

विलासिनी । स्त्री० नार्याम् ॥ वेश्यायाम् ॥

विलिप्त: । त्रि० श्लिष्टे ॥ विशेषेणलिप्त: ॥

विलिम्पन् । त्रि० उपदिहाने ॥ विलिम्पति । लिप० । शतृ ॥

विलीन: । त्रि० स्वत: प्राप्तद्रवीभावेघृतादौ । विद्रुते । द्रुते । श्लिष्टे । संसक्ते ॥ विलीयतेस्म । लीङ्श्लेषणे । गत्यर्थेतिक्त: । स्वादयओदितइतिनत्वम् ॥ विशेषेणलीनेोवा ॥ विशेषेणलयङ्गते ॥ यथा । विलीनेोवैवैवस्वतनगरकोलाहलभरोगतादूतादूरंक्वचिदपिपरेतान्मृगयितुम् । विमानानांव्रातोविदलयतिवीथीर्दिविषादांकथातेकल्याणीयदवधिमहीमण्डलमगात् ॥ विश्लिष्टे ॥

विलुप्त: । त्रि० संहृते ॥ चोरिते ॥

विलुप्ताब्द: । पुं० लुप्तसंवत्सरे ॥ यथा । गोजान्त्यकुम्भान्तरभेऽतिचारगेोमोपूर्वराशिंगुरुरेतिवक्रित: तदाविलुप्ताब्दइहातिनिन्दित: शुभेषु रेवासुरनिम्नगान्तरे ॥

विलुम्पक: । त्रि० अपहर्तरि ॥

विलुलित: । त्रि० आकुलिते । आकर्षणाकुलिते ॥ विधुते ॥

विलेखनम् । न० छेदने ॥ आकर्षणे ॥ लेखने ॥

विलिप: । पुं० लिपि ॥ लिपेर्भावेघञ् ।

विलेपनम् । न० कुङ्कुमाद्यनुलेपने । समालभे ॥ गात्रानुलेपनयो र्ग्ये पिष्टघृष्टवासुगन्धद्रव्य । गात्रानुलेपन्याम । घृष्टचन्दनादिलेपमात्रे । विलिप्यतेऽनेन । लिपउपदेहे । ल्युट् ॥

विलेपनी । स्त्री० यवाग्वाम् ॥ सुवेशस्त्रियाम् ॥

विलेपी । त्रि० विलेपनकर्त्तरि ॥

विलेपी । स्त्री० यवाग्वाम् । उष्णिकायाम् ॥ अम्लविधिगुणोऽस्य । चतुर्गुणाम्बुसंसिद्धाविलेपीघनसिक्थिका । पृथगद्रवेणरहिता स्यातात्रिथिलभक्तिका ॥ संसिद्धा० अतीवसिद्धा । विलेपीगिलत्यो० इतिलोके । विलेपीदीपनी बल्याहृद्यासङ्ग्राहिणीलघुः । ब्रणाक्षिरोगिणांपथ्यातर्पणीतृड्ज्वरापहा ॥ विलिम्पति । लिप० । पचाद्यच् । गौरादि: ॥

विलेवासी । पुं० सर्पे ॥

विलेशय: । पुं० सर्पे । मूषिके ॥ गोधादिषु ॥ यथा । गोधाशशभुजङ्गाखुशल्लक्याद्याविलेशया: । विलेशयावातहरामधुरोरसपाकयो: । बृंहणाबद्धविण्मूत्रावीर्य्योष्णाअपिकीर्त्तिता: ॥ विलेशेते । अधिकरणेशेते० इत्यच् । शयवासेत्यलुक् ॥

विलोकनम् । न० दर्शने ॥ लोकृदर्शने । ल्युट् ॥

विलोकित: । त्रि० दृष्टे ॥ लोकृ० । क्त: ॥

विलोचनम् । न० चक्षुषि ॥ विलोच्यतेऽनेन । लोचृ० । ल्युट् ॥ दर्शने ॥

विलोटक: । पुं० नलमीने । बालियामाछ० इ० गौ० भा० प्रसिद्धे ॥

विलोडनम् । न० मथने ॥ आलोडने । बिलोवना० इ० भा० प्र० ॥

विलोडित: । त्रि० आलोडिते । मथिते । बिलोया० इ० भा० न० तक्रे ॥

विलोप: । पुं० विशिष्टलोपे ॥

विलोभ: । पुं० विलोभने ॥ विलुभेर्घञ् ॥

विलोम: । पुं० सर्पे ॥ वरुणे ॥ शुनि । न० अरघट्टके ॥ पेषणयन्त्रे । त्रि० प्रतीपे । विपरीते ॥

विलोमक: । पुं० प्रतिकूले । विपरीते ॥

विलोमजिह्व: । पुं० अमत्त: स्वेदे । महामृगे । हस्तिनि । विलोमाजिह्वायस्य स: ॥

विलोमजिह्वक: । पुं० पीलौ । सि

म्धुरे । हस्तिनि । बिलोमाजिह्वा यस्य । कप् ॥

बिलोमवर्णः । पुं० वर्णसङ्करजातौ ॥

बिलोमी । स्त्री० आमलक्याम् ॥

बिलोल: । त्रि० चञ्चले । यथा । कापि बिलासबिलोलबिलोचनजनितमनोजम् । ध्यायतिमुग्धवधूरधिकं मधुसूदनवदनसरोजम् ॥

बिलोलित: । त्रि० बिद्राविते ॥

बिल्लम् । न० तले । तक्रे । आलवाले । हिङ्गुनि ।

बिल्व: । पुं० श्रीफलद्रुमे । शाण्डिल्ये । शैलूषे । मालूरे । श्रीफले ॥ अस्यफलगुणा: । श्रीफलस्तुवरस्तिक्तोयाहीरुच्योग्निपित्तकृत् । वातघ्नं पवरोबल्योलघुरुष्णश्चपाचन: ॥ अपिच । बिल्वंबालंकषायोष्णंपाचनंवह्निदीपनम् । सङ्ग्राहितिक्तकटुकंतीक्ष्णं वातंकफापहम् ॥ पक्वंसुगन्धिमधुरंदुर्जरंग्राहिदोषलम् । फलेषुपरिपक्वेषुयेगुणा: समुदाहृता: ॥ बिल्वादन्यत्रसर्वे ये बिल्वमामंगुणोत्तरम् । कफवातामपित्तघ्नी ग्राहिणीबिल्वपेशिका ॥ अन्यच्च । काञ्जिकेसंस्थितंबिल्वमग्निसन्दीपनंपरम् । इति ॥ यचभावप्रकाशे यथा । बालंबिल्वफलंग्राहिदीपनं पाचनंकटु । कषायोष्णंलघुस्निग्धं तिक्तंवातकफापहम् । पक्वंगुरुत्रिदोषंस्याद्दुर्जरंपूतिमारुतम् । विदाहिविष्टम्भकरंमधुरंवह्निमान्द्यकृत् ॥ फलेषुपरिपक्वंयद्गुणवत्तदुदाहृतम् । बिल्वादन्यत्रविज्ञेयमामन्तद्गुणाधिकम् ॥ द्राक्षाबिल्वशिवादीनां० फलंशुष्कंगुणाधिकमिति च ॥ अस्यशाकप्रकारस्तु । बाह्लीकसौरभ्यकृतप्रकाशैर्बिल्वंफलंखण्डितमेवतैले । विपाचितं वल्लजचूर्णकीर्णंरुचिंविधत्तेभ्यवहारकाले ॥ कफानिलहरंस्निग्धं कषायंदीपनंलघु । बालंतिक्तंफलंबैल्वंग्रहंबैल्वं विबन्धकृत् । इति ॥ बिलति । बिलभेदने । उल्वादि: । न० बिल्वच्छन्नमृ फले ॥ पलपरिमाणे ॥

बिल्वकर्कटी । स्त्री० बालबिल्वफले । बिल्वपेशिकायाम् ॥

बिल्वजम् न० बिल्वशाके ॥ यथा । सुकृतं बिल्वजंशाकंचिञ्चमाज्येसहिङ्गुके । उषितं क्वथितं तक्रे शुक्लवर्णं सुपाचितम् ॥ बिल्वजंकटुकंशाकं तिक्तञ्चलघुपाचितम् । सुगन्धंसुरसंप्रोक्तंसुशीतंरुचिकारकम् ॥

बिल्वपत्री । स्त्री० बिल्वशुण्ठ्याम् । ज्वरापहायाम् । शुष्कबिल्वखण्डे ॥

बिल्वपेशिका । स्त्री० बिल्वकर्कट्याम् । बेलगूंठा० हि० गौ० भा० ॥ ग्राहिणीकफवातामशूलघ्नीबिल्वपेशिका

बिल्वमूला । स्त्री० वाराहीकन्दे ॥

बिल्वशुराठी । स्त्री० बिल्वपत्र्याम् । बे लशूंठा। ० षु० गौ० दे० भा० प्र० ॥

बिल्वसूः । स्त्री० दशपुत्रायाम् ॥

बिल्वा । स्त्री० हिङ्गुपत्र्याम् ॥

विव: । त्रि० पक्षिवाहने ॥ विनापक्षि णावातिगच्छति । वा० । आतश्चेति कः ॥

विवक्षा । स्त्री० कथनेच्छायाम् ॥ सन् क्ती ॥

विवक्षित: । त्रि० कथनेच्छाविषये । वक्तुमिष्टे ॥ शक्यार्थे ॥

विवक्षुः । त्रि० वक्तुमिच्छौ ॥

विवत्सा । स्त्री० नष्टापत्यायाम् ॥

विवदमानः । त्रि० विवादकर्त्तरि ॥

विवधः । पुं० पर्याहारे । वीवधे । अध्वनि । भारे ॥ विविधोवधोहमनं गमनंवाअनेनवा । प्रादिभ्योधातु जस्येतिसमासोत्तरपदलोपौ ॥

विवन्धः । पुं० मलाप्रवृत्तौ ॥

विवरम् । न० दूषणे । गर्त्ते । छिद्रे ॥ अलव्यवधाने ॥ विवृणोति । वृञ् वरणे । पचाद्यच् ॥ यद्वा । विव्रिय ते । ग्रहवृदृनिश्चिगमश्चेत्यप् ॥ वि गतोवरोऽस्माद्वा ॥ वीनांपक्षिणांव रंवा ॥ पुं० अतलादिविलेषु । यथा । अतलंप्रथमंप्रोक्तं द्वितीयंवितलंत था । तृतीयंसुतलंप्रोक्तं चतुर्थं वैत लातलम् । महातलंपञ्चमञ्चषष्ठंप्रो क्तंरसातलम् । सप्तमंवैपातालं सप्तैतेविवराः स्मृताः । एतेषुविल स्वर्गेषुदिवेऽप्यधिकमेवच । कामभो गैश्वर्यसुखंसमृद्धभवनेषुचेतिदेवीभा गवतम् ॥

विवरणम् । न० व्याख्यायाम् । अर्थ स्फुटीकरणे ॥ वृ० णिच्० ल्युट् ॥

विवरनालिका । स्त्री० वंश्याम् । वेणौ ।

विवरेसद् । त्रि० मध्यवर्त्तिनि ॥ वि वरेसीदति । षद्लृ० । सत्सूद्विषे त्यादिनाक्विप् । तत्पुरुषेकृतीत्या दिनाऽलुक् ॥

विवर्णः । त्रि० पामरे । नीचे । स ङ्करे ॥ विगतोवर्णोयस्मात् वा ॥ मलिने ॥

विवर्णवासाः । त्रि० काषायवाससि ॥

विवर्त्तः । पुं० समुदाये । सङ्घे ॥ अपावृत्तौ । अपवर्त्तने ॥ नर्त्तने । नृत्ये ॥ स्वरूपानुपमर्दनकार्यान्तरा पत्तौ । अप्रच्युतपूर्वस्वरूपस्य अन्य थाऽऽकारभासे ॥ यथा । सत त्त्वतोऽन्यथाप्रथाविकारइत्युदीरि तः । अतत्त्वतोऽन्यथाप्रथा । विवर्त्त इत्युदाहृतइति ॥ विवर्त्तनम् । वृ तु० । घञ् ॥

विवर्त्तनम् । न० परिभ्रमणे ॥ प्रत्या वृत्तौ ॥ पराङ्मुखविलुण्ठने ॥

विवर्त्तवादः । पुं० वादविशेषे । अनिर्वा च्यानिर्वचनीयाविद्याद्यात्मनामाक

पीथविवर्त्तेति॰सुखमिवतत्त्वज्ञलाया
त्स्वनभेदादित्यर्थं निर्द्धारितं ॥ त
थाहि । ततोनिरंशआनन्दविवर्त्ती
जगदित्युच्यताम् । अवस्थान्तरभानन्तु
विवर्त्तोरज्जुसर्पवत् ॥ मायाशक्तिः
काल्पिकास्यादिन्द्रजालिकशक्तिवत्
। शक्तिः शक्तात्पृथङ्नास्तितद्वद्
दृष्टेमदाभिदा । प्रतिबन्धस्यदृष्टत्वा
च्छक्त्यभावेतुकस्यसः । शक्तिः
कार्यानुमेयायाचनिर्वच्यत्त्वमिष्य
ते ॥

विवर्त्तित: । त्रि॰ परिमण्डलिते ॥

विवर्द्धन: । पुं॰ विशिष्टवृद्धौ ॥

विवश: । त्रि॰ अस्वतन्त्रे । अवश्यात्म
नि ॥ अरिष्टदुष्टधियि । आसन्नमर
णसूचकलक्षणेनदुष्टमतौ ॥ विरुद्धं
वष्टि॰कामयते । वश॰ । अच् ॥

कातरे ॥

विवसन: । पुं॰ अर्हति । जिने ॥ बौ
द्धे ॥ त्रि॰दिगम्बरे ॥ विगतंवसनं
यस्यस: ॥

विवस्त्र: । त्रि॰ नग्ने ॥

विवस्वान् । पुं॰ सर्वजनियवंशबीजभू
ते॰आदित्ये । सूर्ये ॥ विविधवर्णं
॰आच्छादयति वस॰ । क्विप् ।
विवेरश्मिरस्त्यस्ति । मतुप् । तस्मै
मस्यवत्त्वमभत्त्वाद्रुत्त्वाभाव: ॥ वि
वस्त्वा । अस्त्रोतिवा ॥ अर्कहक्षे ॥
देवे । सुरे । अरुणे ॥ वैवस्वत

मनौ ॥

विवस्वती । स्त्री॰ सूर्यनगर्याम् ॥

विवह: । पुं॰ दारपरिग्रहे ॥ वायो:
पञ्चमेस्कन्धे । सयथा । सुस्थाह
गोद्दगन्यासुदकप्रतिस्थितसम्भतो:
सम्भवश्चस्यायहैम्य: पञ्चमोविवहो
गण: । ५ ॥

विवाक: । त्रि॰ विवेचनकर्त्तरि ॥ य
था । अर्थिप्रत्यर्थिनोर्वचनविरुद्धावि
रुद्धसभ्यै: सहविविनक्तिविवेचयति
सा॰विवाक्इतिमितोच्चरा ॥

विवाद: । पुं॰ व्यवहारे । ऋणादि
न्याये ॥ सचधनविभागादिविषय
न्यायादि: । यथा । ऋणादिदाय
काद्दितयोर्वेहुतरस्यवा । विवादोव्य
वहारश्वश्वमेतान्निगद्यते ॥ अष्टादश
विवादस्थानानियथा । तेषामाद्य
मृणादानं: निक्षेपोऽस्वामिविक्र
य: । सम्भूयचसमुत्थानंदत्तस्यान
पकर्म च ॥ वेतनस्यैवचादानंसंविद
श्यव्यतिक्रम: । क्रयविक्रयानुशयो
विवाद: स्वामिपालयो: ॥ सीमा
विवादधर्मश्चपारुष्येदण्डवाचिके ।
स्तेयञ्चसाहसञ्चैवस्त्रीसंग्रहणमेवच
॥ स्त्रीपुंधर्मोविभागश्चद्यूतमाह्वयमे
वच । पदान्यष्टादशैतानिव्यवहार
स्थितावि्हेतिमनु: । मिथोविरुद्ध
वादे । पक्षप्रतिपक्षपरिग्रहेणविरुद्ध
वदने ॥ विरुद्धोवादोविवाद: ॥

विवादानुगत : । त्रि० विवादकर्त्तरि

विवादी त्रि० विवादवति ॥ मत्वर्थीयइनि : ॥ विवादकर्त्तरि ॥

विवाधनम् । न० शाठ्ये । पीडायाम् ॥

विवाधा । स्त्री० पीडायाम् ॥

विवार : । पुं० वर्णोच्चारणे प्रयत्नविशेषे ॥ विवारयति विकासयत्यास्यमिति विवार इति कैयट : ॥

विवास : । पुं० समाप्तौ ॥

विवाह : । पुं० भार्याप्राप्तिहेतौ । दारपरिग्रहे । उपयमे । परिणये । उद्वाहे । उपयामे । पाणिपीडने ॥ धर्मप्रजार्त्थमाहिं विवाह : विवाहोऽष्टविध : प्रोक्त : स्मृतिशास्त्रे पुमृषिभि : । ब्राह्मणैर्वर्णभेदेन कलौ सद्विधिर्मत : ॥ परिणीतास्तु या नार्योव्रह्मवर्णैर्वरात्मभि : । ता एव दारा विज्ञेया अन्या सर्वा. परस्त्रिय० इति महानिर्वाणतन्त्रम् ॥ विवाहानन्तरकन्याया भर्तृगृहगमनकाले विवादीनां वेदनपुराणसिद्धम् । यथा दुर्वाससा सहऔर्वकन्याया : कन्दल्या विवाहे । कन्यासमर्पणं कृत्वा मोहाद्दुग्धैर्रोदव । मूर्च्छामवाप समुनि : सकन्याविरहातुर : ॥ यथा पश्चभेदे च क्रौच : स्वात्मारामं नमुखति । वर्षं नचेतनांप्राप्यवोधयामास कन्यकाम् ॥ मूर्च्छितांतात विच्छेदाद्दुःखशोकसंयुताम् ॥ इतिब्रह्मवैवर्त्तपुराणम् ॥ विशिष्टं वहनम् । वहप्रापणे । घञ् ॥

विवाहक : । पुं० विवाहे । स्वार्थेक : ॥

विवाहित : । पुं० स्त्री० कृतविवाहे ॥

विवाह्य : । त्रि० विवाहयोग्ये ।

विविक्त : । पुं० वसुनन्दने ॥ त्रि० असम्पृक्ते ॥ एकान्ते । रहसि ॥ जनसम्मर्द्दरहितदेशे ॥ पूते ॥ विवेकिनि ॥ विविक्तान्तजनाश्च । विचिर् । पौव्यार्थत्वात् कर्मण्यत्वात्वा कर्माधिकरणे च क्त : । विविच्यते पृथक्क्रियते वा । विजिर् पृथग्भावे । विचिर् विरेचने वा । क्त : ॥ एकाग्रे

विविक्तदेश : । पुं० जनसम्बन्धविवर्जितदेशे । स्वभावत : संस्कारतो वा शुचि० ऽशुचिभि : सर्पव्याघ्रादिभिश्चरहित० सुरधुनिपुलिनादौ चित्तप्रसादकरदेशे ॥ विविक्तश्चासौदेशश्च ॥

विविक्तसेवी । त्रि० एकान्तवासस्वभावे विवेकिनि ॥ विविक्त जनसम्मर्द्दरहितं पूतञ्च यद्गृहं गिरिगुहादि तत्सेवितुं शीलंयस्य ॥

विविक्ता । स्त्री० दुर्भगायाम् ॥

विविग्न : । त्रि० भीते ॥

विविदिषा । स्त्री० वेदितुमिच्छायाम् ॥

विविक्षित : । त्रि० वक्तुमिष्टे ॥ ल

व्य,मिष्टे ॥

विविदिषा । स्त्री॰ वेदितुमिच्छायाम् ॥

विविदिषासन्न्यास : । पुं॰ इहजन्मनि जन्मान्तरेवासम्यगनुष्ठितैर्वेदानुवचनादिभिरुत्पन्नया॰विविदिषया॰सम्पादितेज्ञानसाधनभूतेत्यागे ॥ अयञ्चद्विविध : । जन्मापादककर्मादित्यागमात्रात्मक : प्रैषोच्चारणपूर्वकदण्डधारणाद्याश्रमरूपश्चेति । तत्राद्यो॰स्त्रियोप्यधिक्रियन्ते । अतएव॰वेदे॰येनाहंनामृतास्यांकिमहंतेनकुर्यामित्यादिमैत्रेयीवाक्यमाम्नायते । ब्रह्मचारिगृहस्थवानप्रस्थानां॰केनचिन्निमित्तेन॰सन्न्यासाश्रमस्वीकारेप्रतिबन्धे॰स्वाश्रमधर्मेष्वनुष्ठीयमानेष्वपि॰वेदनार्थंमानसकर्मादित्यागोनविरुध्यते॰श्रुतिस्मृतीतिहासपुराणेषु॰लौकिकेच॰तादृशानांस्त्वविदांबहूनामुपलम्भात् । यस्तुदण्डधारणादिरूपोवेदनहेतु : परमहंसाश्रम : सपूर्वोक्तयज्ञहुधाप्रपञ्चितस्तत्तद्वाक्यैरवधेय : ॥

विविदिषु : । त्रि॰ विविदिषासन्न्यासवति ॥ यथा । स्वनुविविदिषु : पुत्रवित्तलोकैषणाश्च । अनुतिष्ठति विद्यार्थंश्रवणादीन्यत्रनियमम् ॥

विविध : । त्रि॰ बहुविधे । नानाप्रकारे ॥ त्रिविधाभिधायस्त : ॥

विविधप्रहरणनामा । पुं॰ पञ्च- कृति॰ ॥।०।

विवीत : । पुं॰ भमिविशेषे । यथा । सममेषांविवीतेपिखरोष्ट्रमहिषीसमम् ॥ विवीत : ॰प्रचुरतृणकाष्ठो रक्ष्यमाण : परिगृहीतोभूप्रदेशस्तदुपघातिपौतरस्यसमंदण्डमेषांमहिष्यादीनांविद्यात्॰इतिस्वामिपालविवादेमिताक्षरा ॥

विवीतभर्ता । पुं॰ विवीतभूस्वामिनि ॥

विवृक्ण : । त्रि॰ छिन्ने ॥

विवृत : । त्रि॰ विस्तृते ॥ उद्घाटिते ॥ व्याप्ते । वा॰यो॰दू॰भा॰ ॥ प्रकाशोक्ते ॥

विवृता । स्त्री॰ क्षुद्ररोगभेदे ॥

विवृताक्ष : । पुं॰ ताम्रचूडे ॥ त्रि॰ व्यादितास्ये ॥

विवृति : । स्त्री॰ व्याख्यायाम् । विवरणम् । इत्य॰ । स्त्रियांक्तिन् ॥

विवृत्त : । त्रि॰ लुठिते ॥ तिर्यक्चलिते । परावृत्ते ॥

विवृत्ता । स्त्री॰ क्षुद्ररोगभेदे ।

विवृत्ति : । स्त्री॰ स्फुरिते ॥ घूर्णने । चक्रवद्भ्रमणे । विवर्तनम् । वृतु॰ । क्तिन् ॥

विवेक : । पुं॰ विचारे । मिथोव्यावृत्त्यावस्तुस्वरूपनिश्चये । इदंहेयमिदमुपादेयमितिविवेचनायाम् ॥ यथा॰नित्यानित्यवस्तुनो : ॥ तत्त्वज्ञानस्यश्रवणादिकसाधनम्॰मनोमा

शब्दयोगः। वासनाचयस्य प्रतिकूलता। मनोत्पादनमित्यर्थं विविच्य निश्चये ॥ पृथगात्मतायाम्। पृथग्भावे। प्रकृतिपुरुषादिभेदज्ञाने। व्यक्ताव्यक्तज्ञविज्ञानेविवेचनम्। विचिर्पृथग्भावे। घञ्॥ तत्त्वावधारणे। विद्यामदधनमदकुलाचारमदादिमदानांविरोधिनि। स च दर्शितोजनकेन। अद्ययेमत्तांमूर्छितेदिनेनिंपतन्त्यधः। कृत्स्नाचमहतायांजैषाविश्वस्ततातव॥ कथनानिमहीपालाब्राह्मणाःकल्पगन्विवा। प्राकृतानिप्रयातानिकेयं विश्वस्ततातव॥ कोटयोब्रह्मणांयातागतासर्गपरम्पराः। प्रयातापांशुवद्भूपाः काधृतिर्ममजीविते॥ येषांनिमेषणोन्मेषौजगतः प्रलयोदयौ तादृशाः पुरुषायातामादृशांगणनैवका॥ इति॥ जलद्रोण्याम्॥ पृथग्भावविचारे॥ विभागे॥ एकान्ते॥

विवेकिता। स्त्री॰ विवेकित्वे। कार्याकार्यविचारतायाम्। मदमूढबुद्धिषुविवेकिताकुतः॥

विवेकी। त्रि॰ मनीषिणि। गुरुशास्त्राद्युपदेशयुक्ते॥ विवेकोऽस्यास्ति। अतइनिः॥ शास्त्रदृष्टिर्विवेकिनाम्॥ विचारकर्त्तरि॥ पुं॰देवसेनराजपुत्रे॥

विवेचकः। पुं॰ विवेचनस्यकर्त्तरि॥ विवेचयति। विचिर्॰। ण्वुल्॥

विवेचनम्। न॰ विवेके॥

विवेचनीयः। त्रि॰ विवेच्ये। विवेचितव्ये॥

विवोढा। पुं॰ परिणेतरि। वरे। पत्यौ॥

विव्रुवन्। त्रि॰ विरुद्धवक्तरि।

विव्वोकः। पुं॰ हावविभेदे। स्त्रीणां शृङ्गारभावजायांक्रियायाम्॥ यथोक्तम्। विव्वोकोऽभिमतप्राप्तावपिगर्वादनादरइति॥ विवानम्। वागतौ। विवुर्गतिविशेषः। मृगव्यादित्वात्कुप्रत्ययः। उच्यतेसमवैत्यच। उवसमवाये। हलश्चेति घञ्। घञर्थेकोवा। ओकउचः कैइतिनिपातितः। विवोरोकः स्थानम्॥

विट्। पुं॰ मनुजे॥ वैश्ये॥ प्रवेशे॥ विशति। विशप्रवेशने। क्विप्। व्रश्चेतिषत्वम्। जश्त्वचर्त्वे॥

विशम्। न॰ विसे। मृणाले॥

विशकण्ठी। स्त्री॰ बलाकायाम्॥

विशङ्कः। त्रि॰ निश्शङ्के। शङ्कारहिते॥

विशङ्कटः। त्रि॰ पृथौ। विशाले॥ विस्तृतार्थवृत्तेर्विशब्दात्॰वेःशालच्छङ्कटचौ॥ स्त्री॰विशङ्कटी। बह्वादिभ्यश्चेतिङीष्॥

विशदः । पुं॰ शुक्ले । शुभ्रे । श्वेते । पाण्डरे । धवले ॥ त्रि॰ धवलवर्णयुक्ते ॥ प्रसन्ने । विमले । व्यक्ते । विविक्तावयवे । यथा॰ खरविशदमभ्यवहार्यंमभ्यमिति ॥ विशीयते॰ शद्लृ शातने । अच् ॥

विशदप्रभः । त्रि॰ निर्म्मलकान्तौ ॥

विशब्दनम् । न॰ प्रतिज्ञाने ॥ शब्देनप्रकटीकृताभिप्राये ॥

विशस्वरा । स्त्री॰ पद्माम् । इतिराजनिर्घण्टः ॥

विशयः । पुं॰ संशयेन्यायमर्य्यादिनवेतिसन्देहे ॥ विविधंशयनम् । शीङ्स्वप्ने । एरच् ॥

विशयी । त्रि॰ संशयिनि ॥

विशरः । पुं॰ वधे । मारणे । विशरणम् । शॄहिंसायाम् । ऋदोरप् ॥

विशरणम् । न॰ अवयवानांविश्लेषे ॥ मारणे ॥ भेदने ॥

विशल्यः । त्रि॰ शल्यरहिते ॥

विशल्यकरणी । स्त्री॰ ओषधिविशेषे ॥

विशल्यकृत् । पुं॰ अचोटके । भूपलाशे । इतिरत्नमाला । त॰ गा॰ दे॰ भा॰ प्र॰ इति ॥ त्रि॰ विशल्यकारिणि ॥ विशल्यंकरोति । डुकृञ्॰ । क्विप् ॥

विशल्या । स्त्री॰ अग्निशिखायाम् लाङ्गलिक्याम् । लघुदन्त्याम् । गुडूच्याम् ॥ त्रिपुटायाम् ॥ शल्यनरहितायाम् । लक्ष्मणाख्यौषधौ । अजमोदायाम् । कलिकारीम् । विगताशल्यात् । विगतंशल्यमनया॰ यस्मात्वा । तीर्थविशेषे ॥

विशल्यानदी । स्त्री॰ तीर्थविशेषे ॥

विशसनः । पुं॰ तरवारौ ॥ खड्गेनरकान्तरे ॥ न॰ मारणे ॥ शसुहिंसायाम् । ल्युट् ॥

विशसितः । त्रि॰ मारिते ॥ विपूर्वाच्छसेः क्तः ॥

विशसिता । त्रि॰ पशौ रङ्गानांकर्त्यादिनापृथक्पृथक्कारके ॥

विशस्तः । त्रि॰ अविनीते ॥ शसु॰ । क्तः । धृषिशसीवैयात्ये । इतीनिष्ठायामविनयएवानिटौक्तः ॥

विशस्ता । पुं॰ चाण्डाले ॥

विशाकरः । पुं॰ भद्रचूडे ॥

विशाखः । पुं॰ शिखिवाहने । कार्त्तिकेये । षडानने ॥ विशाखेति । शाखृव्याप्तौ । पचाद्यच् ॥ विशाखायांजातइतिवा । सन्धिवेलादीत्यण् । श्रविष्ठाफल्गुनीत्यादिनातस्यलुक् । लुक्तद्धितलुकि । धन्विनांसमरकाले॰ वितस्त्यन्तरेणस्थितेपादद्वयेसतिविशाखाख्यस्थानंभवति॰ तस्मिन् । याचके । तर्कौ । पुनर्नवायाम् ॥

विशाखलम् । न॰ योधानांपादविन्यासभेदे ॥

विशाखा । स्त्री० षोडशीनक्षत्रे । राधायाम् ॥ यस्यांजातस्यफलंयथा । सदानुरक्तोविविधक्रियासुरक्तो(?)रैरपिसख्यमेति । यस्यप्रसूतौचभवेद्विशाखासखानकस्यापिभवेत्प्रसूतः ॥ पाक्षिकमेकवचनम् ॥ चअ(?) त्वाट्टाप् ॥ कठिल्लके ॥

विशाय : । पुं० उपशाये । यामिनाक्रमाच्छयने ॥ यथा । उपशायोविशायश्चपर्यायशयनार्थकौ । विशयनम् । शीङ् स्वप्ने । व्युपयो : शेते : पर्यायइतिघञ् ॥

विशारणम् । न० मारणे ॥ इतिहेमचन्द्र : ॥

विशारद : । पुं० सर्वज्ञे । ईश्वरे ॥ वकुले ॥ मद्यगन्धे ॥ त्रि० पण्डिते ॥ धृष्टे ॥ प्रगल्भे ॥ प्रसिद्धे ॥ श्रेष्ठे ॥ विशिष्टोविपरीतोवाशारद : । प्रादयोगतेतिसमास : ॥ विशुद्धे ॥

विशारदा । स्त्री० क्षुद्रदुरालभायाम् ॥

विशाल : । पुं० मृगप्रभेदे ॥ पक्षिविशेषे ॥ नृपान्तरे ॥ वृक्षविशेषे ॥ त्रि० पृथुले ॥ विस्तृतार्थवृत्तेर्विशब्दात् । वि : शालच्छङ्कटचाविति० शालच् ॥ यद्वा । विशति । विशप्रवेशने । तमिविशिविडोत्यादिनाकालन् ॥ विस्तीर्णे ॥

विशालता । स्त्री० पार्श्वविस्तारे । परिणाहे । पनहा० इ० भा० ॥

विशालस्यभाव : । तस्यभावस्त्वतलाविति तल् ॥

विशालतैलगर्भ : । पुं० अङ्कोठवृक्षे ॥

विशालत्वम् । न० विशालतायाम् ॥

विशालत्वक् । पुं० सप्तपर्णवृक्षे ॥ विशालात्वगस्य । बृहत्त्वचि ॥

विशालपत्र : । पुं० कासालौ । कोकणदेशप्रसिद्धोयम् । मृदुताले । श्रीताले । विशालानिपत्राणियस्य ॥

विशालफलिका । स्त्री० निष्पाव्याम् ॥

विशाला । स्त्री० इन्द्रवारुण्याम् ॥ अन्येन्द्रवारुणीप्रोक्ताविशालातु -महाफला । विशालाक्षफशातघ्नी मेहकुष्ठहरासरा । उज्जयिन्याम् ॥ विशलति । शलचलने । ज्वलितीतिण : ॥ यद्वा । विशति । विश० । तमिविशिविडोतिकालन् । विशालशब्दात्स्त्रियामजाद्यतष्टाबितिटाप् ॥ उपोदक्याम् ॥ बदरिकाश्रमे ॥

विशालाक्ष : । पुं० हरे । महेश्वरे ॥ तार्क्ष्ये । गरुडे ॥ त्रि० विशालनयने । सुनेत्रे ॥ विशालेअक्षिणीयस्य । बहुव्रीहौसक्थ्यक्ष्णो : स्वाङ्गात्षच् ॥

विशालाक्षी । स्त्री० नागदन्त्याम् ॥ नागदन्त्याम् ॥ देवताविशेषे ॥ वाराणस्याम् विशाल० षीविशाला-

यामपिस्थिता ॥ योगिनीविशेषे ॥ षित्वान्ङीष् ॥

विशालाया । स्त्री॰ पाटलायाम् ॥

विशाली । स्त्री॰ अजमोदायाम् । वनयवान्याम् । वस्तगन्धायाम् ॥ बह्वादिभ्यश्चेति ङीष् ॥

विशिखः । पुं॰ शरे । बाणे ॥ तोमरे ॥ शरवृक्षे ॥ विशिष्टा शिखा अग्रमस्य ॥ त्रि॰ शिखारहिते ॥ यथा । विशिखोप्युपवीतीच यत्करोतिनतत्कृतमितिस्मृतिः ॥

विशिखा । स्त्री॰ खनित्र्याम् । रथ्यायाम् ॥ नलिकायाम् ॥ विशेते ॥ शीङ्॰ । शीङः किद्रस्वश्चेतिखः । टाप् ॥

विशिपम् । न॰ गृहे । मन्दिरे । विशन्त्यत्र । विश॰ विटपविष्टपविशिपोलपाइति॰ विशेः कपन्॰ प्रत्ययोदेरित्वञ्च ॥

विशिष्टः । पुं॰ विष्णौ ॥ त्रि॰ प्रकृष्टज्ञानवति ॥ अधिके ॥ युक्ते ॥ विशेषेणशिष्टः ॥ यद्वा । विशिष्यतेसर्वज्ञत्वादिभिः सर्वेभ्योऽतिरिच्यते । विपूर्वात्॰ शिष्लृ विशेषणइत्यतः कर्मणिक्तः ॥

विशिष्टाद्वैतवादी । त्रि॰ प्रकृतिपुरुषयोर्भिन्नत्वेपिमितयोस्तयोर्ब्रह्मत्ववादिनि ॥ तस्यमतंयथा । पुरुषस्तदतिरिक्ताकृतिः॰ किन्तुभयमितंब्रह्म । यथाकश्चिद्दलवत् । इत्थंब्रह्मणएकत्वंव्यवस्थितम् । चित्परमाणुस्वरूपोजीवः॰ समस्तविश्वंब्रह्मांश । इतिमाधवभाष्यादिः ॥

विशीर्णः । त्रि॰ विध्वस्ते ॥ गलिते ॥ विशीर्यतेस्म । शॄहिंसायाम् । क्तः ऋल्वादिभ्यःइतिनः । रदाभ्यामितिनः । णत्वम् ॥ विशीर्णः प्रारब्धोवपुरपिजराव्याधिविधुरंगतंदूरेविप्रस्वजनभरणंशाऽत्किमपि । इदानींव्योमोशादहहविपरीतेहतविधौविधेयंयत्तत्वंस्फुरतिममनाद्यापिहृदये । इतिमिश्रणमिश्रः ॥

विशीर्णपर्णः । पुं॰ निम्बवृक्षे ॥

विशीर्णवाक् । त्रि॰ स्खलितवचने ॥

विशुद्धम् न॰ । अज्ञानतत्कार्यमलरहितत्वान्निष्प्रपञ्चेवेदान्तप्रसिद्धेब्रह्मणिषट्चक्रान्तर्गतपञ्चमचक्रे कण्ठस्थे । विशुद्धिंतनुतेयस्माज्जीवस्यहंसलोकनात् । विशुद्धंपद्ममाख्यातमाकाशाख्यंमहाद्भुतम् ॥ जीवस्यहंसस्यपरमात्मनोवलोकनाज्जीवंयस्माद्विशुद्धंतनुते॰ ततोविशुद्धमित्यन्वयः ॥ त्रि॰ उज्ज्वले । विमले । शुद्धे ॥ केवले ॥ निभृते ॥ सत्ये ॥

विशेषेणशुद्ध : ॥ विषयेपराग शून्ये ॥

विशुद्धविज्ञानम् । न॰ कार्यकारणो पाधिविनिर्मुक्तेब्रह्मणि ॥

विशुद्धात्मा । त्रि॰ निर्मलाऽन्त : करणे ॥ विशुद्धोरजस्तमोभ्यामकलु षितआत्माऽन्त : करणरूपंसत्त्वंय स्यस : ॥

विशुद्धि : । स्त्री॰ समे ॥ शोधने ॥ सर्वकर्मण्युपादेयाविशुद्धिश्चन्द्रतार यो : ॥

विशृङ्खल : । त्रि॰ शृङ्खलारहिते । अबद्धे ॥ अप्रतिबद्धे ॥ विगताशृ ङ्खलायस्य ॥

विशेष : । पुं॰ तिलके ॥ प्रभेदे ॥ अ तिशये ॥ प्रकर्षे । इतरव्यावर्त्तके असाधारणधर्मे ॥ सप्तपदार्थान्तर्ग तपदार्थभेदे ॥ विशेषंनिरूपयति। अन्त्योनित्यद्रव्यवृत्तिर्विशेष : परि कीर्त्तितइति । अन्तेअवसानेवर्त्त ते॰ इतिअन्त्य : । यदपेक्षयाविशे षोनास्तीत्यर्थ : । घटपटादीनांहा णुकपर्यन्तानांतत्तदवयवभेदात्प रस्परभेद : । परमाणूनांभेदको विशेषएव॰सतुस्वतएवव्यावृत्त : ते नतत्रविशेषांन्तरापेक्षानास्तीत्यर्थ : ॥ इतिमुक्तावली ॥ पञ्चतन्मा त्रेभ्योयथासङ्ख्यमाकाशादीनि यानिपञ्चभूतानि । एतेस्थूलाविशे षा : कुत : शान्ताघोरास्वमूढाश्चे तिसाङ्ख्या : ॥ अलङ्कारप्रभेदे ॥ यथा । विशेष : स्यादमाधारंवि नाप्याधेयवर्णनम् । गतेसूर्य्येपिदी पस्थास्तमश्छिन्दन्तितत्करा : ॥ १ ॥ विशेष : सोपियद्येकंवस्त्वनेकत्रव र्ण्यते । अन्तर्बहि : पुर : पश्चात् सर्वदिक्ष्वपिसैवमे २ ॥ किञ्चिदा रम्भतोऽशक्यवस्त्वन्तरकृतिश्चस : । त्वांपश्यतामयालब्धंकल्पवृक्षनिरी क्षणम् ॥ ३ ॥ विशिष्यते । शि- ष्लृविशेषणे । घञ् ॥ त्रि॰शेष शून्ये ॥

विशेषकम् । न॰ तमालपत्रे । लला टकृततिलके ॥ अयणांस्त्रीकानाम न्वये ॥ पुं॰तिलकवृक्षे ॥ पुं॰न॰ तिलकविशेषे ॥ त्रि॰विशेषयितरि । विशेषाधायके॰प्रभेदे ॥ विशिन ष्टि । शिषॢ॰ । ण्वुल् ॥

विशेषकच्छेद्यम् । न॰ चतु : षष्टि कलान्तर्गतषष्ठकलायाम् ॥ सातु तिलकेपुनानाविच्छेदरचनेतिशैव तन्त्रम् ॥

विशेषगुण : । पुं॰ बुद्ध्यादिषट्के। रूपादिचतुष्टये ॥ स्नेहे ॥ स्वाभा विकद्रवत्वे ॥ अदृष्टे ॥ भावनाया म् ॥ शब्दे ॥ इतिभाषापरि- च्छेद : ॥

विशेषज्ञ : । त्रि॰ सारविदि ॥

विशेषणम् । न० विशेष्यधर्मे । स गुणादिर्यथा । नीलोत्पलमित्यादि । व्यवच्छेदके ॥ इदममपि विशेषणकत्वम् । विशिष्यते येनतद्विशेषणम् । कर्त्तुः करणत्ववक्षायांल्युट् ॥ सुबन्तं द्वयमनेकम्वान्यस्यविशेषणम् । तथातिङन्तमप्युक्तिङन्तस्यविशेषणम् । पश्यमृगोधावतीत्यादौमृगकर्त्तृकगमनक्रियाकर्म०प्रधानक्रियायैव ॥

विशेषणविशेष्यभाव : । पुं० पदार्थयोः सम्बन्धविशेषे ॥ इयोर्हिप्रतीतपदार्थयोर्लोकेविशेषणविशेष्यभावोभवतीतिचह भाष्यम् ॥ सम्बन्धद्वयमनिरूपणीयत्वात् यथासोयंदेवदत्त इतिवाक्ये०सशब्दार्थतत्कालविशिष्टदेवदत्तस्य०अयशब्दार्थतत्कालविशिष्टदेवदत्तस्यचान्यान्यभेदस्यावर्त्तनतयाविशेषणविशेष्यभाव: इन्द्रियार्थसन्निकर्षे अभावप्रत्यक्षे० विशेषणविशेष्यभाव:सन्निकर्षे घटाभाववद्भूतलमित्यत्र०चक्षुःसंयुक्तभूतलेघटाभावस्यविशेषणत्वात् ॥

विशेषत : । अ० विशेषादित्यर्थः ॥

विशेषप्रतिपत्ति : । स्त्री० उत्कृष्टसम्भावनायाम् ॥

विशेषविधि : पुं० अल्पविषयकविधौ ॥ यथा । तथासामान्यकार्येभ्योविशेषकार्यविधिर्बली । बहवोविषयायस्यससामान्योविधिर्भवेत् । अल्प : स्याद्विषयोयस्यसविशेषविधिर्मतः ॥ सामान्यविशेषयोर्मध्येविशेषविधिर्बलवान् ॥

विशेषव्याप्ति : । स्त्री० व्याप्तिभेदे ॥ तल्लक्षणंयथा । प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वमितिचिन्तामणि : ॥

विशेषित : । त्रि० व्यवच्छिन्ने ॥

विशेषोक्ति : । स्त्री० अलङ्कारभेदे । तल्लक्षणोदाहरणे यथा । कार्याजनिर्विशेषोक्ति : सतिपुष्कलकारणे । हृदिस्नेहक्षयोन भूत्स्मरदीपेज्वलत्यपीतिचन्द्रालोके ॥

विशेष्य : । पुं० व्यवच्छेद्ये । भेद्ये ॥

विशोक : । पुं० वेदान्तवेद्यात्मनि ॥ विगत : शोकदुःखादिवियोगनिमित्तमनस : संतापोयस्य ॥ अशोकवृक्षे ॥ त्रि०शोकरहिते ॥

विशोधनम् । त्रि० विशुद्धिसाधने ॥ [illegible]शोधनी । स्त्री० दन्तीवृक्षे ॥ शोधन्याम ॥

विशोधनीबीजम् । न० दन्तीबीजे । जयपाले ॥

विशोधिनी । स्त्री० नागदन्त्याम् ॥

विश्र : । पुं० दीप्तौ ॥ गत्याम् ॥ विच्छदीप्तौ०गतौवा । यजयाचयतविच्छप्रच्छरक्षोनङ् । किच्च:प्रगुण: ॥

विश्रथनम् । न० विश्राथने । इ०म० र० ॥

विश्रब्ध : । त्रि० अनुद्धटे शान्ते । विश्वस्ते ॥ अत्यर्थे । गाढे ॥

विश्रब्धनवोढा । स्त्री० मुग्धानवोढा भेदे ॥

विश्रम : । पुं० विरतौ ॥ अशान्तौ ॥ विश्रम्यतेऽस्मिन्निति विश्रम आधार : । श्रमापनोदे । श्राम्यते र्घञ् । नोदात्तोपदेशस्यमान्तस्या नाचमेरितिवृद्ध्यभाव : ॥

विश्रमणम् । न० विश्रामे ॥

विश्रम्भ : । पुं० विश्वासे ॥ विश्रम्भणम् । श्रम्भु विश्वासे । घञ् ॥ केलिकलहे ॥ प्रणये ॥

विश्राणनम् । न० वितरणे । दाने । सम्प्रेषणे । परित्यागे ॥ श्रणदाने । चुरादि: । प्रायेणविपूर्व : । भावे ल्युट् ॥

विश्राणित: त्रि० दत्ते ॥

विश्रान्त : । त्रि० विगतक्लमे ॥ विगत खेदे ॥ श्रमे : क्त : । अनुनासिकस्य क्विझलो : क्ङिति दीर्घ : ॥ शान्तियुक्ते

विश्रान्ति : स्त्री० विश्रामे तीर्थ विशेष ॥ विश्रमे : क्तिन् ॥

विश्राम : । पुं० विरतौ । विरामे ॥ अक्षगुणास्तु । विश्रामो वक्त्रतृष्णे दयमनन्तास्वाद : शुभ : । इति । शयनगृहे । परमात्मनि ॥ संसारसागरेषु तृषिष्यमाणानां तरङ्गेषु भृशं भ्रमत्सु निर्मज्जता मविद्यादिसंज्ञकर्मविपाकाद्यनेकेभि: क्लेशै: परिक्षीणानां विश्रान्तिकामानां विश्राममोक्षं करोतीति विश्राम : परमात्मा । विश्रमणम् । भावेघञ् ॥ विश्राम इति स्त्रवणि नीयम् । नोदात्तोपदेशस्येति वृद्ध्यभावात्श्रमे : शुद्धात् घञि वृद्धिर्दुर्लभ त्वादितिभाव : । यदितुश्रम्यन्ति विश्रमयेत्यादाविव० णिचि वृद्धिमान् निर्मित्स्य णिजन्तादेरच् क्रियते० तदा रूपं सिद्ध्यत्येव । अयं तु भिन्न मिति भाव: । निरुपसर्गश्रमात्रु धातो: प्राकृतायं णिजितिविवक्षायान्तु० न दोषइत्यवधेयम् ॥

विश्रामगृहम् । न० पान्थानां० पथि ० निवासोचितेगृहे यथा । अलागयाश्च तत्र विश्रामगृहमध्वनि । सेतु : प्रतिष्ठितो येन तेन लोका नवर्जितमितमश्रा निर्वार्यतन्वम् ॥

विश्रामस्थानम् । न० पान्थानां० पथिनिवासायस्थानविशेषे ॥

विश्राव : । पुं० प्रख्यातौ । अति प्रसृतौ । विश्रवणम् । श्रुश्रवणे । विश्रुवद्धृतिघञ् ॥

विश्रि : । पुं० मृत्यौ ॥

विश्रुतः । त्रि० ख्याते । प्रसिद्धे ॥ व्यश्रावि । श्रु० । क्तः ॥ ज्ञाते ॥ हृष्टे ॥ विशेषेणश्रुतः ॥

विश्रुतात्मा । पुं० विष्णौ ॥ अनाद्यविद्यावशान्मनुष्योऽहंब्राह्मणोऽहंकर्त्ताऽहंभोक्ताऽहमित्यनन्ततयात्मना प्रतीयमानोऽप्यनन्तजडदुःखात्मकेभ्यो देहादिभ्यो विशेषेणवैलक्षण्ये नवेदान्तवाक्यैः सत्यज्ञानादिलक्षणः सन् श्रुतः श्रवणादिनाऽवगत आत्मा यतो विशेषेणश्रुतत्वाद्विश्रुतात्मा । सचक्षेत्रज्ञः । यं चज्ञस्यापिमां विद्धीतिभगवद्वचनात् ॥ ब्रह्मविदि । विशेषेणश्रुत आत्मायेन । ज्ञानीत्वात्मैव मेमतमितिभगवद्वचनादस्यविष्णुरूपत्वं सुप्रसिद्धमेव ॥

विश्रुतिः । स्त्री० कीर्त्तौ ॥ विख्यातौ ॥

विश्लथः । त्रि० शिथिले ॥

विश्लिष्टः । त्रि० शिथिले ॥

विश्लेषः । पुं० विधुरे ॥ वियोगे विभागे ॥

विश्वः । पुं० विश्वरूपभगवति ॥ व्यष्टि युपहितचैतन्ये व्यष्टिस्थूलशरीरोपहितस्य० विश्वशब्दवाच्यत्वे हेतुः सूक्ष्मशरीरमपरित्यज्यस्थूलशरीरादिप्रविष्टत्वादिति । सूक्ष्मशरीरंकारणशरीरं तदपरित्यज्य० स्थूलशरीरादौ० तदपेक्षयास्थूलशरीरंलिङ्गशरीरंतदादियैस्यपरमस्थूलशरीरस्थे तितद्गुणसंविज्ञानोबहुव्रीहिः । तस्मिन् प्रविष्टत्वात् । तथाहि । जीवस्यत्रयउपाधयः सुषुप्त्यादौ बुद्ध्यादिसंस्कारोपरक्तिमज्ञानमात्रमुपाधिः । स्वप्ने जाग्रद्वासनामयंलिङ्गशरीरमुपाधिः । जाग्रदवस्थायान्तुसूक्ष्मशरीरसंसृष्टस्थूलशरीरमुपाधिः । तथाचपूर्वपूर्वोपाधिविशिष्टस्यैवोत्तरोपाधिप्रवेशात्सर्वंशरीरप्रविष्टत्वेनैवस्थूलभोगायतनाभिमानिनोविश्वइतिसंज्ञा ॥ यद्वा । सूक्ष्मशरीरंलिङ्गशरीरंतदपरित्यज्य० स्थूलशरीरंविराट् व्यष्टितदादियांसांचस्तुरादिव्रीनां० तत्तद्विषयाकाराणान्तत् प्रविष्टत्वादितिहेतुयोजनाविश्वशरीरवर्त्तित्वाद्विश्वः ॥ गणदेवताविशेषेषु ॥ तेयथा ॥ क्रतुर्दक्षोवसुः सत्यः कालः कामोधृतिः कुरुः । पुरूरवामाद्रवाश्चविश्वेदेवादशस्मृताः ॥ इष्टिश्राद्धे क्रतुर्दक्षः ससंध्यो नान्दीमुखेवसुः । नैमित्तिकेकालकामौकाम्येचधुरिलोचनौ ॥ पुरूरवोमाद्रवाश्चपार्वणे समुदाहृतौ ॥ तेतु० धर्माद्दक्षकन्यायांविश्वायांजाताः ॥ विशति० कर्मस्वितिविश्वः । विशप्रवेशने । अशूपुषिलटिकणिखटिविशिभ्यः

क्रमितिक्वन् । ब्रह्मणि । विशन्ति
सर्वाणिभूतान्यस्मिन् ॰तत्। अनुप्र
वेशश्रुत्या॰विशतिसर्वमितिवा ॥
पञ्चीकृतपञ्चमहाभूततत्कार्यात्म
कैवेराजशरीरे । भुवने । जगति ।
सर्वं स्वमप्रपञ्चजाले॥ विशतिस्वका
रणमितिनिरुक्तेः।अस्कारणस्य
रूपादिविषयेतर्कजालंनकर्त्तव्यंमा
यामयत्वादित्याह किमिदंकिमस्यरू
पंकथमिदमभूदमुष्यकोहेतुः। इति
नकदापिविचिन्त्यंचिन्त्यंमायेतिधी
मताविश्वम् ॥ दान्तिनदारुविकारे
दारुतिरोभवतिसोपितत्रैव । जग
तितथापरमात्मापरमात्मन्यपिजग
त्तिरोधत्ते । ८४ ॥ इति । अपि
च । मूलोच्छेदंविनाकापिनप्ररोह
न्तिपुनः पुनः । यथालतास्तथावि
श्वमज्ञानप्रशमंविना ॥ अपिचाहुः
। विश्वंदर्पणदृश्यमाननगरीतुल्यं
निजान्तर्गतंपश्यन्नात्मनिमाययाबहि
रिवोद्भूतंयथानिद्रया । यः साक्षा
त्कुरुतेप्रबोधसमयेस्वात्मानमेवाद्व
यंतस्मैश्रीगुरुमूर्त्तयेनमइदंश्रीदक्षि
णामूर्त्तये ॥ इति ॥ अपिचाहुर्गौड
पादाचार्याः । स्वप्नमायेयथादृष्टे ग
न्धर्वंनगरंयथा । तथाविश्वमिदंदृष्टं
वेदान्तेषुविचक्षणैरिति ॥ नागरे।
शुण्ठ्याम् ॥ बोले ॥ अयोदशाहे ।
त्रि॰अखिले । कृत्स्ने ॥ विशतिस्व

कारणम् ॥ विश॰ । कर्त्तरिक्वन् ।
अनन्ते ॥ विश्वंशतंसहस्रंसर्वमक्ष
यमाचक्रमितिभारतम् ॥ सर्वनाम
संज्ञोयम् ॥ आधुनिकसंज्ञास्वेवसर्व
नामत्वपर्युदासात् ॥

विश्वकद्रु : । पुं॰ आखेटशुनि । मृगा
याकुशलकुक्कुरे । ध्वनौ । ध्वाने ॥
त्रि॰खले । पिशुने ॥ विश्वंकंसर्वंद्र
वति । द्रुगतौ । मितद्र्वादित्वात्
डुः ॥ यद्वा । विश्वंकन्दते । कदि
आह्वानादौ । अव्वादिः ॥

विश्वकर्म्मजा । स्त्री॰ विश्वकर्मसुतायाम्।

विश्वकर्म्मा । पुं॰ सहस्रांशौ । सूर्ये ।
मुनिविशेषे ॥ देवशिल्पिनि । त्वष्ट
रि । देववर्द्धकौ ॥ दीप्तोक्तौविश्वक
र्माणीमयस्त्वष्टाअयोगवित् । विश्व
कर्माऽस्मादृष्वेति ॥

विश्वकर्म्मसुता । स्त्री॰ सूर्यभार्य्याया-
म् । संज्ञायाम् ॥

विश्वका । स्त्री॰ गङ्गाचिल्लाम् ।

विश्वकृत् । पुं॰ देवशिल्पिनि । विश्व
कर्मणि । ब्रह्मणि । परमेष्ठिनि ॥
विश्वंकरोति । डुकृञ्॰ । क्विप्
। तुक् ॥

विश्वकेतु : । पुं॰ कामे । मदने । वि
श्वस्मिन्॰विश्वव्यापीवाकेतुर्य्यौति
रस्य ॥ अनिरुद्धे ।

विश्वग : । पुं॰ ब्रह्मणि ।

विश्वगन्ध : । पुं॰ पलाण्डौ । न॰बो

ले ॥

विश्वगन्धा । स्त्री॰ भूमौ ॥ क्षितौ ॥
विश्वस्मिन्गन्धोऽस्याः ॥

विश्वग्रन्थिः । स्त्री॰ हंसपद्याम् ॥

विश्वचक्रम् । न॰ महादानविशेषे ॥

विश्वचक्रात्मा पुं॰ विष्णौ ॥

विश्वजन: पुं॰ सर्वसाधारणेवेश्यादौ
जनमात्रे॰ हे॰भा॰प्र॰ ॥

विश्वजनीन : त्रि॰ सर्वजनहिते ॥
विश्वश्चासौजनश्च॰तस्मै हितम् । आ
त्मविश्वजनभोगोत्तरपदात्खः ॥

विश्वजनीय : । त्रि॰ विश्वजनहिते ॥
विश्वस्यजनःसर्वसाधारणोवेश्यादिः
। विश्वाजनोऽस्यास्तिवाग्रहेपि॰सएवा
न्यपदार्थः । तस्मै हितम् । कर्मधा
रयादेवेष्यतइतीष्टेरत्रनखः किन्तु
छएव ॥ विश्वेषांजनायहितोवा ॥

विश्वजित् । पुं॰ सर्वस्वदक्षिणेयज्ञ
विशेषे । सर्वमेधे ॥ त्रि॰सर्वजेत
रि ॥ विश्वंजयति । जि॰क्विप्
चेतिक्विप् । तुक् ॥

विश्वत: । अ॰ सर्वतइत्यर्थे ॥ विश्व
स्मात् । पञ्चम्यास्तसिल् ॥

विश्वतोमुख : । त्रि॰ सर्वतोमुखे ॥
विश्वतोमुखान्यस्य ॥

विश्वदेव : । पुं॰ गणदेवताविशेषे ॥
यथा । विश्वदेवौक्रतुदक्षौसर्वास्विष्टि
षुविश्रुतौ । नित्यंनान्दीमुखश्राद्धे
वसुसत्यौचपैतृके ॥ नवान्नालम्भ
नेदेवौकामकालौसदैवहि । अपि
कन्यागतेसूर्येश्राद्धेचध्वनिरोचकौ
॥ पुरूरवामाद्रवाश्चविश्वदेवौचपार्व
णेद्र॰वह्निपु॰ ॥ दक्षादिषुप्रा
णेषु ॥ देवसम्बधे ॥ रक्तगवेधु
कायाम् ॥

विश्वदेवा । स्त्री॰ रक्तगवेधुकाया
म् ॥ गोरक्षचाकुलिया॰इ॰गौ॰
दे॰भा॰प्र॰ ॥ नागबलायाम् ॥ अरु
णपुष्पदण्डोत्पले ॥

विश्वधाया : । त्रि॰ विश्वस्यधारके ॥
विश्वंदधाति । डुधाञ्॰ । वहि
हाधाञ्भ्यश्छन्दसीत्यसुन्॰णित् ।
आतोयुक् ॥ वैदिकोयम् ॥

विश्वधृक् । पुं॰ श्रीपतौ ॥ विश्वंधृ
ष्णोतिन्द्रानैश्वर्यादिभिर्ब्रह्मादीन्
वाऽभिभवति । ञिधृषा॰ । क्वि
प् । कृत्वाल्यूर्वं जशत्वं नकुः ।
गः । कः ॥

विश्वनाथ : । पुं॰ विश्वेश्वरे । शि
वे ॥ विश्वेषांनाथः ॥

विश्वनाथनगरी । स्त्री॰ काश्याम् ॥
यत्रदेहपतनेनदेहिनांमुक्तिरेवभवती
तिनिश्चितम् । पूर्वपुण्यनिचयेन
लभ्यतेविश्वनाथनगरीगरीयसी ॥

विश्वप : । पुं॰ अग्नौ ॥ विश्वंपा-
ति । पा॰ । आतोनुपसर्गेकः ॥

विश्वपा : । पुं॰ अग्नौ ॥ विधौ ॥
रवौ ॥ प्रजापतौ ॥ विश्वंपा-

ति । पा० । आतोनुपसर्गइतिके प्राप्ते॰बासरूपन्यायेन॰आतोमनिन्क्वनिप्वनिपश्चे तिवनिच् ॥ देवे ॥

विश्वपा । पुं॰ वह्नौ ॥ चन्द्रे ॥ सूर्ये ॥ समीरणे ॥ कृतान्ते ॥ विश्वंपाति । पारक्षणे । शुभ्रुचन्निति साधुः ॥

विश्वबोधः । पुं॰ धर्मकाये । बुद्धे ॥

विश्वभुक् । पुं॰ विष्णौ ॥ विश्वं कृत्स्नं जगद्भुङ्क्ते संहरतिप्रलयकालेइति॰भुनक्तिपालयतिस्थितिकालेइतिवाभुजेः परिपालनाभ्यवहारकर्मणः क्विप् ॥

विश्वभूः । पुं॰ बुद्धप्रभेदे ॥

विश्वभेषजम् । न॰ शुण्ठ्याम् ॥ विश्वस्यदोषस्यभेषजम् ॥

विश्वभोजाः । पुं॰ इन्द्रे ॥ विश्वं भुङ्क्तेभुनक्तिवा । भुज॰ । विदिभुजिभ्यांविश्वे॰इत्यसिप्रत्ययः ॥

विश्वमद्रा । स्त्री॰ अग्नेर्जिह्वाविशेषे ॥

विश्वम्भरः । पुं॰ अच्युते । विष्णौ ॥ विडौजसि । शक्रे ॥ विश्वंबिभर्त्ति । डुभृञ्॰ । संज्ञायांभृतॄवृजिधारिसहितपिदमइतिखच् । अरुर्द्विषदितिमुम् ॥ अग्नौ ॥ विश्वस्यभरणाद्विश्वम्भरो गिनिरितिभाष्यकाराः ॥ विसम्भरा॰इ॰भा॰प्राणिविशेषे ॥

विश्वम्भरा । स्त्री॰ धरायाम् । स्थिरायाम् । पृथिव्याम् ॥ विश्वम्भरातद्धरणाञ्ज्ञानन्तानन्तरूपतः । इतिपुराणम् ॥ विश्वम्बिभर्त्ति॰ डुभृञ्धारणपोषणयोः । संज्ञायामित्यादिनाखच् । मुम् । टाप् ।

विश्वयोनिः । पुं॰ भगवति ॥ विश्वस्ययोनिः कारणम्॰निमित्तोपादानात्मकम् ॥

विश्वरूपः । पुं॰ विराजि । विष्णौ ॥ आदित्ये । सूर्ये ॥ विश्वानिबहूनिरूपाण्यस्य ॥ विश्वानिननाविधानि॰ रूपाणिश्वेतपीतादिगुणात्मकानियस्यसः ॥ मणिविशेषे ॥ सचनानारूपोऽवभासते॰ उपाधिसन्निधानात्॰नस्वतोनेकरूपः ॥ न॰ अगुरुणि ॥

विश्वरूपकम् । न॰ अगुरुणि ॥

विश्वरेताः । पुं॰ ब्रह्मणिविधातरि ॥ विश्वस्यरेतः कारणम् ॥ विश्वं सर्वंकार्यत्वेनाभिमतंरेतः कार्यंयस्यसविश्वरेताः परमेश्वरः ॥

विश्वरोचनः । पुं॰ नाडीचशाके ॥

विश्ववेदाः । पुं॰ अग्नौ ॥ सर्वज्ञे ॥ विश्वंवेत्ति॰ विदज्ञाने । विद॰ । विदिभुजिभ्यांविश्वइति॰ असिप्रत्ययः ॥

विश्वास: । पुं॰ विश्रम्भे । इदमित्थमेवनान्यथेतिनिश्चये ॥ विश्वसनम् । श्वस॰ । घञ् ॥ लोभप्रमादविश्वासै:पुरुषोनश्यतित्रिभि: । तस्माल्लोभोनकर्त्तव्य:प्रमादोननविश्वसेत् ॥ सार्थीयानिमदंकुर्यात्सस्वीटष्णयोज्झित: । तस्मिन्नं यस्य विश्वास: पुरुष: सजितेन्द्रिय: ॥ अपिच। सौहार्द्दव्यवहारांश्चप्रवृत्तिंप्रकृतिंनृणाम् । सहवासेनतर्कैश्च विदित्वाविश्वसेत्तत: ॥

विश्वास्य: । त्रि॰ प्रत्ययवचने ॥

विश्वेदेवा: । पुं॰ अग्नौ ॥ श्राद्धदेवे ॥ क्रतुर्दक्षोवसु: सत्य: काम: कालस्तथाध्वनि: । रोचकश्चाद्रवाश्चैव तथाचान्य: पुरूरवा: ॥ विश्वेदेवाभवन्त्येतेदशसर्वत्रपूजिता: ॥

विश्वेश: । पुं॰ परमेश्वरे ॥ विश्वेषां सर्वेषामीशोनियन्ता ॥

विश्वेशा । स्त्री॰ विमलेश्वरेवसर्मामायांदेव्याम् ॥

विश्वेश्वर: । पुं॰ काशिस्थे शिवे। काशीनाथलिङ्गविशेषे ॥ विश्वेषामीश्वर: ॥ इष्टोविश्वेश्वरोदेवोस्नातव्यामणिकर्णिका ॥

विश्वौषधम् । न॰ शुण्ठ्याम् ॥ विश्वेषामौषधम् । विश्वस्यमहौषधस्येति वा ॥

विट् । स्त्री॰ विष्ठायाम् ॥ वेवेष्टि । विषल्व्याप्तौ । क्विप् । जगत्स्वचर्व्वं ॥ दुहितरि ॥ विट्पतिशब्दनिर्द्देशात् ॥ व्यापके ॥

विषम् । न॰ जले । तोये ॥ वत्सनाभाभिधे ॥ बोले ॥ सामान्यविषे ॥ पुं॰ न॰ क्ष्वेडे । गरले ॥ तद्भेदायथा । पुंसिक्लीवेचकाकोलकालकूटहलाहला: । सौराष्ट्रिक: शौक्लिकेयोब्रह्मपुत्र: प्रदीपन: ॥ दारदोवत्सनाभश्चविषभेदाअमीनव ॥ अपिच । विषंतुगरलंक्ष्वेडस्तस्यभेदानुदाहरेत् । वत्सनाभ: सहारिद्र: सक्तुकश्चप्रदीपन: ॥ सौराष्ट्रिक: शृङ्गकश्चकालकूटस्तथैवच । हालाहलोब्रह्मपुत्रोविषभेदाअमीनव । ब्राह्मणा: पाण्डरस्तेषुक्षत्रियोलोहितप्रभ: । वैश्य: पीतोऽसित: शूद्रोविषउक्तश्चतुर्विध: ॥ रसायनेविषंविप्रंक्षत्रियंदेहपुष्टये । वैश्यंकुष्ठविनाशायशूद्रं दद्याद्वधायहि ॥ अथास्यगुणा: । विषंप्राणहरंप्रोक्तंव्यवायिचविकासिच। आग्नेयंवातकफहृद्योगवाहिमदावहम् ॥ व्यवायि॰सकलकायगुणव्यापनपूर्व्वकपाकागमनशीलम् । विकासि॰ओज: शोषणपूर्व्वकंसन्धिबन्धशिथिलीकरणशीलम् । आग्नेयम्॰अधिकाग्न्यंशम् । योगवाहि॰संसर्गगुणग्राहकम् । मदावहम्॰तमोगुणाधिक्येनबुद्धिविध्वंसकम् ॥

तदेवयुक्तियुक्तन्तुप्राणदायिरसायनम्। योगवाहिपरंवातश्लेष्मजित् सन्निपातहृत्॥ योगवाहित्रिदोषघ्नं बृंहणंवीर्यवर्द्धनम्। येदुर्गुणाविषेऽशुद्धे तेस्युर्हीनाविशोधनात्॥ तस्माद्विषंप्रयोगेषुशोधयित्वाप्रयोजयेत्। अथशोधनविधि:। गोमूत्रे त्रिदिनंस्थाप्यंविषंतेनविशुद्ध्यति। रक्तसर्षपतैलाक्तंतत्राधायंसुवाससि॥ येगुणागरलेप्रोक्तातेस्युर्हीनाविशोधनात्। तस्माद्विषंप्रयोगेषुशोधयित्वाप्रयोजयेत्॥ स्थावरंजङ्गमञ्चैव द्विविधंविषमुच्यते। दशाधिष्ठानमाद्यन्तु॰द्वितीयंषोडशाश्रयम्॥ विशेषोभावप्रकाशेद्रष्टव्य:॥ वेवेष्टिकायम्। विष्लृ॰विषविप्रयोगेशा। बुगुपधेतिक:॥ हालाहलोनैवविषंविषंरमापरंजनाव्यत्ययमेवमन्यते। योगेनजागर्त्तिनिपीयतंशिव: स्मरन्रमांमुह्यतिनिद्रयाहरि:॥

विषकण्टकिनी। स्त्री॰ वन्ध्याकर्कोटक्याम्॥

विषकन्द:। पुं॰ नीलकन्दे॥

विषक्त:। त्रि॰ अतिश्लिष्टे। लग्ने॥ चाश्रिते॥

विषघा। स्त्री॰ गुडूच्याम्॥

विषघाती। पुं॰ शिरीषवृक्षे॥ विषनाशके॥ त्रि॰॥

विषघ्न:। पुं॰ शिरीषद्रुमे॥ यवासे॥ बिभीतके॥ चम्पकवृक्षे॥ त्रि॰ विषनाशके॥ विषंहन्ति। हन॰। अमनुष्यकर्तृकेषुचेतिठक्॥ विषघ्नौषधानिमात्स्ये १९२ ऽध्यायेद्रष्टव्यानि॥

विषघ्नधूप:। पुं॰ धूपविशेषे॥ तथा। सक्तु: सर्जरसोपेत: सर्षपा एलवालुकै:। सुवर्णातस्करतरो: कुसुमैरर्जुनस्यतु॥ धूपोवासगृहेहन्तिविषंस्थावरजङ्गमम्। नतत्रकीटा: सविषानदर्दुरसरीसृपा:। नकृत्याकर्मणास्तत्रधूपोयंयत्रदह्यते॥

विषघ्ना। स्त्री॰ त्रिवृतायाम्॥ गुडूच्याम्॥

विषघ्नी। स्त्री॰ हिलमोचिकायाम्॥ बृन्दवारुण्याम्॥ वनवर्वरिकायाम्॥ स्वल्पफलायाम्॥ भूम्यामलक्याम्॥ रक्तपुनर्नवायाम्॥ हरिद्रायाम्॥ वृश्चिकाल्याम्॥ महाकरञ्जे॥ इक्षुपायाम्॥

विषङ्गी। त्रि॰ मिथ: श्लिष्टे॥

विषजिह्व:। पुं॰ देवताडवृक्षे॥

विषज्वर:। पुं॰ महिषे॥ विषजज्वरे॥

विषगुडम्। न॰ मृणाले॥

विषण्ण:। त्रि॰ विषादप्राप्ते॥ भग्नोत्साहे॥ दु:खिते॥ विषीदतिस्म। षद्लृ॰। गत्यर्थेतिक्त:। रदा

भ्यामितिनत्वम् ॥

विषमुता । स्त्री॰ जडतायाम् ॥

विषतिन्दु: । पुं॰ कुपीलौ ॥ कारस्करवृक्षे ॥

विषदम् । न॰ पुष्पकासीसे ॥ त्रि॰ विषदातरि ॥ यथा । विषद: प्यावशुष्काखिविलक्षोवीच्यतेद्विष: । खेदवैपथुमांसक्षोभीत: स्खलति जृम्भते ॥ विषंददाति । तुदाम्॰ । आतइतिक: ॥

विषदंष्ट्रा । स्त्री॰ सर्पकङ्काल्याम् ॥

विषदन्तक: । पुं॰ सर्पे ॥

विषदर्शनमृत्युक: । पुं॰ चकोरपक्षिणि ॥ जीवञ्जीवस्तुगुन्द्रालोविषदर्शनमृत्युकइतिहेमचन्द्र: ॥

विषद्रुम: । पुं॰ कारस्करवृक्षे ॥

विषधर: । पुं॰ आशीविषे । सर्पे ॥ विषस्यधर: ॥

विषधर्म्मा । पुं॰ कुलक्षयायाम् । शूकशिम्ब्याम् ॥

विषधात्री । स्त्री॰ विषवर्ध्याम् ॥

विषनाशन: । पुं॰ शिरीषवृक्षे ॥ त्रि॰ विषनाशके ॥

विषनाशिनी । स्त्री॰ सर्पकङ्काल्याम् । नाकुल्याम् ॥

विषनुत् । पुं॰ श्योनाकवृक्षे ॥

विषपुष्प: । पुं॰ मदनद्रुमे । मयनफलवृ॰ प्र॰ ॥ न॰ नीलपद्मे । विषयुक्तपुष्पे ॥

विषपुष्पक: । पुं॰ मदनवृक्षे ॥ ज्वरे ॥ विषपुष्पभक्षणजन्यरोगे ॥ विषपुष्पैर्जनित: । कालप्रयोजनाद्रोगइतिकन् ॥

विषभक्षणम् । न॰ विषखादने ॥ यथमुहूर्त्तमाह । चराचरेन्द्रकुलघुक्षिप्राविषाशनेभानुकवीन्दुभौमान् । यद्वृकृतेऽनेकविधानितावत्सकालकूटानिसदेतिषेना ॥

विषभिषक् । पुं॰ विषवैद्ये ॥

विषम: । पुं॰ अलङ्कारविशेषे ॥ यथा । क्वचिद्यदतिवैधर्म्यान्नश्लेषोघटनामियात् । कर्त्तु: क्रियाफलावाप्तिर्नैवानर्थश्चयद्भवेत् ॥ गुणक्रियाभ्यां कार्यस्यकारणस्यगुणक्रिये । क्रमेण चविरुद्धे यत्सएवविषमोमत: ॥ द्वयोरत्यन्तविलक्षणतया॰यदनुपपद्यमानमयोग: प्रतीयते॰यच्चकिञ्चिदारभमाण: कर्त्ता॰क्रियाया: प्रणाशान्नकेवलमभीष्टंतत्फलंनलभेत॰यावदप्रार्थितमप्यनर्थं विषयमासादयेत्॰तथासत्यपिकार्यस्यकारणरूपाऽनुकारेयत्तयोर्गुणौक्रियेचपरस्परविरुद्धतांव्रजत: ॰ससमविपर्ययात्मा॰चतूरूपोविषम: । क्रमेणोदाहरणम् । शिरीषादपिमृद्वङ्गीकेयमायतलोचना । अयंक्वचकुकूलाग्निकर्कशोमदनानल: ॥ सिंहिकासुतसन्त्रस्त: शश: शीतांशुमाश्रित: । जग्रसेसाश्रयंतत्रतमन्य: सिं

ष्टिका सुत : ॥ सद्य : करस्थशमवा प्यविषं रवं रवं यस्त्वकृपा खलिखा । तमालनीला शरदिन्दु पाण्डु यशस्त्रि लोक्याभरणं प्रसूते ॥ आनन्दमम न्दमिमं कुवलयदललोचनेददासित्व म् । विरहस्त्वयैवजनितस्तापयति तरांशरीरंमे ॥ अवानन्ददानंशरीर तापेनविरुध्यते॰एवम्॰विपुलेनसा गरशयस्यकुक्षिणा । भुवनानियस्यप पिरेयुगक्षये । मदविभ्रमासकलया पपेपुन : सपुर स्त्रीकातमयैकदृशा ॥ इत्यादावपिविषमत्वं यथायोगम वगन्तव्यम् ॥ तालभेदे ॥ यथा । चतुर्विधः परिच्छन्न स्ताल : कङ्गणा नामक : । पूर्ण : खण्ड : समश्च विषमश्चेव कथ्यते ॥ सचतुष्कांगको पूर्णः खण्डे बिन्दुद्वयंगुरू : । यगणा स्तुमेरि यस्तगणो विषमोभवेदिति ॥ अयुग्मराशौ ॥ न॰विषमाश्मि ॥ बहुसौकामका सेवभुक्तं यद्विषमंदि तत् ॥ पद्यस्यत्रिविधवृत्तान्तर्गतवृत्त विशेषे ॥ यथा । पद्यं चतुष्पदीतच्च वृत्तं जातिरितिद्विधा । वृत्तमक्षरस ङ्ख्यातं जातिर्मात्राकृताभवेत् ॥ सममर्द्धसमं वृत्तंविषमञ्चेतितत् त्रिधा । समंसमचतुष्पादंभवत्यर्द्धसमं पुन : ॥ आदिस्तृतीयवद्यस्यपादस्तु र्योद्वितीयवत् । भिन्नचिह्नचतुष्पा दंविषमंपरिकीर्त्तितम् ॥ स्फुटे ।

उन्नतानते । उच्चनीचस्थाने ॥ वि॰ षमसमाने ॥ कोपने ॥ अयुग्मे ॥ वि गत : सम : सदृशोऽस्य । सुविनि र्द्दश्य : सुपिसूतिसमाद्वृतिषत्वम् ॥

विषमच्छद : । पुं॰ सप्तपर्णे । इतवि मीतिप्रसिद्धे ॥ विषमाश्छदायस्य स : ॥

विषमज्वर । पुं॰ चतुर्थकादिज्वरवि शेषे ॥ तद्भेदानाथाह । दोषो ल्पोऽहितसम्भूतो॰ज्वरोत्सृष्टस्यवा पुन : । धातुमन्यतमंप्राप्यकरोतिवि षमज्वरम् ॥ सन्ततंरससक्तस्थ : स ततंरक्तधातुग : । दोष : क्रमोज्वरं पुंमांसोऽन्येद्यु : पिशिताश्रित : ॥ मेदोगतस्तृतीयेह्निवस्थिमज्जग त : पुन : । कुर्याच्चतुर्थकं घोरम न्तकंरोगसङ्करम् ॥ य : स्यादनिय तात्कालाच्छीतोष्णाभ्यांतथैवच । वे गतश्चापिविषमोज्वर : सविषम : स्मृ त : ॥ अस्यभेदायथा । सन्तत : स ततोऽन्येद्युस्तृतीयकचतुर्थकावि ति ॥

विषमनयन : । पुं॰ शिवे ॥ विषमो निनयनानियस्य ॥

विषमल्ल : । पुं॰ जाङ्गुल्याम् । विष विद्यायाम् ॥

विषमर्द्दनिका । } स्त्री॰ गन्धनाकुल्या
विषमर्द्दनी । } म् ॥

विषमस्थ : । त्रि॰ दरिद्रे ॥ विषमेतिष्ठ ति । ष्ठो॰ । सुपिस्थइतिकः ॥ उ पप्लवदेशस्थे ॥

विषमाक्ष : । पुं॰ शिवे ॥ विषमाण्य क्षीण्यस्यसः ॥

विषमायुध : । पुं॰ कामे । प- ञ्चशरे ॥ विषमाण्यायुधानि- यस्य ॥

विषमाशनम् । न॰ अकालेबहुचाल्पं वाभुक्तन्तुविषमाशनमितिलक्षिते ॥ बहुस्तोकमकालेवाभुक्तंतद्विषमाश नम् ॥

विषमित : । त्रि॰ विषमीकृते

विषमीयम् । त्रि॰ विषमदेशभवे ॥ गहादिभ्यश्छेतिछः ॥

विषमुष्टि : । पुं॰ महानिम्बे ॥ क्षुप- विशेषे । सुमुष्ट्याम् । रणमुष्टिके ॥ विषंमुष्णाति । मुष॰ । क्तिच् ॥

विषमृत्यु : । पुं॰ चकोरे ॥

विषमेषु : । कामे ॥ विषमाइषवोय स्यसः ॥

विषमोन्नत : । त्रि॰ स्यपुटे ॥

विषय : । पुं॰ चक्षुरादिग्राह्ये रूपादौ न्द्रियार्थे । गोचरे ॥ न्यायमतेक्षि त्यप्तेजोवायूनांविषया यथा । तत्र क्षितिर्गन्धहेतुर्नानारूपवतीमता । षड्विधस्तुरसस्तत्रगन्धोपिद्विविधो मत : ॥ स्पर्शस्तस्यास्तुविज्ञेयोह्यनु ष्णाशीतपाकजः ॥ नित्यानित्याचसा

द्वेधानित्यास्यादणुलक्षणा ॥ अनि- त्यातुतदन्यास्यात्सैवावयवयोगिनी साचत्रिधाभवेद्देहइन्द्रियंविषयस्त था ॥ योनिजादिर्भवेद्देहइन्द्रियंघ्रा णलक्षणम् । विषयोद्व्यणुकादिश्च ब्रह्माण्डान्तउदाहृत : ॥ वर्णः शु क्लोरसस्पर्शौजलेमधुरशीतलौ । स्ने हस्तत्रद्रवत्वन्तुसांसिद्धिकमुदाहृ तम् ॥ नित्यतादिप्रथमवत्किन्तुदेह मयोनिजम् । इन्द्रियंरसनंसिन्धुर्हि मादिर्विषयोमत : ॥ स्पर्शउष्णस्ते जसस्तुस्याद्रूपंशुक्लभास्वरम् । नैमि त्तिकंद्रवत्वन्तुनित्यतादिचपूर्ववत् ॥ इन्द्रियंनयनंवह्निस्वर्णादिर्विषयो मत : ॥ अपाकजोऽनुष्णाशीत : स्पर्शस्तुपवनेमत : । तिर्यग्गमन वानेषस्याय : स्पर्शादिलिङ्गक : ॥ पूर्ववन्नित्यताद्युक्तं देहव्यापित्वगि न्द्रियम् । प्राणादिस्तुमहावायुपर्य न्तोविषयोमत : ॥ विषिण्वन्तिवि षयिणमवबध्नन्ति स्वेनरूपेणनिरूप णीयंकुर्वन्ति॰ इतिविषया : । षिञ् बन्धने । पचाद्यच् । परिनिवीतिष त्वम् । विषयणमवबा॰विशिणोति वा । षिञएरच्॰ पुंसीतिघोवा॰ पचाद्यजवा ॥ विषस्यविषयाणाञ्च दूरमत्यन्तमन्तरम् । उपभुक्तंविषंह न्तिविषया : स्मरणादपीतिविषया नुसन्धानस्यनिन्दितत्वादिन्द्रियार्थेषु

न्यच्छिनत्ति विधेयेतिसतांमतम् ॥ यथोक्तम् । दोषिणतीक्ष्णो विषय : कृष्णसर्पविषादपि । विषंनिहन्तिभोक्तारंद्रष्टारमचक्षुषाप्ययम् ॥ अपिच । विषयविषधराणांदोषदंष्ट्रोत्कटानां विषविषमविसर्पव्यक्तदुश्चेष्टितानाम् । विरमविरमचेत : सन्निधानादमीषामसुखकणमणिष्ठेतो : साहसं मास्मकार्षी : ॥ इति । नियामके यथा । विषयशब्दोहिविशेषार्थ : सि- नोतिर्बन्धउच्यते । विशेषेणसिनोतीति विषयोऽतोनियामक : ॥ इति ॥ प्रबन्धाद्यस्य योज्ञातस्तत्र ॥ यथाजीवब्रह्मैक्यंशुद्धचैतन्यंप्रमेयंवेदांतानां विषय : ॥ कुरुपञ्चालादिदेशे ॥ जनपदे ॥ अव्यक्ते ॥ शुक्रे ॥ आश्रये । आश्रये ॥ भोगसाधने ॥ सर्वमेव हिकार्यमदृष्टाधीनम् यच्चकार्यंयददृष्टाधीनेतत्तदुपभोगंसाक्षात्परम्परयाजनयत्येव • नहिभोगाजप्रयोजना भ्यांविनाकश्चिदुत्पत्तिरस्ति • तेनद्व्यणुकादिब्रह्माण्डान्तसर्वमेवविषयोभवतीत्यर्थ : । इतिसिद्धान्तमुक्तावली ॥

विषयवित् । पुं॰ वात्स्यायनादिमुनिषु ॥ तैश्चेत्थंकल्प्यन्ति -शब्दादयोविषया : भूयोभूयोभुज्यमानास्तत्त्वमिति तदेतत्कल्पनंतेषांविभ्रममात्रम् । विषयश्चविषयाणामस्ति विषयानुसन्धानस्यनिन्दितत्त्वात् ॥

विषयाज्ञानम् । न॰ तन्द्रायाम् ॥

विषयायी । पुं॰ राज्ञि ॥ वैषयिकजने ॥ इन्द्रिये ॥ कामदेवे ॥ विषयासक्तपुरुषे ॥

विषयी । पुं॰ नृपतौ ॥ कामदेवे ॥ वैषयिके ॥ ध्वनौ ॥ विषयोऽस्यास्ति । अतइनि : ॥ देशे ॥ ग्रह्यादित्वाण्णिनिर्वृद्ध्यभाव : षत्वञ्चनिपात्यते ॥ न॰ इन्द्रिये ॥ त्रि॰ विषयासक्ते ॥ आरोप्यमाणे ॥

विषयोग : । पुं॰ तिथिवारयोर्योगविशेषे ॥ यथा । षष्ठीशशाङ्केनवमी चशुक्रेबुधेद्वितीयातपनेचतुर्थी । जीवेष्टमी • सौरिकुजेऽक्तिसप्तमीयोगाविषाख्या : कुलनाशका : स्यु : ॥ बुधवारेभद्रारूपेणसिद्धियोगस्तुसप्तमीशादश्यासुरितार्थो • नतुद्वितीयायामिति । अन्यथाबहुश्रुत्यादिवाक्यविरोध : स्यादिति ॥

विषरूपा । स्त्री॰ अतिविषायाम् ॥

विषलम् । न॰ विषे ॥

विषलता । स्त्री॰ इन्द्रवारुण्याम् ॥

विषविद्या । स्त्री॰ विषघ्नमन्त्रे ॥

विषवैद्य : । पुं॰ कथाप्रसङ्गे । गारुडिके । जाङ्गुलिके ॥ विद्यामधीते • वेत्तिवा । तदधीतेतद्वेदेत्यण् । विषस्यवैद्य : ॥

विषवैरिणी । स्त्री॰ निर्विषायाम् ॥

विषशालूक : । पुं॰ पद्मकन्दे ॥

विषशूक : । ) पुं॰ भृङ्गरोलि ॥
विषशृङ्गी । )

विषसूचक : । पुं॰ चकोरे ॥

विषसृक्का । स्त्री॰ भृङ्गरोलि ॥

विषघ्नी । स्त्री॰ अपराजितायाम् ॥ निर्विषायाम् ।

विषहर: । पुं॰ गरलनाशकौषधादौ ।

विषहरा । ) स्त्री॰ मनसादेव्याम् ॥
विषहरी )

विषहा । स्त्री॰ देवदालीलतायाम् ॥

विषा । अ॰ बुद्धौ । विपूर्वात् स्यतेर्विषाविष्ट्यापत्यय : ॥

विषा । स्त्री॰ अतिविषायाम् ॥ विषा सोष्णाकटु स्तिक्तापाचनीदीपनीह रेत् । कफपित्तातिसारामविषकास वमिकृमीन् ॥ बुद्धौ ॥ वेवेष्टि । वि ष ल्ट॰ । विषप्रयोगेवा । इगुपधेति क : ॥

विषाङ्कुर : । पुं॰ शल्यास्त्रे ॥

विषाणम् । न॰ पशुशृङ्गे ॥ इभदन्ते ॥ कुष्ठनामौषधे ॥ क्रोले ॥ व्यस्ति । असभुवि चानश्ग्रसोरल्लोप: । उपसर्गप्रादुर्भ्यामितिषत्वम् ॥

विषाणिका । स्त्री॰ मेषशृङ्ग्याम् ॥ सातलायाम् ॥ कर्कटशृङ्ग्याम् ॥ आवर्त्तक्याम् ॥

विषाणी । पुं॰ हस्तिनि ॥ शृङ्गिणि ॥ ऋषभनामौषधे ॥ शृङ्गाटके ॥

विषाणी । स्त्री॰ क्षीरकाकोल्याम् ॥ अजशृङ्ग्याम् ॥ फलस्याजशृङ्गस दृशत्वात् । विषाणमस्त्यस्या : । अर्श आद्यच् । गौरादि: ॥ ति न्तिडाम् ॥ ऋषभौषधे ॥ वृश्चि काल्याम् ॥

विषाद : । पुं॰ अवसादे । उपता पे । स्नेहविषयीभूतस्वजनविच्छे दाशङ्कानिमित्तशोकापरपर्यायेचि त्तव्याकुलीभावे ॥ इष्टनाशकृतेम नोभङ्गे ॥ तदुक्तम् । विषादश्चेत सोभङ्गउपायाभावनाशयोरिति- विषदनम् । षद्ल्ट॰ । घञ् । मो हे ॥ विषादात्मकस्तमोगुण : ॥

विषादनी । स्त्री॰ पलाशीलतायाम् ।

विषादी । त्रि॰ सततमसन्तुष्टस्वभा वत्त्वेनानुशोचनशीले ॥

विषानन : । पुं॰ सर्पे ॥

विषान्तक : । पुं॰ शिवे ॥ त्रि॰ विषनाशके ।

विषापह । पुं॰ पाटलौ । मुष्कके ॥

विषापहा । स्त्री॰ इन्द्रवारुण्याम् ॥ निर्विषायाम् ॥ नागदमन्याम् । अर्कमूलायाम् ॥ सर्पकङ्का- लिकायाम् ॥

विषाभावा । स्त्री॰ निर्विषायाम् ॥

विषायुध : । पुं॰ सर्पे । न॰ विष युक्तास्त्रे ॥

विषारः । पुं॰ सर्पे ॥

विषारातिः । पुं॰ कृष्णधत्तूरके ॥

विषारिः । पुं॰ घृतकरञ्जे ॥ महाचञ्चुशाके ॥

विषास्यः । पुं॰ सर्पे ॥ त्रि॰ विषयुक्तमुखे ॥

विषास्या । स्त्री॰ भल्लातके ॥

विषीदन् । त्रि॰ विषादंकुर्वति । चतिदुःखिते ॥

विषु । अ॰ नानार्थे ॥ साम्ये ॥ सर्वतोर्थे ॥

विषुणः । पुं॰ विषुवदाख्येकाले । विषुवे ॥ विषुनानाअस्त्रन्तिइति विष्वश्चि । तान्यस्यसन्ति । पामादिषु॰ विष्वगित्युत्तरलोपश्चाक्रतसर्खे रितिगणसूत्रान्नप्रत्ययउत्तरपदलोपश्च । विषुवदाख्यकालस्यदिनानागतानिदिनानिसंति॰ दिनान्तराणांन्यूनाधिकभावस्यतन्मूलकत्वात् ॥

विषुवम् । न॰ समरात्रिन्दिवेकाले । तुलामेषयोरर्कसङ्क्रमे ॥ विषुसाम्यमस्यास्ति॰ तुलयामेषेणस-ह्वेत्यर्थे॰ वप्रकरणेअन्येभ्योपीत्युक्तेर्वः ॥

विषुवत् । न॰ विषुवे ॥ प्रथमेकृत्तिकाभागेयदाभास्वांस्तदाशशी । विशाखानांचतुर्थेशेमुनेतिष्ठत्यसंशयम् ॥ विशाखायांयदासूर्यश्चरत्यंशंतृतीयकम् । तदाचन्द्रंविजानीयात्कृत्तिकाशिरसिस्थितम् ॥ तदैवविषुवाख्योयंकालः पुण्योऽभिधीयते । तदादानानिदेयानिदेवेभ्यः प्रयतात्मभिः ॥ इतिविष्णुपुराणम् ॥ विषुसाम्यमस्यास्ति॰ तुलयामेषेणसह्वेत्यर्थेमतुप्प्रत्ययः ॥

विषूचिः । स्त्री॰ नानागतौ ॥ पृथक्फले ॥

विषूचिका । स्त्री॰ प्रवाहिकायाम् ॥

विषूचीनः । त्रि॰ सर्वतःप्रसृते ॥

विषौषधी । स्त्री॰ नागदन्त्याम् ॥

विष्कः । पुं॰ विंशतिवर्षकेगजे ॥

विष्कम्भः । पुं॰ योगविशेषे ॥ तत्रोत्पन्नस्यफलंयथा । विष्कम्भयोगेयदिजन्मकालेकार्येस्वतन्त्रोमनुजस्तदानीम् । सुहृत्कलत्रात्मजसौख्ययुक्तःगृहस्यनिर्माणविधौसमर्थः ॥ विस्तारे ॥ प्रतिबन्धे । अर्गलायाम् । आगल॰ इतिभाषा ॥ योगिनांबन्धभेदे ॥ विष्कभ्नाति । स्कम्भुःसौत्रोरोधनार्थः । कर्मण्यण् । वेःस्कभ्नातेरितिषत्वम् इष्टं ॥

विष्कंभकः । पुं॰ पूर्वनटसङ्क्षेपपूर्वकतत्प्रतिपन्नोत्कृष्टनटप्रवेशे ॥ यथा । वृत्तवर्तिष्यमाणानांकथांशानांनिसूचकः । विष्कम्भकइतिख्यातोहीनपात्रप्रयोजकइति ॥

विष्कम्भशैल : । पुं० मेरोर्दाढ्यार्थंस्थि तेषुचतुर्षुपर्वतविशेषेषु- ॥ यथा । विष्कम्भशैलाश्चत्वारोमेरो : स्थैर्या यवेधसा । कृताश्चोन्नतय : कृष्णा स्तेषांपूर्वेणमन्दर : ॥ ज्ञेतोऽद्रिद्रा पूर्वाभोयाम्यतोगन्धमादन : । प्रती च्यांविपुलोनील : सुपार्श्व : सौम्य तोऽरुण : ॥ सहस्रयोजनोच्छ्राया स्तेषुकल्पद्रुमा: स्थिता: । कदम्बज म्बूअश्वत्थन्यग्रोधोचोत्तरान्तिका ॥

विष्कम्भि । न० अर्गलायाम् ॥ वि ष्कभ्नाति० कर्त्तरि । स्कम्भु० । आ वश्यकेणिनि : ॥

विष्कल : । पुं० ग्राम्यशूकरे ॥ इ० रा० नि० ॥

विष्किर : । पुं० खगे । पक्षिणि ॥ पक्षिविशेषाणांगणे ॥ यथा । वर्त्त- कालावविष्किरकपिञ्जलकतित्तिरा: । कुलिङ्गकुक्कुटाद्याश्चविष्किरा: स मुदाहृता : ॥ विकीर्य्यभक्षयन्त्येते यस्मात्तस्माद्धिविष्किरा : ॥ विष्कि रामधुरा : शीता : कषाया : कटु पाकिन : । बल्यावृष्यास्त्रिदोषघ्ना: पथ्यास्ते लघव : स्मृता : ॥ विकि- रति । क्त० । इगुपधेतिक : । वि- ष्किर : शकुनिर्विकिरोवेतिपक्षेसु ट् । परिनिविभ्यइतिषत्वम् ॥

विष्ट : । त्रि० प्रविष्टे ॥ संवर्त्ते ॥ विश ति । विश० । क्त : ॥

विष्टपम् । न० पुं० विष्टपे । भुवने ॥ विशन्त्यस्मिन्सुकृतिन : । विशप्रवे शने । विटपविष्टपविशिपोलपा इतिविशेरौणादिक : कपन्प्रत्यय: । प्रत्ययस्यतुट् । अत्र तिषत्वम् । सूत्रेविष्टपस्थानेपिष्टपइतिपक्षान्तरादि पाठस्तूज्ज्वलदत्तरीत्योक्तइतिबोध्य म् । नायंयुक्त: यच्चत्रयस्त्रिविष्टपमि- त्यादौ० दन्त्योष्ठ्यादिपाठस्यदर्शनात्

विष्टब्ध : । त्रि० विधृते ॥

विष्टम्भ : । पुं० प्रतिबन्धे ॥ आमयस्य भेदे । आनाहरोगे ॥ तल्लक्षणन्तु । आमंसकृद्वापिचितंक्रमेणभूयोविब द्धंविगुणानिलेन । प्रवर्त्तमानंनयथा स्वमेनंविकारमानाहमुदाहरन्ति ॥ आममपक्वमाहारसारम्० शकृत्पु रीषंवाक्रमेणनिचितंसञ्चितम्० भू योविगुणानिलेनदुष्टवायुनाविबद्धं व्यामयेोचितम्वायथास्वंपूर्ववत्स्वप्र वर्त्तमानम्० एनंविकारमानाहमा- हु : ॥ उत्तरदेशगतिप्रतिबन्धे ॥ आक्रमे ॥

विष्टम्भी । त्रि० विष्टम्भरोगजनके ॥ विष्टम्भरोगवति ॥

विष्टर : । पुं० विटपिनि । महीरुहे ॥ दर्भमुष्टौ ॥ पीठाद्यासने ॥ आदि नाकुशासनादिग्रह : ॥ समध्ययन्थि दर्भासने ॥ विष्टरलक्षणम् यथा । विष्टरस्तु० सार्द्धहितयवामावर्त्तवलि

ताधोमुखायाथसंख्यातदर्भाः ।
तथाचगृह्यसंग्रहः । अर्द्धशीर्षभवेद्
ब्रह्मालम्बकोशस्तुविष्टरः । दक्षिणा
वर्त्तकोब्रह्मावामावर्त्तस्तुविष्टरः ॥
इति ॥ दर्भसङ्ख्यानविहितावि
ष्टरास्तरणेष्वपीतिच ॥ विस्तीर्य्य
ते, स्तृञ्आच्छादने । वृक्षासनयो
र्विष्टरइतिसाधुः । विपूर्वात्स्तृञ्
इत्येतस्मात्॰ ऋदोरप्॰ इत्यपि॰
षत्वं निपातनादित्यर्थः ॥
विष्टरश्रवाः । पुं॰ विष्णौ ॥ विष्टरेवृ
क्षेश्रूयते । असुन् । वृक्षसाङ्गत्यो
भिमतः॰ अश्वत्थः सर्ववृक्षाणा
मित्युक्तेः ॥ विष्टरोदर्भमुष्टिरिवश्र
वसीकर्णावस्येतिवा ॥
विष्टरा । स्त्री॰ गुण्डासिन्याम् ॥
विष्टरुहा । स्त्री॰ स्वर्णकेतक्याम् ॥
विष्टिः । स्त्री॰ वेतनंविनाहठाद्यारी
हणनादिक्लेशे । आज्ञाम् । वेठी॰
वेठू॰ वेगारी॰ इतिभाषा ॥ ह
ठाद्भृतिकःक्लेशोविष्टिराजूसकी
र्त्त्यते ॥ वेतने ॥ कर्म्मणि ॥ प्रे
षणे ॥ करणान्तरे । भद्रायाम्
॥ अस्याउत्पत्तिमाह । भद्रापुरा
संयुगदैत्यविग्रहेऽभवद्वामीषदना-
मरासुरे । लाङ्गूलिनीसप्तगयात्रि-
पदतीवराटकाहग्घनघोषकस्वना
॥ वामीरासभीतद्वदनंमुखंयस्याः ।
घनोनिविडः॰ कुत्सितोघोषोघोष
कः कुत्सितकांस्यंतद्वत्स्वनः श
ब्दोयस्याः ॥ आविप्रविष्टाकुणपा
शुकाम्बराऽमरद्विषामग्रवकाननेत
दा । परेतगाधूमनिभावलीवृतो
वाश्वंवसाभूदतिदीर्घविग्रहा ॥ आ
लिसमूहे । अग्रवकानने॰ पितृव
ने । परेतगा॰ प्रेतवाहना ॥ त
स्यास्तदाचानगिरेऽमरारयः कलि
न्दजासीदरधामपद्धतिम् । अवाप
साकर्णपदंकपर्दिनोवज्रायुधान-
न्दवतीमरुद्रया ॥ चानगिरे॰ ज
गम् । वज्रायुधा॰ अग्निश
स्त्रा । आनन्दवतः॰ परमसुखयुक्त
स्य ॥ विधेयमेवाऽग्निशिखायता
लुका॰ फलंनसाशीतकराऽस्तिमङ्गल
म् । नरैरतः स्वात्महितोपलब्धि
भिस्तदाश्रितंस्वाश्रितकर्मसिद्धिजम्
शीतकरा॰ शाडीशात्रुद्भूतः प्राप्ता
वरोयया । अग्निशिखायतालुका॰
वह्निज्वालायद्वत्तालुकंयस्याः ।
स्वाश्रितकर्म सिद्धिजम्॰ स्वयावि
ष्ट्याश्रितंविहितंकर्मतस्यसिद्धि-
स्तस्याजातम्॰ भद्रायांकृतकार्य-
निष्पत्तिजातम् । तदाश्रितम्॰
विष्टिवेलाप्राप्तम्॰ मङ्गलमुद्वाहा-
दिकंनविधेयम् । स्वात्महितोप
लब्धिभि॰ः स्वात्मनेनिजजीवाय॰
हिता॰ हितकारिणी॰ उपलब्धि
र्वृद्धिः प्राप्तिर्ज्ञानंवायेषांतैः ॥

ते : । वेवेष्टिव्याप्नोतिविश्वम् ।
विष्ल्व्याप्तौ । विषे:किच्चेति०नु:
। रघाभ्यामितिणत्वम् ॥ वेषति०
सिञ्चति०आप्याययतिविश्वम् ०इति
वा । विष्णाति०वियुङ्क्तेभक्तान्०
मायापसारणेनसंसारादितिवा ।
पूर्वस्य : । विशति०भूतेन्द्रियम
नोजीवभावेनसर्वप्राणिन : ०विश
न्तिसर्वभूतान्यत्रेतिवा । यस्माद्वि
ष्टमिदंसर्वंतस्यमहात्मन : ।
तस्मादेवोच्यतेविष्णुर्विशधातो: प्र
वेशनात् ॥ यद्वा । रोदसीव्याप्यका
न्तिरभ्यधिकास्थितास्येतितथा । व्या
प्ते मेरोदसीपार्थकान्तिरभ्यधिकास्थि
ता । विशेषेणक्रामति । क्रमु०वि
पूर्वं : । अस्मात् णु प्रत्ययेधातुलो
पश्चपृषोदरादित्वात् क्रमणाद्वाप्यहं
पार्थ विष्णुरित्यभिधीयते ॥ यज्ञे ॥
वामने ॥ वेवेष्टित्रिभिर्विक्रमैरेवलो
कत्रयमितितथा ॥ शुद्धे ॥ वसुदेव
तायाम् ॥ वह्नौ ॥ धर्मशास्त्रकर्तृमु
निविशेषे ॥

विष्णुकदम्बम् । न० श्रवणर्क्षे ।

विष्णुकन्द : । पुं० मूलविशेषे ॥ वि
ष्णुगुप्ते । जलवासे । बृहत्कन्दे ।
दीर्घपत्रे ॥

विष्णुक्रान्ता । स्त्री० अपराजितायाम् ॥ अपराजितायाअन्यासुपजा
तिरपिविष्णुक्रान्ता । तत्पर्याया:
। हरिक्रान्ता०नीलपुष्पा०अपराजि
ता०नीलक्रान्ता०सुनीला०विक्रान्ती
०इतिवैद्यकनिघण्ट : ॥

विष्णुगुप्त : । पुं० कौटिल्यमुनौ ॥

विष्णुगुप्तकम् । न० चाणक्यमूलके ॥

विष्णुगृहम् । न० विष्णुमन्दिरे । स्त
म्भपुरे ॥

विष्णुचक्रम् । न० सुदर्शनचक्रे ॥ क
रस्थरेखामयचक्रे ॥ विष्णुचक्रंकरे
चिह्नंसर्वेषांचक्रवर्त्तिनाम् । भव
त्यल्पाइतीयस्यप्रभावस्त्रिदशैरपि ॥

विष्णुतैलम् । न० भैषज्यरत्नावल्या
द्युक्तेलघुवृहद्भेदभिन्नेतैलविशेषे ।

विष्णुदत्त : । पुं० परिक्षिन्नृपतौ ॥

विष्णुदैवतम् । )
विष्णुदैवत्यम् । ) त्रि० विष्णुधिष्ठात
देवताके ॥ श्रवणे ॥

विष्णुदैवत्या । स्त्री० एकादश्याम् ॥
द्वादश्याम् ॥ एकादशीद्वादशीचप्रो
क्ताश्रीचक्रपाणिन : ॥

विष्णुधर्म : । पुं० शास्त्रविशेषे ॥ वि
द्याविशेषे ॥

विष्णुधर्मोत्तरम् । न० संहिताविशे
षे ॥ तत्रप्रश्नकर्त्ताजनमेजयसुत :
०वक्तार : शौनकादय : ॥

विष्णुपञ्जरम् । न० विष्णुकवचविशे
षे ॥

विष्णुपदम् । न० वियति । आकाशे ॥
विष्णो: पदम् ०आस्पदंस्वरूपंवा ॥

वक्षे । विष्णो : स्थाने ॥ यथा । अपुण्यपुण्ये।परमेष्ठीयाणिला तिष्ठ-तत्र : । यत्रगत्वानशोचन्तितद्विष्णो : परमंपदम् ॥ पुं॰ क्षीरोदे ॥

विष्णुपदी । स्त्री॰ गङ्गायाम ॥ विष्णु: पदंस्थानंयस्या : सा । गौरादित्वान्ङीष् ॥ द्वारिकायाम् ॥ रवे : सङ्क्रान्तिविशेषे । वृषालिघटसिंहेषु विष्णुपदार्कसङ्क्रमे ॥

विष्णुपुरम् । न॰ वैकुण्ठे ॥ विष्णो : पू : । ऋक्पूरित्यप्रत्यय : ॥

विष्णुभक्त : । त्रि॰ वैष्णवे । विष्णुभक्तिविशिष्टे ॥ तल्लक्षणं यथा । मत्कर्मकृन्मत्परमोमद्भक्त : सङ्गवर्जित : । निर्वैर : सर्वभूतेषुय : स मामेतिपाण्डव ॥ नचलतिनिजवर्णधर्मतोय: सममतिरात्मसुहृद्विपक्षपक्षे । नहरतिनचहन्तिकिञ्चिदुच्चै: स्थितमनसंतमवेहिविष्णुभक्तम् ॥ विमलमतिरमत्सर : प्रशान्त: शुचिचरितोऽखिलसत्त्वमित्रभूत : । प्रियहितवचनोऽस्तमानमायोवसतिसदा हृदितस्यवासुदेव : ॥ सकलमिदमहञ्चवासुदेव : परमपुमान्परमेश्वर : सएक : । इतिमतिरचलाभवत्यनन्तेहृदयगतेव्रजतान्विहायदूरात् ॥ यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् । अपगतमदमानमत्सराणांव्रजभटदूरतरेण

मानवानामिति ॥

विष्णुभक्ति : । स्त्री॰ भगवत्सेवायाम् ॥

विष्णुमाया । स्त्री॰ दुर्गायाम् ॥ चिच्छक्तौ ॥ अव्यक्तंव्यक्तरूपेणरज : सत्त्वतमोगुणै : । विभज्ययार्थंकुरुते विष्णुमायेतिसोच्यते ॥ विष्णोरेव माया । एकैवशक्ति : परमेश्वरस्य भिन्नाचतुर्धाव्यवहारकाले । भोगेभवानीपुरुषेषुविष्णु : कोपेषुकाली समरेषुदुर्गा ॥ इत्यनेनविष्णुकालिकयोरेकमूर्तित्वप्रतिपादनात् ॥

विष्णुयशा : । पुं॰ ब्रह्मयश : पुत्रे । कल्किपितरि ।

विष्णुरथ : । पुं॰ नागान्तके । गरुडे ॥ विष्णोरथइव ॥ यद्वा । रथ : पौरुषदेहयोरितिमेदिनी।पुंडशेष : । विष्णोरथ : पौरुषंदेहोवा ॥ विष्णो : स्यन्दने ॥

विष्णुरात : । पुं॰ अभिमन्युसुते । परीक्षिन्नृपतौ ॥ विष्णुनारात : ॥

विष्णुलिङ्गी । स्त्री॰ वर्तिकापक्षिणि ॥

विष्णुवल्लभा । स्त्री॰ तुलस्याम् ॥ लक्ष्म्याम् ॥ अग्निशिखायाम् ॥

विष्णुवाहनम् । न॰ अरुणावरजे । गरुडे ॥ विष्णोर्वाहनम् ॥ गरुड: शाल्मल्यरुणावरजोविष्णुवाहन इतिहेमचन्द्र : ॥

विष्णुवाह्य : । पुं॰ गरुडे

विष्णुस्थानम् । न० तीर्थविशेषे ॥
विष्यन्दन : । पुं० रोचकरस भक्ष्ये ।
विष्यंदे ॥ यथोक्तं सूदशास्त्रे । दधि
क्षीरे समे पक्त्वार्द्धभागावशेषिते ।
अष्टमांशं क्षिपेत्तत्र तण्डुलान्निस्तुष
स्तिलान् ॥ प्रियालपनसाम्राणाम
न्नामाच समं क्षिपेत् । क्षीरादर्द्धं घृ
तञ्चैव शर्करा घृततायसीत् ॥ सिद्ध
शिक्याद्धृतः केपित : कर्पूरेणाधिवासि
त : । एष विष्यन्दनो नाम देवलोके
पि दुर्लभ : ॥ अस्मिन्पक्के हि घृतं स्य
न्दते सर्वतो मुखम् । तस्मात् सूपवि
धानज्ञै र्विष्यन्दम् इति स्मृत : ॥ वि
ष्यन्दो बृंहणो हृद्य : पित्तानिलहरो
गुरु : । रुच्यो बहुतरं स्वादुर्वृष्यः शुक्र
करो हिम : ॥ इति ॥
विष्य : । त्रि० विषवधोचिते ॥ विषेण
वध्य : । नौवयोधर्म विषेत्यादिना
यत् ॥ विषाय उचितो वा । उगवा
दिभ्यो यत् ॥
विष्व : । त्रि० हिंस्रे ॥
विष्वक्पर्णी । स्त्री० भूम्यामलक्याम्
॥ विष्वक्पर्ण्यस्य ॥
विष्वक्सेन : । पुं० जनार्द्दने । वि
ष्णौ ॥ विषुना नाञ्चति गच्छतीति
। ऋत्विगादिना क्विन् । उगितश्चेति
ङीप् । विष्वची सेना यस्य । नकार
परत्वादेति संज्ञायामगादिति नत्व
त्वम् ॥ विष्वगञ्चति पलायन्ते दैत्य
सेना यद्दर्शनाद्योगमात्रेणेति वा ॥ वि
ष्णोर्निर्माल्यधारिणि ॥ चर्योदृविम
नौ ॥
विष्वक्सेनप्रिया । स्त्री० वाराह्यामोष
धौ । चामारआलू० इ०गौ०दे०भा०
। लक्ष्म्याम् ॥ विष्वक्सेनस्य प्रिया ॥
विष्वक्सेना । स्त्री० प्रियङ्गौ । फलि
न्याम् ॥ विष्वक्सेनेति विष्व
क्सने । कुलङ्गनोत्यादिनाम : ॥
विष्वक् । अ० परित : । समन्तादर्थे
॥ नानाविधगतौ ॥ तुल्याङ्गिराच
काले ॥ विषु अञ्चति । अञ्चु० । क्वि
न् ॥
विष्वङ् । पुं० पुरुषे । आत्मनि । व्या
प्ते ॥ विविधं सृष्टं पश्यति । अञ्चु
० । क्विन् ॥
विष्वणनम् । न० भोजने ॥ भक्ष्कर
णे ॥
विष्वद्र्यङ् । त्रि० सर्वतो गच्छति । वि
ष्वग्गतिके ॥ विष्वगञ्चति । ऋत्वि
गादिना : क्विन् । विष्वग्देवयो
रित्यद्र्यादेश : । स्त्रियां विष्वद्रीची ॥
विष्वाण : । पुं० भक्षणे ॥
विसंवाद : । पुं० विप्रलम्भे । प्रतिज्ञा
तासम्पादने ॥ विरुद्धं सम्यग् वदन
म् । वदेर्भावे घञ् ॥
विसंवादि । त्रि० विलक्षणे ॥
विसम् । न० मृणाले । पद्मादीनां मू
ले ॥ बिसति । बिसप्रेरणे । इगु

पर्धितिक: ॥
विसकण्ठिका । स्त्री० बलाकायाम् ॥
विसकुसुमम् । न० कमले ॥
विसखट: । पुं० सिंहे । मृगेन्द्रे ॥ कुक्कुटोन्नधे ॥
विसतन्तु: पुं० मृणालसूत्रे
विसनाभि: । पुं० पद्मिन्याम् ॥
विसपुष्पम् । न० नलिने ॥ विसस्य पुष्पम् ॥
विसप्रसूनम् । न० पद्मोत्कटे । नलिने । पद्मे ॥ विसस्यप्रसूनम् ॥
विसम्वाद: । पुं० विप्रलम्भे । मिथ्यात्म्यानेनवञ्चने । प्रतिकूलतासम्पादने ॥
विसर: । पुं० सन्दोहे । व्रजे । समूहे । विसरति । सृगतौ । पचाद्यच् । प्रसरे ॥
विसर्ग्ग: । पुं० दाने ॥ त्यागे ॥ मलनिर्गमे पायूपस्थयोर्व्यापारे ॥ विभासोरयनभेदे ॥ विसर्ज्जनीये ॥ यथा । शृङ्गवद्गोलवत्सस्यबालिकाकुचयुग्मवत् । नेत्रवत्कृष्णसर्प्पस्य विसर्गोयमितिस्मृत: ॥ विशेषसृष्टौ ॥ यथा । पुरुषानुगृहीतानामेतेषांवासनामय: । विसर्गोयंसमाहारोबीजाद्वीजंचराचरम् ॥ विसर्ज्जनम् । सृज० । घञ् ॥ विविधंसृज्यतेक्षिप्यतेवा० घञ् ॥
विसर्ज्जनम् । न० दाने ॥ परित्यागे ॥ सम्प्रेषणे ॥ सृजेर्विपूर्वात्भावे ल्युट् ॥
विसर्ज्जनीय: । पुं० विसर्गे । द्विबिन्दौ ॥
विसर्प्प: । पुं० रोगविशेषे । सर्पिषामये ॥ यथाविप्रकृष्टंनिदानंसङ्ख्यानिरुक्तिश्चाह । लवणाम्लकटूष्णादिसेवनाद्दोषकोपत: । विसर्प: सप्तधाज्ञेय: सर्वत: परिसर्पणात् ॥ आदिशब्दाद्दधिकोल्लदरितशाकशिराडाकीप्रभृतीनांग्रहणम् । सप्तधात्वं विवृणोति । पृथक्त्रयस्त्रिभिश्चैकोविसर्पोद्वन्द्वजास्त्रय: । वातिक: पैत्तिकश्चैवकफज: सान्निपातिक: । चत्वारएतेवीसर्पावक्ष्यन्तेद्वन्द्वजास्त्रय: । आग्नेयोवातपित्ताभ्यांग्रन्थ्याख्य: कफवातज: । यस्तुकर्दमकोघोर: सपित्तकफसम्भव: ॥ एषांलक्षणादिकंग्रन्थान्तराद्द्रष्टव्यम् ॥
विसर्प्पणम् । न० प्रसरे । तन्त्वपादेर्विसर्प्पणे ॥ सृप्लृगतौ । ल्युट् ।
विसर्प्पि: । पुं० विसर्पे ॥
विसलम् । न० किसलये । पल्लवे ॥
विसार: । पुं० मत्स्ये ॥ विशेषेणसरति । सृगतौ । व्याधिमत्स्यबलेषुचेतिवाच्यमितिघञ् ॥

विसारिणी । स्त्री॰ मत्स्यम्याम् ॥
विसारित: । त्रि॰ प्रसारिते । विपूर्वात्सृधातो: क्त: ॥
विसारी । त्रि॰ प्रसरणशीले । प्रसारिणि ॥ विसरणम् । स्त्री॰ । घञ् विसारोऽस्यास्ति । अतइनि: । अभीक्ष्णं विसरतिवा । बहुलमाभीक्ष्ण्ये॰ इतिणिनि: ।
विसिनी । स्त्री॰ पद्मिन्याम् ॥ मृणाले ॥ विसमस्त्यस्या: । पुष्करादिभ्यइतिइनि: ॥
विसूचिका । स्त्री॰ अजीर्णहेतुकेरोगविशेषे । विसूच्याम् ॥
विसूची । स्त्री॰ विसूचिकायाम् अस्यालक्षणन्तु । मूर्च्छातिसारोवमथु: पिपासाशूलंभ्रमोद्वेष्टनजृम्भदाहा: वैवर्ण्यकम्पौहृदयेरुजश्चभवन्तितस्यांशिरसश्चभेद: ॥ अस्याउपद्रवायथा । निद्रानाशोऽरति: कम्पोमूत्राघातोविसंज्ञता । अमीउपद्रवाघोरा: विसूच्या: पञ्चदारुणाइति । निरुक्तिर्यथा तु: । सूचीभिरिवगात्राणितुदन्सन्तिष्ठतेऽनिल: । यत्राजीर्णेनसावैद्यैर्विसूचीतिनिगद्यते । नतांपरिमिताहारालभन्ते विदितागमा: । मूढास्तामजितात्मानोलभन्तेऽशनलोलुपा: । अस्याश्चिकित्सायथा । लशुनजीरकसैन्धवगन्धकत्रिकटुरा

मठचूर्णमिदंसमम् । सपदिनिम्बुरसेनविसूचिकांहरतिभोरतिभोगविचक्षणा इतिलोलिम्बराज: ॥
विसूरितम् । न॰ अनुतापे ॥ इ॰ ज॰ ध॰ ॥
विसृत: । त्रि॰ विस्तृते । विसरतिस्म । सृ॰ । गत्यर्थ इतिक्त: ।
विसृत्वत: । त्रि॰ विसृते ॥
विसृत्वर: । त्रि॰ प्रसारिणि प्रसरणशीले ॥ विसरतितच्छील: । सृ॰ । सृणनशजीतिक्वरप् । ह्रस्वस्येतितुक् ॥
विसृमत्वम् । न॰ विस्तृते ।
विसृमर: । त्रि॰ विसृत्वरे ॥ विसरतितच्छील: । सृ॰ । घस्यद: क्मरच् ॥
विसृष्ट: । त्रि॰ निक्षिप्ते । उत्पादिते ॥ विपूर्वात्सृजे: क्त: ॥ मुक्ते ॥ दत्ते ॥ विशिष्टिसृष्ट: ॥
विस्त: । पुं॰ हेम्नोऽर्च्चे । सुवर्णे । हेम्न: षोडशमुमासेषु । अशीतिरक्तिकापरिमिते । स्वर्णे ॥ विस्यते । विसउत्सर्गे । क्त: । आगमशास्त्रस्यानित्यत्वान्नेट् ॥
विस्तर: । पुं॰ शब्दस्यविस्तारे । वाक्प्रपञ्चे ॥ विस्तारे ॥ प्रणये ॥ विस्तरणम् । स्तृञ् आच्छादने । ऋदोरप् ॥ पीठे ॥ समूहे ॥
विस्तार: । पुं॰ तिर्यगायती ।

विस्तृतौ । प्रसृतावयवेसमूहे ॥ विटपे ॥ शाखापल्लवादिसमुच्चये ॥ स्तम्बे ॥ विस्तीर्णतायाम् । विग्रहे । व्याप्तौ ॥ विस्तरणम् । स्तृञ् । प्रथनेवावशब्दइतिघञ् ॥ विभूतौ ॥ यथा । विस्तारः सर्वभूतस्य विष्णोः सर्वमिदं जगत् । द्रष्टव्यमात्मवत्तस्मादभेदेनविचक्षणैरिति । सर्वभूतस्यसर्वात्मकस्य ॥

विस्तारित : । चि॰ विस्तृते ॥ प्राप्तविस्तारे ॥

विस्तीर्ण : । चि॰ विपुले । विशाले ॥ विस्तीर्यतेस्म । स्तृञ् । क्तः । रदाभ्यामितिनः ॥

विस्तीर्णपर्ण : । पुं॰ म॰मानकद्रुमे । महापत्रे ॥

विस्तृत : । चि॰ विस्तृते । नते । विस्तारिते । लब्धविस्तारे ॥ विस्तर्यतेस्म । स्तृञ् । गत्यर्थेतिक्तः ॥

विस्तृति : । स्त्री॰ विस्तारे ॥ विस्तरणम् । क्तिन् ॥

विस्पष्ट : । चि॰ सुव्यक्ते । सुस्पष्टे ॥ न॰प्रकटोदिते । प्रकटोक्ते ॥

विस्फार : । पुं॰ धनुषः स्वाने । येघानांधनुर्गुणशब्दे ॥ विस्फुरणम् । स्फुरस्फुरणे । घञ् । स्फुरतिस्फुलत्योर्घञीत्यात्वम् ॥ स्फारस्फुरणेवा ॥

विस्फारित : । चि॰ निर्घोषिते ॥ विवर्त्तिते ॥ प्रकाशिते ॥ विपूर्वात्ण्यन्तस्फुरतेः क्तः ॥

विस्फुरणम् । न॰ सर्वतप्रसरणे ॥

विस्फुरित : । चि॰ स्फूर्त्तिविशिष्टे ॥

विस्फुलिङ्ग : । पुं॰ विषप्रभेदे ॥ अग्निकणे ॥

विस्फूर्ज्जथु : । पुं॰ वज्रघोषे ॥ ट्वितोथुच् ॥

विस्फूर्ज्जित : । चि॰ सञ्जृम्भिते ॥

विस्फोट : । पुं॰ विरुद्धस्फोटके । पिटके । पिटकायाम् । पिडिया॰फोड़ा॰ इ॰भा॰ ॥ विस्फोटति । स्फुटिर्विशरणे । अच् ॥ करणेघञ्वा ॥

विस्फोटक : । पुं॰ व्रणविशेषे । विस्फोटे ॥ विस्फोटाति । स्फुटिर्॰ ण्वुल् ॥

विस्मय : । पुं॰ अद्भुते । आश्चर्ये । अलौकिकचमत्कारविशेषे ॥ यथा । विविधेषुपदार्थेषुलोकसीमातिवर्त्तिषु । विस्फारश्चेतसोयस्तुसविस्मयउदाहृतः ॥ गर्वे । दर्पे ॥ विस्मयनम् । ष्मिङ्ईषद्धसने । एरच् ॥ सन्देहे ॥

विस्मयान्वित : । चि॰ विलक्षे ॥ विस्मयेनआश्चर्येणअन्वितः ॥

विस्मयाविष्ट : । चि॰ अद्भुतदर्शनजन्याश्चर्येणव्याप्ते ॥ विस्मयेनआश्चर्यगुणाआविष्टाव्याप्तः ॥

विस्मरणम् । न॰ विस्मृतौ ॥ स्मृ आध्याने । ल्युट् ॥
विस्मायन : । पुं॰ कुहके । इन्द्रजाले ॥ गन्धर्व्वनगरे ॥ स्मरे । कामदेवे ॥
विस्मित : । त्रि॰ विस्मयमाश्चर्य्यं प्राप्ते । विस्मयान्विते ॥ ष्मिङ्॰ । कर्त्तरि क्त : ॥
विस्मृत : । त्रि॰ अन्तर्गते । स्मरणाविषये ॥ विस्मर्य्यतेस्म । स्मृ॰ । क्त : ॥
विस्मृति : । स्त्री॰ विस्मरणे ॥ विस्मरणम् । स्मृ॰ । क्तिन् ॥
विस्मेर : । त्रि॰ विस्मयशीले ॥ विस्मयतेतच्छील : । नमिकम्पीत्यादिना र : ॥
विस्रम् । न॰ आमगन्धिनि ॥
विस्रंसनम् । न॰ अवस्रंसने । अध : पतने ॥
विस्रंसमान : । त्रि॰ ध्वंसमाने ॥
विस्रगन्ध : । पुं॰ हरिताले ॥ त्रि॰ दुर्गन्धिनि ॥ विस्रंगन्धोस्य ॥
विस्रगन्धा । स्त्री॰ हवुषायाम् ॥
विस्रगन्धि : । पुं॰ हरिताले ॥
विस्रब्ध : । त्रि॰ अनुद्धटे ॥ गाढे ॥ विश्वस्ते ॥
विस्रम्भ : । पुं॰ केलिकलहे ॥ विश्वासे ॥ प्रणये ॥ प्रणय : परिचय : शृङ्गारप्रार्थनाविशेषमरमाला । क्रीडापारतन्त्र्यमितिकश्चित् ॥ वधे ॥ परिहये ॥ विप्रलम्भे ॥ विस्रम्भणम् । विस्रभ्यतेऽनेनवा । स्रम्भु विश्वासे । घञ् ॥
विस्रम्भित : । त्रि॰ विश्वासंप्रापिते ॥
विस्रम्भी । त्रि॰ प्रणयिनि ॥ विश्वासिनि ॥ अस्त्यर्थे इनि : ॥
विस्रसा । स्त्री॰ जरायाम् । विस्रस्यतेऽनया । स्रंसु अध : पतने । भिदाद्यङ् ॥
विस्रस्त : । त्रि॰ विच्युते ॥
विस्रा । स्त्री॰ हवुषायाम् ॥
विहग : । त्रि॰ पक्षिणि ॥ आशुगेबाणे ॥ ग्रहे ॥ विहायसा॰विहायसिवा गच्छति । गम्लृ॰ । अन्यत्रापिदृश्यतइतिड : । डे चविहायसोविहादेशोवक्तव्य : ॥
विहङ्ग : । त्रि॰ पक्षिणि ॥ आशुगे । बाणे ॥ पुं॰ चन्द्रे ॥ सूर्ये ॥ मेघे ॥ विहायसा॰विहायसिवागच्छति । विहायसोविहचगमे : सुप्रीतिखच् । खच्चडिद्वा ॥
विहङ्गम : । पुं॰ विहङ्गे । खगे ॥ विहायसागच्छति । गम्लृ॰ । विहायसोविहच॰गमे : सुप्रीतिखच् ॥
विहङ्गमा । स्त्री॰ भारयष्ट्याम् ॥
विहङ्गराज : । पुं॰ गरुडे ॥ विहङ्गानांराजा । टच् ॥
विहङ्गिका । स्त्री॰ भारयष्ट्याम् । बहँगी॰इ॰भा॰ ॥ विहङ्गप्रतिकृति :

। हवेर्ण्यन्तात्कनिप्रत्ययः ॥ विहा
यसामच्छतिवा । गमश्चेतिखच् ।
विहायसोविहच । खच्चवाडिडाच्यः
। यावादिस्वात्कन् । टाप् ॥
विहतः । त्रि॰ विनष्टे । विशेषेणहतः ॥
विहननम् । न॰ विघ्ने ॥ हिंसायाम्
॥ तूलपिञ्जने । तूलधनुषि ॥
विहरः । पुं॰ वियोगे ॥
विहरणम् । न॰ विहारे ॥ विपूर्वाद्धृ
ञोल्युट् ॥
विहरन् । त्रि॰ क्रीडति ॥
विहर्तुम् । अ॰ क्रीडितुमित्यर्थे ॥
विहसितम् । न॰ मध्यत्वाल्पत्वहीने॰
मध्यहास्ये । यथाहुः । आकुञ्चित
कपोलाद्यं सस्वनं निस्वनं तथा । प्र
स्तावोत्थं सानुरागमाहुर्विहसितं बु
धाः ॥ हसेहसने । भावेक्तः ॥
विहस्तः । त्रि॰ पण्डिते ॥ विह्वले ।
व्याकुले ॥ करशून्ये ॥ विगतोवि
च्छिन्नोवाहस्तोऽस्य ॥
विहा । अ॰ स्वर्गे ॥ विशेषेणजहाति
। ओहाक्त्यागे । बिषाबिहेत्याप्रत्य
यः ॥ न्यायेनोपार्जितस्यधनादेः
सत्पात्रेविनियोगे ॥
विहापितम् । न॰ दाने ॥ विहापन
म् । ओहाक् । ण्यन्तात्क्तः ॥
विहायाः । पुं॰ खगे । शकुने ॥ पुं॰
न॰ गगने । आकाशे ॥ विशेषेणहा
यति॰ गमयति॰ विमानादीन् ।
हयगतौ । ण्यन्तादसुन् ॥ विजहा
तिभुवंवा । ओहाक्॰ । वहिहाधा
ञ्भ्यश्छन्दसीत्यसुन् । णिदित्यस्या
नुवृत्तेर्युक् । क्वचिच्छान्दसाअपि
भाषायांप्रयुज्यन्तेतेनलोकेपि ॥
विहायसम् । न॰ व्योम्नि ॥
विहायसा । अ॰ नभसि ॥
विहारः । पुं॰ क्रीडार्थपदन्यासप्रचरणे
। परिक्रमे । भ्रमणे ॥ स्कन्धे ॥ ली
लायाम् ॥ सुगतालये ॥ विहरण
म् । हृञ्॰ । घञ् ॥ यानादौ ॥
विह्रियन्तेऽनेन । करणेघञ् ॥ क्रीडा
स्थाने ॥ विहरन्त्यत्र । अधिकरणे
घञ् ॥ बिन्दुरेखखगे ॥ त्रि॰ हार
वर्जिते ॥ विगतोहारोऽस्य ॥
विहारगृहम् । क्रीडागारे ॥
विहारवित् । पुं॰ श्रीकृष्णे ॥ त्रि॰ वि
हारज्ञे ॥
विहारवेदिका । स्त्री॰ वितर्धाम् ॥
विहारस्थानम् । न॰ क्रीडाप्रदेशे ॥
विहारी । त्रि॰ परिक्रमिणि । विहार
कर्त्तरि ॥ मत्वर्थीयइनिः ॥
विहितः । त्रि॰ सृष्टे । निर्मिते । वि
धेये । विध्यागतोचितकृत्ये ॥ वि
धीयतेस्म । डुधाञ्॰ । क्तः । द
धातेर्हिः ॥ अभिहिते । विपूर्वस्य
दधातेःक्रियासामान्यवाचित्वात्
विहितिः । स्त्री॰ विधाने ॥
विहीनः । त्रि॰ विगते । विशेषेणहो

ने । त्यक्ते । वर्त्तिते । वेधविद्धी
नेश्रोतरिक्ता वाक्यं प्रयाति वैफल्यम्
। नयनविहीनेभर्त्तरि लावण्यमिव
खञ्जनाक्षीणाम् ॥

विहृतम् । न० स्त्रीणां स्वाभाविकदशा
लङ्कारान्तर्गतालङ्कारविशेषे ॥ यथा
। लीलाविलासौ विच्छित्तिर्विब्बोकः
किलकिञ्चितम् । मोट्टायितं कुट्टमि
तं ललितं विहृतं तथा ॥ विभ्रमश्चे
त्यलङ्काराः स्त्रीणां स्वाभाविका द
शेति हेमचन्द्रः ॥ तल्लक्षणं यथा ।
वक्तव्याभाषणं व्याजाद्विहृतं दर्शितेङ्गि
तम् ॥ विहरणम् । हृञ्० । भावे क्तः ॥

विहृतिः । स्त्री० सञ्चारे ॥ विहरणम्
। हृञ्० । क्तिन् ॥ विशेषेणहरणे ॥

विहेठः । पुं० विहेठने ॥

विहेठनम् । न० हिंसायाम् ॥ मर्द्दने
॥ विडम्बने । हेठ विबाधायाम् ।
ल्युट् ॥ दुःखे ॥

विहेडनम् । न० विहेठनार्थे ॥ हेड्०
। ल्युट् ॥

विह्वलः । त्रि० भीत्याद्यभिभूते । स्वा
ङ्गान्यवधारयितुमशक्ते । विक्लवे ॥
विह्वलति । ह्वलचलने । अच् । मू
र्च्छिते । विलीने ॥ विवशे ॥

वी । पुं० गमने । वेति । वीगत्या
दौ । क्विप् ॥

वीकः । पुं० वायौ । वाते । पक्षिणि
। खगे । अजति । अज० । अजिपु
धूनीभ्योदीर्घश्चेतिकन् ॥ मनसि ॥

वीकाशः । पुं० रहसि । विजने ॥
विकाशे । प्रकाशे । विकाशनम्०
अस्मिन्वा । काशृदीप्तौ । भावे०ऋ
लर्षेत्यधिकरणे वा घञ् । वृकः
काश इति दीर्घः ॥ यद्वा । विकाश
नमत्र वा । कासशब्दे । पूर्ववत्०घ
ञ् दीर्घौ ॥

वीक्षणम् । न० विलोकने ॥ विशिष्ट
मीक्षणम् ॥

वीक्षणीयः । त्रि० गुरुमुखादवगतस्य
विचारणीये । वीक्षितुं योग्ये ॥ ईक्ष०
। अनीयर् ॥

वीक्षापन्नः । त्रि० विस्मयान्विते ॥ वी
क्षणम्०वीक्षा तामापन्नः ।

वीक्षितः । त्रि० अवलोकिते । दृष्टे ॥
विशेषेणेक्षितः ॥

वीक्ष्यः । पुं० लासके ॥ वाजिनि ।
घोटके । न० विस्मये । दृश्ये । त्रि०
दर्शनीये ॥ *

वीङ्खा । स्त्री० शूकशिम्ब्याम् ॥ ग
तिभेदे ॥ नर्त्तने ॥ अश्वगतिभेदे ॥
सम्पौ ॥

वीचिः । पुं० स्त्री० स्वल्पतरङ्गे । ऊ
र्म्याम् ॥ अवकाशे । वीच०कृ०भा०
॥ सुखे ॥ वयति० जयतेवा । वेञ्
तन्तुसन्ताने । वेञोडिच्चेति० इचि ः
॥ अल्पे ॥ आल्याम् ॥

वीचिमाली । पुं० समुद्रे ॥ वीचीनां

माला॰ सास्तिमस्य । व्रीह्यादित्वा
दिनिः ॥
वीची । स्त्री॰ वीचिशब्दार्थे ॥
वीचीतरङ्गः । पुं॰ न्यायविशेषे ॥ स
तुशोत्रेशब्दस्योत्पत्तिकारणरूपः ।
यथा । वीचीतरङ्गन्यायेनतदुत्पत्ति
स्तुकीर्त्तिता । कदम्बगोलकन्याया
दुत्पत्तिः कस्यचिन्मते ॥ इ॰भा॰
प॰ ॥ ननुमृदङ्गाद्यवच्छेदेनोत्पन्ने
शब्दे ॰श्रोत्रेकथमुत्पत्तिरित्यतआह
। वीचीति आद्यशब्दस्य॰वहिर्द
शदिगवच्छिन्नोऽन्यःशब्दस्तेनैवशब्दे
नजन्यते॰तेनचापरस्तद्व्यापकएवंक्र
मेणश्रोत्रे उत्पन्नोगृह्यतइति । कदम्ब
इति । आद्यशब्दाद्दशदिक्षुदशश
ब्दाउत्पद्यन्ते॰तैश्चान्येदशशब्दाउत्प
द्यन्तइतिभावः । अस्मिन्कल्पेगौ
रवादुक्तंकस्यचिन्मतइति ॥
वीजम् । न॰ अङ्कुरकारणे ॥ हेतौ ।
तत्त्वे ॥ आधाने ॥ शुक्रे । रेतसि
॥ सर्वभूतानांप्ररोहकारणंवीजंत
स्मायेोपाधिकंचैतन्यंभगवद्विभूतिः
॥ विशेषेणजायतेऽनेन । उपसर्गे
चसंज्ञायामितिडः । अन्येषामपी
तिदीर्घः ॥ यद्वा । विशेषेण॰ईजते ।
ईजगतिकुत्सनयोः । अच् । वीज्य
तेवा । घञ् । कुत्वन्तुनभवति॰च
जोरित्यत्रनिष्ठायामनिटइतिवाच्ये
कक्तापूरितत्वात् । अस्यचनिष्ठा
यांसेट्त्वात् ॥ यद्वा । वीजयति॰
वीज्यतेऽनेनवा । वीजव्यजने । अ
च॰घञ्वा ॥ मज्जनि ॥ गणित
विशेषे॰अव्यक्तगणिते ॥ मल्ले ॥
वीजकः । पुं॰ मातुलुङ्गे ॥ असनवृ
क्षे । पीतसारके । विजयसार॰इ॰
भा॰ ॥ वीजकः कुष्ठवीसर्पश्वित्र
मेहगुदकृमीन् । हन्तिश्लेष्मास्रपि
त्तञ्चत्वच्यःकेश्योरसायनः ॥
वीजकृत् । न॰ वाजीकरणे ॥
वीजकोशः । पुं॰ वीजकोषे ॥
वीजकोशी । स्त्री॰ शिम्बायाम् ॥
वीजकोषः । पुं॰ वराटके । कर्णिका
याम् ॥ वीजस्यकोषः पात्रमाधार
इतियावत् ॥ वीजाभिधाने ॥
वीजगर्भः । पुं॰ पटोले ॥
वीजगुप्तिः । स्त्री॰ शिम्व्याम् ॥
वीजधर्म्मिणी । स्त्री॰ सर्वेषांमहदादी
नांविकाराणांवीजत्वेनावस्थितायां॰
प्रकृतौ ॥
वीजधान्यम् । न॰ धान्याके ॥
वीजनम् । व्यजने ॥ केके । चक्रवा
के ॥ चकोरे । वस्तुनि ॥ विधूनने
॥ वीजव्यजने । चुरादिः । ल्युट् ॥
वीजपादपः । पुं॰ भल्लातके ॥
वीजपुष्पम् । न॰ मरुवके ॥ मदनद्रौ ॥
वीजपूरः । पुं॰ फलपूरे । मातुलु
ङ्गे । टाबालेबू॰इ॰बगो॰दे॰भा॰भङ्ग
भाषाच ॥ गुणास्तु । वीजपूरफलं

स्वादुरसेऽम्लं दीपनं लघु । रक्तपित्तह रं कण्ठजिह्वाहृदयशोधनम् ॥ श्वासकासारुचिहरं हृद्यं तृष्णाहरं स्मृतम् ॥ सैन्धवार्द्रकसंयुक्तं बीजपूरकमप्रियः । शाकिनीभिरिवाक्रुष्टं विगत्य दरमोदनम् ॥ केशरं मातुलुङ्गस्य लघुग्रं शूलापहम् । रोचनं दीपनं हृद्यं गुल्मशूलार्शसां जये तु इति ॥ क्वाथिस्यमूलं याह्यमित्याहु: ॥ बीजैरपूर्यते । पूरीसाप्याय ते । अणुपधेतिकः । कर्मणिवृत्त् वा ॥ देशभाषया बिजोरा० इति प्रसिद्धोयम् ॥

बीजपूर्ण: । पुं० बीजपूरे । छोलङ्गे ॥

बीजपेशिका । स्त्री० मुण्डकोषे ॥

बीजप्रद: । पुं० पितरि । गर्भाधानस्य कर्तरि ॥

बीजफलक: । पुं० बीजपूरे ॥

बीजसू: । स्त्री० क्षितौ ॥

बीजमातृका । स्त्री० पद्मबीजे । पद्माक्षे ॥

बीजरत्न: । पुं० माषकलाये ॥

बीजरुह: । पुं० शाल्यादौ ॥ यथा । कुरुण्टाद्याश्च ये बीजामूलजास्तूत्पलादय: । पर्वयोनयइक्ष्वाद्या स्कन्धजा: ॥ शल्लकीमुखा: ॥ शाल्यादयो बीजरुहा: सम्मूर्छजास्तृणादय: । सुवर्णस्य तिकायश्चपञ्चैते मूलजातय: । इ

मचन्द्र: ॥

बीजरेचनम् । न० जयपाले ॥

बीजवपनम् । न० क्षेत्रे बीजक्षेपणे ॥

बीजवृक्ष: । पुं० असनवृक्षे ॥

बीजसञ्चय: । पुं० बीजसङ्ग्रहे ॥

बीजसङ्ग्राम: । पुं० वपने । क्षेत्रे बीजानां विकिरणे ॥ गर्भाधाने ॥

बीजसू: । स्त्री० भूमौ । पृथ्व्याम् ॥

बीजाकृतम् । न० उप्तकृष्टे । सबीजकृष्टक्षेत्रे ॥ बीजैनसहकृतं कृष्टम् । कृष्णोद्वितीयेतिडाच् ॥

बीजाम्लम् । न० वृक्षाम्ले ॥

बीजी । पुं० पितरि ॥ त्रि० बीजविशिष्टे ॥

बीजोदकम् । न० करकायाम् ॥ बीजाकृत्युदकम् । शाकपार्थिवादि: ॥

बीजोप्तिचक्रम् । न० बीजवपनजन्यशुभाशुभज्ञानार्थं सर्पाकारचक्रे ॥

बीज्य: । त्रि० कुलसम्भवे ॥ बीज्यते । बीजव्यजनेऽदन्त: । अचोयत् ॥ यद्वा । बीजमस्यास्ति । अन्येभ्योपिदृश्यत इति यप् । बीजेभव: साधुर्वा ॥

बीटिका । स्त्री० सुसज्जीकृतताम्बूले ॥ इति केचित् ॥

बीणा । स्त्री० तडिति । विद्युति । बल्लक्याम् । विपञ्च्याम् ॥ वेति आयतेस्वरोऽस्याम् । बीगत्यादिषु । रास्नासाक्षास्थूणावीणाइति

नन्नस्ययोणत्वं गुणाभावश्च निपातितः ॥ अस्याः प्रभेदा यथा । विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी ॥ अपिच । शिवस्य वीणा नालम्बी सरस्वत्यास्तु कच्छपी । महती नारदस्य स्यात् गणानान्तु प्रभावती ॥ विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । चाण्डालानान्तु कण्डालवीणा चाण्डालिकापि च ॥ तस्या अङ्गानां नामानि यथा । काय : कोलम्बकस्तस्या उपनाहो निबन्धनम् । दण्डः पुनः प्रवालः स्यात् ककुभस्तु प्रसेवकः । मूले वंशशलाकास्यात् कलिका कूणिकापि चेति ॥ रत्ना० ५ । ८० ॥

वीणादण्ड : । पुं० वीणास्थितालाबूपरिकाष्ठे । प्रवाले । वीणाया दण्डः ॥

वीणानुबन्ध: । पुं० उपनाहे ॥

वीणाल : । त्रि० वीणावति । पुं० नारदे ॥ वीणाऽस्तिअस्य । सिध्मादित्वाल्लच् ॥

वीणावाद : । त्रि० वैणिके ॥ वीणां वादति । वदेर्ण्यन्तात् कर्मण्यण् ॥

वीणावादक : । पुं० वैणिके ।

वीणास्य : । पुं० नारदे ॥ वीणा आस्यमिव प्रधानं यस्य ॥

वीतम् । न० असारगजे । युद्धाक्षमे हस्तिनि ॥ असारतुरगे । युद्धाक्षमे घोटके ॥ अङ्कुशकर्म्मणि । कारिणः पादाघातपूर्वकाङ्कुशवारणे ॥ पादकर्म्म यत् प्रोक्तं यातमङ्कुशवारणम् । उभयं वीतमाख्यातमिति हलायुधः ॥ वेति० अजति स्म वा० युद्धादिकर्मण: वीगत्यादौ० अजगतौ वा । गत्यर्थेति क्तः ॥ अनुमानप्रभेदे । अन्वयमुखेन प्रवर्त्तमाने विधायकोऽनुमानविशेषे ॥ वीतानुमानञ्च द्वेधा । पूर्ववत् सामान्यतोदृष्टञ्च । दृष्टस्वलक्षणसामान्यविषयं यत्तत् पूर्ववत् । पूर्वं प्रसिद्धम्० दृष्टस्वलक्षणसामान्यमिति यावत् । तदस्य विषयत्वेनास्त्यनुमानज्ञानस्येति पूर्ववत् । यथा धूमाद्वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते । तस्य वह्नित्वसामान्यस्य स्वलक्षणं वह्निविशेषो दृष्टो रसवत्याम् । अपरञ्च वीतं सामान्यतोदृष्टम्० अदृष्टस्वलक्षणसामान्यविषयम् । यथेन्द्रियविषयमनुमानम्० अत्र हि रूपादिज्ञानानां क्रियात्वेन करणत्वमनुमीयते यद्यपि च करणत्वसामान्यस्य च्छिदादौ वास्यादि स्वलक्षणमुपलब्धम्० तथापि यज्जातीयं रूपादिविज्ञाने करणमनुमीयते तज्जातीयस्य करणस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण

इन्द्रियजातीयं हि तत्कारणम्० नचेन्द्रियत्वस्य सामान्यस्य स्वलक्षणमिन्द्रियविशेष : प्रत्यक्षगोचरो वा गृहशाम्० यथा वह्नित्वस्य सामान्यस्य स्वलक्षणं वह्नि : सोयंपूर्ववत: सामान्यतोदृष्टस्य सत्यपि वीतत्वे नतुल्यत्वे विशेष। अत्र चदृष्टं दर्शनम्० सामान्यस्य सार्वविभक्तिकस्तसिल्० अदृष्टस्वलक्षणस्य सामान्यस्य० दर्शनमनुमानमित्यर्थ : ॥ त्रि० शान्ते ॥ निवृत्ते ॥ आच्छादिते । विरहिते ॥ विशेषेणइत : ॥

वीतंस : । पुं० मृगाणांपक्षिणामपि बन्धनोपाये ॥ मृगाणांपक्षिणाञ्चविश्वासहेतो : प्रावरणे ॥ वितंस्रुते । तसिअलङ्कारे । घञ् । उपसर्गस्येतिदीर्घ : ॥

वीतदम्भ : । त्रि० त्यक्तदम्भे ॥

वीतन : । पुं० कृकपार्श्वद्वये ॥ यथा । कृकस्तुकन्धरामध्यं कृकपार्श्वौतु वीतनौ । इतिहेमचन्द्र : ॥

वीतभय : । त्रि० निर्भये ॥ वीतंविगतंभयंयस्य ॥

वीतमन्यु : । त्रि० विगतरोषे ॥

वीतराग : । पुं० बुद्धे ॥ त्रि० निस्पृहे । रागशून्ये ॥ विशेषेणइत : गत:० राग : प्रीतिर्मात्सर्यंवा० यस्य० यस्माद्वा ॥

वीतरागभयक्रोध । त्रि० शुद्धसत्त्वे । रागभयक्रोधा:० वीता : विवेकेन विगतायस्मात् ॥

वीतरागी । त्रि० इहामुत्रार्थफलभोगरहिते ॥

वीतशोक : । पुं० अशोकद्रुमे ॥ त्रि० आत्मज्ञे ॥ आत्मज्ञएववीतशोको भवतिनानात्मज्ञ : ॥ शोकहीने । वीत : विशेषेणगत : शोकोयस्ययस्माद्वा ॥

वीतस्पृह : । विरक्ते ॥

वीति : । पुं० अश्वे ॥ स्त्री० गतौ दीप्तौ ॥ प्रजने ॥ अशने ॥ धावने ॥ वेति । वीगत्यादौ । क्ति च्० भावेस्त्रिशक्तिन्वा ॥ निवृत्तौ ॥

वीतिहोत्र : । पुं० धनञ्जये । अग्नौ ॥ वीयते । वीगतिप्रजनकान्त्यसनखादनेषु । कर्मणिक्तिन् । वीति भंक्ष्यं पुरोडाशादि० हूयतेऽस्मिन् । हुदानादनयो : । हुयामाश्रुभसिभ्यस्त्रन्० इतित्रन् ॥ वीतिरश्वोहोत्रंहवनमस्येतिवा ॥ अर्के । सूर्य्ये ॥

वीत्त : । त्रि० विशेषेणदत्ते ॥ विदीयतेस्म । डुदाञ्० । क्त : । अच उपसर्गात्तइतितादेश : द्त्तीति दीर्घ : ॥

वीथि : । स्त्री० वीथ्याम् । अश्वसञ्चारस्थाने ॥ ताम्रनव । यथा । सि

हंमुखेनवसुवीथिषुकश्चिदश्वंवल्गा विभागकुशलोगमयाम्बभूवेतिमाघव्याख्यानावसरेमल्लिनाथः । नवसुवीथिषुसञ्चारस्थानेषुगमयाम्बभूव० वीथयोनवाश्वानांसर्वत्रधाराद्यर्थाः परिमिताः प्रचारदेशाः । तास्तिस्त्रस्त्र्यंके० नवेत्यन्ये० तत्रोत्तरपक्षमाश्रित्योक्तं कविनानवस्विति । यथाहभोजः । वीथ्यस्तिस्त्रोऽश्वधाराणांलघ्वीमध्योत्तमाः क्रमात् । तासांस्याद्धनुषांमानमशीतिर्नवतिःशतम् ॥ श्रेष्ठमध्योत्तमानान्तुवाजिनांवीथिकाः स्मृताः । नवानांकथितावीथ्योदुष्टानांक्रमणक्रमे ॥ अन्येषामपिसर्वत्रगतिरुद्ध्यर्थमीरिताः ॥ समोन्नतासाविषमास्युक्रीर्णाशुद्धाजतायात्र्यणवी० रुद्धाद्या । स्थाणुप्रकीर्णोपलसंप्रकीर्णापार्श्वोन्नताख्यानवधेतिवीथ्यः ॥ सर्वत्रीथिषुयोयाजीदृढशिक्षासमन्वितः । तेनराजारणेनित्यंमृगयायांमुदंव्रजेदिति ॥ अन्ये तु० उरसाल्यादयोगतिविशेषावीथयइत्याहुः । उरसालीवरश्वालीपृथुलोमध्यनामकः । आलीढः शोभनेरङ्गैः प्रत्यालीढस्तथापरः ॥ उपधेनवउत्तश्चपादचालोचसर्वगः । निर्दिष्टावीथयस्त्वेताइति ॥ विध्यतेनया । विधृयाचने । इगुपधा

त्किदितीन् । वाहुलकाद्दीर्घः ॥

वीथिका । स्त्री वीथ्याम् ॥

वीथी । स्त्री० पङ्क्तौ ॥ गृहाङ्गे । गृहपिण्डिकायाम् ॥ नाट्यरूपके । वर्त्मनि ॥ विध्यतेऽनया । विधृ० । घञ् । पृषोदरादिः । गौरादिः ॥ यद्वा । विध्यते । इगुपधात्किदितीन् । वाहुलकाद्दीर्घः । कृदिकारादितिपाक्षिकोङीष् ॥

वीथ्यङ्गः । त्रि० नाटकभेदे ॥

वीध्रः । पुं० अग्नौ ॥ वायौ ॥ न० नभसि ॥ त्रि० विमले ॥ वीन्धे । ञिइन्धीदीप्तौ ॥ वाचिन्धेरिति० क्रन् ॥

वीनाहः । पुं० इष्टकादिभिर्वद्धेकूपमुखे ॥ विनह्यतेऽनेन०कूपमुखम् । णहबन्धने । हलश्चेति घञ् । उपसर्गस्यघञीतिदीर्घः ॥

वीपा । स्त्री० विद्युति ॥

वीप्सा । स्त्री० व्याप्तुमिच्छायाम् ॥ नानार्थकशब्दाधिकरणानांक्रियागुणाभ्यांप्रयोक्तुर्युगपद्व्याप्तुमिच्छा वीप्सा ॥ शैलेशैलेनमाणिक्यंमौक्तिकंनगजेगजे । देशेदेशेनविद्वांसश्चंदनंनवनेवने ॥

वीवधः । पुं० पर्याहारे । उभयतोवद्धशिक्ये स्कन्धवाह्ये काष्ठे । विहङ्गिकायाम ॥ अध्वनि । भा

रे ॥ मार्गे ॥ धान्यादिप्राप्तौ । विघिःविधोइननंगमनंवाऽ्त्रानेनशा । प्रादिभ्योधातुजस्येतिसमासोत्तरपदलोपो अन्येषामपीतिदीर्घः ॥

वीवधिकः । त्रि॰ वार्त्तावहे ॥ वीवधेनहरति । एकदेशविकृतस्यानन्यत्वात्॰ विभाषाविवधादितिष्ठन् । षोडोपथः ॥

वीरः । पुं॰ शूरे । विक्रान्ते ॥ विष्णौ । जिने ॥ शृङ्गाराद्यष्टरसान्तर्गतरसविशेषे । उत्साहवर्द्धने ॥ उतमप्रकृतिर्वीरउत्साहस्थायिभावकः । महेन्द्रदैवतोहेमवर्णोऽयंसमुदाहृतः ॥ ककुभद्रुमे ॥ ब्राह्मणे ॥ भावविशेषे ॥ न॰ अग्नौ ॥ तण्डुलीये ॥ वराहकन्दे ॥ लताकरञ्जे ॥ करवीरे ॥ शृङ्गाम् ॥ नले ॥ मरिचे ॥ पुष्करमूले॥ काञ्जिके ॥ उशीरे ॥ चारूके ॥ त्रि॰ उत्तमे । श्रेष्ठे । वीराचारविशिष्टयथा । कुलाचाररतोवीरः कुलसङ्गीसदाभवेत् । संविदासेवनंकुर्यात्सोमपानंमहेश्वरि ॥ सर्वदाकुरुतेदेविवीरस्रोहतमानसः॥ पुं॰ वीरयति। शूरवोरविक्रान्तौचुरादिः। पचाद्यच् । यद्वा । विशेषेण॰ईर्त्ते॰ईरयतिवा । ईरगतौ । कोऽ्ज्वा ॥ यद्वा । अजति । अजगतिक्षेपणयोः । स्फायितञ्चोतिरक् । अजेर्वी ॥ विविधानां शत्रूणामीरयितावा ॥ यद्वा । ईरणम् । ईरगतौकम्पनेच । भावेघञ् । ईरः पलायनंकम्पनञ्च॰तदुभयेपरवीरप्रयुक्तंविगतमस्मिन्निति वीरः ॥

वीरकः । पुं॰ करवीरे ॥

वीरकुलम् । न॰ ब्राह्मणानांगणे ॥

वीरगतिः । पुं॰ स्वर्गे ॥

वीरजयन्तिका । स्त्री॰ रणेवीराणां नृत्ये ॥

वीरणम् । न॰ उशीरस्तृणे । वीरतरे । बहुमूलके । गाँडरइतिख्याते तृणे । वीरणंपाचनंशीतंस्तम्भनंलघुतिक्तकम् । मधुरंज्वरनुद्वान्तिमदजित्कफपित्तहृत् ॥ तृष्णासृग्विषवीसर्पकृच्छ्रदाहव्रणापहम् ॥ कुशादौनांगणे । यथा । कुशः काशश्चदर्भश्चकत्तृणंभूतृणंतथा । एवंतदूर्वानीलदूर्वागण्डदूर्वेतिवीरणम् ॥ विंपविशेषणमीरयति । ईरगतौकम्पनेच । ल्युट्युज्वा ॥

वीरतरः । पुं॰ वीरश्रेष्ठे ॥ शरे ॥ न॰ वीरणे ॥ अतिशयितोवीरः । द्विवचनविभज्येतितरप् ॥

वीरतरुः । पुं॰ अर्जुनवृक्षे ॥ वीरस्यैतरुश्च ॥ कोकिलाक्षवृक्षे ॥ बिल्वान्तरवृक्षे ॥ भल्लातके ॥

वीरपर्णम् । न॰ सुरपर्णे ॥

वीरपत्नी । स्त्री॰ वीरभार्यायाम् ॥ वीरः पतिर्यस्याःइतिविग्रहे॰नित्यंस

पत्न्यादिष्विति॰पतिशब्दस्यनकारा
न्तादेशे॰कर्त्तव्यइतिङीप् ॥ नहि
वीरपत्नीनामलभ्यंनामकिञ्चिदस्ति ॥
वीरपत्रा । स्त्री॰ विजयायाम् ॥
वीरपाणम् । न॰ वीराणांसमयविशेषे
क्रियमाणेमद्यपाने ॥ यथा। वीरपा
नन्तुयत्पानंवृत्तेभाविनिवारणे ॥
वीराणांपानम् । बाभावकरणयो
रितिणत्वम् ॥
वीरपुरुष : । पुं॰ परैरपराजिते ॥
वीरपुष्पी । स्त्री॰ सिन्दूरपुष्प्याम् ॥
वीरप्रमोक्ष : । पुं॰ तीर्थविशेषे ॥
वीरभद्र : । पुं॰ अश्वमेधाश्वे ॥ वीर
श्रेष्ठे ॥ वीरणे ॥ दक्षाध्वरध्वंसि
निशिवगणविशेषे ॥
वीरभद्रकम् । न॰ वीरणे ॥
वीरभार्य्या । स्त्री॰ वीरपत्न्याम् ॥
वीरस्यभार्य्या ॥
वीरमाता । स्त्री॰ वीरस्वाम् ॥ वीरस्य
माता ॥
वीररज : । न॰ सिन्दूरे ॥
वीररात्रि: । स्त्री॰ निशाविशेषे ॥ यथा
। दीपावल्याममायांवै ग्रहणं यदि
सम्भवे । वीररात्रिमंहेशानीत्यागम :॥
वीररेणु : । पुं॰ भीमसेने।नागवल्ले ।
वीरवती । स्त्री॰ मांसरोहिण्याम् ॥
वीरजनन्याम् ॥
वीरवत्सला । स्त्री॰ श्वश्र्वाम् ॥

वीरवत्सा । स्त्री॰ वीरजनन्याम् ॥
वीरविप्लावक : । पु॰ शूद्रद्रव्येणहोम
कर्त्तरि ॥ यथा । वीरविप्लावकोजु
ह्वते : शूद्रसमर्पितैरितिहेमच
न्द्र :॥
वीरवृक्ष : । पुं॰ भल्लातके ॥ ककुभद्रु
मे ॥ बिल्वान्तरे ॥ देवधान्ये । अश्म
रीहरे ॥ वीरवृक्ष : ॰दुस्पर्शत्वा
त् ॥
वीरव्रत : । पुं॰ दृढव्रते ॥ नैष्ठिके ॥
वीरसू : । स्त्री॰ वीरमातरि ॥ वीरंसू
ते । षूङ्प्राणिगर्भविमोचने । स
त्सूद्विषेतिक्विप् ॥
वीरसेन : । पुं॰ नलाभिधभूपपित
रि ॥ न॰आरुकवृक्षे ॥ आलुके ॥
वीरसेनज : । पुं॰ नलाभिधनृपे ॥
वीरहा । पुं॰ त्यक्तयज्ञाग्नौ । नष्टा
ग्नौ । प्रमादादिनायस्याग्निहोत्रि
णोऽग्निर्नष्टोनिर्वाण :शान्तस्तस्मि
न् ॥ वीरोऽग्निस्तंहन्ति । हन॰ ।
क्विप् । हरौ ॥ वीरान्असुरभटा
न्॰हिरण्यकशिपुप्रभृतीन्हन्ती
तितथा ॥
वीरा । स्त्री॰ सुरायाम् । मदिरायाम् ॥ क्षीरकाकोल्याम् ॥ तामल
क्याम् । एलवालुके ॥ पतिपुत्रव
त्याम् । पत्यासुतेनचयुक्तायाम् ॥
रम्भायाम् ॥ विदार्याम् ॥ विदा
रीस्थानेगम्भारीतिपाठान्तरम् ॥

कात्त्यायन्याम् ॥ महाशतावर्याम् ॥ गृहकन्यायाम् ॥ ब्राह्म्याम् ॥ पतिविषायाम् ॥ शिंशपाबृक्षे ॥

वीराध्वा । पुं॰ शूराणांमरणे ॥ वीराणांमध्वा । मार्गः । वीराध्वा । गो व्रजमिति सूत्रे । कल्याद्यर्थे । कण्टकाश्विकसर्पसिंहव्याघ्राद्यभीतानामध्वा ॥

वीरारुकम् । न॰ आरुके ॥

वीराशंसनम् । न॰ अतिभयप्रदायां युद्धभूमौ ॥ सा वीराशंसनं युद्धभूमिर्या तिभयप्रदा ॥ वीरा : शंस्यन्तेऽत्र । आङ् : प्रसिद्धायाम् । ल्युट् ॥

वीराश्रम : । पुं॰ तीर्थविशेषे ॥ अत्र कार्त्तिकेयस्तिष्ठति ॥

वीरासनम् । न॰ रात्रौखड्गहस्तस्य तिष्ठतोजागरणे ॥ ऊर्द्ध्वावस्थाने ॥ योगिनामासनविशेषे ॥ तदुक्तं योगशास्त्रे वसिष्ठेन । एकं पादमथैकस्मिन् विन्यसेदूरुसंस्थितम् । इतरस्मिं स्तथाचाप्यूरुं वीरासनमिदं स्मृतम् । इति ॥ अपिच । एकं पादमधः कृत्वा विन्यस्योरौ तथेतरम् । ऋजुकायोविशेन्मर्त्त्योवीरासनमितीरितमिति तन्त्रशास्त्रम् ॥ श्रीभागवतेऽपि । कृत्वोरौदक्षिणंसव्यं पादपद्मञ्चजानुनि । बाहुप्रकोष्ठे क्षमालामासीनं तर्कमुद्रयेति ॥

वीरिणी । स्त्री॰ दक्षप्रजापते : पत्न्याम् ॥

वीरुत् । स्त्री॰ शाखापत्रप्रथयवत्यांलतायाम् । गुल्मिन्याम् । उपलते ॥ विटपे ॥ विरुद्धौ । रुधिर॰ । क्विप् । अन्येषामपीतिदीर्घ : ॥

वीरुधा । स्त्री॰ वीरुधि ॥ भागुरिमतेनटाप् ॥

वीरेश : । पुं॰ शिवे ॥

वीरेश्वर : । पुं॰ सदाशिवे ॥ वीराणामीश्वर : ॥

वीरोज्झो : । पुं॰ होमाकर्त्तरि ॥ यथा । अभ्युदिताभिनिर्मुक्तौ वीरोज्झोनजुहोतिय : ॥ इतिहेमचन्द्र : ॥

वीरोपजीविक : । पुं॰ जीविकार्थमग्निहोत्रिणि ॥ यथा । अग्निहोत्रफलाद्यश्चापरोवीरोपजीविकइति हेमचन्द्र : ॥

वीर्य्यम् । न॰ शुक्रे । रेतसि ॥ यथा । हरितालंहरेर्वीर्यं लक्ष्मीवीर्यं मन : शिला । पारदं शिववीर्यंस्यात्गन्धकं पार्वतीरज : ॥ इति ॥ प्रभावे ॥ तेजसि ॥ इन्द्रियसामर्थ्ये ॥ अतिशयशक्तिभाज्यत्माहे ॥ शक्तौ ॥ साचपृथिव्यादीनांय : सारभागस्तदतिशयरूपा । साद्विविधाचिन्त्याचिन्त्यक्रियाहेतुत्वेन । तत्रचिन्त्यक्रियाहेतुर्याद्रव्यरसादीनां

स्वस्वकर्म्मविस्वभावसिद्धाशक्तिः। अचिन्त्यक्रियाहेतुस्तप्रभावापरपर्याय: द्रव्याणांरसाद्यनुरूपकार्यकरणशक्तिः। उक्तञ्च। भूतप्रभावातिशयोद्रव्ये पाकोरसेस्थितः। अचिन्त्यःऽचिन्त्यक्रियाहेतुर्वीर्यंधन्वन्तरेर्मतमिति॥ अस्याधिमाह। यामंकाल्कषायवीर्यमखिलंपूर्णञ्चपञ्चयंषण्मासान्घृतमीदृकोसगुडोमासत्रयंगुग्गुलो:। सिद्धानांरसभस्मनांसुविपुलंवीर्यञ्चवर्षत्रयम्किञ्चिद्गन्धविवर्जितंगुणपरंतैलंपुराणंभवेदितिनारायणदासकृतापरिभाषा॥ वीरे॰ अर्श्नोविसाधु त वसाधुरितियत्॥ यद्वा। वीर्यतेऽनेन। वीरविक्रान्तौ। अचोयत्। अघ्न्यादिर्वा॥ बले॥

वीर्यवान्। त्रि॰ मांसले। वीर्यमस्त्यस्मिन्वा। मतुप्॥

वीर्य्यवृद्धिकरम्। न॰ वृष्ये। वाजीकरणे। शुक्रवृद्धिकारकौषधादौ॥

वीर्य्या। स्त्री॰ अतिशयशक्तौ॥

वीसर्प्प:। पुं॰ विसर्पे॥

वीहार:। पुं॰ बुद्धमन्दिरे। मठालये॥

वुक:। पुं॰ बकपोदपे। शिवमल्ल्याम्॥ वातिवा॰ बाहुलकात्कुक। कुनोकारस्योत्त्वंवा॥

बृंहण:। पुं॰ यावकाख्ये॰ खाद्यभेदे॥ संयावोबृंहणोगुरु:॥ त्रि॰ पुष्टिकारके॥

बृंहितम्। न॰ करिगर्जिते॥ बृहणम्। बृहिध्वनौ। नपुंसकेक्तः॥

वृक:। कोके। ईहामृगे। हुंडार॰ हु॰ भेडिया॰ वृ॰ भभाषा॰ प्र॰॥ वर्कते। वृकआदाने। इगुपधेतिक:॥ यद्वा। वृणाति। वृञ॰ सृवृभूशुषिमुषिभ्य: कक्॥ शृगाले॥ कृत्रिमधूपे॥

वृकदंश:। पुं॰ कुक्कुरे॥ वृकान्दंशयति। दंश॰। कर्म्मण्यण्॥

वृकधूप:। पुं॰ नानासुगन्धिद्रव्यकृतधूपविशेषे। कृत्रिमधूपे॥ सरलद्रवे। वृकधूपे। श्रीवेष्टे॥ वृकइवधूप:॥ धूप्यतेऽनेन। धूपसन्तापे। घञ्। वृकनामाधूप: शाकपार्थिवादिर्वा॥

वृकधूर्त्त:। पुं॰ शृगाले॥

वृका। स्त्री॰ अम्बष्ठायाम्। पाठायाम्॥

वृकाणी। स्त्री॰ त्रिवृति॥

वृकाराति:। पुं॰ कुक्कुरे॥

वृकारि:। पुं॰ कुक्कुरे॥

वृकी। स्त्री॰ पाठायाम्॥

वृकोदर:। पुं॰ भीमाख्यपाण्डवे। भीमसेने॥ यस्यतीव्रा वृकोनाम जठरेहव्यवाहन:। मयोदत्त: स

धर्मात्मातिनचासीद्वक्षोदरः ॥ इ० मत्स्यपु० ॥ वृकवदुदरंयस्य सः ॥

वृक्णः । त्रि० छिन्ने । वृश्च्यते स्म । ओव्रश्चूछेदने । क्तः ॥

वृक्षः । पुं० महीरुहे । शाखिनि । विटपिनि । पादपे ॥ पुष्पिताः फलिनश्चैववृक्षास्तूभयतः स्मृताः ॥ वृणोतिवृक्षवरणे । पचाद्यच् । यद्वा । वृक्षस्थ्याम० वृश्च्यतेवा । ओव्रश्चू० । स्नुवृश्चिकृत्यृषिभ्यः किदितिसः ।

वृक्षकः । पुं० कुटजवृक्षे ॥ ह्रस्वो वृक्षः । ह्रस्वइतिकः ॥

वृक्षखण्डः । पुं० वृक्षाणांसमूहे ॥ वृक्षादिभ्यः खण्डः ॥

वृक्षचरः । पुं० वानरे ॥

वृक्षधूपः । पुं० श्रीवासे । सरलद्रवे ॥

वृक्षनाथः । पुं० वटवृक्षे ॥

वृक्षपञ्चकम् । न० क्षीरिवृक्षपञ्चके ॥

वृक्षपाकः । पुं० वटद्रुमे ॥

वृक्षभक्षा । स्त्री० वन्दायाम् ॥

वृक्षभवनम् । न० वृक्षकोटरे ।

वृक्षभित्०क् । स्त्री० वृक्षभेदिनि । वास्याम् ॥ वृक्षंभिनत्ति । भिदिर्० । क्विप् ॥

वृक्षभेदी पुं० कुठारविशेषे । वृक्षादने ॥ वृक्षंभेत्तुंशीलमस्य । भिदिर् विदारणे । सुप्यजातौणिनिः ॥

वृक्षमर्कटिका । स्त्री० हविङ्कुतिप्रसिद्धपर्वमृगजातौ ॥

वृक्षमार्जारः । पुं० वृक्षबिडाले । गिलहरी०टिकरी०इ०भा० ॥

वृक्षरुहः । पुं० जलवेतसे ॥

वृक्षराजः । पुं० अम्लवेतसे ॥

वृक्षरुहा । स्त्री० वन्दायाम् ॥ वृक्षंरोहतिरुहेर्मूलविभुजादित्वात्कः ॥ अमृतस्रवायाम् ॥

वृक्षवाटिका । स्त्री० अमात्यस्य०गणिकायाश्च०गेहस्थोपवने ॥ वट्यते । वटवेष्टने । संज्ञायामितिण्वुल् । टाप् । प्रत्ययस्थादितीत्वम् । वृक्षाणांवाटिका ॥

वृक्षादनः । पुं० वृक्षभेदिनि०कुठारविशेषे ॥ वृक्षमत्ति । अद० । कृत्यल्युटइतिल्युट् । चलदले ॥ मधुच्छदे । पियाले ॥

वृक्षादनी । स्त्री० वन्दायाम् । विदारीकन्दे । विदारीगन्धिकौषधौ । टित्वान्ङीप् ॥

वृक्षादिरुहकम् । ) न० चालिङ्गने ॥
वृक्षादिरूढकम् । )

वृक्षामयः । पुं० लाक्षायाम् ॥

वृक्षाम्लः । पुं० आम्रातके । न०शाकाम्ले । तिन्तिडीके । चुक्रे ॥ अस्यगुणाः । वृक्षाम्लमाममम्लोष्णंवातघ्नंकफपित्तलम् । पक्वन्तुगुरुसङ्ग्राहिकटुकंतुवरंलघु । अम्लोष्णं

रोपणं रक्षणं दीपनं कफशान्तकृत् । त्वष्टाभ्योपद्रवी गुल्मशूलहृद्रोगजन्तुजित् ॥ वृक्षस्याऽम्लम् ॥ वृक्षेष्वम्लो वा ॥

वृक्षायुर्वेदः । पुं॰ महीरुहाणां चिकित्सायाम् ॥ स च शार्ङ्गधराख्ये ५३ अध्याये । यथा । तत्रादौ प्रथमं जनप्रदर्शनार्थमाह । प्रान्तच्छायाविनिर्मुक्ता मनोज्ञा जलाशयाः । तस्मादयौ जलप्रान्तेष्वारामान् विनिवेशयेत् ॥ १ ॥ तत्र भूलक्षणम् । मृद्वी भूः सर्ववृक्षाणां हिता तस्यां तिलान् वपेत् । पुष्पितांस्तांश्च मृद्नीयात् तत्कर्म प्रथमं भुवः ॥ प्रथमरोप्या वृक्षाः । अरिष्टाशोकपुन्नागशिरीषाः सप्रियङ्गवः । मङ्गल्याः पूर्वमारामे रोपणीया गृहेषु वा ॥ ३ ॥ काण्डरोप्याणां विधानमाह । पनसाशोककदलीजम्बूबकुलदाडिमाः । द्राक्षापालीवताश्चैव बीजपूरातिमुक्तकाः ॥ एते द्रुमाः काण्डरोप्या गोमयेन प्रलेपिताः । मूलोच्छेदेऽथवा स्कन्धे रोपणीयास्ततः परम् ॥ ५ ॥ कालनियमार्थमाह । अजातशाखान् शिशिरे जातशाखान् हिमागमे । वर्षागमे च सुस्कन्धान् यथादिक्स्थान् प्ररोपयेत् ॥ घृतोशीरतिलक्षौद्रविडङ्गक्षीरगोमयैः । आमूलस्कन्धलिप्तानां सङ्क्रामणविरोपणम् ॥ ७ ॥ रोपणविधानम् । शुचिर्भूत्वा तरोः पूजां कृत्वा स्नानानुलेपनैः । रोपयेद्रोपितश्चैव पत्रैस्तैरेव जायते ॥ ८ ॥ रोपितानां सेकविधानम् । सायंप्रातश्च घर्मर्त्तौ शीतकाले दिनान्तरे । वर्षासु च भुवः शोषे सेक्तव्या रोपितद्रुमाः ॥ ९ ॥ अनूपजाताश्च जम्बूवेतसवानीरकदम्बोदुम्बरार्जुनाः । बीजपूरकमृद्वीकालकुचाश्च सदाडिमाः । वञ्जुलो नक्तमालश्च तिलकः पनसस्तथा । तिमिरोऽम्रातकश्चेति षोडशानूपजाः स्मृताः ॥ ११ ॥ रोपितानां वृक्षाणां किम्प्रमाणमन्तरं कार्यमित्याह । उत्तमं विंशतिर्हस्ता मध्यमं षोडशान्तरम् । स्थानात् स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम् ॥ १२ ॥ किमर्थमन्तरं कार्यं तदाह । अभ्यासजातास्तरवः संस्पृशन्तः परस्परम् । मिश्रैर्मूलैश्च न फलं सम्यग् यच्छन्ति पीडिताः ॥ २३ ॥ तेषां रोगज्ञानमाह । शीतवातातपै रोगो जायते पाण्डुपत्रता । अवृद्धिश्च प्रवालानां शाखाशोषो रसस्रुतिः ॥ १४ ॥ एतेषां चिकित्सामाह । चिकित्सितमथैतेषां शस्त्रेणादौ विशोधनम् ॥ विडङ्गघृतपङ्काक्तान् सेचयेत् क्षीरवारिणा ॥ फलनाशे चिकित्सितमाह ॥ फल

नाघिकुलत्थैश्च माषैर्मुद्गैस्तिलैर्यवैः । घृतशीतपयःसेकः फलपुष्पसमृद्धये ॥ १६ ॥ वृद्ध्यर्थप्रयोगः । आविकाजशकृच्चूर्णस्याढके द्वे तिलाढकम् । सक्तुप्रस्थो जलद्रोणो गोमांसतुलया सह ॥ सप्तरात्रोषितैरेतैः सेकः कार्यो वनस्पतेः । वल्लीगुल्मलतानाञ्च फलपुष्पाय सर्वदा ॥ १८ ॥ अथ बीजानां वापनविधानम् । वासरान् दश दुग्धभावितं बीजमाज्ययुतहस्तयोजितम् । गोमयेन बहुशो विरूक्षितं क्रोडमार्गपिशितैश्च धूपितम् ॥ मांससूकरवसासमन्वितं रोपितञ्च परिकल्पितावनौ । क्षीरसंयुतजलावसेचितं जायते कुसुमयुक्तमेव तत् ॥ २० ॥ अथ तिन्तिडीविधानम् । तिन्तिडी द्यपि करोति वल्लरीं व्रीहिमाषतिलचूर्णसक्तुभिः । पूतिमांससहितैश्च सेचिता धूपिता च सततं हरिद्रया ॥ २१ ॥ अथ कपित्थबीजरोपणम् । कपित्थवल्लीकरणाय मूलान्यास्फोतधात्रीधववासिकानाम् । पलाशिनीवेतससूर्यवल्लीश्यामातिमुक्तैः सहिताष्टमूली ॥ क्षीरे शृते चाप्यनया सुशीते ताल्लंशतं स्थाप्य कपित्थबीजम् । दिने दिने शोषितमर्कपादैर्मासं विधिस्त्वेष ततोऽधिरोप्यम् ॥ हस्तायतं तद्द्विगुणं गभी-



रं खात्वावटं प्रोक्तजलावपूर्णम् । शुष्कं प्रदग्धं मधुसर्पिषा तं प्रलेपयेद्भस्मसमन्वितेन ॥ चूर्णीकृतैर्माषतिलैर्यवैश्च प्रपूरयेन्मृत्तिकयान्तरस्थैः । मत्स्यामिषाम्भःसहितञ्च हन्याद्यावद्घनत्वं समुपागतं तत् ॥ उप्तञ्च बीजं चतुरङ्गुलाधो मत्स्याम्भसा मांसजलैश्च सिक्तम् । वल्ली भवत्याशु शुभप्रवाला विस्मापनी मण्डपमावृणोति ॥ २६ ॥ अथान्येषां रोपणम् । शतशोऽङ्कोठसम्भूतफलकल्केन भावितम् । एतत्तैलेन वा बीजं श्लेष्मातकफलेन वा ॥ वापितं करकोन्मिश्रमृत्तिकायां च तत्क्षणम् । फलभारान्विता शाखा भवतीति किमद्भुतम् ॥ २८ ॥ श्लेष्मातकरोपणम् । श्लेष्मातकस्य बीजानि निष्कुलीकृत्य भावयेत् प्राज्ञः । अङ्कोल्लविज्जलैश्छायायां सप्तकृत्व एव ॥ माहिषगोमयपिष्टान्यस्य करीषे च तानि निक्षिप्य । करकाजलमृद्योगे न्युप्तान्यह्ना फलकराणि ॥ वृक्षाणां रोपणानक्षत्राणि । ध्रुवमृदुमूलविशाखागुरुभं श्रवणं तथाश्विनं हस्तम् । उक्तानि दिव्यदृग्भिः पादपसंरोपणे भानि ॥ ३१ ॥ इति ॥

वृक्षरुहा । स्त्री॰ वृक्षरुहायाम् । वृक्षमारोहतीति तथा ॥

वृक्षारोपकः । त्रि॰ वृक्षाणामारोप-

यितरि ॥
वृक्षार्घा । स्त्री॰ मह्यामेदायाम् ॥
वृक्षालय : । पुं॰ खगे । पक्षिणि ॥
वृक्षाश्रयी । पुं॰ चुद्रोलूके ॥
वृक्षेशय : । पुं॰ विहगे ॥ वृक्षे शेते । शीङ् । अधिकरणे शेतेरित्यच् । शयवासवासिष्वकालादित्यलुक् ॥
वृक्षोत्पल : । पुं॰ कर्णिकारे ॥
वृजन : । पुं॰ केशे ॥ न॰पापे ॥ आकाशे ॥ वृणक्ति॰वृज्यतेवा । वृजीवर्जने । कृपृवृजीत्यादिनाक्यु : ॥
वृजिन : । पुं॰ केशे ॥ न॰कल्मषे । अघे ॥ रक्तचर्मणि ॥ कर्मफले । धर्माधर्मरूपिसंसारफलेकर्म्मणि ॥ पापवत्पुण्यस्याप्यनिष्टफलत्वात् ॥ त्रि॰कुटिले । वक्रे ॥ वृज्यते । वृजी॰ । वृजि : किच्चेति॰इनच् ॥
वृजिनच्छित्॰दृ । त्रि॰ दु:खहन्तरि ॥
वृत : । त्रि॰ वृत्ते । व्यावृत्ते । कृतवरणे ॥ स्वयंवरादौस्वीकृतवरादौ ॥ व्रियतेस्म । वृञ् वरणे । क्त : ॥ आवृते ॥
वृतकौशा । स्त्री॰ देवदाल्याम् ॥
वृतपत्रा । स्त्री॰ पुत्रदात्यामोषधौ ॥
वृतपुत्रा स्त्री॰ वृतपत्रायाम् ॥
वृति : । स्त्री॰ वरणे । वेष्टने । बाटे । बाडइतिग्रामीणप्रसिद्धिविषयेकण्टकशाखावरणे ॥ वरणम् । वृञ् ॰ । क्तिन् ॥ गोपने ॥
वृतिङ्कर : । पुं॰ विकङ्कतवृक्षे ॥ त्रि॰ वृतिकारके ॥
वृतिस्थ : । पुं॰ सरटे ॥ त्रि॰वृतौतिष्ठति ॥
वृत्त : । पुं॰ कूर्मे पुं॰न॰पद्ये यथा । पद्यंचतुष्पदीतच्चवृत्तंजातिरितिद्विधा । वृत्तमक्षरसङ्ख्यातंजातिर्मात्राकृताभवेत् ॥ वृत्तौ ॥ चारित्रे ॥ वेदबोधिताचारस्यपरिपालने ॥ छन्दसि ॥ कृतिच्छन्दोभेदे ॥ यथा । वृत्तमीदृगन्तुनामतोरजौरजौरजौगुरुर्लघुश्च । यथा । चित्तवृत्तलीलयानिसर्गरम्यदेहरूपविभ्रमेणराजमानसद्वयोविलाससम्पदाकलाकुतूहलेन । य : समंत्रजाङ्गनाजनै : सुराङ्गनानिभै : सुखंसमेत्यविष्णुरुल्लसच्चित्तपङ्कजोषषट्पद : समेसदास्तु ॥ त्रि॰ अधीते ॥ गोरध्ययनेवृत्तमितिनिपातित : । वृत्तंव्याकरणम्॰अधीतमित्यर्थ : ॥ अतीते ॥ अतिवर्त्तुले ॥ वृते ॥ मृते ॥ दृढे ॥ वर्त्तेस्म॰वृत्यतेस्मवा । वृतुवर्त्तने । गत्यर्थेतिक्त : ॥ वर्त्तनम् । वृतुवर्त्तनेवरणेवा । भावेक्तोवा ॥
वृत्तकम् । न॰ गद्यप्रभेदे ॥ तल्लक्षणोदाहरणे यथा । अकठोराऽक्षरंस्वल्पसमासंवृत्तकंमतम् ॥ यथा । सहिचयाणामेवजगतांगति : परमपुरुष : पुरुषोत्तमोदृप्तदानवभरेणभङ्गु

राज्ञीमवनिमवलोक्यकरुणार्द्रहृद यस्तस्याभारमवतारयितुंरामकृष्ण स्वरूपेणांशतोयदुवंशेऽवततारयस्तुप्र सङ्गेनापिस्मृतोवागृहीतनामापुंसां संसारपारमवलोकयति ॥

वृत्तकर्कटिका । स्त्री० वृत्तकर्कट्याम् ॥

वृत्तकर्कटी । स्त्री० वृत्तार्वारी । षड्भु जायाम् ॥

वृत्तगन्धि । न० गद्यप्रभेदे ॥ तल्लक्षणं यथा । भवेदुत्कलिकाप्रायंसमासा ढ्यंद्दढाक्षरम् । वृत्तैकदेशसम्बन्धा द्वृत्तगन्धिपुन: स्मृतम् । तदुदा हरणंयथा । जयजयजयजनार्दनसु कृतिमनस्तडागविकस्वरचरणपद्मप द्मपत्रनयनपद्मापद्मिनीविनोदराज हंसाभभास्वरयश: पटलपरिपूरि तभुवनकुहर । हरकमलासनादिवृं दारकवृन्दवन्दनीयपादारविन्दद्वन्द्व द्वन्द्वनिर्मुक्तयोगीन्द्रहृदयमन्दिराावि ष्कृतनिरञ्जनज्योति: स्वरूपनीर दरूपविरूपघनाघनाथजगन्नाथमा ममवधिभवदु:खव्याकुलंरक्षरक्ष ॥

वृत्तगुण्ड: । पुं० तृणविशेषे । दीर्घ नाले । जलाशये ॥ सयंद्विधा । ल घुस्थूलभेदात् । तत्रस्थूलोऽधिकगु ण: ॥

वृत्ततण्डुल: । पुं० यावनाले ॥

वृत्तत: । अ० वृत्तेनेत्यर्थे ॥

वृत्तनिष्पावी । स्त्री० वृत्तनिष्पाविकायाम् । नखनिष्पावे ॥

वृत्तपर्णी । स्त्री० महाशणपुष्पिकायाम् ॥ पाठायाम् ॥

वृत्तपुष्प: । पुं० कदम्बे ॥ शिरीषे ॥ वानीरे ॥ कुब्जके ॥ मुद्गरे ॥

वृत्तफल: । पुं० दाडिमे ॥ बदरे ॥ न० मरिचे ॥

वृत्तफला । स्त्री० आमलक्याम् ॥ वार्ताक्याम् ॥ शशाण्डुल्याम् ॥

वृत्तमल्लिका । स्त्री० श्वेतार्के ॥ मोदिन्याम् ॥

वृत्तबीज: । पुं० भिण्डायाम् ॥

वृत्तबीजका । स्त्री० पाण्डुरफल्याम् ॥

वृत्तबीजा । स्त्री० आढक्याम् ॥

वृत्तसम्पन्न: । त्रि० सदाचारवति ॥

वृत्ता । स्त्री० भिञ्झिरिष्टायाम् ॥ प्रियङ्गौ । रेणुकायाम् ॥ मांसरोहिण्याम् ॥

वृत्ताध्ययनर्द्धि: । स्त्री० ब्रह्मवर्चसे ॥ वृत्तस्याचार: ० अध्ययनस्यगुरुमुखा द्दाक्षरग्रहणम् ० तयोर्ऋद्धि: ॥

वृत्तानन्दम् । न० मात्रावृत्तान्तरे ॥ तल्लक्षणोदाहरणेयथा । एकादश विश्रामि० सप्तविरामि० यदिवृत्ताद्ध न्तंभवति । कुन्दोवृत्तानन्दमिहचा नन्दकारिफणिनृपतिरितिवदति ॥ यथा । मधुरस्मितनवशालियदिव नमालिवदनकमलमवलोकये । च

वृत्ति :

धरसुधारसधामपरमभिरामममवलम्बि जीवितमयि ॥

वृत्तान्त : । पुं॰ वार्तायाम् । प्रवृत्तौ । उदन्ते । समाचारे ॥ यथा । अतीतजन्मवृत्तान्तं बाल्ये प्राये वपश्यति । ऐहिकं यौवनेऽन्ते तुतपत्नीभाविवोच्यते ॥ वार्ताजनश्रुतिराख्यायिकाचेतिस्वामी । प्रभेदे । विशेषे ॥ प्रक्रियायाम् ॥ कार्त्स्न्ये । प्रस्तावे । अवसरे ॥ वृत्तोऽनुवर्तनीयोगवेषणीयोऽन्त : समाप्तियंस्य । वृत्तोन्तोस्य॰वृत्तस्यान्तइति वा ॥ भावे ॥

वृत्तावृत्तम् । न॰ मात्रावृत्तान्तरे ॥ तस्यलक्षणोदाहरणे यथा । वृहस्मवतुष्कलगणनिर्मितपदर्विलघुविरामं भवतियदि । नागाधिपपिङ्गलभणितसुमङ्गलवृत्तावृत्तमिदंहिपदि ॥ यथा । हृदितावदनेक : स्फुरतिविवेकस्तपसिमनोनियतं भवति । यावन्नवयरिणीनयनान्तरणीस्मितसुभगंनविलोकयति ॥

वृत्ति : । स्त्री॰ व्याख्यानग्रन्थविशेषे । विवरणे ॥ आजीवे । वर्तने । कृष्यादिजीवने । अनुष्ठेयायांजीविकायाम् ॥ कैशिक्यादौ ॥ यथा । भारतीसात्वतीचैवकैशिक्यारभटीतथा । चतस्रोवृत्तयश्चैतायासु नाट्यंप्रतिष्ठितमितिभरत : ॥ शृङ्गारेकैशिकीवीरेसात्वत्यारभटीपुन: । रसेरौद्रे चबीभत्से वृत्तिस : र्वत्रभारती । चतस्रोवृत्तयोह्येता : सर्वनाट्यस्यमातृका : ॥ प्रवर्तने ॥ विधृतौ ॥ व्यवहारे ॥ वर्तते ऽनया । इतुवर्त्तने । स्त्रियांक्तिन् ॥ प्रमाणविपर्ययविकल्पनिद्रास्मृतिषु पञ्चविधासु ॥ लज्जादिवृत्तीनामपिपञ्चस्वेवान्तर्भाव : ॥ अर्थसन्निकृष्टेन्द्रिये ॥ इन्द्रियाणांव्यापारे । विषयाकारवृत्तिपरिणामे ॥ वृत्तीनामानन्त्यादनेयतुतांसूत्रयतिपतञ्जलि : । वृत्तय : पञ्चतय्यक्लिष्टा अक्लिष्टाइति । वृत्तयश्चित्तस्यपरिणामविशेषा : । रागद्वेषादिक्लेशरूपा : ॰आसुरवृत्तय : क्लिष्टा : । रागादिरहितादैववृत्तयोऽक्लिष्टा : । यद्यपिपञ्चस्वेवक्लिष्टानामक्लिष्टानामन्तर्भाव : ॰तथापिक्लिष्टा एवनिरोद्धव्याइतिमन्दबुद्धिंबारयितुंताभि : सहाक्लिष्टाउदाहृता : । नामधेयलक्षणाभ्यांवृत्तीर्विशदयितुंसूत्रषट्कमाह । प्रमाणविपर्ययविकल्पनिद्रास्मृतय : । प्रत्यक्षानुमानागमा : प्रमाणानि । विपर्ययोमिथ्याज्ञानमतद्रूपप्रतिष्ठम् । अतद्रूपप्रतिष्ठम्॰तस्यार्थस्ययद्रूपंमतस्मिन्रूपेप्रतिष्ठति॰तस्यार्थस्य यत्पारमार्थिकंरूपंनतत्प्रतिभा

सयतीतियावत्। संशयोप्यतद्रूप प्रतिष्ठस्वान्मिथ्याज्ञानम्॰यथास्थाणुर्वापुरुषोवेति। शब्दज्ञानानुपातीवस्तुशून्योविकल्पः। अभावप्रत्ययालम्बनावृत्तिर्निद्रा। अनुभूतविषयाऽसम्प्रमोषः स्मृतिः॥ तत्रप्रमाणविपर्ययविकल्पाजाग्रदवस्था॰तएवयदानुभवबलात्प्रत्यक्षायमाणाःसास्वप्नः॰निद्रास्वसंवेद्यमानविषया॰स्मृतिश्चप्रमाणविपर्ययविकल्पनिद्रानिमित्तेतिव्याख्यातावृत्तयः। कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपासुपञ्चसु। विच्छिन्नस्यप्रतिविधाने॥ अप्रतिबन्धे।

वृत्तिग्लानः। त्रि॰ वृत्तिक्षीणे॥

वृत्तिज्ञानम्। न॰ घटाकारज्ञाने॥ यद्यपिवृत्तिज्ञानमपिस्वरूपज्ञानमेव॰तथापि॰अन्तः करणदोषैस्तत्तथातयाभातीतितत्तोभेदः॥

वृत्तिनिरोधः। पुं॰ वृत्तीनांप्रतिहनने॥ तत्साधनंसूत्रयतिभगवान्पतञ्जलिः। अभ्यासवैराग्याभ्यांतन्निरोधः॰इति। प्रकाशप्रवृत्तिनियमरूपाणांचित्तवृत्तीनामभ्यासवैराग्याभ्यांप्रतिहननंसनिरोधः यथातीव्रवेगोपेतंनदीप्रवाहंसेतुबन्धनेननिवार्यकुल्याप्रणयनेनक्षेत्राभिमुखंतिर्यक्प्रवाहान्तरमुत्पाद्यते॰तथावैराग्येणचित्तनद्याविषयप्रवाहंनिवार्य॰समाध्यभ्यासेन॰प्रशान्तप्रवाहः सम्पाद्यते। एतदुक्तंभवति। तासांविनिवृत्तवोऽद्याभिनिवेशानामन्तर्मुखतयास्वकारणएवचित्तेशक्तिरूपतयावस्थानम्। तत्रविषयदोषदर्शनजेनवैराग्येण॰तद्वैमुख्यमुत्पाद्यते॰अभ्यासेनचसुखजनकशान्तप्रत्ययप्रवाहप्रदर्शनेनद्वारेणदृढंस्थैर्यमुत्पाद्यतइत्याभ्यांभवतिचित्तवृत्तिनिरोधः॥

वृत्तिभेदः। पुं॰ प्रवृत्तिनिमित्तभेदे॥

वृत्तिमान्। त्रि॰ वार्ते। वृत्तिरस्यास्मिन्वास्ति। मतुप्॥

वृत्तिविषयः। पुं॰ वृत्तिव्याप्ये॥ आत्मनि॥

वृत्तिविस्मरणम्। न॰ ध्यातृध्येयाकारवृत्तिशून्ये। द्वैताननुसन्धाने॥

वृत्तिव्याप्यत्वम्। न॰ विशिष्टशब्दादिप्रमाणबलात्॰तत्तद्विषयाकाराधीसमुन्मेषाभिव्यक्तत्वे॥ ब्रह्मज्ञाननाशायवृत्तिव्याप्तिरपेक्षिता॥

वृत्त्यः। त्रि॰ वरणीये॥ वरणं॰क्रियतेवा। वृञ्वरणे। एतिस्तुशास्वृदृजुषः क्यप्॥

वृत्त्यनुप्रासः। पुं॰ शब्दालङ्कारान्तरे। यथा। एकस्याप्यसकृत्परः। ए

व्यस्य॰ पविग्रब्दादनेकव्यञ्जनस्य॰ हि बं हुस्तत्वोवासोद्वग्र्यं वृत्त्यनुप्रासः । यथा । युधिष्ठिरंदैतवनेवनेचरवृत्त्यथ॰ हयोः स्वरव्यञ्जनसमुदाययोरेकदैवावृत्तिः ॥

वृत्रः । पुं॰ ध्वान्ते । अन्धकारे ॥ अरौ । शत्रौ ॥ त्वष्टुः पुत्रे दानवविशेषे ॥ वृजिनात् पातुमधुनायस्मात्त्तोसिपुत्रक । तस्माद्वृत्रइतिख्यातंतवनामभविष्यति ॥ घने ॥ शैलविशेषे ॥ वासवे । इन्द्रे ॥ वृणोति । वृञ् । धाक्कुलकात् त्रः ॥ वर्त्तते । वृतुवर्त्तने । स्फायितच्चीत्यादिनारक्वा ॥

वृत्रद्विट् । पुं॰ इन्द्रे ॥ वृत्रं द्वेष्टि । द्विषअप्रीतौ । सत्सूद्विषेत्यादिना क्विप् ॥

वृत्रभोजनः । पुं॰ गण्डीरे । समष्ठिलायाम् । समठ॰इ॰गौ॰दे॰भा॰॥

वृत्रहा । पुं॰ इन्द्रे ॥ वृत्रं हतवान् । ब्रह्मभ्रूणवृत्रेषुक्विप् ॥

वृत्रारिः । पुं॰ शक्र । इन्द्रे ॥

वृथा । अ॰ वन्ध्ये । मुधा । अविधौ । निरर्थके ॥ यथा । वृथावृष्टिः समुद्रस्यतृप्तस्यभोजनंवृथा । वृथा दानं समर्थस्यनीचस्यसुकृतंवृथा ॥ निष्कारणे ॥

वृथाजन्म । न॰ निरर्थकेजनने ॥ *

वृथादानम् । न॰ परिहासनिमित्त-षण्डादिभ्योदेये ॥ धूर्त्तेवन्दिनिमल्ले भकुवैद्ये कितवेशठे । चारचारणचौरेषुदत्तं भवतिनिष्फलम् ॥

वृथामांसम् । न॰ देवतादिकमनुद्दिश्यकृतेमांसे ॥ तद्भक्षणे प्रेतत्त्वंभवतीत्युक्तं वह्निपुराणे । यथा । वृथारेतावृथामांसोवृथाचाद्रौवृथामतिः । निन्दकोद्विजदेवानांसप्रेतोजायतेनरइति ॥

वृद्धः । पुं॰ वृद्धदारके ॥ न॰ गन्धद्रव्यविशेषे । शैलजे । शैलेये । अश्मपुष्पे । रन्दू अ॰ छरीला॰ इत्यादिभाषाप्रसिद्धे ॥ रूढे ॥ त्रि॰ जीर्णे । प्रवयसि । स्थविरे । जीने । गतयौवने ॥ सप्ततिवर्षानन्तरंवृद्धउच्यते । यथा । वृद्धोजनोदुःखशतानिभुङ्क्ते । इ॰ ॥ नतेनवृद्धोभवतियेनास्यपलितंशिरः । योवैयुवाप्यधीयानस्तंदेवाः स्थविरंविदुरितिमनुः । वृद्धप्रत्युत्थायाभिवादनं कार्य्यम् ॥ ज्ञे । पण्डिते ॥ वर्द्धतेस्म । वृधुवृद्धौ । गत्यर्थेतिक्तः । यस्यविभाषेतिनेट् ॥

वृद्धकाकः । पुं॰ काकोले । द्रोणकाके ॥

वृद्धगङ्गा । स्त्री॰ कामरूपपीठस्थनदीविशेषे ॥

वृद्धत्वम् । न॰ स्थाविरे । वार्द्धक्ये ॥ वृद्धस्यभावः । तस्यभावस्त्वतलौ ॥

वृद्धदारकः । पुं० छगलान्त्राम् । विधारा० इ० भा ॥ वृद्धोदारकोऽस्मात् ॥ वृद्धत्वं दारयति वा । गवुल् ॥

वृद्धदारु । न० वृद्धदारके । विधारा० इ० भा० प्रसिद्धे ॥ यथा । वृद्धदारुद्वयंगौल्यं पिच्छिलंकफवातनुत् । बल्यंकासामदोषघ्नं द्वितीयं स्त्ल्पवीर्यदम् ॥

वृद्धनाभिः । त्रि० उन्नतनाभौ । तुण्डिले ॥ वृद्धाउन्नतानाभिरस्य ॥

वृद्धप्रपितामहः । पुं० प्रपितामहस्यजनके ॥

वृद्धप्रपितामही । स्त्री० प्रपितामहस्यजनन्याम् ॥

वृद्धबला । स्त्री० महासमङ्गायाम् ॥

वृद्धवाहनः । पुं० आम्रवृक्षे ॥ सुपक्वावृद्धवाहनइतिकेचित् ॥

वृद्धविभीतकः । पुं० आम्रातके ॥

वृद्धश्रवाः । पुं० सुनासीरे । इन्द्रे ॥ वृद्धेभ्यः शृणोति । श्रुश्रवणे । असुन् ॥ वृद्धेश्रवसीयस्येति वा । वृद्धेषु पलितेषुश्रवोयशोयस्येति वा ॥ वृद्धात्वृहस्पतेः शृणोतिवा ॥

वृद्धश्रावकः । पुं० कपालिनि ॥

वृद्धसङ्घः । पुं० वार्द्धके ॥ वृद्धानां सङ्घः ॥

वृद्धसूत्रकम् । न० वृन्दतूले । ग्रीष्महासे । मरुद्ध्वजे । बुढियाकास्त० इ० भा० ॥

वृद्धा । स्त्री० गतयौवनायाम् । पलिक्न्याम् । जरत्याम् ॥ तदवस्थाकालोयथा । आषोडशाद्भवेद्बाला-तरुणीत्रिंशतोमता । पञ्चपञ्चाशतः प्रौढावृद्धाभवतितत्परम् ॥ महाश्रावणिकायाम् ॥ ऋद्धौ ॥

वृद्धाङ्गुलिः । स्त्री० अङ्गुष्ठे ॥

वृद्धिः । स्त्री० वर्द्धने । स्फात्याम् ॥ विष्कम्भादिषु वे कादशेयोगे ॥ तत्र जातस्य फलंयथा । प्रसूतिकालेयदिवृद्धियोगोनरःसुभोगोविनयान्वितश्च । धनप्रयोगग्रहणेप्रदक्षोविचक्षणःस्यात्क्रयविक्रयाभ्यामिति ॥ अष्टवर्गौषधान्तरे । योग्यायाम् । ऋद्धौ । सिद्धौ । लक्ष्म्याम् ॥ अस्यागुणायथा । ऋद्धिर्वृद्धिश्च मधुरासुस्निग्धातिक्तशीतला । कृमिमेधाकरीशुक्रवृद्धिर्निर्मलरापरा ॥ प्रयोगेष्वनयोरेकंयथालाभंप्रयोजयेत् । यत्रयद्दातुमिष्टिः स्याद्द्वयमप्यत्रयोजयेदितिराजनिघण्टः ॥ ऋद्धिवृद्ध्योरुत्पत्तिलक्षणनामगुणायथा । ऋद्धिर्वृद्धिश्चकन्दौद्वौभवतः कोशयामले । श्वेतलोमान्वितः कन्दोलताजातः सरन्ध्रकः ॥ सएवऋद्धिर्वृद्धिश्चभे

दमप्येतयोर्भुवि । तूलग्रन्थिसमोऋद्धिर्वामावर्तफलाचसा ॥ वृद्धिस्तुदक्षिणावर्तफलाप्रोक्तामहर्षिभिः । ऋद्धिर्योग्यंसिद्धिलक्ष्म्यौवृद्धेरप्याह्वयाद्वमे ॥ ऋद्धिर्वल्याविदोषघ्नीशुक्रलामधुरागुरुः । प्राणैश्वर्यकरीमूर्छारक्तपित्तविनाशिनी॥ वृद्धिर्गर्भप्रदाशीतावृंहणीमधुरास्मृता । वृष्यापित्तास्रशमनीक्षतकासक्षयापहा ॥ राज्ञामप्यष्टवर्गस्तुयतोयमतिदुर्लभः । तस्माद्स्यप्रतिनिधिंगृह्णीयात्तद्गुणंभिषक्॥ मुखशहश्च : प्रतिनिधिः ॥ प्रतिनिधिमाह । मेदाजीवककाकोलीऋद्धिद्वन्द्वे पिचासति । वरीविदार्यश्वगन्धावाराहीश्चक्रमात्क्षिपेत् ॥ मेदामहामेदास्थानेशतावरीमूलम्० जीवकर्षभकस्थाने विदारीमूलम्० काकोलीचीरकाकोलीस्थानेऽश्वगन्धामूलम्० ऋद्धिवृद्धिस्थानेवाराहीकन्दंगुणैस्तुल्यंक्षिपेत ॥ कालान्तरे । वृद्धौ । लाभे । सूद० व्याज० इ० भा० ॥ अभ्युदये ॥ समृद्धौ ॥ हर्षे ॥ मुष्कवृद्धौ । कुरण्डरोगे । शैलेये ॥ धने ॥ समूहे ॥ नीतिवेदिनांक्षयादित्रिवर्गान्तर्गतवर्गविशेषे ॥ ह्रासाभावे ॥ वर्द्धनम् । वृधुवृद्धौक्तिन् । वर्द्धतेऽनयावा ॥ उत्तमर्णेनमूलधनातिरिक्तग्राह्यधने ॥

वृद्धिका । स्त्री० ऋद्धिनामौषधौ ॥

वृद्धिजीविका । स्त्री० अर्थप्रयोगे । कुसीदे । ऋणदानजीविकायाम् ॥ वृद्ध्याजीविका ॥

वृद्धिजीवी । त्रि० कुसीदिके ॥ वृद्ध्यर्थंद्रव्यंवृद्धिः । तयाजीवितुंशीलमस्य । णिनिः ॥

वृद्धिदः । पुं० जीवके ॥ शूकरकन्दे ॥ त्रि०वृद्धिदायिनि ॥

वृद्धिश्राद्धम् । न० आभ्युदयिकश्राद्धे ॥ नांदीमुखश्राद्धे ॥

वृद्धोक्षः । पुं० जरद्गवे । वृद्धवृषे ॥ वृद्धश्चासावुक्षाच । अचतुरेतिसाधुः ॥

वृद्ध्याजीवः । त्रि० वृद्धिजीविनि । कुसीदिके ॥ वृद्धिराजीवोजीविकाऽस्य ॥

वृधसानः । पुं० मनुष्ये ॥ वर्द्धते । वृधु० । ऋञ्जिवृधिमन्दिसहिभ्यः किदिस्यसानच् ॥

वृन्तम् । न० फलपत्रादिर्येनधार्यते तत्र । प्रसवबन्धने । बैंटा०डौंटा० इ०भा० ॥ वृणोति । वृञ् । वाहुलकाद्ञ्चिवृधोतिक्तोनुम्च ॥ घटीधारायाम् ॥ कुचाग्र । स्तनमुखे ॥

वृन्ताकम् । न० वार्ताकौ । अस्यगुणायथा। वृन्ताकंकफपित्तकृत् ॥ अ

पिच । वृन्ताकंस्वादुतीक्ष्णोष्णंकटु पाकमपित्तलम् । ज्वरवातबला सघ्नंदीपनंशुक्रलंलघु ॥ तद्बालंतु कफपित्तघ्नंवृद्धंपित्तकरंगुरु ॥ वृ न्ताकंपित्तलंकिञ्चिदङ्गारपरिपाचि तम् । कफमेदोनिलामघ्नमत्यर्थं लघुदीपनम् । तदेवहिगुरुस्निग्धं सतैलंलवणान्वितम् ॥ अपरंश्वेतवृ न्ताककुक्कुटाण्डसमंभवेत् । तदर्श स्सुविशेषणहितंहीनञ्चपूर्वतः ॥ पूर्वतःकृष्णात् ॥ भोजनंधिगवृ- न्ताकंवृन्ताकंधिगवृन्तकम् । सवृन्तं धिगतैलाढ्यंसतैलंधिगरामठम् ॥ स र्वासांशाकजातीनांवृन्ताकंशाकना यकम् ॥

वृन्ताकी । स्त्री० वार्ताक्यां ॥

वृन्तिका । स्त्री० वृन्तितायाम् । कटु क्याम् ॥

वृन्द : । पुं० दशार्बुदे । शतकोटौ । मध्यार्बुदे । अब्जे ॥ न० समूहे ॥ वृणुते वृणभक्ते । वृन्दादयश्चेतिसाधु : ॥

वृन्दा । स्त्री० तुलस्याम् ॥ जलन्धरस्य पत्न्याम् ॥ केदारराजकन्यायाम् ॥ राधाषोडशनामान्तर्गतनामवि शेषे ॥

वृन्दार : । त्रि० मनोज्ञे ॥

वृन्दारक : । पुं० अमरे । देवतायो- म् । सुरे । प्रशस्तंवृन्दंयस्यस : । शृङ्गवृन्दाभ्यामारकन् । स्त्रियांसुत

कापुत्रिकावृन्दारकावावेतिवक्तव्य मिति० वृन्दारका० वृन्दारिकेत्युभ यम् ॥ यूथपतौ ॥ यथा । वृन्दा रक : सुरश्रेष्ठे मनोज्ञे यूथपावरी तिव्याडि : ॥ त्रि० मनोज्ञे ॥ श्रेष्ठे ॥

वृन्दावनम् । न० स्वनामप्रसिद्धे तीर्थविशेषे ॥ वृन्दाऽनेकेशजालमु मानमध्येदेशता । भूतिशोभैरव स्तत्रसर्व्वसिद्धिप्रदायक : ॥ इ त्यागम : ॥ वृन्दायतपस्तेपेतत्तु वृन्दावनंस्मृतम् । वृन्दयाचकृता क्रीडातेनवामुनिसत्तम ॥ इतिपु राणम् ॥ वृन्दायावनम् ॥

वृन्दावनेश्वरक : पुं० श्रीकृष्णे ॥

वृन्दावनेश्वरी । स्त्री० राधायाम् ॥

वृन्दिष्ठ : । त्रि० अतिवृन्दारके ॥ अय मेषामतिशयेनवृन्दारक : । इष्ठन् । प्रियस्थिरेतिसाधु : ॥

वृन्दीयान् । त्रि० वृन्दारकतरे ॥ अय मनयोरतिशयेनवृन्दारक : । ईयसु नि० प्रियस्थिरेतिवृन्दारकस्यवृन्दा- देश : ॥

वृश : । पुं० आर्द्रके ॥ मूले ॥ वृणो ति ॥ वृञ्० । जनिदेश्यादिनाश क् ॥ उन्दुरौ ॥

वृशा । स्त्री० औषधीविशेषे ॥

वृश्चिक : । पुं० अली । द्रुणे । विच्छू० कु० भा० प्र० ॥ वृश्चिकविषस्यलक्षणं

यथा । दष्टस्यग्निरिशाटोचभिन्नतो०वोर्द्धमाशुच । वृश्चिकस्यविषं यातिपश्चाद्दंशेऽवतिष्ठते ॥ औषधन्तु । जीरकस्यकृत : कल्कोघृतसैन्धवसंयुत : । सुखोष्णोमधुनालेपा वृश्चिकस्यविषंहरेत् ॥ गन्धमाघ्राय मृदितसूर्यावर्त्तदलस्यतु । वृश्चिकेनगरोविद्ध : क्षणाद्भवतिनिर्विष : अष्टमराशौ ॥ तज्जनजातस्यफलं यथा । वृश्चिकोदयसञ्जात : शौर्य्यवानतिदुष्टधी : । भवेद्विद्वानसम्पन्नोविप्रहोसुभग : सुधी : ॥ शूककीटे । शुयपोका० इ०भा०प्र० ॥ ओषधीविशेषे ॥ वृश्चिति । ओत्रश्चू छेदने । व्रश्चिकृषो : किकन् । यद्दिक्ष्येतिसम्प्रसारणम् ॥

वृश्चिकप्रिया । स्त्री० पूतिकायाम् ॥

वृश्चिकर्णी । स्त्री० आखुकर्ण्याम् ॥

वृश्चिका । स्त्री० क्षुद्रक्षुपविशेषे । नखपर्ण्याम् । पिच्छिलायाम् । अलिप्रियायाम् ॥

वृश्चिकाधिप : । पुं० मङ्गले ॥

वृश्चिकाली । स्त्री० क्षुपविशेषे वृश्चिपत्र्याम् । विषघ्न्याम् । सर्पदंष्ट्रायाम् । भूरिदुग्धायाम् । भासुरपुष्पायाम् । विक्राटी०इ० गौ०भा० ॥ वृश्चिकालीविषघ्नी तुकासमारुतनाशिनी ॥

वृश्चिपत्री । स्त्री० वृश्चिकाल्याम् ॥

वृश्चीर : । पुं० श्वेतमूलपुनर्नवायाम् ॥

वृष : । पुं० धर्म्मे ॥ वर्षतिफलम् । वृषुसेचने । इगुपधेतिक : ॥ वर्षणात्सर्वकामानांधर्मोवृष : इतिशङ्करभाष्यम् ॥ बलीवर्द्दे । उक्षणि । भद्रे । ऋषभे । वृषभे । अनडुहि । सौरभेये । गवि ॥ शिववाहनवृषस्यस्वरूपंयथा । शुद्धायुध : शुद्धकायश्चतुष्पादसितक्षुर : । वृहत्ककुत्कृष्णपुच्छ : श्यामस्कंधोवृष : स्मृतइति ॥ वृषोत्सर्गे वृषे ॥ तल्लक्षणंयथा । चरणानिमुखंपुच्छंयस्यश्वेतानिगोपते : । लाक्षारससवर्णश्चतंनीलमितिनिर्द्दिशेत् ॥ एवंविधवृषाभावेऽन्योवृषभोयोयस्योपादेय : सोप्युक्त : । वर्णतस्ताम्रकपिलोब्राह्मणस्यप्रशस्यते । तथा । श्वेतोदर : कृष्णपृष्ठोब्राह्मणस्यप्रशस्यते ॥ स्निग्धरक्तेनवर्णेनक्षत्रियस्यप्रशस्यते ॥ काञ्चनाभेनवैश्यस्यकृष्णेनाप्यन्त्यजन्मन : ॥ इति । वृषोत्सर्गकालश्चअशौचान्तद्वितीयदिनम् । कार्त्तिकीचैत्रीरेवतीयुताश्विनपूर्णिमा चेति ॥ शृङ्ग्याम् ॥ चतुर्विधपुरुषमध्येपुरुषविशेषे ॥ तल्लक्षणन्तु । बहुगुणबहुबन्ध : शीघ्रकामीनताङ्ग : सकलरुचिरदेह : सत्यवादीवृषोयमि

ति । तावृरिसंज्ञे द्वितीयराशौ एतद्राशिजातफलं यथा । स्थिरमतिंसुमतिंकमनीयतांक्षमलतांद्विजवामुपभोगताम् । वृषगतोद्विमगुर्भ्रमादिशेत्सुकृतिनः क्षतिमथसुखान्यपि ॥ तद्लग्नजातस्यफलम् । वृषलग्ने भवेज्जातोगुरुभक्तः प्रियंवदः । गुणीकृतीधनीलुब्धःशूरः सर्वजनप्रियइति ॥ उत्तरपदस्थः श्रेष्ठे ॥ वासे । वासके । चटकृषे ॥ मूषिके ॥ शुक्ले । वास्तुस्थानभेदे ॥ रिपौ । कामे ॥ बलवति ॥ ऋषभनामौषधे ॥ वर्षतिफलमधुकामादीन् । इगु० । वृगुपधेतिकः ॥ वृष्यप्रयोगे ॥ स्त्री कृष्णे ॥ पुष्ये ॥ वत्सविशेषे । यथा । वीद्भवाः शालिमुद्गाश्च सक्तुमाषाख्यैवच । मद्यावैसाव तीसवैवृषिषसुरवन्दिते ॥ १५ ॥ न० ऋषी । पिच्छे ॥ वेतसे ॥ त्रि० पुष्यवति ॥

वृषकर्णी । स्त्री० सुदर्शनायाम् । सुदर्शनगुलुच्च० इ० गौ० भा० ।

वृषकर्मा । पुं० भगवति । वृषोधर्मलक्षणंकर्मास्य ॥

वृषकेतुः । पुं० कर्णस्यपुत्रे ॥

वृषगन्धा । स्त्री० अजान्त्र्याम् ॥

वृषचक्रम् । न० कृषिकर्मोक्तवृषाकारचक्रे ॥

वृषणः । पुं० मुष्के । अण्डकोषे । वृषणौभवतः सारौकफासृङ्मांसमेदसाम् । वीर्यवाहिशिरा धारौ मध्येपृषणावुभौ । स्थूललिङ्गेद्रिद्रः स्यादुः स्वैकवृषणोभवेत् विषमैश्चैवचलोवै नृपः स्याद्वृषणैःसमैः ॥ प्रलम्बवृषणोऽल्पायुर्मिर्द्धव्योमशिभिर्भवेत् ॥ वर्षति । वृषुसेचने । बाहुलकात्क्युः । बहुलमन्यत्रेतियुच्वा । संज्ञापूर्वकत्वाद्वृ बाभावः ॥

वृषणश्वः । पुं० इन्द्रस्याश्वे । उच्चैःश्रवसि । श्वेतहये ।

वृषणवसु । न० इन्द्रवने । नन्दने । नन्दसारे ।

वृषदंशकः । पुं० आखुभुजि । बिडाले । वृषान्मूषिकान्दशति । दंश० । कर्मण्यण् । स्वार्थेकन् ॥

वृषध्वजः । पुं० गणेशे । शिवे ॥ वृषोध्वजश्चिह्नमस्य ॥ हेरम्बे ॥ पुण्यकर्मणि ॥

वृषा । पुं० कर्णे ॥ महेन्द्रे ॥ वृषभे । तुरगे ॥ वर्षति । वृषु० । कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः कनिन् ।

वृषनाशनः । पुं० विडङ्गे ॥

वृषपतिः । पुं० शिवे ॥ वण्डे ॥

वृषपत्रिका । स्त्री० वसाम्न्याम् । चाम्लाम् ॥

वृषपर्वा । स्त्री० वृषविशेषे । दुष्या

स्याम् । चक्राङ्ग्याम् । सुदर्शना याम् । पुराती॰इ॰गी॰भा॰ ॥ आखुपर्ण्याम् ॥

वृषपर्व्वा । पुं॰ भस्मकासुरदैत्ये । शम्भौ । हरौ ॥ दैत्यप्रभेदे । शृङ्गारिणि ॥ कसेरौ ॥ वृषरूपाविपर्वाद्यस्य ॥

वृषभः । पुं॰ श्रेष्ठे ॥ गवि । वृषे ॥ औषधीभेदे । शृङ्ग्याम् ॥ वर्षति मूर्च्छयभूमिं सिञ्चति । वृषु॰ । ऋषिवृषिभ्यां कित्त्वभच् । आदिनि मे । कर्णरन्ध्रे ॥

वृषभगतिः । पुं॰ शिवरवे । शम्भौ । वृषभेणगतिर्यस्य ॥

वृषभध्वजः । पुं॰ महेश्वरे । शिवे । वृषभोध्वजश्चिह्नमस्य ॥

वृषभाचः । पुं॰ श्रीकृष्णे ॥ सर्वकामाभिवर्षकेभ्यश्चिह्नस्य : । वह्नौ डाविति पच् । वृषभोधर्म्मोदृष्टिरस्य ॥

वृषभाक्षी । स्त्री॰ इन्द्रवारुण्याम् ॥

वृषभानु : । पुं॰ सुरभानुपुत्रे । राधिकापितरि ॥

वृषभासा । स्त्री॰ अमरावत्याम् ॥

वृषय : । पुं॰ आश्रये ॥ वृणोति । वृञ् वरणे । वृञो : षुक्दुकौचेतिकयन्॰ धातोः षुगागमश्च ॥

वृषल : । पुं॰ रसुने ॥ शूद्रे । चन्द्रगुप्तनृपे ॥ वाजिनि । तुरगे ॥ अधार्म्मिके ॥ वृष्यति॰ वर्षतिवा । वृषु॰ । वृषादिभ्यश्चिदितिकलः ॥ वृषं धर्म्मं लुनातिवा : लूञ् । अन्येभ्योपीतिडः ॥ वृषं लातिवा । ला॰ । कः ॥ वृषोहिभगवान्धर्मस्तस्य यः कुरुतेह्यलम् । वृषलंतंविदुर्देवास्तस्माद्धर्म्मंनलोपयेत् ॥

वृषलपतिः । पुं॰ शूद्रे॰ चोरायांराज्ञि ॥

वृषलवृत्तिः । पुं॰ शूद्रोपजन्यवृत्तौ ॥

वृषली । स्त्री॰ शूद्रायाम् । जातित्वान्ङीष् ॥ स्त्रीमात्रे ॥ निरुक्तमस्त्रकुर्व्वन्ति । वृषस्यन्तीचपलयतिभर्त्तारमिति॰ वृषली॰ ब्राह्मणस्यपरिणीताब्राह्मण्यपिवृषलीति॰ श्राद्धभुग्वृषलीतल्पमित्यत्रकुल्लूकभट्टः ॥ वन्ध्यातुवृषलीज्ञेया॰ वृषलीतुमृतप्रजा । अपरावृषलीज्ञेयाकुमारी-याःरजस्वला ॥ पितृगृहेपविवाहितायांरजस्वलायांकन्यायां ॥ यथाऽ विकाप्यपी । पितुर्गेहेचयाकन्यारजःपश्यत्यसंस्कृता । भ्रूणहत्यापितुस्तस्याःसाकन्यावृषलीस्मृता ॥ यस्तुतांवरयेत्कन्यांब्राह्मणोज्ञा-नदुर्बलः । अश्राद्धेयमपाङ्क्तेयं तंविद्याद्वृषलीपतिमिति ॥ स्वपतिं परित्यज्यपरपतिगामिन्याम् । यथा । स्वपतिंयापरित्यज्यपरंवृषे॰ वृषायते । वृषलीसाहिविज्ञेयानशूद्रीवृषलीभवेदिति ॥

वृषलीपति : । पुं॰ सवर्णामपरिणीय कृतशूद्राविवाहे ॥ वृषल्या : पति: ॥ यस्तुतांवरयेत्कन्यांब्राह्मणोज्ञानदुर्बल : । अश्राद्धेयमपाङ्क्तेयंतंविद्याद्वृषलीपतिम् ॥ यदिशूद्रांव्रजेद्विप्रोवृषलीपतिरेवस : । तांपितुर्गृहेसज्ञातरजस्काम् ॥

वृषलीफेन : । पुं॰ शूद्रायाअधररसे ॥

वृषलोचन : । पुं॰ मूषिके ॥ त्रि॰ वृषनयने ॥

वृषवाहन : । पुं॰ शिवे ॥

वृषशत्रु : । पुं॰ विष्णौ ॥ दू॰त्रि॰ष: ॥ विडाले ॥

वृषसृक्कौ । पुं॰भृङ्गरोलि ॥

वृषस्यन्ती । स्त्री॰ कामुक्याम् । मैथुनेच्छावत्याम् ॥ वृषंनरं॰शुक्रलंवा ॰इच्छत्यात्मन : । सुपआत्मन : क्यच् । अश्ववृषयोरवृषलवणानामात्मप्रीतौक्यचीतिसुक् । लट : शतृ । उगितश्चेतिङीप् ॥

वृषा । स्त्री॰ मूषिकपर्ण्याम् ॥ कपिकच्छ्वाम् ॥ वर्षति । वृषेरिगुपधेति क : । टाप् ॥

वृषाकपायी । स्त्री॰ श्रियाम् ॥ गौर्याम् ॥ वृषाकपे : स्त्रीतिपुंयोगार्थे॰ वृषाकप्यग्निकुसितकुसिदानामुदात्तइत्येकारादेशोङीप्च ॥ वर्याम् । शतावर्याम् ॥ जीवन्त्याम् ॥ शच्याम् ॥ स्वाहायाम् ।

वृषाकपि : । पुं॰ हरे । स्मरहरे ॥ कृष्णे । वासुदेवे ॥ वर्षणात्सर्वकामानांधर्मोवृष : । सातृतीयात्भूमिमपोद्दितिकपिर्वराह : । वृषत्वात्कपिरूपत्वाचवृषाकपि : । कपिर्वराहश्श्रेष्ठश्चधर्मश्चवृषउच्यते । तस्माद्वृषाकपिंप्राहकश्यपोमांप्रजापतिरितिमहाभारतम् ॥ जातवेदसि । अग्नौ ॥ वृषंधर्मंनकम्पयति । कपिकिञ्चिच्चलने । कुण्डिकम्प्यार्नलोपश्चेति॰इ : । वृषात्धर्मात्आकम्पयतिदुष्टानितिवा ॥ यद्वा । वर्षतिकामान् । वृषु॰ । इगुपधेतिक : । आकम्पयतिपापानि । पूर्ववद्इ : । वृषश्चासावाकपिश्च ॥ यद्वा । वृषाइन्द्रोन कम्पते॰आकम्पतेवाऽस्मात् ॥ यद्वा । वृषोधर्मो॰वृषाइन्द्रोवा॰कपिरिववश्येयस्य ॥ यद्वा । वृषश्चक : कपिर्वराह : । शाकपार्थिवादि : । अन्येषामपोतिदीर्घ : ॥ यद्वा । वृषाइन्द्रस्य॰अकम् वृषाकम् पिबति॰पिगतौ । अत्रभावितण्यर्थीवा । इन्द्रदु : खंप्राप्नोति॰प्रापयतिवा:दैत्यान्॰रक्षकत्वात् । विचिसंज्ञापूर्वकत्वान्नगुण : । क्विपितुआगमशासनस्यानित्यत्वान्नतुक् ॥

वृषाकर : । पुं॰ माषे ॥

वृषाकृति : । पुं॰ विष्णौ । नारायणे ।

धर्मार्थाकृतिरस्य ॥ वृषशब्दस्तादर्थ्ये॰ आकृतिराकारः शरीरम् । वृषार्थधर्मार्थाकृतिः शरीरमस्येति ॥

वृषाङ्कः । पुं॰ शङ्करे ॥ साधौ ॥ वृषः अङ्कश्चिह्नमस्य ॥ भल्लातके ॥ मरुबके ॥

वृषाङ्कजः । पुं॰ डमरुशब्दे ॥ इ॰ श॰ र॰ ली॰ ॥

वृषाश्वनः । पुं॰ शिवे ॥ इ॰ त्रि॰ ष: ॥

वृषाणकः । पुं॰ महाकाले ॥ इ॰ त्रि॰ ष: ॥

वृषाधिपः । पुं॰ शुक्रग्रहे ॥ वृषस्य राशिविशेषस्याधिपः ॥

वृषान्तकः । पुं॰ जनार्द्दने ॥ बिडाले ॥

वृषायणः । पुं॰ चटके ॥ इ॰ हा॰ ली॰ ॥

वृषासनः । पुं॰ शिवे ॥ वृषोबलीवर्द्दः आसनं यस्य ॥ वृषरूपचासने ॥

वृषाहारः । पुं॰ बिडाले ॥ वृषाम् विकआहारोऽस्य ॥ इ॰ हा॰ ली॰ ॥

वृषी । पुं॰ मयूरे ॥ इ॰ श॰ ला॰ ॥

वृषी । स्त्री॰ यतीनामासने ॥ व्रतिविष्टरे ॥ वर्षति सुखम् । वृषु॰ । इगुपधेतिकः । गौरादिः ॥

वृषोत्सर्गः । पुं॰ श्राद्धादौ वत्सतरी चतुष्टयसहितत्रिशूलचक्राङ्कितवृषत्यागे ॥

वृष्टः । त्रि॰ सिक्ते ॥ वृषेः क्तः ॥

वृष्टिः । स्त्री॰ वर्षे । मेघाज्जलपतने । वर्षणे ॥ वर्षणम् । वृषु॰ । स्त्रियांक्तिन् ॥ भाग्याख्यायाम् तुष्टौ ॥

वृष्टिघ्नी । स्त्री॰ भृङ्गपर्णिकायाम् । सूक्ष्मैलायाम् ॥ त्रि॰ वृष्टिनाशके ॥

वृष्टिजीवनः । पुं॰ देवमातृकेदेशे ॥ वृष्टिर्जीवनं यस्य सः ॥ वृष्ट्याजीवनं यत्र वा ॥

वृष्टिप्रमाणम् । न॰ मेघाज्जलपतनेयत्तायाम् ॥ यथा । द्रोणोपस्थनिमित्तगर्भे॰ श्रीण्याढकानि पवनेन । षड्वृद्धानवाभ्रैः स्तनितेन द्वादशप्रसवः ॥ इतिवराहोक्तौवृष्टेराढकद्रोणप्रमाणपरिज्ञानपराशरश्चाह । आढकाश्चतुरोद्रोणमपांविद्यात्प्रमाणतः । धनुःप्रमाणमेदिन्यांविद्याद्द्रोणाभिवर्षणम् ॥ समेविंशाङ्गुलानाहे द्विचतुष्काङ्गुलोच्छ्रिते । भाण्डे वर्षतिसम्पूर्णे॰ ज्ञेयमाढकवर्षणम् ॥ तथाचाचार्य्यः । हस्तविशालंकुण्डकमधिकृत्याम्बुप्रमाणनिर्द्देशः । पञ्चाशत्पलमाढकमनेनमिनुयाज्जलंपतितमिति ॥

वृष्टिभूः । पुं॰ भेके ॥ वृष्टौभवति ।

भू॰ । भुव : संज्ञान्तरयोरिति-
क्षिप् ॥
वृष्णि : । पुं॰ यादवे । मेषे ॥ श्रीकृ
ष्णे ॥ वर्षति । वृषु॰ । सृवृषि
भ्यांकिदितिनि : ॥ त्रि॰पाषण्डे ॥
चण्डे ॥
वृष्णिगर्भ : । पुं॰ श्रीकृष्णे ॥ वृष्णि
र्योगर्भयस्य स : ॥
वृष्य : । पुं॰ माषे ॥ न॰वाजीकर
णे ॥ त्रि॰शुक्रवृद्धिकारकौषधा
दौ ॥ वृष्यते । वृषु॰ । विभाषाकृ
वृषोरितिक्यप् । पक्षे ण्यतितु॰व
र्ष्यम् ॥ वृषायहितं ॥ वृषायका
मुकायहितम् । खलयवमाषेति-
यत् ॥
वृष्यकन्दा । स्त्री॰ विदार्याम् ॥
वृष्यगन्धा । स्त्री॰ वृद्धदारके ॥
वृष्यगन्धिका । स्त्री॰ अतिबलायाम् ॥
वृष्यवल्लिका । स्त्री॰ विदार्याम् ॥
वृष्या । स्त्री॰ ऋद्धिनामौषधे ॥ शता
वर्याम् ॥ आमलक्याम् ॥
वृसी । स्त्री॰ व्रतिनामासने ॥ ब्रह्म
चार्याद्यासने ॥ ब्रुवन्त : सीदन्त्य
स्याम् ॥ पृषोदरादित्वाद्ब्रुवच्छ
ब्दस्य॰वृ॰आदेश : । अन्येष्वपीत्य
धिकरणेड : ॥
वृहच्चक्षु : । पुं॰ महाचञ्चुशाकेपक्षि
शिशिरे । दीर्घपादे । कुलङ्ग॰-
भा॰ ॥

वृहच्चित्त : । पुं॰ बीजपूरे ॥
वृहच्छल्क : । पुं॰ चिङ्गटमत्स्ये ॥
वृहच्छुक : । पुं॰ दार्वाघाटे । काठ
कोरवा॰इतिख्याते खगे ॥
वैकट : । पुं॰ वैकटिके । मणिकारे ।
मणियारा॰हि॰भा॰प्र॰भेकटी॰इ॰
गौ॰देशभाषाप्रसिद्धे मत्स्ये ॥ यू
नि । आततायिन्ये ॥ विदूषके ॥
वेग : । पुं॰ जवे । रंहसि । रये ।
स्यदे ॥ प्रवाहे । ओघे । धाराया
म् ॥ किम्पाके । महाकालफले ॥
रेतसि ॥ मूत्रादिप्रवृत्तौ ॥ यथा ।
वेगान्नधारयेज्जातुविण्मूत्रस्वहट-
श्रुधाम् ॥ अपिच । वेगरोधीनक
र्त्तव्योह्यन्यत्रक्रोधवेगत : ॥ पुन
श्च । स्वभावत : प्रवृत्तानांमलादी
नांजिजीविषु : । नवेगान्धारयेद्धी
र : कामादीनान्तुधारयेदिति ।
पृथिव्यादिचतुष्टयमनोवृत्तौसंस्का
रे । वेजनम् । ओविजोभयचलन
यो : । घञ् ॥
वेगनाशन : । पुं॰ श्लेष्मणि ॥
वेगवान् । पुं॰ ईश्वरे । त्रि॰ वेगि
नि ॥ वेगोजवोस्यास्ति । मतुप् ॥
वेगवती । स्त्री॰ अर्द्धसमवृत्तभेदे ॥
यथा । विषमेप्रथमासगणैर्नंदोध
कमेवहिवेगवतीस्यात् ॥ यथा ।
स्मरवेगवतीव्रजरामाकेशववंशरवे
रतिमुग्धा । रभसान्नगुरुन्गणय

ग्नीकेलिनिकुञ्जगृहायवगाम ॥
वेगसर : । पुं॰ वेगिहये ॥
वेगित : । त्रि॰ सञ्जातवेगे । वेगविशिष्टे ॥ वेग : सञ्जातोऽस्य । तारकादित्वादितच् ॥
वेगी । पुं॰ श्येनपक्षिणि ॥ त्रि॰वेगवति । तरस्विनि । जाङ्घिके ॥ अतिशयितोवेगोस्य । अतइनिः ॥
वेगिहरिण : । पुं॰ शीघ्रकारीमृगे ॥
वेङ्कट : । पुं॰ द्रविडदेशस्थेऽचलविशेषे ॥
वेचा । स्त्री॰ मूल्ये ॥ विचिर्॰ । अच् । टाप् । वेचाम्मूल्यमभवेतनमितिहलायुध : ॥
वेजानी । स्त्री॰ सोमराज्याम् ॥
वेजित : त्रि॰ भीते ॥
वेडम् । न॰ सान्द्रविच्छिन्नचन्दने ॥
वेडा । ) वेडी । ) स्त्री॰ नौकायाम् ॥
वेण : । पुं॰ अङ्गात्सुनीथायामुत्पन्ने पृथोः पितरि : ॥ सतपुत्रेणतु जातेनवेणोपिचिदिवंययौ । पुन्नाम्नोनरकात्त्रात : सतेनसुमहात्मनेतिविष्णुपुराणम् ॥ वर्णसङ्करजातिविशेषे ॥ यथा । वैदेहकेनत्वम्बष्ठामुत्पन्नोवेणउच्यतइतिमनु : ॥
वेणा । स्त्री॰ भारतवर्षस्थनदीविशेषे ॥
वेणि : । स्त्री॰ वेण्याम् ॥ वेति॰ वीयतेवा । वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु । वीज्याज्वरिभ्योनि : । बाहुलकाण्णत्वम् ॥ यद्वा । वेणति । वेणृ॰ । इन् ॥
वेणिवेधिनी । स्त्री॰ जलौकायाम् ॥
वेणी । स्त्री॰ केशबन्धे । प्रवेण्याम् । प्रोषितभर्तृकादिधार्यकेशरचनाविशेषे ॥ यथा । जटानेयंवेणीकृतकचकलापोनगरलंगलेकस्तूरीयंशिरसिशशिरेखानतिलकम् । इयंभूतिर्नाङ्गेप्रियविरहजन्माधवलिमापुरारातिर्भ्रान्त्याकुसुमशरकिंमांव्यथयसि ॥ देवताडे ॥ नद्यादेरन्तरे ॥ सेतौ ॥ प्रवाहे ॥ मेष्याम् ॥ नदीविशेषे ॥ वेणति । वेणृगतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ॥ इन् । कृदिकारादितिङीष् ॥
वेणीर : । पुं॰ अरिष्टवृक्षे ॥
वेणु : । पुं॰ नृपविशेषे । त्वक्सारे । वंशे ॥ वंशवाद्ये ॥ यथा । महानन्दस्तथानन्दोविजयोथजयस्तथा । चत्वारउत्तमावंशामतङ्गमुनिसम्मता : ॥ दशाङ्गुलोमहानन्दोनन्दएकादशाङ्गुल : । द्वादशाङ्गुलमानस्तुविजय : परिकीर्त्तित : । चतुर्दशाङ्गुलिमितोजयइत्यभिधीयते ॥ वेणति । वेणृगत्यादौ । बाहुलकादु : ॥ यद्वा । अ

जति। अजिवृरीभ्योनिञ्चेतिणुः। अजेर्वी ॥

वेणुकम्। न० तोत्रे। गजस्यतोदनद ण्डे। वेणुनानिर्वृत्तम्। निर्वृत्ते ञ्चद्यूतादिभ्यइतिठक्। वुसुसुका न्तात्कः। संज्ञापूर्वकत्वान्नवृ द्धिः॥

वेणुकर्करः। पुं० करीरवृक्षे ॥

वेणुजः। पुं० वेणुयवे ॥

वेणुदारी। पुं० नरकात्मजे वाणा सुरात्मजे ॥

वेणुध्मः। पुं० वैणविके। वंशीवाद के॥ वेणुंधमति। ध्मा० आतोनु पसर्गेकः॥

वेणुपत्री। स्त्री० वंशपत्रीवृक्षे ॥

वेणुयवः। पुं० वंशतण्डुले। वंशयवे।

वेणुवादः। पुं० वैणुके ॥

वेणुवीजम्। न० वंशयवे ॥

वेण्वा। स्त्री० तीर्थविशेषे ॥

वेण्वासङ्गमः। पुं० तीर्थविशेषे ॥

वेतः। पुं० वेत्रे ॥ इ०रा०नि०॥

वेतनम्। न० कर्मकरस्य०भृतौ। कर्म ण्यायाम्। विधायाम्। भृत्यायाम्। निर्वेशे। कामकराङ्क इ०भा० ॥ ओडवेनोपाये। आजीवे ॥ रूप्ये ॥ वीयतेऽनेन। वीगत्यादौ। वीपति भ्यांतनन् ॥

वेतसः। पुं० लताविशेषे। रथे। अ म्लपुष्पे। विदुले। शीते। वानीरे। वञ्जुले। वेत०इ०भा०॥ अथभावप्र काशः। वेतसोविदुलोनम्रोवञ्जु लोदीर्घपत्रकः। नादेयीगम्भपत्र स्तजलौकासम्भृतस्तथा॥ नदीकूल प्रियस्त्वन्यः सुगंतोघनपुष्पकः। जलजातस्तोयकामोविदुलोजलवे तसः॥ वेतसः शीतलोदाहशो थार्शोयोनिरुग्व्रणान्। हन्तिवीस र्पकृच्छ्रास्रपित्ताश्मरिकफानिलान् ॥ अयनम्। इण्०। नपुंसकइति क्तः। वाविकल्पस्य०इतंस्नामं०स्प ति। घोअन्तकर्मणि। आतोनुपेति कः। यद्वा। अयते। वेञ्। वेञ स्तुट्चेत्यसच्। बाहुलकात्दात्वंन॥

वेतसाम्लः। पुं० अम्लवेतसे ॥

वेतसी। स्त्री० वेतसे ॥

वेतसीका। स्त्री० तीर्थविशेषे ॥

वेतस्वान्। त्रि० बहुवेतसेदेशे॥ वेत साः सन्त्यत्र। कुमुदनडवेतसेभ्यो ड्मतुप्। मादुपधायाइतिवः॥

वेतालः। पुं० द्वारपाले॥ भू ताधिष्ठितशवे॥ अकस्माद्भयभा भासमानेभूतविशेषे॥ शिवगणाधि पविशेषे॥

वेत्ता। त्रि० वेदितरि। ज्ञातरि॥ वेत्ति। विद०। तृच्॥

वेत्रः। पुं० वेते। योगिदण्डे। सु दण्डे॥ वीयते। वीगत्यादिषु। गुधृवीपचिवचीत्यादिना०त्रः॥ वं

शे ॥ फलिन्याम् ॥ पुं॰ असुरविशेषे ॥

वेत्रधरः । पुं॰ द्वारपाले ॥

वेत्रधारकः । पुं॰ द्वाःस्थिते ॥

वेत्रवान् । त्रि॰ वेत्रधारके ॥

वेत्रवती । स्त्री॰ नदीविशेषे ॥ सातुमालवदेशात्॰कालपीसमीपेयमुनायां मिलिता ॥ वेत्रासुरमातरि ॥ वेत्राणिसन्त्यस्याम् । मतुप् । ङीप् ॥

वेत्रावती । स्त्री॰ वेत्रवत्यांनद्याम् ॥

वेत्रासनम् । न॰ वेत्रनिर्मितासने । आसन्द्याम् ॥ स्याद्वेत्रासनमासन्दीति॰हेमचन्द्रः ॥

वेत्रासुरः । पुं॰ असुरविशेषे ॥

वेत्री । पुं॰ द्वारपाले ॥ त्रि॰वेत्रयुक्ते ॥

वेदः । पुं॰ आम्नाये । श्रुतौ । क्रमोपगृहीतवर्णात्मन्यपौरुषेयवाक्ये ॥ वेदयतिबोधयतिआत्मानम् । विद ज्ञाने । इत्यतोण्यन्तात्पचाद्यच् ॥ नाथबुद्धावेदसृष्टिः कालिदासादिवाक्यवत् । किन्तुश्वासवदेवायत्नात्स्यादतोऽपौरुषेयता ॥ यथाहुराचार्याः । वेदोऽनादितया वायद्वापरमेश्वरप्रणीततया । भवति परंप्रमाणंवेदोनास्तिस्वतःपरतो वा ॥ नापेक्षतेयदन्यद्यदपेक्षन्तेऽखिलानिमानानि । वाक्यंतन्निगमानांमानंब्रह्मापतीन्द्रियावगतौ ॥ मानंप्रबोधयन्तंबोधंमानेनयेबुभुत्सन्ते । एधोभिरेवदहनंदग्धुंवाञ्छन्ति तेमहात्मानः ॥ ४९ ॥ वेदोनादिरमुष्यव्यञ्जकईशः स्वयंप्रकाशात्मा । तदभिव्यक्तिमुदीच्यप्रोक्तोसौसूरिभिः प्रमाणमिति ॥ रूपाणामवलोकेचक्षुरिवान्यन्नकारणंदृष्टम् । तद्वददृष्टावगतौवेदवदन्योनवेदकोहेतुः ॥ निगमेषुनिश्चितार्थंतन्त्रंकश्चिद्यदिप्रकाशयति । तदिदमनुवादमात्रंप्रामाण्यंतस्यसिद्धमितिनकिञ्चित् ॥ अंशद्वयवतिनिगमेसाधयति द्वैतमेकएकोंशः । अद्वैतमेववस्तुप्रतिपादयतिप्रसिद्धमपरोंशः ॥ ५० ॥ सचवेदोमन्त्रब्राह्मणभेदाद्द्विविधः । विधिमन्त्रनामधेयनिषेधार्थवादभेदात्पञ्चविधश्चभवति ॥ अस्मात्तज्ज्ञापकोवेदइतिप्रमाणविदः ॥ अतोवेदार्थज्ञानप्रशंसामाहकूर्मपुराणम् । नवेदपाठमात्रेणसन्तोषंकारयेद्बुधः । पाठमात्रावसानस्तुपङ्के गौरिवसीदति ॥ योऽधीत्यविधिवद्विप्रोवेदार्थंनविचारयेत् । ससान्वयः शूद्रसमः पात्रतांनप्रपद्यते ॥ व्यासश्च । वेदस्याध्ययनंसर्वंधर्मशास्त्रस्यवापियत् । अजानतार्थंतत्सर्वंतुषाणांकण्डनंयथा । यथापशुर्भारवाहीनतस्यभजतेफलम् । द्विजस्तथार्थानभिज्ञोनवेदफलमश्नुते ॥ पाठमात्ररतोनित्यंद्विजातीनांयथार्थवर्जि

तान् । पशूनिवचतान्प्राज्ञोवाङ्मात्रेणापिनार्चयेत् ॥ श्रुतहीनमधीतंयन्नेहनामुत्रतद्भवेत् । श्रुतन्तु केवलमपिसमुद्धारायकल्पते । योधीतेनार्थंतत्त्वज्ञस्तस्यतद्धारणादृथा । भारवाहीसभृतकः केवलंक्लेशभागभवेत् ॥ तस्मादर्थंपरिज्ञानेयत्नः कार्योविजानता । ज्ञानंकर्मचसंयुक्तंयुक्तार्थंकथितंमया ॥ अधीतंश्रुतसंयुक्तंतथाश्रेष्ठंनकेवलम् । अधीत्य यत्किञ्चिदपितदर्थमवबुध्यच । स्वर्गलोकमवाप्नोतिधर्मानुष्ठानविद्द्विजः इति । अपिच । वेदार्थज्ञोजपंजप्त्वातथैवाध्ययनंद्विजः । कुर्वन्स्वर्गमवाप्नोतिनरकन्तुविपर्यये । इतिव्यासः ॥ मनुः । वेदशास्त्रार्थतत्त्वज्ञोयत्रतत्राश्रमेवसेत् । इहैवलोकेतिष्ठन्सब्रह्मलोकायकल्पते इति ॥ व्यासः । समुच्चितंश्लोकमपिश्रुताधीतंविशिष्यते । चतुर्णामपिवेदानांकेवलाध्ययनाद्द्विजाः ॥ ग्रन्थेभ्योग्रन्थिनः श्रेष्ठाग्रन्थिभ्योधारिणोवराः । धारिभ्यश्चार्थतत्त्वज्ञास्तेभ्योप्यध्यात्मचिन्तकाः ॥ पुस्तकेवेदलिखननिषेधः पाद्मोत्तरखण्डे ११० ऽध्यायेयथा । वेदस्यलिखनंकृत्वाय : पठेद्ब्रह्महाभवेत् । पुस्तकंवागृहेस्थाप्यवज्रपातोभवेद्ध्रुवमिति ॥ विदन्त्यनेनधर्मम् । विदज्ञा

ने । हलश्चेतिघञ् ॥ वेदार्थवेदनहेतुत्वाद्व्याकरणे ॥ व्याकरणेमहिपदादिविभागशक्त्यग्वेदादयोज्ञायन्ते ॥ अनुभवे । भावेघञ् ॥ वृत्तौ ॥ केशवे ॥ इन्द्रियादिदेवताप्रकाशके ॥ मीनशरीरावच्छेदेनभगवद्वाक्यमितिन्यायशास्त्रम् ॥

वेदगर्भः । पुं॰ अजयोनौ । ब्रह्मणि ॥ ब्राह्मणे ॥ वेदोगर्भेयस्यसः ॥

वेदगर्भा । स्त्री॰ दुर्गायाम् । वेदजननित्याम् ॥ अस्यमहतोभूतस्यनिश्वसितमेतदृग्वेदइत्यादिश्रुतेः । मनेवाज्ञापराशक्तिर्वेदसंज्ञापुरातनी । ऋग्यजुःसामरूपेणसर्गादौसंप्रवर्ततइतिकूर्मपुराणेद्वादशाध्यायेश्रीभगवत्युक्तेश्च । तथाचचत्वारोवेदाः साङ्गाः सरहस्याबहुधाभिन्नाः । एकशतमध्वर्युशाखाः । सहस्रवर्त्मा सामवेदः । एकविंशतिधावाह्वृच्यम् । नवधाथर्वणोवेदइतिमहाभाष्यम् ॥

वेदज्ञः । त्रि॰ वेदपारगे । वेदंजानाति । ज्ञा॰ । आतोनुपसर्गइतिकः ॥

वेदनम् । न॰ अनुभूतौ । संवेदने । विदज्ञाने । ल्युट् चेति॰ ल्युट्क्लीबत्वम् ॥ विवाहे ॥

वेदना । स्त्री॰ ज्ञाने । दुःखे । पीडायाम् ॥ विदवेदनाख्यानविवासेषुचुरादिः । ण्यासेतियुच् । ब

द्वा । विदन्त्यनेन । यच्छवन्दिविदिभ्य श्चेतिवाच्यमितियुच् ॥

वेदनास्कन्ध : । पुं॰ विषयज्ञानप्रपञ्चे । विज्ञानस्कन्धजन्ययो : सुखदु : खयो : याप्रियाप्रियानुभयविषयत्वेनसुखदु : खतदुभयरहितविशेषावस्थाचित्तस्य जायते॰ सवेदनास्कन्धइतिवाचस्पति : । सुखादिप्रत्यये। वेदनास्कन्धइत्यामरटमिरि : ।

वेदनिन्दक : । पुं॰ नास्तिके । वेदनिन्दाकरे ॥ वेदंनिन्दति । णिदिकुत्सायाम् । ण्वुल् ॥

वेदपारग : । पुं॰ मन्त्रब्राह्मणात्मकशाखाध्यायिनि ॥ त्रि॰ अवगतवेदार्थतत्त्वे॰ ज्ञानिनि॰ सन्यासिनि ॥ वेदस्यपारंगच्छति । गम्लृ॰ । अन्तात्यन्तेतिगमेर्ड : ॥

वेदभाग : । पुं॰ मन्त्रब्राह्मणयो : ॥ पूर्वोक्तदाहृतेषुवेदस्थादिषु । तेयथा । हेतुर्निर्वचनंनिन्दाप्रशंसासंशयोविधि : । परकृति : पुराकल्पोवधारणकल्पनेतिहेत्वादय : ॥

वेदमाता । स्त्री॰ गायत्र्याम् ॥ सर्वशास्त्रादिज्ञा : प्रोक्ताजनर्षवानचवेघ्या वा : । उपासतेत्वादिदेवींगायत्रींवेदमातरम् ॥ अपिच । योधीतेऽहन्यहन्येतांसावित्रींवेदमातरम् । विज्ञायार्थंब्रह्मचारीसयातिपरमांगतिमिति । दुर्गायाम् ॥

वेदमार्ग : । पुं॰ वेदबोधितेपथि ॥ यथा । कलौचैनिरभियुक्तसेतवोवर्षतीश्वरे । पाखण्डिनामसद्वादैर्वेदमार्गा : कलौयथेतिश्री॰ । अपिच । एतस्माद्वेदमार्गाद्वियदन्यदिहजायते । तत्सर्वंद्रव्यमविज्ञेयंरौद्रंगौघविवर्जितमितिव॰पु॰ ॥

वेदवती । स्त्री॰ कुशध्वजराजकन्यायाम् ॥ विवेकत्रप्रतीहार्याम् । वेदविद्याभिमानिन्यांदेवतायाम् ॥

वेदवदनम् । न॰ व्याकरणे ॥ यथा । योवेदवेदवदनंसदनंहिसम्यग्ब्राह्म्या : सवेदमपिवेदकिमन्यशास्त्रम् । यस्मादत : प्रथममेतदधीत्यधीमान्शास्त्रान्तरस्यभवतिश्रवणाधिकारीतिसिद्धान्तशिरोमणि : । योगिनोतन्त्रे प्रथमेवपाठ : ॥

वेदवादरत : । त्रि॰ वेदेयेसन्तिवादा : अर्थवादा : अक्षय्यंहवैचातुर्मास्ययाजिन : सुकृतंभवतीत्येवमादयस्तेष्वेवरते । वेदार्थसत्यत्वं नैवमेवैतदितिमिथ्याविश्वासेनसन्तुष्टे ॥

वेदवास : । पुं॰ ब्राह्मणे । वेदस्यवासोयस्मिन् ।

वेदवित् । पुं॰ कर्मब्रह्माख्यवेदार्थविदि । कर्मकाण्डोपासनाकाण्डज्ञानकाण्डात्मकसर्ववेदार्थविदि ॥ वेदज्ञे ॥ ऋग्वेदादयोवेदाश्चत्वारस्तान्वेत्तीतिवेदविद्वदति ॥ वेदंवेदार्थं

स्त्रवेत्ति•विद्यते•विन्ते वा । विद ज्ञाने•विद्सत्तायाम्•विद्विचार णे वा । सतृस्थिति•क्विप् ॥
वेदव्यासः । पुं• शुकदेवस्यपितरि । माठरे । द्वैपायने । पाराशर्य्ये । बादरायणे ॥ वेदंव्यस्यति । असु• । अण् ॥ यथा । वेदमेकंचतुर्भेदंकृ त्वाशाखाशतैर्विभुः । करोतिबहु लंभूयोवेदव्याससरूपधृक् । द्वापरे तुयुगेविष्णुर्व्यासरूपीमहामुने । वे दमेकंसबहुधाकुरुतेजगतोहितः ॥ यथासुकुरुतेतन्वावेदमेकंपृथक्प्रभुः । वेदव्यासाभिधानातुसासामूर्त्ति र्मधुद्विषइतिविष्णुपुराणम् ॥
वेदः । न• धने ॥ विद्यते•लभ्यते । विद्लृलाभे । असुन् ॥
वेदसारः । पुं• श्रीदेवीभागवते ॥
वेदसन्न्यासी । पुं• वेदविहिताग्निहो त्रादिकर्मत्यागिनि ॥
वेदस्वामी । पुं• आगमपे । आगमा धिपतौ ॥ यथाश्चकालिदासः । मु कुशमोङ्कारकरान्जपुत्राञ्चेयः क्रमे णागमपाः प्रवीणैः । निजागमे शाहनिमेखलायावश्यसदाचारकरो निरुक्ताः ॥ इति ॥ तदाचारकरः •तेषांविप्रादीनामाचारकृत्•उक्त म् ॥
वेदाग्रणी । स्त्री• सरस्वत्याम् ॥
वेदाङ्गम् । न० शिक्षाकल्पोव्याकरणं निरुक्तंछन्दोज्योतिषमितिश्रुतिबो धितेषुषट्सु ॥ तत्राकारादिवर्णा नांस्थलकरणप्रयत्नबोधिकाशकुक्ष्य सञ्ज्ञ्नीयानांकण्ठइत्यादिकाशिक्षा । यागक्रियाणामुपदेशः कल्पः । साधुशब्दान्वाख्यानंव्याकरणम् । वर्णागमोवर्णविपर्ययश्चेत्यादिनानि रुपेणोक्तंनिरुक्तम् । श्रुतिच्छन्दसां प्रत्यायकंछन्दः । यज्ञादिगणन शास्त्रंज्योतिषमितिसङ्क्षेपः ॥
वेदस्वपङ्गम् ॥ पुं• परमेश्वरे ॥ वेदाअङ्गभूतायस्य ॥
वेदादि । न• प्रणवे ॥
वेदानुवचनम् । न• नित्यस्वाध्यायल क्षणेमन्त्रब्राह्मणाध्ययने ॥ वेदस्यअ नुवचनम् ॥ वेदोऽनूच्यतेगुरूच्चार णानन्तरंपठ्यतेइति ॥ अथवा । वे दस्यअनुपश्चात्गुरूपासनाऽनन्तरम् वचनम्•पठनम् ॥
वेदान्तः । पुं• उपनिषदि ॥ तदुपका रिशारीरकसूत्रादौ ॥ तथाचवेदोना मन्तोऽवसानभागोवेदान्तइतिव्युत्प त्तियोगाभ्यांवेदान्तशब्दोवेदवि भागेश्वरभेदेषूपनिषत्सु•शारीरका दौतूपचरितइति ॥ वेदानामन्तो निर्णयो । प्रस्थानत्रयात्मकेशास्त्रे ॥ आसुप्तेरामृतेःकालंनयेद्वेदान्त चिन्तयेतिसत्यासिबोयावच्चोवाग्नि होत्रप्रयोगवच्चित्तत्वेनविहितंश्रवण

दि । गृहस्थादीनामुषसत्रादिवा भ्यम् । तदुक्तम् । दिनेदिनेतुवेदा न्तश्रवणाद्भक्तिसंयुतात् । गुरुशुश्रूषयालब्धात्कृच्छ्राऽशीतिफलंलभे- दिति ॥ वेदेषुतिस्रिषुतेलवदन्तोऽवस्थितोय : । तेलमर्द्दे देवेदान्त:उप्रतिष्ठितइतिश्रवणात् ॥

वेदान्तकृत् । पुं॰ वेदान्तार्थसम्प्रदायप्रवर्त्तकेवेदव्यासादौ ॥

वेदान्तग : । त्रि॰ ब्रह्मज्ञे ॥ वेदान्तानामुपनिषदामर्थंब्रह्मगच्छति । गम्लृ॰ । डप्रत्यय : ॥

वेदान्तसार : । पुं॰ वेदान्तस्यमथितार्थे ॥ वेदान्तस्यसार : ॥

वेदान्ती । पुं॰ ब्रह्मतत्त्वज्ञे ॥ येस्वेतांविद्यात्मिकांचेतीत्वसमुपेत्यकेवलतदनुकूलयुक्त्यनुसन्धानकौश- लिनेवतुष्यन्ति॰तेतुनैयायिकादिसदृशानिन्दिताएव । तदुक्तम् । वेदान्तावहुतर्ककर्कशमतियस्ता: परंमायया॰ भाट्टा : कर्मकलाकुलाहतधियोद्वैतिवैशेषिका : । अन्ये भेदरताविवादकलहास्तेतत्त्वतोवञ्चितास्तस्मात्सिद्धमतस्वभावकमयंधीर : परंसंश्रयेत् । इति ॥ वेदान्ताउपनिषद : प्रमाणमस्यास्तीति : ॥

वेदाभ्यास : । पुं॰ वेदानुशीलने ॥ सपञ्चविधोयथाह्दक्ष : । द्वितीयेच तथाभागेवेदाभ्यासोविधीयते । वेदाभ्यासोहिविप्राणांपरमंतपउच्यते । ब्रह्मयज्ञ:परंज्ञेय : षडङ्गसहितस्रय : । वेदस्वीकरणंपूर्वं विचारोऽभ्यसनंजप : ॥ तद्दानञ्चैवशिष्येभ्योवेदाभ्यासोहिपञ्चधा । मनुश्चशिखितो नवेदमनधीत्यान्यांविद्यामधीयीतान्यत्रवेदाङ्गस्मृतिभ्य: ।

वेदार : । पु॰ कृकलासे ॥ इ॰ त्रि॰ ष : ।

वेदारण्यम् । न॰ सुन्दर्यादेव्यासमधिष्ठितेपुण्यस्थाने ॥

वेदि : । पुं॰ पण्डिते । बुधे ॥ वेत्ति । विद॰ । सर्पिधिरुहिभ्यइति विदीतिइन् । न॰ अम्बष्ठायाम् ॥ स्त्री॰ परिष्कृतायांभूमौ ॥ परिष्कृता॰ यज्ञार्थं॰ पशुबन्धनाय॰ यज्ञपात्रासादनायचाकृतसंस्कारभूमिर्वेदिरुच्यते ॥ विद्यते॰ शोधनेनलभ्यते॰ विचार्यते॰ प्राप्यतेवा । पूर्ववद्देरिन् ॥ यद्वा । वेदयति॰ वेद्यतेवा । विदनिवासादौ॰ चुरादि : । चचड् : ॥ अङ्गुलिमुद्रायाम् ॥

वेदिका । स्त्री॰ चतुरस्रायांकर्मार्थवेद्याम् ॥ वितर्द्याम् , प्राङ्गणादियुक्ते॰ उपवेशनस्थाने ॥ स्वार्थेक : ॥

वेदिजा । स्त्री॰ द्रौपद्याम् , इतिहे

मचन्द्रः ॥
वेदित :। त्रि० ज्ञापिते ॥
वेदितव्य :। त्रि० विदुरे । ज्ञातरि ॥ इ० ह० चन्द्रः ॥
वेदी । पुं० पण्डिते ॥
वेदी । स्त्री० सरस्वत्याम् ॥ वेदिश ब्दार्थे ॥
वेदीतीर्थम् । न० तीर्थविशेषे ॥
वेदीश :। पुं० द्रुहिणे । विधौ । ब्रह्मणि ॥
वेदोदय :। पुं० रवौ । सूर्ये ॥
वेदोदित :। त्रि० वेदोक्ते ॥
वेदोपकरणम् । न० शिक्षादिवेदाङ्गे ॥ वेदस्यउपकरणम् ॥
वेद्धव्य :। त्रि० ताडयितव्ये ॥
वेद्य :। त्रि० वेदितव्यवस्तुनि । ज्ञेये । संविद्विषयभूते ॥ वेदितुंयोग्य :। विदेर्ज्ञानार्थात्कर्मणिण्यत् । सचार्हकृत्यतचश्चेत्यर्हार्थे । इत्याहभगवान्शङ्करोभाष्ये । निःश्रेयसार्थिभिर्वेदनार्हत्वाद्वेद्यइति ।
वेध :। पुं० व्यधे । वेधने ॥ वेधनम् । विधविधाने । घञ् ॥ चेपणे ॥ गभीरतायाम् । गहरा० इति भाषाप्र० ॥
वेधक :। पुं० अम्लवेतसे ॥ कर्पूरे । न० धान्याके ॥ त्रि० वेधकर्त्तरि ॥
वेधनम् । न० वेधे । वींधना० इ० भा० ॥ विध० ल्युट् ॥ वेधसाधने ॥ विध्यतेऽनेन । करणेति ल्युट् ॥
वेधनिका । स्त्री० मणिमङ्खादिवेधनोपकरणे । आस्फोटन्याम् । भौरी० वर्मी० इ० भा० ॥ विध्यतेऽनया । विधविधाने । ल्युट् । स्वार्थेक :॥
वेधमुख्य :। पुं० कर्चूरे ॥ वेधमुख्यः ॥
वेधमुख्यक :। पुं० कर्चूरके ॥ द्राविडके । काल्यके ॥ स्वार्थेकन् ॥
वेधमुख्या । स्त्री० कस्तूर्याम् वेधमुख्या ॥
वेधा : । पुं० परमेष्ठिनि । धातरि ॥ बुधे ॥ विष्णौ । हृषीकेशे ॥ रवौ ॥ प्रजापतौ ॥ विदधाति । डुधाञ् । विधाञोवेधचेतिविधादेशोऽसिप्रत्ययश्च ॥ विधति । विधविधाने । असुन्वा ॥
वेधसम् । न० ब्रह्मतीर्थे । अङ्गुष्ठमूले । इ० श० चं० का० ॥
वेधित :। छिद्रिते । विद्धे । विंधा० बींधा० इ० भा० ॥ वेध्यतेस्म । विध० णिच्क्तोऽनेकार्थ :
वेधी । पुं० अम्लवेतसे ॥ त्रि० वेधकर्त्तरि ॥ वेधविशिष्टे ॥
वेधिनी । स्त्री० रक्तपायाम् ॥ मेथिकायाम् ॥
वेध्यम् । न० लक्ष्ये ॥ त्रि० वेधनीये ॥
वेन :। पुं० प्रजापतौ ॥ अजति ।

अज० । धाप्यस्यज्यतिभ्योन : । अजीर्णौ ॥

वेन्ना । स्त्री० नद्याम् ॥ वनति । वन शब्दे सम्भक्तौवा । वनेरिच्चोपधाया इति० न : । लघूपधगुण : ॥

वेपथु : । पुं० कम्पे ॥ वेपनम् । टुवेपृकम्पने । ट्वितोऽथुच् ॥

वेपनम् । न० कम्पने ॥ टुवेपृ० । ल्युट् ॥

वेप : । न० अनवद्ये ॥

वेपमान : । त्रि० भयेनकम्पमाने ॥

वेम : । पुं० वायदण्डे ॥ यथा । वायदण्ड : पुंसिवेमावेमोनावेमनद्वयोरितिश०र०इ०ली० ॥

वेमा । पुं० न०वायदण्डे । तन्तुवायदण्डोवेयु०इ०गो०भा ॥ वयति० अनेन । वञ् ० । वेञ : सर्वत्रेति०इमनिच् । अर्हचादि : । सामनी०वेमनो०इतिद्विचप्रयोगात् ॥

वेमन : । त्रि० वेमवति ॥ वेमाऽस्यास्ति । पामादित्त्वात्०न : ॥

वेरम् । न० कलेवरे । शरीरे ॥ वार्त्ताकौ । वृन्ताके ॥ कुङ्कुमे । घुसृणे ॥

वेरकम् । न० कर्पूरे ॥

वेरट : । पुं० नीचे ॥ न०बरटीफले ॥ त्रि०मिश्रीकृते ॥

वेलम् । न० आरामे । उपवने । कृत्रिमवने ॥

वेला । स्त्री० काले । समये ॥ मर्यादायाम् । सीमायाम् ॥ होरायाम् ॥ यथा । चतुर्विंशतिवेलाभिरहोरात्रं प्रचक्षते । पश्चिमादर्द्धरात्राद्धिहोरायांविद्यतेक्रमइ० वह्निपुराणम् अब्धे : कूले ॥ अब्धेर्विकारे । अब्धाम्बुविकृतौ ॥ अक्लिष्टमरणे ॥ रागे ॥ ईश्वरस्यभोजने ॥ बुधस्यभार्यायाम् ॥ वाचि ॥ वेलति । वेल्ट गतौ । पचाद्यच् ॥ वेल्यते० अनया वा । वेलकालोपदेशे । गुरोश्चहल इत्य : । टाप् ॥

वेलाकूलम् । न० तामलिप्तदेशे ॥

वेलायाम् । अ० कालपरिमाणे ॥

वेल्लम् । न० पुं०विडङ्गे ॥ वेल्लति । वेल्लचलने । पचाद्यच् ॥ अभ्यनुज्ञाने ॥

वेल्लजम् । न० मरिचे ॥ वेलनम् । अच्० । घञ ॥ वेल्लंजायते । जनो० । अन्तर्भावितण्यर्थ : । अन्येभ्योपीतिड : ॥

वेल्लनम् । न० भूमावश्वस्यलुण्ठने । लुठने । अङ्गपरिवर्त्तने ॥ वलनइ० प्र०रोटिकानिर्माणार्थकाष्ठे ॥

वेल्लनी । स्त्री० मालादूर्वायाम् ॥

वेल्लन्तर : । पुं० सजलदेशप्रसिद्धवृक्षविशेषे । वीरतरौ ॥ तथा । वेल्लन्तरोजगतिवीरतरु : प्रसिद्ध :श्वेतासितारुणविलोहितनीलपुष्प : ।

श्चात्यातितुल्यकुसुम : शमिसूक्ष्म पच : स्तोत्कराटकोचअलदेशजएव स्तच :॥ बेल्लन्तरीरसेपाकीतिक्तस्त्याकफापह : । मूत्राघातास्मजिदृष्याद्वीयेनिमूत्रानिलार्त्तिजित् ॥

वेल्लहल : । पुं॰ केलिनागरे ॥

वेल्लि : । स्त्री॰ लतायाम् ॥

वेल्लिकाख्या । स्त्री॰ क्षुपविशेषे । मरुमालायाम् । बिल्वपत्र्याम् ॥

वेल्लितम् । न॰ चेष्टिते ॥ गमने ॥ त्रि॰कुटिले ॥ विधते । कम्पिते ॥ वेल्लतिस्म । वेल्ल॰ । गत्यर्थेतिक्त : ॥

वेश : । पुं॰ वेश्यागृहे ॥ गृहमात्रे ॥ नेपथ्ये । अलङ्कारादिकृतशोभायाम् ॥ विशन्त्यच । विशप्रवेशने । हलश्चेतिघञ् ॥ विशति॰वेशनम्॰ विश्यतेवा । विश॰ । पदरुजविशस्पृशोघञ्॰भज्वा । पण्यस्त्रिया : भृतौ । प्रवेशे ॥

वेशक : । पुं॰ गृहे ॥ वेशएव । स्वार्थेक : ॥

वेशजीवी । त्रि॰ वेशवति ॥

वेशदान : । पुं॰ सूर्य्यशोभायाम् ॥

वेशधारी । पुं॰ छलतपस्विनि ॥ त्रि॰ वेशधारके ॥

वेशनम् । न॰ चणकचूर्णे । बेसण॰ इ॰भा॰प्र॰ ॥ यथा । टोलयस्चणकानान्तुनिस्तुषायन्त्रपेषिता : । तच्चूर्णंबेशनंप्रोक्तंपाकशास्त्रविशारदै: ॥

वेशनमोदक : । पुं॰ बुंदियाकालाडू॰इतिख्यातेखाद्यप्रभेदे ॥ यथा । मुद्गामोदकवत्कार्य्याबेशनस्यचमोदका : । बेसनाख्यच : मोता : किञ्चिच्छीतकरास्तथा । विष्टम्भिनोज्वरघ्नाश्चपित्तरक्तकफापहा : ॥

वेशनवटिका स्त्री॰ पकौरी॰इ॰प्र॰ खाद्यद्रव्ये ॥ वटिकाबेशनस्याक्तघृतायांनिमज्जिता । रुच्याविष्टम्भजननीबल्यापुष्टिकरीस्मृता ॥

वेशन्त : । पुं॰ पल्वले । अल्पसरसि ॥ विशन्त्यत्रभेकादय : । विश॰ । तृविशिभ्यांझच् ॥ अग्नौ ॥

वेशर : । पुं॰ अश्वतरे ॥

वेशवार : । पुं॰ वेगर॰इ॰भा॰प्र॰मांसादिसाधकद्रव्ये ॥ यथा । द्रव्याणिवेशवारस्तुनागवल्लीदलानिहि । तंडुलाश्चलवङ्गानिमरिचानिसमासत : ॥

वेशि : । पुं॰ जन्मकालेसूर्य्याक्रान्तराशिद्वितीयेराशौ ॥ यथा । सूर्य्याद्वितीयमृक्षंवेशिस्थानंप्रकीर्त्तितंयवनैरिति ॥

वेशीजाता । स्त्री॰ पुत्रदात्रीलतायाम् ॥

वेश्मकलिङ्ग : । पुं॰ चटके ॥

वेश्मकूल : । पुं॰ चचेण्डायाम् ॥

वेश्म । न॰ गृहे । सद्मनि ॥ विशन्त्यत्र । विश॰ । मनिन् ॥

वेश्मनकुल : । पुं॰ गन्धमूषिके ॥

वेश्मभू : । स्त्री॰ गृहरचनावच्छिन्नभूमौ । वास्तुनि ॥ वेश्मनोभू : ॥

वेश्यम् । न॰ वेश्यालये ॥ वेशेभव : । दिगादित्वाद्यत् ॥

वेश्या । स्त्री॰ वारस्त्रियाम् । गणिकायाम् । रूपाजीवायाम् ॥ वेशेनपण्येनसम्पद्यते । कर्मवेशाद्यत् ॥ वेशेवेश्यागृहेभवावा । दिगादित्वाद्यत् ॥ वेश : प्रवेशोस्त्यस्यावा । अन्येभ्योपीतियत् ॥ पाठायाम् ॥

वेश्यागण : । पुं॰ वेश्यावारे । वेश्यासमूहे ॥

वेश्याचार्य्य : । पुं॰ पीठमर्द्दे ॥

वेश्याजनसमाश्रय : । पुं॰ । गणिकागृहे । वेशे ॥ वेश्याजनस्यसमाश्रयोवासस्थानम् ॥

वेश्यालय : । पुं॰ वेशे ॥

वेष : । पुं॰ वेशे । प्रसाधने । अलङ्काररचनादिकृतशोभायाम् । विवेष्टि । विष्लृव्याप्तौ । अच् ॥

वेषण : । पुं॰ कासमर्द्दे । पत्रोपस्करे ॥

वेषणा । स्त्री॰ वितुन्नके । धन्याके ॥

वेष्ट : । पुं॰ वेष्टने ॥ निर्यासे । श्रीवेष्टे । सरलरसे । वेष्टते । वेष्टवेष्टने । अच् ॥

वेष्टक : । पुं॰ कुष्माण्डे । पुष्पफले ॥ प्राचीरे । वृतौ ॥ न॰ उष्णीषे ॥ निर्यासे ॥ श्रीवेष्टे ॥ त्रि॰ वेष्टनकारके संवेष्टके ॥

वेष्टनम् । न॰ कर्णशष्कुल्याम् ॥ उष्णीषे ॥ मुकुटे ॥ वृतौ । गुग्गुलौ । व्यावर्त्तने । वेठन॰ लपेटन॰ इ॰ भा॰ प्र॰ ॥

वेष्टनक : । पुं॰ रतिबन्धविशेषे ॥ यथा । ऊर्द्ध्वगंपादमेकन्तुभुजान्तर्वेष्टयेद्यदि । कान्तकण्ठाश्रितांनारींबन्धोवेष्टनक : स्मृत : ॥

वेष्टनवेष्टक : । पुं॰ रतिबन्धविशेषे ॥ यथा । ऊरूपादद्वयंनार्याभुजाभ्यांवेष्टयेद्यदि । कराभ्यांकण्ठमालिङ्ग्यबन्धोवेष्टनवेष्टक : ॥

वेष्टनिका । स्त्री॰ वेढमिकायाम् ॥

वेष्टवंश : । पुं॰ कण्टकिले ॥

वेष्टसार : । पुं॰ श्रीवेष्टे ॥

वेष्टित : । त्रि॰ वलयिते । संवीते । रुद्धे । आवृते ॥ न॰ लासके ॥ स्त्रीणांकरणान्तरे ॥ वेष्ट्यतेस्म । विष्टवेष्टने । क्त : ॥

वेष्प : । पुं॰ जले । नीरे । पानीये ॥ वेवेष्टि । विष्लृ॰ । पानीविषिभ्य : प : । इतिप : ॥

वेष्य : । पुं॰ नटे । विविधकृत्रिमाकारेणसम्पद्यते ॥

वेष्या । स्त्री॰ गणिकायाम् ॥ वेवेष्टि । विष्लृव्याप्तौ । अघ्न्यादित्वाद्यत्

वेसनम् । न॰ चणकादालिचूर्णे । वेसने ॥

वेसर : । पुं॰ सङ्कराश्वे । अश्वतरे ॥

वेसवारः। पुं० व्यञ्जनादौसंस्कारार्थं दीयमानेहिङ्ग्वादौ। उपस्करे॥ द्रव्याणिवेसवारस्तनागवल्लीदलानि च। तण्डुलाश्चलवङ्गाश्चमरिचानि समासतः॥ सर्वव्यञ्जनपरिभाषाया न्तु। हिङ्गुर्द्दमरिचंजीरंहरिद्राधा न्यकंतथा। आमेषहिगुणंसर्ववेसवार मिमंजगुः। लोकेनवारिणासर्वं ष्टितंवस्त्रगालितम्। मात्रयाव्यञ्जने देयंक्वासमर्दं चततस्मृतम्॥ वेसन म्। विसप्रेरणे। घञ्। वेसंप्रेरणं वारयति० वृणोतिवा। वृञ्०। कर्मण्यण्॥

वेहत्। स्त्री० गर्भोपघातिन्यामगवि॥ विहन्तिगर्भम्। संयतृपहेत्वदित्य तिप्रत्ययेनसाधुः॥

वेहारः। पुं० स्वनामाख्यातेदेशविशे षे॥ यथा। वेहारेचैवश्रीहट्टे कोश लेग्रवकर्णिके। अष्टादशभुजाकार्या माहेन्द्रे चहिमालये० इतिमत्स्यसू क्ते ५० पटलः॥ महिषासुरमर्द्दि नीतिशेषः॥

वै। अ० हेतौ॥ पादपूरणे॥ सम्बो धने॥ विशेषे॥ स्मरणार्थे॥ अनुन ये॥ प्रसिद्धौ॥ निश्चये॥ वाति। वागतिगन्धनयोः। ०औणादिकोवा ।डैः॥

वैंशतिकः। त्रि० विंशत्याक्रीते॥

वैकथम्। न० तिर्यगवर्णालस्त्रिमा ल्ये॥

वैकक्षकम्। न० उरस्युपवीतवत्तिर्य क्क्षिप्तमाल्ये॥ विशिष्टः कक्षो स्मात्० विकक्षमुरस्तत्रभवम्। तत्र भवइत्यण्। स्वार्थेकन्॥

वैकङ्कतः। पुं० विकङ्कते। विकङ्क तस्यावयवोविकारोवा। पलाशादि त्वादञ्॥

वैकटिकः। पुं० मणिकारे॥

वैकर्णः। पुं० वात्स्ये॥ विकर्णस्या पत्यम्। विकर्णशुङ्गच्छगलाद्वत्सभ रद्वाजात्रिष्विल्यण्॥

वैकर्णेयः। पुं० काश्यपे॥ विकर्ण स्यापत्यम्। विकर्णकुषीतकात्का श्यपइतिढक्॥

वैकल्पिकः। त्रि० विकल्पेनभवे॥

वैकल्यम्। न० विकलतायाम्॥ अ विवेके॥ विकलस्यभावः। ष्यञ्॥

वैकारिकः। पुं० देवानाङ्कारणेसा त्त्विकाहङ्कारे॥ देवतावर्गे॥ बन्ध विशेषे॥ यथवस्तेषां० येविकारा नेवभूतेन्द्रियाहङ्कारबुद्धिरूपान०पु रुषबुद्ध्यापासते। तान्प्रतीदमुच्य ते० दशमन्वन्तराणीहतिष्ठन्तीन्द्रिय चिन्तकाः। भौतिकास्तुशतंपूर्णं स हस्रन्त्वाभिमानिकाः॥ बौद्धादशस हस्राणितिष्ठन्तिविगतज्वराः। पुरु षंनिर्गुणंप्राप्यकालसङ्ख्यानिवर्त्त ते॥ तेखल्वमीविदेहायेषांवैकृति

कोशवश्च ॥
वैकुण्ठः । पुं० विष्णौ । कृष्णे । विष्टरश्रवसि ॥ विकुण्ठायाअपत्यम् । शिवाद्यण् । यथोक्तं विष्णुपुराणे । चाक्षुषस्यान्तरेदेवोवैकुण्ठः पुरुषोत्तमः । विकुण्ठायामसौजज्ञे वैकुण्ठैर्दैवतैः सहेति ॥ अपिच । कुण्ठंजडस्वभिख्यैर्घं विगिष्टश्वकरोति या । विकुण्ठांप्रकृतिंवेदाश्चत्वारश्च बदन्तिताम् ॥ गुणाश्रयेणभगवान् तस्यांजातः स्वरूष्टये । परिपूर्णतमंतेनवैकुण्ठञ्चविदुर्बुधाः ॥ विगताकुण्ठानाशोयस्मात्सविकुण्ठः०विकुण्ठंस्थानंज्ञानं वाअस्तिस्वरूपत्वेन आश्रयत्वेनवाऽस्य । ज्योत्स्नादित्वादण् ॥ यद्वा । विविधाकुण्ठामायाविद्यतेऽस्य ॥ अण् ॥ यद्वा । विकुण्ठानाशोनानामयं नित्यस्थानामा । तस्येदमिति० शैषटतिश्च । ०अण् ॥ विगताकुण्ठाऽस्मात्प्रज्ञाद्यण् ॥ एवं तल्लोपाभिधेविष्णोर्धामविशेषे । तद्वर्णनंयथा । उपरिष्टात्स्थितिरष्टौकोटयः सत्यमीरितम् । सत्यादुपरिवैकुण्ठोयोजनानांप्रमाणतः ॥ भूर्लोकात्परिसङ्ख्यातः कोटिरष्टादशप्रमैः । यत्रास्ते श्रीपतिः साक्षात्सर्वेषामभयप्रदः ॥ वैकुण्ठादुत्तरेशैवोलोकः षोडशकोटयः । तिर्यगेवमहाराजकैला

साख्यस्तुपर्वतः ॥ पार्वत्यासहितः शम्भुर्यत्रास्तेस्वगणैर्वृतः । इति पाद्मेस्वर्गखण्डे ६ अध्यायः ॥ अपिच । अमृतंशाश्वतंनित्यमनन्तंपरमंपदम् । हिरण्मयंमोक्षप्रदंब्रह्मानन्दसुखाश्रयम् ॥ एवमादिगुणोपेतंतद्विष्णोः परमंपदम् । यत्स्थानमभिवक्तव्ये तद्धामपरमंहरेः ॥ नहिवर्णयितुंशक्यंकल्पकोटिशतैरपि । अपिद्रष्टुमशक्यन्तद्ब्रह्मरुद्रादिदैवतैः ॥ ज्ञानेनशास्त्रमार्गेण दृश्यतेयोगिपुङ्गवैः । तत्स्थानमुपभोक्तव्यमव्यक्तब्रह्मसेविनाम् ॥ श्रीमदङ्घ्रिभक्तिसेवैकरसभोगविवर्जिताः । महात्मानोमहाभागाभगवत्पदसेवकाः ॥ तद्विष्णोः परमंधामयान्तिब्रह्मसुखप्रदम् । नानाजनपदाकीर्णवैकुण्ठंतद्धरेः पदम् ॥ प्राकारैश्चविमानैश्चसौधैरत्नमयैर्युतम् । तन्मध्येनगरीदिव्यासयोध्येतिप्रकीर्त्तिता ॥ चतुर्द्वारसमायुक्ताहेमगोपुरसंयुता । चण्डादिद्वारपालैस्तुकुमुदाद्यैः सुरक्षिता ॥ चण्डप्रचण्डौप्राग्द्वारे याम्येभद्रसुभद्रकौ । वारुण्यांजयविजयौसौम्येधातृविधातरौ ॥ कुमुदः कुमुदाक्षश्चपुण्डरीकोऽथवामनः । शङ्कुकर्णः सर्वनिद्रः सुमुखः सुप्रतिष्ठितः तस्मिन्नृपस्यवि

निर्मुक्ताः प्राप्यंतेसुसुखंपदम् । यं प्राप्यननिवर्त्तन्तेतस्मान्मोक्षउदाहृतः ॥ मोक्षं परं पदं लिङ्गममृतंविष्णुमन्दिरम् । अक्षरंपरमंधामवैकुण्ठंशाश्वतंपरम् ॥ नित्यञ्चपरमव्योमसर्वोत्कृष्टंसनातनम् । पर्यायवाचकान्यस्यपरंधाम्नोऽच्युतस्य हि ॥ इतिपाद्मउत्तरखण्डे २८ ऽध्यायः । विहतस्यैतन्नामसाङ्ख्यभाष्यकारैः विविधाकुण्ठागतैः प्रतिहतिर्विकुण्ठा । तस्याः विकुण्ठायाः कर्त्ताविकुण्ठः । तस्येदमित्यण् । जगदारम्भे विश्लिष्टानि भूतानिपरस्परंसंश्लेषयन् । तेषांगतिप्रतिरुधाति । मयासंश्लेषिताभूमिरद्भिर्व्योमचवायुना । वायुस्तेजसासार्द्धंवैकुण्ठत्वं ततोममेतिशान्तिपर्व्वणीति ॥ भूमिरद्भिः सार्द्धंमयासंश्लेषितापरस्पराधारेणस्थापिता । पृथिव्यादीनि भूतानिउत्तरैर्दशगुणैर्विकुण्ठयामीतिविकुण्ठः विकुण्ठएववैकुण्ठः । इति । विकुण्ठायाः कर्त्तेतिवैतिनाथः ॥ शक्रे । वासवे । सिताजके ॥

वैकृतः । त्रि॰ सात्त्विके । न॰ वैकृत्ये । बीभत्सरसे ॥ विकृतमेव । प्रज्ञादाण् ॥ त्रि॰ बीभत्सरसालम्बनेमांसशोणितादौ । दुर्निमित्ते ॥

वैकृताहङ्कारः । पुं॰ सात्त्विकाभिमाने ॥

वैकृत्यम् । न॰ बीभत्सरसे ॥ त्रि॰ तदालम्बने

वैक्रान्तम् । न॰ मणिविशेषे । तत्पर्यायगुणौयथा । वैक्रान्तस्तुवविक्रान्तंनीचवज्रकुवज्रकम् । गोनासः क्षुद्रकुलिशंगोनाश्वक्षगोनसः ॥ [illegible]मैविषवैक्रान्तंरसवीर्यादिकेसमम् । [illegible]कुष्ठविषघ्नञ्चपुष्टिदंसुरसायनम् ॥ वैक्रान्तंवज्रसादृश्यंबलवृद्धवीर्यकम् । यथाप्यभावेवज्रस्ययाह्यंवैक्रान्तमुत्तमम् ॥ बहुआकारतयेवज्ञसञ्चहरणायसर्वरोगाणाम् । तद्विक्रान्तिंधत्तेतद्वैक्रान्तंबुधैरिहकथितम् ॥

वैक्लव्यम् । न॰ वैवश्ये ॥ व्याकुलतायाम् ॥

वैखरी । स्त्री॰ बुद्ध्युत्थितकण्ठगतनादरूपवर्णे ॥ यथा । मूलाधारात्प्रथममुदितोयस्तुतारः पराख्यः पश्चात्पश्यन्त्यथहृदयगोबुद्धियुङ्मध्यमाख्यः । वक्रेवैखर्यथरुरुदिषोरस्यजन्तोः सुषुम्णाबद्धस्तस्माद्भवतिपवनप्रेरितोवर्णसङ्घः ॥ इत्यलङ्कारकौस्तुभेप्रथमः किरणः । अस्यार्थः । स्तुतारोनादोवर्णरूपः सर्वाभिरूपमूलाधारात्प्रथममुदयप्राप्तःसन्पराख्याख्यासंज्ञोवस्तथाभूतोभवति । अथानन्तरंसए

वद्दर्शयितुमतथैतुरीयनसमयेनासिकाद्वारायथाकथञ्चिद्वात । कण्ठदिविजन्मनोनासामध्यस्थितसुषुम्णामाडाबहः । तथोच्चनासाद्वारेणयथाकथञ्चिन्नादस्वरूपः प्रत्यक्षो भवतीत्यर्थः । तस्माद्वैखरीदशापन्नाब्रादात्पवनप्रेरितोवर्णसमूहोत्पत्तिः सर्वेषांप्रत्यक्षविषयीभवतीत्यर्थः । परापश्यन्तीदशापन्नस्तुयोगिनामेवप्रत्यक्षोनतुसर्वेषामित्यपिबोध्यमितितट्टीका ॥ हरिरप्याह । वैखर्यामध्यमायाश्चपश्यन्त्याश्चैतदद्भुतम् । अनेकतीर्थभेदायास्त्रय्यावाचः परंपदमिति । तत्रश्रोत्रविषयावैखरीमध्यमाहृदयदेशस्थापदप्रत्यक्षानुपपत्त्याव्यवहारकारणम् । पश्यन्तीतुलोकव्यवहारातीतायोगिनान्तुतत्रापिप्रकृतिप्रत्ययविभागावगतिरस्ति । परायान्तुनेतिमव्याद्भतुत्तम् । स्वरूपज्योतिरेवान्तः परावागनपायिनी । तस्यांदृष्टस्वरूपायामधिकारोनिवर्त्ततइत्युक्तेः । अनेकतीर्थभेदायाः नामाख्यातादिबीजाभेदाः शब्दादिरूपानेकभेदायाः । आहस्वत्वपिचत्वारिवाक्परिमितानीतिचत्वारिमन्त्रइतितद्व्याख्यातारः ॥

वैखानसः । पुं॰ तपोविशेषाश्रमे तापसविशेषे । वानप्रस्थे ॥ ब्रह्मणोनखाज्जात । येनखासेवैखानसाइतिश्रुतेः ॥ यद्वा । विखनसमुनिप्रोक्तंसूत्रमधिकृत्यतन्मार्गानुसारीवैखानसः ॥

वैगुण्यम् न॰ विगुणत्वे

वैचक्षण्यम् । न॰ विचक्षणत्वे ॥

वैचित्त्यम् । न॰ अविवेके ॥

वैचित्र्यम् । न॰ विचित्रतायाम् ॥

वैजननः । पुं॰ सूतिमासि ॥ विजायतेऽस्मिन् । अनी॰ करणे तिल्युट् । विजननएव । प्रज्ञाद्यण् ॥ यद्वा । विजननस्यगर्भमोचनस्यायम् । तस्येदमित्यण् नवमेदशमेवापिप्रबलैः सूतिमारुतैः । निस्सार्यतेबाणइवजन्तुश्छिद्रेणसस्वरः ॥

वैजपायनः । पुं॰ ऋष्यन्तरे ॥

वैजयन्तः । पुं॰ गृहे ॥ शक्रध्वजे शक्रप्रासादे ॥ वैजयन्त्यः पताकाः सन्त्यस्य अर्शआद्यच् ॥

वैजयन्तिकः । पुं॰ धृतपताके । पताकिनि ॥ वैजयन्त्यस्यास्ति । व्रीह्यादिभ्यश्चेतिठन् ॥ यद्वा । वैजयन्त्या पताकयाचरति । चरतीतिठक् ॥

वैजयन्तिका । स्त्री॰ पताकायाम् ॥ जयन्तीवृक्षे । जातीतिप्रसिद्धे ॥ अग्निमन्थे ॥ विजयन्तस्यायम् । तस्येदमित्यण् । स्वार्थेकन् ॥ यद्वा ।

वैजयन्तीशब्दादिदेवप्रतिकृता विति कम् ।
वैजयन्ती । स्त्री॰ पताकायाम् ॥ जयन्तीपादपे ॥ अग्निमन्थे ॥ विजयते । जिपभिभवे । तृभूवहीतिभच् । विजयस्तस्येयम् । तस्येदमित्यण् ॥ पञ्चवर्णमण्यां जानुपर्यन्तलम्बितायां मालायाम् ॥ साचोक्ता विष्णुपुराणे । पञ्चस्वरूपायामालावैजयन्तीगदाभृत : । साभूतहेतुसङ्घातभूतमालाचवैद्विजेति । पञ्चस्वरूपामुक्तामाणिक्यमरकतेन्द्रनीलवज्रसमानवर्णाहरेर्यावैजयन्त्याख्यामाला॰ साभूतहेतूनांपञ्चतन्मात्राणांसङ्घात : पङ्क्ति :भूतमालाचमहाभूतपङ्क्तिरित्येतिसूक्ष्मस्थूलभूतमयीत्यर्थ : ।
वैजयि : पुं॰ अर्जुनात्मजे ॥ विजयस्यापत्यम् । इञ् ॥ जिनचक्रवर्त्तिविशेषे । मघवति :
वैजयिक : । त्रि॰ विजयस्यनिमित्ते॰ विजयस्यनिमित्तं॰संयोग : उत्पातोवा । तस्यनिमित्तमितिठञ् ॥
वैजवाप : । पुं॰ गृह्यभेदे ॥
वैजिक : । पुं॰ सद्योङ्कुरे ॥ न॰शिग्रुतैले ॥ हेतौ । कारणे ॥ त्रि॰ बीजसम्बन्धे ॥ प्रतिषिद्धमैथुनसङ्ख्यादिनाचपैतृकरेतोदोषजेपापे ॥
वैज्ञानिक : । त्रि॰ प्रवीणे । निपुणे । शिक्षिते । कृतमुखे । कुशले ॥ विज्ञानजनिते ॥ विज्ञानंबुद्धि : विज्ञानेनयुक्त : । तत्रनियुक्तइतिठक् ॥ यद्वा । विज्ञानेनजयति । तेनदीव्यतिखनतिजयतिजितमितिठक् ॥
वैडाल : । त्रि॰ बिडालसम्बन्धिनि ।
वैडालव्रतम् । न॰ दुष्टाचारविशेषे ॥ यथा । यस्यधर्मध्वजोनित्यंशक्रध्वजइवोच्छ्रित : । प्रच्छन्नानिचपापानिवैडालंनामतद्व्रतम् ॥
वैडालव्रतिक : । पुं॰ छद्मतापसे । सर्वाभिसन्धिनि ॥ यथाह मनु : । धर्मध्वजीसदालुब्धश्छाद्मिकोलोकदम्भक : । वैडालव्रतिकोज्ञेयोहिंस्र: सर्वाभिसन्धक : । इति ॥ बिडालव्रतेनचरतीतिवैडालव्रतिक : । बिडालोहिप्रायेणमूषिकादिहिंसाकृचितयाध्याननिष्ठइवविनीत : सन्नवतिष्ठतद्वत्त्युपचरितोयंशब्द : ॥
वैडालव्रती । पुं॰ भण्डतापसे ॥ वैडालव्रतिन : पापा : सर्वधर्मविनाशका : । सद्य : पतन्तिपापेषुकर्मणस्तस्यतत्फलम् ।
वैणवम् । न॰ वेणुफले ॥ वेणो : फलम् । बिल्वादिभ्योणविधेर्लोपोलुक् । त्रि॰ वेणोर्विकारे॰दण्डादौ ॥ वेणोर्विकार : । पूर्ववद्ण् ॥ पुं॰ रामे । उपनयनेवैणवदण्डे ॥

वैणविकः । त्रि० वेणुवादे । वेणुर्वा ॥ वेणोर्विकारः । चारञ् । वैणवं शिल्पमस्य । शिल्पमितिठक् ॥

वैणवी । स्त्री० यष्ट्यादौ । वंशरोचनायाम् । वेणोर्विकारः । बिल्वाद्यण् । ङीप् ॥

वैणिकः । त्रि० वीणावादे । वीणा० तन्नचणयातद्वादनं शिल्पमस्य । शिल्पमितिठक् ॥

वैणुकः । पुं० वेणुवादिनि ॥ न० तोत्रे । गजप्रतोदनदण्डे । हस्तिचालनार्थे लोहमुखवंशदण्डे ॥ वेणुना निर्वृत्तम् । निर्वृत्ते ऽक्षद्यूतादिभ्य इतिठक् । इसुसुक्तान्तात्कः ॥ साम्ये ० गुडादिभ्यष्ठञ् ॥

वैण्यः । पुं० पृथुनाम्नि धराधीशे ॥ यथा । वेणस्य मथिते पाणौ सम्बभूव महामुने । वैण्यो नाम महीपालो यः पृथुः परिकीर्त्यते ॥

वैतंसिकः । त्रि० कौटिके । मांसिके । मांसविक्रेतरि ॥ वीतंसेन मृगपक्ष्यादिबन्धनोपायेन चरति । चरतीतिठक् ॥

वैतण्डिकः । त्रि० वितण्डावादिनि ॥

वैतत्यम् । न० महत्त्वे ॥ विततस्य भावः । ष्यञ् ॥

वैतथ्यम् । न० वितथस्य भावे । असत्यत्वे ॥ वैतथ्यं सर्वभावानां स्वप्न आहुर्मनीषिणः । भावे ष्यञ् ॥

वैतनिकः । त्रि० भृतके । भृतिभुजि । वेतनेन कर्म करोति ॥ वेतनेन जीवति । वेतनादिभ्यो जीवतीतिठक् ॥

वैतरणिः । स्त्री० वैतरण्याम् । इति रुद्रः ॥

वैतरणी । स्त्री० यातुमातरि । राक्षसानां जनन्याम् ॥ तीर्थविशेषे ॥ नरकनद्याम् । विण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवसावाहिन्यापि तनद्याम् ॥ यथा । नदी वैतरणी नाम दुर्गन्धा रुधिरावहा । उष्णतोया महावेगा अस्थिकेशतरङ्गिणी इति यमदग्निः ॥ विगतस्तरणिर्यत्र० तत्र भवा । तत्र भव इत्यण् ॥ विगता तरणिर्नौर्यत्र वा । प्रज्ञाद्यण् ॥ वितरणं दानेन लङ्घ्यते० इति वा । शेषवद्त्यण् । ङीप् ॥ यमद्वारे महाघोरे तप्ता वैतरणी नदी । तां सन्तर्त्तुं ददाम्येनां कृष्णां वैतरणीं तु गाम् इति वैतरणीगोदानानन्तरं प्रार्थनामन्त्रः ॥

वैतसः । पुं० अम्लवेतसे ।

वैतानम् । न० श्रौतकर्मणि ॥ गार्हपत्यकुण्डस्थानग्नीन् आहवनीयादिकुण्डेषु वितत्य क्रियत इति ।

वैतानिकः । पुं० श्रौतहोमे । अग्निहोत्रे ॥ गार्हपत्यकुण्डस्थानामग्नीनामाहवनीयदक्षिणाग्निकुण्डयोर्विहारो वितानम् । तत्र भवः । ठञ् कर्मयोगिनि ॥

वैतालिकः । पुं० खेट्टिताले ॥

वि॰ बोधकरे । मङ्गलपाठके । स्तुत्यादिना प्रातर्जागरणकारिणि ॥ विविधेन तालेन॰ शब्देन चरति । चरतीति ठक् ॥ वैतालिकास्तु कविभिः कथ्यन्ते सौख्यशायिकाः॰ इत्यन्यत्र ॥

वैतालीयम् । न॰ छन्दोभेदे ॥ षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ यथा । घुसृणेन मदेन चर्चितं तत यन्निन्दति राधिके कुचम् । मुदमातनुतेऽत्र पक्ष्मिमं तद्वैतालीयफलं हरेः ॥

वैदग्धी । स्त्री॰ भङ्ग्याम् । भ्रूभङ्गिमौलिकायाम् ॥ वैदग्ध्ये ॥ शोभायाम् ॥ विदग्धस्य भावः । ब्राह्मणादित्वात् ष्यञ् । षित्वान्ङीष् । यलोपः ॥ भर्त्तानिःश्वसितेऽप्यसूयति॰ मनोजिघ्रः सपत्नीजनः॰ श्वश्रूरिङ्गितदैवतं॰ नयनयोरीहालिहो यातरः । तद्दूरादयमञ्जलिः॰ किममुना दृग्भङ्गिभागेन ते वैदग्धीमधुरप्रबन्धरसिकव्यर्थोऽयमत्र श्रमः ॥

वैदग्ध्यम् न॰ विदग्धभावकर्मणोः । चातुर्ये ॥ ब्राह्मणादित्वात् ष्यञ् ॥

वैदर्भः । पुं॰ विदर्भदेशाधिपतौ ॥ स तु दमयन्त्याः पिता भीमसेन॰ रुक्मिणीजनकौ॰ भीष्मकश्च ॥ दन्तरोगविशेषे । यथा । घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् । भवन्ति दन्ताश्चपलाः स वैदर्भोऽभिघातजः ॥ ८ न॰ वाक्यवक्रत्वे । त्रि॰ विदर्भसम्बन्धिनि ॥

वैदर्भी । स्त्री॰ काव्यरीतिभेदे ॥ यथा माधुर्यव्यञ्जकैर्वर्णैरचना ललितात्मिका । अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥ उपनागरिकाद्यनुप्रासघटकवृत्तिभेदे ॥ लोपामुद्रायाम् । दमयन्त्याम् । रुक्मिण्याम् ॥

वैदलः । पुं॰ पिष्टके । पूपे ॥ शमीधान्ये ॥ तद्गुणा यथा । वैदला मधुरा रूक्षाः कषायाः कटुपाकिनः । वातलाः कफपित्तघ्ना बद्धमूत्रमलाहिमाः ॥ ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारकाः । मुद्गमसूरयोरनाध्मानकारित्वमन्यवैदलापेक्षया॰ न च सर्वथा॰ एतयोरपि किञ्चिदाध्मानकारित्वदर्शनात् ॥ न॰ भिक्षुकपात्रविशेषे । यथा । अलाबुं दारुपात्रञ्च मृन्मयं वैदलं तथा । एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत् ॥

वैदिकः । पुं॰ वेदज्ञब्राह्मणे । त्रि॰ श्रुत्युपनिबद्धे धर्मादौ । वेदोक्ते । यथोक्तं श्रीदेवीभागवते । यथा ।

शुक उवाच । सन्देहोऽयं वर्त्तते चित्ते न हि गच्छति मे क्वचित् । भवता कथितं यत्तच्छृणु वर्त्तते मे नराधिप ॥ वेदधर्मेषु हिंसा स्यादधर्मबहुला हि सा । कथं मुक्तिप्रदो धर्मो वेदोक्तो बत भूपते ॥ प्रत्यक्षेण त्वनाचारः सोमपानं नराधिप । पशूनां हिंसनं तद्वद्भक्षणं चामिषस्य तु ॥ सौत्रामण्यां तथा प्रोक्तः प्रत्यक्षेण सुराग्रहः । द्यूतक्रीडा तथा प्रोक्ता व्रतानि विविधानि च ॥ - व्रतानि० ब्रह्मचारिपुंश्चल्योर्मैथुनादीनि - ॥ श्रूयते स्म पुरा ह्यासीच्छशबिन्दुर्नृपोत्तमः । यज्वा धर्मपरो नित्यं वदान्यः सत्यसागरः ॥ गोप्ता च धर्मसेतूनां शास्ता चोत्पथगामिनाम् । यज्ञाश्च विहितास्तेन बहवो भूरिदक्षिणाः ॥ चर्मणां पर्वतो जातो विन्ध्याचलसमः पुनः । मेघाम्बुप्लावनाज्जाता नदी चर्मण्वती शुभा ॥ सोऽपि राजा दिवं यातः कीर्त्तिरस्याचला भुवि । एवं धर्मेषु वेदेषु न मे बुद्धिः प्रवर्त्तते ॥ - स्वर्गाद्यनित्यफलकत्वाद्वेदोक्तस्य कर्मणः - ॥ स्त्रीसङ्गेन सदा भोगसुखमाप्नोति मानवः । अलाभे दुःखमत्यन्तं जीवन्मुक्तः कथं भवेत् ॥ जनक उवाच । हिंसा यज्ञेषु प्रत्यक्षा साऽहिंसा परिकीर्त्तिता । उपाधियोगतो हिंसा नान्यथेति विनिर्णयः ॥ - अहिंसेतिच्छेदः अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य इति श्रुतेः । उपाधियोगतः इति । रागरूपोपाधिना कृता तु हिंसैव भवति - ॥ यथा चेन्धनसंयोगादग्नौ धूमः प्रवर्त्तते । तद्वियोगे तथा तस्मिन् निर्धूमत्वं विभाति वै ॥ अहिंसां च तथा विद्धि वेदोक्तां मुनिसत्तम । रागिणां साऽपि हिंसैव निःस्पृहाणां न सा मता ॥ - आर्द्रेन्धनोपाधिनाग्नेः सधूमत्वमन्यथा निर्धूमत्वम् । तथा रागाद्युपाधिना पश्वालम्भस्य हिंसात्वमन्यथाऽहिंसात्वाभाव इति - ॥ अरागेण च यत्कर्म तथाऽहङ्कारवर्जितम् । अकृतं वेदविद्वांसः प्रवदन्ति मनीषिणः ॥ गृहस्थानां तु हिंसैव या यज्ञे द्विजसत्तम । - गृहस्थानां रागिणामित्यर्थः । - । अरागेण च यत्कर्म तथाऽहङ्कारवर्जितम् । साऽहिंसैव महाभाग मुमुक्षूणां जितात्मनाम् ॥ इत्यष्टादशोऽध्यायः प्रथमस्कन्धे ॥ वेदे भवः । अध्यात्मादित्वाट्ठञ् ॥ म । वेदार्थज्ञाने ॥

वैदिकदर्शनम् । न० वैदिकानां सिद्धान्ते ॥ यथा । अन्यो विज्ञानमयतश्चानन्दमय आन्तरः । अस्तीत्येवोपलब्धव्य इति वैदिकदर्शनमिति ॥

वैदुष्यम् । न० विद्वत्तायाम् ॥ यथा । वाग्वैखरी शब्दझरी शास्त्रव्याख्यानकौशलम् । वैदुष्यं विदुषां तद्वद्भु

क्रयेभवमुक्तयेद्रूति ॥ विदुष : कर्म भावोवा । ब्राह्मणादित्वात्ष्यञ् ।
वैदूर्य्यम् । न० लमुनिया० इतिख्याते कृष्णपीतवर्णमणौ । बालवायजे । बालसूर्य्ये । केतुरत्ने ॥ तच्छायालक्षणंयथा । एकंवेणुपलाशपेशलरुचामायूरकण्ठत्विषामार्जारेक्षणपिङ्गलच्छविजुषाज्ञेयंत्रिधाच्छायया । यद्गात्रंगुरुतांदधातिनितरांस्निग्धन्तुदोषोज्झितंवैदूर्यंविशदंवदन्तिसुधिय : स्वच्छन्तच्छोभनम् ॥ तस्य कुलक्षणंयथा । निच्छायंमृच्छिलागर्भंलघुरूक्षसक्षतम् । सत्रासंपरुषंकृष्णंवैदूर्यंदूरतांनयेत् ॥ तत्परीक्षायथा । घृष्टंयदात्मनास्वच्छंस्वच्छायांनिकषाश्मनि । स्फुटंप्रदर्शयेदेतद्वैदूर्य्यंजात्यमुच्यते । विशेषो गारुड० युक्तिकल्पतरौचद्रष्टव्य : ॥ विदूरात्प्रभवति । विदूरात्ञ्य : नन्वर्थासङ्गति : ०वालवायाद्वासौ प्रभवतिविदूरेतुसंस्क्रियते । सत्यम् । बालवायस्यापिविदूरमितिसंज्ञा । यथवा । वालवायस्य० विदूरआदेश : । अतएवभाष्ये० वालवायोविदूरञ्च प्रकृत्यन्तरमेववेतिसमाश्रितम् ॥

वैदूर्य्यभूमि : । स्त्री० बालवायपर्वतस्थाने ॥ उरगेन्द्रमूर्द्धन्ययनाङ्कुरे : सहोदितमेघध्वनेर्विदूरभूमेरुड्गिन्नाङ्कुराभवतीतिप्रसिद्धि : । उरगमूर्द्धन्यरत्नसन्निधानाद्वालिपिमेघगर्जनोतिज्ञार्त्ता । केचित्तुयत्रवेरोरगरत्नं० मेघरसितञ्च० तत्रैववैदूर्यभूमिरित्याहु : ॥

वैदेह : । पुं० वणिजि ॥ निमिराजपुत्रे । जनके ॥ वैश्याद्ब्राह्मण्यामुत्पन्नेसङ्करजात्यन्तरे । त्रि० विदेहदेशजाते ॥

वैदेहक : । पुं० वाणिजके ॥ शूद्राद्वैश्यामुते ॥ विदेहेषुभव : । धूमादिभ्यश्चेतिवुञ् ॥ विदेग्धवा । दिह० । ख्वुल् । प्रज्ञाद्यण् ॥ वैनिश्चित : देहउपचयोयस्येतिवा । विदेहेषुभव : । तत्रभवइत्यण् । विदेहस्यापत्यंवा । जनपदेत्यञ् । का: स्वार्थे ॥

वैदेही । स्त्री० रोचनायाम् ॥ सीतायाम् । जानक्याम् ॥ वणिक्स्त्रियाम् । वैदेहनार्याम् ॥ पिप्पल्याम् ॥ विदेहेषुभवा । अण् । ङीप् ।

वैद्य : । पुं० भिषजि । रोगहारिणि । अगदङ्कारे । चिकित्सके ॥ सचतुर्विध : । रोगहर : १ । विषहर : २ । शल्यहर : ३ । कृत्याहर : ४ । इतिभेदात् ॥ सम्यग्यस्त्रप्रकोपस्त्रप्रसरंस्थानमेवच । दोषाणाञ्चैवयोवेदसभवेद्भिषगुत्तम : ॥ व्याधिस्तत्त्वपरिज्ञानंवेदनायाश्चनिग्रह : । एतद्वैद्यस्यवैद्यत्वंनवैद्य : प्रभुरायुष : ॥

कुचेल : कर्कशोदीन : कुग्रामीस्व यमागत : । पञ्चवैद्यानपूज्यन्ते धन्वन्तरिसमाअपि ॥ सुश्रुतंनश्रुतंयेन हारीतंयेनहारितम् । नालोकितचरकंयेनसवैद्यावैद्यनिन्दित : ॥ हेतौलिङ्गे प्रशमनेरोगाणामपुनर्भवे । ज्ञानंचतुर्विधंयस्यसराजार्होभिषक्तम : ॥ अपिच । एकंशास्त्रमधीयानोनविद्याच्छास्त्रनिश्चयम् । तस्माद्बहुश्रुत : शास्त्रंविजानीयाच्चिकित्सक : ॥ शास्त्रंगुरुमुखोद्गीर्णमादायोपास्यचासकृत् । य : कर्म कुरुतेवैद्य : सवैद्योऽन्येतुतस्करा. ॥ इतिसुश्रुत : ॥ विद्यामधीते । तदधीतेतद्वेदेत्यण् ॥ वासकवृक्षे ॥ पण्डिते ॥

वैद्यकम् । न॰ आयुर्वेदे । चिकित्साशास्त्रे ॥

वैद्यनाथ : । पुं॰ देशविशेषे ॥ शिवे । महालिङ्गविशेषे ॥ यथा । भारखण्डवैद्यनाथोवक्रेश्वरस्तथैवच । वीरभूमौसिद्धिनाथोराढेचतारकेश्वर ॥ भैरवविशेषे ॥ यथा । हार्दपीठे वैद्यनाथेवैद्यनाथस्तुभैरव : । देवताजयदुर्गाख्या॰नेपालेजानुनीमम ॥ इति ॥

वैद्यबन्धु : । पुं॰ आरग्वधवृक्षे ॥ *

वैद्यमाता । स्त्री॰ अटरूषे । वासकी ॥ वैद्यस्यमातेव ॥

वैद्यसिंही । स्त्री॰ वासकवृक्षे ॥

वैद्या । स्त्री॰ काकोल्याम् ॥

वैद्यी । स्त्री॰ वैद्यपत्न्याम् ॥

वैध : । त्रि॰ विधिबोधिते ॥

वैधहिंसा । स्त्री॰ वेदबोधितप्राणिवधे ॥ साचाहिंसैव । यथाहमनु : । यावेदविहिताहिंसानियतास्मिंश्चराचरे । अहिंसामेवतांविद्याद्वेदाद्धर्मोहिनिर्बभाविति ॥

वैधात्र : । पुं॰ सनत्कुमारे ॥ विधातुरपत्यम् । अण् ॥ त्रि॰ विधातृसम्बन्धिनि ॥ यथाहु : । कलत्रं वैधात्रं प्रतिकृतिभक्तन्नि नकवय : श्रियोदिव्या : कोयानभयति.ति : कोरपिधने : । महादेवंहित्वातवसतिसतीनामचरमेकुचाभ्यामासङ्ग : कुरवकतरोरप्यसुलभइति ॥

वैधात्री । स्त्री॰ ब्राह्म्यामोषधौ ॥

वैधृति : । पुं॰ विष्कम्भादिपुयोगे ॥ तत्रजातस्यफलंयथा । मैत्रीविहीन : कुटिल : खलश्चमूर्खोदरिद्र : परवञ्चकश्च । कुकर्मकर्त्ता परदारभर्त्ताभवेन्नरोवैधृतिलब्धजन्मा ॥

वैधेय : । त्रि॰ मूर्खे ॥ विधेयं॰विधानम् । तस्यायमधिकारी॰अविद्यमानदृष्टयस्त्वाच्छास्त्राणाम् । तस्येदमित्यण् । स्त्रियां॰वैधेयी ॥

वैध्यत : । पुं॰ यमप्रतीहारे ॥

वैनतेयः। पुं॰ खगेश्वरे। गरुडे॥ पक्षिणांमध्ये गरुडोभगवद्विभूतिः। वैनतेयश्चपक्षिणामित्युक्तेः। विनतायाअपत्यम्। स्त्रीभ्योढक्॥ अरुणे। सूरसूते॥

वैनयिकः। पुं॰ शस्त्राभ्यासरथे। योग्यरथे॥ गुणविशेषे॥ यथा। लोकधीगुरुशास्त्रेभ्योभातिवैनयिकोगुणः। यस्तुसद्यथावद्वितलोकबुद्धेर्गुरुतः शास्त्राद्वा॰समर्जितः सवैनयिकोभाति। समर्ज्जितोवैनयिकोमनोवाक्तनुचेष्टया। योमनोवाक्तनुचेष्टयाशुद्धव्यापारेणार्ज्जितः सवैनयिकोबोद्धव्यः॥ त्रि॰ विनयान्विते॥ विनयादिभ्यष्ठगितिस्वार्थेठक्॥

वैनायिकः। पुं॰ बौद्धे॥ सर्वक्षणिकत्ववादिनिपुणेवैनायिके॥

वैनाशिकः। त्रि॰ क्षणिके। परतन्त्रे। परायत्ते॥ बौद्धे। असद्वादिनि॥ पुं॰ ऊर्णनाभे॥ न॰ नाडीनक्षत्रविशेषे॥ निधनतारायाम्॥

वैनीतकः। पुं॰ न॰ परम्परावाहने॥ वोढृपरम्परया॰ यद्वाह्यं॰ वहवोवृषानरावावहन्ति॰ शकटशिबिकादि यथा॰ तद्वैनीतकम्। विनीतकानामिदम्। तस्येदमित्यण्॥ यद्वा। विनीयतेस्म। क्तः। संज्ञायांकन्॥

वैपरीत्यम्। न॰ व्यत्यासे। विपर्यासे। विपर्यये। व्यत्यये॥ द्व॰ द्वि॰ न्द्रः॥ विपरीतस्य। भावः। ष्यञ्॥

वैपरीत्यलज्जालुः। पुं॰ स्त्री॰ स्वल्पक्षुपवृत्तफलायांलज्जालौ॥ यथा। लज्जालुर्वैपरीत्योन्यास्वल्पक्षुपवृत्तफला। वैपरीत्याचलज्जालुश्चाभिधानेप्रयोजयेत्। लज्जालुर्वैपरीत्याख्याः कटुरुष्णः कफापनुत्। रसेनियामकश्चैवनानाविज्ञानकारकः॥ द्र॰ रा॰ नि॰ वट॰ः॥

वैवधिकः। त्रि॰ वार्त्तावहे। कांवडिया॰ इ॰ भा॰ प्र॰॥ विवधेन॰ वीवधेनवा॰ हरति। विभाषाविवधादिति पर्णे ठक्। एकदेशिक्तत्वाऽनन्यत्वात्॰ वीवधादपिठक्॥

वैबोधिकः। पुं॰ वैतालिके। विबोधः शीलमस्य। शीलमितिठक्॥

वैभवः। पुं॰ विभवस्वरूपे॥ न॰ ऐश्वर्य्ये॥

वैभाजित्रम्। न॰ विभाजयितुर्धर्म्ये॥ तस्यधर्म्यमित्यधिकारेविभाजयितुर्णिलोपश्चाञ्वक्तव्यइत्यञ्णिलोपश्च॥

वैभ्राजम्। न॰ सुराणामुद्यानविशेषे॥ विपुलाख्यस्याद्रेर्मूर्ध्नि॰ वैभ्राजाख्यंनामवनमस्ति। यथा। वैभ्राजं वैपुलेमूर्ध्निसितोदश्चक्रोदोत्तमः। देवैर्निषेव्यतेकामः कामकैरंशुमत्प्रभैः॥

वैमात्र : । पुं॰ विमातृजे ॥ विमातु रपत्यम् । अण् ॥

वैमात्री । स्त्री॰ विमातुः कन्यायाम् ॥

वैमात्रेय : । पुं॰ वैमात्रे ॥ विमातुरपत्यम् । शुभ्रादिभ्यश्चेति ढक् ॰ स्त्रीभ्यो ढगित्यत्र॰ स्त्रीप्रत्ययान्तस्यग्रहणात् ॥

वैमात्रेयी । स्त्री॰ विमातु कन्यायाम् ॥

वैमानिक : । त्रि॰ विमानयायिनि देवादौ ॥ विमानेनचरतीत्यर्थे ठक् ॥

वैमेय : । पुं॰ विनिमये ॥

वैम्बकि : । पुं॰ विम्वात्मजे । विम्वस्यात्यन्तस्यापत्यम् । व्यासवरुडेत्यादिनेञ् ॰ प्रकृतेरकङादेश : ॥

वैयाकरण : । त्रि॰ व्याकरणशास्त्राभिज्ञे ॥ व्याकरणमधीते॰ वेदवा॰ तदधीतेतद्वेदेत्यण् । ऐजागम : ॥ व्याकरणस्यव्याख्यान : व्याकरणेभवोवावैयाकरण : । अण् ऋगयनादिभ्यश्चेत्यण् ॥ स्त्री॰ वैयाकरणी ॥

वैयाघ्र : । त्रि॰ व्याघ्रचर्मावृतस्यन्दने । द्वैपे ॥ व्याघ्रस्यविकार : । प्राणिरजतादिभ्योञ् । वैयाघ्रेण चर्मणापरिवृतोरथ : । द्वैपवैयाघ्रादञ् ॥

वैयाघ्रपद्य : । पुं॰ गोत्रसुतौ॰ मुनिविशेषे ॥ व्याघ्रपदोऽपत्यम् । आङ् ॥ कुन्द्रय सुमुनौ ॥ व्याघ्रपदो गोत्रापत्यत्वात् ॥ यद्वा । व्याघ्रस्येवपादावस्येति बहुव्रीहौ पादस्यलोपइतिलोपे गर्गादित्वात् यञि पाद : पदितिपद्भावे मयस्त्वाभ्यामित्येव ॥

वैयात्यम् । न॰ अविनीततायाम् ॥ विरूपंयातंगमनम् ॰ चेष्टनंयस्य । वियातस्यभाव : । दृढादित्वात् ष्यञ् ॥

वैयासम् । न॰ व्यासोपन्यस्ते वचसि ॥ शेषइत्यण् ॥

वैयासकि : । पुं॰ शुकदेवे ॥ व्यासस्य अपत्यम् । व्यासवरुडनिषादचण्डालविम्वानाञ्चेति वक्तव्यमिति बाह्वादिञ् ॰ अकङादेशश्च । नय्वाभ्यामित्यैजागम : ॥

वैरम् । न॰ विरोधे ॥ तस्यसमुत्थानं पञ्चविधम् । स्त्रीकृतम् १ यथाकृष्णशिशुपालयो : । वास्तुजम् २ यथाकौरवपाण्डवानाम् । वाग्जम् ३ यथाद्रोणद्रुपदयो : । सापत्नम् ४ यथामूषिकमार्जारयो : । अपराधजम् ५ यथापूजनीब्रह्मदत्तयो : ॥ वीरस्यकर्म । वैरमैथुनिकयोरितिनिर्देशात् ॰ युवादित्वाद्वा अण् । अतिवादांस्तितिक्षेतनावमन्येतकञ्चन । नचेमंदेहमाश्रित्यवैरं कुर्वीतकेनचित् ॥

वैरङ्गिक : । त्रि॰ विरागयोग्ये । विरागंनित्यमर्हति । छेदादिषु॰ वि

रागविरक्त इति पाठात् अण् । विरक्ता देश ॥
वैरञ्च्य: पुं॰ सनकादिषु ॥
वैरदेया । स्त्री॰ वैरमर्षे ॥
वैरनिर्यातनम् । न॰ वैरशुद्धौ । प्रतीकारे । कृतापकारस्य प्रत्यपकारे । वैरस्य निर्यातनम् । यतनिकारा दीचुरादि: । ल्युट् ॥
वैरप्रतिक्रिया । स्त्री॰ वैरनिर्यातने ॥
वैरशुद्धि: । स्त्री॰ वैरनिर्यातने ॥ वैरस्य शुद्धि: ॥
वैरस्यम् । न॰ विरसत्वे ॥
वैरागी । त्रि॰ विषयेच्छारहिते । वैराग्ययुक्ते ॥ यथा । सनकश्च सनन्दश्च तृतीयश्च सनातन: । सनत्कुमारो वैरागी चतुर्थ: पुरुषर्षभ ॥
वैराग्यम् । न॰ विषयेषु तुच्छबुद्ध्या रागाभावे ॥ तच्च॰ यतमानसंज्ञा॰ व्यतिरेकसंज्ञा॰ एकेन्द्रियसंज्ञा॰ वशीकारसंज्ञेति चतस्र: संज्ञा अर्हति । तत्रैव द्रष्टव्यम्॰ विषयां स्त्यक्तुम्यत्कृतं तापि सम्मानेच्छा त्यागस्याद्यं वैराग्यम् । ततो विषयाणां मध्ये लवणादिव्यतिरेकेणापि द्वितीयम् । तथा वृत्तावपि मनसि रागशैथिल्येन॰ बाह्येन्द्रियैरेव विषयसेवनं तृतीयम् । तत्राप्यौदासीन्यं चतुर्थम् । यथाहु: । वैराग्यमाद्यं यतमानसंज्ञकं चिद्धिरागो व्यतिरेकसंज्ञम् । एकेन्द्रियाख्यं हृदि रागमोचनं तस्याप्यभावस्तु वशीकृताख्यमिति । विषयेषु स्वयित्वा दिदोषदर्शनेन॰ वैतृष्ण्ये ॥ तद्वैराग्यं गुरूपसायादर्शनश्रवणादिभि: ॥ देहादिब्रह्मपर्यन्ते ह्यनित्ये भोग्यवस्तुनि ॥ विषयेष्वौदासीन्यभावे ॥ ब्रह्मादिस्थावरान्तेषु वैराग्य विषयेष्वनु । यथैव काकविष्ठायां वैराग्यं तद्धि निर्मलम् ॥ त्यागेच्छायाम् ॥ दोषदृष्टिजिहासा च पुनर्भोगेष्वदीनता । हेतुस्वरूपकार्याणि वैराग्यस्य हि तु: क्रमात् ॥ परमपरञ्चेति द्विविधं वैराग्यम् ॥ दृष्टष्वानुश्रविकेषु च॰ भोगेषु॰ रागविरोधिन्यामस्पृहात्मिकायाम् चित्तवृत्तौ॰ दृष्टादृष्टविषयेषु॰ स्पृहाविरोधि चित्तपरिणामे । वैराग्यात्प्रकृतिलय: ॥ यसाखी॰ नवनीलनीरजदलोपमातिमृदीतनुं त्वङ्माचामरिवामिषांयदि पुनर्नैव प्रजानां पति: । प्रत्यग्रचरदस्त्रमिश्रपिशितग्रासग्रहग्रहप्रतोग्रध्वध्वाङ्क्षवकांस्तनो निपतत: को वा कथं वारयेत् ॥ अपि च । स्त्रियो दोलालीला विषयजरसा: प्रान्तविरसा: विपद्गेहं देहं महदपि धनं भूरि निधनम् । बृहच्छोको लोका: सततमबला ऽनर्थकुला तथाप्यस्मिन् घोरे पथि

वतरतामात्मनिरताः ॥ विराग एव। स्वार्थेष्यञ् ॥

वैराजम्। न० सामविशेषे ॥ पुं० ब्रह्मरूपेविराजोदेहे ॥

वैराज्यम्। न० अणिमादिसिद्धिभाक्त्वे ॥ विराजो भावः। ष्यञ् ॥

वैराटः। पुं० विराटतनये ॥ इन्द्रगोपकीटे ॥

वैराटी। स्त्री० उत्तरायाम्। अभिमन्युपत्न्याम्। विराटस्यापत्यं स्त्री। अण्। ङीप् ॥

वैरातङ्कः। पुं० अर्जुनवृक्षे ॥

वैरिञ्चः। पुं० सनकादिषु ॥ त्रि० विरिञ्चसम्बन्धिनि ॥

वैरी। पुं० रिपौ। शत्रौ वैरमस्यास्ति। इनिः ॥ षष्ठभवने ॥

वैरूपम्। न० सामविशेषे ॥

वैरूप्यम्। न० विरूपतायाम् ॥

वैरोचनः। पुं० रवेस्तनये ॥ विष्णुपुत्रे ॥ बलिदानवे ॥ सिद्धगणे बुद्धे ॥ अग्निपुत्रे ॥ त्रि० सवितुः सम्बन्धिनि ॥ विरोचनस्यायम्। अण् ॥

वैरोचननिकेतनम्। न० पाताले ॥

वैरोचनिः। पुं० अर्कपुत्रे ॥ बलिदैत्ये। सुगते ॥ विरोचनस्यापत्यम्। अतइञ् ॥

वैरोचिः। पुं० बाणासुरे ॥

वैरोद्धारः। पुं० कृतापकारस्यप्रत्यपकारे। प्रतीकारे। वैरनिर्यातने ॥

वैलक्षण्यम्। न० विलक्षणत्वे ॥

वैलक्ष्यम्। न० व्यलीके ॥ विलक्षणस्यविस्मयव्यत्ययभावः। ष्यञ् ॥

वैल्वः। पुं० बिल्वप्रकाण्डे ॥ बिल्वविकारे ॥ बिल्वस्यावयवे विकारे वा। बिल्वादिभ्योण्। वैल्वः खादिरोवायूपः स्यात् ॥ न० बिल्वशाके। बिल्वफले ॥ त्रि० बिल्वसम्बन्धिनि ॥

वैवधिकः। पुं० वार्त्तावहे। पसारी। इ० भा० प्र० विवधेनधान्यतण्डुलादिनाव्यवहरति। ठक् ॥ कृषिवृद्ध्यादिजीवे ॥

वैवर्ण्यम्। न० विवर्णतायाम् ॥

वैवस्वतः। पुं० श्राद्धदेवे। अन्तके। यमे ॥ सप्तममनौ। विवस्वतोऽपत्यम्। अण् ॥ रुद्रविशेषे ॥ शनैश्चरे ॥

वैवस्वती। स्त्री० दक्षिणस्यांदिशि।

वैवाहिकम्। न० धनविशेषे ॥ यथा। वैवाहिकन्तुतद्विद्याद्भार्ययायत् सहागतम्। भार्याप्राप्तिकालेलब्धमित्यर्थः ॥ त्रि० विवाहसम्बन्धिन्यन्यादौ विवाहेभवः। अध्यात्मादेठञ् इष्यते।

वैवाह्यः। त्रि० सम्बन्धिनि ॥

वैशम्पायनः। पुं० यजुर्वेदधरे। व्यासशिष्येमुनौ। विशम्पस्यगोत्रापत्यम्।

त्यम् । अश्वादिभ्यः फञ् ॥

वैशसम् । न॰ हिंसायाम् ॥ यथा । वरं हुतवहज्वालापुञ्जस्यान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुखजनसंवासवैशसमिति कात्यायनः । शौरिचिन्ताविमुखेषु तन्निन्दापरेषु जनेषु यः संवासः स एव वैशसं हिंसा तन्नवरमित्यर्थः ॥ नरकविशेषे ।

वैशस्त्रम् । न॰ विशसितुर्धर्म्ये ॥ विशसितुरिड्लोपश्चाञ् वक्तव्यः ॥

वैशाखः । पुं॰ मासविशेषे । माधवे । राधे ॥ वैशाखी पौर्णमास्यस्मिन् सास्मिन्पौर्णमासीत्यण् ॥ खजके । मन्थानदण्डे । रत्न॰ टू॰ भा॰ प्र॰ ॥ विशाखाप्रयोजनमस्य । विशाखाषाढादित्यण् ॥ न॰ धन्विनां संस्थानभेदे । वितस्त्यन्तरे यत्स्थिते पादद्वये विशाखाख्यस्थानं भवति । विशाख एव । स्वार्थेऽण् ॥

वैशाखी । स्त्री॰ वैशाखपूर्णिमायाम् ॥ विशाखया युक्ता पौर्णमासी । नक्षत्रेण युक्तः काल इत्यण् । ततो ङीप् ॥ रक्तपुनर्नवायाम् ॥

वैशारदी । स्त्री॰ मायायाम् ॥ विशारद ईश्वरः । तस्येयम् । अण् ङीप् ॥

वैशारद्यम् । न॰ विशुद्धौ ॥ विशारदस्य भावः । दृढादिषु॰ वैयातलाभमतिमनःशारदानामितिष्यञ् ॥

वैशिकः । पुं॰ त्रिविधनायकान्तर्गतनायकविशेषे ॥ बहुवेश्याभोगी परसिको वैशिक इति तल्लक्षणम् ॥

वैशिष्ट्यम् । न॰ विशिष्टत्वे । सम्बन्धपदार्थे । विशिष्टधीनियामके ॥

वैशेषिकः । पुं॰ कणादमुनिकृतदर्शनविशेषे । परमार्थतो द्रव्यादिसमवायान्तषट्पदार्थवादिनि । यथा आत्मनो द्रव्यम्, तस्य गुणा बुद्ध्यादयो नव । वासनात्वेन वेदोक्ता इति वैशेषिकादयः बुद्ध्यादिधर्मिणमन्तःकरणमेवात्मेति भ्रमित्वा॰ आत्मगुणा एव वासनात्वेन॰ यथा । महाराजमित्यादिसूत्रोच्यत इति वदन्त्काणादा इत्यर्थः ॥ अयं वैशेषिकग्रन्थविवरणम् । स तु विशेषपदार्थनिरूपकग्रन्थः । अस्य मतं न्यायदर्शनमततुल्यम् । अत्र जगतः कारणं परमाणुपर्यन्तं निरूपितम् ॥ इह खलु निखिलप्रेक्षावन्निसर्गप्रतिकूलवेदनीयतया निखिलात्मसंवेदनसिद्धं दुःखं जिहासतस्तद्धानोपायं जिज्ञासुः परमेश्वरसाक्षात्कारमुपायमाकलयति । यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यतीत्यादिवचन॰ निचयप्रामाण्यात् । परमेश्वरस्य साक्षात्कारश्च॰ श्रवणमननभावनाभिर्भा

बनीयः। यदाह। आगमेनानुमानेनध्यानाभ्यासबलेनच। त्रिधा प्रकल्पयन्प्रज्ञांलभतेयोगमुत्तममिति। तत्रमननमनुमानाधीनम्। अनुमानञ्चव्याप्तिज्ञानाधीनम्०। व्याप्तिज्ञानञ्चपदार्थविवेकसापेक्षम्। अतः पदार्थषट्कम्॥ अथातोधर्मंव्याख्यास्यामः। इत्यादिकायांदशलक्षण्यांकणभक्षभगवताव्यवस्थापि। तत्राह्निकद्वयात्मकेप्रथमेध्याये० समवेताशेषपदार्थकथनमकारि। तत्रापिप्रथमाह्निकेजातिमन्निरूपणम्द्वितीयाह्निकेजातिविशेषयोर्निरूपणम्। आह्निकद्वयात्मकेद्वितीयेभूतदिक्कालक्षणम्। तत्रापिप्रथमाह्निकेभूतविशेषलक्षणम्। द्वितीयेदिक्कालप्रतिपादनम्। आह्निकद्वयात्मकेतृतीये० आत्मान्तःकरणलक्षणम्। तत्राप्यात्मलक्षणंप्रथमे। द्वितीयेऽन्तःकरणलक्षणम्। आह्निकद्वययुक्तेचतुर्थे० शरीरतदुपयोगिविवेचनम्। तत्रापिप्रथमेतदुपयोगिविवेचनम्। द्वितीयेशरीरविवेचनम्। आह्निकद्वयवतिपञ्चमे० कर्मप्रतिपादनम्। तत्रापिप्रथमेशरीरसम्बन्धिकर्मचिन्तनम्। आह्निकद्वयशालिनिषष्ठे० श्रौतधर्मनिरूपणम्। तत्रापिप्रथमेदानपरिग्रहधर्मविवेकः। द्वितीयेचातुराश्रम्योचितधर्मनिरूपणम्। तथाविधेसप्तमेगुणसमवायप्रतिपादनम्। तत्रापिप्रथमेबुद्धिनिरपेक्षगुणप्रतिपादनम्। द्वितीयेतत्सापेक्षगुणप्रतिपादनम्०समवायप्रतिपादनञ्च०। अष्टमेनिर्विकल्पकसविकल्पकप्रत्यक्षप्रमाणचिन्तनम्। नवमेबुद्धिविशेषप्रतिपादनम्। दशमेअनुमानप्रतिपादनम्। तत्रोद्देशोलक्षणंपरीक्षाचेतित्रिविधास्यशास्त्रस्यप्रवृत्तिरितिवैशेषिकग्रन्थविवरणम्॥ कणादमुनिकृतदर्शनशास्त्रविस्तारि। औलूक्यं॥ विनयादित्वात्स्वार्थेठक्॥ त्रि० विशेषविदि॥

**वैशेष्यम्**, न० भागाधिक्ये॥ भावेष्यञ्॥

**वैश्यः**, पुं० ऊरव्ये, ऊरुजे। भूस्पृशि। तमउपसर्जनरजःप्रधानेतृतीयवर्णे॥ तस्यचकृष्यादीनितादृशानिकर्माणिभवन्ति॥ तानिचवर्णाश्रमशब्दे द्रष्टव्यानि। निषिद्धानियथा। वैश्यानांधनलोभेनमिथ्यामल्यप्रकाशनम्। अपालनंपशूनाञ्चवाणिज्याविभवेसतीतिपाद्मेस्वर्गखण्डे २७ अध्यायः॥ लक्षणन्तु। विशत्याशुपशुभ्यश्चकृष्यादानरुचिःशुचिः। वेदाध्ययनसम्पन्नःसवैश्यइतिसंज्ञितः॥ विशति।

विश॰ क्विप्। स्वार्थे॰ ष्यञ्॥
वैश्यकर्म। न॰ कृषिगोरक्ष्यवाणिज्यादौ॰
वैश्या। स्त्री॰ वर्याख्याम्। वार्यायाम्। बुद्धशक्त्यन्तरे॥ तारायाम्॥
वैश्रवणः। पु॰ कुवेरे। विश्रवसोऽपत्यम्। शिवादिषु विश्रवसो विश्रवश्रवणावा देशौ निपातितौ॰ अण्च॥
वैश्रवणालयः। पुं॰ वैश्रवणावासे॥ वटवृक्षे॥
वैश्रवणावासः। पुं॰ वटद्रुमे॥ कुवेरपुर्याम्।
वैश्रवणोदयः। पुं॰ वटवृक्षे॥
वैश्वः। पुं॰ उत्तराषाढनक्षत्रे।
वैश्वदेवः। पुं॰ अन्नसाध्ये होमवलिदानातिथिभोजनात्मके सायम्प्रातर्गृहस्थं प्रति विहिते कर्मविशेषे॥ विश्वेदेवा देवताऽस्य। सास्यदेवतेत्यण्। न॰ उत्तराषाढान॰॥
वैश्वदेवी। स्त्री॰ आमिक्षायाम्। जगतीच्छन्दः प्रभेदे॥ तल्लक्षणादि यथा। वाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ। यथा। अर्चामन्येषां त्वं विहायामराणामद्वैतेनैकं विष्णुमभ्यर्च्य भक्त्या। तत्राशेषात्मन्यर्चिते भाविनी ते भ्रातः सम्पन्नाराधना वैश्वदेवी॥
वैश्वदेव्यम्। न॰ सामविशेषे।
वैश्वानरः। पुं॰ अग्नौ। वह्नौ॥ चन्द्यभिमानिन्यां देवतायाम्॥ जाठराग्नौ॥ चित्रकवृक्षे। विश्वेनरा यस्य। नरे संज्ञायामिति विश्वशब्दस्य दीर्घः॥ विश्वानरस्यापत्यम्। ऋष्यण्। गोत्रापत्ये॰ विदादित्वादञ्वा॥ विश्वेषां नराणां कर्त्तरि॥ ब्रह्मणि। जीवे॥ विश्वनराभिमानित्वात्॰ स्थूलसमष्ट्युपहिते चैतन्ये॥ विश्वे च ते नराश्च॰ विश्वानराः। पूर्वपदस्य दीर्घः। विश्वानरान् भोक्तृत्वेनाव्यवस्थितान् प्रति॰ अनेकधाधर्माधर्मकर्मानुसारेण॰ सुखदुःखादिप्रापणात्॰ अयं परमात्मा कर्मणां फलदाता॰ वैश्वानरशब्दितो भवति॥ अथवा। विश्वश्चासौ नरश्च॰ विश्वानरः। नरे संज्ञायाम्। विश्वानर एव। वैश्वानरः। स्वार्थेऽण्॥
वैश्वानरमार्गः। पुं॰ दक्षिणवीथ्याम्। पूर्वोत्तराषाढयोः समीपे।
वैश्वानरीवीथी। स्त्री॰ दक्षिणमार्गे नक्षत्रविशेषाणां संज्ञाविशेषे॥ यथा। शतभिषक्तथा। वैश्वानरी भाद्रपदे रेवती चैव कीर्त्तिता। एतास्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यतइति॥
वैश्वी। स्त्री॰ उत्तराषाढानक्षत्रे॥
वैषम्यम्। न॰ विषमत्वे॥ भावे॰ ब्राह्मणादित्वात् ष्यञ्॥
वैषयम्। न॰ विषयाणां समूहे भि

ष्णादाण ॥

वैषयिकः। त्रि० विषयसम्बन्धिनि ॥

वैष्टुतम्। न० हैामभस्मनि ॥

वैष्टम्। न० विष्णौ ॥ विष्टपे ॥ वेवेष्टि। विश०भमजिगमिनमिहनि विश्यशांवहिस्थेतिष्टन् ॥ दिवि ॥ वायौ ॥

वैष्णवः। त्रि० विष्णूपासके। विष्णुमन्त्रदीक्षिते। कार्ष्णे। हरौ ॥ तल्लक्षणमाहात्म्यादिर्यथा। फलसन्धानरहिताविष्णुभक्ताश्चवैष्णवाः। मत्प्रीतिभक्तिकामास्ते सर्वदासर्वकर्मसु। गुरुवक्त्राद्विष्णुमन्त्रोयस्यकर्णेप्रविश्यते। जीवन्मुक्तं वैष्णवं तंवेदाः सर्वेवदन्तिच ॥ पुरुषाणां शतंपूर्वंपैतृकस्यशतंपरम्। मातामहस्यचशतंमातरंमातृमातरम्। भगिनींभ्रातरञ्चैवभागिनेयञ्चमातुलम्। श्वश्रूंश्वशुरञ्चैवगुरुपत्नीं गुरोःसुतम्। गुरुञ्ज्ञानदातारंमित्रञ्चसहचारिणम्। भृत्यं शिष्यंतथाचेटींप्रजाः स्वाश्रमसन्निधौ ॥ उद्धरेदात्मनासार्द्धंमन्त्रग्रहणमात्रतः। मन्त्रग्रहणमात्रेणजीवन्मुक्तोभवेन्नरः। तत्स्पर्शमात्रेणपूतं तीर्थंस्वभारतम्। तस्यैवपादरजसासद्यःपूतावसुन्धरा ॥ पादोदकञ्चतस्यामं तीर्थमेवभवेद्ध्रुवम्। इ०ब्र०वै०व०पुराणम्। येकण्ठलग्नतुलसीभवकाष्ठमालायेबाहुदण्डहरिनामकृतोर्द्ध्वपुण्ड्राः। येकृष्णभक्तिसुदृढाधृतशङ्खचक्रास्तेवैष्णवाभुवनमाशुपवित्रयन्ति ॥ अपिच। पशुर्मनुष्यः पक्षीवायेचवैष्णवसंश्रयाः। तेनैवतेप्रयास्यन्तितद्विष्णोः परमंपदमिति ॥ अस्याचारश्च। सर्वान्कामान्परित्यज्यदृढभक्तिञ्चसाधयेत्। सएववैष्णवाचारः कामसङ्कल्पवर्जितः ॥ विष्णोरयम्। अण् ॥ न० विष्णुपुराणे ॥ यथा। त्रयोविंशतिसाहस्रं वैष्णवंपरमाद्भुतमिति ॥

वैष्णवी। स्त्री० विष्णोः शक्तौ ॥ यथा। एषाचिच्छक्तिरुद्दिष्टानयसिद्धान्तगामिनी। एषाश्वेतापरासृष्टिः सात्त्विकीब्रह्मसंस्थिता ॥ एषैवरक्ताराजसिवैष्णवीपरिकीर्त्तिता। एषैवकृष्णातमसिरौद्रीदेवीप्रकीर्त्तिता ॥ अष्टादशतयाकोप्येवैष्णव्याभेदउच्यते। याविष्णोराजसीशक्तिः पालनीचैववैष्णवी ॥ इतिवाराहपुराणम् ॥ दुर्गायाम् ॥ यथा। शङ्खचक्रगदाधारिविष्णुमातातथारिहा। विष्णुरूपाचवादेवीवैष्णवीतिनगीयते ॥ इतिदेवीपुराणम् ॥ गङ्गायाम्। तुलस्याम् ॥ अपराजितायाम् ॥ शतावर्याम् ॥

वैसादृश्यम्। न० विसदृशत्वे ॥

वैसारिण: । पुं॰ मत्स्ये ॥ विविधंसरति । सृ॰ । ग्रह्यादित्वाण्णिनि: । ततोविसारिणोमत्स्यइति-स्वार्थेऽण् ॥ सिद्धे ॥

वैहायस: । पुं॰ खेचरे ॥

वैहायसी । स्त्री॰ भारतवर्षस्थनद्यन्तरे ॥

वैहर्य्य: । त्रि॰ परिहासेनलालनीयेश्यालसंबंध्यादौ ।

वैहासिक: । पुं॰ बासन्तिके । कौलिकिले । विदूषके । प्रहासिनि ॥

वोटा । स्त्री॰ चेट्याम् । दास्याम् ॥ इ॰हे॰न्द्र:॰ ॥

वोडु: । पुं॰ गोनसाहौ ॥ भ्रषान्तरे

वोड्री । स्त्री॰ पणचतुर्थांशे । वुडि॰ इ॰गौ॰दे॰भा॰प्र॰ ॥

वोढव्य: । त्रि॰ वहनीये ॥

वोढृ: । पुं॰ मुनिविशेषे ॥

वोढा । पुं॰ भारिके । सूते । वोढृ, भर्तृ: । वह॰ । अर्त्तृन्यटचर्य्यतिटच् । ढत्वधत्वष्टुत्वढलोपा: । सहिवहोरोदवर्णस्ये त्योकार: ॥ यनडुहि । ऋषभे । परिणेतरि ॥ मूढे ॥

वोद: । त्रि॰ आर्द्रे ॥

वोदाल: । पुं॰ पाठीनमत्स्ये ॥

वोद्र: । पुं॰ गोनसाहौ ॥ भ्रषान्तरे ॥

वोद्री । स्त्री॰ पणपादे । काकिन्याम् ॥

वोरक: । पुं॰ लेखके ॥ इ॰चि॰-शेष: ॥

वोरट: । पुं॰ कुन्दपुष्पे ॥ इ॰चि॰शेष: ॥

वोरपट्टी । स्त्री॰ मन्दरायाम् । मादरी॰कट॰चटाइ॰इ॰भा॰प्र॰ ॥

वोरव: । पुं॰ वोरो॰इ॰गौ॰भा॰प्र॰ धान्यविशेषे ॥ यथास्यगुणा: । वोरवस्तुवुधै: प्रोक्तस्त्रिदोषस्यप्रकोपण: । मधुरश्चाम्लपाकश्चवीहि: पित्तकरोगुरु: ॥

वोरुखान: पुं॰ पाटलवर्णाश्वे ॥ इ॰हे॰न्द्र: ॥

वोलम् । न॰ गन्धरसे । यस्यगुणा: । वोलंरक्तहरंशीतंमेध्यंदीपनपाचनम् । मधुरंकटुतिक्तञ्चयदस्वेदपिदोषजित् ॥ ज्वरापस्मारकुष्ठघ्नंगर्भाशयविशुद्धिकृत्॥ अपिच । वोलस्वकटुतिक्तोष्णंकषायंरक्तदोषनुत् । कफपित्तामयानृष्णंप्रदरादिरुजापहम् । पुं॰रसगन्धे ॥ वोलयति । बुलमज्जने । यच् । वातिवा । वा॰ । पिश्चादित्वाट्लच् ॥

वोलक: । पुं॰ लेखके ॥

वोला । स्त्री॰ दोलावृत्ते ॥ यथा । द्विगुणिततरविमितकलितकलाभिर्ललितनिबद्धा॰ मङ्गलपिङ्गलभणितगणितकलयाकिलनद्धा । एकादशकलविरतिविदितमृदुगतिरिह-

वोला॰ यशसापूरितभुवनभुवनर
सनासनवोला ॥
वोल्लाह: । पुं॰ अश्वविशेषे । यथा
वोल्लाहस्त्वयमेवस्यात्पाण्डुकेशर-
बालधि: ॥ इ॰ हे॰ म्द्र॰: ॥
वोहित्थम् । न॰ यानपात्रे । पोते ।
जहाज॰ इ॰ भा॰ प्र॰ ॥ इ॰ हे॰
न्द्र: ॥
वौषट् । अ॰ देवहविर्दानमन्त्रे ॥ स्वा
हादेवहविर्दानेश्रौषट्वौषट्वषट्स्व
धेत्यमर: ॥ उह्यतेऽनेन । वह॰ ।
बाहुलकात्॰ डौषट् ॥
व्यंशक: । पुं॰ पर्वते ॥ इ॰ मुद्राङ्कि
तश्रेम चन्द्र: ॥
व्यंसक: । पुं॰ धूर्त्ते ॥
व्यंसित: । त्रि॰ वञ्चिते ॥
व्यक्त: । त्रि॰ स्फुटे ॥ मनोषिणि ॥
प्रत्यक्षे । हेतुमदनित्यमव्यापिस
क्रियमनेकमाश्रितंलिङ्गम् । सावय
वंपरतन्त्रंव्यक्तम् । इतिलक्षिते
॥ स्थूले ॥ यथा । अव्यक्तोव्यक्तका
रणमिति ॥ व्यज्यतेस्म । अञ्जूव्य
क्त्यादौ । क्त: । विपूर्वादञ्जते:
क्तेतु॰ अञ्जेर्नत्वेव्यक्तप्रतिषेधइति
निष्ठातस्यनत्वेनपादानइतिनन-
त्वम् ॥
व्यक्तकाल: । पुं॰ स्थितिकाले ॥
व्यक्तदृष्टार्थ: । पुं॰ प्रत्यक्षिणि ॥
साक्षिणि । इ॰ त्रि॰ शेष: ॥

व्यक्तविशेष: । पुं॰ बुद्धौ ॥
व्यक्ति: । स्त्री॰ पृथगात्मताम् ॥ प्र
त्यक्षे । स्पष्टतायाम् । शरीरवि
षयादिरूपायांभोगभूमौ ॥ प्रभा
वे ॥ व्यक्तिलक्षणमाहगौतम: ।
यथा । व्यक्तिर्गुणविशेषाश्रयोमूर्त्ति
रिति । अस्यार्थ: । यद्यपिजात्या
देरपिव्यक्तित्वात्प्रमेयत्वमेवव्यक्ति
त्वम्॰ तथापिजात्याकृतिशक्तिवि
षयव्यक्तेरिदंलक्षणम् । तथाच॰
गुणविशेषोजात्याकृतिसमानाधि-
करणोगुण:॰ सङ्ख्यादिभिन्नस्तदा
श्रय:॰ मूर्त्तिर्व्यक्तिरितिसमाना
र्थकमित्यर्थ: । परेतु॰ गुणारूपा
दय:॰ विशेषाविशेषका:॰ उत्क्षे
पणादयस्तेषामाश्रयोद्रव्यम्॰ तेन
जात्याश्रयोव्यक्तिरित्याशय: । वि
शेषलक्षणमाहमूर्त्तिरिति । मूर्त्ति:
संस्थानविशेषस्तद्वानित्याहु: । अ
वयवध्यमन्दसोपौसमासद्वलाशय:
। अन्यतु॰ व्यक्तेर्लक्षणंमूर्त्तिरि
ति॰ सैवकेत्याह । गुणविशेषाश्रय
इति । गुणविशेषस्य॰ अवच्छिन्नप
रिमाणस्याश्रयइत्यर्थइत्याहु: ॥
१३२ ॥ व्यज्यतेऽनया । अञ्जू॰ ।
स्त्रियांक्तिन् ॥ जनै ॥ इ॰ हे॰
चन्द्र: ॥
व्यय: । त्रि॰ व्याहते । व्याकुले ॥ अप
वर्जिते ॥ सोद्यमे । व्यासक्ते ॥

विविधं० विविधेवाध्वयमस्यवहा। द्विकमगतिवा। अग० कर्मणिक्ते तिसाधु:॥

व्यहट:। पुं० अद्रिप्रभेदे॥

व्यङ्ग:। पुं० भेके॥ मुखरोगविशेषे॥ तल्लक्षणंयथा। क्रोधायासप्रकुपितोवायु: पित्तेनसंयुत:। मुखमागम्यसहसामण्डलंविसृजत्यत:॥ नीरुजंतनुकंश्यावंमुखेव्यङ्गंतमादिशेत्॥ त्रि० हीनाङ्गे० छिन्ननासिकादौ॥ विकृतानि०विगतानि वाअङ्गान्यस्य॥ विकले॥ विगतमङ्गमस्य॥

व्यङ्गक:। पुं० शैले। पर्वते इ० त्रि० शेष:॥

व्यङ्गाङ्ग:। त्रि० विकलाङ्गे। व्यङ्गमङ्गंयस्य:॥

व्यङ्ग्य:। त्रि० व्यञ्जनयाबोध्येऽर्थे॥ यथा। वाच्योर्थोऽभिधयाबोध्यो० लक्ष्योलक्षणयामत:। व्यङ्ग्योव्यञ्जनयाता: स्युस्तिस्र: शब्दस्यशक्तय:॥ प्रकाश्ये। आन्तरेशब्दे॥

व्यज:। पुं० तालवृन्ते। व्यजत्यनेन। अज०गोचरसञ्चरेतिघप्रत्ययान्तोनिपातित:॥

व्यजनम्। न० वाजे। तालवृन्ते॥ चामरे॥ व्यजत्यनेन। अज०। करणेल्युट्। वीयावितिपर्यायेण॥

व्यञ्जक:। पुं० अभिनये॥ त्रि०व्यक्तिकारके। प्रकाशके॥ वैयाकरणमतेशब्दे॥ घटप्रत्ययस्यसमयेबालोकोव्यञ्जकोयथा॥ व्यञ्जनयाप्रतिपादके॥ इ०सा०द०अ०॥ व्यनक्ति। अञ्ज०। ण्वुल्॥

व्यञ्जनम्। न० निष्ठाने। तेमने। दधिघृतादौ। सूपशाकादौ। तीवण इ०भा०प्र०॥ चिह्ने॥ श्मश्रुणि॥ अवयवे। स्त्रीपुंसयो: गुह्यदेशे। सूर्यादिचिह्ने॥ अहनि। दिने॥ व्यज्यतेऽनेनवाल्युट्॥ स्वरहीनवर्णे॥ अच्चाहितस्याशोच्चारणंन भवति। सपुनरन्तरेणाचंव्यञ्जनस्योच्चारणमपिभवतीतिभाष्योक्ते:॥

व्यञ्जना। स्त्री० शब्दस्यवृत्तिविशेषे॥ तस्यालक्षणंयथा। विरतास्वभिधाद्यासुययार्थोबोध्यतेपर:। सावृत्तिर्व्यञ्जनानामशब्दस्यार्थादिकस्यच॥ शब्दबुद्धिकर्मणांविरम्यव्यापाराभावइतिनयेनाभिधालक्षणातात्पर्याख्यासुतिसृषुवृत्तिषुस्वस्वमर्थं बोधयित्वोपक्षीणासु०ययान्योऽर्थो बोध्यते०साशब्दस्यार्थस्यप्रकृतिप्रत्ययादेश्ववृत्तिर्व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषयाव्यञ्जनानाम॥ विशेष: साहित्यदर्पणादौद्रष्टव्य:॥

व्यञ्जित: त्रि० प्रकटीकृते॥

व्यडम्बक : । पुं॰ एरण्डे ॥ व्यडंम लमम्बयति । अविसंसने । णिच् । अच् ॥

व्यडम्बनम् । न॰ एरण्डे ॥ व्यडंमलम म्बयति । अवि॰ । ल्युट्॰ युच्वा ॥ शुक्लेरण्डे ॥

व्यतिकर: । पुं॰ व्यसने ॥ व्यतिष ङ्गे॰ ॥ मिश्रणे ॥ क्षोभे ॥ स म्बन्धे ॥

व्यतिकीर्ण : । वि॰ संकीर्णे ॥

व्यतिक्रम : । पुं॰ व्यत्यये । अन्यथा त्वे । क्रमविपर्यये । यथा । सर्वं चप्राङ्मुखोदातायशीतावउदङ्मु ख : । एषएवविधिर्दानेविवाहेतु व्यतिक्रम : ॥ व्यतिक्रमणम् । क्र म॰ । घञ् । नोदात्तोपदेशेतिन वृद्धि : ॥ अन्याये ॥

व्यतिभेद : । पुं॰ समावेशे ॥

व्यतिरिक्त : । वि॰ व्यतिरेकविशिष्टे । भिन्ने । अन्यस्मिन् ॥ व्यतिरि च्यतेस्म । रिचिर्विरेचने । क्त : ॥

व्यतिरेक : । पुं॰ अभावे । विरहे । कारणकार्यादृव्यवृत्तौ । कार्यव्य तिरेकप्रयोजकव्यतिरेकप्रतियोगि त्वे ॥ अलङ्कारविशेषे । यथा । व्य तिरेकोविशेषश्चेदुपमानोपमेययो: शैलाइवोन्नता : सन्त : किन्तुप्रकृ तिकोमला: ॥ अयमुपमेयाधिक्य पर्यवसायीव्यतिरेक : ॥ यथावा । पल्लवत : कल्पतरोरेषविशेष : क रस्यतेवीर । भूषयतिकर्णमेक : प रस्तुकर्णंतिरस्कुरुते ॥ तन्न्यून त्वपर्यवसायी । यथा । रक्तस्त्वंनव पल्लवैरहमपिश्लाघ्यै:॰ प्रियायागुणै स्त्वामायान्तिशिलीमुखा: स्मरधनु र्मुक्ता : सखेमामपि । कान्तापाद तलाहतिस्तवमुदेतद्वन्ममाप्यावयो स र्वंतुल्यमशोककेवलमहंधात्रासशो- क : कृत : ॥ अनुभयपर्यवसायीय था । दृढतरनिबद्धमुष्टे: कोषनि षण्णस्यसहजमलिनस्य । कृपणस्यकृ पाणस्यकेवलमाकारतोभेद : । वि शिष्ट:॰ अतिरेक:॰ पृथग्भाव : ॥ विपर्यये ॥

व्यतिरेकव्याप्ति : । स्त्री॰ साध्यनिषे- धेसाधननिषेधरूपेण॰ प्रवृत्तायांव्या प्तौ । यथा । यत्रवह्निर्नास्ति॰ तत्र धूमोनास्तीति॰ यथाह्रदे ॥

व्यतिरेकसंज्ञा । स्त्री॰ वैराग्यविशेषे । परिपाचनेचानुष्ठीयमानेकेचित्क- षाया : पक्का:॰ पच्यन्तेकेचित् तत्रैवंपूर्वापरीभावेसतिपच्यमाने भ्य : कषायेभ्य : पक्वानांव्यतिरेके णावधारणे , स्वचित्तेपूर्वोक्तयमा नदोषाणांमध्येऽभ्यस्यमानविवेकेने तेपक्का॰ एतेऽवशिष्टाइतिचिकित्स कवद्विवेचनस्वरूपे ॥

व्यतिरेकुदाहरणम् । न॰ उदाहरण

विशेषे ॥ व्यतीतम : । तद्विपर्य्ययाद्वाविपरीतंव्यतिरेक्युदाहरणमिति । अस्यार्थ : । तद्विपर्य्ययात्॰साध्यसाधनव्यतिरेकव्याप्तिप्रदर्शनात् । तथाचसाध्यसाधनव्यतिरेकव्याप्त्युपदर्शकोदाहरणं॰व्यतिरेक्युदाहरणम् । यथाजीवच्छरीरं॰सात्मकम्प्राणादिमत्त्वात्॰यन्नैवम्॰तन्नैवम्॰यथाघटइति । बाकार : प्रयोगमपेक्ष्य॰तथाचान्वय्युदाहरणं व्यतिरेक्युदाहरणं वाप्रयोक्तव्यमित्यर्थ : ॥ ३६ ॥

व्यतिषक्त : । त्रि॰ सम्बन्धाक्रान्ते । सम्बद्धे । व्यतिषज्यतेस्म । षञ्जसङ्गे । क्त : । उपसर्गात्सुनोतीत्यादिनाषत्वम् ।

व्यतिषङ्ग : । पुं॰ विनिमये ॥ सङ्गे । परस्परमेलने ॥व्यतिषञ्जनम् । पञ्ज॰ । घञ् ।

व्यतिहार : । पुं॰ विनिमये । परस्परकरणे ॥ यथा॰त्वमहमस्मि॰अहस्त्वमसीतिव्यतिहार : सचेक्यतात्पर्य्यकइत्यस्तीति ॥ व्यत्यये । अन्यस्मिन्नन्यावभासे ॥ व्यतिहरणम् । हृञ्॰ । घञ् । व्यतिह्रियतेऽनेनावा । घञ् । उपसर्गस्यघञ्यमनुष्ये बहुलमितिपाक्षिकोदीर्घाभाव : ॥

व्यतीत : । त्रि॰ विगते । विशेषेण॰अतीत : ।

व्यतीपात : । पुं॰ महोत्पाते । उपद्रवे ॥ अपमाने । पलायने । योगविशेषे ॥ तत्रजातस्यफलंयथा । कठोरवाक्य : । पिशुनस्वभावोगदातुरोमातृहितोमनुष्य : । परस्वकार्य्यैकृतपक्षपातोयस्यप्रसूतौव्यतिपातयोग । व्यतिक्रम्यपतनम् । पत्लृगतौ । घञ् । उपसर्गस्येतिदीर्घ : ॥ अन्ययोगे ॥

व्यतीहार : । पुं॰ परीवर्त्ते । व्यतिहरणम् ॰व्यतिह्रियतेवा । हृञ्॰ । घञ् । उपसर्गस्येतिपाक्षिकोदीर्घ : ॥ परस्परमेकजातीयक्रियाकरणे ॥

व्यत्यय : । पुं॰ व्यतिक्रमे । व्यत्यासे । विपर्य्यासे । विपर्य्यये । व्यत्ययनम् । इण्॰ । एरच् ॥

व्यत्यस्त : । त्रि॰ व्यतिक्रमसहिते । यथा । व्यत्यस्तपाणिनाकार्य्यमुपसंग्रहणंगुरो : । सव्येनसव्य : स्प्रष्टव्योदक्षिणेनचदक्षिणइतिमनु : ॥ उत्तानाभ्यांहस्ताभ्यांदक्षिणोपरिभावेनव्यत्यास : शिष्टसमाचारात् बोध्य : ॥

व्यत्यास : । पुं॰ व्यतिक्रमे । व्यत्यये ॥ व्यत्यसनम् । असुक्षेपणे । घञ् ॥

व्यत्यासित : । त्रि॰ वैसादृश्यंप्रापिते ॥ तारकादित्वादितच् ॥

व्यथकः । त्रि० व्यथाकारिणि । दुःखजनके ॥ भयङ्करे । व्यथयतिव्यथभयचलनयोः । बहुल मन्यत्रापीतिवुन् ॥

व्यथा । स्त्री० पीडायाम् । दुःखे ॥ व्यथ० । घटादयः षितइतिषित्त्वादङ् । टाप् ॥

व्यथितः । त्रि० दुःखिते । पीडिते ॥ व्यथासञ्जातास्य । तारकादित्वादितच् ॥

व्यधः । पुं० वेधे ॥ व्यधनम् । व्यधताडने । व्यधजपोरित्यप् ॥ ताडने ॥

व्यधनम् । न० वेधने ॥

व्यध्यः । पुं० प्रतिकाये । धनुर्गुणे ॥

व्यध्वः । पुं० दुरध्वे । विपथे । निन्दितवर्त्मनि ॥ विरुद्धोध्वा । प्रादयोगताद्यर्थइतिसमासः । उपसर्गादध्वनइत्यच् ॥

व्यपगतः । त्रि० निवृत्ते ॥

व्यपदेशः । पुं० शब्दे । नामनि ॥ कपटे ॥ विशिष्टोऽपदेशः । वाक्यविशेषे । यथा । व्याजेनात्माभिलाषीतिव्यपदेशइतीर्यतइत्युज्ज्वलनीलमणिः ॥

व्यपवर्गः । पुं० । व्यपवर्गभेदे ॥

व्यपाकृतिः । स्त्री० अपकृते । अस्वीकारे ॥

व्यपाश्रयः । पुं० शरणे ॥

व्यपेतः । त्रि० अपगते ॥

व्यपोढः । त्रि० विपरीते ॥

व्यपोहः । पुं० व्यपोहने ॥

व्यपोहनम् । न० अपाकरणे ॥

व्यभिचारः । पुं० कदाचारे । भ्रष्टाचारे ॥ परिलिपे ॥ सखालित्ये ॥ दोषविशेषे ॥ तल्लक्षणंयथा । साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववृत्तित्वंहिव्यभिचारइतिव्यधिकरणधर्मावच्छिन्नाभावचिन्तामणिः ॥ सचत्रिविधः । साधारणासाधारणा नुपसंहारिभेदात् । तत्रविपक्षवृत्तित्वंसाधारणत्वम् । सर्वसपक्षव्यावृत्तत्वमसाधारणत्वम् । व्याप्तिग्रहानुकूलैकधर्म्युपसंहारोभावोयत्रसत्वमनुपसंहार्यः । इतिसव्यभिचारचिन्तामणिः ॥ विशिष्टोभिचारः ॥ व्यभिचरणंवा । चर० । घञ् ॥

व्यभिचारिणी । स्त्री० परपुरुषगामिन्याम् । कुलटायाम् ॥ यथा । हृताधिकारांमलिनांपिण्डमात्रोपजीवनीम् । परिभूतामधःशय्यांवासयेद्व्यभिचारिणीम् ॥ व्यभिचारोव्यतिक्रमोऽस्त्यस्याः । इनिः । ङीप् ॥

व्यभिचारी । पुं० चतुर्स्त्रिंशत्प्रकारशृङ्गारभावविशेषे ॥ तेयथा । निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः । आलस्यञ्चैवदैन्यञ्चचिन्तामोहः स्मृतिर्धृतिः ॥ व्रीडाचपलता

हर्षश्च वेगो जडता तथा गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ सुप्तो विबोधोऽमर्षश्चावहित्थमोग्रतामतिः। उपलभ्य व्याधिस्तथोन्मादो मरणं तथा ॥ त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः इति हेमचन्द्रः ॥ साहित्यदर्पणे त्रयस्त्रिंशदुक्ताः। यथा। विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः। स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च तद्भिदाः॥ स्थिरतया वर्त्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भावतिरोभावाभ्यामाभिमुख्येन चरणाद्व्यभिचारिणः कथ्यन्ते। के ते० तत्राह। निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः स्वप्नापस्मारगर्वा मरणमलसतामर्षनिद्रावहित्थाः। औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसन्त्रासलज्जा हर्षासूयाविषादाः सधृतिचपलताग्लानिचिन्तावितर्का इति ॥ त्रि० व्यभिचारविशिष्टे ॥

व्ययः। पुं० अर्थापचये। वित्तस्यापगमे। उदाह० खरचं० इ० भा० ॥ पूर्वगृहीतदेहेन्द्रियादिवियोगे। धर्मादिषु विनियोगे। क्षये ॥ वत्सरविशेषे। तत्फलं यथा। दुर्भिक्षं जायते घोरं सर्वोपद्रवसंयुतम्। अनावृष्टिः समाख्याता व्यये संवत्सरे प्रिये। २० ॥ न० लग्नाद्द्वादशभवने व्ययवनम्। व्ययविस्तसमुत्सर्गे ऽर्त्त:। घञ्० अच्वा। विपूर्वाद्दिणएरच्वा ॥

व्ययितः। त्रि० कृतव्यये ॥

व्ययी। त्रि० व्यययुक्ते। यथा। द्रविणं परिमितमधिकव्ययिनं जनमाकुलीकुरुते। जीर्णांशुकमिवपीनस्तनजघनायाः कुलीनायाः॥

व्यर्थः। त्रि० निरर्थके। मोघे। विफले ॥ यथा। भर्त्तानिश्वसितेऽप्यसूयतिमनोजिघ्रः सपत्नीगणः श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः। तद्दूरादयमञ्जलिः किमधुनाहग्भङ्गिभाजेन ते वैदग्धीमधुरप्रबन्धरसिकव्यर्थोऽयमत्रश्रमइति ॥ विशेषणगतः अर्थोयस्मात्॥

व्यर्थभाषणम्। न० निरर्थकेव्यापारे। यथा। देवराग्रप्रसङ्गाच्चपरार्थपरिकल्पनात्। नर्महासप्रसङ्गाच्चभाषणं व्यर्थभाषणमितिदेवलः॥

व्यलीकः। पुं० नागरे। षिङ्गे ॥ न० अप्रिये ॥ अकार्ये ॥ वैलक्ष्ये ॥ पीडने। व्यङ्गे। विशेषणअलति। अलभूषणादौ। अलीकादयश्च इति साधुः ॥ विगतःनृते। विगतमलीकम्। विपर्ययेपीतिस्वामी ॥

व्ययकलनम्। न० वियोगे। क्षीणे ॥ अङ्कस्यांतरकरणे। बाकिकाटा० इ० गौ० दे० भा० ॥

व्यवकलितः। त्रि॰ कृतव्यवकलने। वियोजिते। न॰ व्यवकलने॥

व्यवच्छिन्नः। त्रि॰ भिन्ने॥ विशेषिते

व्यवच्छेदः। पुं॰ पृथक्त्वे॥ बाणमुक्तौ॥

व्यवच्छेदकम्। न॰ विशेषणे॥

व्यवच्छेद्यम्। त्रि॰ विशेष्ये॥

व्यवधा। स्त्री॰ अन्तर्धायाम्। तिरोधाने॥ व्यवधानम्। डुधाञ्॰। आतश्चोपसर्गे इत्यङ्॥

व्यवधानम्। न॰ अन्तर्धौ। तिरोधाने। वस्त्वन्तरकृतेऽवच्छेदे। खड्गादेः कोषादिवदावरणे॥ व्यवपूर्वाद्धाञोल्युट्॥

व्यवधायकः। त्रि॰ व्यवधानकर्त्तरि॥

व्यवधिः। पुं॰ पिधाने। व्यवधाने॥ व्यवधानम्। डुधाञ्॰। उपसर्गे घोः किः॥

व्यवसर्गः। पुं॰ दाने॥ व्यवसर्ज्जनं सृज॰। घञ्॥

व्यवसायः। पुं॰ उपजीविकायाम्॥ उद्यमे फलाव्यभिचार्युद्यमे॥ यथा। व्यवसायिनां व्यवसायः फलाव्यभिचार्युद्यमो भगवद्विभूतिरिति। निश्चये॥

व्यवसायात्मिका। स्त्री॰ निश्चयात्मिकायां बुद्धौ॥ व्यवसायो निश्चयः आत्मा यस्याः॥

व्यवसायी। त्रि॰ कृतनिश्चये॥ सोद्यमे॥ व्यवसायविशिष्टे॥ वाणिज्यकारके॥ अनुष्ठातरि॥

व्यवसितः। त्रि॰ निश्चये॥ प्रतारिते॥ अनुष्ठिते॥ विशिष्टमवस्यति स्म॰ अवसीयते स्म वा। षोऽन्तकर्मणि। क्तः। द्यतिस्यतीतीत्वम्॥

व्यवस्था। स्त्री॰ संस्थायाम्। सद्विषयकत्वनिर्धारणे॥ विशिष्टावस्था॥ शास्त्रनिरूपितविधौ॥ रचनानियमे॥ व्यवतिष्ठतेऽनया। ष्ठा॰। आतश्चोपसर्गे इत्यङ्। टाप्॥ व्यवस्थानं वा॥

व्यवस्थानः। पुं॰ श्रीहरौ॥ यस्मिन् व्यवस्थितिः सर्वस्य सः॥ जातिवर्णाश्रमतद्धर्मादिकान् विभज्य करोति वा। कृत्यल्युटो बहुलमिति॰ बहुलग्रहणात्कर्त्तरि ल्युट्। व्यवतिष्ठते सर्वं जगदस्मादनेन वा। अधिकरणे ल्युट् वा॥ न॰ व्यवस्थितौ॥

व्यवस्थापकः। पुं॰ व्यवस्थादातरि॥

व्यवस्थापितः। त्रि॰ निश्चिते॥

व्यवस्थितः। त्रि॰ अप्रचलिते। तत्तद्योगेनावस्थिते। प्रतिष्ठिते॥ विशेषेणावस्थितः॥ व्यवस्थां प्राप्ते॥ इतच्।

व्यवस्थितिः। स्त्री॰ अवस्थाने। व्यवस्थाने॥

व्यवस्त । अ० निश्चित्यार्थे ॥

व्यवहरणम् । न० व्यवहारे ॥

व्यवहर्त्ता । पुं० व्यवहारकर्त्तरि ॥ प्राड्विवाके ।

व्यवहार: । पुं० शास्त्रीयलौकिकादि व्यवहरणे । व्यौहार० इ० भा०॥ यथाहु: । अहमिदमिति यमति र्भ्यांसततं व्यवहरतिसर्वलोकोपि । प्रथमाप्रतीचिचरमाभिवसतिवपु-रिन्द्रियादिवाह्यार्थे ॥ इति ॥ द्रुम प्रभेदे । न्यासे ॥ पणे ॥ स्थितौ व्युत्पत्तौ ॥ विवादे । ऋणादाना दिविषयचतुष्पाद्न्याये ॥ ऋणादाना द्यष्टादशविषयो० विरुद्धार्थार्थिप्र-त्यर्थिवाक्यजनितसन्देहहारो वि-चारएवव्यवहार: । यथाहकात्या यन: । विनानार्थेऽवसन्देहहरणं हारउच्यते । नानासन्देहहरणा द्व्यवहारइतिस्मृतइति ॥

व्यवहारज्ञ: । पुं० प्राप्तव्यवहारे ॥ सतुषोडशवर्षानन्तरंभवति । यथा । बालआषोडशाद्वर्षात्पौगण्डोपि निगद्यते । परतोव्यवहारज्ञ:स्वतन्त्र: पितरावृतेइति ॥ त्रि० व्यवहार ज्ञातरि ॥

व्यवहारदर्शनम् । न० न्यायदर्शने । विचारकरणे ॥

व्यवहारपदम् । न० वादिनाराज्ञिनि वेदने ॥ यथाहयाज्ञवल्क्य: । स्मृ त्याचारव्यपेतेन० मार्गेणाधर्षित: परै: । आवेदयतिचेद्राज्ञेव्यवहा रपदंहितदिति ॥

व्यवहारपाद: । पुं० व्यवहारांशे । य था । पूर्वपक्ष: स्मृत: पादोद्वि पादश्चोत्तर: स्मृत: । क्रियापा दस्तथाचान्यश्चतुर्थोनिर्णय: स्मृत इति ॥

व्यवहारमातृका । स्त्री० व्यवहारोप योगिक्रियायाम् ॥ साचमिताऽच रातोनुसन्धेया ॥

व्यवहारमार्ग: । पुं० व्यवहारविषये । व्यवहारपदे ॥

व्यवहारविधि: । पुं० धर्मशास्त्रे । व्यवहारस्यविधाने ॥

व्यवहारविषय: । पुं० व्यवहार-पदे ॥

व्यवहारिका स्त्री० लोकयात्रायाम् ॥ वर्द्धन्याम् । सम्मार्ज्जन्याम् ॥ इङ्गुदे ॥

व्यवहारी । त्रि० व्यवहारविशिष्टे ॥

व्यवहार्य्य: । त्रि० व्यवहरणीये । व्य वहर्त्तव्ये । व्यवहारयोग्ये ॥

व्यवहित: त्रि० दूरेस्थिते ॥ व्यवधान विशिष्टे । सान्तरे । भित्त्याद्यन्तरि ते ॥ तिरोहिते ॥

व्यवहृत: । त्रि० कृतव्यवहारे ॥

व्यवहृति: । स्त्री० व्यवहारे ॥

व्यवाय: । पुं० सुरते । ग्राम्यधर्मे ।

मैथुने ॥ अल्लर्त्तौ । व्यवधाने ॥ शुद्धाविति धरणिः ॥ न० ते जसि ॥ व्यवायनम् । इष्ण्गतौ० अवगतौवा । एरच्० घञ्वा ॥
व्यवायी । त्रं० स्त्री० कामुके ॥ त्रि० द्रव्यविशेषे ॥ व्यवायोऽस्मिन्वाऽस्ति । इनिः ॥
व्यश्नुवानः । त्रि० व्याप्नुवति ॥ अश्नोतेर्लटः शानजादेशः ॥
व्यष्टिः । स्त्री० व्यस्तव्यापिनि ॥ विशेषे । अध्यात्मादिविभागेनव्याप्तिव्यष्टिरितीरिता ॥
व्यसनम् । न० अशुभे ॥ सक्तौ ॥ दैवानिष्टफले । भ्रंसे ॥ पापे ॥ विपत्तौ । निष्फलोद्यमे ॥ स्त्रीपानमृगयादिष्वष्टादशविधेषु ॥ यथोक्तं मनुना । मृगयाक्षोदिवास्वप्नः परिवादः स्त्रियोमदः । तौर्य्यत्रिकंवृथाट्याचकामजोदशकोगणः ॥ पैशुन्यं साहसंद्रोहईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्चपारुष्यं क्रोधजोऽपिगणोऽष्टकः ॥ कामजेषुप्रसक्तोहिव्यसनेषुमहीपतिः । वियुज्यतेऽर्थधर्माभ्यांक्रोधजेष्वात्मनैवतु ॥ द्वयोरप्येतयोर्मूलंयंसर्वेकवयोविदुः । तंयत्नेनजयेल्लोभंतज्जावेतावुभौगणौ ॥ पानमक्षाः स्त्रियश्चैवमृगया चयथाक्रमम् । एतत्कष्टतमंविद्याच्चतुष्कंकामजेगणे ॥ दण्डस्यपातनं चैववाक्पारुष्यार्थदूषणे । क्रोधजेपिगणेविद्यात्कष्टमेतत्त्रिकंसदा ॥ सप्तकस्यास्यवर्गस्यसर्वत्रैवानुषङ्गिणः । पूर्वंपूर्वंगुरुतरंविद्याद्व्यसनमात्मवान् ॥ तथाहि० द्यूतात्पानंकष्टतरम्० मद्यपानेनमत्तस्यसंज्ञाप्रणाशात्० यथेष्टचेष्टयादेहधनादिविरोधइत्यादयोदोषाः० द्यूतेतुपाक्षिकोधनावाप्तिरप्यस्ति । स्त्रीव्यसनात्० द्यूतकष्टम्० द्यूतेहिवैरोद्भवादयोनीतिशास्त्रोक्तादोषाः० मूत्रपुरीषवेगधारणाच्चव्याध्युत्पत्तिः० स्त्रीव्यसनेपुनरपत्योत्पत्त्यादिगुणयोगोऽप्यस्ति । मृगयास्त्रीव्यसनयोः स्त्रीव्यसनंदुष्टम्० तत्रादर्शनंकार्याणांकालातिपातेनधर्मलोपादयोदोषाः० मृगयायांतुव्यायामेनारोग्यादिगुणयोगोऽप्यस्तीत्येवंकामजचतुष्कस्यपूर्वंपूर्वंगुरुदोषम् ॥ क्रोधजेष्वपित्रिषु० वाक्पारुष्यात्० दण्डपारुष्यंदुष्टम्० अङ्गच्छेदादेरशक्यसमाधानत्वात्० वाक्पारुष्येतु० कोपानलो० दानमानपानीयसेकैः शक्यः शमयितुम् । अर्थदूषणात्० वाक्पारुष्यदोषवन्ममर्मपीडाकरम्० वाक्पारुष्यस्यदुश्चिकित्स्यत्वात् । एवंपूर्वंपूर्वंदुष्टतरंत्रयेऽपीत्यर्थः । यतोव्यसनासक्तिरनर्थावहा ॥ व्यसनस्यचमृत्योश्चव्यसनंकष्टमुच्यते । व्यसन्यधोऽधो

व्रजतिस्वर्याह्यव्यसनीमृत: ॥ इति ॥ अन्यचापि । एकैकव्यसनासक्ता: सर्वे मृत्युवशंगता: । य: पुन: संहतान्सेवेद्विषयान्विषयी नर: । सपतेम्महदैश्वर्याच्छिन्नमूलद्रुमद्रुत ॥ चौर्य्यवव्यसनान्यदा कामजानिभवन्त्युत । मिथ्यावाक्यं परमंतस्माद्गृहतरावुभौ । परदाराभिगमनंचिनावैरस्तुरौद्रतेतिरामायणम् ॥ व्यस्यते । असुक्षेपणे । भावकर्मकरणादौल्युट् ॥ सर्वथैतत्सम्पादयिष्यामीत्याग्रहोव्यसनम् ।
व्यसनवारक: । पुं० राजर्षिविशेषे
व्यसनार्त्त: । त्रि० उपरक्ते । दैवमानुषान्यतरपीडायुक्ते ॥ व्यस्यतिश्रेयोमार्गात्०व्यसनम्०तेनार्त्त: ॥
व्यसनी । त्रि० व्यसनग्रस्ते । पञ्चभद्रे । व्यसनमस्यास्ति० अस्मिन्ना । इनि: ॥
व्यस्त: । त्रि० व्याकुले । व्याप्ते ॥ प्रत्येकम् । पृथक्पृथगर्थे ॥ विपरीते ॥ व्यस्यतेस्म । असुक्षेपणे । क्त: । विभक्ते । विक्षिप्ते ॥ *
व्यस्तपदम् । न० ऋणादौनाभियोगेपदान्तरेणोत्तरे ॥ यथा ॥ सुवर्णशताभियोगे० अनेनाहंताडितइति ॥
व्यस्तारम् । न० हस्तिनोमदप्रयोगे ॥
व्याकरणम् । न० वेदस्यानेशब्दशास्त्रे ॥ विशेषेणव्याक्रियन्तेव्युत्पाद्यन्तेशब्दाअनेन । डुकृञ्० ल्युट् । प्रादिसमास: ॥ अस्यारम्भेशुद्धिर्यथा । नयेच्छब्दशास्त्रारम्भकालंकृतोशिसुषोशीशमेविद्विषेषु । चलच्छिप्रमैत्रोडुशे वाश्रिते पुष्यतोधर्मशास्त्रादिकारम्भकालमिति । अथोक्तंमहाभाष्ये । पुराकल्पएतदासीत् । संस्कारकालोत्तरंब्राह्मणाव्याकरणंस्माधीयते०तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानिज्ञेभ्योवैदिका: शब्दाउपदिश्यन्ते० तदद्यत्वे नतथा०वेदमधीत्यत्वरिताबक्तारोभवन्तीति । त्वरिताविवोढार: स्मितिकैयट: । संस्कारउपनयनम् । करणमाभ्यन्तरप्रयत्न: । अनुप्रदानंनादादिर्बाह्य: प्रयत्न: । तेनअधीतव्याकरणशिक्षेभ्यइत्यर्थ इतिविवरणम् ॥
व्याकार: । पुं० आकारे ? कृञो घञ् ॥
व्याकीर्ण: । त्रि० विकीर्णे । विक्षिप्ते ॥ *
व्याकुल: । त्रि० शोकादिभिरितिकर्त्तव्यतापरिज्ञानशून्ये ॥ विह्वले ॥ व्याकोलति । कुलसंस्त्यानेबन्धुषु । इगुपधेतिक: ॥ उपद्रुते ॥ सम्भ्रान्ते ॥
व्याकुलात्मा । त्रि० शोकाभिहतचित्ते ॥

व्याकृतः । पुं० कार्यब्रह्मणि । सम्भूतौ । हिरण्यगर्भे ॥

व्याकृतिः । स्त्री० भङ्ग्यां ॥ व्युत्पत्तौ ॥ व्याकरणम् । डुकृञ्० । क्तिन् ॥ विशिष्टाकृतिर्वा ॥ व्यञ्जने ॥

व्याकोशः । त्रि० व्याकोषे । विकसिते ॥ व्यावृत्तः कोशः सङ्कोचोऽस्मात् । प्रादिसमासः ॥

व्याकोषः । पुं० प्रफुल्ले । उत्फुल्ले । विकसिते ॥ व्यावृत्तः कोषः सङ्कोचोऽस्मात् । प्रादिभ्यो धातुजस्येति समासः ॥

व्याक्षेपः । पुं० अन्तराये ॥ व्याक्षेपो भविष्णुत्वाः कार्यसिद्धेर्हि लक्षणम् ॥

व्याख्या । स्त्री० विवरणे । व्याख्यानम् । ख्या० । आतश्चोपसर्गे इत्यङ् । टाप् ॥

व्याख्यागम्यम् । न० उत्तराभासभेदे ॥ यथा अस्तव्यस्तपदव्यापिनिगूढार्थं तथाकुलम् । व्याख्यागम्यमसारञ्चोत्तरं शस्यते बुधैः ॥ व्याख्ययागम्यते ज्ञायते यत् गमॢ० । पोरदुपधादिति यत् ॥ *

व्याख्यातः । त्रि० विवृते । कथिते । विस्पष्टमाख्याते ॥

व्याख्याता । त्रि० विवरणकर्त्तरि ॥

व्याख्यानम् । न० व्याख्यायाम् ॥ यथास्वलक्षणम् । पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम् ॥ व्याख्यानसाधने ॥ व्याख्यायतेऽनेन । ख्या० । करणे ल्युट् ॥

व्याघातः । पुं० विष्कम्भादियोगान्तर्गतयोगभेदे ॥ अत्रजातस्य फलं यथा । व्याघातकर्ता च सतां नितान्तं व्याघातजन्मा मनुजः कठोरः । असत्यभाषी कृपया विहीनो मन्दश्च योदीर्घतनुः कृशाङ्गः ॥ अन्तराये । विघ्ने । घाते । प्रहारे । विशिष्टाघातः ॥ अलङ्कारविशेषे ॥ तल्लक्षणं यथा । तद्यथ साधितं केनाप्यपरेण तदन्यथा । तथैव यद्विधीयेत स व्याघात इति स्मृतः ॥ येनोपायेन यदेकेनोपकल्पितं० तस्यान्येन जिगीषुतया तदुपायकमेव यदन्यथाकरणं० सत्वसाधितत्वस्तुव्याहतिहेतुत्वात्० व्याघातः ॥ उदाहरणम् । दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः । विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥

व्याघ्रः । पुं० शार्दूले । द्वीपिनि । रक्तैरण्डे ॥ करञ्जे ॥ नराद्युत्तरस्थः श्रेष्ठे ॥ यथा नरव्याघ्रः । व्याजिघ्रति । घ्रा० । व्याङ्घ्राति सजातीयमिति वा । यद्वा आतश्चोपसर्गे इति कः । पाघ्राध्मधेट्दृशः ।

ग्रहणतिशीन । घ : संज्ञायांमितिनि षेधात् ॥

व्याघ्रदल : । पुं० एरण्डे ॥

व्याघ्रनख: । पुं० स्नुहीवृक्षे ॥ व्यालनखे । व्यसनफले ॥ व्याघ्रस्य नखे ॥ न० नखीनामनिगन्धद्रव्ये । व्याडायुधे । करजे । चक्रकारके कन्दविशेषे ॥ नखक्षतविशेषे ॥ व्याघ्रस्य नखमिव ॥

व्याघ्रनखकम् । न० नखक्षते ॥

व्याघ्रनायक : । पुं० शृगाले । इ० रा० घट : ॥

व्याघ्रपात् । पुं० विकङ्कते । ग्रन्थिले ॥ व्याघ्रस्य पादाएवपादमूलान्यस्य ॥ मुनिविशेषे ॥ त्रि० व्याघ्रतुल्यचरणे ॥

व्याघ्रपाद : । पुं० विकङ्कतवृक्षे ॥ विकण्टकवृक्षे ॥ मुनिविशेषे ॥ रक्तैरण्डे ॥

व्याघ्रपुच्छ : । पुं० एरण्डमात्रे । व्याघ्रपुच्छमिवपुच्छमस्य ॥

व्याघ्राट : । पुं० भरद्वाजपक्षिणि । व्याघमटति । अट० । कर्मण्यण् । व्याघ्रइवअटतिवा । अच् ।

व्याघ्रादनी । स्त्री० विवृतायाम् ॥

व्याघ्रायुधम् । न० नखाख्यगन्धद्रव्ये ॥

व्याघ्रास्य : । पुं० विडाले ॥ न० व्याघ्रमुखे ॥

व्याघ्री । स्त्री० निदिग्धिकायाम् । कण्टकार्याम् ॥ व्याजिघ्रति । घ्रा० । व्याघ्रादिभिरितिलिङ्गादातश्चोपसर्गेइतिक:० नतुश : । गौरादि: ॥ धूम्रवर्णायाम् वराटिकायाम् ॥ व्याघ्रस्त्रियाम् ॥ यथा । व्याघ्रीवास्तेजराचायुर्यातिभिन्नघटाम्बुवत् । निघ्नन्तिरिपुवद्रोगास्तस्माच्छ्रेय: समाचरेत् ॥ इ० कुलार्णव : ॥

व्याङ्घि : । पुं० व्यङ्गसुते ॥ अपत्ये इञ् । स्वागतादीनाञ्चेतिवृद्धिनिषेधऐजागमश्चन ॥

व्याचिख्यासित : । त्रि० व्याख्यातुमिष्टे ॥

व्याचिख्यासु : । त्रि० व्याख्यातुमिच्छौ ॥

व्याज : । पुं० शाठ्ये । कपटे ॥ स्वरूपाच्छादने । अपदेशे । मिषे ॥ व्यजन्ति० विपक्ष्यनेन । घञ्० । हलश्चेतिघञ् । निष्ठायांसेट् स्वान्नकुत्वम् ॥

व्याजनिन्दा । स्त्री० अलङ्कारविशेषे ॥ यथा ॥ निन्दायांनिन्दयाव्यक्तिर्व्याजनिन्देतिगीयते । विधेसनिन्द्योयस्तेप्राणेकमेवाहरच्छिर : ॥ अत्रहरनिन्दया० विषमविपाकंसंसारंप्रवर्त्तयतोविधेर्निन्दाव्यङ्ग्या० व्याजनिन्दा ॥ यथावा । वि

धिरेवविशेषगन्धॆवीय: काटस्वंरट कस्तवापराध:। सत्त्कारतरीचकार योसौसत्त्वासंस्सरसिनकोकिलेन॥ अन्यस्तुत्या॰ अन्यस्तुत्यभिव्यक्तिरिति पञ्चमप्रकारव्याजस्तुतिप्र।तवन्द्योयं व्याजनिन्दा॥ कपटकुत्सायाम्॥

व्याजस्तुति:। स्त्री॰ अलङ्कारविशेषे॥ यथा। उक्तिर्व्याजस्तुतिर्निन्दा स्तुतिभ्यांस्तुतिनिन्दयो:। क: स्वर्धुनिविवेकस्ते पापिनोनयसेदिवम्॥ साधुदूतिपुन: साधुकर्त्तव्यं किमत: परम्। यन्मदर्थे विलूनासिदन्तैरपिनखैरपि॥ निन्दया स्तुते:॰ स्तुत्यानिन्दयावा॰ अवगमनं व्याजस्तुति:। क: स्वर्धुनी त्युदाहरणे॰ विवेकोनास्तीतिनिन्दा व्याजेन॰ गङ्गामुक्तिप्रदेय॰ महापातकिनोपि॰ स्वर्गं नयतीतिव्याजरूपयानिन्दयातत्प्रभावातिशयस्तुति:। साधुदूतीत्युदाहरणे॰ मदर्थं मियन्तंक्लेशमनुभूतवत्यसीति व्याजरूपयास्तुत्या॰ मदर्थंनगतासि॰ किन्तुरन्तुमेवगतासि॰ धिक्त्वांदूतिकांधर्मविरुद्धकारिणीमितिनिन्दावगम्यते॥ कपटप्रशंसायाम्॥

व्याजोक्ति:। स्त्री॰ छलवाक्ये॥ अलङ्कारविशेषे॥ यथा॰ व्याजोक्तिरन्यहेतूक्त्यायदाकारस्यगोपनम्। सखिपश्यगृहारामपरागैरस्मिधूसरा॥ अत्रचौर्यरसक्रतसङ्केतभूपृष्ठलुठनलग्नधूलिजालस्यगोपनम्॥ कस्यवानभवेद्रोष: प्रियाया: सव्रणेधरे। सभृङ्गपद्ममाघ्राणीर्वारितापिमयाधुना॥ उपपतिनाखण्डिताधरायानायिकाया: सकाशमागच्छन्तंप्रियमपश्यन्त्येवसख्या नायिकांप्रतिहितोपदेशव्याजेनतम्प्रति॰ नायिकापराधगोपनं च्छेका पह्नुतेरस्यास्चाय विशेष:। यत्तस्यांवचनस्यान्यथानयनेनापह्नव:। अस्यामाकारस्यहेत्वन्तरवर्णनेन॰ गोपनमिति॰ लक्षणे॰ लक्ष्यनाम्निचोक्तिग्रहणमाकारस्यगोपनार्थंहेत्वन्तरप्रत्यायकव्यापारमात्रेपलक्षणम्॥

व्याड:। पुं॰ हिंस्रपशौ॥ मांसादिपशौ॥ सर्पे॥ व्याडति। अ उद्यमे। व्याङ्पूर्व:। पचाद्यच्॥ खले। वञ्चके॥ इन्द्रे।

व्याडायुधम्। न॰ व्याघ्रनखाख्यगन्धद्रव्ये॥ व्याडस्यव्याघ्रस्यायुधमिव॥

व्याडि:। पुं॰ मुनिभेदे। विन्ध्यस्थे नन्दिनीसुते। मेधाविनि॥ व्यडस्यापत्यम्। इञ्। स्वागतादित्वाद्वृद्धिनिषेधऐजागमश्च न॥

व्यात्त:। त्रि॰ विवृते। वाया॰ इ॰ भा॰ प्र॰॥ यथाव्यात्तानन:॥

व्याध्युषी। स्त्री॰ रसिकजनानामन्योन्यंजलक्रीडने। करपार्श्वे। ज

लक्रीडायाम् । करपत्रिकायाम् । छींटाखेलना० इ० छींटाछींटीसेखेलना० इ० ब० भा० ॥ व्यतिहारेणउक्षणम्० परस्पराभ्युक्षणम् । उक्षसेचने । कर्मव्यतिहारेणच्स्त्रियामितिणच्प्रत्ययः । णचः स्त्रियामञ्। टिड्ढाणञित्यादिनाङीप् ॥

व्यादित : । त्रि० प्रसारिते ॥

व्यादिष्ट : । त्रि० सन्दर्शिते ॥ व्याङ्पूर्वाद्दिशेः क्तः ॥

व्याध : । पुं० मृगवधाजीवे । मृगयौ । लुब्धके ॥ अयंसवर्णस्त्रिभार्यायांचत्रियाज्जातः । यथोक्तंब्रह्मवैवर्त्ते । नापितादृगोपकन्यायांसर्वस्वी० तस्ययोषिति । क्षत्राद्बभूवव्याधश्चबलवान्मृगहिंसकवृत्ति दुष्टे ॥ तारामयेवे ॥ भेदने ॥ विध्यति । व्यधताडने । श्याद्व्यधेतिणः ॥

व्याधभीत : । पुं० मृगे ॥

व्याधाम : । पुं० वज्रे ॥ इ० इन्द्रः ॥

व्याधि : । स्त्री० कुष्ठौषधौ ॥ रोगे । धातुवैषम्यनिमित्ते० ज्वरातीसारादिरूपेविकारे ॥ चिकित्साशास्त्रे० पञ्चमहाभूतशरीरिसमवायः पुरुषइत्युच्यते। तस्मिन्क्रियासोऽधिष्ठानम्० कस्माल्लोकस्यद्वैविध्यात् । लोकोहिद्विविधः स्थावरोजङ्गमश्च । द्विविधात्मकएवाग्नेयः सौम्यश्च० तद्भूयस्त्वात् । पञ्चात्मकोवा । तत्रचतुर्विधोभूतग्रामः । स्वेदजाण्डजोद्भिज्जजरायुजसंज्ञः । तत्रपुरुषप्रधानम् । तस्योपकरणमन्यत् । तस्मात्पुरुषोधिष्ठानम् । तद्दुःखसंयोगाव्याधयइत्युच्यन्ते । तेचतुर्विधाः० आगन्तवः० शारीरा० मानसाः० स्वाभाविकाश्चेति । तेषामागन्तवोभिघातनिमित्ताः । शारीरास्त्वन्नपानमूलावातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः । मानसास्तु० क्रोधशोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्यकामलोभप्रभृतयइच्छाद्वेषभेदैर्भवन्ति । स्वाभाविकाः क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयः तएतेमनः शरीराधिष्ठानाः ॥ तेषांसंशोधनसंशमनाहाराचाराः सम्यक्प्रयुक्तानिग्रहहेतवः इत्यादिसुश्रुतेप्रथमाध्यायः ॥ विगतआधिरनेन ॥ विशिष्टआधयोस्माद्वा ॥ व्याधानंवा । उपसर्गेघोः किः ॥

व्याधिघात : । पुं० आरग्वधे ॥ व्याधीन्हन्ति । हन० कर्मण्यण् । हनस्तोचिण्णलोः ॥

व्याधित : । त्रि० व्याधियुक्ते । आमयाविनि । आतुरे ॥ व्याधिः सञ्जा

तीश्च । तदस्य सञ्जातं तारकादिभ्य इतच् ॥
व्याधितन्ता । पुं॰ वाराहीकन्दे ॥
त्रि॰ व्याधिघातके ॥
व्याधूत: । त्रि॰ कम्पिते ॥ विशेषेण आसमन्ताद्धूत: ॥
व्यान: । पुं॰ विष्वग्गमनवत्यखिलशरीरवर्त्ति निदेहस्थपञ्चवायवन्तर्गतानिलविशेषे ॥ प्राणापानयोर्नियमनकर्माधारणामन्युत्पादनादिवीर्यवत्कर्म हेतुत्वादखिलशरीरवर्त्ती व्यानइत्यर्थ: ॥ व्यानोविनामयत्यङ्गं व्याने व्याधिप्रकोपन: । प्रति द्रानंतथाकण्ठाद्व्यापनाद्व्यानउच्यते ॥ व्याप्त्याअनित्यनेनइत्यर्थे तिघञ् ॥
व्यानतम् । न॰ रतिबन्धान्तरे ॥ यथा । स्वेच्छया भ्रमति वल्लभे प्रियायो प्रिदाचरति वल्लभायितम् । व्यानतं रतमिदं यदि प्रियाश्चादधोमुखचतुष्पदाकृति: ॥
व्यानद्ध: । त्रि॰ विशेषेणबद्धे ॥
व्यापक: । त्रि॰ अपरच्छिन्ने । अन्यूनदेशकालवर्त्तौ ॥ विष्णौ ॥ स्वसत्ताप्रकाशाभ्यां नामरूपेऽव्याप्नोति । आप्लृव्याप्तौ । ण्वुल्तृचाविति ण्वुल् ॥ तद्भिन्नवृत्त्यत्यन्ताभावाऽप्रतियोगिनि । यथा । साध्यस्यव्यापकोयस्तु हेतोरव्यापकस्तथा । सउपाधिभवेत्तस्यनिष्कर्षोयं प्रदर्श्यते ॥ इ॰भा॰प॰ ॥ आच्छादके ॥ यथा । पद्मस्य व्यापकं सारमसन्दिग्धमनाकुलम् । अव्याख्यागम्यमित्येवमुत्तरं तद्विदोविदु: ॥ पद्मस्य॰ भाषार्थस्य॰ व्यापकमाच्छादकम्॰ अभियोगाप्रतिकूलमितियावत् । इतिव्यवहारतत्त्वम् ॥ लिंगिनि ॥ येनचप्रतिबद्धं तद्व्यापकम् ॥ वाच्ये ॥
व्यापकता । स्त्री॰ व्यापकत्वे ॥
व्यापत्ति: । स्त्री॰ व्याधौ । मरणे ॥
व्यापद् । स्त्री॰ आपदि ॥ मृत्यौ ॥ व्याङ्पूर्वात्पदे: क्विप् ॥ विशिष्टाआपद् ॥
व्यापनम् । न॰ आच्छादने ॥ व्याप्तौ ॥
व्यापन्न: । त्रि॰ मृते ॥
व्यापाद: । पुं॰ द्रोहचिन्तने ॥ व्यापादनम् । व्याङ्पूर्वकपदधातोर्ण्यन्ताद्भावेघञ् ॥
व्यापादनम् । न॰ मारणे ॥ व्याङ्पूर्वात्पदधातोर्ण्यन्ताल्ल्युट् ॥
व्यापादित: । त्रि॰ मारिते ।
व्यापार: । पुं॰ कर्मणि । क्रियायाम् ॥ उद्यमभवने ।
व्यापारित: । त्रि॰ नियुक्ते ॥
व्यापारी । त्रि॰ व्यापारविशिष्टे व्यवसायिनि ॥
व्यापिका । स्त्री॰ व्यापिन्याम् । व्या

प्नोति । आप्लृ० ण्वुल् । टाप् । ह्रस्वम् ॥
व्यापी । त्रि० विभौ । व्यापके । आत्मनि । पुंसि ॥ सकलव स्तुव्यापनशीले । व्याप्तुं शीलमस्य । आप्लृ० । सुप्यजातौ णिनिस्ताच्छील्ये इति णिनिः ॥
व्यापिनी । स्त्री० व्यापिकायाम् ॥
व्याप्नुवान : । त्रि० व्याप्रियमाणे ॥
व्यापृत : । पुं० कर्मसचिवे । आयुक्ते ॥ त्रि० व्यापारयुक्ते ॥
व्यापृति : । स्त्री० व्यापारे ॥
व्याप्त : । त्रि० ख्याते । समाक्रान्ते । यथा । यद्यत्कार्यं कारणेन व्याप्त मन्तर्बहिश्चेति । कारणत्वेन सर्वं कार्याणां व्यापनाद्व्याप्त : परमात्मा । पुंसि ॥ व्याप्यतेस्म ॥ आप्लृ० । गत्यर्थाकर्मकेति क्त । कार्त्स्न्येन स्वस्थे । तते ॥ सर्वं कार्यमुपादान त्वेन व्याप्नोति । विपूर्वादाप्नोते : पूर्वेणकर्त्तरि क्त : ॥
व्याप्ति : । स्त्री० व्यापने ॥ रम्भे । इति मेदिनी ॥ लम्भने । इति हेम चन्द्र : ॥ यत्र धूमस्तत्राग्निरिति साहचर्यनियमे ॥ व्यापनम् । आप्लृ० । स्त्रियां क्तिन्नाबादिभ्यश्चेति क्तिन् ॥ आप्तौ ॥
व्याप्यम् । न० लिङ्गे । साधने ॥ अधिकदेशकालनियमं व्याप्यम् ॥ व्यापकाभावे व्याप्याभावो व्याप्य : ॥ व्याप्यते । आप्लृ० । ऋहलोर्ण्यत् ॥ कुष्ठौषधौ । पालके । व्याधौ । उत्पले ॥ त्रि० व्याप्तिविशिष्टे । व्याप्तिकर्मणि ॥ आप्तरि ॥ शङ्कितसमारोपितोपाधिनिराकरणे न स्वभावप्रतिबद्धं व्याप्यमितिसाङ्ख्या : ॥ अस्यार्थ : । संशययुक्त : शङ्कित : ॰विपर्ययुक्त : समारोपित : ॰उपाधिर्विशेषणम् स्वभावेति । भाव : सत्ता॰तया प्रतिबद्धमित्यर्थ : । प्रतिबद्धं गृहीतम् ॰तेन लिङ्गसत्ताभावेनाऽनुमानं सिद्ध्यतिभाव : ॥
व्याप्यत्वासिद्ध: । पुं० सोपाधिके ॥ साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधि : । साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम् । साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम् । पर्वतो धूमवान् वह्निमत्वादित्यत्रार्द्रेन्धनसंयोगउपाधि: । यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकता । यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति॰ अयोगोलके॰ आर्द्रेन्धनाभावादिति साधनाव्यापकत्वम् । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोगउपाधि : । सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धहेत्वाभास : ॥

अव्यभिचारितसामानाधिकरण्यस्या भावे ॥

व्यामः । पुं॰ बाह्वोः सकरयोस्ततयो स्तिर्यगन्तरे । स्वस्वपार्श्वप्रसारित योर्बाह्वोर्मध्ये । व्यायामे । न्यग्रोधे ॥ विशेषेणाभ्यमतेऽनेन । अमगतौ । हलश्चेतिघञ् ॥

व्यामनम् । न॰ व्यामे ॥

व्यामिश्र: । त्रि॰ सङ्कीर्णे ॥

व्यामृष: । त्रि॰ प्रमृष्टे ॥

व्यामोह: । पुं॰ मोहे । विपरीतज्ञाने ॥

व्यायच्छमान: । त्रि॰ व्यायामंकुर्वति ॥

व्यायत: । त्रि॰ व्यापृते ॥ दीर्घे ॥ दृढे ॥ अतिशये ॥ विशेषेणायतः ॥

व्यायाम: । पुं॰ वियामे ॥ दुर्गसञ्चरे ॥ शरीरायासजनकेपौरुषेश्रमे । मल्लक्रीडायाम् ॥ अस्यगुणायथा । व्यायामेहिसदापथ्योबलिनांस्निग्धभोजिनाम् । सचशीतेवसन्तेचतेषां पथ्यतम: स्मृत: । सर्वेष्वृतुषुस र्वैर्हि शूरैरात्महितार्थिभि: । श क्त्यर्द्धेनतुकर्त्तव्योव्यायामोहन्त्यतो व्ययाम् ॥ कुक्षौललाटेग्रीवायांय दाघर्मः प्रवर्त्तते । मत्स्यबंतंविजा नीयाद्रायतोच्छ्वासमेवच ॥ लाघवं कर्मसामर्थ्यंस्थैर्यंक्लेशसहिष्णुता । दोषक्षयोग्निवृद्धिश्चव्यायामादुपजा यते ॥ व्यायामंकुर्वतोनित्यंविरु द्धमपिभोजनम् । विदग्धमविदग्धं वानिर्दोषंपरिपच्यते ॥ नचव्या यामसदृशमन्यत्स्थौल्यापकर्षणम् । नचव्यायामिनंमर्त्यंमर्दयन्त्यर योबलात् ॥ नचैनंसहसाक्रम्यज रासमधिगच्छति । व्यायामस्फुस्थ गात्रस्यपद्भ्यामुद्वर्त्तितस्यच ॥ व्या धयोनोपसर्पन्तिवैनतेयमिवोरगा: ॥ रक्तपित्तीक्षयीशोषीकासीश्वासी क्षतातुर: । भुक्तवान्स्त्रीषुचक्षीणो व्यायामंपरिवर्जयेत् ॥ वातपित्ता मयीबालोवृद्धोऽजीर्णीचसन्त्यजेत्॥ अतिव्यायामत: कासोरक्तपित्त प्रजायते । श्रम: क्लम: क्षयस्तृष्णा ज्वरश्छर्दिश्चजायते ॥ इतिराजवल्लभ: ॥ व्यामे ॥ इतिहेमचन्द्र: ॥

व्यायामवान् । त्रि॰व्यायामिनि ॥ व्यायामोऽस्त्यस्य। बलादित्वात्पक्षे मतुप्।तदभावे॰इनि:॥व्यायामी॥

व्यायास: । पुं॰ परिश्रमे ॥ विशिष्ट: आयास: ॥

व्यायोग: । पुं॰ दशविधरूपकान्तर्गत रूपकविशेषे ॥ यथा । स्यान्नाटक प्रकरणंभाण: प्रहसनंडिम: । व्या योग: समवाकारोवीथ्यङ्केहामृगा इति । अभिनेयप्रकारा: स्युर्भाषा: षट्संस्कृतादिका: ॥ इतिहेमच न्द्र: ॥

व्यालः । पुं॰ दुष्टगजे ॥ सर्पे ॥ श्वापदे ॥ सिंहे ॥ त्रि॰ खले ॥ शठे ॥ व्याहन्ति । अङउद्यमेव्या ङ्पूर्वः । पचाद्यच् । डलयोरैक्यस्मरणाद्व्यालः यद्वा विरुद्धमासमन्तादलति । अलतिवाचल॰ अङ॰ । डलयोरैक्यम् । पचाद्यच् ॥

व्यालकः । पुं॰ दुष्टगजे । गम्भीरवेदिनि ॥ तू॰ त्रि॰ शेषः ॥

व्यालखड्गः । पुं॰ व्यालनखे ॥

व्यालगन्धा । स्त्री॰ नाकुल्याम् । रास्नायाम् ॥

व्यालग्रहः । पुं॰ व्यालग्राहिणि ॥

व्यालग्राही । पुं॰ आहितुण्डिके । व्यालंगृह्णाति । नन्द्यादीति-णिनिः ॥

व्यालजिह्वा । स्त्री॰ महासमङ्गायाम् ॥

व्यालदंष्ट्रः । पुं॰ गोक्षुरे ॥

व्यालनखः । पुं॰ गन्धद्रव्यविशेषे । व्याघ्रनखे ॥

व्यालपत्रा । स्त्री॰ एर्वारौ ॥

व्यालबलः । पुं॰ व्यालनखे ॥

व्यालमालः । पुं॰ शिवे ॥ व्यालाः सर्पाएवमालायस्य ॥

व्यालमृगः । पुं॰ चित्रव्याघ्रे ॥

व्यालम्बः । पुं॰ रक्तैरण्डे ॥

व्यालायुधम् । न॰ व्याघ्रायुधे ॥ व्यालसिंहस्यआयुधमिव ॥

व्याली । त्रि॰ व्यालवति ॥

व्याली । स्त्री॰ दुष्टायाम् ॥

व्यालोडनम् । न॰ विमर्द्दने ॥

व्यालोलितः । त्रि॰ विलुलिते ॥

व्यावक्रोशी । पुं॰ परस्पराक्रोशने

व्यावर्त्तः । पुं॰ रोगभेदे ॥ विशिष्टआवर्त्ते ॥

व्यावर्त्तकः । त्रि॰ भेदके ॥

व्यावर्त्तनम् । न॰ इतरेतरवियोगस्थाने ॥ वेष्टने । वेठन॰ इ॰ भा॰

व्यावर्त्तयितुम् । अ॰ बाधितुमित्यर्थे

व्यावर्त्तिका । स्त्री॰ बाधिकायाम् । प्रतिबन्धिकायाम् ॥ यथा । बीभत्साप्रतिभान्तिकिन्नविषयाः किन्तुस्पृहायुष्मती॰ देहव्यापपयोमतीनिविशतेगाढोग्रहेषुग्रहः । अस्मोपास्मितिस्फुरत्यपिहृदिव्यावर्त्तिकावासना॰ कामामेयमतकर्मेहगहनादेवीसतांयातना ॥

व्यावर्त्तितः । त्रि॰ बाधिते । पराङ्मुखीकृते ॥

व्यावहारिकः । त्रि॰ व्यवहारसिद्धे ॥ व्यवहारेणचरति । चरतीतिठक् । स्वागतादिः ॥ विनयादित्वात्स्वार्थेवाठक् ॥

व्यावृत्त : । त्रि॰ निवृत्ते ॥ वृते ।
व्यावृत्ति: । स्त्री॰ व्यतिरेके । निरसने । खण्डने । अवृत्तौ ॥ यथा सर्वसपक्षव्यावृत्तिरेवदोषो॰ नविपक्षव्यावृत्तिरपितस्याननुगुणत्वात् ॥
व्याश्रय : । त्रि॰ विभिन्नाश्रये । नानापक्षसमाश्रये ॥ विभिन्नआश्रय : ॥
व्यास : । पुं॰ मुनिविशेषे । बादरायणे । पाराशर्य्ये । भगवति॰ कृष्णद्वैपायने । मुनीनांमध्ये भगवतोविभूतौ । येन॰ ऋग्वेदादिविभागेन॰ चतुर्धावेदाव्यस्ता : । तत्रर्ग्वेदएकविंशतिधाकृत : यजुर्नवाधिकशतधाकृत : । सामवेद: सहस्रधाकृत : अथर्वण: पञ्चाशच्छाखाभेदेनकृत : । एवंविभागेनचतुर्धावेदव्यस्ता : । अन्यानिचपुराणानि॰ व्यस्तान्यनेनेतिव्यास : । तंवेदशास्त्रपरिनिष्ठितशुद्धबुद्धिंचर्माम्बरंसुरमुनीन्द्रनुतंकवीन्द्रम् । कृष्णत्विषंकनकपिङ्गजटाकलापंव्यासनमामिशिरसातिलकंमुनीनाम् ॥ व्यस्यतिविभजतिविस्तारयतिवापूर्वंदस्यतेर्वाहुलकात्कर्त्तरिघञ् । वेदविस्तारकरणाद्व्यासनामाभगवान्मुनिरितिभागवतम् ॥पाठकब्राह्मणे ॥ यथा । विस्पष्टमद्रुतंशान्तंस्पष्टाक्षरपदन्तथा । कलस्वरसमायुक्तंरसभावसमन्वितम् ॥ बुद्ध्यमान : सदर्थंवेग्रन्थार्थंकृत्स्नशोनृप । ब्राह्मणादिषुसर्वेषुग्रन्थार्थंस्वार्पयेनृप । यएवंवाचयेद्ब्रह्मन्सविप्रोव्यासउच्यते ॥ विस्तृते । प्रपञ्चे । विस्तारे ॥ मानभेदे ॥ गोलस्थमध्यरेखायाम् ॥ व्यसनम् । असुचपणे । घञ् ॥
व्यासक्त : । त्रि॰ व्यापृते । विशेषासक्ते । संलग्ने ॥ व्यासक्त : कार्यान्तरं विस्मरतीत्यसावधानोक्ति : ॥
व्यासङ्ग : । पुं॰ विक्षेपे ॥ विशिष्टासङ्गे ॥ विशेषेणआसङ्ग : ॥ घञ्व्यासि ॥
व्यासमाता । स्त्री॰ सत्यवत्याम् । वासव्याम् ॥
व्यासिद्ध : । त्रि॰ निषिद्धे ॥
व्यासेध : । पुं॰ प्रतिषेधे । व्यासेधम् । व्याङ्पूर्वात्सिधतेर्घञ् ।
व्याहत : । त्रि॰ बाधिते ॥ विधूनिते ॥ अपनीते ॥ विशेषेणआहत : ॥ वार्ये ॥
व्याहति : । स्त्री॰ व्याघाते ॥
व्याहन्यमान: । त्रि॰ प्रतिषिद्ध्यमाने ।
व्याहरणम् । न॰ व्याहारे । यथा । स्नातुस्तुवरुणस्तेजोजुह्वतोऽग्नि : श्रियंहरेत् । भुञ्जानस्ययमस्त्वायुस्

स्मान्नवबाहरेत्पिप्पितिभविष्योत्त रपुराणम् ।।

व्याहरत् । त्रि० प्रस्तुवति ।

व्याहार : । पुं० उक्तौ । कथिते । वचसि ॥ व्याहरणम् । व्याङ्पूर्वात्•हृञोभावेघञ् ।

व्याहृतम् । त्रि० उक्ते ॥ सन्दिष्टे ।

व्याहृति : । स्त्री० भूरादिषु ॥ व्याहरतिभूरादिसप्तलोकान् । हृञ्० । व्याङ्पूर्वस्तत : • क्तिन् । व्याहारे ॥

व्युच्छिन्न : । त्रि० विमुक्ते ॥ विशेषेणोच्छन्ने ।।

व्युत : । त्रि० स्यूते ।। इ०हि०कोष : ।

व्युति : । स्त्री० व्यूतौइ०हि०कोष : ॥

व्युत्क्रम : । पुं० क्रमविपर्यये । व्यतिक्रमे । उत्क्रमे । अक्रमे । विशिष्टउत्क्रम : ।

व्युत्क्रमणम् । न० पृथगवस्थाने ॥ वात्पूर्वात्क्रमेर्ल्युट् ॥

व्युत्थानम् । न० स्वातंत्र्यकार्ये । चिप्तमूढविक्षिप्ताख्यभूमित्रये । समाधिपारणे ॥ विरुद्धमुत्थानम् । प्रादयोगतेतिसमास : ॥ वैपरीत्येनोत्थानंवा ॥ विरोधाचरणे । न्याय्यांवृत्तिंसमुल्लङ्घ्यतद्विरुद्धतयास्थिति : । व्युत्थानमुदितंराज्ञ : सामन्तोव्युत्थितोयथा ॥ एषयानुगुणतयास्थितिमतिक्रम्यतत्प्रतिकूलत्वेन•यास्थिति : सा•व्युत्थानमित्युदितंमहर्षिरितिशेष : । तत्रप्रसिद्धिंप्रमाणयति । राज्ञइति ।। प्रतिरोधने ॥ नृत्यभेदे ।। विशेषेणोत्थाने ।।

व्युत्थापनम् । न० बाधने ॥

व्युत्पत्ति : । स्त्री० सम्यग्ज्ञाने ।। संस्कारे ॥ विशेषेणोत्पत्ति : ।। विविधावोत्पत्ति : ।। शक्तिज्ञाने ।।

व्युत्पन्न : । त्रि० व्युत्पत्तियुक्ते ।। सम्यग्ज्ञानवति ।। संस्कृते । विशेषेणात्यन्तम्•उत्पन्न : परिचित : ।।

व्युत्पादक : । पुं० व्युत्पत्तिजनके ॥

व्युदसनम् । न० निरसने ।।

व्युदस्त : । त्रि० प्रतिषिद्धे ।।

व्युदास : । पुं० प्रतिषेधे ।।

व्युषित : । त्रि० पर्युषिते । वुसा•इतिभाषाप्रसिद्धे ।। व्युष्यतेस्म । उष• । क्त : ।। देशान्तरकृते ।।

व्युष्टम् । न० फले । प्रभाते । काल्•इ•भा• ।। फले ।। दिने ।। त्रि• उषिते । पर्युषिते ।।

व्युष्टि : । स्त्री० फले ।। समृद्धौ ।। स्तुतौ ।। व्युच्छनम्•व्युच्छतेवा । उच्छोविवासे ।। स्त्रियांक्तिन् ।। स्वकरणसंवेद्यविस्मृतत्त्वे । अपरोक्षख्यातौ ।।

व्यूढ: । त्रि० विन्यस्ते । व्यूहरचनया स्थिते ॥ संहते ॥ पृथुले । विशेषेणोह्यतेस्म । वहप्रापणे । क्त: ॥

व्यूढकङ्कट: त्रि० सन्नद्धे । वर्म्मिते । सज्जे । दंशिते । धृतसन्नाहे ॥ गूढोधृत: • कङ्कट: सन्नाहोयेन ॥

व्यूढि: । स्त्री० व्यूहे ॥ विन्यासे ॥ संहतौ ॥ पृथुलतायाम् ॥

व्यूत: । त्रि० ऊते । तन्तुसन्तते ॥

व्यूति: । स्त्री० वस्त्रादिवानेवाणौ ॥ विशिष्टाऊति: । वेञ: • ऊतिपूतीत्यादिनाक्तिनिनिपातित: ॥

व्यूह: । पुं० निर्माणे ॥ वृन्दे । समूहे । विभागे ॥ तर्के ॥ देहे ॥ विस्तारे ॥ बलविन्यासे । युद्धार्थसेनारचनायाम् । युद्धार्थसैन्यस्यदेशविशेषेविभज्यदुर्लङ्घ्यत्वेन सन्स्थापने ॥ व्यूहते । ऊहावितर्के । हुगुपधेतिक: ॥ व्यूह्यतेवा । घञ् ॥ विशिष्टऊहोवा ॥

व्यूहनम् । न० सैन्यसंस्थाने ॥

व्यूहपार्ष्णि: । पुं० व्यूहपृष्ठे । प्रत्यासारे । सैन्यस्यपृष्ठेधनु: शतद्वयान्तरेस्थितसैन्ये ॥ व्यूहस्य पार्ष्णि: पृष्ठभाग: ॥

व्यूहभेद: । पुं० बलविन्यासस्यप्रभेदे । व्यूहस्यभेदोविशेष: ॥ यथाहु: । समयमतुसैन्यस्यविन्यास: स्थानभेदत: । सव्यूहइतिविख्यातोयुद्धेषुपृथिवीभुजाम् ॥ व्यूहभेदास्तुचत्वारोदण्डोभोगोऽस्त्रमण्डलम् । असंहतश्चनिर्णीतानीतिसारादिसम्मता: ॥ अन्येपिप्रकृतिव्यूहा: क्रौञ्चचक्रादय: क्वचित् । तत्र । तिर्यग्वृत्तिस्तुदण्ड: स्याद्भोगोऽन्वावृत्तिरेवच । मण्डलंसर्वतोवृत्ति: पृथग्वृत्तिरसंहत: ॥ इति ॥ दण्डवद्वस्थानंदण्ड: । अन्योन्यानुगतावृत्तिर्भोग: । सर्पशरीरवदवस्थानं मण्डलम् । गजादीनांविजातीयैरमिश्रितानांस्थानमसंहत: । शकटमकरपताकासर्वतोभद्रदुर्ज्ययादयोऽन्येपिव्यूहा: सन्तितेषांलक्षणंभारतादिपुद्रष्टव्यम् ।

व्यो । अ० लीहे ॥

व्योकार: । पुं० लौहकारके ॥ व्यो इत्यव्ययंलौहवाचीतिश्रीभोज: । व्योकरोति । डुकृञ् • । कर्मण्यण् ॥

व्योम: । पुं • मयासुरपुत्रे ॥

व्योमकेश: । पुं० शिवे ॥ व्योम्निकेशायस्य । गङ्गाधारणायव्योमव्यापिन: केशायस्येतिवा ॥

व्योमचारी । पुं० देवतायाम् ॥ विहङ्गमे । ग्रहे ॥ चिरजीविनि ॥ त्रि० व्योमचरे ॥

व्योमचारिपुरम् । न० देवानांपुरे ॥ व्योमचारिणांपुरम् । शोभे ॥

व्योमधूम: । पुं० मेघे ॥

व्योम । न० वारिणि ॥ आकाशे ॥ भास्करस्याचर्नाश्रये ॥ व्ययति । व्येञ् संवरणे । नामन्सीमन्व्योमन्नित्यादिनामन्नन्तं निपातितम् ॥ यद्वा । व्ययति । बिंपूर्वकमनिन् । ज्वरत्वरेत्यूठ् । सवर्णदीर्घः । भवे धातुकेगुणः । अभ्रके ॥ लग्न दशमभवने ॥

व्योमनासिका । स्त्री० पक्षिविशेषे । भारत्याम् । गरुडोधिनि ॥

व्योम । न० पताकायाम् ॥

व्योममण्डलम् । न० आकाशे ॥

व्योममुद्गरः । पुं० निर्घाते ॥

व्यो । न० विमाने ॥ व्योम यात्यनेन । करणे ल्युट् । व्योम ल्युटि बहुलमितिकार्त्तिल्युट् ॥

व्योमसद् । पुं० गन्धर्वे ॥

व्योमस्थली । स्त्री० भूमौ ॥

व्योमाभः । पुं० बुद्धे ॥

व्योमोदकम् । न० दिव्योदके ॥

व्योषः । पुं० करिविशेषे ॥ न० चिकटुद्रव्ये । विशेषेणोषति । उष दाहे । पचाद्यच् ॥

व्रजः । पुं० गोष्ठे । गोकुले । गवांस्थाने ॥ अध्वनि । अयने ॥ वृन्दे । सङ्घे । व्रजति । व्रजगतौपचाद्यच् व्रजन्त्यनेनवा । गोचरसञ्चरवहव्रजेत्यादिनाघन् : साधुः ॥

व्रजकः । पुं० तपस्विनि ॥

व्रजकिशोरः । पुं० ललितायामाधिवनाधिपेश्रीकृष्णदेवे ॥

व्रजनाथः । पुं० श्रीकृष्णे ॥

व्रजभूः । पुं० सत्कदम्बे ॥ स्त्री० व्रजभूमौ ॥

व्रजमण्डलम् । न० व्रजभूमौ ॥

व्रजमोहनः । पुं० श्रीकृष्णे ॥

व्रजवरः । पुं० आवरटाधिवनाधिपेश्रीकृष्णदेवे ॥

व्रजवल्लभः । पुं० श्रीकृष्णे

व्रजाङ्गना । स्त्री० गोप्याम् ॥

व्रजेश्वरी । स्त्री० व्रजाधिष्ठातृदेव्याम् ॥ यशोदायाम् ॥ *

व्रज्या । स्त्री० अटाव्यायाम् । पर्यटने ॥ प्रस्थाने । जिगीषोः प्रयाणे ॥ गमने ॥ वर्गे ॥ व्रजनम् । व्रज० । व्रजयजोर्भावेक्यप् ॥

व्रणः । पुं० न० क्षते । ईर्मं अरुषि ॥ व्रणोद्विधापरिज्ञेयोदेहजआगन्तुभेदतः । दोषैर्दुष्टैर्देहः स्यादन्यः शस्त्रादिसम्भवः ॥ धर्मो रोगस्तु । आयतश्चविशालश्चसुविभक्तो निराश्रयः । प्राप्तकालकृतश्चापिव्रणः कर्मणिशस्यते ॥ व्रणति । व्रणशब्दे । पचाद्यच् ॥ यद्वा । व्रणयति । व्रणगात्रविचूर्णनेऽदन्तः । अच् ॥ *

व्रणकृत् । पुं० भल्लातके ॥ व्रणंकरो

व्रतयज्ञ : । पुं० संगितवृते ॥

व्रतसङ्ग्रह : । पुं० दीक्षायाम् ॥

व्रतस्थ : । पुं० ब्रह्मचारिणि ॥

व्रतादेश : । पुं० उपनयने ॥

व्रती । पुं० यजमाने । साधके ॥ ब्रह्मचारिणि । चान्द्रायणादिव्रतकारिणि ॥ व्रतमेणाजिनादिधारणंभोजनादिनियमोवास्यास्ति । व्रीनि : । यद्वा व्रतयति । व्रताङ्गोजमतान्नन्नन्वीरीरितिणिच् । व्रतेहुलिणिनि : ॥

व्रतोपनयन । न० व्रतस्योद्यापने ॥

व्रतोपायनम् । न० वायने ॥

व्रश्चन : । पुं० स्वर्णादिच्छेदनद्रव्ये । पत्रपरशौ । छेनी० इ० भा० व्रश्चतेऽनेन । घाव्रश्च० । कर्णेतिल्युट् । न० छेदने ॥

व्राजि : । स्त्री० वात्यौ ॥ वातालौ ॥ व्रजति । व्रजगतौ । वसिवपीत्यादिना० इञ् ॥

व्रात : । पुं० सङ्घे । नानाजातीयानामनियतवृत्तीनामुत्सेधजीविनांसङ्घे । न० तेषांकर्मणि । व्रश्यते० नियम्यते० मुण्डमिश्रेतिण्यन्तात्व्रतशब्दात्० घञ् । व्रातच्फञोरितिलिङ्गाद्वृत्ति : । पुं० समूहमात्रे । व्याधादौ ॥

व्रातीन : । त्रि० सङ्घजीविनो । शरीरायासजीविनि । व्रातेनशरीरायासेनजीवति० नतुव्रतिर्वैभवेन । व्रातेनजीवतीतिखञ् ॥

व्रात्य : । पुं० षोडशादिवर्षपर्यन्तमप्यसंस्कृतेभ्रष्टगायत्रीकेविप्रादौ । संस्कारहीने ॥ यथाहमनु : । आषोडशाद्ब्राह्मणस्यसाविक्रीनातिवर्त्तते । आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विश : अतऊर्ध्वंत्रयोप्येतेयथाकालमसंस्कृता: साविक्रीपतिताव्रात्याभवन्त्यार्यविगर्हिता: ॥ नैतैरपूतैर्विधिवदापद्यपिहिकर्हिचित् । ब्राह्मान्यौनांश्चसम्बन्धानाचरेद्ब्राह्मण : सहेति ॥ शरीरायासजीवीव याधादिर्व्रातः० सङ्घस्त । शाखादिभ्योय : ॥ यद्वा व्रातमर्हति । दण्डादिभ्योयदितियत् । उपनयनादिसंस्कारहीने ॥

व्रात्यस्तोम : । पुं० यज्ञविशेषे ॥

व्रीड : । पुं० लज्जायाम् ॥ भावे घञ् ॥

व्रीडनम् । न० लज्जायाम् ॥

व्रीडा । स्त्री० लज्जायाम् । त्रपायाम ॥ गुरोश्चहल : । टाप् ॥

व्रीडाकरवात : । पुं० गुदरवे । पर्दे ॥

व्रीडित : । त्रि० लज्जिते ॥ भावेक्त : ॥

व्रीहि : । पुं० धान्यमात्रे ॥ आशुधान्ये ॥ वर्द्धते० उपचयंगच्छति । इगुपधात्कि

हितीन्। पृषोदरादि:॥ व्रीयते। व्रीङ् गत्याम्। बाहुलकाद्धिक्वा॥ व्रीहे: फलंवा॰व्रीहि:। बिल्वादिभ्योऽण्। फलपाकशुषामिति॰लुपि॰युक्तवद्भाव:॥

व्रीहिक:। पुं॰ धान्यविशिष्टे॥ ठन्॥

व्रीहिकाश्चन:। पुं॰ मसूरे

व्रीही। त्रि॰ व्रीहियुक्तचेत्रादौ॥ व्रीह्यादिभ्यश्चेतिइनि:।

व्रीहिपर्णी। स्त्री॰ शालपर्ण्याम्॥

व्रीहिमय:। पुं॰ पुरोडाशे। व्रीहेर्विकार: पुरोडाश:। व्रीहे: पुरोडाशइतिमयट्॥

व्रीहिराजक:। पुं॰ कामलिकायाम्। कङ्गुधान्ये॥ चीनकधान्ये॥

व्रीहिश्रेष्ठ:। पुं॰ शालिधान्ये॥

व्रीह्यगारम्। न॰ कुसूले। धान्यगृहे॥

व्रैह:। त्रि॰ व्रीहिनिर्मिते॥

व्रैहेयम्। न॰ व्रीहिभूस्थले। धान्यसामान्यकलमादेश्चोत्पत्तियोग्ये चेत्रे॥ व्रीहिशाल्योर्ढक्॥

इत्यादि गौड़कुलोत्पन्न डोंचवालप्रधानोपनाम तुलाराम मिश्रात्मज श्रीधनपति मिश्रापरनाम्ना श्रीसद्गुरु कुलावधूत श्रीपरमहंस परिव्राजकाचार्य श्री महरिहरानन्द नाथ भारती शिष्येण ब्राह्मावधूत श्री सुखानन्दनाथ परनामधेयेन विरचिते शब्दार्थचिन्तामणौ यवर्ग: समाप्तिङ्गत:

श्रीसुखानन्दनाथ तच्छिष्य श्री जगदीशमिश्रा परनाम ब्राह्मावधूत श्री जगदानन्दनाथ प्रीतिकामै:, श्रीमन्महा राजाधिराज रविकुलावतंस महोमहेन्द्र यावदार्यकुलकमल दिवाकरै: मेदपाटदेशाधीशै: अखिल भूपाल मौलिमणिभि: श्री १०८ श्रीयुत सज्जनसिंहै: संस्थापिते उदयपुरस्थ सज्जन यन्त्रालये मुख्यमन्त्रि कविराजिराज श्रीश्यामलदास प्रेरणया पण्डितबालपेयि वंशीधरेण अक्षिन्नाजितदेव शर्मणा च शोधित: हैडजीवनराम शम्भूनाथ गुलाबराम लक्ष्मीनाथ प्राणनाथ लालसिंह प्रभृतिभिर्द्विजै: वर्णक्रमेणदृभित: सर्दारवेग यवनेन गौरीशङ्करेण च मार्गशीर्षशुक्ला चतुर्दश्यां सोमवासरे शब्दार्थ-चिन्तामणिकोशस्य यवर्गोमुद्रित:

एकोनविंशत्यैकाधिकचत्वारिंशत्तमे १९४१ वैक्रमाब्दे राजधा

न्युदयपुरे सज्जनयन्त्रालये श्रीमेदपाटेश्वर

कोशधनव्ययात् वाजपेयिवंशीधरस्य

प्रबन्धतोमुद्रितः

## शंसा

शः। पुं॰ शिवे ॥ शस्त्रे ॥ शकारे ॥

शंयुः। त्रि॰ शुभान्विते ॥ शमस्य स्य। कंशंभ्यांबभयुस्तितुतयसः इतियुस्। सकारः पदत्वार्थः॥ पदे ऽनुस्वारस्यपरसवर्णो ऽनुनासिकोयः शय्युः॥

शंवः। पुं॰ मुशलाग्रस्थलौहमण्डलके ॥ वज्रे। त्रि॰ शुभान्विते। शाम्यत्यरीन्। अन्तर्भावितण्यर्थाच्छमेवंम्। शंशुभमस्यास्त्यस्याभेयस्त्वादितिवा। कंशमभ्यामितिवः। पक्षद्वयेऽपिदन्त्योष्ठ्यः। अनुस्वारस्यवैकल्पिकोपरसवर्णोऽनुनासिकोवः। शव्वंः॥

शंवट्॰ अन्तःकरणे। आभिमुख्ये।

शंसन्। त्रि॰ कथयति॥

शंसनम्। न॰ शंसायाम्॥ सूचने॥ कथने॥ शंसुस्तुतौ। ल्युट्॥

शंसा। स्त्री॰ वचसि। वचने॥ वाञ्छायाम्॥ प्रशंसायाम्॥

शंसितः। त्रि॰ निश्चिते॥ हिंसिते॥ स्तुते॥ अनुष्ठिते। शंसिः क्तः॥

शंसितव्रतः। त्रि॰ अनुष्ठितव्रते॥

शंस्ता। पुं॰ स्तोतरि॥ होतरि॥ शंसति। शंसु॰। तृन्तृचौशंसिक्षदादिभ्यः संज्ञायाञ्चानिटौविति तृन्। नप्त्रादिग्रहणस्यनियमार्थत्वान्नदीर्घः। शंस्तारौ॰शंस्तर

इत्यादि॥

शंशः। त्रि॰ स्तुत्ये॥

शकः। पुं॰ म्लेच्छजातिप्रभेदे। शकदेशोद्भवेपुरस्तात्क्षत्रियेषु पश्चाद्विहितक्रियालोपादिनाशूद्रत्वमापन्ने॥ यथाहमनुः। शनकैस्तुक्रियालोपादिमाःक्षत्रियजातयः। वृषलत्वंगतालोकेब्राह्मणादर्शनेनच॥ पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजाः यवनाः शकाः। पारदाःपह्लवाश्चीनाःकिरातादरदाःखशाः॥ इति॥ अयसत्ययुगेसगरेणमस्तकार्धंमुण्डयित्वाविशान्यत्ववेदवाह्यत्वञ्चाऽकारि। अर्ब्बंभिरः शकानान्तुमुण्डयामासभूपतिरितिपाद्मेस्वर्गखण्ड निरूपितम्॥ रूमइतिप्रसिद्धेदेशे तत्रत्याः सर्वेशकपदवाच्याः॥ शालिवाहननाम्नाप्रसिद्धनृपतिलक्षे॥ तस्यमरणादिनावधिवत्सरगणनाङ्कः शकाब्द॰ इतिसंज्ञयातिथिपत्रेव्यवह्रियते॥

शककारकः। पुं॰ शकप्रवर्त्तकर्त्तरिनृपतिवरे॥ यथाहकालिदासः। निहन्तियोभूतलमण्डलेशकान्सपञ्चकोट्यञ्जदलप्रमान् ५५०००००० कलौ। सराजपुत्रः शककारकोभवेन्नपाधिराजोद्युतशाककारकः। अब्जंशतकोटिस्त

स्यादिंपशस्तात्कोटि: ॥ कलौषट्श
ककारकानाह । युधिष्ठिरोविक्रम
शालिवाहनौनराधिनाथौविजया-
भिनन्दन : । तुमेनुनागार्जुनमेदि
नीविभुर्वलि : क्रमात्षटशककार
का कलौ ॥ एषामन्तरालवर्षाण्या
ह । युधिष्ठिराद्दयुगाम्बराग्नय :
३०४४ ॥ कलम्बरविभूव १३५
ऽभ्रखखाष्टभूमय : १८००० इहायु
तं १०००० लक्षचतुष्टयं४०००००
क्रमाममहाहनागा ८२१ इति
शाकवत्सरा : ॥ एषांजन्मभूमि
माह ॥ युधिष्ठिरोभूद्धस्तिना
पुरे० तथोज्जयिन्यांपरिविक्रमा
ह्वय : । शालेयधाराभृतिशालिवा
हन सुचित्रकूटेविजयाभिनन्दन:
॥ नागार्जुनोरोहितकेक्षितौवलि
र्भविष्यतीन्द्रोभृगुकच्छपत्तने ।क्र
मप्रवृत्तकदनन्तरंभवेत्तदाभवि-
ष्यन्त्यवनीभृतोऽर्कत : ॥

शकट: । पुं० न० यनसि । कक
डा० इ० भा० । गनृत्याम् । गा
ही० इ० भा० । शक्नोतिभारं-
वोढुं० जीवयितुंवा । शक्तृगशौ
। शकादिभ्योऽटन् ॥ तिनिशवृ-
क्षे ॥

शकटव्यूह : । पुं० शकटाकारेबलवि
न्यासे । सूच्याकाराय : पश्चात्
पृथुल : शकटव्यूहोभवति । तेन
पृष्ठतोभयेसतियात्रव्यंमार्गंगच्छे
त् ॥

शकटहा । पुं० श्रीकृष्णे ॥ त्रि०
शकटनाशके ॥

शकटाह्वा । स्त्री० रोहिणीनक्षत्रे ॥

शकटिका । स्त्री० गनृत्याम् ॥

शकटी । स्त्री० सुमीनांवाहनविशेषे
॥ बह्वादित्वात् ङीप् ॥

शकट्या । स्त्री० शकटसङ्घे ॥ शक
टानांसमूह : । पाशादिभ्याय : ॥

शकल : । पुं० न० खण्डे एक
देशे ॥ न० रोहितादिमत्स्यत्वां-
त्वचि ॥ रागवस्तुनि ॥ वल्कले ।
पुं० ज्योत्स्नरे ॥ शक्यते० शक्नो
तित्रा । शक्तृगशौ । अविशस्यो
र्निदितिकल : ॥

शकली । पुं० मत्स्ये ॥ शकलं०शल्क
मस्यास्ति । अतइनि : ॥

शकलीकृत : । त्रि० खण्डीकृते ॥

शका । स्त्री० भाषान्तरे ॥ शक्नोतीत्य
र्थेपचाद्यच् ।

शकान्तक : । पुं० विक्रमादित्ये ॥

शकार : । पुं० राज्ञोऽनूढाया : स्त्रि
याभ्रातरि ॥ यथा । मदमूर्खताभि
मानोदुष्कुलतैश्वर्यसंयुक्त: । सोय
मनूढाभ्रातारान्न : श्याल : शकार
इत्युक्त : ।

शकारि: । पुं० विक्रमादित्ये । मा
साङ्के ॥

शकुनः । पुं॰ पक्षिमात्रे ॥ पक्षिवि-
शेषे । गृध्रे ॥ द्विजप्रभेदे ॥ उत्स-
वादिषु मङ्गलार्थं गेयगीतविशेषे ॥ न॰
शुभाशुभशंसिनिमित्ते । शुभा-
शुभज्ञाननिर्णयहेतौ ॥ यथा । श-
कुनं कथ्यते तत्तु यच्छुभाशुभसूचक-
म् । तथाहि । विप्राश्वेभफलान्नदु-
ग्धदधिगोसिद्धार्थपद्माम्बरं वेश्यावा-
द्यमयूरचाषनकुलाः बद्धैकपश्वामि-
षम् । सद्वाक्यकुसुमेक्षुपूर्णकलशच्छ-
त्राणि मृत्कन्यकारत्नोष्णीषसितोक्ष-
मद्यससुतास्त्रीदीप्तवैश्वानराः ॥
आदर्शाञ्जनधौतवस्त्ररजको मीनाज्य-
सिंहासनं शावं रोदनवर्जितं ध्वजम-
धुच्छागास्त्रगोरोचनम् । भारद्वाज-
नृयानवेदनिनदा माङ्गल्यगीताङ्कुशा
दृष्टाः सत्फलदाः प्रयाणसमये
रिक्तो घटः स्वानुगः ॥ नरो निरू-
पः सितवाससा स्त्री वाचं प्रशस्तां म-
धुराञ्च जल्पन् । एवंविधा येऽपि द-
िशि प्रयाणे प्रवेशकाले कुरुतेऽर्थसिद्धि-
म् ॥ पृथ्वीपतिर्ब्राह्मणहर्षयुक्तो वे-
श्या कुमारी सुहृदः सुवेशाः । ना-
र्यो नराः श्वेतवृषाऽधिरूढाः शु-
भाय दृष्टाः सकलोद्यमेषु । श्वेता-
म्बराः श्वेतविलेपनाढ्याः श्वेतां स्रजं
मूर्द्धि निधारयन्तो । दृष्टाः प्रहृष्टा यदि
गौरवर्णा नारी नरः स्यात्तदभीष्ट-
सिद्ध्यै ॥ धृतातपत्रः शुचिशुक्लवा-
सा: पुष्पाऽर्चितचन्दनचर्चिता-
ङ्गः । निःश्वासयुक्तः कृतभोज-
नो वा विप्रः पठन् यच्छति सर्वसिद्धि-
म् अभ्युपगच्छति यस्य यियासोः
स्त्रीपुरुषोऽप्यथवा फलहस्तः । सर्वं
समीहितसिद्धिरवश्यं तस्य नरस्य भव-
त्यचिरेण ॥ आदाय रिक्तकलशं ज-
लार्थी यदि व्रजेत् कोऽपि सहाध्वगेन ।
पूर्णं समादाय निवर्त्तते सौ यथाकृ-
तार्थः पथिकस्तथैव ॥ गोधाजाह-
कसूकराहिशशकानां कीर्त्तनं शोभ-
नं नो शब्दो न विलोकनं च कपिऋ-
क्षाणां शुभो व्यत्ययः । नद्युत्तारभ-
यप्रवेशसमरे नष्टार्थसंवीक्षणे व्यत्य-
स्ताः शकुना नृपेक्षणविधौ यात्रोदि-
ताः शोभनाः ॥ वामाङ्गे कोकिला
पल्ली पोतकी शूकरी रला । पिङ्गला
छुच्छुका श्रेष्ठा शिवा पुरुषसंज्ञिता
छिक्करः पिप्पको भासः श्रीकण्ठो
वानरो रुरुः । स्त्रीसंज्ञकाः काक-
ऋक्षश्वानः स्युर्दक्षिणे शुभाः ॥
प्रदक्षिणगताः श्रेष्ठाः यात्रायां मृ-
गपक्षिणः । ओजा मृगा व्रजन्तोऽति
धन्याः नामे खरस्वनः ॥ श्यामा शि-
वा पिङ्गलिकान्यपुष्टा पक्षी वला शूक-
रिका तथैव । छुच्छुन्दरी चापि शु-
भाय वामे पुन्नामधेयाः शकुनाश्च
सर्वे । श्रीकण्ठछिक्काररुरुप्रवङ्गाः
श्रीकण्ठभासौ भषको मयूरः । श्ये

नः समः पिण्यकयाप्रशस्ताः स्त्रीनामधेयाश्वपिदृश्चिणेन ॥ दुष्टेश कुनेजातेयत्कर्त्तव्यंतदाह । प्राणायामांस्त्रयस्त्वरन्नाद्याद्दाशं शाकुनेवैविरुद्धे । तिग्मानृक्तस्वे बिहितीयेत्तृतीयेघस्त्रप्रस्थान्नेचतुर्थेगमः स्यात् ॥ घस्त्रप्रस्थान्हिंस्रतुल्यान्तिग्मानुतोस्तानृप्राप्येत्यर्थः शक्नोति । शक्ल॰ शकेरुनोन्तोन्त्युनयइत्युनप्रत्ययः ॥

शकुनज्ञः । वि॰ शकुनज्ञातरि ॥

शकुनज्ञा । स्त्री॰ ज्येष्ठयाम् । पल्ल्याम् ।

शकुनाहृत । पुं॰ शालिविशेषे ॥

शकुनिः । पुं॰ विहगे । पक्षिणि ॥ सौबले । दुर्योधनस्यमातुले ॥ करणान्तरे ॥ तत्रजातस्यफलंयथा । परजनधनहर्त्ताविञ्चकः क्रूरचेष्टः करधृतकरवालोव्याहतः स्वामिपक्षः । अतिशयपरदारासक्तचित्तः सरोषोभवतिशकुनिजन्मामानवः शौघ्रकर्मा ॥ शक्नोतीत्यर्थे । शकेरुनोन्तोन्त्युनयइत्युनिः ॥

शकुनिकः । वि॰ शकुनीकुशले । आकर्षादित्वात्कन् ॥

शकुनिप्रपा । स्त्री॰ पक्षिणांपानीयशालायाम् । श्रीयहे ॥

शकुनी । स्त्री॰ श्यामाख्यविहगे ॥

शकुनीश्वरः । पुं॰ गरुडे ॥

शकुन्तः । पुं॰ कीटविशेषे । भासपक्षिणि ॥ विहङ्गमात्रे ॥ शक्नोति । शकेरुनोन्तोन्त्युनयइति॰ उन्तः ॥

शकुन्तला । स्त्री॰ दुष्यन्तपत्न्यां भरतमातरि ॥ निर्जनेतुवनेयस्मात्॰ शकुन्तैः परिरक्षिता । शकुन्तलेतिनामाऽस्याः कृतञ्चापिततोमया ॥ कालिदासविरचितेनाटके ॥

शकुन्तलात्मजः । पुं॰ भरते ॥ यन्नाम्नाभारतोवर्षः सुप्रसिद्धोधरातले ॥

शकुन्तिः । पुं॰ पक्षिमात्रे ॥ शक्नोति । शकेरुनोन्तोन्त्युनयइतिशकेरुन्तिः ॥

शकुन्दः । पुं॰ करवीरे ॥

शकुलः । पुं॰ मत्स्यविशेषे । कलके । शउल्॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ शक्नोतिगन्तुंवेगेन । बाहुलकाच्छकेरुलच् ॥

शकुलगण्डः । पु॰ शालमत्स्ये ॥

शकुलाक्षकः । पुं॰ श्वेतदूर्वायाम् । गोलोम्याम् ॥ शकुलस्यमत्स्यस्येवाक्षियस्याः । अक्ष्णोऽदर्शनादित्यच् । स्वार्थेकन् ॥

शकुलाक्षी । स्त्री॰ गण्डदूर्वायाम् ॥

शकुलादनी । स्त्री॰ कृष्णभेदायाम् । कटुकायाम् ॥ कासमर्दशाके । जलपिप्प

ल्याम् । काचकाटाम॰इति॰गौ॰ भा॰प्र॰ ॥ मांस्याम् ॥ किशु लिकायाम् ॥ शकुलं रक्षति । यट॰ । कर्मणिल्युट् ॥ ङीप् । ग जोषणायाम् । कटफले ॥

शकुलार्भकः । पुं॰ गडकमत्स्ये ॥ श कुलस्यमत्स्यविशेषस्यअर्भकः ॥

शकुली । स्त्री॰ मत्स्यविशेषे । सौ री॰इ॰दे॰भा॰प्र॰ । मृगाल् इ॰ गौड॰दे॰भा॰ ॥ शकुलीग्राहिणी हृद्यामधुरातुवरास्मृतेतिभावप्रका शः ॥ शकुलीरोचिताकाराभूमौ प्रायश्चरसौ । गुर्वीपाकेघम धु रामेदिकादेपकोपणतिराजवल्ल भः ॥

शकृत् । न॰ विष्ठायाम् ॥ शक्नोति॰ शक्यतेवानिस्सर्तुं वानिस्सारयितुंवा । शकेर्ऋतिन् ॥

शकृत्करिः । पुं॰ वत्से ॥ शकृत्करो ति । स्तम्बशकृतोरिन् ॥

शकृद्द्वारम् । न॰ गुदे । पायौ ॥ श कृतोद्वारम् ॥

शक्रः । पुं॰ इषे ॥ इ॰है॰चन्द्रः ॥

शक्रिः । पुं॰ इ॰वि॰शेषः ॥

शक्री । स्त्री॰ चतुर्दशाक्षरायांश्वरौ । शर्करायाम् ॥ नदीप्रभेदे ॥ मेख लायाम् ॥

शक्तः । वि॰ शक्तिविशिष्टे । समर्थे ॥ शक्॰ । कर्मणिक्तः ॥ शक्तानां

भूषणंक्षमा ॥

शक्तिः । स्त्री॰ अस्त्रविशेषे । सेल इ॰ भा॰प्र॰ ॥ गौर्याम् । दुर्गायाम् ॥ यादेवीसर्वभूतेषुशक्तिरूपेणसं स्थिता । चैतन्यरूपायाम् । चि च्छक्तौ । निर्विषयकसंविदि ॥ सा चसर्वत्रैकरूपा ॥ यथा । एकैव शक्तिः परमेश्वरस्यभिन्नाचतुर्धा व्यवहारकाले । भोगेभवानीपुरुषे पुविष्णुः कोपेषुकालीसमरेषुदुर्गा ॥ अपिच । एकमूर्त्तिरपिभिन्नरूपि णीयाजगज्जननपालनक्षये । काच्यु तेश्वरतयाविवर्त्ततेब्रह्मशक्तिमह- मानतोस्मितामिति ॥ तथाहिदे वीभागवते । निर्गुणायासदानि त्याव्यापिकाऽविकृताशिवा । यो- गगम्याखिलाधारातुरीयायाचसंस्थि ता ॥ तस्यास्तुसात्त्विकीशक्तीराज- सीतामसीतथा । महालक्ष्मीः स रस्वतीमहाकालीतिताः स्त्रियः ॥ तासांतिसृणांशक्तीनान्देहाङ्गी कारलक्षणः । सृष्ट्यर्थस्तुसमाख्या तः सर्गः शास्त्रविशारदैरिति । साचसच्चिदानन्दब्रह्मरूपिणी । त स्यायासात्त्विकीशक्तिस्तथाराजसी- तथातामसीचयाशक्तिः तत्तच्छक्ति- विशिष्टंयत्परंब्रह्मेत्यर्थः । त- न्महालक्ष्म्याद्यायाः प्रसिद्धाः स्त्रि यस्ताःस्त्रियोभवन्ति । साम्यावस्था

महिशायामनलीनाभेर्द्वौ।स्विनम्तू
नाम्। तस्मात्तु वामपार्श्वे शयो
तभुक्तप्रपाकार्थम्॥

शयनासनम्। न॰ शयनस्य ॥ पाद्य
तेऽस्मिन्। पास॰। करणाधिक
रणयोरिति ल्युट्। शयनस्यपास
नम्॥

शयनीयम्। न॰ शय्यायाम्॥ शेते॰
शय्यतेऽनवा। कृत्यल्युटबहुलधिक
रणे शीङोऽनीयर्॥ त्रि॰ शयनयो
ग्ये॥

शयनीयकम्। न॰ शय्यायाम्॥

शयान:। त्रि॰ शय्यानिद्रिताङ्गे।
शय्यायांसुप्ते॥ शयाना: भुञ्जतेयव
ना:। भुजिक्रियाया: शयनंलक्ष
णम्। लक्षणहेत्वो: क्रियायाइति
लट: शानच्॥निद्राकृते॥ शया
नंनप्रबोधयेत्॥ विश्रान्ते॥

शयानक:। पुं॰ अजगरे॥कृकलासे
॥ शेते। आनक: शीङ्भिय:॥

शयोलु:। पुं॰ वाहसे। अजगरे॥ कु
क्कुरे। शुनि॥मृतकान्तके। शृगाले
। सियाल॰सयाल॰बू॰भा॰प्र॰
त्रि॰निद्रालौ। स्वप्नजि। निद्रा
लु॰इ॰भा॰प्र॰॥ शयनशील:। शी
ङोबाच्यबहुल्यालुच्॥

शयित:। पुं॰ शेलौ। श्लेष्मान्तके।
वसन्तकुसुमे॥ त्रि॰ निद्रिते। नि
द्राणे॥ शेतेस्म। शीङ्॰। अकर्म

कत्वात्कर्त्तरिक्त:। निष्ठाशीङ्
तिनकित्त्वम्॥ स्थिते॥

शयितवान्। त्रि॰ निद्रिते॥ शेतेस्म
। शीङोकर्मकत्त्वत्कर्त्तरिक्तवतु:। निष्ठा
शीङ्स्विदिमिदिक्ष्विदिधृषइति न
कित्त्वम्॥

शयिता। त्रि॰ शयनकर्त्तरि॥

शयु:। पुं॰ वाहसे। अजगरे॥ शेते
। भृ॰मृ॰शी॰तृ॰चरि॰तनि॰धनि॰
मि॰ मस्जिभ्यउ:॥

शयुन:। पुं॰ अजगरे॥ शेतेऽत्यर्थं
म्। अनि॰यमि॰शीङ्भ्यस्तेति शी
ङउनम्॥

शय्या। स्त्री॰ शयनीये। तूलिकाद्या
स्तरणविशेषे॥ शय्यतेऽत्र॰शेतेऽस्यां
वा। संज्ञायांसमजेतिशीङ:क्य
प्।अयङ्यिक्ङितीतिशीङोऽयङादे
श:।खट्वादौ।गुम्फने।शब्दगुम्फे॥

शय्याजन्तु:। पुं॰ मत्कुणे॥

शर:। पुं॰ तेजनके। गुन्द्रे॥
बाणे। काण्डे॥दध्यग्रे। दधिसा
रे॥ न॰ सलिले। नीरे। जले
॥ शृणाति॰ अनेनवा। शृहिंसा
याम्। अच्॰ ऋदोरप्वा॥

शरजम्। न॰ हैयङ्गवीने॥

शरजन्मा। पुं॰ षडानने। स्कन्दे
॥ शरेषुजन्मास्य॥

शरट:। पुं॰ सरटे॥ शृणाति:
शकादित्वादटन्॥ कुसुम्भशाके॥

शरणम् । न० गृहे । रक्षितरि । व धे ॥ रक्षणे ॥ श्रीवंतेदुःखम स्मिन्निति व्युत्पत्त्याप्रपन्नानामाप्ति रिति । यथा । शरणंमहिममजन नीनपितानसुतानसीदरानान्यः । परमशरणमिदमेवचरणंममपूर्णेंदु शेखरस्यतमिति ॥ आश्रये ॥ घा तकी ॥ शृणाति । शृ हिंसायाम् । ल्युट्० भावेवा ॥

शरणद: । पुं० स्वप्रामदातरि० ई श्वरे । त्रि० शरणदातरि ॥

शरणा । स्त्री० प्रसारण्याम् ॥

शरणागत: । त्रि० आश्रिते । शर णापन्ने । शरणार्थिनि ॥ शरणे आगत: ॥ शास्त्रेषुनिष्कृतिर्दृष्टा महापातकिनामपि । शरणागत हंतुस्तुमहद्दृष्टानिष्कृति: क्वचित् । शरणागतमात्तंस्त्रीबालहातिनराध म: । सएवनरकंयातियावद्भूतस मप्लवम् ॥

शरणागति: । स्त्री० शरणागमने ॥ साषड्विधायथा । आनुकूल्यस्य संकल्प: प्रातिकूल्यस्यवर्ज्जनम् । रक्षयिष्यतिविश्वासोगोप्तृत्ववरणं तथा ॥ आत्मनिक्षेपकार्पंण्येषड् विधाशरणागति: ॥

शरणार्थी । त्रि० शरणागते । अनु गते ॥

शरणापंन्न: । पुं० शरणापन्ने । स म्यारव्धिनि ॥

शरणि: । स्त्री० पथि ॥ शृ० । बा हुलकाद्दनि: ॥ आवली ॥ शर णिर्हिंसामितिवेदभाष्यम् ॥ पृथ्व्याम् ॥

शरणी । स्त्री० पथि ॥ प्रसारण्याम् ॥ जयंत्याम् । जयाहर्वे ॥

शरण्ड: । पुं० धूर्त्ते ॥ शरटे ॥ भू षणान्तरे ॥ पक्षिणि ॥ कामुके ॥ चतुष्पदे ॥

शरण्य: । त्रि० आर्त्तस्यरक्षितरि । त्रातरि ॥ शरणेरक्षणेसाधु: । तत्रसाधुरितियत् ॥ शृणातिभयं वा । शृ० । शृरम्योरेत्यन्य: ॥ श रणमिवबा । शाखादिभ्योय: ॥

शरण्या । स्त्री० शरणदायिन्याम् । दुर्गा याम् ॥ यथा । विपत्सुभयघोरे षुशरण्याशरणागत: । शरण्याति नसादेवीमुनिभि: परिकीर्त्तिता ॥

शरण्यु: । पुं० वारिदे ॥ वाते ॥

शरत्कम् । न० वृत्तप्रभेदे ॥

शरत्कामी । पुं० कुक्कुरे ॥

शरत्पद्मम् । न० सितास्बुजे ॥

शरत्पर्व्व । न० दुर्गोत्सवे । कोजा गरे ॥

शरत्पुष्पम् । न० आकुल्यां० पुष्पे । इलरास्ये । तगरे । सिम्बीफलि । सुपुष्पे । पीतपुष्पे । काश्मीरेतत्व टनाम्नाप्रसिद्धे ॥ शारदपुष्पमात्रे ॥

शरत्·द् । स्त्री॰ हायने । संवत्सरे । वर्षे ॥ शृणाति भावान् । शृधि सायाम् । शृदृभसोऽदि: ॥ ऋतु विशेषे । आश्विनकार्त्तिकयो: ॥ वर्षावसाने ॥ शीर्य्यतेऽस्यां पाशिनी प्रथय: । पृषद्वदृदि: ॥ तत्रजात स्तु फलं यथा । नर: शरत्संज्ञकाल अजन्मा भवेत्सुकर्मा मनुजस्तरस्वी। शुचि: सुशीलो गुणवान् सुमानी धनान्वितो राजकुलप्रपन्न: ॥

शरद: । त्रि॰ शरवर्षिणि ॥ शरं ददाति । डुदाञ्॰ । आतश्चेति क: ॥

शरदन्त: । पुं॰ हेमन्ते ॥ शरदोऽन्तोऽस्मिन् ॥

शरदा । स्त्री॰ सम्वत्सरे ॥ शरहतौ ॥ शरदो भाग्गुरिमतेटाप् ॥

शरदिज: । त्रि॰ शरत्कालजाते ॥

शरदुदाशयम् । न॰ शरत्कालिकसरोवरे ॥

शरधि: । पुं॰ तूणे । तूणीरे ॥ शरा धीयन्तेऽस्मिन् । डुधाञ्॰ । उपसर्गे घो: कि: । किस्वादाकार लोप: ॥

शरपर्णी । स्त्री॰ ओषधिविशेषे ॥

शरपुङ्ख: । पुं॰ शोहगची । सरफोंका॰इ॰भा॰प्र॰ओषधौ ॥ अस्यगु णायथा । शरपुङ्खोयकृत्प्लीहगुल्मव्रणविषापह: । तिक्त: कषाय: कासास्रज्वरश्वासहरो लघु: ॥

शरभ: । पुं॰ मृगेन्द्रविशेषे । महामृगे । अष्टापदे । महासिंहे । पर्वताश्रये ॥ अस्यलक्षणं यथा महाभारते । अष्टपादूर्ध्वनयनऊर्द्ध्वपादचतुष्टय: । सिंहंहन्तुं समायाति शरभो वनगोचरइति ॥ शृणाति । शृ॰ । कृशृशलिकलिगर्दिभ्योऽभच् ॥ करभे उष्ट्रे । वानरविशेषे ॥ हरौ । विष्णौ ॥ शीर्य्यन्तइति । शरा: शरीराणि॰ शीर्यमाणत्वात्॰ तेषु प्रत्यगात्मतया भाति । भादीप्तौ । आतश्चेतिक: ॥ पतङ्गे ॥ वर्णवृत्तविशेषे ॥ यथा । हिमकरतिलककलितमिहसगणं कलयशरभमिदमलिसुष्ठकरणम् । कविवरसकलहृदयकृतहरणं फणिवरनरपतिवदनविहरणम् ॥ अत्रहि नवरश्रव्दः स्तुप्कलगणपञ्चमरूपवाचकस्तद्रूपमुचतुर्लघुतेषांतत्वकेन चितयेनकलितं हादशलघुभिरिति यावत् ॥ यथा । सकलकमलदलरुचिधरनयन: अखिलजलनिधिफणिपतिफणशयन: । दनुजविजयसुरपतिनतिमुदितोहरिरपहरतुदुरिततितिमुदित: ॥

शरभङ्ग: । पुं॰ गौतमवंशजे । रामायणप्रसिद्धे । मुनिविशेषे ॥

शरभङ्गाश्रम: । पुं॰ तीर्थविशेषे ॥

शरभू: । पुं॰ पार्वतीनन्दने । स्कन्दे ॥

शरभूमिज: । पुं॰ गन्धर्वे ॥

शरमय:। त्रि॰ शरनिर्मिते ॥

शरमल्ल:। पुं॰ खगविशेषे । गृध्र लक्षे ॥

शरलकम्। न॰ जले ॥

शरवणोद्भव:। पुं॰ स्कन्दे ।

शरवाणि:। पुं॰ शरमुखे । शरजीविनि । पदातौ ॥

शरबीजम्। न॰ धातुकी । बोटुकाख्ये ॥

शरव्यम्। न॰ लक्ष्ये । शरविंशार्हितम् । उगवादिभ्योयत् । शरो । शरान्व्ययति । व्येञ् संवरणे । सम्प्रसारिविभ्योड: ॥

शराघात:। पुं॰ प्रचलाके । बाणाघाते ॥

शराटि:। ) शराडि:। ) स्त्री॰ शरारिविहगे ॥

शराति:। स्त्री॰ शरारी । आडिविहगे । शरंनीरमतति । चत॰ मज्यतिभ्यश्च तीच् ॥

शराभ्यास:। पुं॰ उपासने । शरक्षिपायाम् ॥ शरक्षारमोचनस्य अभ्यास: ॥

शरारि:। स्त्री॰ सुरगार्ड॰ इ॰ मा॰ प्र॰ ॥ पक्षिविशेषे । आटी । शरंनीरमृच्छति । ऋगतौपचद्य: ॥

शरारु:। त्रि॰ हिंस्रे ॥ शृणाति । शृ॰ । शृवन्द्योरारु: ॥

शरालि:। स्त्री॰ शरारिपक्षिणि ॥

शरंनीरमृच्छति । अ॰ । पचद्य: । कपिलकादित्वाल्लत्वम् ॥

शरालिका ) शराली ) स्त्री॰ शरालिविहगे ॥

शराव:। पुं॰ कुडवद्वयपरिमाणे चतु:षष्टितोलके । सेर॰ इ॰ भा॰ प्र॰ । माणिकायाम् ॥ मृत्पात्रविशेषे । वर्द्धमानके । सराया॰ इ॰ भा॰ प्र॰ शरणम् । शृ॰ । ऋदोरप् । शृणातिवा । पच् ॥ शरंशरारुवा॰ अवति । अपरस्मादौ । अव॰ अच्वा ॥

शरावती। स्त्री॰ रामात्मजस्य लवस्य राजधान्याम् । नदीविशेषे ॥ इयस्रोतरपूर्वाभिमुखी॰ पश्चाद्दिचपूर्वस्यांव्यवस्थितोदेश: प्राग्देश: उत्तरापरस्यांव्यवस्थितउदग्देश: । तथाचोक्तम् । प्रागुदञ्चौ विभजतेहंस: क्षीरोदकंयथा । विदुषांशब्दसिद्ध्यर्थंसान: पातुशरावतीति ॥ शरा: सन्त्यस्याम् । मतुप् । शरादीनाञ्चेतिदीर्घ: ॥

शरावर:। पुं॰ कवचे ॥ तूणीरे ॥ यथा । शरावरौशरै: पूर्णौ बिभ्रतौपश्यलक्ष्मणेतिरामायणम् ।

शरावाप:। पुं॰ धनुषि ॥

शरावार्द्धम्। न॰ कुडवपरिमाणे । द्वात्रिंशत्तोलके । पावसेर॰ भा॰ प्र॰ परिमाणे ॥

शराश्रयः । पुं॰ तूणे ॥

शरासनम् । न॰ कोदण्डे । चापे धनुषि ॥ शरा अस्यन्तेऽनेन । अ सुक्षेपणे । करणे ल्युट् ॥

शरास्त्रम् । न॰ धनुषि ॥

शरिः । पुं॰ हिंस्रे ॥ शूले ॥ शृणाति । शृ॰ । इन् ॥

शरिमा । पुं॰ प्रसवे । शृणाति यौवनम् । शृ॰ । हभृधृसृशृभ्य इमनिच् ॥

शरी । स्त्री॰ गुन्द्रायाम् । एरका वर्णे । गौरादित्वान्ङीष् ॥

शरीरम् । न॰ कलेवरे । गात्रे । वपुषि । संहनने । वर्ष्मणि । विग्रहे । समपेन्द्रियकलापे॰ देवपितृमनुष्यादीनांदेहे । जरायुजाण्डजोद्भिज्जस्वेदजभिन्ने॰ पादादिशिरोन्ते ॥ शीर्यते॰ तत्त्वज्ञानादिनश्यतीतिशरीरम् ॥ शरीरलक्षणं यथा । चेष्टेन्द्रियार्थाश्रयः शरीरमितिगौतमः ॥ अत्रचेष्टादिमिलिताश्रयत्वंनलक्षणम्॰ वैयर्थ्यात् । अपितु॰ आश्रयपदस्यप्रत्येकमन्वयश्चेष्टाश्रयत्वादिलक्षणत्रयेतात्पर्यम् । चेष्टात्वञ्च॰ प्रयत्नजन्यतावच्छेदकजातिविशेषः । नचशरीरावयवेऽतिव्याप्तिः अन्त्यावयवित्वेनविशेषणात् । नचनिष्क्रियशरीरेऽव्याप्तिः॰ तादृशेमानाभावात् । अतएवाह॰ इन्द्रियाश्रयइति । इन्द्रियाश्रयत्वञ्च॰ अवच्छेदकतासम्बन्धविशिष्टम्॰ अत्र चक्षुषानुदेवदत्तीयमित्यादिप्रतीतेः । अर्थाश्रयत्वमित्यत्रार्थशब्दोगन्धरूपादिपरः । तदाश्रयत्वञ्च घटादावतिव्याप्तेः । किन्तुसुखदुःखान्यतरपरः । अतएवभाष्यं॰ यस्मिन्नायतनेसुखदुःखयोः प्रतिसंवेदनंप्रवर्त्तते॰ सएषामाश्रयस्तच्छरीरमिति । वस्तुतस्त्वन्यतराश्रयत्वमपितल्लक्षणम् । किन्तु॰ सुखाश्रयत्वंदुःखाश्रयत्वंचेति लक्षणद्वयेतात्पर्यम् । शरीरस्यतदाश्रयत्वमवच्छेदकतासम्बन्धेनहस्तादेरलक्ष्यत्वे त्वन्त्यावयवित्वेनविशेषणीयम्॰ स्वर्गिशरीरेनारकिशरीरेचयथाक्रमसुखदुःखस्वीकारान्नाव्याप्तिः । नचतच्छून्यखण्डशरीरेऽव्याप्तिः॰ सुखाद्याश्रयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्यविवक्षितत्वात्॰ तादृशजातिश्चमनुष्यत्वचैत्रत्वादिः॰ कल्पभेदेनरसिंहशरीरस्याभेदात्मनरसिंहत्वजातिमादायनरसिंहशरीरेलक्षणसमन्वयइति ॥ १ ॥ शृणाति॰ शीर्यतेरोगादिनावा । शृ॰ । कॄशॄपॄकटीतीरन् ॥ अर्द्धर्चादिः ॥

शरीरजः । पुं॰ रोगे ॥ कामे ॥ पुत्रे । त्रि॰ देहजाते ॥ शरीरा

ण्याति । अनी० । पद्मस्यामिति ड : ॥

शरीरभाक् । त्रि० देहभाजि ॥ भजी ण्व : ।

शरीरभृत् । पुं० प्राणिनि ॥ शरीरं बिभर्त्ति । भृञ : क्विप् ॥ विष्णौ । ईश्वरे ॥ शरीरिणांश रीराणिपञ्चरूपेणपोषयन् । प्राण रूपेणबाधारयन्० शरीरभृत् । स्व मायया शरीराणिबिभर्त्ति वा । डु भृञ्० । क्विपचेतिक्विप्तुक् ॥

शरीरयात्रा । स्त्री० वपुषःस्थितौ ॥

शरीरावरणम् । न० त्वचि । चर्म्मणि ॥ कायवेष्टने ॥

शरीरी । पुं० जीवे । प्राणिनि । शरीरमस्यास्ति । अतइनिठनाविति नि : ॥ घोषत्रे ॥

शरु : । पुं० कोपे । क्रोधे ॥ वज्रे ॥ शरे । बाणे ॥ आयुधे ॥ शृणाति । शॄ० । शॄस्वृस्निहीत्यु : ॥

शरेष्ट : । पुं० आम्रे ॥

शर्करक : । पुं० मधुजम्बीरे ॥

शर्करजा । स्त्री० सिताखण्डे ।

शर्करा । स्त्री० खण्डविकृतौ । सितायाम् । शुक्लायाम् । बूरा० इ० भा० प्र० । मीनाखण्डाम । सितोपलायाम् । चीनी० इ० भा० प्र० ॥ उपलायाम् । अश्मरू

पायांमर्दि ॥ मृत्तिकामिश्रे क्षुद्र पाषाणेषु । कर्परांशे ॥ मृत्क पालखण्डे ॥ शर्करान्वितदेशे ॥ शकले ॥ रोगप्रभेदे ॥ यथा । प च्यमानाश्मरीपित्तात्शोष्यमाणाच वायुना । विमुक्तकफसन्धाना क्षरन्ती शर्करामता ॥ शृणाति० शीर्यतेवा शॄ० । श : करन् । शर्करा ऽस्त्य च । देशेलुबिलचौचेतिमत्वर्थीय स्याणोलुप् ॥

शर्कराचल : । पुं० दानार्थंकृत्रिमे शर्करामयेगिरिविशेषे ॥

शर्कराधेनु : । स्त्री० दानार्थंशर्करा- निर्मितायांधेनौ ॥

शर्करापुष्प : । पुं० अर्कद्रुमे ॥

शर्कराप्रभा । स्त्री० जिनाभिमतनरक विशेषे ॥ यथा । रत्नशर्करावालु कापङ्कधूमतमप्रभा । महातमप्र भावेत्यधोधोनरकभूमय इतिहेम० ॥

शर्करावान् । त्रि० सशर्करेदेशे ॥ श र्करायाम् । शर्करिले । शार्करे शर्करावस्त्यत्र । देशेलुबिलचौचे तिचान्मतुप् ।

शर्करावती । स्त्री० नदीविशेषे ॥

शर्करासप्तमी । स्त्री० वैशाखशुक्लस प्तम्याम् ॥

शर्करासव : । पुं० शर्करयाकृतेष्वा सवविशेषे ।

शर्करिल : । त्रि० शर्करावतिदेशे ॥

शर्करायाम् । शाकरे । शर्करा॑ऽस्त्य

स्य । देशेलुविलचौचेतीलच् ॥

शर्करी । स्त्री० शर्करायाम् ॥

शर्करोदकम् । न० शर्करान्वितपानी

ये । रस० रसवत० द्र० भा० प्र० । यथा

॥ शीतेनगौतसलिलेनविलोलितायुभशर्क

रा । एलालवङ्गकर्पूरमरिचैस्समन्वि

ता ॥ शर्करोदकनाम्नैतत्प्रसिद्धंवि

दुषांमुखे । शर्करोदकमाख्यातंशुक्र

लंशिशिरंसरम् ॥ बल्यंरुच्यंलघुस्वा

दुवातपित्तासनाशनम् । मूर्च्छाछर्दि

तृषादाहज्वरशान्तिकरंपरम् ॥

शर्द्ध : । पुं० अपानशब्दे ॥ शर्द्धनम्

। शृधुशब्दकुत्सायाम् । घञ् ॥

शर्द्धञ्जह : । पुं० माषे ॥ शर्द्धमपान

शब्दंजहाति । खोहाक् । । वात

शुनीतिलशर्द्धेषुध्वजिखश् । अरु

र्द्विषदितिमुम् । ल्यघातिरत्वान्त

र्भावितण्यर्थ : ॥

शर्द्धनम् । न० गुदशब्दे । पर्द्दे ॥

शर्म्मा । पुं० ब्राह्मणस्योपपदे ॥ न०

सुखे । त्रि० तद्वति । शृघात्वशुभ

म् । शृ० । सर्वधातुभ्योमनिन् ॥

शर्म्मर : । पुं० वस्त्रविशेषे ॥

शर्म्मरा स्त्री० दारुहरिद्रायाम् ॥

शर्म्मिष्ठा । स्त्री० दानवेन्द्रवृषपर्व

णोदुहितरि ॥

शर्य्या । स्त्री० रात्रौ ॥ इ० वाचस्पति

कोष : ॥

शर्य्याति : । पुं० वैवस्वतमनो : पुत्रे ॥

शर्व्व : । पुं० ईश्वरे । ईशाने । शि

वे ॥ शृणाति० सर्वा : प्रजा : संह

रतिप्रलयेसंहारयतिवा । शृणात्य

सुरान्० भक्तानांपापंवा । शृ० ।

कृगृशृदृभ्योव : ॥

शर्व्वरी । स्त्री० निशायाम् । यामि

न्याम् ॥ स्त्रियाम् ॥ शृणातिचेष्टा

। शृ० । कृगृशृवृञ्चतिभ्य : ष्व

रच् । षित्वान्ङीष् ॥ वनिपितु

० वनोरचेतिङीव्रौ ॥ हरिद्रायाम्

॥ वत्सरविशेषे ॥ तत्फलंयथा । क्व

चिद्वर्षतिपर्ज्जन्योदेशेसंछन्नमण्ड

ल : । दुर्भिक्षंशर्वरीवर्षेव्यवहारो

विपर्यय : ॥ ३४ ॥

शर्व्वरीश : । पुं० निशापतौ । चन्द्रे ॥

शर्व्वला । स्त्री० तोमरास्त्रे । गँड़ासा

० सवला० इ० भा० प्र० ॥ हस्तक्षेप्ये

सशल्यदण्डे । रायबांस० इ० गौ०

भा० ।

शर्व्वाणी । स्त्री० उमायाम् । कात्याय

न्याम् । गौर्य्याम् ॥ शर्व्वस्यस्त्री ।

इन्द्रवरुणभवशर्व्वेत्यादिना० ङीषा

नुकौ ॥ शर्व्वाणीमध्यमाभिधे । म

ध्यमेश्वरस्थानइत्यर्थ : ॥

शशरीक : । पुं० हिंस्रे ॥ खले ॥ शृ

णाति । शृ० । शृपृवृञ्जांद्वेरुक्चा

भ्यासस्येति० ईकन्० द्वित्वमभ्यास

स्यचरुक् ॥

शल: । पुं॰ भृङ्गिणि ॥ चर्मप्रभेदे ॥ विधौ । ब्रह्मणि ॥ दीर्घायुधे । कुन्ते । विषाङ्कुरे ॥ उष्ट्रे ॥ शल्या स्यनृपे ॥ न॰ श्वाविल्लोम्नि शलल्याम् । शलति ॥ शलति । शल चलने । पचाद्यच् ॥

शलक: । पुं॰ मर्कटे । लूतायाम् । मकड़ो॰मकड़ा॰इ॰भा॰प्र॰ ॥

शलङ्ग: । पुं॰ लोकपाले ॥ लवणविशेषे ।

शलभ: । पुं॰ कीटविशेषे ॥ पतङ्गे । कृमिविशेषे । टिड्डी॰ टीड़ी॰ इ॰ हि॰ भा॰ ॥ शलति । शल॰ । कृशृशलिकलिगर्दिभ्योऽभच् ।

शललम् । न॰ शल्ले । श्वाविल्लोम्नि । शलति । शल चलनसंवरणयो: ॥ वृषादित्वात्कलच्चित् ॥

शलली । पुं॰ श्वाविधि ॥ शललमस्यास्ति । इनि. ॥

शलली । स्त्री॰ शलली ॥ गौरादित्वाज्जातित्वाद्वाङीष् ॥

शलाका । स्त्री॰ शल्ये ॥ मदनद्रुमे ॥ शारिकायाम् ॥ शल्याम् कञ्चपञ्जरादिकाष्ठयाम् ॥ तिलिइ॰ भाषा॰ शरे ॥ आलेख्यकूर्चिकायाम् ॥ शलति । शल॰ । बलाकादयश्चेतिसाधु: ॥ धातुमय्यामञ्जनकलिकायाम् । सला इ॰ भा॰ ॥

शलाकापुरुष: । पुं॰ जैनानामिव पुरुषेषु ॥ तेचत्रिषष्टिसङ्ख्यापरिमिता: ॥ तत्रद्वादशचक्रवर्त्तिन: । चतुर्विंशतिर्जिना: । नववासुदेवा: । नवबलदेवा: । नवप्रतिवासुदेवा: । इति ॥

शलाट: । पुं॰ शकटपरिमाणे ॥

शलाटु: । पुं॰ बिल्वे । मूलविशेषे ॥ त्रि॰ आमफले ॥ शलति । शल चलनसंवरणयो: । पचाद्यच् । अटति । अट गतौ । मृगय्वादित्वात्कु: । शलश्चासावटुश्च॥

शलाभोलि: । पुं॰उष्ट्रे । इ॰ हे॰ चन्द्र॰ ।

शलालु: । न॰ सुगन्धिद्रव्यविशेषे ।

शली । स्त्री॰ श्वाविधि ॥

शल्कम् । न॰ त्वचि । वल्कले ॥ शकले । खण्डे ॥ मत्स्यत्वचि ॥ शलति । शल चलने । कृशृभ्यःकित्कम् ॥ शल्कै: काष्ठखण्डैरिति वेदभाष्यम् ॥

शल्कली । पुं॰ मत्स्ये । मीने ॥

शल्की । पुं॰ मीने ॥

शल्मलि: । स्त्री॰ शाल्मलितरौ ॥ शलति । शल॰ । क्विप् । मलते । मलधारणे । सर्वधातुभ्यइन् । शल्चासौमलिश्च ॥ इ॰ द्वि॰ प: ॥

शल्मली । स्त्री॰ शाल्मलिद्रुमे ।

शल्य : । पुं॰ मदनद्रुमे । श्वाविधि ॥ नृपविशेषे । युधिष्ठिरमातुले ॥ सीम्नि । शलाकायाम् ॥ बिल्ववृक्षे ॥ मत्स्यविशेषे ॥ न॰ घुङे ॥ इषौ । शरे । तोमरे । कुन्ते ॥ वंशकम्बिकायाम् ॥ पापे । दुःखे ॥ दुर्वाक्ये ॥ अस्थ्नि ॥ आयुर्वेदस्याङ्गविशेषे ॥ यथाह सुश्रुतः । तत्र शल्यं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थिबालनखपूयास्रावान्तर्गर्भशल्योद्धरणार्थं यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थञ्चेति ॥ पुं॰न॰ शल्ली । तोमरे । सेल इ॰ भा॰ ॥ शलति । शलगतौ । अघ्न्यादित्वाद्यत् ॥ यद्वा । सानासवर्णसीत्यादिना शलेर्यः ॥

शल्यक : । पुं॰ मदनद्रुमे । राढे ॥ श्वाविद्महेशस्थूललोमवतिप्राणिविशेषे ॥ तन्मांसगुणास्तु । शल्यकः श्वासकासास्रशोषदोषत्रयापहः । इति ॥

शल्यकण्टक : । पुं॰ शल्यके ॥

शल्यलोम । न॰ शलल्याम् ॥

शल्यहृत् । त्रि॰ व्रणचिकित्सके । शल्यहर्त्तरि ।

शल्यारि : । पुं॰ धर्मपुत्रे । युधिष्ठिरे ॥

शल्ल : । पुं॰ भेके ॥ न॰ त्वचि ॥

शल्लक : । पुं॰ शोणस्रुचे ॥ न॰ त्वचि ॥

शल्लकी । स्त्री॰ श्वाविधि । शल्यमृगे । अस्या मांसगुणा यथा । शल्यमांसं गुरु स्निग्धं शीतलं कफपित्तजिदिति ॥ द्रुमविशेषे । गजभक्ष्यायाम् । सुवहायाम् अस्या गुणास्तु । शल्लकी तुवरा शीता पित्तश्लेष्मातिसारजित् । रक्तपित्तव्रणहरी पुष्टिकृत्समुदीरितेति ॥ सलति । चलगतौ । क्वुन् । पृषोदरादिः । गौरादिः ॥ सल्कं त्वचं लक्यते । लक आस्वादने । क्वुन् ।

शल्लकीद्रव : । [illegible]

शल्व : । पुं॰ [illegible]

शव : । पुं॰ कुण[illegible]

न॰ तोये [illegible]

पचाद्यच् ॥

शवकाम्य : । पुं॰ कुक्कुरे ।

शवयानम् । न॰ काष्ठमञ्चे । शववहनार्थखट्वायाम् ॥

शवर : । पुं॰ अरण्यचरम्लेच्छविशेषे ॥ अप्सु । पानीये ॥ शङ्करे । शास्त्रविशेषे ॥ हस्ते ॥ न॰ जले ॥ चित्ते ॥ बौद्धानां व्रतविशेषे ॥ शवति । शव॰ आकुलकादर : ॥ शवरातिश्वा रा॰ । क : ॥

शवरथ : । पुं॰ शवयाने । अरथी॰ इ॰ भा॰ ॥

शवपादप : । पुं॰ लोध्रे ।

शवरलोध्र : । पुं॰ श्वेतलोध्रे ॥

शवरालय : । पुं॰ पक्कणे । भिल्लग्रामे । शवरगृहे । शवं राक्तीति शवरा : । तेषामालय : ॥

शवरावास : । पुं॰ शवरालये । शवराणामावास : ॥

शवरी । स्त्री॰ शवरभार्यायाम् ॥

शवल : । पुं॰ शवले चित्रे । कर्बुरे वर्णे ॥ त्रि॰ तद्वर्णयुक्ते ॥ पश्वौष्ठामध्यम् ॥

शवलिमा । पुं॰ चित्रितायाम् । शवलस्य भाव : । पृथ्वादित्वादिमनिच् ॥ वर्णवाचकत्वात्॰ वर्णदृढादिभ्यइतिवा॰ इमनिच् ॥

शवली । स्त्री॰ शवलवर्णायांगवि ॥ शवलयोगादन्यतो ङीष्

शव : । न॰ बले । श्वयति । टु श्वोश्वि॰ । श्वे : संप्रसारणञ्चेत्यसुन् । शवसी॰ शवांसि॰ इत्यादि बोध्यम् ॥

शवसान : । पुं॰ पथि ॥ शवति॰ शूयतेवा । शुगतौ । छन्दस्यसानच् शुङ्भ्याम् ॥

शव्यम् । नं॰ शवकर्म्मणि ॥

शश : । पुं॰ बोले ॥ लोध्रे ॥ पशुविशेषे । शशके । लोमकर्णे । वनाखौ । सख्या॰ इ॰ भा॰ ॥ अस्य मांसगुणायथा । शश : शीतोलघुर्ग्राहीरूक्ष : स्वादु : सदाहित: । वह्निकृत्कफपित्तघ्नोवातसाधारण : स्मृत : ॥ ज्वरातीसारशोषास्र श्वासामयहरश्च स : । अपिच । निरंश्वन्तंपलमेषशशांसशिग्रुगाच्छे मक्तंसुपाकम् । ससैन्धवं घृतमद्रवासं करोतिकोष्ठाग्निमतिप्रकामं ॥ शशादिमांसानिविषाणिप्रदियानीत्याह । मार्गं मांसं तथा छागं शाशंसमनुयुज्यते । एतानिहिप्रियाणिस्यु : प्रयोज्यानिवसुन्धरे । इत्येकादशीतत्त्वम् ॥ चतुर्विधपुरुषान्तर्गतपुरुषविशेषे । तल्लक्षणं यथा । मृदुवचनसुशील : कोमलाङ्ग : सुकेश : सकलगुणविधान : सत्यवादीशशोऽयमिति ॥ चन्द्रचिह्ने । शशति । शश प्लुतगतौ । अच् ।

शशक : । पुं॰ वनाखौ । शशे ॥

शशघातक : । पुं॰ श्येने । वाजइ॰ भा॰ प्र॰ ॥

शशघ्नी । स्त्री॰ शकुन्याम् । शशंहन्ति । अमनुष्यकर्तृकेइति टक । ङीप् ॥

शशधर : । पुं॰ विधौ । चन्द्रे ॥ यथा । विलोक्यवदनाम्बुजं शशधरोक्रियापाण्डुर: कुचौकमलकोरका: स्फुटतिवक्षसासांप्रतम् । इदन्तु हिमलाङ्गलमदलानिदन्तच्छदं प्रियेकथयजायतां सपदितन्विमूक :

पिकः ॥ शशस्थरोधारकः कपूरे ॥

शशपानतीर्थम् । न० तीर्थविशेषे ॥

शशप्लुतकम् । न० स्तनादिस्थनखाघाते ॥

शशभृत् । पुं० विधौ । चन्द्रे ॥ शशं बिभर्त्ति ; डुभृञ् । क्विप् ॥

शशलोम । न० शशोर्णे ॥ शशस्यलोम ॥

शशबिन्दुः । पुं० वासुदेवे ॥ राजान्तरे । चित्ररथपुत्रे ॥ चन्द्रे ॥ शशरूपबिन्दुस्त्वस्यास्य ॥

शशशिम्बिका । स्त्री० जीवन्त्याम् ॥

शशस्थली । स्त्री० गङ्गायमुनयोर्मध्यदेशे । अन्तर्वेदाम् ॥ स्त्री० मुद्रित चि० शेष ॥

शशाङ्कः । पुं० चन्द्रमसि । कपूरे ॥

शशाङ्कमूर्त्तिः । पुं० चन्द्रे ॥ शशाङ्कामूर्त्तिर्यस्य ॥

शशाण्डुली । स्त्री० कर्कटीप्रभेदे । वहुफलायाम् । तण्डुल्याम् । अस्याः पर्यायायथा । शशाण्डुलीवहुफलातण्डुलीचवसम्भवा । क्षुद्राम्लाशीमशफलाधूम्रात्वलफलातथा ॥ अस्याः गुणाः । शशाण्डुलीतिक्तकटुश्चकोमलावहुमत्युत्तामधुराकफापहा । पाकेतुसाम्लामधुराविदाहकृत्कार्या तुशुष्कारुचिकृत्प्रदीपनी ॥

शशादः । पुं० विकुक्षिसंज्ञके० राजर्षिविशेषे ॥ श्येने ॥

शशादनः । पुं० श्येनपक्षिणि ॥ शशमत्ति । अद० ॥ ल्युः । ल्युट्०युच्चा ॥

शशिकला । स्त्री० प्रतिशकरौ १५ छन्दोविशेषे ॥ तल्लक्षणन्तु गुरुनिधनमनुलघुरिहशशिकला । यथा । मलयजतिलकसमुदितशशिकला० व्रजयुवतिलसदलिकगगनगता सरसिजनयनहृदयसलिलनिधिं व्यतनुतविततरभसपरितरलम् ॥ शशिनः षोडशांशे ॥

शशिकान्तः । पुं० चन्द्रकान्तमणौ ॥ न०कुमुदे । कह्लारे । कैरवे ॥ त्रि० चन्द्रसमे ॥

शशिदेवः । पुं० रन्तिदेवे ॥

शशिध्वजः । पुं० भल्लाटपुरनृपे ॥ कल्किपुराणस्य २५ ऽध्यायप्रसिद्धे ॥

शशी । पुं० हिमांशौ । चन्द्रे । नक्षत्रेशे ॥ नक्षत्राणांमध्येशशीविष्णोर्विभूतिः ॥ सचजलमयः । यथा । सलिलमयेशशिनिरवेर्दीधितयो मूर्च्छितास्तमोनैशम् । क्षपयन्तिदर्पणोदरनिहिताइवमन्दिरस्यान्तः ॥ वर्णवृत्तप्रभेदे । नरेन्द्रोयदिस्यात् । शशीकथ्यतेतत् ॥ यथा । जनानन्दकन्दः प्रियस्ताम्मुकुन्दः ॥ सप्तमाक्षस्यद्वितीयप्रभेदे० ॥ ऽऽ०

॥ चर्यवृक्षविशेषे ॥

शशिप्रभम् । न० मुक्तायाम् ॥ कुमुदे ॥ त्रि० चन्द्रसमदीप्तियुक्ते ॥

शशिप्रभा । स्त्री० ज्योत्स्नायाम् ॥

शशिभूषण :। पुं० चन्द्रशेखरे। शिवे ॥

शशिलेखा । स्त्री० चन्द्रमस : कलायाम्। इन्दुलेखायाम् ॥ गुडूच्याम् ॥ बाकुच्याम् । सोमराज्याम् ॥ चन्द्रलेखाभिधेवृत्ते ॥ रसालायाः प्रभेदे ॥ यथा । शर्करामधुसंयुक्तेन भृतदुग्धघृतेनच । पटपूताशिखरिणीशशिलेखेतिकीर्त्तिता ॥ शशिलेखाहिमाबल्याहृच्या:पुष्टिप्रदालघु । वातपित्तहराश्रेष्ठामदाद्दाघविनाशिनी ॥

शशिलेखिका । स्त्री० शशिलेखायाम् ॥

शशिवदना । स्त्री० गायत्रीछन्द : ६ प्रभेदे ॥ शशिवदनाम्नी ॥ यथा । शशिवदनानांव्रजतरुणीनाम् । अधरसुधोर्मिंमधुरिपुरैच्छत् ॥ चन्द्रसममुखायांस्त्रियिति ॥

शशिवाटिका । स्त्री० पुनर्नवायाम् ॥

शशिशेखर : । पुं० ईश्वरे । चन्द्रमौलौसदाशिवे ॥ बुद्धभेदे । चक्रसंवरे । वज्रकपालिनि । वज्रटोके ॥

शशीयम् । न० शशलोमनि ॥ शशस्यऊर्णा•शशीयम् । शशीर्थकारयंकरणमितिचन्द्रगोमिलिङ्गानुशा सनात्•क्लीवत्वम् ॥

शश्वत् । अ० आत्मप्रश्ने मङ्गले ॥ पुराकल्पे ॥ सदार्थे । नित्ये । निरन्तरे ॥ आभीक्ष्णे ॥ पुनरर्थे ॥ शशतिगमनंवा । शश• । बाहुलकात्•वत् ॥ सहार्थे ॥

शष्कुल : । पुं० छित्तौ । करञ्जे ॥

शष्कुली । स्त्री० पिष्टविशेषे । सोहालीतिख्याते ॥ यथा । समितावाघृताक्तायालोप्त्रीकृत्वाचवेलयेत् । आज्येतांभर्जयेत्सिद्धाशष्कुलीफेनिकागुणा ॥ कर्णरन्ध्रे ॥ यथाकर्णशष्कुल्यवच्छिन्नंनभएवश्रोत्रमिति ॥ सौरी•इ•भा•प्र•मत्स्ये ॥ तन्नुवाय था । शष्कुलीयाहिलीढ्वामधुरातुवरासृता । गौरादित्वान्ङीष् ॥

शष्पम् । न० नवीनतृणे । बालतृणे ॥ पुं० प्रतिभाहानौ ॥ शष्यते•शुष्यतिवा । शसुहिंसायाम्•शुषशोषणेवा । खष्पशिल्पशष्पेतिपो निपातनात्•सत्वञ्च ॥

शसनम् । न० परम्पराके । यज्ञार्थपशुहनने ॥ शसु० । भावेल्युट् ॥

शस्तम् । न० श्व : श्रेयसि । शिवे । क्षेमे । त्रि० कल्याणयुक्ते ॥ स्तुते ॥ प्रशस्ते ॥ शस्यतेस्म । शंसुस्तुतौ । कर्म्मणिक्त : ॥

शस्तकम् । न० अङ्गुलित्राणे ॥

शस्तीयक : । त्रि० प्रशस्तदेशजात

शस्त्राङ्ग: । त्रि० रम्यतमे ॥ शस्ताम्य शान्यस्य ॥ पुं० अतीतकल्पाईंद्भे दे ॥

शस्त्रम् । न० लौहे ॥ तीक्ष्णायसे ॥ च र्ख । आयुधे ॥ शस्त्रास्त्रयं हुवासु क्तं रित्याद्गौशस्त्रास्त्रयोर्भेदउक्त : । तथाहि । येनकरधृतेनहन्यतेतच्छ स्त्रंचम्याहि । येनप्रक्षिप्तेनहन्यते तदस्त्रंकाण्डादिकृत्यनयोर्भेद : । अपिच । अस्त्रंमन्त्राभिमन्त्रितम् । शस्त्रंतद्भितरदिति । शस्यतेऽनेन । शसुहिंसायाम् । दामीतिष्ट्रन् । सर्वधातुभ्यष्ट्रनिवा । अमिचिमि दिशसिभ्य : क्त्रोवा ॥ अप्रगीतऋग् जाति ॥ शोंवादिनाशंस्यमानस्त्र स्यर्थ : ॥ अप्रगीतमन्त्रसाध्यायांस्तु तौ । अप्रगोतमन्त्रसाध्यगुणनिष्ठगु णाभिधानंशस्त्रमितियाज्ञिकाना॑व्य वहार : ॥ पुं० खड्गे । तरवारी ।

शस्त्रकम् । न० अयसि । लौहे ॥ श स्यतेनेन । शसि : ष्ट्रन् । स्वार्थे क : ॥

शस्त्रकर्म । न० वैद्यानांप्रधानेकर्म विशेषे । तदष्टविधंभवति । यथा । छेद्यं० भेद्यं० लेख्यं० वेध्य० मेष्यमा हार्यं० विसाव्यं० सीव्यमितिभेदे दात् ॥

शस्त्रकोशतरु : । पुं० महापिण्डीत रौ ।

शस्त्रजीवी । पुं० शस्त्राजीवे ॥

शस्त्रधारणजीवक: । पुं० शस्त्राजीवे ॥

शस्त्रपाणि : । पुं० असादिशस्त्रहस्ते ॥ आततायिविशेषे ॥

शस्त्रभृत् । पुं० शस्त्रधारिणि ॥

शस्त्रमार्ज : । पुं० असिधावके । शाणाजीवे ॥ शस्त्रंमार्ष्टि । मृज शु द्धौ । कर्मण्यण् ॥

शस्त्रशास्त्रम् । न० अथर्ववेदस्योपवे दे ॥

शस्त्रहत : । त्रि० शस्त्राघातेनमृते ॥

शस्त्रहस्त : । त्रि० शस्त्रपाणौ ॥

शस्त्राजीव : । त्रि० काण्डपृष्ठे । आ युधीये । ० आयुधिके ॥ शस्त्रमाजी वति० उपजीवति । जीव० । कर्म ण्यण् ।

शस्त्राभ्यास : । पुं० शस्त्रशिक्षायाम् ॥

शस्त्रायसम् । न० पिण्डायसे । हेम् पात्र ह०भा० ॥

शस्त्री । त्रि० शस्त्रविशिष्टे ॥

शस्त्री । स्त्री० छुरिकायाम् ॥ ष्ट्रन : षित्वान्ङीष् ॥

शस्यम् । न० वृक्षादिफले ॥ शंस्यते । शसु० । तकिशसिचतीति यत् ॥ तालव्याद्यपिदन्त्याद्यशस्यशूकरयो शय : ॥ चधान्ये ॥ यथा । शस्यं क्षेत्रगतंप्राहु : सतुषंधान्यमुच्यते । आमंवितुषमित्युक्तं स्विन्नमन्नमु दाहृतमितिस्मृति : ॥

शस्यध्वंसी । पुं॰ तुन्नवृक्षे । नन्दीवृक्षे ॥ त्रि॰ शस्यनाशके ॥

शस्यमञ्जरी । स्त्री॰ कणिशे । अभिनवनिर्गतधान्यादिशीर्षके ॥ शस्यस्य मञ्जरी ॥

शस्यशूकम् । न॰ यवाद्यग्रे । किंशारौ । शस्यस्य शूकम् ॥

शस्यसंवर : । पुं॰ अश्वकर्णे । सालवृक्षे ॥ शस्यैः संव्रियते । वृञ्॰ । अप् ॥

शस्यसंवरण : । पुं॰ दीर्घपर्णे । अश्वकर्णे । सरलद्रुमे ॥

शस्यात् । त्रि॰ शस्यभक्षके ॥

शस्यारु: । पुं॰ शमीरे । अल्पशमीवृक्षे ॥

शांशप : । पुं॰ असने ॥ शिंशपाया विकार : । अञ् । देविकाशिंशपेत्यात्वम् ॥

शांशपायन : । पुं॰ मुनिविशेषे ॥

शाक : । पुं॰ द्वीपविशेषे । शाके शाकद्रुमस्तुङ्ग : शाकसंज्ञानिबन्धनमित्युक्ता : ॥ शाकं शपत्रं महतिद्रुमे । क्रकचपत्रे । खरपत्रे । श्रेष्ठकाष्ठे । स्थिरसारे । शक्तौ ॥ नृपविशेषे ॥ युधिष्ठिरविक्रमादित्यशालिवाहनादिशकनरपतीनामतीताब्दे ॥ वर्षे । शैयानाख्ये ॥ पुं॰ न॰ हरितके । शाकभाजे ॥ मण्डूकपर्णीपालङ्क्याचिञ्चिकाचाप्युपोदका । चाङ्गेरीचिल्लमोचाश्चकलम्बीशाकजा

तय : । वास्तूके ॥ पत्रपुष्पादिषु । तत्रपत्रंनिम्बादे : । पुष्पंकोविदारादे: । आदिपदात् फलंवार्ताकादे : । मूलंमूलकादे : । कन्द : शूरणादे : । अङ्कुरोवंशादे : । आहच । मूलपत्रकरीराग्रफलकन्दाधिरूढकम् । त्वक् पुष्पंकवकञ्चैव शाकंदशविधंस्मृतम् ॥ अधिरूढकं तालबीजाङ्कुरास्थिमज्जादीतिगौडा : । अन्येतुचर्मोद्भूतस्यफलमूलादे : स्वेदान्नवोद्भिन्नानङ्कुरान्मन्यन्ते ॥ शक्यते॰शक्नोत्यनेनवाभोक्तुम् । शक्॰ । घञ् ॥ यद्वा । श्यति । शोतनूकरणे । बाहुलकात् कन् ॥ भावप्रकाशेतु॰षड्विधंशाकमुक्तम् । यथा । पत्र पुष्प फलंनालंकन्दसंस्वेदजंतथा । शाकंषड्विधमुद्दिष्टं गुरुविद्याद्यथोत्तरम् । अथैतेषांगुणा : । प्राय : शाकानिसर्वाणिविष्टम्भीनिगुरूणिच । रूक्षाणिबहुवर्चांसिसृष्टविण्मारुतानिच । शाकंभिनत्तिवपुरस्थिनिहन्तिनेत्रंवर्णंविनाशयतिरक्तमथापिशुक्रम् । प्रज्ञाक्षयंप्रकुरुतेपलितञ्चनूनं हन्तिस्मृतिंगतिमितिप्रवदन्तितज्ज्ञा : ॥ शाकेषुसर्वेषुवसन्तिरोगास्तेहेतवोदेहविनाशनाय । तस्माद्बुध : शाकविवर्जनन्तुकुर्यात् तथाम्लेषुसएवदोष : ॥ अपिच । सामा

न्यान्येवंविधानि शाकानि स्तावन्ति सन्ति । विशेषस्तत्र तेषान्तु सम्यक् न निरूपितः ॥ शाकपाकविधिर्यथा । हिङ्गुजीरयुते तैले क्षिपेच्छाकं सुखण्डितम् । लवणं चार्द्रचूर्णादि सिद्धे हिङ्गूदकं क्षिपेत् ॥ इत्थं सर्वशाकानां साधने विहितो विधिः ॥ वास्तूकं काकमाची च तत्तु लीयः पुनर्नवा । कैवुकं नालिकापाठा तथान्ये ऽप्येवं तद्विधाः ॥ काश्मर्दोऽथ मेथी च पुन्नाटं चणकोद्भवम् । एमाद्रं स्वच्छरहितं पक्वं सम्यग्विचक्षणैः । एवं वार्त्ताककूष्माण्डपटोलादिफलेष्वपि । तत्र ने विधिरुद्दिष्टो विशेषोऽयः सकथ्यते ॥ तप्ते तैले क्षिपेच्छाकं वास्तूकादि सुखण्डितम् । लवणं तोयमल्पञ्च क्षिप्तं सिद्धेऽर्द्धमाचकम ॥ सधान्यवेशनेनतक्रे गालितं क्वथितं क्षिपेत् ॥ ततः शुण्ठीजीरकञ्च क्षिपेद्धिङ्गूदकं क्षिपेत् ॥ इत्थमेवापरस्यापि चणस्य करणं यदि । तत्सर्वं स्वेच्छयादेयं वर्णितं प्रथमं मतम् । एवं यत्कथितं शाकं कषायं कटु तिक्तकम् । तदुष्णं नाम्बुमापूर्य तक्रं यातदनन्तरम् । तप्तैर्विनिःक्षिप्य रन्धयेच्च यथेच्छया । वर्णस्कारकं देयं कुङ्कुमं रक्तचन्दनम् । ताम्बूलं च चयद्युक्तं तत्रतत्र प्रयोजयेत् ॥

शाकचुक्रिका । स्त्री॰ चिञ्चायाम् ॥

शाकट : । पुं॰ शकटस्योढरि ॥ स्त्रोऽमातके । बहुवारके ॥ त्रि॰ शकटस्येदमित्यर्थे । शकटोपकरणे ॥ शकटं वहति । शकटाद्वण् ॥ शकटस्य भारे ॥ शकटेनउह्यते । शेषद्वण् ॥

शाकटाक्ष : । पुं॰ धवद्रुमे ॥

शाकटायन : । पुं॰ मुनिविशेषे ॥

शाकटिक : । त्रि॰ शकटेनगमनकर्त्तरि ॥ शकटेनचरति॰ गच्छति । चरतीति ठक् ।

शाकटीन : । पुं॰ विंशतितुलापरिमाणे । भारे । आचिते । शलाटे ॥

शाकतरु : । पुं॰ शाकवृक्षे । सागौ न॰ हु॰ भा॰ ॥ शाकाख्यस्तरु : ॥

शाकपत्रक : । पुं॰ शिग्रौ ॥

शाकम्भरी । स्त्री॰ । चण्डाम् । दुर्गायाम् । शाकैर्भरणात् पोषणात् ॥ तस्याः स्थानं हिमाद्रेः प्रत्यन्तपर्वते प्रसिद्धम् ॥ तीर्थविशेषे ॥

शाकम्भरीयम् । न॰ सांभर॰ हु॰ भा॰ प्र॰ लवणविशेषे । अस्यपर्यायगुणा यथा । शाकम्भरीयं कथितं गडाख्यं रोमकं तथा । गडाख्यं लघुवातघ्नमत्युष्णं भेदिपित्तलम् ।

तीक्ष्णोष्णवायुसूक्ष्मशाभिष्यन्दिक टुपाकिच ॥

शाकयोग्यम् । न॰ धान्याके ॥

शाकराट् । पुं॰ वास्तूके ॥

शाकराज: । पुं॰ वास्तूके

शाकरुण्ड: । पुं॰ ग्रन्थिफले ॥

शाकल: । पुं॰ उदीच्यग्रामे ॥ वाहीकग्रामे ॥

शाकल्य: । पुं॰ ऋषिविशेषे ॥ शकलस्यगोत्रापत्यम् । गर्गादित्वा द्यञ् ॥

शाकमालिय: । पुं॰ ब्रह्मयष्ट्याम् ॥

शाकबिल्व: । ) पुं॰ वार्त्ताकौ ॥
शाकबिल्वक: । )

शाकवीर: । पुं॰ जीवशाके ॥ पुनर्नवायां ॥

शाकवृक्ष: । पुं॰ शाके । खरपत्रे । अर्ज्जुनोपमे । क्रकचपत्रे ॥

शाकशाकटम् । न॰ शाकक्षेत्रे ॥ शाकानांभवनङ्क्षेत्रम् । भवने क्षेत्रेशाकटशाकिनाविति शाकट: ॥

शाकशाकिनम् । न॰ शाकशाकटे ॥ शाकानामभवनङ्क्षेत्रम् । भवने क्षेत्रेशाकटशाकिनाविति शाकिन: ॥

शाकश्रेष्ठ: । पुं॰ न॰ वास्तूकशाके ॥

शाकश्रेष्ठा । स्त्री॰ जीवन्त्याम् । वार्त्ताकौ ॥ डिडीशपे ॥

शाकाख्यम् । न॰ पत्रपुष्पादौ । यथा । मूलपत्रकरीराग्रफलकान्दाधिरूढकम् । त्वक्पुष्पं कवकञ्चेति शाकंदशविधंस्मृतम् ॥ पुं॰ शाकवृक्षे । अतिपर्वे । श्रेष्ठकाष्ठे । स्थिरसारे । गृहद्रुमे । सागोनइ॰ गो॰ भा॰ ॥

शाकाङ्गम् । न॰ मरिचे ॥

शाकाम्लम् । न॰ वृक्षाम्ले ॥

शाकाम्लभेदनम् । न॰ चुक्रे । काञ्जिकप्रभेदे ॥

शाकालाबू: । स्त्री॰ राजतुम्ब्याम् ॥

शाकिनम् । न॰ मद्गच्छाकवति । मद्गच्छाकंशाकी॰ तद्वति ॥ मत्वर्थेपामादित्वान्न: । शाकोपलाली दद्रूर्णाङ्कसक्षस्य ॥

शाकिनी । स्त्री॰ दुर्गायाअनुचरीविशेषे ॥ शाकयुक्तायांभूमौ ॥ यथा । शकट: शाकिनीगावोजालमस्यन्दनंवनम् । अनूपंपर्वतोराजादुर्भिक्षेनववृत्तय: ॥ शकटोधान्यादिवहनद्वारेणोपजीव्य: । पत्रपुष्पफलादिषड्विधशाकयोगात्॰ शाकिनी॰ गृहवाटिका॰ शाकाद्याहरणेन । गावो । दुग्धादिना । जालं । मत्स्याद्याहरणेनअस्यन्दनंस्वस्थानात्याग॰ऋणादिलाभेन॰ व्ययाधिक्यमिव्रस्याच । वनंफलपुष्पाद्याहरणेन । अनूपंबहूदकदे

शः॰ समृबालशालकादाद्वरणे न । पर्वतीगैरिकमृदाद्याहरणेन । राजाभिषादिनेत्यर्थः ॥

शाकी । पुं॰ मत्स्यके

शाकुन : । पुं॰ न॰ पशुपक्ष्यादिरूप शकुनद्वारामनुष्यशुभाशुभनिश्चाय कग्रन्थे । वसन्तराजादौ ॥

शाकुनि : । त्रि॰ पक्षिजीविनि ॥

शाकुनिक : । पुं॰ जीवान्तके । पक्षि हन्तरि । शकुनान्हन्ति । पक्षिम त्स्ये । त्यचपर्यायस्यापिग्रहणाट्ठक् ॥

शाकुनेय : । पुं॰ क्षुद्रोलूके । पिङ्गले । क्षुद्रपेचके । शकुनेरपत्यम् । शुभ्रादित्वाड्ढक् ॥

शाकुन्तलेय : । पुं॰ भरते । शकुन्तलाया अपत्यम् । स्त्रीभ्यो ढक् ॥

शाकुलिक : । पुं॰ मात्स्यिकविशेषे । शकुलान्हन्ति । पक्षिमत्स्येति ठक् ॥

शाकर : । पुं॰ अनडुहि ॥

शाक्त : । त्रि॰ सर्वदेवमय्याः शक्तेरुपासके । शक्तिर्देवतास्य । सास्यदेवतेत्यण् । यथा । शाक्ता एव द्विजाः सर्वेनशैवानचवैष्णवाः । उपासते यतोदेवीं गायत्रीपरमाक्षरीम् ॥ शक्त्युपासनानन्तर मन्योपासननिषेधोयथा । अस्याराधनंकृत्वानान्यस्याराधनंचरेत् । अन्यस्यस्मरणाद्देवियोगिनीशापमाप्नुयात् ॥ इतिदिग्वैस्वतन्त्रम् ॥ देवीभक्तापराधहृदुःखदात्वमुक्तं मुण्डमालातन्त्रे । शाक्तान्हिंसन्तिगर्जन्ति निन्दन्ति बहुजल्पकाः । छिनत्तितेषांदेवेशीशिरांसिस्वयमेवहि ॥ गर्जन्ति॰ कुप्यन्तियुध्यन्तीत्यर्थः ॥

शाक्तिक : । त्रि॰ शक्त्युपजीविनि ॥ शक्त्याजीवति । वेतनादित्वाट्ठञ् ॥

शाक्तीक : । त्रि॰ शक्तिहेतिके । शक्तियोधिनि ॥ शक्तिः प्रहरणमस्य शक्तियष्ट्योरीकक् ॥

शाक्य : । पुं॰ बुद्धे ॥ शकोऽभिजनोऽस्य । शण्डिकादिभ्योञ्यः ॥ शाक्यमुनौ । भीमवत् ॥

शाक्यमुनि : । पुं॰ शौद्धोदनौ । मायादेवीसुते ॥ शकोऽभिजनोऽस्य । शण्डिकाभ्योञ्यः ॥ यद्वा । शाकवृक्षप्रतिच्छन्नंवासंयस्माच्चक्रिरे । तस्मादिक्ष्वाकुवंशास्ते शाक्याइतिभुविश्रुताः इतिसुन्दरानन्दचरितागमे ॥ अयमर्थः । केचनेक्ष्वाकुवंश्याराजपुत्राः पितात्यक्ताः सन्तो गौतमवंश्यकपिलस्याश्रमे शाकवृक्षच्छन्ने वसतिं कृतवन्त इति तेषांशाक्याः । शाकेभवाः । दिगादित्वाद्यत् । तद्वंशावतीर्णोमुनिः । शाक्यश्चासौमुनिश्चेति॰ शाक्यमुनिः ॥

शाक्यसिंह: । पुं॰ सर्वार्थसिद्धे । शाक्यमुनौ ॥ शाक्य: सिंह इव । उपमितंव्याघ्रेतिसमास: ॥

शाक्री । स्त्री॰ दुर्गायाम् ॥

शाख: । पुं॰ छिन्नौ । कार्त्तिके ॥

शाखा । स्त्री॰ पक्षान्तरे ॥ बाहौ ॥ ग्रन्थभेदे ॥ अन्तिके ॥ द्रुमाङ्गे । लतायाम् ॥ वेदभागे । ऋग्वेदादिक मेण वेदाश्चत्वार: । तत्रैकविंशति शाखा ऋच: । नवाधिकशतशाखा यजुष: । सहस्रशाखा: साम: । पञ्चाशच्छाखा अथर्वण: । अतोक्तं छन्दोगपरिशिष्टे । स्वशाखाश्रय मुत्सृज्य परशाखाश्रयस्तु य: । कर्त्तु मिच्छति दुर्मेधा मोघंतत्तस्य यत्कृत म् ॥ यन्नाम्नातंस्वशाखायां पारक्य मविरोधियत् । विद्वद्भिस्तदनुष्ठेय मग्निहोत्रादिकर्मवदिति ॥ बह्व ल्पं वा स्वगृह्योक्तं यस्य यत्कर्मकीर्त्ति तम् । तस्य तावति शास्त्रार्थे कृते स र्वं कृतं भवेदिति तत्ता पि विशेष: ॥ शाखति । शाखृ व्याप्तौ । पचाद्य च् । टाप् । यद्वा । शेतेऽस्यांप क्षी । शीङो ह्रस्वश्च खत॰ इत्याख्यय आचेति दशपादानुसारिण ॥

शाखाकण्ट: । पुं॰ स्नुहीवृक्षे ॥

शाखानगरम् । न॰ यन्मूलनगरादन्य त्पुरं तस्मिन् । मुख्यपुराभ्यर्णपु रे । अभिधानचिन्तामणौ । यथा । आरभ्यमूलनगरात्परंनगरं स्थितम् । तदभिधानचिन्तामणौ शाखानगरमित्य पीतिशब्दरत्नावली ॥ तत्स्थानी यत्तमूलनगरस्य शाखेवनगरम् ॥

शाखापित्तम् । न॰ पाणिपादांसमूल दाहे ॥

शाखापुरम् । न॰ शाखानगरे ॥ शा खेवपुरं ॥

शाखामृग: । पुं॰ कपौ । वलीमुखे । वानरे ॥ शाखाचरोमृग: पशु: । शाकपार्थिवादि: ॥

शाखामृगाधिप: । पुं॰ सुग्रीवे । शा खामृगाणामधिप: ।

शाखाम्ला । स्त्री॰ वृक्षाम्लायाम् ॥

शाखारण्ड: । पुं॰ स्वशाखांपरित्य ज्य शाखान्तराध्ययनकर्त्तरि । अ- न्यशाखके । स्ववेदशाखामुत्सृज्य परशाखाश्रयकर्मकारिणि ॥

शाखारथ्या । स्त्री॰ पिण्डगृहस्तम्भस्थे पथि । यथा । धनूंषि चैव चत्वा रि शाखारथ्यास्तु निर्मिता: । चि करा चोपरथ्यास्तु द्विकराप्युपरथ्य का ॥ इति देवीपुराणम् ॥

शाखाल: । पुं॰ वानीरवृक्षे ।

शाखाशिखा । स्त्री॰ मूलादारभ्या ग्रं यावद्॰ गतायां लतायाम् । अ वरोहे ॥

शाखि: । पुं॰ तुरुष्के । तुरकस्था न्॰ बु॰ भा॰ प्र॰ देशे ॥ शा

ख॰ । इन् ॥

शाखी । पुं॰ पादपे ॥ वेदे ॥ तुरुष्काख्यजने ॥ राजभेदे ॥ शाखाऽस्यास्ति । व्रीह्यादित्वादिनिः ॥ यथा । अवश्यं शाखति । शाखृ॰ । आवश्यकेतिणिनिः ॥

शाखोटः । पुं॰ सहोडा इ॰ भा॰ प्र॰ हर्षं । पीतफले ॥ यथास्यपर्यायगुणाः । शाखोटः पीतफलको भूतावासः खरच्छदः । शाखोटोरक्तपित्तार्शोवातश्लेष्मातिसारजिदिति ॥

शाखोटकः । पुं॰ शाखोटे ॥

शाङ्करः । पुं॰ बलीवर्दे ॥ न॰ छन्दोभेदे ॥ त्रि॰ शङ्करसम्बन्धिनि । माहेश्वरे ॥ शङ्करप्रोक्ते ॥ यथा । आगमोक्तविधिंहित्वाय: शाङ्करं कुरुते नरः । शाङ्करंतद्विफलंसोऽपिपित्तभिन्नरकंब्रजेत् ॥ ततोयंशोणितसमं पिण्डोमलमयोभवेत् । तस्मान्मर्त्यः प्रयत्नेनशाङ्करमतमाश्रयेत् ॥ शङ्करस्यायम्॰ शङ्करेणप्रोक्तं वा । अण् ॥

शाङ्करिः । पुं॰ स्कन्दे ॥ गणेशे ॥

शाङ्करी । स्त्री॰ देवीविशेषे ॥ श्रीगिरीशाङ्करीसम्भूतेतिदेवीशाङ्करीतुमशाकाली॰ इतिचदेवीगीता । अत्र शङ्करोशाङ्कर्योर्व्यत्ययेनपाठोगीतायांबोध्यः ॥

शाङ्कुची । स्त्री॰ शङ्कुयादसि ॥

शाङ्खिकः । पुं॰ काम्बविके । शङ्खवलयादिकर्त्तरिजातविशेषे ॥ शङ्खः शिल्पमस्य । शिल्पमितिठक् ॥

शाङ्गुष्ठा । स्त्री॰ गुञ्जायाम् ॥ इ॰ र॰ माला ॥

शाटः । पुं॰ वस्त्रविशेषे । शाटके ॥ शटेकर्म्मणिघञ् ॥

शाटकः । पुं॰ न॰ पटप्रभेदे ॥ यथा आजानुलम्बितमलीमसशाटकानां मिथादपिप्रथमयाचितभाटकानाम् । पुत्रादपिप्रियतमैकवराटकानां वक्त्रं दिवः पततुमूर्ध्नि कराटकानाम् ॥ स्वार्थेकः ॥

शाटिका । स्त्री॰ शाट्याम् ॥

शाटी । स्त्री॰ शाटके । स्त्रीपरिधेयवस्त्रे । साडी॰इ॰भा॰प्र॰ ॥ शाट्यते । शटश्लाघायांचुरादिः । सर्वधातुभ्यइन् । कृदिकारादितिङीष् ॥

शाट्यायनः । पुं॰ मुनिविशेषे ॥ न॰ प्रकृतकर्मवैगुण्यप्रशमनार्थे होमे ॥ नायंहोमः सर्वसम्मतः निर्मूलत्वात् । समूलत्वे शाखान्तरीयत्वमितिगौडाः ॥

शाठ्यम् । न॰ कुसृतौ । कपटे । व्याजे । निकृतौ । शठतायाम् ॥ शठति । शठकैतवे । पचाद्यच् । शठस्यकर्म । ब्राह्मणादित्वात्ष्यञ् ॥

यथा । शठनम् । स्वच्छीस्यात् ॥
शाणः । पुं० माषचतुष्टये । निष्के । टङ्के ॥ खङ्गादितीक्ष्णीकारयन्त्रे निकषे । कषे । कसौटी० इ० भा० प्र० पाषाणे ॥ शण्यते । श णु दाने । भकर्त्तरीतिघञ् ॥ श्य तिवा । शोतनूकरणे । बाहुलका न्नः ॥ न० शणनिर्मितवस्त्रे ॥
शाणकम् । न० शणपुष्पे ॥ तच्छा कप्रकारोयथा । सुस्विन्नं शाणकंपु ष्पं तक्रे तैलेविपाचितम् । हिङ्गुना वासितंसम्यक्चूर्णेनावचूर्णितम् । शणपुष्पंसरंबल्यमस्रकप्रदरनाशन म् । मधुरंरुचिरंपाकेकिञ्चिद्विष्ट म्भकारकम् ॥
शाणाजीवः । पुं० असिधावके । श स्त्रमार्जे ॥
शाणिः । पुं० पट्टसूत्रे ॥
शाणितः । त्रि० तेजिते । निशिते ॥
शाणी । स्त्री० प्रावरणाम्बरे । शण सूत्रमय्यांपट्टिकायाम् ॥ यथा । शाणीप्रायाणिवस्त्राणिशमीप्रायाम हीरुहाः । शूद्रप्रायास्तथावर्णाभ विष्यन्तिकलौयुगे ॥ इ० वि० पु० शाणी० शणसूत्रमयीपट्टिका० तत्तुल्यानिवस्त्राणीतितट्टीका ॥ छिद्रवस्त्रे ॥ हस्तकटाक्षादिसूचना याम् । सैन० इ० भा० ॥ शणस्य विकारः । तस्यविकारइत्यण् । टि

ड्ढेतिङीप् ॥
शाण्डकी । स्त्री० माण्डलीमहस्थानस्था यादेवतायाम् ॥
शाण्डिल्यः । पुं० गोत्रप्रवर्त्तकऋषौ । कर्त्तरिमुनिविशेषे ॥ शाण्डिल्यो मुनिश्रेष्ठस्सुमान्योतीवप्रकीर्त्तितः ॥ पावकविशेषे ॥ मालूरे । बिल्व वृक्षे ॥ शण्डते । अण्डजार्थास ञ्जातेष । सलिकल्यनिमहिभण्डि भण्डिशण्डपिण्डितुण्डिकुकिभू- भ्यइलच् । शण्डिलस्यापत्यम् । गर्गादिभ्योयञ् ॥ शा ण्डिल्यइवमान्यत्वाद्वा ॥
शाण्डिल्यविद्या । स्त्री० मनोमयात्म नउपासनायाम् ॥ शाण्डिल्येन मुनिनादृष्टाविद्या ॥
शातम् । न० सुखे ॥ त्रि० दुर्व ले । निशिते ॥ सुखान्विते ॥ शा यतेस्म । शो० । क्तः । शाच्छो रन्यतरस्यामितिपक्षे इत्वाभावः ॥ श्यतिदुःखवा । शावतेवा । बाहुलका त्तन् ॥
शातकर्णिः । पुं० मुनिविशेषे ॥
शातकुम्भः । पुं० अश्वमारके । कर वीरे ॥ न० काञ्चने ॥ शतकुम्भ पर्वतेभवम् । अण् ॥
शातकौम्भम् । न० काञ्चने । स्वर्णे ॥ शतकुम्भेपर्वतेभवम् । तत्रभवइ त्यण् । अनुशतिकादीनाञ्चेत्युभय

पदत्वविरितिस्वामी ॥

शातकौम्भास्वरभ् । न० सुवर्णरसान्ते वर्षे ॥

शातनम् । न० कार्श्ये ॥ विशीर्णने ॥ यथा ! वसन्तेसर्वसत्त्वानांजाय ते पत्रशातनम् । मोद्मानाप्रति छन्तियथा : कश्चिमशालिन : ॥ श दृत्तशातने । णिच् । शदेरगता विति तत्वेल्युट् ॥

शातपत्र : । पुं० शातपत्रके ॥ शत पत्रमिव । शर्करादिभ्योऽण् ॥

शातपत्रक : । पुं० चन्द्रिकायाम् । ज्योत्स्नायाम् । प्रकाशे ।। स्वार्थेसं ज्ञायांवा० ककनौ ॥ वृ० श० चं० का ॥

शातभीरु : । पुं० मल्लिकाप्रभेदे ॥

शातामनम् । त्रि० शतमानेनक्रीते ॥

शातयिता । त्रि० हन्तरि ॥

शातला । स्त्री० चर्मकषायाम् । सौहुण्डप्रभेदे ॥ शातंसुखंलाति । ला० । क :॥ शातलाकटुका पाकेवातलाशीतलालघु : । ति क्ताशोथकफानाहपित्तोदावर्त्तरक्त जित् ॥

शातकुम्भम् । न० विद्युत्सम्बन्धिनि ज्योतिषि ॥

शातित : । त्रि० छिन्ने ॥

शात्रव: । पुं० रिपौ । शत्रौ ॥ स्वा र्थेऽण् ॥ न० शत्रुसंहतौ ॥ श

त्रुत्वे । अण् ॥

शाद : । पुं० कर्दमे : अस्यावि ॥ श ष्पे ॥ शीयन्तेऽस्मिन्ननेनवा । श दृत० । घञ् ॥ यद्वा । शीयतेऽन श्यति । ज्वलितिकसन्तेभ्योण : ॥ यद्वा । श्यति । शो० । शाशपिभ्यां ददमाविति द : ॥ शद्यतेऽनेनवा । शदृत्ल० । हलश्चेतिभावेत्राघञ् ॥

शादहरित : । त्रि० नवतृणप्रायदेशे । शाद्वले । शादैर्बालतृणैर्हरित : ॥

शाहर : । त्रि० शाद्वले ॥ रलयोरभे द : ॥

शाद्वल : । त्रि० शादहरिते ॥ शादो बालतृणमस्मिन् : नडशादाड्डु लच् । शष्पवाचिनएवशादाड्डु लच्०नतुपङ्कवाचिनोऽनभिधाना त् ।

शानपाद : । पुं० पारिपात्रशैले ॥ चन्दनघर्षणपाषाणे ॥

शान्त : । पुं० अभियुक्ते । स्वामिनि ॥ रसविशेषे ॥ यथाद्द : खंनसुखं नचिन्तानद्वेषरागौनचकाचिदिच्छा । रस : सशान्त : कथितोमुनीन्द्रै : सर्वेषुभावेषुसमप्रमाण : ॥ त्रि० शमान्विते । शान्ते । संयतान्त : करणे । अन्तरिन्द्रियनिग्रहकर्त्त रि । प्रशान्तचित्ते । दान्ते । ०उ पद्रवरहिते० सर्वामर्थोपशमरूपे० जात्यादिरहिते०चविकृते०निरस्त

समस्तोपाधिरहितत्वाद्विचेपादिविकार शून्ये • आत्मनि ॥ रागादिदोषरहिते । निवृत्तिपरतया निरुद्धेन्द्रियव्यापारे • संस्कारमात्रशेषे • चित्तविचेपरहितेयतौ च, तृष्णारहिते ॥ सर्वविशेषप्रत्ययस्तमितरूपे • अविक्रिये • सर्वान्तरे • सर्वबुद्धिप्रत्ययसाचिणि • मुख्यआत्मनि । आकाशादिषुस्थूलेषुसत्त्वप्रधानतया • केचिद्विशेषा : शान्ता : सुखा : प्रकाशका : लघवस्ते शान्ता : कथ्यन्ते ॥ शाम्यतिस्म । शम० । क्ष्यन्त : । क्त : । वादान्तशान्तेतिसाधु : ॥ निवृत्ते ॥ यथा • शान्तोरोग : ॥

शान्तनव : । पुं • भीष्मे ॥ शन्तनोरपत्यम् । अण् ॥

शान्तनु : । पुं • कुरुवंशजेनृपविशेषे । प्रातीपे । प्रतीपभूपतनये ॥ यो यंगङ्गायांभीष्मंजनयामास ॥ यंयंकराभ्यांस्पृशतिजीर्णंयौवनमेष्यति । शान्तिमाप्नोतिचैवाग्र्यांकर्मणा तेनशान्तनुः ॥ ललितिकातीर्थे ।

शान्तम् । अ• वारणे ॥

शान्तमाना : । वि• नियतचित्ते । वशीकृतमनसि ॥

शान्ता । स्त्री• दुर्गायाम् ॥ सात्त्विक्यांमनसोवृत्तौ । आमलक्याम् ॥ शमीप्रभेदे । शुभायाम् । भद्रायाम् । अपराजितायाम् ॥ श

मोवदत्याशुषा : ॥

शान्तावध : पुं• अयायाम् ॥

शान्ति : । पुं• वृत्तार्हद्विशेषे ॥ जिनचक्रवर्त्तिविशेषे ॥ दशममन्वन्तरीयेन्द्रे ॥

शान्ति : । स्त्री• मङ्गले । भद्रे ॥ सम्पूजकानांकुलपालकानांयतीन्द्रयोगीन्द्रतपोधनानाम् । देशस्य राष्ट्रस्यकुलस्यराज्ञ : करोतुशान्तिं भगवान्कुलेश : ॥ विषयेभ्यइन्द्रियोपरतौ । शमथे । शमे । तृष्णाचये ॥ तल्लचणंयथा । यत्किञ्चिद्वस्तुसम्प्राप्यस्वल्पंवायदिवाबहु । यातुष्टिर्जायतेचित्ते शान्ति : साग द्यतेबुधैरिति ॥ सुशीलस्यभार्ययम् । यथा । शान्तिलब्ध्वाअभार्येंद्रस्सुशीलस्यचपूजिते । याभ्यां विनाजगत्सर्वमुन्मत्तमिवनारदेति ॥ कामक्रोधाद्यभावे ॥ सर्वसंसारोपरतौ । मुक्तौ । सहेतुकस्यसंसारस्योपशमे । सर्वस्यपरतौ ॥ विषयभोगस्पृहानिवृत्तौ । अन्त : करणस्योपशमे ॥ सकार्याविद्यानिवृत्तिरूपायांवेदान्तवाक्यजन्यायां• ब्रह्मात्मैक्यसाचात्कृतौ ॥ सर्वलौकिकालौकिककर्मविचेपनिवृत्तौ ॥ बाधितानुवृत्त्याऽविद्याकार्यनिवृत्तौ । अविद्यातत्कार्य्यनिवृत्तिरूपायांमुक्तौ ॥

दुर्गायाम् ॥ यथा । उत्पत्तिस्थिति नाशेषु रजआदिगुणामता । सर्वज्ञा सर्ववेदत्वाच्छान्तित्वाच्छान्तिरुच्यते । गोपीविशेषे ॥ अनर्थनिवृत्तौ ॥ धर्मद्वारायद्दीस्यादुःस्वप्नादिसूचितेष्विष्टानिष्टहेतुदुरितनिवृत्तौ ॥ यथाशस्त्रप्रहारार्णांकवचं विनिवारकम् । तथादैवोपघातानांशान्तिर्भवतिवारणम् ॥ अपिच । रोगक्लेशाग्रहादीनांनिरासः शान्तिरीरितेति ॥ शमनम् । शम० । स्त्रियांक्तिन् । अनुनासिकेतिदीर्घः ॥

शान्तिकामः । त्रि० शान्त्यभिलाषिणि ॥ श्रीकामः शान्तिकामोवाग्रहयज्ञं समाचरेत् । दृष्ट्यायुः पुष्टिकामोवातथैवाभिचरन्नपि ॥

शान्तिगृहम् । न० यज्ञान्तेशान्त्यालये । शान्तिकुम्भजलैःस्नानगृहे ॥ आथर्वणे । द्र०हे०म्द्र० : ॥

शान्तिमार्गः । पुं० दुस्तर्कादिरहिते वर्त्मनि ॥

शापः । पुं० आक्रोशे । इदम्मनिष्टमेघामस्त्वित्येवंरूपे० अभिशापे ॥ शापदानात्तपः क्षयः ॥ दिव्ये । शपथे ॥ शपनम् । शप० । घञ् ॥ निन्दायाम् ॥ मिथ्याभिशंसने ॥ अनिष्टाचरणे ॥

शापास्त्रः । पुं० मुनौ ॥

शाफरिकः । त्रि० मात्स्यिकविशेषे ॥

शफरान्हन्ति । पक्षिमत्स्येतिठक् ॥

शाब्दः । त्रि० शब्दजन्ये ॥ शब्दसम्बन्धिनि ॥ शब्देजातः ० शब्देभवः ० शब्दस्यायंवा । अण् ॥

शाब्दबोधः । पुं० शब्दार्थज्ञाने ॥ न्यायमते० पदार्थज्ञानजन्यज्ञाने ॥ तस्यकरणं पदज्ञानं । तस्यकारणं पदशक्तिज्ञानम् । कदाचिल्लक्षणाज्ञानम् । एवमाकाङ्क्षायोग्यतासत्तितात्पर्यज्ञानञ्च ॥ यथा । पदज्ञानन्तुकरणंद्वारंतत्रपदार्थधीः । शाब्दबोधः फलंतत्रशक्तिः धीः सहकारिणीति० भा० प० ॥ संसारमोहनाशायशाब्दबोधोनहिक्षमः । ननिवर्त्ततितिमिरंकदाचिद्दीपवार्त्तयेतिकुलार्णवे १ उल्लासः ॥

शाब्दिकः । पुं० वैयाकरणे ॥ शब्दं करोति० प्रकृतिप्रत्ययविभागेनोत्पादयति० सर्वत्रार्थ० शब्ददर्दुरंकरोतीतिठक्० अभिधानस्याभाव्यात् । तेनेहन । शब्दंकरोतिवैरः ॥ आदिशाब्दिकायथाकविकल्पद्रुमे । इन्द्रश्चन्द्रः काशकृत्स्नापिशलीशाकटायनः । पाणिन्यमरजैनेन्द्राजयन्त्यष्टादिशाब्दिकाः ॥ इति ॥

शाब्दीभावना । स्त्री० पुरुषप्रवृत्त्यनुकूलव्यापारविशेषे ॥ यथा । यजेत० इत्यत्रास्यंशद्वयम्० यजिधातुः प्र

त्ययश्च । तत्रप्रत्ययेप्यस्त्यंशद्वयम् । आख्यातत्वं लिङ्त्वञ्च । तत्राख्यातत्वं दशलकारेषुविद्यते । लिङ्त्वञ्चकेवलेलिङ्येव । तत्राख्यातत्वलिङ्त्वाभ्यांभावनैवोच्यते । साहि द्विधा । शाब्दीभावना । आर्थीभावनाचेति । तत्रशाब्दीभावनालिङ्त्वांशेनोच्यते । लिङ्श्रवणे च यंमांप्रवर्त्तयति । मत्प्रवृत्त्यनुकूलव्यापारवानयमितिनियमेनप्रतीयमानत्वात् । यच्चयस्मात्प्रतीयते । तत् । तस्यवाच्यम् । यथागोत्वम् । । सचप्रवृत्त्यनुकूलोव्यापारविशेषो लोकेपुरुषनिष्ठोभिप्रायविशेषः । वेदेतुपुरुषाभावाल्लिङादिशब्दनिष्ठ एवशाब्दीभावनेत्युपदिश्यते । सा चशाब्दीभावना अंशत्रयमपेक्षते । साध्यं साधनमितिकर्त्तव्यताञ्च । साध्यंस्वर्गादि । साधनंलिङादिज्ञानस्यकरणत्वेनान्वयत्वम् । इतिकर्त्तव्यताप्राशस्त्यज्ञानमितिकर्त्तव्यतात्वेनान्वीयते । यथावर्मवाएतत् । यज्ञस्यक्रियतेयत्प्रयाजानुयाजाइतिप्रयाजादिस्तुतिज्ञानम् । तथाहि । भाव्याकाङ्क्षायां किंभावयेत् । स्वर्गंभावयेत् । कारणाकाङ्क्षायांकेनभावयेत् । यागेनभावयेत् । कथम्भावाकाङ्क्षायांयत्सन्निधौपठितमप्ययमाणफलस्वक्रियाजातंतदेवोपकार्याकाङ्क्षामामितिकर्त्तव्यतात्वेनान्वयमनुभवितुयोग्यम् । तथाच । प्रयाजानुयाजसहकृतेनदर्शपौर्णमासेनस्वर्गंभाव्यः । इति ॥

शामनी । स्त्री । यमाद्यांदिशि ॥

शामिता । त्रि । वधकर्त्तरि ॥

शामित्रम् । न । वधरूपेशमितुः कर्म्मणि ॥

शामित्रकर्म्म । न । पशुहिंसने । शमितुरिदंशामित्रम् । तच्चतत्कर्म्मचेति ॥

शामीलम् । न । भस्मनि । शमीभस्मनि । शम्याविकारः । शम्याः ष्लञ् । षित्वान्ङीष् । शामीली स्रुक् ॥

शाम्बरी । स्त्री । मायायाम् । इन्द्रजालादौ ॥ शम्बरस्यदैत्यविशेषस्येयम् । तस्येदमित्यण् । ङीप् ॥

शाम्भवः । पुं । गुग्गुलौ ॥ कर्पूरे ॥ विषमस्थाम् । विषप्रभेदे ॥ शम्भुपुत्रे ॥ न । देवदारुणि ॥ त्रि । शम्भुसम्बन्धिनि ॥ कौलिके । माहेश्वरे ॥ पुं । शम्भुप्रोक्ताचारे । कुलाचारे ॥ यथा । अशाम्भवेनमार्गेणदेवतास्थापनंचरेत् । नसान्निध्यंभवेत्तत्रदेवतायाः कथञ्चन ॥ इहामुत्रफलंनास्तिकायक्लेशोधनक्षयः ॥ आगमोक्तविधिंहित्वायः श्राद्धंकुरुतेनरः । श्राद्धंतद्विफलं

सोऽपि पित्रभिर्नरकं व्रजेत् ॥ तत्तो यंशोणितसर्वपिण्डोमलमयीभवेत् । तस्मात्मर्त्यः प्रयत्नेनशाङ्करंमत माश्रयेत् ॥ बहुनात्रकिमुक्तेनसत्यं सत्यंमयोच्यते । अशाम्भवंकृतंकर्म सर्वंदेवविनिरर्थकम् ॥ अस्तुताव त्परोधर्मः पूर्वधर्मोऽपिनश्यति । शाम्भवाचारहोनस्यनरकान्नैवनि ष्कृतिः ॥ शम्भोरयम्० शम्भो रागतः शम्भुमाप्रोक्तावा ॥ अण् ॥

शाम्भवी । स्त्री० पार्वत्याम् ॥ कुलो मायाम् ॥ नीलदूर्वायाम् ॥

शायिका । स्त्री० शयने ॥ शीङ्धा त्वर्थनिर्देशेण्वुल् । वृत्वम् ॥

शार : । पुं० समीरणे । वाते ॥ अ त्तोपकरणे ॥ त्रि० शबले । कर्बु रे ॥ पीते ॥ शीर्यतेऽनेनशृणातिवा । शृहिंसायाम् । शृवायुवर्णनिवृ तेष्वितिघञ् ॥ शृणवन्त्यनेनद्यूत कारा : परस्परम् । बाहुलकादृघञ् ॥ शारोवर्णः । चित्रीकरणमिह धात्वर्थः ॥

शारङ्ग : । पुं० सारङ्गविहगे ॥ शारय ति०शोयतेवातपादिना । शृ० । तरत्यादिभ्यष्टेत्यङ्गच् ॥ शबले ॥ हरिणे ॥

शारङ्गी । स्त्री० वाद्ययन्त्रविशेषे ॥

शारद : । पुं० अब्दे । वत्सरे ॥ का शे ॥ बकुले ॥ पीतमुद्गे ॥ हरिन्मु द्गे ॥ रोगे ॥ न० सस्ये ॥ श्वेतप द्मे ॥ त्रि० शरज्जाते ॥ नवे । नू तने ॥ अप्रतिभे ॥ शालीने ॥ शृणा ति । शृ० । शृदृभसोऽदिरिति०अ दि : । प्रज्ञाद्यण् ॥ शरदिभव : । सन्धिवेलाद्यृत्वण् ॥ शरदिपुष्प्यति कालात्साधुपुष्प्यत्पच्यमानेष्वित्य ण् ॥ शरदिपच्यन्तेशारदा : धान्य : ॥

शारदक : । पुं० भू०दर्भविशेषे ॥ मुद्गविशेषे । शरदिजाता : । संज्ञा यांशरदोवुञ् ॥

शारदा । स्त्री० सरस्वत्याम् ॥ दुर्गाया म् ॥ शरत्कालेपुरायस्मात्रवम्यांवो धितासुरै : । शारदासासमाख्याता पीठेलोकेचनामतः ॥ ब्राह्म्याम् ॥ शारिवायाम् ॥ शृणातिजाड्यम् । शृ० अदि : । अण् । टाप् ॥

शारदिक : । पुं० रोगे । शारदे ॥ वि भाषारोगातपयोरितिठञ् । पचे ० शारदोरोगआतपोवा ॥ न० श रदिभवे० श्राद्धे ॥ श्राद्धेशरदइति ठञ् ॥

शारदी । स्त्री० तोयपिप्पल्याम् ॥ को जागरपूर्णिमायाम् ॥ शरदिभवा । सन्धिवेलेत्यण् । ङीप् ॥ सप्तप र्णे ॥ शरदिपुष्प्यति । कालात्सा धुपुष्प्यदित्यण् । ङीप् ॥

शारदीय : । पुं० दुर्गोत्सवे ॥ यथा ।

अदूरेजगदम्बाया : शारदीयोमहोत्सव : ॥

शारदीयमहापूजा । स्त्री॰ शरत्कालिकदुर्गामहापूजायाम् ॥

शारद्वत : । पुं॰ कृपे ॥

शारि : । पुं॰ अक्षोपकरणे । द्यूतसाधने । खेलन्याम् । शारे । गुटिका॰ गोट॰ सारि॰ इ॰ भा॰ प्र॰ ॥ स्त्री॰ शकुनिकाप्रभेदे ॥ युद्धार्थगजपर्याणे ॥ व्यवहारान्तरे ॥ शृणाति । शॄ॰ । श्र: शकुनाविति ॰इञ् ॥ कपटे ॥ बह्वादित्वात्पक्षेङीषि॰ शारी ॥

शारिका । स्त्री॰ खगान्तरे । पीतपादायाम् । गोराच्याम् । मैना॰इ॰ भा॰ ॥ शृणाति दु : खं विरहिणीनाम् । शॄ॰ । ण्वुल् । प्रत्ययस्थादितीत्वम् ॥ वीणावादनदण्डे ॥ इ॰ हे॰न्द्र : ॥

शारीफलम् । न॰ अष्टापदे । शारिखेलनाधारे । शारीणांखेलनाधारपट्टे । चौपड॰ इ॰ भा॰ शारीणांफलम्॰ पट्ट : ॥

शारिफलक : । पुं॰ न॰शारिफले । अक्षपीठिकायाम् ॥

शारिवा । स्त्री॰ गोप्याम् । श्यामायाम् । अनन्तायाम् । उत्पलशारिवायाम् ॥ अस्यागुणा : । श्वेतकृष्णाप्रभेदेनशारिवाद्विविधास्मृता ॥ शारिवायुगलंस्वादुस्निग्धंशुक्रकरंगुरु । अग्निमान्द्यारुचिश्वासकासामविषनाशनम् ॥ दोषत्रयासृप्रदरज्वरातीसारनाशनम् ॥ अपिच । एकंवाशारिवामूलंसर्वव्रणविशोधनमिति ॥ शरणम् । शॄ॰ । कृमृदृत्यादिना॰ वुण् । शारिरस्त्यस्या: । अन्येभ्योपीतिव : ॥

शारिशृङ्खला । स्त्री॰ पाशकविशेषे । पक्षम्याम् ॥ यथा । चुक्षुरीति:स्तडीद्यूतं॰ पक्षमीशारिशृङ्खला । नयपीठीचाष्टकाष्ठो॰नव: स्याज्जयपुत्रक : ॥ एतेपाशकभेदा: स्यु॰ जंयकोलाहलोपिच । इति शब्दरत्नावली ॥

शारी । स्त्री॰ शारिपदार्थे ॥ कुशायाम् ॥

शारीर : । पुं॰ जीवे ॥ न॰वृषे ॥ त्रि॰ देहजे ॥ शरीरेभव : शरीरेजातोवा । अण् ॥ कर्मविशेषे । शरीरस्थितिमात्रप्रयोजने॰ कौपीनाच्छादनादिग्रहणभिक्षाटनादिरूपेयतिस्मृतिशास्त्राभ्यनुज्ञाते ॥ शारीरंकेवलंकर्मकुर्वन्नाप्नोतिकिल्बिषमिति भगवदुक्ते : ॥ शरीरप्रधाने : कर्त्रादिभि : साध्येचकर्मणिनतुकेवलेनशरीरेण॰ पक्षेतेतस्यहितवद्भृत्युक्ते : ॥ शरीरमात्रसाध्येचकर्मणि ॥ तपोविशेषे ॥ यथा । देवद्विजगु

रुपाणपूजनं शौचमार्जवम् । ब्रह्मचर्यमहिंसाच शारीरं तपउच्यते ॥
शारीरकः । पुं॰ जीवे ॥ शरीरमेव शरीरकम् । तत्रभवः । अण् ॥ शारीरकंभाष्यमितित्वभेदोपचारात् ॥
शारीरकसूत्रम् । न॰ उत्तरमीमांसायाम् । अथातोब्रह्मजिज्ञासेत्यादिव्यासप्रणीतेषु॰ जीवयाथात्म्यवादिषु वेदान्तार्थसङ्ग्रहवाक्येषु ॥ शारीरकोजीवःसमुच्यतेयायातथ्येननिरूप्यतेस्तानीतिव्याख्यानात् ॥
शारीरकीय । पुं॰ ग्रन्थविशेषे ॥ शारीरकमधिकृत्यकृतोग्रन्थः । अधिकृत्यकृतेग्रन्थइत्यर्थे॰ हद्राच्छः ॥
शारुकः । त्रि॰ हिंसके ॥
शार्कः । पुं॰ शर्करायाम् ॥
शार्करकः । पुं॰ दुग्धफेने । शर्करापिण्डे ॥
शार्करः । पुं॰ दुग्धफेने । शर्करैव । शर्करादिभ्योण् । शर्करान्वितदेशे । शर्करायाम् । शर्करिले ॥ शर्करास्त्यत्र । देशेलुबिलचौचेतिचादण् ॥ त्रि॰ शर्करासम्बन्धिनि ॥
शार्कराक्ष्यः । पुं॰ ब्रह्मर्षौ ॥ शर्कराक्षस्यापत्यम् । गोत्रापत्ये॰ गर्गादित्वाद्यञ् ॥
शार्ङ्गः । पुं॰ न॰ विष्णोर्धनुषि । कामुकमात्रे ॥ शृङ्गस्यविकारः । अनुदात्तादेरञ् ॥ पुं॰ पक्षिणि ॥ शृणाति । शॄ॰ । गण्डकुनादित्वाद्गन्॰ तस्यनुट् । पक्षेअणिनीतिधातोर्ङ्गः ॥ त्रि॰ शृङ्गसम्बन्धिनि ॥ न॰ आर्द्रके ॥
शार्ङ्गधन्वा । पुं॰ विष्णौ ॥ इन्द्रियाद्यहङ्कारात्मकं॰ शार्ङ्गनामधनुर्यस्य । धनुषश्चेत्यनङ् ॥ यथा । भूतादिमिन्द्रियादिन्द्विधाहङ्कारमीश्वरः । बिभर्ति शङ्करूपेणशार्ङ्गरूपेणचस्थितिमिति वि॰ पु॰ ॥
शार्ङ्गपाणिः । पुं॰ विष्णौ ॥ शार्ङ्गपाणौयस्य । प्रहरणार्थेभ्यः परेनिष्ठासप्तम्याविति पाणेः परनिपातः ॥
शार्ङ्गी । पुं॰ विष्णौ ॥ शार्ङ्गमस्यास्ति । अतइनिठनाविति॰ इनिः । धन्विमात्रे ॥
शार्दूलः । पुं॰ व्याघ्रे ॥ पशुविशेषे । राक्षसे । उत्तरस्थितः सत्तमे ॥ यथा॰ राजशार्दूलः ॥ अग्नौ । चित्रकी ॥ शारयति । शॄ॰ स्वार्थेणिच् । क्विप् । दूयते । दूङ् परितापे । अन्तर्भावितण्यर्थः । बाहुलकाल्लक् । शारंचासौदूलश्च । यद्वा । शृणाति । पिशादित्वाद्दूलच् । बाहुलकाद्वृक् । इति ॥
शार्दूलललितम् । न॰ धृति १८

छन्द : प्रभेदे ॥ तल्लक्षणं यथा । म : सौज : सततसाद्गिणैश्चत्तुभि: शार्दूललसितम् यथा । कृत्वाकंस मृगेपराक्रमविधिं शार्दूललसितंयश्च क्षोणिभारकारिषुसुरारातिप्रवृत्ति दरम् । सन्तोषंपरमन्तुदेवनिवहै स्त्रैलोक्यशरणं श्रीयेन:सततनीत्वपा रमहिमालक्ष्मीप्रियतम : ॥

शार्दूलवाहन : । पुं० पञ्चविंशति पूर्वजिनान्तर्गतजिने ॥

शार्दूलविक्रीडितम् । न० अतिधृति १८ वृत्तप्रभेदे ॥ तल्लक्षणंयथा । सूर्याश्वैर्मसजस्तता : सगुरव: शा शार्दूलविक्रीडितम् । यथा । गो विन्दंप्रणमोत्तमाङ्गरसनेत्वं घोषया हर्निशम्पाणीपूजयतंमन : स्मर पदेतस्यालयंगच्छतम् । एवंचे त्कुरुताखिलंममहितंशीर्षादयस्तद् ध्रुवम्नप्रेचे भवतांक्रतेभवमहाशा र्दूलविक्रीडितम् ॥

शार्वरम् । न० अन्धतमसे । ध्वा न्ते ॥ त्रि० घातुके शर्वर्यांभवम् । तत्रभवइत्यण् । काणाट्ठञ् चि त : ॥ शर्वरीसम्बन्धिनि ॥

शार्वरी । स्त्री० शर्वर्याम् । रा त्रौ ॥

शार्वी । स्त्री० ऐशान्यांदिशि ॥

शाल : । पुं० मत्स्यविशेषे । गज र्के । गजाद० पृ० प्र० । शालि

वाहननृपे ॥ वृक्षविशेषे ॥ साल वृक्षे ॥ शाडाते । शाडृश्लाघाया म् । कर्मणि० घञ् । डलयो रैक्यम् ॥ प्राकारे । शीतलकार ण्ये । बाहुलकात्कालन्वा ॥

शालग्राम : । पुं० हरिक्षेत्रे । ग ण्डकीशिलायाम् । विष्णुवादि देवानांप्रतिबिम्बरूपेपाषाणविशेषे। गण्डक्याश्चैकदेशेचशालग्रामस्थलं स्मृतम् । पाषाणंतद्भवंयत्तत्शा लग्राममितिस्मृतम् ॥ शालवृक्षो पलक्षितोग्राम: शालग्राम : शाल ग्रामेभव : । अण् ॥ अपिपापसमा चारोब्रह्महत्यायुतोपिवा । शाल ग्रामशिलातोयंपीत्वायातिपरांग- तिम् ॥ तुलसीचन्दनंचक्रंशङ्खो घण्टाचचक्रकम् । शिलाताम्रस्य पात्रन्तुविष्णोर्नामपदामृतम् ॥ प दामृतन्तुनवभि : पापराशिप्रदाहक म् । वदन्तिमुनय : शान्ता : स सर्वशास्त्रार्थकोविदा : ॥ सर्वती र्थपरिस्नानात्सर्वक्रतुसमर्चनात् पुण्यंभवतियद्राजन्बिन्दोर्बिन्दोस्तद् द्भुतम् ॥ शालग्रामशिलायत्रपू ज्यतेपुरुषोत्तम : । तत्रयोजनमा त्रन्तुतीर्थकोटिसमन्वितम् ॥ शा लग्रामा : समा : पूज्या : समेषु द्वितयंनहि । विषमानैवपूज्याश्च विषमेषुत्रयंनहि ॥ द्वारावतीभ

बंचक्रांतथाबैगण्डकीभवम् । उभ यी: सङ्गमोयचतचगङ्गासमुद्रगा ॥ शालग्रामोहरेर्मूर्त्तिर्जगन्नाथश्चभा रतम् । कलिदंग्रहस्नान्तं ययुस्त्व त्वाहरे: पदम् ॥ विप्रक्षत्रियवै श्यानांशालग्रामशिलार्चने अ धिकारोनशूद्राणांहरेरर्चार्चनेन- या ॥

शालग्रामगिरि: । पुं॰ शालग्रामोत् पादकपर्वते ॥

शालङ्कटङ्कट: । पुं॰ सुकेशिनिराक्ष सै ॥

शालङ्कायन: । पुं॰ मुनिविशेषे ॥ न न्दिनि । शिवद्वारपाले ॥

शालङ्कायनक: । पुं॰ शालङ्कायनान विषयेदेशे । राजन्यादिभ्योवुञ् ॥

शालङ्कायनजोवसू: । स्त्री॰ व्यासमा तरि ॥

शालङ्कि: । पुं॰ मुनिविशेषे । पाणि नौ ॥

शालज: । पुं॰ गर्जकमत्स्ये । शालि ॥

शालनिर्यास: । पुं॰ धूनके । सर्ज र से ॥

शालपर्णिका । स्त्री॰ शालपर्ण्याम् ॥

शालपर्णी । स्त्री॰ ओषधिविशेषे । वि दारिगन्धायाम् । अंशुमत्याम् । स्थिरायाम् । शालपर्णी॰ इ॰ गौ॰ भा॰ ॥ अस्यागुणायथा । शालपर्णी गरच्छर्दिज्वरश्वासातिसारजित् । शोषदोषत्रयहरीबृंहण्युक्तारसायनी ॥ तिक्ताविषहरीस्वादु: क्षतकास कृमिप्रणुत् ॥ पाककर्मतिश्लीप ॥

शालभञ्जिका । स्त्री॰ शालभञ्ज्या म् ॥

शालभञ्जी । स्त्री॰ पञ्चालिकायाम् । दन्तकाष्ठादिनिर्मितपुत्तिकायाम् । वेश्यायां ॥

शालव: । पुं॰ लोध्रे ॥

शालवेष्ट: । पुं॰ धूनके । शालस्यवे ष्टोनिर्यास: ॥

शालसार: । पुं॰ तरौ । द्रुमे ॥ हिङ्गु नि ॥

शाला । स्त्री॰ गृहे ॥ गेहैकप्रदेशे । द्रुमस्कान्धशाखायाम् । स्कन्धात्प्र थमोत्पन्नप्रधानशाखायाम् ॥ शल त्यत्र । शलगतौ । हलश्चेति॰ घ ञ् ॥ यद्वा । शलति । शलचलने । ज्वलितोतिण: ॥ श्यति । शो॰ । बाहुलकात्॰ कालन्‍श ॥

शालाकटङ्कम् । न॰ चाणक्यमूलके ॥

शालाकी । पुं॰ शस्त्रवैद्ये ॥ नापिते ॥ शिवधारिणि ॥ इतिकश्चित् ॥

शालाक्यम् । न॰ आयुर्वेदस्याङ्गविशे षे ॥ यथाहसुश्रुत: । तच॰ शाला क्यंनाम॰ ऊर्ध्वजत्रुगतानांरोगा णां॰ श्रवणनयनवदनघ्राणादिसं श्रितानांव्याधीनामुपशमनार्थंमि ति ॥

शालाग्निः । पुं॰ आवसथ्याग्नौ ॥
शालाङ्की । स्त्री॰ पुत्तलिकायाम् । पञ्चालिकायाम् ॥ इ॰ अ॰ र॰ जी ॥
शालाजिरः । पुं॰ न॰ शरावे ॥
शालाम्लिः । स्त्री॰ शाकविशेषे । शालिञ्चे ॥
शालातुरीयः । पुं॰ पाणिनीयमुनौ ॥ शलातुरोऽभिजनोऽस्य । तूदीशलातुरेतिछण् ॥
शोलानी । विदार्याम् ॥
शालामृगः । शृगाले ॥
शालारम् । न॰ हस्तिनखे । पुरद्वारस्थमञ्चये ॥ सोपाने ॥ पक्षिपञ्जरे ॥
शालावृकः । पुं॰ शृगाले ॥ सारमेये ॥ वलीमुखे । मर्कटे । वानरे ॥ शालांवृणोति । वृञ्॰ । सृवृभूशुषिमुष्य: कक् ॥ विडाले ॥
शालिः । पुं॰ गन्धोतौ । गन्धमार्जारे ॥ कलमादिधान्ये ॥ आदिशब्दात्राजशाल्याद्याबोद्ध्याः ॥ तेयथा । राजान्नमष्टिकासितेतररक्तमुण्डस्थूलासुगन्धतिरियादिकशालिसंज्ञाः । ब्रोहिस्तथेतिदशधाभुविशालयस्ते षांक्रमेणगुणनामगदांब्रवीमि ॥ इतिराजनिर्घण्टः ॥ शाडाते । शाडृ श्लाघ्ये । कलयोरैक्यम् ॥ इन् ॥ शाल्यतेवा । शलचलने । शलः । घन्द ॥ शडा । शुडाति । शृ॰ । बाहुलकादिञ्शालि: । कपिलकादित्वाल्लत्वम् ॥ शालयोद्विविधाः प्रोक्ताजलजाः स्थलजास्तथा । तत्र । कण्डनेनविनाशुक्ला हैमनाः शालयः स्मृताः ॥ शालीनांनामान्याह । रक्तशालिः सकलमः पाण्डुकः शकुनाहृतः । सुगन्धकः कर्दमकोमहाशालिश्चदूषकः ॥ पुष्पाण्डकः पुण्डरीकस्तथामहिषमस्तकः । दीर्घशूकः काञ्चनकोहायनोलोध्रपुष्पकः ॥ इत्याद्याःशालयः सन्तिबहवोबहुदेशजाः । ग्रन्थविस्तरभीतेस्तेसमस्तानात्रभाषिताः ॥ अथगुणाः । शालयोमधुराःस्निग्धाबल्याबद्धाल्पवर्चसः । कषायालघवोरुच्याः स्वर्यावृष्याश्चबृंहणाः ॥ अल्पानिलकफाः शीताः पित्तघ्नामूत्रलास्तथा । शालयोदग्धमृज्जाताः कषायालघुपाकिनः ॥ सृष्टमूत्रपुरीषारूक्षाः श्लेष्मापकर्षणाः ॥ केदाराबातपित्तघ्नागुरवः कफशुक्रलाः । कषायाअल्पवर्चस्कामधुराश्चबलावहाः ॥ केदाराः शकृच्च बलावहाः ॥ स्थलजाः स्वादवः पित्तकफघ्नाबातवह्निदाः । किञ्चित्तिक्ताः कषायाश्चविपाकेकटुकाअपि ॥ स्थलजाः

अकृष्टभूमिजाः स्वयंजाताः ॥ वा पितामधुरावृष्यावल्याः पित्तप्रशमनाः । अंशमलाअल्पवर्चस्काः कषायागुरवोहिमाः ॥ वापिताः कृष्टजे अकृष्टजे वा । वा पितेभ्योगुणैः किञ्चिद्धीनाः प्रोक्तास्त्ववापिताः । कृष्टजे अकृष्टजे वा । रोपितास्तुनवावृष्याः पुराणालघवः स्मृतः ॥ रोपितारोपिताभूयः शीघ्रपाकागुणाधिकाः ॥ छिन्नरूढाहिमारूक्षावल्याः पित्तकफापहाः ॥ बद्धविट्काः कषायाश्चलघवश्चाल्पतिक्तकाः ॥ रक्तशालिर्वरस्तेषुबल्योवर्ण्यस्त्रिदोषजित् । चक्षुष्योमूत्रलः स्वर्यः शुक्रलस्तृट्ज्वरापहः ॥ विषव्रणश्वासकासदाहनुद्वह्निपुष्टिदः । तस्मादल्पान्तरगुणाः शालयोमहदादयः ॥ रक्तशालिः दौदखानी इतिमगधदेशीयप्रसिद्धः ॥ इति भावप्रकाशः ॥

शालिकरः । पुं॰ षण्मावशत्रयोदशप्रभेदे ०॰।॥०

शालिका । स्त्री॰ विदार्याम् ।

शालिञ्चः । पुं॰ शाकविशेषे । दीपने ॥

शाली । त्रि॰ शोभायमाने ॥ शालते । श्लाघत्यने । तच्छीलः । णिनिः ॥ पदान्तेयुक्तवाचकोयं यथा । स्मितशाली ॥

शालिनी । स्त्री॰ त्रिष्टुप् ११ छन्दोभेदे ॥ तल्लक्षणंयथा । मात्तौगौ चेच्छालिनीवेदलोकैः ॥ यथा । अंहोहन्तिज्ञानवृद्धिंविधत्तेधर्मंधत्तेकाममर्थंप्रसूते । मुक्तिंदत्तेसर्वदोपास्यमानापुंसांश्रद्धाशालिनीविष्णुभक्तिः ॥ श्लाघायाम् ॥

शालिनीकरणम् । न॰ न्यगभावने । तिरस्कारइतियावत् ॥ इ॰ त्रि॰ शेषः ॥

शालिपर्णी । स्त्री॰ माषपर्ण्याम् ।

शालिपिष्टम् । न॰ स्फाटिकोपले । धौतशिले ॥

शालिवाहनः । पुं॰ वर्त्तमानशककर्त्तरिनृपविशेषे ॥

शालिहोत्रः । पुं॰ अश्वे । मुद्गभुजि । घोटके ॥ मुनिविशेषे ।

शाली । स्त्री॰ कृष्णजीरके ।

शालीनः । त्रि॰ अधृष्टे । सलज्जे ॥ शालाप्रवेशमर्हति । शालीनकौपीनेअधृष्टाकार्ययोरितिसाधुः ॥ शोभमाने ॥ यथा । वनकरिणशालीननयनाइत्याचार्याः ॥

शालिना । स्त्री॰ मिश्रेयायाम ।

शालीयः । त्रि॰ शालायाम्भवे ॥

शालुः । पुं॰ कषायद्रव्ये । चोरकाख्यौषधौ । मण्डूके । भेके ॥ न॰ शालूके ।

शालुकम् । न॰ पद्मशूरणे । शालूके ।

शालूकम् । न॰ सौगन्धिकादीनां

कन्दे । पद्मगूरणे ॥ शालूकंशी तलंश्वर्ष्यंपित्तदाहास्रनुद्गुरु । दुर्ज्जरंस्वादुपाकास्तन्यानिलकफप्रदम् ॥ सङ्ग्राहिमधुरंरुक्षंभिस्साण्डम-पित्तदूषम् ॥ जातीफले ॥ शल्यते० शलतिवा । शलचलनसंव रणयोः । शलिमण्डिभ्याम्काण्० इत्युखिश्च ।

शालूकिनी । स्त्री० ग्रामविशेषे ॥ शालूकानिसन्त्यस्याः देशे । पुष्करादिभ्योदेशइति० इनिः ॥ तीर्थविशेषे ॥

शालूरः । पुं० भवे । दर्दुरे ॥ शाडते । शाडगतौ । खर्जपिञ्जादिभ्यऊरोलचावित्यूरः । डलयोरैक्यम् ॥ शालतेवा । शालकत्थने ॥ पूर्व्ववद्रूरः ॥

शालेयः । पुं० मिसौ । मधुरायाम् ॥ त्रि० शाल्युद्भवेचेत्रे । धान्यसामान्यस्यकलमादेश्चोत्पत्तियोग्यक्षेत्रे ॥ शालीनांभवनंक्षेत्रम् । व्रीहिशाल्योर्ढक् । तदस्यास्ति । अर्शआद्यच् ॥

शालेयधाराभृत् । पुं० गिरिविशेषे । शालेरमौ० इ० भा० प्र० । शालिवाहनजन्मस्थाने ॥

शालेया । स्त्री० मिश्रेयायाम् ॥

शाल्मलः । पुं० शाल्मलिद्रुमे ॥ शाल्मलिद्वीपे ॥

शाल्मलिः । पुं० स्त्री० पिच्छिलायाम् । पूरण्याम् । मोचायाम् । स्थिरायुषि । सेमल० सैंमर० इ०भा० । षष्टिवर्षसहस्राणिवनेतिष्ठतिशाल्मलिः ॥ यस्यागुणायथा । शाल्मलिः शीतलास्वादुर्हीरसेपाकेरसायनी । श्लेष्मलास्निग्धवीर्य्याचबृंहणी रक्तपित्तजित् ॥ इति ॥ शाजयति । शलचलनेविजन्तः । क्विप् । मलते । मलधारणे । सर्वधातुभ्यइन् । शाल्चासौमलिश्च ॥ द्वीपविशेषे । सहसूयोजनोन्नतः सूर्यद्युति शाल्मलिवृक्ष : शाल्मलिद्वीपेस्ति । यथा । शाल्मलिशाल्मलीवृक्षोहैमः साग्रत्रिकोर्कभाः । प्रियोमराणां तत्केतुः सततद्याध्यानिवन्धनइति ॥

शाल्मलिकः । पुं० रोहितकवृक्षे । कूटशाल्मली ॥

शाल्मली । पुं० गरुडे ॥ इ०शा०त्तो ॥

शाल्मलिनिर्य्यासः । पुं० मोचरसे ॥

शाल्मलिनी । स्त्री० शाल्मलीवृक्षे ॥

शाल्मलिपत्रकः । पुं० सप्तच्छदवृक्षे ॥

शाल्मलिस्थः । पुं० गरुडे । शाल्मलिवौपस्यशाल्मलिवृक्षे तिष्ठति । ष्ठा० । कः ॥

शाल्मली । स्त्री० शाल्मलिवृक्षे ॥ कृदिकारादितिङीष् ॥

शाल्मलीकन्दः । पुं० शाल्मलिवृक्षमूले । विजुलि । मलर्ग ॥

शाल्मलीपुष्पम् । न० पिच्छिलाकुसुमे ॥ तच्छाकगुणाः । शाल्मलीपुष्पशाकन्तु घृतसैन्धवसाधितम् । प्रदरंनाशयत्येव दुःसाध्यञ्चनसंशयः ॥ रसेपाकेचमधुरंकषायंशीतलंगुरु । कफपित्तास्रजिद्ग्राहिशालमलप्रकीर्त्तितम् ॥

शाल्मलीफलः । पुं० तेजःफलवृत्ते ॥

शाल्मलीवेष्टः । पुं० पिच्छायाम् । मोचरसे । मोचस्रावे सेमरगोंद इतिख्याते ॥ शाल्मल्यावेष्टः ॥

शावः । पुं० अर्भके । शिशौ । त्रि० शवसम्बन्धिनि । शव्यते । शवगतौ । घञ् । शवस्यायम् । अण् ।

शावकः । पुं० शिशौ । वाले । शव्यते । शव० । घञ् स्वार्थेकन् ॥

शावरः । पुं० पापे ॥ अपराधे ॥ श्वेतलोध्रे । गालवे ॥ शवराणामयम् । तस्येदमित्यण् ॥ शवरस्वामिकृतभाष्ये ॥ न० तन्त्रविशेषे ॥ मन्त्रविशेषे ॥ त्रि० शवरसम्बन्धिनि ॥

शावरभेदाख्यम् । न० ताम्रे ॥

शावरी । स्त्री० शूकरशिम्व्याम् ॥ ङीप् ॥

शावरोत्सवः । पुं० म्लेच्छकृतोत्सवे ॥ यथा । पूजयित्वामहाष्टम्यांनवम्यांवलिभिस्तथा । विसर्जयेद्दशम्यांन्तुश्रवणेशावरोत्सवैरित्यादिकालिकापुराणम् ॥

शाश्वतः । पुं० वेदव्यासे । शिवे । त्रि० नित्ये० अनाद्यनन्ते० सदैकरूपे० परमात्मनि ॥ शश्वत्सर्वदाभवति० नापचीयतेनापचीयतेचयोह्यशाश्वतासौऽचीयतेऽपचीयतेच० ययम्तुनतथा ॥ सतते । अनारते । सापेक्षनित्ये ॥ शश्वद्भवः । तत्रभवइत्यण् । अनित्योऽव्ययानांटिलोपोबहिषष्टिलोपविधानाज्ज्ञापकात् ॥ पारिभाषिकशाश्वतंयथागारुडे । शाश्वतंदेवपूजादि० विप्रदानञ्चशाश्वतम् । शाश्वतीमगुणाविद्या० सुहृन्मित्रञ्चशाश्वतमिति ॥

शाश्वतिकः । त्रि० नित्ये ॥ शश्वद्भवः । अध्यात्मादित्वाट्ठञ् । शाश्वतिकइतिनिर्देशान्नकादेशः ॥

शाष्कुलः । त्रि० आमिषाशिनि ॥ शष्कुलीमांसेपलक्षणम् । तामत्ति । शेषइत्यण् । पृषोदरादिः ॥

शाष्कुलिः । त्रि० मांसाशिनि ॥ शष्कुलीमांसेपलक्षणम् तामत्ति । शेषइत्यण् ॥

शाष्कुलिकम् । न० शष्कुलीवृन्दे । शष्कुलीनांसमूहः । अचित्तहस्तिधेनोष्ठक् । त्रि० शष्कुलिप्रिये ॥ शष्कुल्योभक्तिरस्य अचित्तादुदेशका-

लाट्ठक् ॥ शष्कुलीसदृशे ॥ शष्कुलीव । अङ्गुल्यादिभ्यष्ठक् ॥

शासकः । त्रि॰ शासनकर्त्तरि । उपदेष्टरि । शास्तरि ॥ शास्ति । शासु॰ ण्वुल् ॥

शासनम् । न॰ राजदत्तोर्व्याम् ॥ लेखे । लिपौ । लेखायाम् ॥ आज्ञायाम् । प्रवर्त्तनायाम् ॥ शास्त्रे ॥ शास्तौ ॥ पत्रे ॥ स्मृतिरूपेश्वराज्ञावले ॥ शासु अनुशिष्टौ । ल्युट् ॥ त्रि॰ । शासयितरि ॥ णिजन्ताच्छासेर्नन्द्यादित्वाल्ल्युः ॥

शासनहरः । पुं॰ राजदूते ॥ आज्ञावाहके ॥

शासितः त्रि॰ कृतशासने ॥

शासिता । त्रि॰ शासनकर्त्तरि । उपदेष्टरि । शास्तरि ॥ ब्रह्मादिस्तम्बपर्यन्तस्य॰ चेतनाचेतनस्य॰ जगतो नियन्तर्यन्तर्यामिणि परमात्मनि ॥ योऽयमग्न्यादीनामौष्ण्यादिनियमो यश्चादित्यादीनां भ्रमणादिनियमो यच्च कर्मणां फलं प्रतिनियतमेतत् सर्वं परमात्माधीनमस्ति ॥

शास्तिः । स्त्री॰ आज्ञायाम् ॥ राजदण्डे । शासु॰ । बाहुलकात् क्तिप्रत्ययः इत्वाभावश्च ।

शास्ता । पुं॰ उपाध्याये ॥ पितरि ॥ राजनि ॥ बुद्धे ॥ समन्तभद्रे । जिने ॥ त्रि॰ शासके । देशके । शासितरि ॥ शास्ति शिष्यान्॰ इति॰ शास्ता । तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटाविति तृन्॰ तृचौ । नप्त्रादिग्रहणव्युत्पत्तिपक्षे नियमार्थत्वान्न दीर्घः । पिटातृ॰ शास्तृशब्दः ॥ होधाता शास्धाता च पौराणो जगतः पतौ । शास्तारौ त्रिलोकेऽस्मिन् धर्माधर्मौ प्रकीर्त्तिताविति श्रुतेराषे तु ण्वुल्तृचाविति तृज्बोध्यः ॥ प्रशासितरि । ईश्वरे ॥ सर्वेषां वर्णाश्रमाणां तत्तत्कर्मण्यधिकृतानां श्रुतिस्मृत्यादिभिरनुशिष्टिकारित्वात् तथा । शासिर्यद्यपि सेट्कस्तथापि बहुलप्रयोगानुरोधादनित्यमागमशासनमिति न्यायात्॰ शासितस्कभितेत्यादिच्छन्दसि निपातनादिडभावः ॥

शास्त्रम् । न॰ । आज्ञायाम् । निदेशे । आगमे । वेदे । शिष्यते॰ अनुशिष्यतेऽपूर्वोऽर्थो बोध्यतेऽनेनेति शास्त्रं वेदः ॥ वेदोपजीविषु॰ स्मृतिपुराणागमादिषु ॥ एकप्रयोजनोपनिबद्धेऽशेषार्थप्रतिपादके ॥ छन्दोव्याकरणाभिधानकोषकलाचतुर्वर्गगजतुरगखड्गादिलक्षणग्रन्थाः शास्त्राण्यभिधीयन्ते ॥ प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥

तच्छास्त्रं त्रिविधं प्रोक्तं सात्त्विकादि विभेदतः। यथोक्तं देवीभागवते । सात्त्विकं तत्र वेदान्तं मीमांसा रा असंमतम् । तामसं न्यायशास्त्र ञ्च हेतुवादाभियन्त्रितमिति ॥ त चाध्यात्मशास्त्रातिरिक्तशास्त्रनिन्दा यथा कुलार्णवे । षड्दर्शनमहा कूपे पतिताः पशवः प्रिये । पर मार्थं न जानन्ति पशुपाशनियन्त्रिताः ॥ वेदशास्त्रार्णवे घोरे उह्यमाना इत स्ततः । षडूर्मिनिग्रहग्रस्तास्ति ष्ठन्ति हि कुतार्किकाः ॥ वेदागम पुराणज्ञः परमार्थं न वेत्ति यः । विडम्बकस्य तस्यैव तत्सर्वं काकभा षितम् ॥ इदं ज्ञानमिदं ज्ञेयमिति चिन्तासमाकुलाः । पठन्त्यहर्निशं शा स्त्रं परतत्त्वपराङ्मुखाः ॥ वाक्य च्छन्दोनिबन्धं न काव्यालङ्कारशो भिताः । चिन्तया दुःखिता मूढास्तिष्ठन्ति व्याकुलेन्द्रियाः ॥ अ न्यथा परमं तत्त्वं जनाः क्लिश्यन्ति चान्यथा । अन्यथा शास्त्रसद्भावो व्या ख्यां कुर्वन्ति चान्यथा ॥ कथयन्त्य मनीभावं स्वयं नानुभवन्ति च । अ हङ्कारहताः केचिदुपदेशादिवर्ज्जि ताः ॥ पठन्ति वेदशास्त्राणि बोधय न्ति परस्परम् । न जानन्ति परं तत्त्वं दर्वी पाकरसं यथा ॥ शिरो वहति पुष्पाणि गन्धं जानाति नासिका ।

पठन्ति वेदशास्त्राणि दुर्लभो भावबो धकः ॥ तत्त्वमात्मस्थमज्ञात्वा मूढः शास्त्रेषु मुह्यति । गोपः कक्ष गते छागे कूपे पश्यति दुर्मतिः ॥ संसारमोहनाशाय शाब्दबोधो न हि क्षमः । न निवर्त्तते तिमिरं कदा चिद्दीपवार्त्तया ॥ प्रज्ञाहीनस्य पठ नमन्धस्य दर्पणं यथा । देवीप्रज्ञा वतः शास्त्रं तत्त्वज्ञानस्य साधनम् । अयतः पृष्ठतः केचित् पार्श्वयो रिति केचन । तत्त्वं मीदृक्तादृगि ति विवदन्ति परस्परम् ॥ सद्विद्या दानशौर्यादिगुणैर्विख्यातमानवः । दृष्टश्रुतात्मस्ये तिदूरस्थः कथ्यते जनः ॥ प्रत्यक्षग्रहणं नास्ति वार्त्त याग्रहणं प्रिये । एवं ये शास्त्रसम्मू ढास्ते दूरस्थानसंशयः ॥ इदं ज्ञा नमिदं ज्ञेयं सर्वं तच्छ्रोतुमिच्छति । दिव्यवर्षसहस्रायुः शास्त्रान्तं नैव गच्छति ॥ वेदाद्यनेकशास्त्राणि चाल्पायुर्विघ्नकोटयः । तस्मात् सारं विजानीयात् क्षीरं हंसइवाम्भ सः ॥ अभ्यस्य सर्वशास्त्राणि तत्त्वं ज्ञात्वाथ बुद्धिमान् । पलालमिव धान्यार्थी सर्वशास्त्राणि सन्त्यजेत् ॥ यथाऽमृतेन तृप्तस्य माहारेण प्रयोजन म् । तत्त्वज्ञस्य तथा देवि न शास्त्रे णप्रयोजनम् । न वेदाध्ययनान्मु क्तिर्न शास्त्रपठनादपि । ज्ञानादेव

हिमुक्तिः स्यान्नान्यथावीरवन्दिते ॥ आगमाः कारणं मुक्तेर्मेनानिमकारणम् । तथैवसर्वकर्म्मा विज्ञानमेवहिकारणम् ॥ मुक्तिदागुरुवागेका• विद्याः सर्वाविडम्बनाः । काष्ठभारसहस्रेषु• एकंसञ्जीवनंपरम् ॥ यदैतंहिशिवप्रोक्तं क्रियायासविवर्ज्जितम् । गुरुवक्त्राल्लभ्येतमाधीतागमकोटिभिः ॥ आगमोत्थं विवेकोत्थं द्विधाज्ञानंप्रचक्षते । शब्दब्रह्मागममयंपरंब्रह्मविवेकजम् ॥ अद्वैतंकेचिदिच्छन्ति द्वैतमिच्छन्तिचापरे । समं तत्त्वं नजानन्ति द्वैताद्वैतविवर्ज्जितम् ॥ द्वे पदेबन्धमोक्षाय निर्ममेतिममेतिच । ममेतिबध्यतेजन्तुर्निर्ममेतिविमुच्यते ॥ तत्कर्म यन्नबन्धाय साविद्यायाविमुक्तिदा। आयासायापरंकर्मविद्यान्याशिल्पनैपुणम् ॥ यावत्कर्म्माणिदीप्यन्ते यावत्संसारवासना । यावदिन्द्रियचापल्यंतावत्तत्त्वकथाकुतः ॥ यावत्प्रयत्नवेगोस्ति यावत्सङ्कल्पकल्पना । यावन्नमनसः स्थैर्य्यं तावत्तत्त्वकथाकुतः ॥ यावद्देहाभिमानश्चममतायावदेवहि । यावन्नगुरुकारुण्यं तावत् तत्त्वकथाकुतः ॥ तावत्तपोव्रत तीर्थं जपहोमार्चनादिकम् । वेदशास्त्रागमकथायावत्तत्त्वंनविन्दति ॥ तस्मात्सर्वप्रयत्नेनसर्वावस्थासुसर्वदा । तत्त्वनिष्ठोभवेद्देवियदीच्छेन्मोक्षमात्मनः ॥ धर्मज्ञानसुपुष्पस्य स्वर्गमोक्षफलस्यच । तापत्रयादिसन्तप्तश्छायांमोक्षतरोः श्रयेत् ॥ इति ॥ वह्निपुराणेपि । पुराणंभारतंवेदाधर्मशास्त्राणिविद्यानिच । आयुषः क्षपणायैवधर्मंतस्यैवसमाचरेत् ॥ पुत्रदारादिसंसारः पुंसांसम्मूढचेतसाम् । विदुषांशास्त्रसंसारः संयोगाभ्यासविघ्नकृत् ॥ इदंज्ञेयमिदंज्ञेयं यः सर्वंज्ञातुमिच्छति । अपिवर्षशतेनापिशास्त्रान्तं नाधिगच्छति ॥ विज्ञायाक्षरतन्मात्रं जीवितञ्चापिचञ्चलम् । विहायशास्त्रजालानिपारलौकिकमाचरेत् । पण्डितोपिहिमूर्खोसौशक्तियुक्तोप्यशक्तिकः । यः संसारान्नचात्मानं समुत्तारयितुंक्षमः ॥ इति ॥ शैवपाशुपतादिशास्त्रोत्पत्तिर्यथागरुडे तन्त्रे ॥ प्रथमं हिमयाप्रोक्तं शैवंपाशुपतादिकम् । मच्छक्त्यावेशितैर्विप्रैः सम्प्रोक्तानितत: परम् ॥ कणादेनचसम्प्रोक्तं शास्त्रं वैशेषिकंमहत् । गौतमेनतथान्यायंसाङ्ख्यन्तुकपिलेनहि ॥ धिषणेनतथाप्रोक्तं चार्वाकमतिगर्हितम् । दैत्यानांनाशनार्थायविष्णु

नाबुद्धिरूपिणा ॥ चौरशास्त्रं तथाप्रो क्तं नग्ननीलपटादिकम् । आपस्तं श्रुतिशाक्यानां दृश्यं घन् लीकगर्हित म् ॥ कर्मं स्वरूपत्याज्यस्वमत्रेव प्र तिपद्यते । सर्वकर्मपरिभ्रष्टं कस्म यत्तदुच्यते ॥ गौतमप्रोक्तशास्त्रा र्थनिरता : सर्व एवहि । शार्गालीं योनिमापन्ना : सन्दिग्धा : सर्वक र्मसुति ॥ शास्त्रविहीनोऽन्ध : । यथा:ह्मम् । अनेकसंशयोच्छेदिप रोक्षार्थस्यदर्शकम् । सर्वस्य लोचन शास्त्रं यस्य नास्त्यन्धएवस: ॥ इति ॥ शासनम् • शिष्यतेऽनेनवा । शा सुअनुशिष्टौ । सर्वधातुभ्यष्ट्रन् ॥ विहाय शास्त्रजालानि यत्सत्यं तदुपा स्यताम् ।

शास्त्रकृत् । पुं• ऋषौ । मुनौ ॥ त्रि• शास्त्रकारे ।

शास्त्रगण्ड : । पुं• प्रघटाविदि । छात्रगण्डे ॥ पदाद्यविदि । श्लोका द्यवेत्तरि ॥

शास्त्रचक्षु : । न• व्याकरणे ॥

शास्त्रचारक : । पुं• शास्त्रदर्शिनि ॥

शास्त्रज्ञ : । त्रि• शास्त्रविदि । आग मज्ञे । बहुयोज्ञे ॥ यथा । अनि युक्तोनियुक्तोवाशास्त्रज्ञोवक्त मर्हति । दैवीवाचं स वदति शास्त्रमुप जीवतीति । शास्त्रंजानातिनारद: । शा• । क : ॥

शास्त्रतत्त्वज्ञ : । परमार्थविदि ॥ ग णकें । शास्त्रतत्त्वं जानाति । ज्ञा• । क : ॥

शास्त्रदर्शी । त्रि• शास्त्रज्ञे ॥

शास्त्रदृष्टि : । स्त्री• विवेकिजनचक्षुष्म त्ताथाम् ॥

शास्त्रयोनि : । पुं• वेदप्रमाणके ; प रमात्मनि ॥ शास्त्रंयोनि : कारणं प्रमाणमस्य । यतोशब्दमानिभूता नीत्यादिशोस्त्रादेवप्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यते ॥ वे दात्मकनिश्वासे ॥

शास्त्रयोनित्वम् । न• शास्त्रस्यवेद स्यापिकारणत्वे ॥ शास्त्रयोनि : कारणम्प्रमाणं यस्य • तस्यभावे ॥

शास्त्रवित् • दृ• । त्रि• अन्तर्वाणौ । शास्त्रज्ञे ॥ शास्त्रवेत्ति । विद• । सत्सूद्विषेत्यादिनाक्विप्

शास्त्रविधि : । पुं• शास्त्रसम्बन्धिलि ङादिशब्दे । कुर्यान्नकुर्यादित्येवं प्रवर्त्तनानिवर्त्तनात्मककर्त्तव्याक र्त्तव्यज्ञानहेतोविधिविधाख्ये ॥ विधिनिषेधातिरिक्तमपिब्रह्मप्रतिपा दकं शास्त्रमस्तीतिसूचयितुं विधि शब्द : ॥

शास्त्रशिल्पिन : । पुं• भूम्नि कीरे षु । काश्मीरदेशे ॥

शास्त्रित : । त्रि• विहिते ॥ शास्त्रं सञ्जातमस्य । तारकादित्वादित

च् ॥

शास्त्री० । त्रि० शास्त्रज्ञानवति ॥ शास्त्रमस्त्यस्यास्मिन्वा । इनि: ॥

शास्त्रीय:। त्रि० शास्त्रेप्रोक्ते ॥ वृद्धाच्छ: ॥

शास्य:। त्रि० शासनयोग्ये । शासनीये ॥

शिंशपा । स्त्री० पिच्छिलायाम् । अगुरौ । सीसौं इ० प्र० द्रुमे ॥ गुणायथा । शिंशपाकटुकातिक्ता कषायाशोफहारिणी । उष्णवीर्या हरेन्मेद: कुष्ठश्वित्रवमिक्रमीन् ॥ बस्तिरुग्व्रणदाहास्रबलासान्गर्भपातिनीति० भा० प्र० ॥ शिंशपा वातनाशिनीतिराजवल्लभ: ॥ शीघ्र० शीर्षंवापाति । पा० । आतश्चोपसर्गे० क: । पृषोदरादि: ॥ यद्वा । शिमित्यव्यक्तंशब्दं० शब्देनवा० शपति । शप आक्रोशे । पचाद्यच् ॥ शिंशाभि: शपतीतिवा । हेविकाशिंशपेतिनिर्द्देशाद्वाशब्दलोप: ॥

शिक्ष्यु: । त्रि० अव्यवसायिनि ॥

शिक्यम् । न० काचे । दर्भमौञ्जादिरसनारचितदुग्धदध्यादिद्रव्याधारविशेषे ॥ संन्यासिनांभिक्षादिपात्राधारभूते । छींका इ० भा० प्र० ॥ संस्रवत्यस्मात् । संसुभ्रंश: पतने । स्रसे: शिकुट्किच्चेति० धातो: शिरादेशोयत्प्रत्यय: कित्० तस्यकुडागमश्च ॥

शिक्या । स्त्री० शिक्ये । काचे ॥

शिक्यत:। त्रि० काचगते । शिक्यस्थापितवस्तुनि ॥ शिक्येधृतम्: प्रातिपदिकाद्धात्वर्थइतिणिच्। क्त: ॥

शिक्षक: त्रि० शिक्षाकारके शिक्षाभिज्ञे ॥ शिक्षामधीते० वेदवा । क्रमादिभ्योवुन् ॥

शिक्षणम् । न०विद्योपादाने ॥ शिक्षायाम् । शिक्षविद्योपादाने । ल्युट् ॥

शिक्षा । स्त्री० वेदाङ्गविशेषे । अकारादिवर्णानांस्थानप्रयत्नादिबोधके० अथशिक्षांप्रवक्ष्यामिपाणिनीयंमतंयथेत्यादिपाणिन्यादिमुनिप्रोक्ते-शास्त्रविशेषे ॥ शिक्षणे । श्योनाकवृक्षे । शिक्ष्यतेस्थानादिकमनया । शिक्ष० । गुरोश्चहल: । टाप् ॥

शिक्षाकर: । पुं० वेदव्यासे । त्रि० शिक्षाकर्त्तरि । शिक्षके ॥

शिक्षाकार: । पुं० पाणिन्यादिमुनौ ॥

शिक्षागुरु: । पुं० विद्यादातरिगुरौ ॥

शिक्षित: । त्रि० कुशले । विज्ञे बोधिते ॥ शिक्षासञ्जाताऽस्य। तारकादित्वादितच् ॥ यद्वा । कर्मणिक्त ।

शिद० । अकर्मकत्वात् कर्त्तरि क्तः ॥

शिखिताघर : । पुं० अधरमुखि । छार्थे ॥

शिख्य : । त्रि० नियम्ये ॥

शिखण्ड : । पुं० बर्हे । मयूरपिच्छे । मोरपङ्ख-इ० भा० ॥ चूडायाम् ॥ शिखिनाक्रम्यते । अमगव्यादिषु । अमस्ताड : । शकन्ध्वादि : ॥

शिखण्डक : । पुं० काकपक्षे । पट्टे० इ० भा० । शिखायाम् ॥ यथा । बालानाम्धिर : कार्यं शिशिखंमुण्डमेवचेति ॥ पुं० न० केकिपुच्छे ॥

शिखण्डिक : । पुं० कुक्कुटे । शिखण्डोऽस्यास्ति । ठन् ॥

शिखण्डिका । स्त्री० शिखायाम् ॥

शिखण्डी । पुं० कलापे । बर्हे । मोरपङ्ख० इ० भा० ॥ मयूरे । वर्हिणे । गाङ्गेयारौ । भीष्मरिपौ । द्रुपदराजपुत्रे ॥ कुक्कुटे ॥ वाणे ॥ गोपवेशधरे विष्णौ ॥ शिखण्डोबर्ह: कलापोलङ्कारत्वमस्यास्मिन् वास्तितद्गुनिठनावितीनि : ॥

शिखण्डिनी । स्त्री० गुञ्जायाम् ॥ यूथिकायाम् ॥ द्रुपदराजकन्यायाम् ॥ मयूरपिच्छभूषणायाम् ॥ मयूरकलाध्वजे ॥ शिखण्डोऽस्त्यस्या : । इन्नन्तात् ङीप् ॥

शिखण्डी । स्त्री० गुञ्जायाम् ॥ यूथिकायाम् ॥ गौरादित्वात् ङीष् ॥

शिखर : । पुं० न० द्रुमाग्रे । शिरसि । अग्रे ॥ अद्रिशृङ्गे । कूटे । शृङ्गे ॥ पुलके ॥ कक्षे ॥ पक्वदाडिमबीजाभमाणिक्यशकले ॥ अग्रे ॥ कोटौ ॥ शिखाऽस्यास्ति । शिखायाक्रुत्वचेतिर : ॥ शिखारातिवा । रा० । क : । ड्रापोरितिह्रस्व : ॥

शिखरवासिनी । स्त्री० उमायाम् । दुर्गायाम् ॥ सातिभ्रतुमुणीतादेवीशिखरवासिनी । उग्रं चतषसालब्धौ यथापशुपति : पति : ॥

शिखरा । स्त्री० मूर्वायाम् ॥

शिखरिणी । स्त्री० रसालाप्रभेदे ॥ यथा । गव्यमावर्त्तितंदुग्धं निवद्धं दधिमाहिषम् । एकीकृत्यपटे घृष्टं शुभ्रशर्करयासमम् । एलालवङ्गकर्पूरमरीचैश्चसमन्वितम् । नाम्नाशिखरिणीकुर्याद्रुचिं सकलवल्लभा ॥ अत्यष्टि १७ प्रभेदे ॥ यथा । रसैरुद्रैश्छिन्नायमनसभलाग : शिखरिणी ॥ यथा । स्मरादस्मभ्रष्टेननुशिखरिणीदृश्यतिशिशौ । विलीना : स्म : सत्यंनियतमवधेयंतदखिलै : । इतिचन्द्रोनानुचितमिभतालापजनितस्मितविभ्रद्देवोजगदवतुगोवर्द्धनधर : ॥ दशिचतिभिशौइतिच्छेद । नारीरत्ने ॥ मल्लिकायाम् ॥ रोमावल्याम् ॥ नवमालिकायाम् ॥

द्राक्षाविशेषे ॥ मूर्वायाम् ॥
शिखरी । पुं॰ अपामार्गे । शैले । पर्वते । पादपे । द्रुमे ॥ कोट्टे ॥ कोयष्टौ ॥ वन्दाके ॥ कर्कटशृङ्गाम् ॥ कुन्दुरुसंज्ञकेनिर्यासे ॥ यावनाले ॥ शिखरमस्त्यस्य । अतइनि : ॥
शिखलोहित : । पुं॰ कुकुरमुडा॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ख्याते ॥
शिखा । स्त्री॰ शाखायाम् ॥ बर्हिचूडायाम् । माङ्गलिक्याम् ॥ अग्रमात्रे ॥ शिरोमध्यस्थकेशेषु । चूडायाम् । केशपाश्यायाम् । चोटी॰ इ॰भा॰ ॥ अग्निज्वालायाम् । ज्वाले । अर्चिषि ॥ प्रपदे ॥ प्रधाने । शिफायाम् ॥ घृणौ । कामज्वरे ॥ माबाक्रन्द : प्रभेदे ॥ यथा । द्विजवरमिह द्विरसगुणितमुपनयतदनुशगणमपिनिधेहि खरगुणितमपरदलम भिकृतनरफणिपतिमुखभणितरुचिरशिखेहि । यथा । बकुलवनमृदुपवनरयनिहतविरहिशतसुरभिरयमेति । द्रयिततमविरहिममस्मरयमतिखलमतिमखिलदिहतविधुरयमुदेति ॥ शैले । शीर्षोऽक्षे तिख: । ... गुण : ॥
शिखा... म् । न॰ ... सलगम ॰ इ॰ भा॰ प्र॰ ।
शिखाजट : । पुं॰ ... विशेषे ॥

शिखैवजटाजातायस्य : ॥ अपरे॰ शिर : केशामुण्डितायस्यतथाविधोब्रह्मचारी॰ शिखाजटइत्युच्यते ॥
शिखाण्डक : । पुं॰ काकपक्षे ॥
शिखातरु : । पुं॰ दीपवृक्षे ॥ दीवट ॰ इ॰ भा॰ प्र॰ दीपाधारविशेषे ॥
शिखाधर : । पुं॰ मयूरे ॥ मञ्जुघोषे ।
शिखाधार : । पुं॰ मयूरे ॥
शिखामूलम् । न॰ गृञ्जने ॥
शिखालु : । पुं॰ मयूरशिखायाम् ॥
शिखावान् । पुं॰ अग्नौ ॥ चित्रके ॥ केतुग्रहे ॥ त्रि॰ शिखायुक्ते ॥ शिखास्त्यस्यमतुप् ॥
शिखावती । स्त्री॰ मूर्वायाम् ॥
शिखावर : । पुं॰ पनसद्रुमे ॥
शिखावल: । पुं॰ शिखिनि । मयूरे ॥ शिखास्त्यस्य । दन्तशिखात्संज्ञायामितिवलच् ॥
शिखावला । स्त्री॰ मयूरशिखायाम् ॥
शिखावृद्धि : । स्त्री॰ कायिकावृद्धौ ॥
शिखावृक्ष : । पुं॰ शिखातरौ ॥
शिखिकण्ठम् । न॰ नीले । मयूरग्रीवे । तुल्याञ्जने ॥
शिखिग्रीवम् । न॰ तुत्थे ॥ शिखिनोग्रीवा । शिखिग्रीवाअस्यास्ति । तद्वर्णत्वात् ॥ अर्शआद्यच् ॥
शिखिध्वज : । पुं॰ कार्तिकेये ॥ शिखीमयूरोध्वजचिह्नमस्य ॥ धूमे ॥

शिखनोध्वज : ॥

शिखो । पुं॰ अग्नौ । वैश्वानरे ॥ चित्रकवृक्षे ॥ बलीवर्दे ॥ शरे ॥ केतुग्रहे ॥ द्रुमे ॥ मयूरे ॥ कुक्कुटे ॥ हये ॥ शिखा : सन्त्यस्य । शिखास्त्यस्यवा । इत्यत्रोपतापेति॰ सू॰ नि: ॰ व्रीह्यादित्वाद्वा ॥ अजलोमनि ॥ सितावरे ॥ मेथिकायाम् ॥ शुक्लशिम्ब्याम् ॥ त्रि॰ शिखायुक्ते ॥

शिखिनी । स्त्री॰ मयूर॰ शिखायाम् ॥

शिखिपुच्छम् । न॰ मयूरपिच्छे ॥

शिखिप्रिय : । पुं॰ लघुबदरे ॥

शिखिमण्डल : । पुं॰ वरुणद्रुमे ॥

शिखिमूलम् । न॰ गृञ्जने ॥

शिखिमोदा । स्त्री॰ अजमोदायाम् ॥

शिखियूप : । पुं॰ शीकारीमृगे ॥

शिखिवर्द्धक : । पुं॰ कूष्माण्डे ॥

शिखिवाहन : । पुं॰ कार्त्तिकेये । महासेने ॥ शिखीमयूरोवाहनमस्य ॥

शिखिव्रतम् । न॰ व्रतविशेषे ।

शिग्रु : । पुं॰ शाकमात्रे ॥ शोभाञ्जने । अस्यपर्यायायथा । शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचका : । रक्तोसौमधुशिग्रु: स्यादिति ॥ अस्य गुणायथा । शिग्रुस्तुकटुक : पाके तीक्ष्णोष्णोमधुरोलघु : । दीपनोरोचनोरूक्ष : क्षारस्तिक्तोविदाहकृत् ॥ सङ्ग्राह्य : शुक्रलोहृद्य : पित्तरक्तप्रकोपण : । चक्षुष्य : । कफवातघ्नोविद्रधिश्वयथुक्रमीन् । मेदोऽपचीविषप्लीहगुल्मगण्डव्रणान्हरेत् । श्वेत : प्रोक्तगुणोज्ञेयोविशेषाद्दाहकृद्भवेत् । प्लीहानंविद्रधिंहन्तिव्रणघ्न : पित्तरक्तहृत् ॥ मधुशिग्रु : प्रोक्तगुणोविशेषाद्दीपन: सर: । शिग्रुवल्कलपत्राणांस्वरसंपरमार्त्तिहृत् ॥ अपिच । लोलिम्बराजकविनावनितावतंसेशिग्रोरमुष्यकथितोस्तिकिमुपयोग : । एतस्यपल्लवरसात्समधो : किमन्यद्दृष्ट्वाधिमावकरणेमहिलाग्रगण्ये ॥ इति ॥ शिनोति । शिञ्निशाने । जम्ब्वादयश्चेतिनिपातित: ॥ शीक्यतेवा । शीकृसेचने । बाहुलकाद्रुक्॰ ह्रस्वो॰ गश्च ॥

शिग्रुकम् । न॰ बाह्लीकेपुप्रसिद्धेशाकविशेषे ॥

शिग्रुजम् । न॰ श्वेतमरिचे । शोभाञ्जनस्यबीजे ॥ अस्यगुणा : । चक्षुष्यंशिग्रुजंबीजंतीक्ष्णोष्णंविषनाशनम् । अवृष्यंकफवातघ्नंतन्नस्येनशिरोर्त्तिनुत् ॥ त्रि॰ शिग्रुभवे ॥ शिग्रोर्जायतेस्म । जनी॰ । ड : ॥

शिग्रुपुष्पम् । न॰ शोभांजनकुसुमे । तस्यगुणा : । शिग्रो : पुष्पंतुकटुकंतीक्ष्णोष्णंस्नायुशोथनुत् । क्रिमिहृत्कफवातघ्नंविद्रधिप्लीहगुल्म

जित् ॥ मधुशिग्रोस्त्वचि विशेषं तत्तापि सप्रसादनम् ॥

शिग्रुमूलम् । न० शोभाञ्जनजटायाम् ॥ अस्यगुणाः । धौतं कुञ्जरदन्तदीप्तिसदृशं स्निग्धं त्यतैलासुरीराशी सङ्कुमितं तथैरारसं मूलं नवं शिग्रुजम् । तत्राशि वदनाम्बुजेनिबिशिते श्रीचन्द्रचूडप्रियापादस्मेरहरेर्गुरु श्लिष्टशिरोयः प्राश्चिकालिपुमान् ॥ शिग्रुमूलन्तुवातघ्नं श्लेष्मशोथविनाशनम् । शमनंवायुरोगस्यपित्तकृत् कफनाशनम् ॥

शिग्रुबीजम् । न० शिग्रुजे ॥

शिङ्घाणम् । न० नासिकामले ॥ शिङ्घ्यते । शिघि आघ्राणे । आ बाहुलकात् आनच् । पृषोदरादित्वात् पक्षे कलोपः ॥ पुं० श्लेष्मणि ॥ न० काचपात्रे ॥ लौहमले । मण्डूरे ॥

शिङ्घाणकः । पुं० श्लेष्मणि ॥ न० नासिकामले ॥ शिङ्घ्यते । शिघि० । आ बाहुलकात् शिङ्घाणच् ॥

शिङ्घिणी । स्त्री० नासिकायाम् ॥

शिङ्घितः । त्रि० घ्राते ॥

शिक् । स्त्री० शिक्ये ॥ शिक्यन्ते सु शिक्यन्त्रिविधाद्यत्र ॥ शिचः क्विप् ॥

शिञ्जा । स्त्री० भूषणशब्दे ॥ धनुर्गुणे ॥ शिञ्जनम् । शिजि अव्यक्ते शब्दे ॥ गुरोश्चहलः इत्यप्रत्ययः । टाप् ॥

शिञ्जितम् । न० भूषणध्वनौ । नूपुरशब्दे ॥ शिञ्जनम् । शिजि० । ताल्यादिः । भावेक्तः ॥ त्रि० शब्दायमाने । कर्त्तरिक्तः ॥

शिञ्जिनी । स्त्री० मौर्व्याम् । धनुर्गुणे ॥ शिङ्क्ते । शिजि० । आवश्यके णिनिः ॥

शिण्डाकी । स्त्री० खाद्यद्रव्यविशेषे राजिकायुक्तैः सर्षपसरसैर्मूलकद्रवैर्निष्पन्नशाकत्वपिष्टके ॥ यथा । शिण्डाकीराजिकायुक्तैः स्यान्मूलकद्रवैः । सर्षपसरसैर्वापिशालिपिष्टकसंयुतैः ॥ संहितेरितिशिषः । शिण्डाकीरोचनीगुर्वीपित्तश्लेष्मकरीस्मृता ॥ इति राजनिघण्टः ॥

शितः । त्रि० दुर्बले । कृशे ॥ तीक्ष्णे । निशिते । शायते स्म । शोतनूकरणे० । शेङ्गतौवा । क्तः । शाच्छोरितिवेत्वम् ॥

शितद्रुः । स्त्री० शतद्रुनद्याम् ॥ पौरमेरटे ॥

शितशूकः । पुं० यवे ॥ गोधूमे ॥ शितंशूकंयस्य ॥

शिताग्रः । पुं० कण्टके ॥

शितिः । पुं० भूर्जे ॥ त्रि० सिते । धवले ॥ असिते । श्यामले ॥ शोयते० । शिनोतिस्मावा । शिञ् निशा

णे । ञिन् ० ञित्वा । शते : सौ
त्रात् ० क्तमितमिशतिसम्भ्रामत
इत्येति० इत्यूसचञ्जित् ० चतदृदा
देशोवा ॥

शितिकण्ठः । पुं० शम्भौ । दृश्ये ।
शिवे ॥ शिति : काल : कण्ठोऽस्य
॥ दात्यूहखगे ॥

शितिचरः । पुं० सुनिषण्णशाके ॥

शितिचारः । पुं० शाकविशेषे ॥

शितिच्छदः ) पुं० हंसे ॥
शितिपक्षः )

शितिसारः । पुं० तिन्दुके । स्फूर्ज
के । तेंदू ० इ० प्र० दृक्षे ॥ शि
ति : काल : सारोमज्जायस्य सः ॥

शितिसारकः । पुं० शितिसारे ॥

शिथिलम् । त्रि० श्लथे । ढोला इ०
भा० । न० मन्दबन्धने ॥ श्लथ
बन्धे ॥ संयोगविशेषे ॥ श्रथमो
चने । खजिरशिशिरशिथिलेतिकि
रच् ० उपधायाइत्वम् ० रेफलोपः
प्रत्ययरेफस्यलत्वञ्चनिपात्यते ॥

शिथिलितः । त्रि० विश्लेषिते ॥

शिनिः । पुं० सात्यकेः पितामहे०
क्षत्रियविशेषे ॥

शिनिनप्ता । पुं० सात्यकौ ॥ शिने
र्नप्ता ॥

शिपिः । पुं० रश्मौ ॥ पशौ ॥ पा० ॥
बाहुलकात्किः ॥

शिपिविष्टः । पुं० खलतौ । खल्वा
टे । दुश्चर्मणि । पिनाकिनि । शिवे ॥
विष्णौ ॥ यथा । शैत्यात्कथनयोगा
च्छीतवारिप्रयच्छते । तत्पानाद्र
श्मयश्चैव शिपयोरश्मयोमताः ।
तेषुप्रवेशाद्विश्वेशः शिपिविष्टइहो
च्यते ॥ शिपिषु० रश्मिषु पशुषु वा
विष्टःप्रतिष्ठितोयज्ञरूपेणेतितथा ॥

शिप्रः । पुं० कालिकापुराणप्रसिद्धे०
सरोवरविशेषे ॥

शिप्रा । स्त्री० अवन्तिदेशप्रसिद्धपुण्य
सरिद्विशेषे ॥

शिफा । स्त्री० वटादिद्रुमाणांजटायाम्
। मूले ॥ सरिति ॥ मांसिकायाम् ॥
मातरि । शतपुष्पायाम् ॥ हरिद्रा
याम् ॥ शेते । बाहुलकात् ० शी
ङः फक् ह्रस्वश्च ॥

शिफाकः । पुं० पद्ममूले ॥

शिफाकन्दः । पुं० करहाटे । पद्म
मूले । शिफामूलतरुप्ररोहः तत्स
म्भितः कन्दोमूलम् ॥

शिफाधरः । पुं० शाखायाम् ॥
शिफाधरा । स्त्री०

शिफारुहः । पुं० वटवृक्षे ॥

शिमृडी । स्त्री० क्षुपविशेषे । मति
दायाम् । द्रवन्त्याम् । वात
घ्नाम् । गुच्छपुष्पायाम् ॥

शिम्बः । पुं० रक्तचक्रमर्द्दके ॥

शिम्बा । स्त्री० सम्याम् । वीजगुप्
त्याम् । सेमफली० इ० भा० ॥

शिनोति । शिञ् । उण्वादय इतिसाधु : ॥

शिम्बाभव : । पुं॰ शमीधान्ये ॥

शिम्बि : स्त्री॰ शिम्बायाम् ॥ शिम्बी पुस्तकशिम्बीतिभेदाच्छिम्बिर्द्विधा मता ॥ शिम्बिद्वयञ्चमधुरंरसेपाके हिमंगुरु । बल्यंदाहकरंप्रोक्तं श्लेष्म लंबातपित्तजित् ॥ शिनोति । शिञ् । इन् ॥

शिम्बिक : । पुं॰ कृष्णमुद्गे ॥

शिम्बिका । स्त्री॰ शिम्बायाम् ॥

शिम्बिज : । त्रि॰ शमीधान्ये ॥

शिम्बिपर्णी । स्त्री॰ मुद्गपर्ण्याम् ॥

शिम्बी । स्त्री॰ मुद्गपर्ण्याम् ॥ शूकशिम्ब्याम् ॥ शिम्बायाम् ॥

शिम्बीफलम् । न॰ चाङ्गल्ये । पीत पुष्पे । काञ्चनपुष्पके ॥

शिर : । पुं॰ पिप्पलीमूले ॥ मस्तके । शिरसि । यथा । शिरोशाचीशिरोऽङ्गिरोजोवाचीरजस्तथे-तिकोशान्तरम् । पिण्डेंद्रयाद्वया शिरइतिशब्दरत्नावल्याम् ॥ शृणातिर्वञ्धर्वकः ॥

शिरफल : । पुं॰ नारिकेले ॥

शिर : शूलम् । न॰ मस्तकवेदनारोगे ॥ तदौषधंयथा । श्वेतापराजितामूलंपिप्पलीमुखिसंयुतम् । ...रपिष्टं शिरोलिपाच्छिरशूलविनाशनम् ॥

शिरज : । पुं॰ केशे ॥ चिकुरे ॥

शिर : । न॰ मस्तके । मूर्ध्नि ॥ तद्रोगनाशकौषधंयथा । शिरोरोगहरंलेपात्गुञ्जामूलंसकाञ्जिकमिति ॥ सर्वौतद्रामोदरेभट्टहारचन्द्रेणशिरसश्चतुर्दशभेदाउक्ता : । यथा । आकम्पितंकम्पितञ्च॰ धुतं॰ विधुतमेवच । परिवाहित॰ माधूतं॰ मवधूतं॰ तथाञ्चितम् । आकुञ्चितं॰ परावृत्तं॰ मुत्क्षिप्तं॰ ञ्चाप्यधोगतम् । लोलितं॰ प्रकृतञ्चेति॰ चतुर्दशविधंशिरइति-॥ प्रधाने ॥ सेनाग्रे ॥ शिखरे ॥ नगाग्रे ॥ वृक्षाग्रे ॥ श्रीयते॰ उष्णीषादिना । श्रिञ्सेवायाम् । श्रयते : स्वाङ्गेशिर : किच्चेत्यसुन्॰ धातो : शिरादेशश्च ॥

शिरसिज : । पुं॰ कुन्तले ॥ बाले । केशे ॥ शिरसिजात : । सप्तम्या मितिड : । तत्पुरुषेकृतीति॰ इलदन्तादितिशाऽलुक् ॥

शिरस्कम् । न॰ शिरस्त्राणे ।

शिरस्तम् । न॰ शिरोरक्षणसंनाहे । शीर्षण्ये । शीर्षके । टोप॰ इ॰ भा॰ ॥ शिर : शायतेऽनेन । चै क्षपालने । आतदूपसर्गे क : ॥

शिरस्त्राणम् । न॰ शिरस्त्रे ॥

शिरस्थ : । पुं॰ मिथोऽयुक्तकचे । स्नानादिना॰ निमर्द्दकेशे । भो

षर्थ्यो ॥ शिरसिभव : शिरसि‍ष्टि तोवा । शरीरावयवाद्यत् ॥

शिरा । स्त्री० धमन्याम्० नाड्याम् ॥ शिनोति । शिञ्० बहुल मन्यत्रापोतिरक् ॥

शिरापत्र : । पुं० हिन्तालवृक्षे ॥ कपित्थे ॥

शिरालम् । न० कमरङ्गे ॥ त्रि० शिरासन्तते ॥

शिरालक : । पुं० अस्थिभङ्गवृक्षे ॥

शिरावृत्तम् । न० सीसके ॥

शिरि : । पुं० शलभे हिंस्रे ॥ हन्तरि ॥ शृणाति । शृ० । कृगृशृपृकुटौत्यादिनाइ: ॥ खड्गे ॥ शरे ।

शिरीष: । पुं० कपीतने । भण्डिले । सिरसइ...वृक्षे । शिरीषोमधुरोनुष्ण... । दोषशोथविसर्पघ्न... षापह: ॥ शृणाति... । शृ० । शृपृभ्यांकिच्च ति० ईषन् ॥

शिरीषपत्रिका । स्त्री० श्वेतकिणि ह्याम् ॥

शिरोगृहम् । न० चन्द्रशालायाम् ॥ शिरसिगृहम् । इ० द्वि० न्द्र: ॥

शिरोधरा । स्त्री० ग्रीवायाम् । शिरसोधरा ॥ इ० हि० न्द्र : ॥

शिरोधानम् । न० उष्णीषके । उपधाने । गण्डौ । सिराहना० इ० भा० ॥ शिरोधीयतेऽत्र । डुधाञ : करणाधिकरणयोश्चेत्यधिकरणेल्युट् ॥

शिरोधि : । स्त्री० ग्रीवायाम् । शिरोधीयतेऽस्याम् । कर्मण्यधिकरणे चेतिकि : ॥

शिरोमणि : । पुं० स्त्री० शिरोधार्यरत्ने । चूडामणौ ॥ शिरस : मणि : ।

शिरोमर्म्मा । पुं० शूकरे ॥

शिरोरत्नम् । न० शिरोमणौ ॥ शिरसोरत्नम् ॥

शिरोरुजा । स्त्री० सप्तपर्णवृक्षे । शिरोरोगे ॥

शिरोरुह : । पुं० केशे मूर्द्धजे । शिरसिरोहति । इगुपधेतिकहे क: ॥

...ग । पु० शिरपीडायां ॥

शिरोवल्ली । स्त्री० वर्हिचूडायाम् ॥

शिरोवृत्तम् । न० मरिचे ॥ श्रीदेवी भागवते द्वादशस्कन्धे श्रीनारायण प्रोक्ते व्रतविशेषे ।

शिरोवृत्तफल: । पुं० रक्तापामार्गे ।

शिरोवेष्ट : । पुं० उष्णीषे । चोलीकड्के । इ० चि० शेत : ।

शिरोवेष्टनम् । न० शिरोवेष्टे ।

शिरोस्थि । न० मस्तकास्थनि । करोटौ । शिरस्त्राणे ।

शिरोषिका । स्त्री० वारिशिरोषिका

याम् ॥ यथा । त्रिदोषविषकुष्ठार्शो ह्रीवारिशिरीषिका ॥

शिलः । पुं॰ न॰ कणिशाद्यर्जने । लूनकेदारशेषधान्ये । मञ्जर्यात्मकानेकधान्योञ्छने ॥ शिलति । शिलउञ्छे । कोवञ् वा । संज्ञापूर्वकत्वान्नगुण: ॥

शिलकः । पुं॰ वेदप्रसिद्धे मुनिविशेषे ॥

शिलगर्भजः । पुं॰ पाषाणभेदने ॥

शिलहट्ट: । पुं॰ देशविशेषे ॥ यथा । गणेश्वरं समारभ्य महेशं दृष्ट्वा मार्गशिवे । शिलहट्टाभिधो देश: पर्वते सति तिष्ठति प्रिये ॥

शिला । स्त्री॰ पाषाणे । प्रस्तरे ॥ मनः शिलायाम् ॥ द्वाराधः स्थितदारुणि ॥ स्तम्भशीर्षे । कर्पूरे । टाप् ॥

शिलाकर्णी । स्त्री॰ शल्लकीवृक्षे ॥

शिलाकुट्टः । ) पुं॰ पाषाणदारणे
शिलाकुट्टकः । )

। टङ्के । शिलावट॰ इ॰ भा॰ प्र॰ ॥

शिलाजम् । न॰ शैलेये । लौहे ॥

शिलाजतु । न॰ पर्वतजातोपधातुविशेषे । सिलाजीत॰ इ॰ भा॰ प्र॰ । अस्यपर्यायादयोयथा । गैरेयमर्थ्यं गिरिजमश्मजञ्चशिलाजतु स्यादमर: । शिलाव्याधौ ॥ निदाघघर्मसन्तप्ताधातुसारंधराधरा: । निर्यासवत्प्रमुञ्चन्ति तच्छिलाजतुकीर्तितम् ॥ सौवर्णं राजतं ताम्रमायसञ्च चतुर्विधम् । शिलाजत्वद्रिजतुचशैलनिर्यासइत्यपि । गैरेयमश्मजञ्चापि गिरिजं शैलधातुजम् । शिलाजं कटुतिक्तोष्णं कटुपाकं रसायनम् । छेदियोगवहं श्लेष्मकफमेदोश्मशर्करा: ॥ मूत्रकृच्छ्रं क्षयं श्वासं वातार्शांसि च पाण्डुताम् । अपस्मारं तथोन्मादं शोथकुष्ठोदरक्रमीन् ॥ सौवर्णन्तुजवापुष्पवर्णंभवतितद्रसात् । मधुरं कटुतिक्तोष्णं कटुपाकं रसायनम् ॥ छेदियोगवहञ्चैवशीतलं कटुपाकि च । राजतं पाण्डुरं शीतं कटुकं स्वादुपाकि च । ताम्रं मयूरकण्ठाभं तीक्ष्णमुष्णञ्च जायते । लौहं जटायुपक्षाभं ततृतिक्तं लवणं भवेत् । विपाकेकटुकं शीतं सर्वश्रेष्ठमुदाहृतम् ॥ अस्यशोधनप्रकारोभावप्रकाशादितोऽवधेय: ॥ शिलायाजत्विव ॥ षष्ठीतत्पुरुष: ॥

शिलाजनी । स्त्री॰ कालाञ्जनीवृक्षे ॥

शिलाटक: । पुं॰ अट्टे । अट्टालके ॥ बिले । गर्ते ॥ इ॰ मे॰ नी॰ शिलाट्योरितिमुद्रितहैमचन्द्रे पाठ: ॥

शिलाटिका । स्त्री॰ रक्तपुनर्नवायाम् ॥

शिलात्मज : । पुं॰ लौहे ॥

शिलात्मिका । स्त्री॰ मूषायां ॥

शिलाददु : । पुं॰ शैलेये ॥ शिलाजतुनि ॥

शिलाधातु : । पुं॰ सितोपले । खव्याम् । सेलखड़ी॰ इ॰ भा॰ ॥ स्वर्णगैरिके । सोनागेरु॰ इ॰ भा॰ प्र॰ ॥

शिलापट्ट : । पुं॰ निष्पेषणशिलायाम् । सिलवट्ट॰ भा॰ ॥

शिलापुत्र : । पुं॰ घर्षशालि । सिलवट्टा॰ लोढा॰ इ॰ भा॰ प्र॰ ॥

शिलापुष्पम् । न॰ शैलेये । अश्मपुष्पे । शिलाजतुनि ॥

शिलाभवम् । न॰ शिलापुष्पे ॥

शिलाभेद : । पुं॰ पाषाणभेदनिष्ठ र्ये ॥ पाषाणभेदकार्थे ॥

शिलारम्भा । स्त्री॰ काष्ठकदल्याम् ॥

शिलावल्का । स्त्री॰ औषधद्रव्यविशेषे । वल्कलायाम् । शैलगर्भायाम् । शिलावाक्॰ इ॰ भा॰ प्र॰ ॥

शिलाव्याधि : । पुं॰ शिलाजतुनि ॥

शिलासनम् । न॰ शैलेये ॥ पाषाणरचितासने ॥

शिलासन्धि : । पुं॰ पर्वतगह्वरे । गुहायाम् ॥

शिलासारम् । न॰ लौहे ॥

शिलाह्वम् । न॰ शिलाजतुनि ॥

शिलि: पुं॰ भूर्जपत्रवृक्षे । स्त्री॰ द्वाराध : स्थितकाष्ठे ॥

शिलिन्द्र : । पुं॰ मत्स्यविशेषे ॥ यथा । शिलिन्द : श्लेष्मलोबल्योविपाकेमधुरोगुरु : । आमवातकरो वृष्योवातपित्तहरोमत : । इ॰ रा॰ भ : ॥

शिली । स्त्री॰ गण्डूपद्याम् । स्तम्भशीर्षे । द्वाराध : स्थितदारुणि ॥ शिलति । शिल॰ । इगुपधे ति क : । गौरादित्वात् ङीष् ॥

शिलीन्ध्र : । पुं॰ मत्स्यविशेषे । विचफले ॥ यथा । शिलीन्ध्र : श्लेष्मलोबल्योविपाकेमधुरोगुरु : । वातपित्तहरोहृद्यआमवातकरश्च स : ॥ तरुप्रभेदे ॥ न॰ कवके । कत्राके । कदलीपुष्पे ॥ विपुटाख्ये ॥

शिलीन्ध्रकम् । न॰ दिलीरे । गोमयच्छत्रिकायाम् ॥

शिलीन्ध्री । स्त्री॰ विहङ्गीविशेषे ॥ गण्डूपद्याम् ॥ मृदि ॥

शिलीपद : । पुं॰ श्लीपदाभिधपादरोगे । पादवल्मीके । गोद॰ इ॰ गो॰ भा॰ प्र॰ । पीलुपांव॰ इ॰ भा॰ ॥ अथविप्रकृष्टनिदानं॰ सामान्यलक्षणञ्च । पुरातोदकभूयिष्ठा : सर्वर्त्तुषुचशीतला : । ये देशास्तेषुजायन्ते श्लीपदानिविशेषत : ॥ अ : सज्वरोवङ्‌क्षणशोभ-

ति: शतहस्तप्रमाणं सिद्धस्थानि ।
तदुक्तं श्रीमहानिर्वाणे । यथा ।
लिङ्गरूपधरं शम्भुं परितो दिग्विदिक्षु
च । शतहस्तप्रमाणेन शिवक्षेत्रं
प्रकीर्त्तितम् ॥ अस्य माहात्म्यम
पि । ईशस्य च महापुण्यं सर्वतीर्थो
त्तमोत्तमम् । यत्रामरा विराजन्ते
सर्वतीर्थानि सर्वदा ॥ स्नानमात्रं
[illegible]
सर्वपापनिर्मुक्तो यात्यन्ते शङ्कराल
यम् ॥ अत्र यत् क्रियते कर्म स्वल्पं
वा बहुलं तथा । प्रभावाद्धूर्जटेस्त
त्तत्कोटिगुणं भवेत् ॥ यत्र
तत्र कृतात् पापान् मुच्यते शिवसन्नि
धौ । शैवक्षेत्रे कृतं पापं वज्रलेप
समं प्रिये ॥ पुरश्चर्या जपं दानं श्राद्धं
तर्पणमेव च । यत् करोति शिवक्षे
त्रे तदनन्ताय कल्पते ॥ पुरश्चर्याश
तं कृत्वा यद्देशिकशिरोमणे: । य
त् फलं तदवाप्नोति सकृज्जप्त्वा शि
वालिके ॥ गयागङ्गाप्रयागेषु कोटि
पिण्डप्रदो नरः । यत् प्राप्नोति तद
न्ते सकृत् पिण्डप्रदानतः ॥ अति
पातकिनो ये च महापातकिनश्च ये ।
शैवतीर्थे कृतश्राद्धास्ते पियान्ति परां
गतिम् ॥ लिङ्गरूपी जगन्नाथो वेद्या
श्रीदुर्गया सह । यत्रास्ति तत्र तिष्ठ
न्ति भुवनानि चतुर्द्दश ॥ अथापि
तत्माहात्म्यं किञ्चिदेतत्प्रकाशि

तम् । अनादिभूतभूतेश महिमा
वागगोचरः ॥ महापीठस्वरूपा
यामस्पृश्यस्पर्शदूषणम् । विद्यते विद्य
तेनैतल्लिङ्गरूपधरेश्वरे ॥ यथा चक्रा
र्चने देवि कोऽपि दोषो न विद्यते । शि
वक्षेत्रे महातीर्थे तथा शास्त्रेऽत्र कालि
के ॥ बहुना किमिहोक्तेन नरस्याग्रे
सद्यमुच्यते । प्रभावः शिवलिङ्गस्य
[illegible] ॥ अयुक्तादि
तं लिङ्गं युक्तं वेदिकया प्रिये । सा
धकः पूजयेद् भक्त्या स्वाभीष्टफल
सिद्धये इति ॥

शिवगतिः । पुं॰ भूतार्हद्विशेषे ॥

शिवघर्मजः । पुं॰ मङ्गलग्रहे ॥

शिवङ्करः । त्रि॰ मङ्गलकर्त्तरि । क्षे
मङ्करे ॥

शिवचतुर्द्दशी । स्त्री॰ चतुर्द्दशीकर्त्त
व्यशिवव्रतविशेषे ॥ फाल्गुनकृ
ष्णचतुर्द्दश्याम् । शिवरात्रौ ॥

शिवज्ञा । स्त्री॰ शिवोपासिकायाम्
। धर्मज्ञायाम् ॥

शिवज्ञानम् । न॰ शुभाशुभकालबो
धकशास्त्रे ॥

शिवतातिः । स्त्री॰ कल्याणकारि
ण्याम् । क्षेमङ्कर्याम् ॥

शिवदः । त्रि॰ परमसुखदे ॥

शिवदत्तम् न॰ विष्णुचक्रे । त्रि॰
शिवेन॰ शिवाय वा दत्ते द्रव्यमात्रे ॥

शिवदारु । न॰ देवदारुवृक्षे ॥

शिवदूतिका । स्त्री॰ मातृकाविशेषे ॥

शिवदूती । स्त्री॰ भवान्याम् । दुर्गायाम् ॥ यतोनियुक्तोदौत्येनतयादेव्याशिवः स्वयं । शिवदूतीतिलोकेस्मिंस्ततःसाख्यातिमागता ॥ शिवेनदूतयतिसन्देशम्प्रापयतीत्यर्थे • गौरादेराकृतिगणत्वान्ङीष् । बहुव्रीहौतुटाप्स्यादित्याहुः । वस्तुतस्तु॰ दुनोतिर्दुतनिभ्यांदीर्घश्चेतिनिष्ठायांदीर्घेसत्यल्पसन्देशप्रापकत्वविवक्षायांकादल्पाख्यायामिति॰ बहुव्रीहावपिङीप्सम्भवति ॥ मातृभेदे ॥ योगिनीविशेषे ॥

शिवद्रुमः । पुं॰ बिल्वे मालूरवृक्षे ॥

शिवदिष्टा । स्त्री॰ केतक्याम् ॥

शिवधातुः । पुं॰ पारदे ॥

शिवनाभिः । पुं॰ शि[illegible]

शिवपुराणम् । न॰ उपपुराणविशेषे

शिवपुरी । स्त्री॰ काश्याम् ॥

शिवप्रियः । पुं॰ बकद्रुमे ॥ स्फटिके ॥ धत्तूरे ॥ धत्तूरधूर्त्ततरुणोन्दुनिवासयोग्यस्यामोपिशाचपतिनापिनिवेशितोसि । किंवीरवाणिविकसन्मितमः प्रयातिकिंवाहिंकुसुमतिकिंदृषदः स्तवन्ति ॥ न॰ रुद्राक्षे ॥ त्रि॰ शिवेष्टद्रव्ये ॥ शिवस्यप्रियः ॥

शिवप्रिया । स्त्री॰ उमायाम् ॥

शिवभट्टारकः । पुं॰ सर्वज्ञाना मोगिनि ॥

शिवमल्लकः । पुं॰ अर्जुनपादपे ॥

शिवमल्लिका । स्त्री॰ वसुके । बकवृक्षे ॥

शिवमल्ली । स्त्री॰ बकवृक्षे ॥ शिवप्रियामल्ली ॥

शिवरसः । पुं॰ अग्नौदग्धे । त्रिरात्रस्थापितान्नाम्बुरसे ॥

शिवरात्रिः । स्त्री॰ शिवचतुर्दश्याम् ॥ अस्यामुपवासः प्रधानम् । यथा । नस्नानेननवस्त्रेणनधूपेननचार्चया । तुष्यामिनतथापुष्पैर्यथातत्रोपवासतः ॥ ततोरात्रौप्रकर्त्तव्यंशिवप्रीणनतत्परैः । प्रहरेप्रहरेस्नानंपूजाचैवविशेषतः गोक्षीरदधिसर्पिर्भिर्मधुनादन्यपूलकः । सर्वपूजाफलंहन्तिशिवरात्रिवहिर्मुखः ॥ शिवरात्रिव्रतेकालमाहहेमाद्रिः । यथा । माघेनिशीथानुगताचतुर्दशीपक्षेऽपरेयाशिवरात्रिसंज्ञिका । भवेदुपोष्यासजयान्विताऽमयायुताचरिक्तांप्रविहायपारणा ॥ यदानिशीथद्वयगामिनीभवेच्चतुर्दशीसापरपूर्वगाक्रमात् । ह्रस्वेचयत्वाटुतमुक्तदयामतोविधियाकिलकालवेदिभिः ॥ इति ज्योतिर्विदाभरणम् ॥ जयन्तीशिवरात्रिश्चकार्येभद्रजयान्विते । कृत्वोपवासंतिथ्यन्तेतदाकुर्याच्चपारणाम् ॥ तिथ्यन्तपारणंतुजयन्तीमःचपर

म् । चतुर्दश्यामेवपारणम् । यथा
क्रम् । ब्रह्माण्डोदरमध्येतुयानितीर्थानिसन्तिवै । पूजितानिभवन्तीह भूताद्यैपारणे कृतेइति ॥
शिवलिङ्गम् । न॰ महादेवस्यशिश्ने ॥
शिवलोकः । पुं॰ कैलासे ॥
शिववल्लभः । त्रि॰ शिवप्रिये ॥ शिवस्यवल्लभः । शिवोवल्लभोस्यवा ॥
शिववल्लभा । स्त्री॰ शतपत्र्याम् ॥
शिववल्लिका । स्त्री॰ लिङ्गिन्याम् ॥
शिववल्ली । स्त्री॰ श्रीवल्ल्याम् ॥ लिङ्गिन्याम् ॥
शिववाहनः । पुं॰ वृषभे ॥
शिवबीजम् । न॰ पारदे ॥
शिवशेखरः । पुं॰ वकद्रुमे ॥ धत्तूरे ॥ शिवमस्तके ॥
शिवसायुज्यम् । न॰ शिवेनसहयोगे ॥
शिवसुन्दरी । स्त्री॰ भवगेहिन्याम् । गौर्याम् ॥
शिवा । स्त्री॰ गौर्याम् । भवान्याम् ॥ यथा । शिवामुक्तिः समाख्याता योगिनां शिवगामिनी । शिवा यया जपेद्देवीं शिवा लोके ततः स्मृता इति देवीपुराणम् ॥ अपिच , शिवा कल्याणरूपा च शिवदा च शिवप्रिया । प्रियेदातरि वा शब्दः शिवा तेन प्रकीर्त्तितेति ब्र॰ वै॰ पुराणम् ॥ पुनश्च । शश्च कल्याणवचन इ ईत्युत्कृष्टवाचकः । समूहवाचकश्चैव वा

कारोदातृवाचकः । श्रेयःसङ्घोत्कृष्टदात्री शिवा तेन प्रकीर्त्तिता । शवराशिर्मूर्त्तिमती शिवा तेन प्रकीर्त्तितेति ब्र॰ वै॰ पु॰ ॥ आत्मानुभूतिनिष्णाता देवभावविवर्ज्जिताः । तेपि प्रेम्णा भजन्ते यामित्यं सर्वोत्तमा शिवेत्यु मा संहिता ॥ मुक्तौ ॥ फेरौ ॥ सप्तफलायाम् । झाटामलौषधौ ॥ अभयायाम् ॥ आमलक्याम् ॥ शम्याम् ॥ हरिद्रायाम् ॥ दूर्वायाम् । गोरोचनायाम् ॥ बुधशक्तिविशेषेतारायाम् ॥ शिवमस्त्यस्याः शिवोस्त्रिभर्त्तत्वेन यस्याइतिवा । अर्शआद्यच् ॥ शिवः शिवावादेवताअस्तियस्याः अर्शआद्यच् । शकुनावेदकत्वात् । शिवंकरोति । तत्करोतीतिणिच् । पचाद्यच् ॥ शिवयतिवा ॥
शिवाक्षम् । न॰ रुद्राक्षे ॥
शिवघाटिका । स्त्री॰ वंशपत्र्याम् ॥
शिवात्मकम् । न॰ सैन्धवे ॥ त्रि॰ शिवमये ॥
शिवानी । स्त्री॰ जयन्तीवृक्षे ॥ दुर्गायाम् ॥
शिवापीडः । पुं॰ चन्द्रमसि ॥ वकवृक्षे ॥ शिवस्यआपीडः ॥
शिवाप्रियः । पुं॰ छागे ॥
शिवाफला । स्त्री॰ शमीवृक्षे ॥

शिवारातिः । पुं० सारमेये ॥
शिवारुतम् । न० शृगालध्वानिनादे ॥
शिवालयः । पुं० हरमन्दिरे ॥ रक्ततुलस्याम् ॥ श्मशाने ॥
शिवालुः । पुं० शृगाले ॥
शिवास्मृतिः । स्त्री० जयन्तीवृक्षे ॥
शिवाह्लादः । पुं० वकवृक्षे ॥ शिवस्यानन्दे ॥
शिवाह्वयः । पुं० पारदे त्रि० शिवनामके ॥
शिशाह्वा । स्त्री० रुद्रजटायाम् ॥
शिवि: । पुं० उशीनरदेशाधिपतौ भूपतिवरे । औशीनरे ॥ उदारो यं महीपतिर्येनस्वमांसंश्येनायदत्वा० शरणागतः कपोतोरक्षितः ॥ भूर्जपत्रवृक्षे ॥ व्याडे । हिंस्रपशौ ॥
शिविका । स्त्री० याप्ययाने । झपान० डोला० चौपाला० पालकी० इत्यादिभाषाप्रसिद्धे बहुविधे । शिबीरथे ॥ शिवेव । शिवंकरोतिवा । तत्करोतितिण्यन्तात्० एवुल् ॥
शिविरम् । न० युद्धवेश्मनि ॥ निवेशे । आगन्तुकसैन्यवसतौ ॥ सेनायावासस्थाने ॥ राजनिवेशे ॥ अथशिविरलक्षणम् । श्रीभगवानुवाच । शिविरंपरिखायुक्तमुच्चैःप्राकारवेष्टितम् युक्तद्वादशद्वारस्वसिंहद्वारपुरस्कृतम् ॥ युक्तंविचित्रैर्विविधैश्च कृत्रिमैश्चकपाटकैः । निषिद्धद्वार स्थितंप्रसिद्धैश्चपुरस्कृतम् ॥ सुतस्यांचन्द्रवेधंप्राङ्गणस्थितंवचेति । विशेषोब्रह्मवैवर्त्तेद्रष्टव्यः कृष्णखण्डके १०२ अध्याये ॥ अथ मृत्युञ्च । शवगतौ । बाहुलकात्किरच्० अतद्भूत्वञ्च ॥ यद्वा । शेरते राजवलान्यस्मिन् । शीङ्स्वप्ने । बाहुलकात्किरच् । शीङोवुगद्रस्वश्च ॥
शिवी । स्त्री० गौर्याम् ॥ पुं० गौङो ष ॥
शिबीरथः । पुं० शिविकायाम् ॥ ० शाली ॥
शिविष्टः । पुं० वकवृक्षे ॥ त्रि० शिवप्रिये ।
शिवेष्टा । स्त्री० दूर्वायाम् ।
शिशयिषुः । त्रि० शयितुमिच्छौ ॥ शेतेःसन्नन्तादुप्रत्ययः ॥
शिशिरः । पुं० हिमे । तुषारे ॥ द्वीपान्तरप्रसिद्धगिरिविशेषे ॥ पुं० न० ऋतुविशेषे । तपस्तपस्ययोः । माघफाल्गुनयोः । कम्पने । शीते । हिमकूटे ॥ अस्यगुणायथा । शिशिरः शीतलोऽतीवरूक्षोवातग्निवर्द्धनः । अपिच । शिशिरंशीतलंतच्च शीतवातप्रकोपकृत्सितम् ॥ अवकाशसफलम् । शिष्टान्नभोगीमधुरप्राशीकालतपुवादियुतः सुधार्त्तः । क्रोधीसुधीधाराकलिवरयश्च प्रसू

तिःशिशिराभिधाने । इति ।। वि० शीतगुणयुक्ते ।। यथा । सुशीम : शिशिरोजड : । तुषार : शीतल : शीतो हिम : सप्तान्यलिङ्गका : ।। अशन्ति० धावन्तियस्मिन्निन्नकामा: । अश्मन्तगतौ । अजिरशिशिरशिथिलस्थिरस्फरस्थविरखदिरा : ० इतिकिरच् ० शशेरुपधाया इत्वञ्च निपात्यते ॥

शिशु : । पुं० पोते । पाके । अर्भके । डिम्भे । पृथुके । शावके । अस्य लक्षणाद्युक्तं ब्रह्मवैवर्तपुराणे यथा । शिशोरष्टमवर्षं प्रोक्तं० बालस्यापि मतं स्मृतम् । रजस्वलादिसंस्पर्श्य स्नातव्यं तु कुमारकै : ॥ प्राक्चूडाकरणात्काल : ० प्रागन्नप्राशनाच्छिशु : [illegible] नाभिर्शीयायावन्मौञ्जी [illegible] ष्यति० शाशयतेऽल्पा । [illegible] : कित्सन्वच्च : ॥

शिशुक : । पुं० संसुकइ० गौ० प्र० यादोविशेषे । उलूपिनि ॥ शिशु : शिशुमार : ० तस्यप्रकृतिरिव । इवेप्रतिकृतावितिकन् ॥ शिशुमारे : बालके ॥ वृक्षविशेषे ॥

शिशुगन्धा : । स्त्री० मधुमल्लयाम् ॥

शिशुचान्द्रायणम् । न० व्रतविशेषे ॥ यथा । चतुर : प्रातरश्नीयात्पिण्डान् विप्र : समाहित : । चतुरोस्त मितेसूर्ये शिशुचान्द्रायणं स्मृतम् ॥

शिशुता । स्त्री० शिशुत्वे ॥ शिशोर्भाव : । तल् । टाप् ॥

शिशुत्वम् । न० शिशुतायाम् । शैशवे ॥ शिशोर्भाव : ॥ तस्यभावस्त्वतलौ ॥

शिशुपाल : । पुं० दमघोषसुतेनृपतौ । चैद्ये । चेदिराजि ॥

शिशुपालक : । पुं० दमघोषसुते । सत्कदम्बे ॥ शिशून्पालयति । पाल० । कर्मण्यण् । स्वार्थेक : ॥ त्रि० बालकपालके ॥

शिशुपालहा । पुं० श्रीकृष्णे ॥

शिशुप्रिय : । पुं० इक्षुपाके । गुडे ॥ त्रि० बालकाभीष्टवस्तुनि ॥

शिशुभाव : पुं० शिशुत्वे ॥ यथा । अप्येकस्यचिदस्तिकश्चिदभित : किंनापिपूर्णीकृत : संसार : शिशुभाववयौवनजराभावावतारादयम् । बालस्तं बहुमन्यतामसुलभंप्राप्तं युवासेव्यतांवृद्धस्तद्विषयाबहिष्कृतइह व्यावृत्यकिंपश्यति ॥

शिशुमार : । पुं० यादोविशेषे । संस० इ० भा० प्र० मत्स्योच्छ्वासे । अस्यपर्याया यथा । जलकूर्मस्त्वम्बुकौशोवसाढ्य : शिशुकश्चसद्दृति० त्रिकाण्डशेषोक्त : ॥ शिशून्मारयति मृङ्प्राणत्यागे । णिजन्तात्कर्मण्यण् ॥ तारात्मकाच्युते । तच्चिव

रणं विष्णुपुराणे २ अंशे १२ अध्यायेयथा । शिशुमारस्तुयः प्रोक्तः सध्रुवीयत्रतिष्ठति । सन्निवेशश्चतस्यापिशृणुष्वमुनिसत्तम ॥ यदह्नाकुरुतेपापंदृष्ट्वातन्निशिमुच्यते । तावत्यश्चैवतारास्ताः शिशुमाराश्रिता दिवि ॥ तावन्त्येवतुवर्षाणिजीवत्यभ्यधिकानितु । उत्तानपादस्तस्याथ विज्ञेयोह्युत्तरोहनुः ॥ यज्ञोऽधरश्चविज्ञेयोधर्मोमूर्द्धानमाश्रितः । हृदिनारायणश्चास्ते अश्विनौपूर्वपादयोः ॥ वरुणश्चार्यमाचैवपश्चिमेतस्यसक्थिनी । शिश्नेसंवत्सरस्तस्यमित्रोऽपानं समाश्रितः ॥ पुच्छेऽग्निश्चमहेन्द्रश्चकश्यपोऽथततोध्रुवः । तारकाशिशुमारस्यनास्तमेतिचतुष्टयम् ॥ इत्येषसन्निवेशोयंपृथिव्यांज्योतिषांतथा । द्वीपानामुदधीनाञ्चपर्वतानाञ्चकीर्त्तितः ॥ वर्षाणाञ्च नद्दीनाञ्चयेचतेषुवसन्तिवै । तेषां स्वरूपमाख्यातं सङ्क्षेपः श्रूयतां पुनः ॥ यदम्बुवैष्णवः कायस्ततो विप्रवसुन्धरा । पद्माकारासमुद्भूता पर्वताब्ध्यादिसंयुता ॥ ज्योतींषि विष्णुर्भुवनानिविष्णुर्वनानिविष्णुर्गिरयोदिशश्च । नद्यः समुद्राश्च सएवसर्वं यदस्तियन्नास्तिचविप्रवर्य ॥ ज्ञानस्वरूपोभगवान् यतोऽसावशेषमूर्त्तिर्नतुवस्तुभूतः । ततोहिशैलाब्धिधरादिभेदान् जानीहिविज्ञानविजृम्भितानि ॥ यदातुशुद्धं निजरूपसर्वं कर्म्मक्षयेज्ञानमपास्तदोषम् । तदाहिसङ्कल्पतरोः फलानिभवन्तिनोवस्तुषुवस्तुभेदाः ॥ मृद्घटत्वं घटतः कपालिकाकपालिका चूर्णरजस्ततोप्यणुः जनैः स्वकर्म्मस्तिमितात्मनिश्चयैरालक्ष्यते वस्तुकिमत्रवस्तु ॥ इति ॥ अपिच । ताराभयंभगवतः शिशुमाराकृतिप्रभोः । दिविरूपंहरेर्यत्तुतस्य पुच्छेस्थितोध्रुवः ॥ सैषभ्रमन् भ्रामयतिचन्द्रसूर्यादिकान् ग्रहान् । भ्रमन्तमनुतंयान्तिनक्षत्राणिचचक्रवत् ॥ सूर्याचन्द्रमसौतारानक्षत्राणिग्रहैः सह । वातानीकमयैर्बन्धैर्ध्रुवेबद्धानितानिवै ॥ शिशुमाराकृतिप्रोक्तं यद्रूपंज्योतिषांदिवि । नारायणोयनंधाम्नांतस्याधारः स्वयंहृदीति ।

शिशुवाहकः । पुं॰ वनच्छागे । चि॰ बालकवोढरि ॥

शिशुवाह्यकः । पुं॰ एडके । वनच्छागे ॥

शिश्नः । पुं॰ मेढ्रे । मेहने । शिफसि ॥ शशति । शश॰ । शिनोतिवा । शिञ् निशाने । बाहुलकान्नक् । पृषोदरादिः ॥

शिश्नकः । पुं॰ मेढ्रे ॥ स्वार्थेकन् ॥

शिक्षिद्दानः । चि॰ पापकर्म्मणि ।

। पुण्यकर्म्मणि ॥ शिश्विन्दे । श्वि दिश्वैल्ये । बाहुलकाच्छिट : शानच् । अनित्यत्वान्ननुम् ॥ यथा । श्वे तितुमिच्छति । श्वितावर्णे । श्वि तेर्दंशपित्यानच्० द : समोलुकव ॥ कृष्णाकर्मत्यमरेपाठान्तरात् । पा पाचारेपि ।

शिष्ट : । त्रि० आर्य्ये । साधुव्यवहा रान्विते ॥ यथा । नपाणिपादचप लोनने त्रचपलोर्यत : । नचवाकच पलश्चैवमितिशिष्टस्यलक्षणम् ॥ शान्ते ॥ स्वच्छशान्ते ॥ सत्कारणवा दिनि ॥ धर्मेणाधिगतोयैस्तुवेद: स परिबृंहणा: । तेशिष्टाब्राह्मणाज्ञेया: श्रुतिप्रत्यक्षहेतव : ॥ उर्वरिते ॥ शिष्यते । शिष्लृ० । क्त० ॥

शिष्टसमाचार : । पुं० आर्यव्यवहारे ।

शिष्टाचार : । पुं० सदाचारे । साधु व्यवहारे ॥ यथा । दानंसत्यंतपोऽ लोभोविद्येज्यापूजनंदम : । अष्टौ तानिचरित्राणिशिष्टाचारस्यलक्षण म् ॥ शिष्टायस्माचरन्त्येनंमनु : सप्तर्षयश्चये । मन्वन्तरेषुसर्वेषुशि ष्टाचारस्तत : स्मृत : ॥ श्रुतिस्मृति भ्यांविहितोधर्मोवर्णाश्रमात्मक : । शिष्टाचाराविरुद्धस्तुधर्म : ससाधुस म्मत : ॥ शिष्टानामाचार : ॥

शिष्टबुद्धि : । त्रि० शास्त्राचार्यानुशि ष्टमतौ ।

शिष्टापरिग्रह : । पुं० सत्कारवचनादि भि : केनाप्यंशेनागृहीते० अप्रमा दिकादे ॥ शिष्टानामपरिग्रहोयस्मि न् ॥

शिष्टि : । स्त्री० आज्ञायाम् । शासने ॥ शासनम् । शासु० । स्त्रियांक्ति न्नाबादिभ्य : । शासइदङ्हलो: :

शिष्य : । पुं० छात्रे । अन्तेवासिनि । शासनयोग्ये ॥ तल्लक्षणंयथा । वाङ्मन : कायवसुभिर्गुरुशुश्रूष णेरत : । एतादृशगुणोपेत : शि ष्योभवतिनारद ॥ देवताचार्यशुश्रू षांमनोवाक्कायकर्मभि : । शुद्ध भावोमहोत्साहोबोद्धाशिष्यइतिस्मृ त : ॥ अपिच । शान्तोविनीत : शुद्धात्माश्रद्धावान्धारणक्षम : । समर्थश्चकुलीनश्चप्राज्ञ: सच्चरिता व्रती । एवमादिगुणैर्युक्त : शिष्यो भवतिनान्यथेति ॥ शिष्यते । शा सु० । एतिस्तुशास्वृदृजुष : क्यप् । शासइदङ्हलो : । शासिवसौति ष : ॥ पुत्रशिष्ययोस्तुल्यत्वंयथा । यथापुत्रस्तथाशिष्योनभेद : पुत्रशि ष्ययो : । तर्पणे पिण्डदानेचपाल नेपरिपोषणे ॥ यथाजनितापुत्र स्तथाशिष्यश्चनिश्चितम् । इत्तीदंका ण्वशाखायामुवाचकमलोद्भव : ॥

शी : । स्त्री० शान्तौ । शयने ॥

शीकर : । पुं० वातस्ताम्बुनि । वा

तास्तजले । अम्बुकर्णेषु ॥ शीक्नते । शीक्नसेचने । तालव्यादिः । रक्प्रत्ययरन्निति बाहुलकाद्रन् ॥ न० सरलद्रवे ॥

शीघ्रम् । न० उशीरे । नलदे । चक्राङ्गे ॥ त्वरिते । लघुनि । क्षिप्रे अरे । द्रुते । सत्वरे । चपले । तूर्णे । अविलम्बिते । आशुनि ॥ तूर्णपर्यायोयं क्रियाविशेषणद्रव्ये वर्त्तमानः क्लीवे । यथा० शीघ्रं जुहोति । सत्वगामीतु वाच्यलिङ्गः । यथा । कलौ शीघ्रा जरा० शीघ्रो मृत्युः शीघ्रं भयस्तथेति ॥ शिङ्कृति० व्याप्नोति । शिधिश्रोपाद्यान । शीघ्रादयश्चेति रगन्तो निपातितः ॥ त्रि० द्रुतगतौ ॥

शीघ्रगः । त्रि० नभस्वति । वायौ ॥ त्रि० त्वरितगामिनि ॥

शीघ्रगामी । त्रि० आशुगमनशीले । द्रुतगतौ ॥

शीघ्रचेतनः । पुं० शुनि । त्रि० त्वरितचेतनायुक्ते ॥

शीघ्रजन्मा । पुं० पूतिकरञ्जे ॥

शीघ्रपुष्पः । पुं० वकतरौ । अगस्त्यागे ॥

शीघ्रवेधी । पुं० लघुहस्ते । शिक्षितास्त्रे । आशुशरादिना लक्ष्यवेधकर्त्तरि ॥

शीघ्रा । स्त्री० उदुम्बरपर्णाम् । दन्त्याम् ॥

शीतः । पुं० वानीरे । वञ्जुले । वेतसभेदे । शीतमस्यास्ति । अर्शआद्यच् । शीतवीर्यं कलेपाद्वाहशमनात् ॥ बहुले । बहुवारके । निम्बे ॥ पर्पटे । कर्पूरे ॥ अशनपर्णाम् ॥ नरकान्तरे । हिमर्तौ ॥ न० हिमगुणे ॥ जले ॥ त्वचे । दारचीनी० इ० भा० ॥ शीतं तुपारं वानीरबहुवारद्रुमेषु चेत्यजय ॥ त्रि० शीतले ॥ अलसे शीतस्पर्शे । शीतं विद्यतेऽस्य । आर्श आद्यच् ॥ विशेष्योभूतः शीतशब्दो नपुंसकम् । अस्मिन् द्रव्ये शीतः स्पर्शइत्यादौ विशेषणीभूतस्तु शीतशब्दो विशेष्यनिघ्नः ॥ श्यायतइति शीतः । श्यैङ् गतौ । भावे क्तः । द्रवमूर्त्तिस्पर्शयोः श्यइति सम्प्रसारणम् । हलइति दीर्घः । श्ये स्पर्शइति पर्युदासान्न निष्ठानत्वम् ॥

शीतकः । पुं० शीतकाले ॥ ऋतावनुपायोसि० इ० यावादिषु पाठात्० सुखार्थान् ॥ अशनपर्णाम् ॥ त्रि० सुस्थिते । सुस्थे ॥ अलसे । दीर्घसूत्रिणि । मन्दे ॥ शीतं करोति । शीताष्णाभ्यां कारिणीति कन् ॥ वृश्चिके ॥

शीतकरः । पुं० चन्द्रे ॥ त्रि० शीतलप्राणियुक्ते ॥ शीतकारिणि ॥

शीतकषाय: । पुं॰ हिमकषाये यथा । षडसंद्रव्यपलंसम्यक्षड्भिर्जलपलै : सुतम् । शर्वरीमुषित : स स्यादि्धम : शीतकषायक इतिवैद्यकम् ॥

शीतकाल : । पुं॰ हिमर्त्तौ । मार्गपौषयो: । हेमन्ते । कूपोदकंवटच्छाया श्यामास्त्रीइष्टकागृहम् । शीतकालेभवेदुष्णमुष्णकालेचशीतलम् ॥ हेमन्तशिशिरर्त्तौ : ॥

शीतकिरण : । पुं॰ हिमांशौ ॥ चन्द्रमसि ॥ यथा । कान्तोऽयमुदेतिशीतकिरणोजात : कुतोवारिधौकस्ते सुन्दरिसोदर : कारमहोदर्तत्वदीये क्षमे । धन्यात्वंयुवतीसतीकुलवतीमातापिधन्यस्तवइत्थंश्रीपरिहासकेलिकलयामुग्धोहरि : पातु व : ॥

शीतकुम्भ : । पुं॰ करवीरे ॥

शीतकुम्भी । स्त्री॰ जलजद्रव्यविशेषे । शिउलीछोप॰ इ॰ गौ॰ भा॰ प्र॰ । अस्या: पर्यायायथा । शीतलीशीतकुम्भीचशुक्रपुष्पाजलोद्भवेतिरत्नमाला ॥

शीतकृच्छ : । पुं॰ व्रतविशेषे । यथा । त्र्यहंशीतंपिबेत्तोयंत्र्यहंशीतंपय : पिबेत् । त्र्यहंशीतंघृतंपीत्वावायुभक्ष : परंत्र्यहमितियमस्मृति : ॥

शीतचारम् । न॰ श्वेतटङ्कणे ॥

शीतगन्ध : । पुं॰ श्वेतचन्दने ॥

शीतगु : । पुं॰ चन्द्रे ॥

शीतचम्पक : । पुं॰ चातपर्णे । तर्पणे ॥ दिने ॥ दीपे ॥ दर्पणे ॥

शीतपर्णी । स्त्री॰ अर्कपुष्पिकायाम् । सूर्यवल्ल्याम् ॥

शीतपाकिनी । स्त्री॰ महासमङ्गाया म् ॥ काकोल्याम् ॥

शीतपाकी । स्त्री॰ वाट्यालके ॥ गुञ्जायाम् ॥ काकोल्याम् ॥

शीतपुष्प : । पुं॰ अर्कवृक्षे ॥ शिरीषे ॥ न॰ परिपेले ॥ शैलेये ॥

शीतपुष्पक : । पुं॰ अर्कवृक्षे ॥ न॰ शैलेये ॥

शीतपुष्पा । स्त्री॰ अतिबलायाम् ॥

शीतप्रभ : । पुं॰ कर्पूरे ॥ त्रि॰ शीतलप्रभायुक्ते ॥

शीतप्रिय : । पुं॰ पर्पटे ॥ त्रि॰ शीतलप्रीतियुक्ते ।

शीतफल : । पुं॰ उदुम्बरे ॥ बहुलवारे । शेलौ ॥ पीलौ ॥ शीतानिफलानियस्य ॥

शीतबला । स्त्री॰ महासमङ्गायाम् ॥

शीतभानु : । पुं॰ चन्द्रे ॥ शीताभानव : किरणायस्य स : ॥

शीतभीत : । त्रि॰ शीतार्त्ते ।

शीतभीरु : । स्त्री॰ मल्लिकायाम् ॥ शीतात्॰ भीरु : ॥ त्रि॰ शीतभीते ॥

शीतभीरुक: । चि० शीतास
शीतभीरुका । स्त्री० मल्ल्याम् ॥
शीतमञ्जरी । स्त्री० शेफाल्याम् ॥
शीतमयूख: । पुं० चन्द्रे ॥ कर्पूरे ॥
शीतमरीचि: । पुं० इन्दौ । कर्पूरे ॥
शीतमूलकम् । न० उशीरे ॥
शीतरम्य: । पुं० प्रदीपे ॥ चि० शीतेरमणीये ॥
शीतरश्मि: । पुं० चन्द्रे ॥ कर्पूरे ॥
शीतरस: । पुं० शीधुप्रभेदे ॥
शीतल: । पुं० अशनपर्ण्याम् ॥ अर्ह द्विशेषे ॥ सुधांशौ । चन्द्रे ॥ व्रत विशेषे ॥ चम्पके ॥ बहुवारके ॥ धूनके । राले ॥ कर्पूरभेदे ॥ न० पुष्पकासीसे ॥ शैलजे ॥ मलयोद्भवे । चन्दने ॥ पद्मके ॥ मौक्तिके ॥ शैत्ये ॥ वीरणमूले ॥ चि० सुषीमे । शिशिरे ॥ शीतं गुणोऽस्यास्ति । सिध्मादित्वाल्लच् ॥ शीतंलातिवा । लाचादाने । चातदूतिक: ॥
शीतलक: । पुं० मरुबके ॥ न० सितोत्पले ॥
शीतलच्छद: । पुं० चम्पके ॥ शीतलपत्रे ॥
शीतलजलम् । न० उत्पले ॥ शिशिरोदके । शीताम्बुनि ॥ यथा मूर्च्छापित्तोष्णदाहविषविरक्तमदा त्यये । भ्रमे श्रमे विदग्धेन्ने तमकेच वमथौ तथा । ऊर्द्ध्वगेरक्तपित्ते च शीतमम्भ: प्रशस्यते ॥ पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे । आध्माने स्तिमिते कोष्ठे सद्य: शुद्धौ नवज्वरे ॥ अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ ॥ हिक्कायांस्नेहपाने च शीताम्बु परिवर्ज्जयेत् ॥
शीतलत्वम् । न० शीतलतायाम् ॥ जडत्वे ॥
शीतलत्वकम् । न० शीतलत्वे ॥
शीतलप्रद: । पुं० चन्दने ॥ चि० हिमदातरि ॥
शीतवनम् । न० तीर्थविशेषे ॥
शीतलशातक: । पुं० अशनपर्ण्याम् ॥
शीतला । स्त्री० शीतलीवृत्ते ॥ यथा । शीतला शीतली शीतकुम्भी पाण्डुरपुष्पिकेतिशब्दचन्द्रिका ॥ कुट्म्बिन्याम् । जलरुहायाम् ॥ वालुकायाम् ॥ आरामशीतलायाम् ॥ देवताविशेषे । विस्फोटकविशेषाधिष्ठात्याम् ॥ यथा । नमामि शीतलां देवीं रासभस्थां दिगम्बरीम् । मार्ज्जनीकलशोपेतां सूर्पालङ्कृतमस्तकामिति स्कन्दपुराणम् ॥
शीतली । स्त्री० जलजवृत्तविशेषे । शीतकुम्भ्याम् ॥ कालानुसारि

वायाम् ॥

शीतवल्क:। पुं॰ उदुम्बरे ॥

शीतवीर्य्यक:। पुं॰ प्लक्षवृक्षे । त्रि॰ शीतलवीर्य्ययुक्ते ॥

शीतशिव: । पुं॰ सक्तुफलावृक्षे ॥ मधुरिकौषधौ ॥ न॰ सैन्धवलवणे । माणिमन्थे ॥ शैलेयनामगन्धद्रव्ये ॥ शीतमस्यास्ति । अच् । शिवमस्यास्ति । अच् । शीतश्चासौ शिवश्च ॥

शीतशिवा । स्त्री॰ मिश्रेयायाम् । शमीवृक्षे ॥

शीतसह: । पुं॰ पीलुवृक्षे ॥ नीलसिन्धुवारके ॥

शीतसहा । स्त्री॰ नीलसिन्धुवारे॰ वासन्त्याम् ॥

शीतहर: । पुं॰ कुचीपार्मि ॥ शीतं हरति । हृञ्॰ । हरतेरनुद्यमनेऽजित्यच् । त्रि॰ शीतापहे ॥

शीता । स्त्री॰ रामपत्न्याम् । सीतायाम् ॥ यथा । शीतानभ: सरितिलाङ्गलपद्धतौ च शीतादशाननरिपो: सहधर्म्मिणी च । शीतंस्मृतं हिमगुणे वत्तदन्विते च शीतोऽलसे च बहुवारतरौ च दृष्ट: ॥ इति तालव्यादौ धरणि: । दूर्वायाम् ॥ शिल्पिन्यामोषधौ ॥ अतिबलायाम् ॥ कुटुम्बिन्याम् । पयच्छायाम् ॥ कौमुद्याम् । ज्योत्स्नायाम् । शेतेस्म । गत्यर्थत्वादिनाशीङ. क्त: । टाप् ॥

शीतांशु: । पुं॰ विधौ । चन्द्रे ॥ कर्पूरे ॥

शीतांशुतैलम् । न॰ कर्पूरतैले ॥

शीताङ्ग: । त्रि॰ शीतलाङ्गे ॥

शीताङ्गी । स्त्री॰ हंसपद्याम् । गोधापद्याम् ॥ शीतलाङ्ग्याम् ॥

शीताद: । पुं॰ दन्तरोगविशेषे ॥ तल्लिङ्गादंयथा । शोणितं दन्तवेष्टेभ्योयस्याकस्मात्प्रवर्त्तते । दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ दन्तमांसानि शीर्य्यन्ते पचंति च परस्परम् । शीतादो नाम सव्याधि: कफशोणितसम्भव: ॥ अथौषधं यथा । शीतादे हृतरक्ते तु तोयनागरसर्षपान् । निष्क्वाथ्य त्रिफलाश्चापि कुर्य्याद्गण्डूषधारणम् ॥ काशीसलोध्रकृष्णामन:शिलाप्रियङ्गुतेजोह्वा । एतच्चूर्णं मधुयुक्शीतादे पूतिमांसहरम् ॥ तेजोह्वा॰ तेजश्रवा । तैलं घृतं वा वातघ्नं शीतादेसम्प्रशस्यते ॥ इ॰ भा॰ प्र॰ श: ॥

शीतार्त्त: । त्रि॰ शीताल: ॥ शीतेन ऋत: ॥

शीतालु: । त्रि॰ शीतार्त्ते । शीतं न सहते । शीताच्चातर्प्यसहनद्वयालु: ॥ शीतालुराक्षादयो ॥

शीताश्मला । स्त्री॰ महासमङ्गायाम् ॥

शीताश्मा । पुं॰ चन्द्रकान्तमणौ ॥ शीतलपाषाणे ॥

शीतीभाव: । पुं॰ मोक्षे ॥ इ॰ त्रि॰

शेषः ॥

शीतोत्तमम् । न॰ जले ॥

शीत्कारः । पुं॰ वरस्त्रीणांरतिकालध्वनौ ॥ यथा । शीत्कारोरतनाराचः सुरतेवरयोषिताम् ॥

शीत्कृतम् । न॰ शीत्कारे ॥ इ॰ धरणिः

शीधुः । पुं॰ न॰ इक्षुरसे । मद्ये ॥ पुं॰ स्त्री॰ आसवे ॥ यथा । शीधुरिक्षुरसैः पक्वैरपक्वैरासवोभवेत् । इतिमाधवः ॥ अपिच । इक्षोः पक्वैरसैः सिद्धः शीधुः ॰ पक्वरसश्च सः । आमैस्तैरेवयः सिद्धः सतुशीतरसः स्मृतः ॥ शीधुः पक्वरसः श्रेष्ठः स्वराग्निबलवर्णकृत् । वातपित्तकरोद्यः स्नेहनोरोचनो हरेत् ॥ विबन्धमेदः शोफार्शः शोषोदरकफामयान् । तस्मादल्पगुणः शीतरसः संलेखनस्मृतः ॥ शेरतेऽनेन । शीङोधुक् । शीध्यतेऽनेनेतिशीधुरितिमल्लिनाथः

शीधुगन्धः । पुं॰ बकुलवृक्षे ॥ मद्यगन्धे ॥ यथा । वेश्याविभ्रमशीधुगन्धिललनावक्त्रासवामोदितैर्नीत्वानिर्भरमन्मथोत्सवरसैरुन्निद्रचन्द्राः क्षपाः सर्वज्ञाइतिदीक्षिताइतिचिरात्प्राप्ताग्निहोत्राइतिब्रह्मज्ञाइतितापसाइतिदिवाधूर्तैर्जगद्वञ्च्यते ॥ धूत्यंहिदाम्भिकाव्यवहरन्ति ॥

शीधुगन्धिः । त्रि॰ सुरागन्धयुक्ते ॥

शीधुपः । त्रि॰ मद्यपे । सुरापे ॥ शीधुपिबति । पादाने । गापोष्टगित्यव॰ पिबते सुराशीध्वोरितिवार्त्तिकाट्टक् । स्त्रियांटित्वान्ङीपि ॰ शीधुपी ॥

शीधुपुष्पः । पुं॰ कदम्बेबकुले ॥

शीधुपुष्पी । स्त्री॰ धातक्याम् ॥

शीधुरसः । पुं॰ आम्रे ॥

शीधुसंज्ञकः । पुं॰ बकुले ॥

शीनः । पुं॰ अजगरे । त्रि॰ मूर्खे । द्रवस्यायाः काठिन्यङ्गताघृताद्दौ ॥ श्यैङ्गतौ । क्तः । द्रवमूर्त्तिस्पर्शयोः श्यइतिसम्प्रसारणम् । श्योऽस्पर्शइतितस्यनः ॥

शीभरः । पुं॰ शीकरे ॥

शीरः । पुं॰ अजगरसर्पे । सूर्ये ॥ शेते । स्फायितञ्चीतिशीङोरक् ॥

शीर्णम् । न॰ स्थौणेये ॥ त्रि॰ तनौ । कृशे ॥ विशीर्णे ॥ शीर्यतेस्म । शॄ॰ । क्तः । ऋतइद्धातोः । रदाभ्यामितिनः । णत्वम् ॥

शीर्णपत्रः । पुं॰ पट्टिकालोध्रे । कर्णिकारवृक्षे ॥ निम्बे ॥ न॰ विशीर्णपत्रे ॥

शीर्णपर्णः । पुं॰ निम्बवृक्षे । न॰ विशीर्णपत्रे ॥

शीर्णपादः । पुं॰ महिषध्वजे ॥ यमे ॥

शीर्षपुष्पिका । स्त्री० अवाक्पुष्पाम् ॥

शीर्षमाला । स्त्री० पृश्निपर्ण्याम् ॥ विशीर्णायां मालायाम् ॥

शीर्षवृन्तम् । न० गोडुम्बे । तरम्बुजे ॥

शीर्णाङ्घ्रि: । पुं० यमे ॥ त्रि० छिन्नपादे ॥

शीर्वि: । त्रि० हिंस्रे ॥ शृणाति शॄ० । जॄशॄस्तॄजागृभ्य: क्विन् ॥

शीर्षम् । न० कालागुरुणि ॥ मस्तके ॥ कुमारशीर्षयोरिति ज्ञापकात् ० शिरस: शीर्षादेश: ॥

शीर्षक: । पुं० विधुन्तुदे । राहुग्रहे ॥ शीर्षस्य प्रतिकृति: इवे प्रतिकृताविति कन् न० शिरोऽस्थ्नि ॥ शिरोरक्षणसन्नाहे । शीर्षण्ये । शिरस्त्रे । टोपइति भाषा ॥ शीर्षं कं सुखमस्मात् ॥ जयपराजयपत्रे ॥

शीर्षच्छेदिक: । त्रि० वध्ये ॥

शीर्षच्छेद्य: । त्रि० वध्ये ॥ शिरश्छेदं नित्यमर्हति । शीर्षच्छेदाद्यच्चेति यत् । प्रत्यययोगेन शिरस: शीर्षभावो निपात्यते ॥

शीर्षण्य: । पुं० सुकेशे । विशदकचे ॥ शिरस्ये । स्नानादिनाविशोऽसक्तकचे ॥ शिरसिभव: । शरीरावयवाद्यत् । येचतद्धितइत्य च० वाकेशेष्विति वचनात् ० शिरस: शीर्षन्नादेश: ॥ न० शिरस्त्रे । शीर्षके ॥ शिरसिस्थितम् । यत् । येचतद्धितइतिशीर्षन्नादेश: । येचाभावेतिटिलोपाभाव: ॥

शीर्षरक्षम् । न० शिरस्त्राणे । शिरस्त्रे ॥

शीर्षा । स्त्री० उष्णिक्छन्द: ७ प्रभेदे ॥ यथा । उक्तावर्णा: सप्तास्यां० सर्वे दीर्घा: स्युर्यस्याम् । एषा शीर्षा निर्दिष्टा वीणापाणिप्रादिष्टा ॥ यथा । दृष्ट: कृष्ण: कालिन्दी । तीरे गोपालानन्दी । वेणुक्वाणै रक्तानां चेतो हर्त्ता गोपीनाम् ॥

शीर्षोदय: । पुं० राशिविशेषे ॥ यथा । मिथुनं केशरी कन्या तुला वृश्चिकभं तथा । कुम्भोथमीनएवैते सप्तशीर्षोदया: स्मृता: ॥

शील: । पुं० न० स्वभावे । सद्व धर्मविशेषे ॥ सद्वृत्ते । साधुवृत्ते । सच्चरित्रे । हारीतोक्ते । ब्रह्मण्यतादिरूपे ॥ तदाह० हारीत: । ब्रह्मण्यता० देवपितृभक्तता० सौम्यता० अपरोपतापिता० अनसूयता० मृदुता० अपारुष्यम्० मैत्रता० प्रियवादित्वम्० कृतज्ञता० शरण्यता० कारुण्यताम्० प्रशान्तिश्चेतिचतुर्दशविधं शीलम् ॥ चरित्रमात्रे ॥ ललम्० शीलयतीऽ

शेनया । शीलनमाधी० ख्यन्ता द्दा० घञ्० धीवा ॥ यद्वा । शी ङ्भ्वुकन्नवृक्रलञ्वालनद्गति० लक् । अर्द्धर्चादिः ॥

शीलनम् । न० पाठनिश्चये । गुणान्याम् । अधिन्याम् ॥

शीलवान् । त्रि० सुस्वभाववति । सुशीले । सद्वृत्ते ॥

शीलहीनः । त्रि० अनियतपुंस्कोदास्यादिजने ॥

शीला । स्त्री० कौण्डिन्यमुनेः पत्न्याम् ॥

शीलितम् । न० शीर्णे ॥ त्रि० अभ्यस्ते ॥ शील्यतिस्म । शील० । क्तः ॥

शीली । त्रि० शीलवति ॥ शीलमस्यास्य । [illegible]दिभ्यश्चेतीनिः ॥

शीवा । पुं० अजगरे ॥ शेते । शीङ् स्वप्ने । शीङ्क्रुशिरुहि[illegible] धृभ्यः क्वनिप् ॥

शीवलम् । न० शैवले ॥ शे[illegible] ल लिशेतेतिष्ठतिशीङोवलन् । बा[illegible] काद्गुणाभावः ।

शु । अ० पूजायाम् ॥ आश्चर्ये ॥

शुकः । पुं० व्यासमुनेः । बादरायणौ ॥ कीरे । मेधाविनि । फलाशने । तोता० इ० भा० प्र० पक्षिणि । अस्यशुभसूचकत्वंयथाम सम्भराजी । बामः पठन्राजशुकः प्रयाणे० शुभंभवेद्दक्षिणतः प्रवेशे । वनेचराः काष्ठशुकाः प्रयातुः स्युः सिद्धिदाः सम्मुखमागतन्तः । इति ॥ रावणस्यमन्त्रिणि । शिरीषवृक्षे ॥ न० ग्रन्थिपर्णे ॥ वस्त्रे । वस्त्राञ्चले ॥ शिरस्त्रे ॥ शोचति० शर्वतिया । शुकशोके० शुगतोऽश । शुकवल्कोल्कादयतिसाधुः ॥ शोभते । शुभशीती । पूर्ववत्साधुः ॥ यद्वा । [illegible]ति । शुक्रगतौ ॥ [illegible]

शुकच्छदम् । न० स्थौणेये ॥

शुकजिह्वा । स्त्री० शुकाननायाम् । सुवाठोंठी० इ० भा० प्र० ॥

शुकतरुः । पुं० शिरीषवृक्षे ॥

शुकतुण्डः । पुं० क्षिप्तलप्रभेदे ॥ सपीतः शुकतुण्डकः ॥

शुकद्रुमः । पुं० शुकतरौ ॥

शुकनासा । स्त्री० शुकशिम्बायाम् ॥

शुकनासनः । पुं० दद्रुघ्ने ॥ त्रि० शुकनाशके ॥

[illegible]सः । पुं० शोणकद्रुमे ॥ शुकनासिकपुष्पमस्यास्ति । अर्शआद्यच् ॥ त्रि० शुकनासयुक्ते ॥

शुकपिण्डः । स्त्री० शूकशिम्ब्याम् ॥

शुकपुच्छः । पुं० गन्धके ॥ शुकस्य लाङ्गूले ॥

शुकपुष्पकम् । न० स्थौणेये ।

शुकपुष्पः । पुं॰ शिरीषवृक्षे ॥ न॰ स्थौणेये ॥

शुकप्रियः । पुं॰ शिरीषद्रुमे ॥ त्रि॰ शुकवल्लभे ॥

शुकप्रिया । स्त्री॰ जम्ब्वाम्॥ शिरीषे॥

शुकफलः । पुं॰ अर्कवृक्षे ॥

शुकबर्हः । पुं॰ न॰ स्थौणेये । ग्रन्थिपर्णे ॥ गन्धद्रव्यविशेषे ॥

शुकबर्हकम् । न॰ ग्रन्थिपर्णे ॥

शुकम् । न॰ ग्रैथ्ये ॥

शुकवल्लभः । पुं॰ दाडिमे । त्रि॰ शुकप्रियवस्तुनि ॥

शुकाख्या । स्त्री॰ शुकशिम्बायाम् ॥

शुकादनः । पुं॰ दाडिमे ॥

शुकानना । स्त्री॰ शुकशिम्बायाम् ॥

शुकी । स्त्री॰ कश्यपस्यपत्नीप्रभेदे । शुकीशुकानजनयदुलूकीप्रत्युलूकानितिगारुडम् ॥

शुकोदरम् । न॰ तालीशपत्रे ॥ कीरजठरे

शुक्तः । त्रि॰ अम्ले ॥ यथा । यन्मस्त्वादिशुचौभाण्डे सगुडक्षौद्रकाञ्जिकम् । धान्यराशौत्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते॰ इति ॥ स्वभावतोमधुरादिरसानिकालवशेनोदकवासादिनाचाम्लवन्तितानिमुक्तानीतिमन्वर्थमुक्तावल्यां॰ कुल्लूकभट्टः । पूते । शटिते । राढा॰ इ॰ भा॰ प्र॰ शुक्तमिति शुचिरन्तीभावेन : द्रव्यविशेषे ॥ यथा । कन्दमूलफलादीनिसस्नेहलवणानिच यत्रद्रव्येभिषूयन्ते तच्छुक्तमभिधीयते ॥ शुक्तंरक्तपित्तकृत्तीक्ष्णोष्णंरोचनं पाचनंलघु : पाण्डुक्रिमिहरंरूक्षंभेदनंरक्तपित्तकृत् ॥ निष्ठुरे । कर्कशे ॥ काञ्जिके । मांसे ॥



शुक्ता । स्त्री॰ चुक्रिकायाम् ॥

शुक्तिः । स्त्री॰ कपालशकले ॥ शङ्खे ॥ शङ्खनखे ॥ नख्याम् ॥ पञ्चावर्त्ते ॥ यथा । वक्षस्याः शुक्तयस्तिस्त्रः इरेमाजयावहाइति ॥ दुर्नामनि । अर्शोरोगे ॥ मुक्तास्फोटे । सीपी॰ इ॰ भा॰ प्र॰ ॥ द्रव्याधिविशेषे ॥ कर्षद्वयोन्मिते ॥ चतुस्तोलकपरिमाणे । अष्टमिकायाम् । शुच्यति॰ शोचति॰ शोकतिवा । शुचपभिषवे॰ शुचशोके॰ शुकगतौवा । क्तिच् ॥

शुक्तिका । स्त्री॰ चुक्रिकायाम् ॥ शुक्तौ । मुक्तास्फोटे ॥

शुक्तिजम् । न॰ मौक्तिके ॥

शुक्तिमान् । पुं॰ कुलपर्वतविशेषे ॥ ऋषिकुल्याकुमाराद्याः शुक्तिमत्पादसम्भवः ॥

शुक्तिबीजम् । न॰ मौक्तिके ॥

शुक्रः । पुं॰ दैत्यगुरौ । काव्ये । उशनसि । भार्गवे । कवौ । सिते ॥ ज्येष्ठमासि ॥ अग्नौ ॥ चित्रकवृक्षे ॥

न० । मज्जजातधातौ । तत्पर्य्याया यथा । शुक्रं० तेजोरेतसीच० बीजवीर्य्येन्द्रियाणिचेति ॥ नेत्ररोगविशेषे ॥ शुक्लवर्णे । शुभ्रे । त्रि० तद्वर्णविशिष्टे । शोचयति । ऋज्रेन्द्रेतिनिपातनात्कुचेश्चस्यकः ० रन् प्रत्ययश्च । शोचतीतिशुक्रः । शुचशोके । पूर्ववत् । शोचत्यनेनवा ॥ विरहिणः शोचन्त्यस्मिन् ० शुक्रोज्येष्ठमासः ॥

शुक्रकरः । पुं० मज्जनि ॥ त्रि० वीर्य्यकारके ॥

शुक्रग्रहम् । न० वृषतुलयोः ॥

शुक्रभुक्०ग्० । पुं० मयूरे ।

शुक्रभूः । स्त्री० मज्जनि । त्रि० वीर्य्योत्पन्ने ॥

शुक्रलः । त्रि० बहुवीर्य्यवति ॥ वीर्य्यदे ॥

शुक्रला । स्त्री० उच्चटायाम् ॥

शुक्रवारः । पुं० षष्ठवारे । शुक्रग्रहभोग्यदिने ॥

शुक्रशिष्य । पुं० दितिसुते । असुरे ॥ शुक्रस्यशिष्यः ।

शुक्रा[illegible]ः । पुं० मयूरे ।

शुक्रास्तः । पुं० नष्टभृगौ । अस्ययात्रादिनिषेधोयथाहबृद्धराजमार्त्तण्डे- । यात्राविवाहव्रतबन्धवेश्मप्रासादचूडाकरणंहितैषी ॥ नष्टेभृगौमोपदिशेन्नराणांदेवप्रतिष्ठामपिकर्णवे धमिति ।

शुक्रियम् । न० शुक्रदैवते० हविषि ॥ शुक्रोदेवताऽस्य । शुक्राद्घन् ॥

शुक्लः । पुं० विष्कम्भादियोगान्तर्गतयोगविशेषे ॥ वर्णविशेषे । तत्पर्य्यायायथा । शुक्लशुभ्रशुचिश्वेतविशदश्वेतपाण्डराः । अवदातःसितोगौरोवलक्षोधवलोऽर्जुनइति ॥ वत्सरविशेषे ॥ तत्फलंयथा । रोगाबहुविधास्तत्रमनुष्याणांजिकृत्वराः । सर्वएवप्रपश्यन्तिशुक्लेवर्षेवरानने ॥ इति ॥ शुक्लेरण्डे ॥

शुक्लपत्रे । न० रजते । रूप्ये ॥ नयनोत्थे ॥ नेत्ररोगविशेषे ॥ यथा । सुखंतमृदुशुक्लाभंशुक्लंतद्धन्तिचिरात् ॥ चिकित्सास्ययथा भुक्त्वापाणितलंघृष्ट्वाचक्षुषोर्यदिदीयते । अचिरेणैवतद्वारितिमिराण्यपोहति ॥ स्नानंकृत्वातिलैर्वापिचक्षुष्यमनिलापहम् । आमलैः सततंस्नानंपरंदृष्टिवलावहम् ॥ शुण्ठीनिम्बदलैः पिण्डी सुखोष्णास्वल्पसैन्धवा । धार्यानेत्रेऽनिलघ्नीशोथकण्डूव्यथाहरी ॥ त्रिफलापिण्डकानेत्रेवातपित्तकफापहेति ॥ शु[illegible]णि ॥ देवयानमार्गे ॥ त्रि० शुभ्रवर्णयुक्ते ॥ शुक्लोगुणोऽस्याऽस्ति० अस्मिन्वा । मतुप् । गुणवचनेभ्योमतुपोलुगिष्टइतिलुक् ॥

 

शोचतिवा। शुच०। ऋज्रेन्द्राग्र्यादिनारन्० निपातनात्कुत्वेस्ष्प्राः। पक्षे रेफस्यलः॥
शुक्लकः। पुं० शुक्ले॥ शुक्लपक्षे॥
शुक्लकण्ठः। पुं० दात्यूहे॥ त्रि० श्वेतगलयुक्ते॥
शुक्लकन्दः। पुं० महिषकन्दे॥ श्वेतमूले॥
शुक्लकन्दा। स्त्री० अतिविषायाम्॥
शुक्लकर्म्मा। त्रि० अकृष्णकर्म्मणि॥
शुक्लकुष्ठम्। न० श्वेतकुष्ठे॥
शुक्लकूष्माण्डम्। न० शुभाशुभे॥
शुक्लक्षीरा। स्त्री० काकोल्याम्॥
शुक्लदुग्धः। पुं० शृङ्गाटके॥
शुक्लधातुः। पुं० कठिन्याम्॥ शुक्लायासौधातुश्च॥
शुक्लपक्षः। पुं० सितपक्षे। विषुसत्वात्सर्वत्रानुकूलत्वाद्दर्शनालक्रियाप्रवृत्तेः॥ तत्र [illegible] सितस्त्वापूर्व [illegible] शुचिः शु [illegible] [illegible] शुक्लप्रतिपदा [illegible] दर्शनाद्व्यासा [illegible] यथा [illegible] मासि शुक्लकृष्णौ क्रमेणहि। चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः॥ पक्षत्वादौस्तु तिथयः क्रमात् पञ्चदशस्मृताः। दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके॥

शुक्लपुष्पः। पुं० कुवककवृक्षे। अतिच्छत्रे। कुन्दपुष्पवृक्षे॥ मरुवके॥ त्रि० श्वेतकुसुमयुक्ते।
शुक्लपुष्पा। स्त्री० नागदन्त्याम्॥ शीतकुम्भ्याम्॥
शुक्लपुष्पी। स्त्री० नागदन्त्याम्॥
शुक्लपृष्ठः। पुं० निसिन्धुके।
शुक्लपृष्ठकः। पुं० सिन्धुवारे॥
शुक्लबलः। पुं० जिनविशेषे॥
शुक्लरोहितः। पुं० श्वेतरोहितवृक्षे॥
शुक्लला। स्त्री० उच्चटायां॥
शुक्लवर्गः। पुं० श्वेतवर्णसजातीयद्रव्ये। शुक्लशुक्तिकपर्दकादौ॥
शुक्लवायसः। पुं० बके। दीर्घजङ्घे। बकोटे।
शुक्लशालः। पुं० अद्रिनिम्बे॥ इ०। रा० नट॥
शुक्ला। स्त्री० शारदायाम्। सरस्वत्याम्। वाग्देवतायाम्॥ शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम्। हस्तेस्फाटिकमालिकां विदधतीं पद्मासनेसंस्थितां वन्देतां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम्॥ गतिविशेषे। ज्ञानप्रकाशमयत्वादर्चिरादिगतौ। वासमार्गस्वे नागमप्रसिद्धे देवयानमार्गे॥ स्नुह्याम्॥ काकोल्याम्॥

विदार्याम् । शुभ्रवर्णायाम् ॥ टाप् ॥
शुक्लाङ्गी । स्त्री॰ शेफालिकायाम् ॥
शुक्लापाङ्ग : । पुं॰ मयूरे । त्रि॰ शुक्लवर्णनेत्रान्ते ॥
शुक्लार्जक : । पुं॰ सितपर्णासे । वर्वराप्रभेदे ॥
शुक्लार्म्मम् । न॰ चक्षूरोगविशेषे ॥ सुखे तं स्त्दुशुक्लाभं शुक्लं तच्छेतेश्चिरात् ॥
शुक्लिमा । पुं॰ शुक्लत्वे ॥
शुक्लोपल : । पुं॰ श्वेतपाषाणे ॥
शुक्लोपला । स्त्री॰ शर्करायाम् ॥
शुघि: । पुं॰ वायौ ॥ तेजसि ॥ चित्रे ॥ शुष्यति । शुषशोषणे । शुषिकुषिशुषिभ्य : क्स : ॥
शुङ्ग : । पुं॰ न॰ वटे । आम्रातके ॥ पक्षस्याम् । अङ्कुरे । कार्ये ॥
शुङ्गा । स्त्री॰ प्रक्षवृक्षे ॥ नवपल्लवकोश्याम् ॥
शुङ्गाकर्म्म । न॰ पुंसावनसंस्कारविशेषे ॥
शुङ्गी । पुं॰ प्रक्षवृक्षे ॥ वटद्रुमे ॥
शुक् । स्त्री॰ शोके ॥ शोचनम् । शुचशोके । सम्पदादित्वात्क्विप् ॥ वशंप्राप्ते मृत्यौ : पितरि तनयेवा सुहृदिवा॰शुचासन्तप्यन्ते भृशमुदरतोडजडधिय : । असारेसंसारेविरसपरिणामेतुविदुषांवियोगोवैराग्यदृढयतिवितन्वन्शमसुखम् ॥
शुचा । स्त्री॰ शोके ॥
शुचि: । पुं॰ ग्रीष्मे ॥ अग्नौ ॥ सौराग्नौ ॥ यथा । पावक : पवमानश्च शुचिरग्निश्चतेत्रय : । निर्मथ्य : पवमान : स्याद्वैद्युत: पावक: स्मृत : । यश्चासौतपतेसूर्य : शुचिरग्निस्त्वसौस्मृत : । तेषान्तुसन्तता ह्यन्ये चत्वारिंशच्चपञ्चच ॥ पावक : पवमानश्चशुचिस्तेषांपितास्त्रय : । एतेषैकोनपञ्चाशद्वह्नय : परिकीर्त्तिता : ॥ इ॰ कौर्मे १२ अध्याय : ॥ चित्रके ॥ शृङ्गाररसे ॥ उत्तमयुवप्रकृतिकत्वेन॰ जुगुप्सारहितत्वात्॰ शुचि : शृङ्गाररस: ॥ आषाढेमासि ॥ शुचिंपवित्रंकरोति॰ शुचयति ! तत्करोतीतिण्यन्तात् इन्: ॥ यद्वा । शोचति । अन्तर्भावितण्यर्थात्शुचेरगुपधात्कित्तीन् ॥ शोचंतिविरहिणोऽस्मिन्नितिवा । शोचत्यनेनवा॥विदुषि ॥ शोचतिजनङ्क्लिश्यमानम् ॥ उपदाशुद्धमन्त्रिणि । ज्येष्ठमासि ॥ स्त्री॰ कश्यपपत्न्यास्ताम्राया: सुतायाम् ॥ त्रि॰ धवले ॥ शुद्धे ॥ यथा । आसनंशयनंयानंजायापत्यकमण्डलुम् । आत्मन :शुचिरेतानिपरेषामशुचीनितु ॥ स्वभावत : संस्कारतश्चशुद्धे ॥ बाह्याभ्यन्तरशौचसम्पन्न ॥ यो

सिधापिगन्धुतैदिपत्रादिकः । चि
ह्नायाः पत्रेऽ कसलका परिडका
भवेत् ॥ हन्यगोतिवातरोगान्च
त्वारिंशश्चपित्तजान् । विंशतिश्ले
ष्मसम्भूतानष्टौचापिज्वरोद्भवान् ॥
हगम्भवशानरोगानज्ञानपिनि-
वारयेत् । मद्यौषधप्रसादेनपरमः
सुन्दरोभवेत् । इतिपाकावली ॥

शुण्ठाम् । ) न० शुण्ठाम्
शुण्ठाग्रः । ) पुं०

शुण्ड : । पुं० मदनिर्भरे ॥

शुण्डक । पुं० मण्डहारके ॥ युद्ध
घोषे ॥

शुण्डरोह : । पुं० भूतृणे ॥

शुण्डा । स्त्री० मद्यपानालये ॥ ज
लहस्तिन्याम् । वेश्यायाम् ॥ ह
स्तिहस्ते ॥ सुरायाम् ॥ नलिन्या
म् ॥ शुन्यते शु नगतौ । अम
न्त ड : ॥

शुण्डापानम् । न० मद्यस्थाने ॥

शुण्डार : । पुं० शौण्डिके । खल्प
शुण्डायाम् ॥ ह्रस्वशुण्डा । कु
टीशमीशुण्डाभ्योर : ॥

शुण्डाल : । पुं० हस्तिनि ॥

शुण्डी । पुं० शौण्डिके ॥

शुण्डिमर्षिका । ) स्त्री० कुच्छुन्द
शुण्डिमूषी । )
र्याम् ॥ इ० रा० नि० गट० ॥

शुण्डी । स्त्री० हस्तिशुण्डावर्षे ॥

शुतुद्रि : । स्त्री० शतद्रुसरिति ॥ शु
प्लुतिवंतुदति । तुद० । इगुपधा
त्किदितीन् । बाहुलकात्तुक् ॥

शुद्दि । अ० शुक्लपक्षे ॥

शुद्दम् । न० मरिचे सैन्धवे ॥

शुद्ध : । त्रि० पूते । पवित्रे ।
अशुद्धिरहिते ॥ निर्मले । नि
र्लेपे ॥ निर्दोषे ॥ शुक्ले ॥ रा
गान्तरामिश्रितरागे ॥ प्रसन्ने ॥
नित्यनिरस्तसमस्तदोषपरसंविद्रूपे
॥ शुद्ध्यतिशुद्ध्यतेऽनेनवा । शु
धशौचे । क्त : । प्रशस्ताशुद्धिर
स्यवा । अर्शआदाच् ॥ अहरहित
भवने ॥ रागाद्यशुद्धिरहितेपर
मात्मनि ॥

शुद्धचैतन्यम् । न० सर्वधर्मातीते ।

शुद्धजङ्घ : । पुं० शुक्लाङ्गे ।
गर्दभे ॥

शुद्धदत् । त्रि० शुक्लदन्तयुक्ते । शु
द्धदन्ते । शुद्धादन्तायस्य : ॥
अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्चेति
पक्षे दन्तस्य दतादेश : ॥

शुद्धमति : । स्त्री० पवित्रमतौ । सु
मतौ त्रि० सुमतिविशिष्टे ॥ प
वित्रबुद्धियुक्ते ॥ शुद्धामतीर्मतिय
॥ शुद्धमातर्यस्य : । पुं० च
तुर्विंशतितमतीर्थङ्करान्तर्गतजिनविशे
षे ॥

शुद्धमांसम् । न० मांसव्यञ्जन

विशेषे । सुधवास० इ० भा० ॥ यथा । पाकपात्रे घृतं दद्यात्तैलं वातदभावतः । तत्र हिङ्गु हरिद्रां च भर्जयेत्तदनन्तरम् ॥ छागादेरस्थिरहितं मांसं तत्खण्डितं भृशम् । धौतं निर्गालितं तस्मिन्घृते तद्भर्ज्जयेच्छनैः ॥ सिद्धयोग्यं जलं दत्त्वा लवणं चापचेत्ततः । सिद्धे जलेन संमिश्र्य वेसवारं परिक्षिपेत् ॥ द्रव्याणि वेसवारस्य नागवल्लीदलानि हि तण्डुलाश्च लवङ्गानि मरिचानि समांशतः ॥ अनेन विधिना सिद्धं शुद्धमांसमिति स्मृतम् । शुद्धमांसं परं वृष्यं बल्यं रुच्यं स्वादु बृंहणम् ॥ त्रिदोषशमनं श्रेष्ठं दीपनं धातुवर्द्धनम् इति भावप्रकाशः ॥

शुद्धवती । स्त्री० वरुणस्य पुर्य्याम् ॥ यथा । शुद्धवत्यम्बुनाथस्य स्फटिकोपलनिर्म्मिता । पाण्डुराभ्रोपमैर्यादःसेविता भाति धामभिरिति सुगेन्द्रसंहिता ॥

शुद्धवल्लिका । स्त्री० गुडूच्याम् ॥

शुद्धसत्त्वम् । न० रजस्तमोभ्यामस्पृष्टे त्रिगुणाया मायाया अंशभूते विमलसत्त्वगुणे ॥ त्रि० शुद्धान्तःकरणे ॥ शुद्धं रागादिकषायरहितं सत्त्वमन्तःकरणं यस्य ।

शुद्धान्तः । पुं० भूभुजां स्त्र्यागारे । अन्तःपुरे अवरोधने ॥ स्वाभृद्दकक्षान्तरे । राजधानीस्थानविशेषे वासगृहाख्ये० इति स्वामी ॥ राजयोषिति ॥ शुद्धोऽन्तोऽस्य । रक्षकाः शुद्धा अन्ते समीपेऽस्य वा ॥ अशौचान्ते ॥

शुद्धान्तपालकः । पुं० अन्तःपुररक्षके । गृहदौवारिके । कञ्चुकिनि । सौविदल्ले । रक्षके । सौविदके ॥ तत्प्रमाणं यथा । शुद्धः कुलीनस्तत्सूक्तः पितृपैतामहः शुचिः । राज्ञामन्तःपुराध्यक्षो विनीतश्च तथेष्यते ॥ इ० मत्स्यपु० ॥

शुद्धान्ता । स्त्री० राजयोषिति ॥

शुद्धापह्नुतिः । स्त्री० अलङ्कारविशेषे ॥ यथा ॥ शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः । नायं सुधांशुः किन्तर्हि व्योमगङ्गासरोरुहम् । इति ॥

शुद्धिः । स्त्री० । मार्ज्जनायाम् ॥ दोषनिरासे ॥ वैदिककर्म्मार्हत्वप्रयोजकसंस्कारविशेषे ॥ कलिकल्मषदीनानां द्विजादीनां सुरेश्वरि । मेध्यामेध्याविचाराणां न शुद्धिः श्रौतकर्म्मणा ॥ न संहिताद्यैः स्मृतिभिरिष्टसिद्धिर्नृणां भवेत् । विनाह्यागममार्गेण कलौ नास्ति गतिः प्रिये ॥ कलावागममुल्लङ्घ्य योऽन्यमार्गे प्रवर्त्तते । न तस्य गतिरस्तीति सत्यं सत्यं न संशयः ॥ दुर्गायाम् ॥

यथा । स्मरणाच्छिन्नमाद्यापि शोध्यते सद्यः पातकात् । येन शुद्धिमवाप्नोति देवीरुद्रतनौ स्थितेति ॥ शुद्धिः स्त्रियां क्तिन् । देवतायै सुराप्रदाने द्रव्यान्तरसंज्ञायाम् ॥ यथा । मांसं मीनश्च मुद्रा च फलमूलानि यानि च । सुधादाने देवतायै सर्वेषां शुद्धिरीरितेति ॥

शुद्धिलाभः । पुं॰ प्रायश्चित्ते ॥

शुद्धोदनः । पुं॰ नृपविशेषे ॥ शुद्ध ओदनोऽस्य । शकन्ध्वादिः ॥ शुद्धोदनो यतो भुङ्क्ते न्यायवच्छुद्धमोदनम् ॥

शुद्धोदनसुतः । पुं॰ शाक्यमुनौ ॥

शुनः । पुं॰ वायौ ॥ कुक्कुरे ॥ यथा वाचस्पतिः । कुक्कुरस्तु शुनिः श्वानः कपिलो मण्डलः शुन इति ॥

शुनःशेपः । ) पुं॰
शुनःशेफः । ) न॰ मुनिविशेषे । ऋचीकमुनिपुत्रे । आजीगर्त्ते ॥

शुनकः । पुं॰ कुक्कुरे । शुनति । शुनगतौ । कुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥

शुनकचञ्चुका । स्त्री॰ क्षुद्रचञ्चुक्षुपे ॥

शुनकचिल्ली । स्त्री॰ शाकविशेषे । श्वानचिल्लिकायां ॥

शुनाशीरः । पुं॰ इन्द्रे ॥ शुनो वायुः शीरः सूर्यः । तावस्य स्तः । अर्श आद्यच् । अन्येषामपीति दीर्घः ॥ शुनाशीरो हि तालव्यः सुनासीरो हि दन्त्यकः । तालव्यादिर्दन्त्यमध्यः शुनासीरश्च दृश्यते । इति भरतः ॥

शुनासीरः । पुं॰ इन्द्रे । पुरुहूते । पुरन्दरे । शुन इत्यव्ययस्य पूजार्थकत्वात् । शोभनं नासीरं सेनाविशेषो यस्य सः ॥ यद्वा । शुनो वायुः सीरः आदित्यः । शुनश्च सीरश्चेति । देवताद्वन्द्वे चेत्यानङ् इति तद्धितकारः । दन्त्यतृतीयपाठो बहुसम्मतः ॥

शुनासीरीयम् । न॰ शुनासीर्य्य ॥ शुनासीरो देवताऽस्येत्यर्थे॰ द्यावापृथिवीत्यादिना छः ॥

शुनासीर्य्यम् । न॰ शुनासीरीये॰ हविरादौ । शुनासीरौ देवते अस्येत्यर्थे॰ द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ चेति॰ यत् ॥

शुनिः । पुं॰ कुक्कुरे । सारमेये ।

शुनी । स्त्री॰ कुक्कुरीम् । अप्सालस्य शुनोलीढ्यमत्र । कुष्माण्डाम् । गौरादित्वान्ङीष् ॥

शुनीरः । पुं॰ कुक्कुरीसमूहे । इति॰ शि॰ शेषः ॥

शुन्ध्युः । पुं॰ अग्नौ । शुन्धति । शुन्ध शुद्धौ । यजिमनिशुन्धिदसिजनिभ्यो युच् ॥

शुन्यम् । न० शून्ये ॥ शुनेहितम् । गवादिषुशुन : सम्प्रसारणं वाच्यं दीर्घत्वमितिघत् ॥ शुनीनांसमूहे ॥

शुभ : । पुं० विष्कम्भादिषु० योगेविं शेयोगे ॥ तज्जोत्पन्नस्यफलंयथा । शुभप्रसूत : शुभकृन्नराणांशुभोदये टोविदुषांसमाजे । करोतिनित्यं शुभकर्मयोमान् शोभाधिक : शोभनवेशधारीति ॥ छागे ॥ शुभहिंसायाम् । इगुपधेतिक : ॥ न० कल्याणे । क्षेमे । भद्रे । मङ्गले ॥ मौक्तिके ॥ पद्मकाष्ठे ॥ इष्टफले ॥ परमानन्दरूपत्वेनमङ्गलानांमङ्गले ० मोक्षसुखे ॥ त्रि० सुखरूपे ॥ क्षेमशालिनि ॥ खसख्यादिपुदि ॥ प्रशस्ते ॥ शोभने । शुभशोभायाम् । इगुपधज्ञाप्रीकिर : क : ॥

शुभंयु : । त्रि० शुभान्विते ॥ शुभमस्यास्ति । शुभमितिमान्तमव्ययम् । अहंशुभामेर्युस् ॥

शुभकृत् । पुं० प्रभवादिवत्सरान्तर्गतवत्सरविशेषे । यथा । सुवर्णरूप्यधान्यानिजगत्सर्वंसुशोभनम् । ब्राह्मणाश्वणिजस्तुष्टा : सुभिक्षे : शुभकृतिप्रिये ॥ ३६ ॥ त्रि० शुभकारके ॥

शुभगन्धकम् । न० बोले । त्रि० मङ्गलगन्धयुक्ते ॥

शुभग्रह : । पुं० सौम्यग्रहे ॥ अर्द्धाधिक : शशीचैवगुरु : शुक्रस्तथैवच । पापाऽयुतोबुधश्चैवप्रोक्ताश्चैतेशुभग्रहा : ॥

शुभङ्कर : । त्रि० क्षेमङ्करे । क्षेमकारि ॥

शुभङ्करी । स्त्री० पार्वत्याम् ॥

शुभद : । पुं० अश्वत्थवृक्षे । त्रि० शुभदातरि ॥

शुभदन्ती । स्त्री० सुदन्त्याम् । सुदत्स्त्रियाम् ॥ पुष्पदन्तेभयोषिति । शुभौशोभनौदन्तावस्या : । नासिकोदरोष्ठेतिङीष् ॥

शुभपत्रिका । स्त्री० शालपर्ण्याम् ॥ मङ्गलपत्रिकायाम् ॥

शुभम् । अ० क्षेमे । भद्रे ॥

शुभवासन : । पुं० मुखवासकारगन्धे । मुखवासने ॥

शुभस्थली । स्त्री० यज्ञभूमौ । भद्रभूमौ ॥

शुभा । स्त्री० वंशरोचनायाम् ॥ गोरोचनायाम् ॥ प्रियङ्गौ ॥ शम्याम् ॥ श्वेतदूर्वायाम् ॥ देवसभायाम् ॥ उमासखीविशेषे ॥ मङ्गलजनिकायाम् ॥ छाग्याम् ॥ टाप् ॥

शुभाङ्ग : । त्रि० मङ्गलावयवयुक्ते । सुन्दरावयविनि ॥ शुभानिलक्षणलक्षितान्यङ्गान्यस्य ॥

शुभाङ्गी । स्त्री० कुवेरपत्न्याम् । कामदेवपत्न्याम् ॥ मङ्गलावयवयुक्ता

याम् ॥

शुभाचार : । त्रि॰ शोभनाचारवति ।

शुभाचारा । स्त्री॰ उमासखीभेदे ॥

शुभाञ्जन : । पुं॰ शिग्रौ ॥

शुभात्मिका । स्त्री॰ कन्यायाम् । शुभौक्ती ॥

शुभान्वित : । त्रि॰ मङ्गलयुक्ते । शुभयौ ॥ शुभेनान्वित : कर्तृकरण इतिसमास : ॥

शुभ्र : । पुं॰ चन्दने ॥ शुक्लवर्णे । शोभते । शुभ्दीप्तौ । स्फायितञ्चीतिरक् ॥ न॰ अभ्रके ॥ रूप्ये ॥ कासीसे ॥ गडलवणे ॥ शाकम्भरीये ॥ त्रि॰ उद्दीप्ते । शुक्लगुणयुक्ते ॥

शुभ्रदन् । त्रि॰ शुभ्रदन्ते ॥ शुभ्रादन्ता यस्य स : । अग्रान्तशुद्धशुभ्रेतिदन्तस्यदत्रादेश : ॥

शुभ्रदन्त : त्रि॰ शुभ्रदति ॥

शुभ्रदन्ती । स्त्री॰ पुष्पदन्तभार्यायाम् ॥ शुभ्रौदन्तौ अस्या: सा । नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्चेतिङीष् ॥

शुभ्ररश्मि : । पुं॰ चन्द्रे ॥

शुभ्रा । स्त्री॰ गङ्गायाम् ॥ वंशरोचनायाम् । स्फटिक्याम् ॥

शुभ्रांशु : । पुं॰ सुधांशौ । ओषधीशे । चन्द्रे ॥ शुभ्राअंशवोयस्य ॥ कर्पूरे ॥

शुभ्रालु : । पुं॰ महिषकन्दे ॥

शुम्भि : । पुं॰ ब्रह्मणि । कमलासने ॥ दुर्गनीये ॥ शोभते । शुम्भशोभनार्थे । अच्छिशदिभ्यो शुम्भिश्च क्रिन् ॥

शुम्भ : । पुं॰ कश्यपाद्दित्यामुत्पन्ने निशुम्भनमुचिभ्यां ज्येष्ठे । शिवाज्ञया गौर्या प्राप्तवधे असुरविशेषे ॥ यथा । कश्यपस्यदितिर्भार्यासीद्दक्षिजसत्तम । तस्या : पुत्रत्रयंजज्ञे सहस्राक्षाद्बलाधिकम् । ज्येष्ठ : शुम्भइतिख्यातोनिशुम्भश्चाऽपरोऽसुर : ॥ तृतीयोनमुचिर्नाममहाबलपराक्रम : । इतिवामनपुराणम् ॥

शुम्भघातिनी । शुम्भनिबर्हिणी । स्त्री॰ महासरस्वत्याम् ॥

शुम्भपुरम् । न॰ एकपक्षे । हरिगृहे । शम्भतदृत्यधुनाप्रसिद्धे पुरश्च ॥

शुम्भपुरी । स्त्री॰ शुम्भासुरनगर्याम् । शुंभपुरे ॥

शुम्भमथनी । शुम्भमर्दिनी । स्त्री॰ दुर्गायाम् । महासरस्वत्यां ॥

शुम्भा । स्त्री॰ शोभायाम् ॥ शुम्भति शुभशुम्भशोभायाम् । भवा यच् ॥

शुल्क । पुं॰ न॰ घट्टादिदेये राजनिमित्तकपरिजभागे । राजनिर्दिष्टभाग : शुल्क : इत्युक्त : । स्थलजलपथादिना वाणिज्याकार

भ्यो नियतस्थानेषु द्रव्यानुसारेण राजग्राह्यभागे । दान० कृ० भा० प्र० ॥ घट्टादौ त्यादियह् अजुल्कप्रती ल्यादियह: । तथा विप्रा वेश्मनि प्कां ख्य द्रव्येभ्यो० राजग्राह्यभागो स्ति ॥ वरादय यहणे ॥ गृहोपस्करवा ह्यनां देहाभरणकर्मिणाम् । मूल्यं कश्चनुयत् किञ्चित् शुल्कं तत् परिकीर्त्तितम् ॥ गृहादिकर्मभिः शिल्पभिस्तत्कर्मकरणाय० भर्त्रादिप्रेरणार्थं स्त्रियैयदुक्तौ यद्दानं तच्छुल्कम्० तदेवमूल्यं प्रकृत्यर्थत्वात् ॥ व्यासेन च । यथा । यद्दानीतं भर्तृगृहे शुल्कं तत्परिकीर्त्तितम् ॥ भर्तृगृहगमनार्थमुक्तो यादियद्दत्तं तदित्यर्थः । यन्नादिदेयवस्तुनि ॥ शुल्कयति । शुल्क अतिसर्जने । घञ् ॥

शुल्कशाला स्त्री० अयस्थानविशेषे ॥

शुल्बम् न० ताम्रे ॥ यज्ञकर्मणि ॥ आचारे ॥ जलसन्निधौ ॥ शलति । शलगतौ उल्वादयश्चेतिसाधुः ॥ यद्वा । शुल्वयति । शुल्यतेवा । शुल्वमाने० ण्यन्त: । एरच्० घञ् वा ॥ वराटे । रज्जौ ॥

शुल्वा । स्त्री० रज्जौ ॥

शुल्वारि: । पुं० गन्धके ॥

शुश्रुवान् । त्रि० श्रुतवति । शृणोते: क्वसु: ॥

शुश्रूः । स्त्री० मातरि । यथा । शिशो: शुश्रूषणाच्छुश्रूरितिमन्त्राभारतेमेघधर्मः ॥

शुश्रूषणम् । न० सेवायाम् । शुश्रूषायाम् ॥

शुश्रूषा । स्त्री० उपासने । परिचर्यायाम् । सेवायाम् ॥ यथा भगवान् । नाहमिज्याप्रजातिभ्यां तपसा पशमेनवा । तुष्येयसर्वभूतात्मा गुरुशुश्रूषयायथेति ॥ कथने ॥ श्रोतुमिच्छायाम् ॥ शुश्रूषणम् । श्रुश्रवणे । सन्नन्त: । अप्रत्ययात् ॥

शुश्रूषु: । पुं० परिचारके । श्रोतुमिच्छौ ॥ यथा खनन् खनित्रेण नरो वार्यधिगच्छति । तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ शृणोते: सन्नन्तादुप्रत्यय: ॥

शुष: । पुं० गर्त्ते ॥ शोषणे ॥ कुल्यजयपाल: ॥

शुषि: । स्त्री० शोषे ॥ छिद्रे । शुषिरे । शोषणम् । शुषशोषणे । कृगुपधात् किदितीन् । शुष्यत्यनेनवा ॥

शुषिर: । पुं० न० गर्त्ते ॥ वह्नौ ॥ मूषिके ॥ न० वंश्यादिवाद्ये । चाद्विनावंशादियह: । यथा । वंशोऽयपारी मधुरो तिलयो ग्रक्‌खकाहला: । ते ढक्की मुरलो बुक्का शृङ्गिका स्वरनाभय: ॥ शृङ्गकापालिकांवंश

यमेवं शस्त्रयापरः । एतैश्शुषिरमि
दास्तुकथिता: पूर्वसूरिभिरिति ॥
विवरे ॥ त्रि॰ सरन्ध्रे । रन्ध्रान्वि
ते । शुषिश्छिद्रमस्यास्मिन्वाऽस्ति
। अषशुषौतिर: ॥ यद्वा । शुष्य
ति । शुष॰ इषिमदिमुदीतिकि
रच् ॥ शुष्कपौल्यन्ये ॥

शुषिरा । स्त्री॰ नलीनामगन्धद्रव्ये॥
शुषिराविद्रुमलताकपोतांघ्रिर्न
टीनलीत्यमरः ॥ शुषिरमस्त्यस्य
अर्शआदित्वात् । अर्श आद्यच् ॥

शुषिल: । पुं॰ समीरणे । वायौ ।

शुष्क: । त्रि॰ नीरसे ॥ शुषित: ।
शुष: क्त इति॰ निष्ठातकारस्य
ककार: ॥ यद्वा । शुष्यति । शुष॰
। सृवभूशुषिमुषिभ्य: कक् ॥

शुष्कतर्क: । पुं॰ दुस्तर्के । अनु
ग्राहकमानहीनतया॰ निरालम्ब-
ने॰ ऽर्द्धवैनाशिकादिकल्पितेऽनु-
माने ॥

शुष्कपत्रम् । न॰ नीरसदले ॥ आ
तपादिशोषितपत्रशाके । नालि-
ता॰ शुक्ता॰ इ॰ गौ॰ दे॰ भा॰
प्र॰ । अस्यगुणायथा । शुष्कपत्रं
पर्य्यामिश्रं पित्तश्लेष्मज्वरापहम् ।
तच्छुष्कपत्रं जलदोषनाशनं विशेष-
त: पित्तकफज्वरापहम् । जल
स्तस्यापिचपित्तहारकंसुरैरवर्ण्य
म्ननयेगकारकमितिराजवल्लभ: ॥

शुष्कमत्स्य: । पुं॰ आतपादिना नी-
रसीभूते ॥ शुष्कमत्स्या नवल्या:
स्युर्दुर्जराविड्विबन्धना: ॥

शुष्कमांसम् । न॰ आतपादिना॰
वनान्तरे पिशिते । उत्तप्ते । वल्लूरे ॥ य
था । ग्रहानाञ्शोषणंमांसं॰ बाला-
बलनंलघु । विदोषकृद्दृष्यालञ्ज
ष्टं शुष्कं भूलध्यारंगुरु ॥

शुष्करेवती । स्त्री॰ मातृकाविशेषे ॥

शुष्काल: । त्रि॰ आमिषे ॥ शुष्क
मांसस्यापर्शिकि । पिशिताशिनि
॥ शुष्कलीमस्ति । शेषद्बलच् ।
संज्ञापूर्वकत्वान्नवृद्धयभाव: ॥

शुष्कली । स्त्री॰ शुष्कमांसे ॥ मांस
मात्रे ॥

शुष्कवृक्ष: । पुं॰ पाण्डुतरौ ।
धवे ॥

शुष्कव्रण: । पुं॰ किणे ॥

शुष्काङ्ग: । पुं॰ धवद्रुमे ॥ त्रि॰ नि
र्ज्जलावयवे ॥

शुष्काङ्गी । स्त्री॰ गोधायाम् ।

शुष्कार्द्रम् न॰ शुण्ठ्याम् ॥

शुष्ण: । पुं॰ सूर्ये ॥ वह्नौ ॥ शुष्य
त्यनेन । शुष॰ । तृषिशुषिरसि
भ्य: कित्तिन: ॥

शुष्म: । पुं॰ सूर्य्ये ॥ अग्नौ ॥
अर्चिषि ॥ न॰ तेजसि ॥ ओज
सि । बले ॥ शुष्यतिजलम्॰ शु
षिरन्तर्भावितण्यर्थात्॰ अविसिवि

सिग्रुषिभ्य: क्विदितिमन्प्रत्यय: शुष्यत्यनेनवा । शुष० ॥

शुष्मा । पुं० अग्नौ ॥ चित्रकवृक्षे ॥ सूर्ये । न० तेजसि ॥ शुष्यत्यनेन । शुष० । अन्येभ्योपीतिमनिन् । संज्ञापूर्वकत्वान्नगुणः ॥ शोषयतिवा । बाहुलकात्साधुः ॥

शुष्मी । त्रि० बलिष्ठे । मत्ते ॥ अस्त्यर्थेइनि: ॥

शूक । पुं० शूके । शूचयतीत्याद्यर्थे । किशारौरन्यस्मिन् । शूचयतीत्याद्यर्थे । ससग्रादेरन्यवधशिखका-दिकण्टके ॥ श्यति । शीतनूकरणे । उलूकादयश्चेतिसाधुः ॥ दयायाम् । न० शूकतृणे ॥

शूकक: । पुं० प्रावृटे । यवे । रसे

शूककीट: । पुं० वृश्चिके ॥ शूकवान्कीट: । शूकयुक्त: कीट: । शाकपार्थिवादि: ॥ ऊर्णादिभक्ष: कीटविशेषोवृश्चिक: शूककीटश्च० भ्रमरप्रभेदोयम् ॥

शूककीटक: । पुं० शूककीटे ॥

शूकतृणम् । न० तृणविशेषे । शूके । शूकाख्ये । कनिष्ठके ॥ द्र० रा० राट: ॥

शूकधान्यम् । न० यवगोधूमादौ ॥ शूकयुक्तधान्यम् ।

शूकपिण्डका । } स्त्री० शूकशिम्ब्याम् ॥
शूकपिण्डी । }

शूकर: । पुं० कूलचरविशेषे । वराहे क्रोडे ॥ शूकोस्त्यस्य० खररोमत्वात् । र: ॥ यद्वा । शूकंराति । रा० आतइतिक: ॥ यद्वा । शू० इति ध्वनिंकरोति । अच् । टावा ॥ शालिविशेषे ॥

शूकरकन्द: । पुं० वाराहीकन्दे ॥

शूकरपादिका । स्त्री० कोलशिम्ब्याम् । सुवरसिमइतिभाषाप्रसिद्धायाम् ॥

शूकरमुखम् । न० नरकविशेषे ॥

शूकराक्रान्ता । स्त्री० वराहक्रान्तायाम् ॥

शूकरी । स्त्री० शूकरस्त्रियाम् । जातेरिति ङीष् । इन्द्रस्याशुचिशूकरस्य च सुखेदु:खेवनास्त्यन्तरंस्वेच्छा कामनयोस्तयोरपिसुखाविष्ठाचक्रास्याध्यमम् । रम्भावाशुचिशूकरोचपरमप्रेमास्पदंमृत्युत: सन्त्रासोपि सम: स्वकर्मगतिभिश्चान्योन्यभाव: सम: ॥ वराहक्रान्तायाम् ॥

शूकरेष्ट: । पुं० कशेरुणि ॥ त्रि० सूकरप्रियवस्तुनि ॥

शूकल: । पुं० दुर्विनीताश्वे ॥

शूकवान् । त्रि० शूकयुक्ते ।

शूकवती । स्त्री० कपिकच्छ्वाम् ॥

शूकशिम्बा । } स्त्री० } कपिकच्छ्वाम् ॥
शूकशिम्बि । } पुं० }
शूकशिम्बिका । } स्त्री० }
शूकशिम्बी । } }

। कौचट्० भा० ॥ शूकायुक्ताशिम्बा
० शिम्बि : शिम्बिका० शिम्बीवा ॥

शूकसिम्बा । } स्त्री०
शूकसिम्बि: । } पुं० कपिकच्छाम् ।
शूकसिम्बी । } स्त्री०

मर्कस्याम् । कौच० भा० प्र० ॥

शूका । स्त्री० शूकशिम्बायाम् ॥

शूकाढ्यम् । न० शूकतृण ॥

शूकापटुः । पुं० तृणधाविशेषे । ट
 णमणी । कपूरंदू० भा० प्र० ॥ दू
 ० द्वा० ली ॥

शूतिपर्ण : । पुं० आरग्वधे ॥

शूद्रः । पुं० अवरवर्ण । वृषले । ज
 घन्यजे । अस्यान्नादियज्ञवंवैदिक
 ब्राह्मणेनकर्त्तव्यमित्याहनाराय
 ण : । शूद्रान्नं शूद्रसम्पर्कं शूद्रेण
 चसहासनम् । तेयान्तिनरकंघोरं
 यावच्चन्द्रदिवाकराविति ॥ अस्योत्प
 त्तिरग्निपुराणे जातिमालायामुक्ता
 । तथाहि । आदौप्रजापतेर्जाताःमु
 खाद्विप्रा : सदारका : । वाह्वोश्च
 त्रियाजाताजङ्घाभ्यांविशस्थिरे ॥
 पादाच्छूद्रस्सम्भूतस्त्रिवर्णस्यचसे
 वक : ॥ सोमनामासुतस्तस्यप्रदी
 पस्तस्यपुत्रक : ॥ कायस्थस्तस्य-
 पुत्रोऽभूद्भूर्लिपिकारक : । काय
 स्थस्यत्रय:पुत्राविख्याताजगतीतले
 ॥ चित्रगुप्तश्चित्रसेनोविचित्रश्चतथैव
 च । चित्रगुप्तोगत : स्वर्गेविचित्रो
 नागसन्निधौ ॥ चित्रसेन : पृथिव्यां
 वैइतिशूद्र : प्रपञ्चतइति ॥ शोच
 ति । शुचशोके । शुचेर्दश्चेतिरक्०
 दीर्घश्च ॥ अहहारेत्वाशूद्रेतिश्रुतौ
 तु० रुद्वेर्धातु० योगएवपुरस्कृत:
 तथाचोत्तरतन्त्रे भगवान्व्यास : ।
 शुगस्यतदनादरश्रवणात्० तदाद्रव
 णात्सूच्यतेहि ॥ १ । ३ । ३४ । भ
 ष्यार्थ : । छान्दोग्येचतुर्थप्रपाठ
 के० शिष्यम्प्रतिशूद्रेतिसम्बोधना
 च्छूद्राधिकारइतिचेन्न । शुगस्येति
 । जन्हेर्गहंसैरनादृत्यनादृतोजान
 श्रुति : ० तदनादरश्रवणाद्याशु
 क० तया० आशीघ्रं० रैक्वगुरुंप्र
 द्रवणात्सशूद्र : । एतद्धिवृत्तं० शू
 द्रेतिसम्बोध्य० सर्वज्ञत्वख्यापनाय
 रैक्वेणसूच्यते ॥

शूद्रक : । पुं० अतिकुत्सितेशूद्रे ॥
 कुत्सायांकन् ॥

शूद्रकर्म्म । न० द्विजपरिचर्यायाम् ॥
 यथाहभगवान् । परिचर्यात्मकं
 कर्म्मशूद्रस्यापिस्वभावजम् इति ।
 स्वभावजं रजउपसर्जनतमोगुणस्व
 भावाज्जातम् कालिदासोपि ।
 द्विजातिसेवाऽवनिदेवतानांयाधर्म्म
 विधि : शूद्रनिसर्गकर्मच । स्व
 भावकर्मप्रतिहाययोन्यथास्वयम्चरे
 त्सोन्त्यजकर्मनर्मभागिति ॥ शू
 द्रस्यकर्म ॥ अस्यनिषिद्धानिकर्म्मा

प्रियया। शूद्राणांसमस्थाराजार्थवधनसञ्चय:। शुश्रूषा: कृतका र्यास्कृतसम्मानकर्मण:॥ अभ्यनुज्ञातराजस्यशूद्रस्यजगतीपते। अल्पान्तरगतस्यापिदशधर्मगतस्य च॥ आश्रमाविहिता: सर्वेवर्जयित्वानिराशिषमितिपाद्मे स्वर्गखण्ड:॥

शूद्रकृत्यम्। न॰ शूद्रकर्त्तव्यकर्म्मणि॥

शूद्रधर्म:। पुं॰ शूद्रस्यशास्त्रविहिताचारे॥ सर्ववर्णाश्रमशब्दे द्रष्टव्य:॥

शूद्रप्रिय:। पुं॰ पलाण्डौ॥ त्रि॰ तदिष्टद्रव्ये॥

शूद्रप्रेष्य:। पुं॰ शूद्रस्यपरिचारके ब्राह्मणादौ।

शूद्रयाजक:। पुं॰ शूद्रसम्बन्धियज्ञादावृत्विजि॥ शूद्रस्ययाजक:।

शूद्रासनम्। न॰ पट्टे। मकुलौ। शूद्राधिकारे॥ स्मृति॰ त्रि॰ शिष:॥

शूद्रशिष्य:। त्रि॰ शूद्राद्याकरणाद्यध्ययनकर्त्तरि।

शूद्रा। स्त्री॰ शूद्रजातौ। अन्यभार्यायामपिशूद्रजातीयायाम्॥ शूद्रीशूद्रस्यभार्यास्यात्॰ शूद्राचजातिरेवचेत्यमर:॥ शूद्राणामसत्पूर्वाजातिरितिटाप्॥

शूद्रान्नम्। न॰ शूद्रस्वामिकान्ने। यथा॥ शूद्रान्नेनतुभुक्तेनउदरस्थेनयोमृत:। सवैखरत्वमुष्ट्रत्वं शूद्रत्वञ्चाधिगच्छति॥

शूद्राभार्य्य:। पुं॰ शूद्रास्वामिनि॥ शूद्राभार्यायस्य स:॥

शूद्रार्त्ता। स्त्री॰ प्रियङ्गुवृक्षे॥

शूद्रावेदी पुं॰ सवर्णापरिणीयकृतशूद्राविवाहे॥ शूद्रांविन्दति॰परिणयति, विदेर्णिनि:॥ शूद्रावेदीपतत्यत्रेरुतथ्यतनयस्य च। शौनकस्यसुतोत्पत्त्यातदपत्यतयाभृगो:॥ अपि च॥ शूद्राशयनमारोप्यब्राह्मणीयात्यधोगतिम्। जनयित्वा सुतंतस्यांब्राह्मण्यादेवहीयते॥

शूद्री। स्त्री॰ शूद्रस्यभार्यायाम्। भिन्नजातीयायामशूद्रभार्यायाम्॥ शूद्रस्यस्त्री। पुं॰ योगादाख्यायामितिङीष्॥

शून:। ) वि॰ शोथिनि,स्फीते।
शूनवान्। )

वर्द्धिते। उत्श्वीयतेस्म। क्रमेणश्वयते:॰ क्तवतु। यजादित्वात्सम्प्रसारणे॰ पूर्वरूपेओदितश्चेतिनत्वेचहलइतिदीर्घ:॥

शूनाघ:। त्रि॰। उच्छूनाघे॥

शून्यम्। न आकाशे॥ बिन्दौ॥ त्रि॰ निर्जनेदेशादौ॥ तुच्छे। रिक्ते। सूना॰ रोता॰ इ॰ भा॰॥

अविद्यजीवनं शून्यं दिक्शून्या चेदबान्धवा । पुत्रहीनं गृहं शून्यं सर्वशून्या दरिद्रता ॥ खपुष्पादिवदत्यन्ताभावरूपे । यथा । मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः । एष वन्ध्यासुतो याति शशशृङ्गधनुर्द्धरः ॥ शुनेर्हितम् । शुनः सम्प्रसारणं वा च दीर्घत्वमिति यत् ॥

शून्यकम् । न॰ शून्यार्थे । त्रि॰ तुच्छे ॥ शून्यरिक्त इति यावादिषु पाठात् कन् । स्वार्थिको वा ॥

शून्यता । स्त्री॰ चित्तस्य दोषे । रागद्वेषादितीव्रवासनया चित्तस्य स्तब्धीभाविकषाये । स्तब्धतायाम् । ध्यानं चिन्ताहितानां तु शून्यताप्रवासतापकृत् ॥ शून्यस्य भावः तल् ।

शून्यतिथिः । स्त्री॰ तिथिविशेषे ॥ यथा । अष्टमी नवमी चैव पक्षयोरुभयोरपि । माधवे द्वादशी त्याज्या पक्षयोरुभयोस्तथा । ज्येष्ठे त्रयोदशी निन्द्या सिते कृष्णे चतुर्द्दशी । आषाढे कृष्णपक्षस्य षष्ठी शुक्ले च सप्तमी । द्वितीया च तृतीया च श्रावणे सितकृष्णयोः । प्रथमा च द्वितीया च नभस्ये मासि निन्दिता ॥ दशम्येकादशी निन्द्या मासीषे शुक्लकृष्णयोः । ऊर्ज्जे चतुर्द्दशी शुक्ला कृष्णपक्षे तु पञ्चमी ॥ सप्तमी चाष्टमी सौम्ये पक्षयोरुभयोरपि । पौषे पक्षद्वयोश्चैव चतुर्थी पञ्चमी तथा ॥ माघे तु पञ्चमी षष्ठी कृष्णे शुक्ले यथाक्रमम् । तृतीया च चतुर्थी च फाल्गुने सितकृष्णयोः । तिथयो मासशून्याख्या वित्तवंशविनाशिकाः । आसु श्राद्धं प्रकुर्वीत नैव मङ्गलमाचरेदिति वशिष्ठः ॥

शून्यनक्षत्रम् । न॰ शून्यभे ॥ यथा । अश्विनी रोहिणी चैव शून्यभे परिकीर्त्तिते । चित्रा स्वाती च वैशाखे॰ ज्येष्ठे विश्वे ज्यतारके ॥ भगवासवमाषाढे॰ श्रावणे हरिविश्वभे । नभस्ये वारुणान्त्यर्क्षं मजपादद्वयुग्ज्यपि ॥ कार्त्तिके पित्र्यवह्न्यृक्षे सौम्ये चित्रादितैवते । पौषे द्वास्रकरार्द्राः सार्पे मूलश्च विष्णुभम् ॥ तपस्येशक्रभरणी शून्यभान्याहुरग्रजाः । एषु यत्कृतं कर्म धनैः सह विनश्यति ॥

शून्यभम् । न॰ शून्यनक्षत्रे ॥

शून्यमध्यः । पुं॰ नले । पोटगले ॥

शून्यराशिः । पुं॰ मासविशेषगतराशिविशेषे । यथा । घटमत्स्यवृषायुग्म मेष कन्याः सवृश्चिकाः । तुलाचापकुलीराख्यामृगसंज्ञाश्च राशयः ॥ चैत्रादौ राशिशून्याख्या वित्तवंशविनाशदाः ॥

शून्यलग्नम् । न॰ दग्धलग्ने ॥ यथा । पञ्चादितस्त्वोजतिथौघटैर्गौ मृगेन्द्रनक्रौमिथुनाङ्गनेच । चापेन्दुभेकर्कहरीहयान्त्येगोन्त्यौच नेष्टेतिथिशून्यलग्ने॰ तस्यांतस्यां तिथौ॰ दुर्दुलग्नं नेष्टं॰ निषिद्धं ॥

शून्यवादी । पुं॰ माध्यमिके । सौगते ॥ अस्यमतंयथा । विज्ञानं क्षणिकंनात्माविद्युदभ्रनिमेषवत् । अनन्यस्यानुपलब्धत्वाच्छून्यंमाध्यमिकाजगुरिति । अस्यापवादो यथा । अभावोर्थैनभाविनस्रायते शून्यवादिमतस्यभावस्यसङ्गावोऽदकेननिवार्यते ॥ अपिच । शून्यस्यापिहिशून्यत्वंतस्माच्छिक्षितोच्यते । असाक्षिकंचेतत्तत्सिद्धंसाक्षिवत्स्यात्स्वयम्प्रभमिति ॥ शून्यंवदत्यवश्यम् । आवश्यकेणिनिः ॥

शून्यवृत्तिः । स्त्री॰ अभाववृत्तौ ॥

शून्यशून्यः । त्रि॰ शून्यप्रकारे । अनर्थप्राये ॥ प्रकारेगुणवचनस्येतिद्विर्भावः ॥

शून्या । स्त्री॰ मल्लयाम् ॥ तूलिकायाम् ॥ महाकण्टकिन्याम् । नागधूहर॰ नागफणाधूहर॰ इ॰ भा॰ ॥ वन्ध्यायाम् ॥

शून्यालयः । पुं॰ निर्जनमन्दिरे ॥

शूरः । पुं॰ भटे । वीरेयुद्धकर्मण्युत्साहवति ॥ यादवे । वसुदेवस्यपितरि ॥ सूर्ये ॥ शूरवति । शूरवीरविक्रान्तौ । पचाद्यच् ॥ यद्वा । शवति । शुः सौत्रोगत्यर्थः । शुसिचिमीनांदीर्घश्चेतिक्रन् ॥ सिंहे ॥ शूकरे ॥ कुक्कुरे ॥ चित्रकव्याघ्रे ॥ चित्रकवृक्षे ॥ साले ॥ लकुचे ॥ मसूरे ॥ रगणे ऽ । ऽ ॥

शूरकः । पुं॰ कोकिलाक्षे ॥

शूरणः । पुं॰ अर्शोघ्ने । कंदे ॥ अस्यगुणायथा । शूरणोदीपनोरूक्षः कषायः कण्डूकृत्कटुः । विष्टम्भीविशदोरुच्यः कफार्शः कृन्तनोलघुः ॥ विशेषादर्शसेपथ्यः प्लीहगुल्मविनाशनः । सर्वेषांकन्दशाकानांशूरणः श्रेष्ठउच्यते ॥ दद्रूणांरक्तपित्तानांकुष्ठानांन[illegible]हितः । सन्धानयोगसम्प्राप्तः शूरणोगुणकृत्परः ॥ शूयते । शूरीहिंसायाम् । बहुलमन्यत्रापीतियुच् । कर्त्तरिल्युड्वा ॥

शूरणोद्भवः । पुं॰ हरिद्वर्णपक्षिणि ॥

शूरदेवः । पुं॰ भाव्यर्हद्विशेषे ॥

शूरसेनः । पुं॰ चन्द्रवंशोयेनृपतिविशेषे ॥ शूराः सेनायांयस्य ॥ शूराणांसेनासायस्याः ॥ पुं॰ भूम्नि॰ मथुरादेशेषु ॥

शूर्प्प: । पुं॰ द्रोणद्वयात्मकपरिमाणे ॥ पुं॰ न॰ प्रस्फोटने । सूप॰ इ॰ भा॰ ॥ शूर्पयति । शूर्प्यतेऽनेनवा । शूर्पमाने । पचाद्यच् । पुंसीति घोवा ॥ यद्वा । शृणाति । शॄ॰ । सुशॄभ्यांनिच्चेतिप: । बाहुलकादुत्वम् । रपरत्वम् । हलिचेतिदीर्घ: ॥ न॰ शोणितभाजने ॥

शूर्प्पक: । पुं॰ कामदेवारातावसुरविशेषे ॥

शूर्प्पकर्ण: । पुं॰ गजे । नागे । गणेशे । विघ्नराजे ॥ शूर्पाविवकर्णौ यस्य ॥

शूर्प्पकाराति: । )
शूर्प्पकारि: । ) पुं॰ कामदेवे ।

शूर्प्पणखा । स्त्री॰ रावणभगिन्याम् ॥ शूर्प्पाण्ननखानियस्या: । पूर्वपदादिति णत्वम् । नखमुखात्संज्ञायामितिनङीष् । केवलयौगिकत्वे तु ङीष् ॥

शूर्प्पणखी । स्त्री॰ रावणस्वसरि ॥ शूर्पं शोणितभाजनम् । नखविदूषणाइतिधातु: । शूर्पेण॰ शोणितभाजनेनयज्ञादिक्रियानखयतिदूषयतीतिशूर्पणखी ॥ यद्वा । शूर्पाकाराणिनखानियस्या: साङीष् ॥

शूर्प्पपर्णी । स्त्री॰ मुद्गपर्ण्याम् ॥

शूर्प्पवात: । पुं॰ सूर्पवायौ । फुल्लफाले ॥

शूर्प्पश्रुति: । पुं॰ हस्तिनि ॥ इ॰ हा॰ ली ॥

शूर्प्पी । स्त्री॰ शूर्पणखायाम् ॥ गौरादित्वान्ङीष् ॥ क्षुद्रशूर्पे ॥

शूर्म्म: । पुं॰ )
शूर्म्मि: । स्त्री॰ }
शूर्म्मिका । स्त्री॰ } शूर्मिकायाम्
शूर्म्मी । )

। लौहप्रतिमायाम् ॥

शूल: । पुं॰ न॰ आयुधविशेषे वर्छा॰ भाला॰ इ॰ भा॰ प्र॰ । मृत्यौ ॥ केतने ॥ विष्कम्भादिषुनक्षत्रयोगे॰ तत्रजातस्यफलं यथा । भीतोदरिद्रोदयिताप्रियश्चशूलोद्भव: शूलङ्करस्वमन्यो: । विद्यामवाभ्यां रहितोयशूलीकरोतिलोकेनहितं कदाचित् ॥ मुतौच्यां ॥ वधहेतावय: कीलके ॥ व्यथायाम् ॥ विक्रेतव्ये ॥ यथा । अट्टशूलाजनपदा: शिवशूलाश्चतुष्पथा: । प्रमदा: केशशूलिन्योभविष्यन्तिकलौयुगे ॥ इतिमहाभारतेआदिपर्व ॥ रोगविशेषे ॥ अस्यदानादिकं भावप्रकाशे॰ शूलाधिकारेद्रष्टव्यम् ॥ राश्यङ्कोरादिमध्यान्तेपुनस्त्वन्त्यादिमध्यत: । मध्येचान्तेतथा दोचदोषे नाल्पातिशूलरुक् ॥ भुक्तेजीर्यतिजीर्णेऽन्ने जीर्णेभुक्तेचजीर्यति । जीर्णेजायतिभुक्ते चदोषे नाल्या

तिरुक् क्रमात् ॥ ‡ दोषैर्वातपित्तकफैः शूलरुक् शूलाख्योरोगः । रात्रिश्चाहश्चरात्र्यहनीतयोरादिमध्यान्तेषु भागेषु वातेनशूलरुक् नभवतिशमंप्राप्नोति । अल्पाभवति ईषत् प्रादुर्भवति । अतिभवतिअत्यन्तंभवति ॥ रात्र्यह्नोरन्त्यादिमध्यतःअंत्यादिमध्येषुपित्तेनशूलरुक् नअल्पाअत्यन्तश्चभवति ॥ तयोरेवमध्येचान्त्ये चादौ च कफेनशूलरोगोनाल्पातिभवतीत्यर्थः । । भुक्तइति । अन्नेभुक्ते अभ्यवहृतेसतिजीर्यतिपाकंगच्छति : जीर्णे पाकंगतेअन्ने इति सर्वत्रसम्बध्यते । तेनायमर्थः । भुक्ते अन्ने वातशूलरुक् नभवति शान्तोभवतीत्यर्थः । जीर्यतिअल्पाभवति । जीर्णे चातिभवति ॥ पित्तशूलरुक् । जीर्णेऽन्नेन । भुक्तेऽल्पा । जीर्यतिअतिभवतिश्लेष्मशूलरुक् जीर्णेऽन्नेन । जीर्यतिअल्पा । भुक्तेऽतिभवति ॥ शूलति । शूलरुजायाम् । इगुपधेतिकः ॥

शूलग्रन्थिः । स्त्री॰ मालादूर्वायाम् ॥

शूलघातनम् । न॰ मंडूरे ॥

शूलघ्नः । पुं॰ तुम्बुरुवृक्षे । तीक्ष्णफले ॥ त्रि॰ शूलघातके ॥

शूलद्विट् । पुं॰ हिङ्गुनि ॥

शूलधन्वा । पुं॰ शम्भौ । शिवे ॥

शूलधरः । पुं॰ शिवे ॥ त्रि॰ शूलधारिणि ॥

शूलधरा । स्त्री॰ दुर्गायाम् ॥

शूलधारी । पुं॰ शूलिनि ॥

शूलधारिणी स्त्री॰ दुर्गायाम् ॥

शूलधृक् । पुं॰ शिवे ॥ स्त्री॰ दुर्गायाम् ॥

शूलनाशनम् । न॰ सौवर्चललवणे ॥

शूलपत्री । स्त्री॰ गौडदेशेशूलीतिख्यातेतृणे ॥

शूलपाणिः । पुं॰ ईश्वरे । शिवे ॥ शूलंपाणौयस्यसः । प्रहरणार्थेभ्यः परेनिष्ठासप्तम्यौभवतः ॥

शूलप्रोतः । पुं॰ नरकविशेषे ॥

शूलभृत् । पुं॰ शङ्करे ॥

शूलशत्रुः । पुं॰ एरण्डवृक्षे ॥

शूलहन्त्री । स्त्री॰ यवान्याम् ॥

शूलहृत् । पुं॰ सूपधूपने । हिङ्गुनि ॥

शूला । स्त्री॰ पण्ययोषिति । दुष्टवधार्थकीलके ॥

शूलाकृतम् । त्रि॰ शूलविद्धपक्वमांसादौ । भटित्रे । शूल्ये । शूला॰ डु॰ भा॰ प्र॰ ॥ शूलेनकृतम् । शूलात्पाकइतिडाच् ॥

शूलिकः । पुं॰ शशके ॥ न॰ शूल्येअङ्गारपरिपाचितेमांसे ॥

शूली । पुं॰ शिवे । महेश्वरे ॥ यथा

। शूलं शूलीचक्रमादायचक्रीपाशं पाशीवज्रमादायवज्रीधावन्त्यग्रे पृष्ठतः पार्श्वतोवादुर्गांदुर्गावाहिनो रक्षणाय ॥ त्रि० शूलरोगयुक्ते ॥ यथा । वजं येहिदृलंशूलीकुष्ठीमांसं क्षयीस्त्रियमिति ॥ शूलमस्यास्ति । इनिः ॥

शूलिनः । पुं० भाण्डीरवृक्षे ॥

शूलिनी । स्त्री० दुर्गायाम् ॥

शूली । स्त्री० तृणप्रभेदे । शूलपल्याम् । धूम्रमूलिकायाम् ।

शूलोत्खा । स्त्री० सोमराज्याम् ॥

शूल्यम् । त्रि० शूलके । लोहशलाकयापक्वमांसे । शूलाकृते ॥ शूलेसंस्कृतंमांसम् । तत्रसंस्कृतमित्यर्थे०शूलोखायत् ॥ तत्पाकप्रकारोयथा । कालखण्डानिमांसानिग्रथितानिशलाकया । घृतंसलवणंदत्त्वा निर्धूमेदहनेपचेत् ॥ तत्तुशूल्यमितिप्रोक्तंपाककर्मविचक्षणैः । शूल्यंशल्यंसुधातुल्यंरुच्यंवह्निकरंलघु । कफवातहरंबल्यंकिञ्चित्पित्तकरंहितत् ॥ अन्योपि । अङ्गारकर्परे भ्याङ्गस्थूलयन्त्रे पुटेथवा । भर्जनंविविधंप्रोक्तंसूपकारविशारदैः ॥ जलेनसेचयेत्पूर्वंप्रोतंशूलेन्तरान्तरम् । दध्याद्रहिङ्गुलवणैर्लिप्तंसङ्गारपाचितम् ॥ तच्छूल्यन्तु सुधातुल्यंरुच्यंवह्निप्रदंलघु । तदेवाङ्गारतप्तन्तुप्रपक्वंबाणपातनम् ॥

शूल्यकम् । त्रि० शूलविद्धपक्वमांसे । भटित्रे । शूल्यमेव । कन् ॥

शृगालः । पुं० शिवायाम् । भूरिमाये । गोमायौ । मृगधूर्तके ॥ सियाल० इ० भा० ॥ सृजतिमायाम् । सृज० । बाहुलकात्कालन् । न्यङ्क्वादिः । पृषोदरादिः ॥ असृग्गालातिवा । पृषोदरादिः ॥ सृगं भिन्दिपालमसृलातिवा । पूर्ववत् ॥ तालव्यादिः । तालव्यापिदन्त्याश्वशृगालशूकराः । रसनापिच जिह्वायांशृगालःकलशीपिचेतिशब्दभेदात् ॥ दैत्यभेदे ॥ वासुदेवे ॥ खले ॥ निष्ठुरे ॥ भीरौ ॥

शृगालकण्टकः । पुं० सियालकांटा इ० भा० प्र० क्षुपे ॥

शृगालकोलिः । पुं० क्षुद्रबदर्याम् । गोपघोण्टायाम् । झडबेरी० इ० भा० ॥

शृगालघण्टी । स्त्री० कोकिलाक्षे ॥

शृगालजम्बूः । स्त्री० गोडिम्बे ॥ घोण्टाफले ॥

शृगालविन्ना । स्त्री० पृश्निपर्ण्याम् ॥

शृगालिका । स्त्री० शृगालयोपिति । शिवायाम् । लोमालिकायाम् । दीर्घजिह्वायाम् । लोमडी० इ० भा० प्र० ॥ त्रासात्पलायने । विद्रुतौ । भाण्ड० इ० भा० प्र० ॥

शृगाली । स्त्री॰ विद्रवे । डमरे । भीत्यापलायने ॥ कोकिलाचे ॥ विदार्याम् । सिराला॰ इ॰ भा॰ ॥

शृङ्खलः । त्रि॰ पुंस्कटीवस्त्रबन्धे । कौंधनी॰ इ॰ भा॰ प्र॰ । पुंस्कटीभूषणे । तगडी॰ इ॰ भा॰ प्र॰ ॥ निगडे । पुरुषप्रचारनिरोधके । लोहरज्जौ । वेडी॰ इ॰ भा॰ प्र॰ ॥ बन्धने ॥ शृङ्गे : खलति । खलसञ्चये । अच् । पृषोदरादिः ॥

शृङ्खलकः । पुं॰ दारुविकारशृङ्खलाप्रायबन्धनयुक्ते॰ करभे । करभास्तु : शृङ्खलकादारवैः पादबन्धने रित्यमरः । शृङ्खलंबन्धनमस्य । शृङ्खलमस्त्रबन्धनंकरभङ्गंतिकन् उष्ट्रे ॥

शृङ्खला । स्त्री॰ पुंस्कटीवस्त्रबन्धे ॥ निगडे ॥ कपाटादिबन्धयोग्यवस्तुनि । सङ्कल॰ सांकर॰ इ॰ भा॰ प्र॰ ॥ परम्परायाम् । परिपाट्याम् ॥ शृङ्गंप्राधान्यंखलति । खल॰ । अन्तर्भावितण्यर्थः । अच् । पृषोदरादिः ॥ शृङ्गात्प्राधान्यात् ॰ खलत्यनेन । पुंसीतिघः । भिदाद्यङ्वा । पृषोदरादिः ॥ कोकिलाक्षे ॥

शृङ्खली ।
शृङ्खलीका । स्त्री॰ कोकिलाक्षे ॥

शृङ्गः । पुं॰ कूर्चशीर्षकाख्ये । जीवकौषधौ । मुनिविशेषे ॥ न॰ प्रभुत्वे । शिखरे । कूटे । पर्वतोपरिभागे । चिह्ने । क्रीडाम्बुयन्त्रे ॥ विषाणे ॥ उत्कर्षे ॥ पर्वतसमभूभागे । सानौ ॥ महिषादिशृङ्गनिर्मितवाद्यविशेषे ॥ यथा । क्वचिद्गानायमनोद्वहज्जातप्रातः समुत्थायवयस्यवत्सपान् । प्रबोधयन्शृङ्गरवेणचारुणाविनिर्गतोवत्सपुरस्सरोहरिः ॥ शृणाति । शॄ॰ । शृणातेर्ह्रस्वश्चेति॰ गन्नुट्च ॥ कामोद्रेके ॥

शृङ्गकः । पुं॰ जीवकावृक्षे । विषविशेषे ॥ परीक्षाप्ययथा । यस्मिन्गोशृङ्गकेबद्धेदुग्धंभवतिलोहितम् । सशृङ्गकइतिप्रोक्तोद्रव्यतत्त्वविशारदैरिति ।

शृङ्गकन्दः । पुं॰ शृङ्गाटके ।।

शृङ्गजः । त्रि॰ शृङ्गजाते ॥ न॰ अगुरौ ॥

शृङ्गमूलः । पुं॰ शृङ्गाटके ॥

शृङ्गरोही । पुं॰ चम्पके ॥

शृङ्गला । स्त्री॰ अजशृङ्ग्याम् ॥

शृङ्गवान् । पुं॰ इलावृतस्योत्तरवर्त्तिसहस्रयोजनविस्तीर्णपूर्वतोदीर्घेकुरुवर्षस्यमर्यादागिरौ ॥

शृङ्गवेरम् । न॰ आर्द्रके । शुण्ठ्याम् ॥ शृङ्गमिववेरं शरीरमस्य ॥ रामभिल्लनिषादाधिपतेर्गुहस्यपुरे ॥

शृङ्गवेरकम् । न० आर्द्रके ॥
शृङ्गवेरपुरम् । न० तीर्थविशेषे ॥ च रामेगङ्गामुत्तीर्णः ॥
शृङ्गवेराभमूलकः । पुं० गुन्द्रायाम् । गोंदपटेरा० इ० भा० प्र० ॥
शृङ्गाटः । पुं० अम्बुकण्टके स्वादुकण्टके ॥ कामाख्यादेशस्थे पर्वतविशेषे । द्वीपवत्याः पूर्वतस्तु शृङ्गाटो नाम पर्वतः ॥ न० चतुष्पथे ॥
शृङ्गाटकः । पुं० वारिकण्टके ।
शृङ्गाटकम् । न० चतुष्पथे । वारिकण्टके । सिँघाड़ा० इ० प्र० जलजलताफले । गुणायथा । शृङ्गाटकं हिमंस्वादुगुरुहृष्यंकषायकम् । याहिशुक्रानिलश्लेष्मप्रदंपित्तास्रदाहनुत् । मांसशृङ्गाटके ॥ शृङ्गंप्राधान्यमटति । अट० । कर्मण्यण् । संज्ञायांकन् ॥
शृङ्गाटी । स्त्री० जीवन्त्याम् ॥
शृङ्गारः । पुं० सुरते । गजभूषणे । राजमण्डने । मण्डने । नाट्यरसे ॥ तल्लक्षणं यथा । पुंसः स्त्रियां स्त्रियाः पुंसि संयोगंप्रतियास्पृहास । शृङ्गारइतिख्यातोरतिक्रीडादिकारणम् । अपिच । शृङ्गंहिमन्मथोद्भेदस्तदागमनहेतुकः । उत्तमप्रकृतिप्रायोरसः शृङ्गारइष्यते० इति ॥ शृङ्गमप्राधान्यमियर्ति । ऋ० । कर्मण्यण् । यद्वा । शृङ्गारमलङ्कारमिति० शृणातीरारन् । नुम्० गुक्० ह्रस्वश्च ॥ न० लवङ्गे ॥ नागसम्भवे । चूर्णे ॥ आर्द्रके ॥
शृङ्गारकः । पुं० शृङ्गारे ॥ स्वार्थेकः । न० सिन्दूरे । त्रि० शृङ्गवति ॥ शृङ्गमस्त्यस्य । शृङ्गवन्दाभ्यामारकन् ॥
शृङ्गारभूषणम् । न० सिन्दूरे ।
शृङ्गारयोनिः । पुं० कामदेवे ॥
शृङ्गारितः । त्रि० मण्डिते । अलङ्कृते । सिंगारा० इ० भा० । शृङ्गारोमण्डनंसञ्जातमस्य । तारकादित्वादितच् ॥
शृङ्गारी । पुं० गजे । क्रिमे । पूगे । क्रमुके । पद्मरागे । माणिक्ये ॥ त्रि० सशृङ्गारे ॥ सुवेषे ॥ शृङ्गारोस्त्यस्मिन्नस्य । अतइनिठनौ इतीनिः ॥
शृङ्गिः । स्त्री० मत्स्यविशेषे । शृङ्गाभ् ॥
शृङ्गिकः । पुं० न० विषभेदे ॥
शृङ्गिका । स्त्री० प्रतिविषायाम् ॥
शृङ्गिणः । पुं० मेषे ॥ शृङ्गमस्त्यस्य । ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विनाशृङ्गादिनच्निपात्यते ॥
शृङ्गिणी । स्त्री० माहेय्याम् । सौरभेय्याम् । गवि ॥ शृङ्गमस्त्यस्याः । अतइनिः ॥

शृङ्गी । पुं० नागे । हस्तिनि । वृक्षे ॥ पर्वते ॥ वर्षपर्वतविशेषे ॥ ऋ षौकर्षितनये ॥ वटे ॥ प्रलयाम्भसि शृङ्गवतिमत्स्यविशेषस्वरूपे हरौ ॥ अतिशय : शृङ्गे स्यास्य । इनिः ॥ त्रि० शृङ्गयुक्ते ॥

शृङ्गी । स्त्री० विषायाम् । अतिविषायाम् ॥ कुण्डलादिभूषणानां स्वर्णे ॥ मीनविशेषे । मद्गुरस्त्रियाम् । सींगीमछली० इ० भा० प्र० ॥ अस्या गुणा यथा । शृङ्गी तु वातशमनी स्निग्धा श्लेष्मप्रकोपणी । रसे तिक्ता कषाया च लघ्वी रुच्या स्मृ-त बुधैरिति ॥ ऋषभौषधे । जीवकौषधे ॥ अजशृङ्ग्याम् । यथा अस्या गुणाः । शृङ्गी कषाया तिक्तोष्णा कफवातक्षयज्वरान् । श्वासोर्द्ध्ववाततृट्कासहिक्कारुचिवमीर्हरेत् ॥ शृणाति । शॄ० । शृणातेर्ह्रस्वश्चेति० गन्० ह्रस्वत्वं० नुडागमश्च । पुंयोगादिति० जातेरिति वा ङीष् । गौरादित्वाद्वा ॥

शृङ्गीकनकम् । न० कुण्डलाद्यलङ्कारसुवर्णे ॥ शृङ्गिणामौ० शृङ्गीकनति । कनीदीप्तौ । क्वुन् ।

शृणिः । पुं० स्त्री० अङ्कुशे । आंकस० इ० भा० प्र० ॥ शृणाति । शॄ० । शृणातेर्बाहुलकात् निरिति काश्चित् ॥ दन्त्यादिरेवसाधुः ॥

शृतः । त्रि० क्षीरहविषोः पाके ॥ श्रायतेस्म । श्रापाके । शृतं पाके० इति साधुः । अनेन श्रातिश्रायत्यो रद्रादिभ्वाद्योरकर्मकत्वात्कर्तरिक्ते शृभावो निपात्यते० क्षीरहविषोः पाके । यथा० शृतं क्षीरं० स्वयमेव विक्लिन्नं पक्वं वेत्यर्थः । शृतं हविः स्वयमेव ॥ क्षीराज्यपयसां पाके ॥ क्वथिते ॥ इति रत्नमालाशब्दचन्द्रिकाच ॥ यथा । जलजलजजलवाहवैगाधिश्वौषधशिशिरैः शिशिरं जलं शृतं यदिति सोलिम्बराजः ॥

शृदरः । पुं० भुजङ्गमे ॥ शृणाति । शॄ० । कृदरादयश्चेत्यदरप्रत्ययान्तो निपातितः ॥

शृधुः । पुं० गुदे । शर्द्धते । शृधु गव्द कुत्सायाम् । नृतिशृध्योः कुः ॥

शेखरः । पुं० आपीडे । शिखाविन्यस्तमालायाम् ॥ शिरोभूषणे ॥ न० लवङ्गे ॥ शिग्रुमूले ॥ शिङ्खति । शिखिगतौ । बाहुलकादरः । आगमशास्त्रस्यानित्यत्वान्ननुम् ॥ पक्षमात्रिकाख्यपक्षमेप्रभेदे० । ६०।०६

शेखरितः । त्रि० मुकुटवत्कृते ॥

शेखरी । स्त्री० वन्दायाम् ॥

शेपः । पुं० शिश्ने । शेफसि ॥ शेते रेतः पाते । शीङ्स्वप्ने । बाहुलकात् पप्रत्ययः ॥

शेपः । न० शिश्ने ॥ शेतेरेतःपाते ।

बङ्शीङ्भ्यां रूपसामर्गमौ : पुट्चेत्यमुन् ॥

शेपाल : । पुं॰ न॰ शैवाले ॥ इ॰ श॰ र॰ ली ॥

शेफ : । पुं॰ मेढ्रे । शिश्ने ॥ शेते रेत : पातानन्तरम् । बाहुलकात् फप्रत्यय : ॥

शेफ : । पुं॰ मेढ्रे । शिश्ने ॥ शेतेरेत : पाते । शीङ्॰ । बङ्शीङ्भ्यां रूपसर्गागमौ : फुट्चेत्यसुन् । चत्रपवर्गद्वितीयोऽप्यागमे ॥

शेफसी । स्त्री॰ शिश्ने ।

शेफालि : । स्त्री॰ शेफालिकायाम् ॥

शेफालिका । स्त्री॰ सुवहायाम् । निर्गुण्डाम् ॥ नीलिकायाम् । हारशृङ्गार॰ पारिजाता॰ इ॰ भा॰ प्र॰ पुष्पवृन्दे । शितलो॰ गौ॰ दे॰ भा॰ प्र॰ ॥ चत्वारि शेफालिकामात्रे । शियलीतिख्यातनीलपुष्पायांशेफालिकायामिति केचित् । शेफालिकादिद्वयंशेफालिकामात्रे॰ निर्गुण्ड्यादिद्वयं नीलपुष्पशेफालिकायामितिकेचित् । न्यवारीतिख्यातेपुष्पविशेषे॰ इतिचान्ये ॥ शब्दरत्नावल्युक्ता : पर्यायास्तु । शेफाली॰ मल्लिका॰ रजनीहासा॰ निशिपुष्पिका॰ सा शुक्लाचेत्॰ श्वेतसुरसा॰ भूतवेशीति ॥ राजनिर्घण्टोक्तास्तु । शुक्लाङ्गी शीतमञ्जरी॰ विजया॰ वातारि:॰ भूतकेशीति ॥ शेतेइति शे : ॰ शीङोविच् । शयंफालयति । अफलाविशरणे । अण् । स्वार्थेकन्कृत्वा ॥ शेफालिकाया : पुष्पम् ॥ शेफालिका । पुष्पमूलेषुबहुलमिति॰ चनुदात्तादेरञोऽचश्चलुप् । लुपियुक्तवत् ॥ शेरतेशेफाअलयोऽस्याम् । वा । ङीष् । सुर्यकन् ॥

शेफाली । स्त्री॰ निर्गुण्डाम् । शेफालिकायाम् । न्यवारीतिख्यातेपुष्पवृक्षे । हारशृङ्गार॰ इ॰ च॰ भा॰ प्र॰ । शेरतेशेफाअलयोऽस्याम् । वाङीष् ॥ नीलसिन्दुवारे । संभालू॰ इ॰ भा॰ ॥

शेमुषी । स्त्री॰ बुद्धौ । प्रज्ञायाम् । मतौ ॥ शेतेइतिशे : । शीङोविच् । शे :॰ मोह :॰ तंमुष्णातीति॰ शेमुषी । मुषस्तेये । मूलविभुजादित्वात्क : । गौरादित्वात्ङीष् ॥

शेयाल : । पुं॰ जलनील्याम् । शैवले । जलेशेते॰ तिष्ठति । शीङो वालन् ॥ बाहुलकादत्यय : ॥

शेलु : । पुं॰ श्लेष्मातके । बहुवारके । लसोडा इ॰ भा॰ प्र॰ ॥ शिलति । शिल॰ । बाहुलकादु : ॥

शैव : । पुं॰ षण्ढे ॥ शिश्ने ॥ चि॰ उन्नते ॥ शेते । इणशीभ्यां

वर्त्तिनि० शीङ्शीवन् ॥ शेतेऽस्यर्थम् । शेवयहू इति साधुः ॥ सुखे ॥

शेवधिः । पुं० सामान्यनिधौ । शेवल्याणे० सेविवा० अवधिः । तत्पुरुषत्वादलुक् ॥ यथा । शेवेऽमनेनशेवंसुखम् । दूणशीभ्यांवन् । शेवंधीयतेऽस्मिन् । कर्मण्यधिकरणेचेतिकिः ॥

शेवलम् । न० शैवाले ॥

शेवालम् । न० शैवले ॥ जलेशेतेतिष्ठति । शीङ्धुकलकवलञ्वालनद्दतिवालन् ॥

शेवालिनी । स्त्री० नद्याम् ॥

शेवाली । स्त्री० आकाशमांस्याम् ॥

शेषः । पुं० भगवतोद्वितीयायांमूर्त्तौ ॥ यथा । एकाभगवतोमूर्त्तिर्ज्ञानरूपाशिवामला । वासुदेवाभिधानासागुणातीतासुनिष्कला ॥ द्वितीयाकालसञ्ज्ञाऽन्यातामसीशेषसंज्ञिता । निहन्तिसकलांश्चान्तेवैष्णवीपरमातनुरितिकौर्मे ४८ऽध्यायः ॥ सङ्कर्षणे । सीरपाणौ । बलदेवे ॥ वधे ॥ अनन्ते । नागजातिराजे । फणासहस्रयुते ॥ शिष्यते । शिष्लृविशेषणे० शिषअसर्वोपयोगेवा । घञ् ॥ यथा । शेषइतिमीमांसकाः ॥ उद्धृते ॥ पुं० न० उपयुक्तेतरे ॥ परमात्विकश्यपस्तुमप्रभेदे० ॥ ८० ॥ त्रि० अन्ते ॥ सूक्तेतरवस्तुनि ॥ अवशिष्टे ॥ यथा । अत्यादरपरोविद्वानीहमानः स्थिरांश्रियम् । अग्नेः शेषमृणस्यापिशत्रोः शेषंनशेषयेत् ॥ अपिच । कृत्वाशेषमग्निशेषंचऋणशेषंतथैवच । पुनःपुनःप्रवर्द्धन्तेतस्माच्छेषंनशेषयेदितिगरुडपु० १९६ अ० ॥ शिष्यते परिशिष्यते । शिषिघञ् ॥

शेषत्वम् । न० उपकारित्वे ॥ पारार्थ्ये । परोद्देश्यप्रवृत्तिकत्वे ॥ यथा । शेषत्वमुपकारित्वंद्रव्यादावाहबादरिः । पारार्थ्यंशेषतातच्चसर्वेष्वस्तीतिजैमिनिरित्यधिकरणमालायांमाधवाचार्यः ॥

शेषभूतः । त्रि० अङ्गभूते ॥

शेषरात्रिः । स्त्री० रात्रिशेषे । उच्चन्द्रे । अपररात्रे ॥

शेषवत् । न० अनीतानुमाने ॥ शेषएवविषयतयाऽस्यास्त्यनुमानस्यास्य० तच्छेषवत् ॥

शेषा । स्त्री० प्रसादेनस्वमिमाल्यार्पणे । निर्माल्यदाने ॥ वर्णवृत्तान्तरे ॥ यथा । छन्दोविद्भिः प्रोक्ताषड्विंशैरेषा । सर्वैवर्णैर्यस्यांदीर्घाशाम्याच्छेषा ॥ यथा । किंवाकुर्यांकान्ता : हंहोमेवायातः व्योमाभे. [illegible] ॥

शैवाबद्या । स्त्री॰ वार्द्धक्ये ॥
शैषित: । त्रि॰ उवरिते ॥
शैक्ष: । पुं॰ प्रथमारब्धवेदे । प्राथम कल्पिके ॥ शिक्षामधीते । तद्वेत्ति तद्धत्यण् ॥ शिक्षायाअयम्॰ तत्र भवोवा ॥ यद्वा । शिक्षांलभते । शैक्षवृत्यण् ॥ यद्वा । शिक्षाशील मस्य । छत्रादिभ्योण् ॥
शैख: । पुं॰ सङ्कीर्णजातिविशेषे । । भूर्जकण्टके ॥
शैखरिक: । पुं॰ अपामार्गे ॥ शिख रेप्रायेणभवति । अध्यात्मादित्वाट्ठञ् ॥
शैखरेय: । पुं॰ अपामार्गे ॥
शैत्यम् । न॰ शीतत्वे ॥ भावेष्यञ् । शैत्यं स्थितत्स्वप्रकृतिर्जलस्य ॥
शैथिल्यम् । न॰ शिथिलतायाम् ॥ अनुद्यमे ॥ भावेष्यञ् ॥
शैनेय: । पुं॰ शिनेर्नप्तरि । सात्यकौ । श्रीकृष्णसारथौ ॥ शिनेर्गोत्रापत्य म् । इतश्चानिञइतिढक् ॥
शैर्षच्छेदिक: । त्रि॰ शीर्षच्छेद्ये ॥ शिरश्छेदंनित्यमर्हति । शीर्षच्छेदा यच्चेतिठञ्॰ प्रत्यययोगेनशिरस: शीर्षभावश्च ॥
शैल: । पुं॰ महीध्रे । अचले । शि लोच्चये ॥ प्रचुरा: शिला: सन्त्यत्र । ज्योत्स्नादित्वादण् ॥ न॰ शैलेये ॥ तार्क्ष्यशैले । रसाञ्जने ॥ शिला जतुनि ॥
शैलकम् । न॰ शैलजे ॥
शैलगन्धम् । न॰ शाबरचन्दने ।
शैलगर्भा । स्त्री॰ शिलावल्कायाम् ॥
शैलगर्भाह्वा । स्त्री॰ शिलावल्कायाम् ॥ इ॰ रा॰ नि॰ गट: ॥
शैलजम् । न॰ शैलेये । सुगन्धिद्रव्य विशेषे ॥ शैलेजातम् । जनौ॰ । सप्तम्यांजनेर्ड: ॥ त्रि॰ पर्वतोत्प न्नवस्तुनि ॥
शैलजा । स्त्री॰ गिरिजायाम् । पार्व त्याम् ॥ शैलाज्जाता । जनौ॰ । पञ्चम्यामितिड: ॥ गजपिप्पल्याम् ॥ सैंहल्याम् ॥
शैलधन्वा । पुं॰ शम्भौ । शिवे । इ॰ त्रि॰ शेष: ॥
शैलधर: । पुं॰ गिरिधरे । श्रीकृष्णे ॥ इतिधनञ्जय: ॥
शैलधातुजम् । न॰ शिलाजतुनि ॥
शैलनिर्यास: । पुं॰ अश्मजे । शिला जतुनि ॥ शैलस्यनिर्यासइव ॥
शैलपत्र: । पुं॰ विल्ववृक्षे ॥
शैलपीलु: । पुं॰ अक्षोटे ॥
शैलभित्ति: । स्त्री॰ टङ्के ॥
शैलराज: । पुं॰ शैलपर्वते ॥ हि मालये ॥ शैलानांराजा । टच् ॥
शैलराजतनया । स्त्री॰ पार्वत्या म् ॥
शैलराजसुता । स्त्री॰ पार्वत्याम् ।

दुर्गायाम् ॥ यथा । अरूपापर भावत्वाद्दुरूपाक्रियात्मिका । आताशैलेन्द्रशैहिसाशैलराजसुतात-त : ॥ इतिदेवीपुराणे ४५अ० ॥

शैलवल्कला । स्त्री० शिलावल्कलायाम् ॥

शैलबीज : । पुं० भल्लातकवृक्षे ॥

शैलशिविरम् । न० वार्द्धौ । धरणीभृते । समुद्रे ॥

शैलसुता । स्त्री० अम्बिकायाम् । पार्वत्याम् ॥ ज्योतिष्मत्याम् ॥

शैलाख्यम् । न० शैलजे ॥

शैलाग्रम् । न० शिखरे । शैलशृङ्गे ॥

शैलाजम् । न० शैलेये ॥ इ० रा० नट : ॥

शैलाट : । पुं० देवले ॥ सिंहे ॥ शुक्लकाचे । किराते ॥ इ० मे० कर : ॥

शैलादि : । पुं० नन्दिनि । शिवगणविशेषे ॥

शैलापगा । स्त्री० क्षुद्रनद्याम् ॥

शैलाली । पुं० नटे ॥ शिलालिनाप्रोक्तंनटसूत्रमधीते । पाराशर्यशिलालिभ्यांभिक्षुनटसूत्रयोरितिणिनि : ॥

शैलिक्य : । पुं० सर्वलिङ्गिनि ॥ शिलिकस्यभाव : कर्मवाष्यञ् ॥

शैली । स्त्री० सङ्केते ॥ प्रज्ञप्ति : परिभाषाशैलीसङ्केतसमयाकारा-र्यतिर्विचकासुत्रोष : ॥ समवधानपूर्विकायांप्रवृत्तौ ॥ यथाब्राह्मणै: सहब्राह्मणाभोजयन्तिचर्षिभि : सहचर्षियाइति ॥ शीलेभवा । अण् ङीप् ॥

शैलूष : । पुं० बिल्वे । मालूरवृक्षे ॥ नटे ॥ शिलूषस्यापत्यम् । अण् । शैलूषइवेति० नानरूपत्वात् ॥

शैलूषिक: । पुं० नटवृत्त्यन्वेषिणि ॥

शैलूषिकी । स्त्री० शैलूषिकजातिस्त्रियाम् ॥

शैलेन्द्र : । पुं० हिमाचले ॥

शैलेन्द्रस्थ : । पुं० भूर्जवृक्षे ॥

शैलेय : । पुं० मधुपे । भ्रमरे ॥ सिंहे. न० तालपर्ण्याम् । सैन्धवे । शैलजे शैलजातगन्धद्रव्ये । छरीला० इ० भा० प्र० ॥ तत्पर्यायादयोयथा । शैलेयन्तुशिलापुष्पंवृद्धकालानुसार्यकम् ॥ शैलेयंशीतलं हृद्यंकफपित्तहरंलघु । कण्डूकुष्ठाश्मरीदाहविषहृद्गुदरक्तहृदिति ॥ त्रि० शिलातुल्ये ॥ शिलायामुत्पन्ने ॥ शिलायांभव : । नद्यादिभ्यस्येतिढक् ॥ शिलेव । शिलायाइतियोगविभागेनढञ्वा। ङीपिशैलेयी ॥

शैलेयी । स्त्री० पार्वत्याम् ॥

शैलोदा । स्त्री॰ निम्नगान्तरे ॥ शैलोद्भवा । स्त्री॰ क्षुद्रपाषाणभेदायाम् ॥ अम्बिकायाम् ॥
शैव : । त्रि॰ शिवोपासके । और्द्ध्वदैहिके ॥ न॰ शिवप्रोक्तमार्गे ॥ यथा । नपादुकापरोमन्त्रो नदेव : श्रीगुरो : पर : । नहिशैवात्परोमार्गोनपुण्यं कुलपूजनात् ॥ आचारविशेषे ॥ यथा । अष्टाङ्गयोगसंयुक्तोयत्रोहंशैवविधानत : याववत्यानंसमाधिस्थताववच्छैव : प्रचक्ष्यते ॥ विवाहविशेषे ॥ यथा । शैवोविवाहोद्विविध : कुलचक्रे विधीयते । चक्रस्यनियमेनैकोद्वितीयोजीवनावधि : ॥ अपिच । परिणीतानरमिताकन्याभाविधवाभवेत् ॥ साप्युद्वाह्यापुन : पित्राशैवधर्म्मेष्वयं विधि : ॥ शिवस्यायम् । तस्येदमित्यण् ॥ शिवे ॥ स्वार्थेऽण् ॥ वसुके । बस्तमूत्रे ॥ धत्तूरे ॥ देशविशेषे ॥ शिवीनांविषयोदेश : । विषयोदेशइत्यण् ॥ न॰ शिवपुराणे ॥ शैवालि ॥ त्रि॰ शिवसंबन्धिनि ॥
शैवल : पुं॰ शैवाले ॥ न॰ पद्मकाष्ठे ॥ जलेशेतेतिष्ठति । शीङो वृकल्लुकल्वलच्वालन्ष्ठलिषलच् ॥
शैवावधूत : । पुं॰ अवधूतविशेषे ॥ सचोक्त : श्रीमहानिर्वाणेमहाशिवेन । पूर्णाभिषेकविधिनासंस्कृतायेचमानवा : । शैवावधूतास्तेज्ञेया : पूजनीया : कुलार्चिते ॥
शैवलिनी । स्त्री॰ तरङ्गिण्याम् ॥ तटिन्याम् । नद्याम् ॥ शैवलमस्त्यस्याम् । अतइनिठनावितीनि : । ऋन्नेभ्योङीप् ॥
शैवालम् । न॰ जलनील्याम् । शैवाले ॥ शैवालंतुवरंतिक्तंमधुरंशीतलंलघु । स्निग्धंदाहतृषापित्तरक्तज्वरहरंपरम् ॥
शैवालिनी । स्त्री॰ नद्याम् ॥
शैवी । स्त्री॰ शैवविद्याहीनोद्दाहितायाम् ॥
शैव्य : । पुं॰ श्रीकृष्णरथस्याश्वविशेषे ॥ यथा । तुरगा : शैव्यसुग्रीवमेघपुष्पवलाहका : ॥ पाण्डवानांसेनापतिविशेषे ॥
शैशवम् । न॰ शिशुत्वे । बाल्ये ॥ शिशोर्भाव : कर्म वा । हृगन्तलघुपूर्वादित्यण् ॥
शैशिर : । पुं॰ श्यामचटके ॥ दन्तरोगविशेषे ॥ त्रि॰ शिशिरसम्बन्धिनि ॥
शैशुमारम् । न॰ शिशुमाराकारे ज्योतिश्चक्रे ॥
शोक : । पुं॰ मन्यौ । शुचि । व्या

कुलतायाम् । इष्टवियोगानुचिन्तने । इष्टवियोगनिमित्ते मनसः सन्तापे । इष्टवियोगेनलाभानर्हं-ताज्ञाने ॥ सदानुचितएव० यतः । शोचमानास्तुसन्तेष्टाबान्धवाः सुहृदस्तथा । पातयन्तिगतंस्वर्गाद् श्रुपातेनराघव ॥ भूरिद्युम्नोगतः स्वर्गंपुत्त्रेणपतितः पुनः । शोचितोवन्धुवर्गेणमृतस्तेनपरित्यज ॥ इतिवह्निपुराणे रामंप्रतिवशिष्ठो-क्तिः ॥ विवेकिनांचित्ते तुनास्त्येवशोकावकाशः । यतः । पान्थानामिवंवर्त्मनि० क्षितिरुहांनद्यामिव० भ्राम्यतां० मेघानामिवपुष्करे० जलनिधौसांयात्रिकाणामिव । संयोगः पितृमातृबन्धुतनयभ्रातृप्रियाणांयदासिद्धो० दूरवियोगएव० विदुषांशोकोदयः कस्तदा ॥ शोचनम् । शुचशोके । घञ् ॥ संसारे ॥ स्वसंसृष्टंपुरुषंशोचयतीतिशोकस्तमोमूलः संसारः । उक्तञ्चश्रीविद्यारण्यगुरुभिः । शोकंतरतिचात्मवित्‌इति ॥

**शोकनाशनः** । पुं० अशोकवृक्षे ॥ शोकंनाशयति । णशअदर्शने । नन्द्यादित्वाल्ल्युः ॥ परमात्मनि ॥ स्वाभेदसाक्षात्कारेणसंसारिणांसंसारशोकंनाशयति ॥

**शोकहारी** । पुं० वनवर्वरिकायाम् ॥

**शोकातिगः** । त्रि० मानसैर्दुःखैर्वर्जिते ॥ शोकमतीत्यगच्छतीतितथा ॥

**शोकापनुदः** । पुं० पुत्रे ॥ शोकमपनुदति । णुदप्रेरणे । तुन्दशोकयोः परिमृजापनुदोरितिसुखस्याहरणेकः ॥

**शोकारिः** । पुं० कदम्बवृक्षे ॥

**शोकार्त्तः** । त्रि० शोकाकुले ॥

**शोचनम्** । न० शुचि । शोके ॥ त्रि० शोकशीले ॥ शोचति० तच्छीलः । शुचशोके । जुचङ्‌क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः । इतियुच् ॥

**शोचना** । स्त्री० शोकोत्पादनायाम् ॥

**शोचनीयः** । त्रि० शोच्ये । शोचितुंयोग्ये ॥ यथा । बाल्यभावेनपठन्तिविद्यांयेयौवनस्थाधनार्जनदाराः । तेशोचनीयाइहजीवलोकेमनुष्यरूपेणमृगाश्चरन्तिइति ॥

**शोचिष्केशः** । पुं० अग्नौ ॥ शोचींषिज्वालाः केशाइवास्य । नित्यंसमासेऽनुत्तरपदस्थस्येतिषत्वम् । चित्रकवृक्षे ॥

**शोचिः** । न० रोचिषि । प्रभायाम् ॥ शुच्यति० पूतीभवत्यनेन । ईशुचिरपूतीभावे । अर्चिशुचिहुसृपिछादिछर्दिभ्यः इसिः ॥

**शोच्यः** । त्रि० तपस्विनि । सापराधे ॥

अनुक्रम्य ॥

शोच्यकः । त्रि॰ क्षुद्रे ॥

शोठः । त्रि॰ मूर्खे ॥ अलसे ॥ धूर्ते । नीचे ॥ पापरते ॥

शोणः । पुं॰ कृशानौ । अग्नौ श्योनाके ॥ लोहिताश्वे ॥ नदविशेषे । हिरण्यबाहौ ॥ योयममरकण्टकदेशात् पाटलिपुत्रे गङ्गायां मिलितः ॥ समुद्रविशेषे ॥ रक्तेक्षौ ॥ लवणाम्बुधेः पारस्थे रक्तजलेऽगाधेशीघ्रगामिनिग्रहपाश्वर्वर्त्तिनि नदविशेषे ॥ अनुत्कटरक्ते । कोकनदवर्णे ॥ श्योनाकप्रभेदे ॥ न॰ सिन्दूरे ॥ रुधिरे ॥ त्रि॰ कोकनदच्छाये । कोकनदवर्णवति ॥ शोणति । शोणृ वर्णगत्योः । पचाद्यच् । रक्तवर्णे ॥

शोणकः । पुं॰ श्योनाकतरौ । सोनापाठा॰ इ॰ भा॰ प्र॰ ॥ स्वार्थे कः ॥

शोणज्योतीरथीसङ्गमः । पुं॰ तीर्थविशेषे ॥

शोणझिण्टिका । स्त्री॰ रक्तसैरेये ॥

शोणझिण्टी । स्त्री॰ कुरवके ॥ कण्टकिन्याम् ॥

शोणपत्रः । पुं॰ रक्तपुनर्नवायाम् ॥

शोणपद्मम् । न॰ ) रक्तपद्मे ॥
शोणपद्मकम् । ) 

शोणपुष्पः । पुं॰ ) कन्दे ॥
शोणपुष्पकः । )

कोविदारे ॥ शोणानि॰ तद्वर्णानि पुष्पाण्यस्य ॥

शोणपुष्पी । स्त्री॰ सिन्दूरपुष्प्याम् ॥

शोणप्रभवः । पुं॰ तीर्थविशेषे ॥

शोणरत्नम् । न॰ पद्मरागमणौ ॥ माणिक्ये ॥ शोणञ्च तद्रत्नञ्च ।

शोणा । स्त्री॰ शोणवर्णयुक्तायाम् । शोण्याम् ॥ शोणात् प्राचामित्यन्येषामतेटाप् ॥

शोणाकः । पुं॰ श्योनाकवृक्षे । शुकनासे ॥

शोणितम् । न॰ रुधिरे । रक्ते ॥ कुङ्कुमे ॥ शोणितरसम् । शोणृ॰ । गत्यर्थेतिक्तः ॥

शोणितचन्दनम् । न॰ रक्तचन्दने ॥

शोणितपुरम् । न॰ बाणासुरपुरे सराइण॰ इ॰ भा॰ प्र॰ । शोणितसंज्ञकं पुरम् ॥

शोणितह्वम् । न॰ कुङ्कुमे ॥

शोणितोत्पलम् । न॰ रक्तोत्पले ॥

शोणी । स्त्री॰ रक्तायाम् । रक्तोत्पलवर्णायाम् स्त्रियाम् । शोणात् प्राचामिति वाङीप् ॥

शोणोपलः । पुं॰ माणिक्ये ॥

शोथः । पुं॰ शोफे । श्वयथौ, त्वग्विवर्द्धने ॥ श्वयति । श्वगतौ । बाहुलकात् थः । ऊठ्वोरित्यूठ् ।

बाहुल : । संज्ञापूर्वकत्वादेर्व्यत्युठ् खितिनवृद्धि : यद्वा । श्यति । शुगतौ । पूर्ववत् • थ : । । उर्ध्वगामीनरंध्रद्भ्यामधोगामीमुखात स्रियम । उभयोर्वस्तिसञ्चात : शोथि इत्तिनसंभय : ॥

शोथक : । पुं • शोथे ॥

शोथकृत् । त्रि • शोफकारिणि ।

शोथघ्न : । त्रि • शोथनाशके ॥

शोथघ्नी । स्त्री • रक्तपुनर्नवायाम् ॥ पुनर्नवायाम् ॥ शोथं हन्ति । श्र थरतुष्यकल्कश्चिपुर्वे तिटक् । ङीप् ॥ शालपर्ण्याम् ॥

शोथजित् । पुं • भल्लातके ॥ पुनर्नवायाम् ॥ त्रि • शोफहारके ।

शोथहृत् । पुं • भल्लातके ॥

शोध : । पुं • शोधने ॥

शोधक : । त्रि • शुद्धिकारके ॥ न • कतकृते ।

शोधन : । पुं • निम्बे ॥ निम्बूके ॥ न • शुद्धौ । शौचे ॥ मलापनयने ॥ शिक्षायाम् ॥ कासीसे ॥ धातुनिर्दोषीकरणे ॥ श्रमादिपरिष्करणे ॥ लिखितपत्रादे : प्रमाणीकरणे ॥ विरुद्धलिखितस्य शुद्धोकरणे । ऋणस्य हरणे । त्रि • शुद्धिसाधने । शुद्धिकारके ।

शोधनी । स्त्री • सम्मार्जन्याम् । सीधनी • उ • भा • ॥ शोध्यतेऽनया । शुधशौचे । करणे ल्युट् । ङीप् ॥ ताम्रवल्याम् ॥ नील्याम् ॥

शोधनीय : । त्रि • शोधितव्ये । शोध्ये ॥

शोधनीबीजम् । न • जयपाले । मलद्राविणि ॥

शोधित : । त्रि • सम्मृष्टे । मक्षिकाद्यपनयनेन कृतशोधनेव्यञ्जनादौ ॥ यथा । व्यञ्जने केशकीटादिशुद्धे सम्मृष्टशोधितेवुतिशब्दरत्नावली । अपनीतमले । निर्णिक्ते । मृष्टे । धौते ॥ शोध्यतेस्म । शुध • । क्त : कर्त्तरि क्त : ॥

शोफ : । पुं • शोथे ॥ श्वयति । श्व • । बाहुलकात् फ : । श्वोरित्यूठ् । बाहुल : । संज्ञापूर्वकत्वादेर्व्यत्युठ् खितिनवृद्धि : ॥ यद्वाश्यति । शु • । पूर्ववत् फ : ।

शोफकृत् । त्रि • शोथकृति ॥

शोफघ्नी । स्त्री • रक्तपुनर्नवायाम् । शालपर्ण्याम् ॥

शोफनाशन : । पुं • नीलवृक्षे ॥ त्रि • शोथनाशके ॥

शोफहृत् । पुं • भल्लातके ॥ त्रि • शोथहारके ॥

शोभन : । पुं • यहे ॥ विष्कम्भादिद्विषु पञ्चमेयोगे ॥ तत्रजातस्य फलं यथा । यात्शोभन : शोभनयोगजन्मादक्षो विपक्षप्रतिलब्धवित्त : ।

सदुत्तर स्वारुवपुः सुधीरम. सम्मा-
नयुक्तामनुज : प्रवीण : ॥ शोभ
नकृतिवत्सरे ॥ तत्फलंयथा । सु
भिक्षं क्षेमसारोग्यं द्दष्टागोत्रा क्षमाः
प्रिये । सुस्थिता: शोभनेऽर्षेप्रजाः
सर्वा : सुशोभने ॥ ३७ ॥ न०
वारिजे । पद्मे ॥ त्रि० सुन्दरे
। सुषमे । मनो .. ..ाभते
। शुभदीप्तौ । चनुदात्त तद्यातयु
च् । शोभयति । नन्द्यादित्वा
.ी ।
शोभनक : । पुं० शिग्रौ ।
शोभकृत् । पुं० शोभनेऽर्षे ॥ त्रि०
शोभनकारके ॥
शोभना । स्त्री० गोरोचनायाम् ।
हरिद्रायाम् ॥ इ० रा० वट ।
शोभनीय : । त्रि० शोभितव्ये ॥
शोभमान : । त्रि० विराजमाने
॥ यथा । मणि : शाणोल्लीढ •
•समरविजयीहेतिदलितो• मदक्षी
णोनाग : शरदिसरित : श्यानपु
लिना : । कलाशेषश्चन्द्र : सुरत
मृदिताबालवनितातनिम्ना शोभन्ते
गलितविभवाश्चार्थिषु नरा: ॥
शोभा । स्त्री० कान्तौ । द्युतौ ॥
चस्थालक्षणंयथा । साशोभारूप
भोगाद्यैर्यत्स्यादङ्गविभूषणम् ।
शोभैवकान्तिराख्याताम्मथाप्या-
यमोज्ज्वलेति । इच्छायाम् ॥
गोपीविशेषे ॥ गोरोचनायाम् ॥
हरिद्रायाम् ॥ कृतिच्छन्द : २०
प्रभेदे ॥ यथा । रसाश्वाश्वै: शो
भानयुगलजठरामेघविस्फूर्जिता-
चेत् ॥ यथा । सपीयूषोन्मील
त्सरसिजयुगलामध्यनम्राफलाभ्या
मृतयोरूर्वराजत्तरलकिसलयाश्लि
ष्टसुस्निग्धशाखा । लसन्मुक्तार
क्तोत्पलकुवलयवच्चन्द्रबिम्बाश्रिता
यामत्र शोभामौलौमिलद्विपट-
लै : कृष्णसाकापिवल्ली ॥ शोभव
ति । शुभशुम्भशोभायाम् । पचा
द्यच् ॥
शोभाञ्जन : । पुं० शिग्रौ । तीक्ष्ण
गन्धके । अक्षीवे । मोचके । स
हिजना० संभ्रना० इ० भा० प्र०
॥ शोभाञ्जन : कटुस्तिक्त : शो
थविद्रधिगुल्मनुत् ॥ शोभामम
क्ति । अञ्जुव्यक्तिम्रक्षणकान्तिगति
षु । कर्त्तरिक्युट् । बहुलमन्य
त्रापीतियुज्वा ॥
शोभित : । त्रि० शोभायुक्ते ॥
शोभनी । स्त्री० शोभनीयायाम् ॥
शोली । स्त्री० वनहरिद्रायाम् ॥
शोष : । पुं० शोषणे ॥ यक्ष्मणि
॥ संशोषणाद्रसादीनांशोषइत्यभि
धीयते ॥ अस्यौषधंयथा । वचा
त्रिकटुकुष्ठं वकाराङ्गं देवदारुच ।
मञ्जिष्ठात्रिफलाश्वेताम्शिरीषोरज-

नीहयम् ॥ प्रियङ्गुनिम्बविकट, गोमूत्रेणावघर्षितम् । नस्यमालेपनञ्चैवस्नानमुद्वर्तनंतथा ॥ अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम् । भूतेभ्यश्चभयंहन्तिराजद्वारेचशस्यमिति ॥ रवेः पार्श्वगे ॥ शोषयति । शुषशोषणे पचाद्यच् ।

शोषकः । त्रि॰ शोषणकर्त्तरि ॥

शोषणः । पुं॰ कामास्त्रविशेषे ॥ श्योनाके । न॰ रसाकर्षणे । रसादाने । शोषि ॥ त्रि॰ शोषके ॥

शोषसम्भवम् । न॰ पिप्पलीमूले ॥

शोषापहा । स्त्री॰ क्षीतलके ॥

शोषित । त्रि॰ जारिते ॥ यथा । समुद्रः शोषितोयेनतमगस्तिंनमाम्यहम् ॥

शौकम् । न॰ शुकगणे ॥ शुकानां समूहः । खण्डिकादित्वादञ् ॥ शुकस्यावयवोविकारोवा । प्राणिरजतादिभ्योऽञ् ॥ स्त्रीणांकरणान्तरे ॥

शौकरम् ।)
शौकरवम् ।) न॰ तीर्थविशेषे ॥

शौक्तिकम् । )
शौक्तिकेयम् । न॰ ) मुक्तायाम् ।
शौक्तेयम् । )

शौक्तिके । शुक्तिसम्भवे ॥

शौक्लाम् । न॰ शुक्लतायाम् ॥

शौङ्गः । पुं॰ भारद्वाजे ॥ शुङ्गस्याऽपत्यम् । विकर्णशुङ्गेत्यादिनाऽण् ॥

शौचम् । न॰ बाह्याभ्यन्तरभेदभिन्ने पावित्र्यजनककर्मणि । शुचितायाम् । तदुक्तं शौमहानिर्वाणतन्त्रे । शौचन्तु द्विविधं देवि बाह्याभ्यन्तरभेदतः । ब्रह्मण्यात्मार्पणं यत्तच्छौचमान्तरिकं स्मृतम् ॥ अद्भिर्वाभस्मनावापिमलानामपकर्षणम् । देहशुद्धिर्भवेद्येनतद्धि: शौचं तदुच्यते ॥ गङ्गानद्योह्रदावाप्यस्तथाकूपाश्च पुष्कराः । सर्वपवित्रजननं स्वर्णदीक्रमतः प्रिये ॥ भस्माचयाज्ञिकं श्रेष्ठंमृत् स्नातुमलवर्ज्जिता । वासेऽजिनवधपादौनिमद्ध्यानीहि सुव्रते ॥ किमत्रबहुनोक्तेनशौचाशौचविधौशिवे । मनःपूतंभवेद्येनगृहस्थस्तदाचरेत् ॥ निद्रान्ते मैथुनस्यान्ते त्यागान्तेमलमूत्रयोः । भोजनान्तेमलिस्पृष्टे बहिः शौचं विधीयते॰ इति ॥ अत्रस्तमाने प्रबलिकलौ ॥ शौचेश्चहः सदा कार्यः शौचमूलोद्विजः स्मृतः शौचाचारविहीनस्यसमस्ताःनिष्फलाः क्रियाः ॥ मृज्जलादिभिः कायादिक्षालनंहितमितमेध्यासनादिच॰ बाह्यम् । मैत्र्यामुदितादिभिर्मदमानादिचित्तमलक्षालनमान्तरम् ॥ कायमलानांमृज्जलाभ्य

चालनं बाह्यम् । मनोमलानांरागद्वेषादीनां विषयदोषदर्शनरूपप्रतिपक्षभावनयाऽपनयनमाभ्यन्तरमितिविवेक : ॥ वैश्यधर्मे तु धर्मप्रयोगादौमायाऽनृतादिराहित्यं । न तु मृज्जलादिजनितं ग्राह्यं ॥ सर्वेषामेव शौचानामर्थं शौचं परं स्मृतम् । योऽर्थे शुचिर्हि सशुचिर्न मृद्वारिशुचि: शुचिरितिमनु : ॥ आह्निकेशौचविधिर्यथा : । गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितइति । एतत् सर्व्वं साधारणम् । गृहस्थस्य तु, एकालिङ्गे गुदे तिस्रो दश वामकरे तथा । उभयो: सप्तदातव्या मृद: शुद्धिमभीप्सता । पादयो: षट् प्रकीर्त्तिता इति च ॥ तृतीयशौचमिच्छ्यकुर्याद्द्विचतुर्गुणम् । यद्दिवाविहितं शौचं तदर्द्धं निशिकीर्त्तितम् ॥ तदर्द्धमातुरेप्रोक्तमातुरस्यार्द्धमध्वनि । स्त्रीशूद्रबालवृद्धानामर्द्धमेनसिसूत्रवत् ॥ शौचविद्धिर्ण्यहस्तं नाध : शौचेनियोजयेत् । तथैववामहस्तेननाभेरूर्द्धं नशोधयेदिति ॥ मूत्रकरणे शौचन्तु एकालिङ्गकरे तिस्रउभयोर्मृद्वयं स्मृतमिति ॥ अशुद्धतानिरसनेनशुद्धेरापादकत्वञ्चास्यस्वरूपम् । यथा । अभक्ष्यपरिहारस्तुसंसर्गश्चाप्यनिन्दितै : । स्वधर्मेचव्यवस्थानं शौचमेतत्प्रकीर्त्तितमिति ॥ सत्यं शौचं मन : शौचं शौचमिन्द्रियनिग्रह : । सर्वभूतदयाशौचं जलशौचन्तुपञ्चमम् ॥ यस्यसत्यञ्चशौचञ्चतस्यस्वर्गोनदुर्ल्लभ : ॥ शुचि : कर्मभावोवा । इगन्ताच्चलघुपूर्वादित्यण् । गौकुलिकन्दृशालायांतेज यन्त्रे च यन्त्रयो : । अमीमांस्यानि शौचानिस्त्रीषुबालातुरेषु च । यत्र मर्ल्लिनोदृश्येदेशोचात्यन्तनिर्मल : । असङ्कोइमितिस्नानं शौचमेतत् प्रवचते ॥

शौचपर : । त्रि० बाह्याभ्यन्तरशौचयुक्ते ॥

शौचिक : । पुं० वर्णसङ्करविशेषे ॥ यथा । कैवर्त्तस्यचकन्यायांशौण्डिकादेवशौचकइतिपराशरपद्धति : ॥

शौचेय : । पुं० रजके । इ० श०र० लो ॥

शौटीर : । पुं० वीरे ॥ त्यागिनि ॥ शौटतिगर्वेगर्वे । कृशौण्डकीटीपटिशौटिभ्यईरन् ॥

शौटीर्य्यम् । न० वीर्य्ये । गर्व्वे ॥ तदेतइतिशौटीर्यमौड्वोमेनसृष्यतीतिकल्पतरू : ॥ शौटीरस्यभाव : । ब्राह्मणादित्वात्ष्यञ् ॥

शौण्ड : । त्रि० मत्ते । मदिरामत्ते ॥ प्रगल्भे ॥ विख्याते ॥ शुण्डायांपानागारेभव : । तत्रभवइत्यण् ॥

शौण्डिकः । पुं॰ जातिविशेषे । आसुतीवले । मण्डहारके । सुंडी॰ कलवार॰ इ॰ भा॰ प्र॰ ॥ अस्योत्पत्तिर्यथा । तीवराद्धिककन्यायांकैवर्त्तादिवशौण्डिकः । कैवर्त्तस्य च कन्यायांशौण्डिकादेवसौचिकः ॥ इ॰ प॰ पु॰ ॥ शुण्डासुरा॰ पण्यमस्य । तदस्यपण्यमितिठक् । शुण्डिकादागतोवा । शुण्डिकादिभ्योण् ॥

शौण्डी । पुं॰ शौण्डिके ॥

शौण्डी । स्त्री॰ पिप्पल्याम् ॥ चव्ये । कटव्याम् । मधुरेणौ ॥ शुण्डायांमद्यपानस्थानेभवा । तत्रभवइत्यण् । ङीप् ॥

शौण्डीरः । त्रि॰ शूरे । अहङ्कारिणि ॥ शौटति । शौट॰ । औणादिकईरन् । पृषोदरादित्वान्नुम॰ टस्य डत्व ॥

शौण्डीर्य्यम् । न॰ पौरुषे । शौर्ये । भावे॰ ष्यञ् ।

शौद्रः । पुं॰ श्राद्धविधिपुत्रान्तर्गतपुत्रविशेषे । पारशवे । त्रि॰ शूद्रसम्बन्धिनि ॥

शौद्धोदनिः । पुं॰ शाक्यवंशजमुनिविशेषे । सर्वार्थसिद्धे । गौतमे । मायादेवीसुते । शुद्धोदननृपतिविशेषस्यापत्यम् । अतइञ् ॥

शौधिका । स्त्री॰ रक्तकाञ्चीइ॰ हे॰ चन्द्रः ॥

शौनः । त्रि॰ पशुघातिनि ॥

शौनकः । पुं॰ ऋषिविशेषे । अतिधन्वनि ॥ शुनकस्यापत्यम् । विदाद्यञ् । कापेयमुनिविशेषे ॥

शौभः । पुं॰ निलिम्पे । देवे । सुरे ॥ गुवाके । न॰ व्योमपुरे । हरिश्चन्द्रपुरे । हरचँदावली॰ इ॰ भा॰प्र॰ ॥ त्रि॰ शुभान्विते ॥

शौभाञ्जनः । पुं॰ शिग्रौ ॥ शौभाञ्जनएव । प्रज्ञाद्यण् ॥ अस्यशोभाप्रकारस्तु । शिग्रुमूलफलपुष्पकंस्मृतंतैलपक्कमुदकेप्यधिश्रितम् । शिग्रसैन्धवरजोयुतहिङ्गुजायतेसपदिदीपनमग्नेः ॥ शिग्रुकःकटुतीक्ष्णोष्णःस्नायुशोथसमीरजित् । क्रिमिहृत्कासदोषघ्नस्तथातिप्लीहगुल्महा ।

शौभाञ्जनफलम् । न॰ शिग्रुफले ॥ सौभाञ्जनफलंस्वादुकषायंकफपित्तनुत् । शूलकुष्ठक्षयश्वासगुल्महृद्दीपनंपरम् ॥

शौभिकः । त्रि॰ इन्द्रजालिके । कुहककारिणि ॥ इ॰ हारावली ॥

शौरिः । पुं॰ वसुदेवे । वासुदेवे ॥ श्रीकृष्णे ॥ शूरस्यापत्यम् । वंशजत्वात् । वृष्णित्वेनऋष्यन्धकवृष्णीत्यणाभाव्यम् । तथापिबाह्वादित्वादिञ् ॥ शनैश्चरे ॥

शौर्य्यम् । न॰ आरभट्याम् ॥ बले ।

शम्भौ ॥ शूरस्यकर्म भावोवा । ष्य
ञ् ॥ उत्साहे ॥

शौल्क : । पुं॰ शुल्कसम्बन्धिनि ॥

शौल्कशालिक : । पुं॰ शुल्कशालाया
मधिकृते ॥ अधिकृत्यदूशिठक् ॥

शौल्किक : । त्रि॰ शुल्काध्यक्षे ॥

शौल्किकेय : । पुं॰ विषप्रभेदे ॥ शु
ल्किकदेशेभव : । इतिकुक्षीतियो
गविभागाट्ठञ् ॥

शौल्विक : । पुं॰ कंसकारे । ताम्रकु
ट्टके । कसेरा॰ इ॰ भा॰ प्र॰ ॥ शु
ल्कघट्टनं शिल्पमस्य । शिल्पमिति
ठक् ॥

शौव : । पुं॰ श्वभिर्दृष्टे सामविशेषे ॥
दृष्टं सामेत्यण् ॥ न॰ शुनांसमूहे
॥ खण्डिकादित्वादञ् ॥

शौवस्तिकम् । त्रि॰ भाविदिनस्थायि
नि द्रव्ये । श्वस्तने ॥ श्वोभवम् ।
श्वसस्तुट्चेति॰ ठक् । ऐजागम: ॥

शौवापदम् । त्रि॰ श्वापदे । श्वापद
सम्बन्धिनि ॥ श्वापदस्येदम् । अण्
। पदान्तस्यान्यतरस्यामितिपक्षे॰
ऐच् ॥

शौषिर : । पुं॰ दन्तरोगविशेषे । य
था । श्वयथुर्दन्तमूलेषुरुजावान्
कफरक्तज : । लालास्रावीसविज्ञे
य : शौषिरोनामनात : ॥ ४ ॥

शौष्कल : । पुं॰ शुष्कमांसस्यापणिके
त्रि॰ पिशिताशिनि ॥ शुष्कलीशु
ष्कमांसं॰ मांसमात्रं वाऽस्ति । शे
षकुल्यण् ॥

श्च्योत : । पुं॰ प्राग्भारे । क्षरणे ॥
श्च्योतनम् । श्च्युतिर्क्षरणे ।
घञ् ॥

श्च्योतन् । त्रि॰ क्षरति ॥

श्म । न॰ मान्त : ॰ मुखे ॥

श्मशानम् । न॰ प्रेतदाहभूमौ । श
वस्थाने । पितृवने ॥ शवा : शेरते
ऽत्र॰ शवानांशयनं वा । पृषोदरा
दित्वात्साधु ॥ श्मशब्देनशव : प्रो
क्त : शानंशयनमुच्यते । निर्वचन्ति
श्मशानार्थं मुनेशब्दार्थकोविदा: ॥

श्मशानकाली । स्त्री॰ कालीविशेषे ॥

श्मशानवासी । पुं॰ शिवे । त्रि॰ श्म
शानवासकर्त्तरि । श्मशानेवस्तुंशी
लंयस्य । बस॰ । सुप्यजातौणिनि: ॥

श्मशानवासिनी । स्त्री॰ कालिकाया
म् ॥

श्मशानवेश्मा । पुं॰ गिरिशे । शम्भौ ।

श्मशानालयवासिनी । स्त्री॰ कालि
कायाम् ॥ श्मशानालयेवस्तुंशील
मस्या : । णिनि : । ङीप् ॥

श्मश्रु । न॰ पुंमुखिलोमहद्धोड़ाढीढ़
॰ भा॰ केशश्मश्रुधारयतामग्र्याभ
वतिसन्ततिरितिदानधर्मे भारतम्
॥ श्म॰ मुखंश्रयति । श्रिञ् ॰ । श्म
निश्रयतेडुन् । यद्वा । श्मनिमुखे
श्रूयते॰ उपलभ्यते । श्रु॰ । [illegible]

द्रादित्वात् डः । क्विप् वा आगमशास्त्रस्यानित्यत्वान्न तुक् ॥

श्मश्रुमुखी । स्त्री॰ श्मश्रुयोषिति । पोटायाम् ॥

श्मश्रुलः । त्रि॰ प्रवृद्धमुखरोमवति । सिध्मादित्वाल्लच् ॥

श्माशानिकः । पुं॰ पितृवनेपाठादिकर्त्तरि । मसाणिआ॰ इ॰ भा॰ प्र॰ । श्मशानेऽधीते । अध्यायिन्यदेशकालादिति ठक् ॥

श्यानः त्रि॰ शीतात्सङ्कुचिते । सङ्कुचितमात्रे ॥ श्यायतेस्म । श्यैङ् गतौ । क्तः । संयोगादेरातोधातोर्यण्वत इति निष्ठानत्वम् ॥

श्यामः । पुं॰ प्रयागस्थवटे । वारिदे ॥ वृद्धदारके । पिके । कोकिले ॥ कृष्णवर्णे ॥ हरिद्वर्णे ॥ श्यामाके ॥ पीलुवृक्षे ॥ धत्तूरे ॥ दमनकवृक्षे ॥ गन्धतृणे ॥ न॰ मरिचे ॥ सिन्धुलवणे ॥ त्रि॰ कृष्णवर्णविशिष्टे ॥ हरिद्वर्णवति ॥ श्यायतेमनोऽस्मात् । श्यैङ्॰ । इषियुधीन्धिदसिश्याधूसूभ्योमगिति मक् ॥ पुं॰ ऋषभाद्रिजाते॰ तमालदलनिभे॰ चन्दनविशेषे ॥ श्रीकृष्णे ॥

श्यामकः । पुं॰ श्यामाके । सांवक इति भाषाप्रसिद्धान्ने ॥ न॰ रोहिषतृणे ॥ श्यामं वर्णमृच्छति । ऋ॰ । कर्मण्यण् । शकन्ध्वादिः ॥

श्यामकण्ठः । पुं॰ मयूरे ॥ शिवे ॥ पक्षिविशेषे ॥

श्यामकन्दा । स्त्री॰ अतिविषायाम् ॥

श्यामकाण्डा । श्यामग्रन्थिः । } स्त्री॰ गण्डदूर्वायाम् ॥ गण्डाल्याम् । मीननेत्रायाम् ॥

श्यामपत्रः । श्यामपत्रकः } पुं॰ तमालपादपे ॥

श्यामलः । पुं॰ पिप्पले । कृष्णे । श्यामे ॥ नीलमार्कवे । त्रि॰ कृष्णवर्णविशिष्टे । सिध्मादित्वाल्लच् ॥

श्यामलचूडा । स्त्री॰ गुञ्जायाम् ॥

श्यामलता । स्त्री॰ शारिवायामोषधौ ॥ श्यामलिम्नि ॥

श्यामला । स्त्री॰ पार्वत्याम् । कस्तूर्याम् ॥ अश्वगन्धायाम् ॥ जम्ब्वाम् ॥ कटभ्याम् ॥

श्यामलिका । स्त्री॰ नील्याम् ॥

श्यामलिङ्गः । पुं॰ कृष्णशौ ॥

श्यामवल्कः । पुं॰ शिरीषे ॥

श्यामसुन्दरः । पुं॰ श्रीकृष्णे ॥

श्यामशालिः । पुं॰ कृष्णशालौ ॥

श्यामा । स्त्री॰ कालिकायाम् । दुर्गायाम् । पार्वत्याम् ॥ श्यामायाउत्पत्तिर्यथा । ततः साकालिकादेवी योगनिद्राजगन्मयी । पूर्वत्वक्सतीरूपाजन्मार्थमेनकायथौ ॥ समयस्यानुरूपेणमेनकाजठरेशिवा

। समभूयच समुत्पन्ना सा लक्ष्मीरिव सागरात् ॥ वसन्तसमये देवी नवम्यां मृगयोगतः । अर्द्धरात्रौ समुत्पन्ना गङ्गेव शशिमण्डलात् ॥ ततस्तस्यान्तु जातायां प्रसन्नाश्चाभवन् दिशः । सानुकूलो ववौ वायुर्गन्धीरो गन्धिलः शुभः ॥ बभूव पुष्पवृष्टिश्च तोयवृष्टिः परा तथा । जज्वलुश्चाग्नयः शान्ता जगर्जुश्च घनाघनम् ॥ तस्यान्तु जायमानायां सर्वे स्वास्थ्यमपद्यत । तान्तु दृष्ट्वा यथा जातां नीलोत्पलदलानुगाम् ॥ श्यामां सा मेनका देवी मुदमापातिहर्षिता । देवाश्च हर्षमतुलं प्रापुस्तत्र मुहुर्मुहुः ॥ तुष्टुवुस्तामन्तरीक्षे गन्धर्वाश्चाप्सरोगणाः । तान्तु नीलोत्पलदलश्यामां हिमवतः सुताम् ॥ कालीति नाम्ना हिमवान् माजुहाव क्रते दिने । बान्धवास्तु सन्तानां नाम्ना तां पार्वतीति च ॥ कालीति च तथा नाम्ना कीर्त्तिता गिरिनन्दिनी ॥ इति कालिकापुराणे ४० अध्यायः ॥ शारिवौषधी ॥ कृष्णश्वेता शारिवा या सा श्यामेति निगद्यते ॥ अप्रसूताङ्गनायाम् ॥ नारीविशेषे । यौवनमध्यस्थायाम् ॥ अस्याल क्षणं यथा । स्निग्धनखनयनदशना निरनुशया मानिनी स्थिरस्नेहा । सुस्पर्शशिशिरमांसलवराङ्गना साम ता श्यामेति ॥ छायायाम् । भावा नुरूपायाम् ॥ प्रियङ्गौ ॥ वागुजी । सोमलतायाम् ॥ यमुनायाम् ॥ त्रियामायाम् ॥ कृष्णत्रिवृत्तिकौषधौ । यथा । श्यामात्रिवृत्ततोऽहीनगुणातीव्रविरेचिका । मूर्च्छादाहमदभ्रान्तिकण्ठोत्कर्षणकारिणी ॥ नीलिकायाम् ॥ गुग्गुलौ ॥ गुन्द्रायाम् । गुडूच्याम् ॥ कस्तूर्याम् ॥ वट० ल्याम् ॥ वन्ध्यायाम् । रोचनायाम् ॥ नीलपुनर्नवायाम् ॥ पिप्पल्याम् । कृष्णायाम् ॥ हरिद्रायाम् ॥ नीलगव्याम् ॥ नीलदूर्वायाम् ॥ स्त्रियाम् ॥ पद्मबीजे । शिंशपायाम् ॥ पक्षिविशेषे । वाराह्याम् । पाण्डविकायाम् । शकुन्याम् । पीतक्याम् । कालिकायाम् । शितिसिम्बिन्याम् ॥ श्यामो वर्णोऽस्त्यस्याः । अर्श आद्यच् ॥ अगन्ताद्दाटाप् ॥

**श्यामाकः ।** पुं० तृणधान्यभेदे । श्यामके । श्यामेचिबीजे । ऋषिप्रिये । राजधान्ये । सांवां० सांवक० इ० भा० प्र० ॥ श्यामाकः शोषणो रूक्षो वातलः कफपित्तहृत् ॥ श्यायते । श्यैङ्० । पिनाकादय इति साधुः ॥ यद्वा । श्यामं वर्णम् अकति । अक० । कर्मण्यण् ॥

**श्यामाङ्गः ।** पुं० बुधग्रहे ॥ त्रि० श्या

मशरीरे ॥
श्यामाङ्गी । स्त्री॰ मेचाङ्ग्याम् । कृष्ण
कलेवरायाम् ॥
श्यामाद्दनी । स्त्री॰ लाङ्गल्यां ॥
श्यामाम्ली । स्त्री॰ दीर्घशाखिकायाम्
। नीलाम्ल्याम् ॥
श्यामायमानः । त्रि॰ योऽश्यामश्श्या
भवतितस्य । लोहितादिडाज्भ्यः
क्यष् । वाक्यषद्भ्यात्मनेपदेशान
च् । आनेमुक् ॥
श्यामित : । त्रि॰ श्यामले ॥
श्यामैककर्णः । पुं॰ श्वेतसप्तयविशेषे ।
श्याल : । पुं॰ पत्नीसहोदरे । वा
क्षीरे । साला॰ हृ॰ भा॰ प्र॰ ॥
श्यायते । बाहुलकात् ॰ श्यैङः
कालन् ॥ उच्छिष्टमधुरक्नैवाचोश्या
लन्दः । श्यालाति । यातीनुपैति
कद्वतिमुकुटः ॥
श्यालकः । पुं॰ श्याले ॥ स्वार्थेकः ॥
श्यालिका । स्त्री॰ केलिकुञ्चिकायाम्
। पत्नीभगिन्याम् । साली॰ हृ॰
भा॰ प्र॰ ॥
श्याली । स्त्री॰ श्यालिकायाम् ॥
श्याव : । पुं॰ कपिशे । कृष्णपीतमि
श्रितवर्णे ॥ धूम्रे । शुक्लानुविद्धे कृ
ष्णवर्णे ॥ शाकवर्णे॰ इतिभावप्र
काश : ॥ मुद्गाभवर्णे इतिभट्टोत्पलः
॥ त्रि॰ तद्वर्णवति । श्यायते ।
कृगृशृदृभ्योवइति॰ बाहुलकात् ॰
श्यैङोव : ॥
श्यावदन् । त्रि॰ श्यावदन्ते । कृष्ण
पीतमिश्रितवर्णदन्तयुक्ते ॥ श्या
वादन्तायस्य : । विभाषाश्या
वारोकाभ्यामितिपक्षे दन्तस्यदत्रादे
श : ॥
श्यावदन्त : । त्रि॰ जन्मनैवकृष्णद
न्ते ॥ श्यावादन्तायस्य । विभाषा
श्यावारोकाभ्यामितिपक्षे दत्रादे
शाभाव : ॥
श्यावदन्तक : । त्रि॰ श्यावदन्ते ॥
प्रधानदन्तद्वयमध्यस्थशुद्रदन्तविशि
ष्टे ॥ प्रधानदन्तोपरिदन्तान्तरयुक्ते
॥ यथविष्णु : । अथनरकानुभूतदुः
खानांतिर्यक्त्वमुत्तीर्णानांमानुष्ये
लक्षणानिभवन्ति । कुष्ठ्यतिपात
की॰ ब्रह्महायक्ष्मी॰ सुरापः श्या
वदन्तक : ॰ सुवर्णहारीकुनखी॰
गुरुतल्पगोदुश्चर्मइत्यादि ॥ दन्त
रोगविशेषे ॰ यथा । योऽसृङ्भिश्रे
णपित्तेनदग्धोदन्तस्त्वशेषत : ।
श्यावतांनीलतांवापिगतः सश्या
वदन्तक : । १८ ॥ स्वार्थेकः ॥
श्येत : । पुं॰ शुक्लवर्णे । श्वेते । पा
राडुरे ॥ त्रि॰ तद्वर्णयुक्ते ॥ श्यो
यते । हृश्याभ्यामितन्निति॰ श्ये
ङइतन् ॥
श्येतकोलक : । पुं॰ मत्स्यविशेषे ।
राफरे । पुंटी॰ हृ॰ गौ॰ भा॰ प्र॰ ॥

श्येनः। पुं० पक्षिविशेषे। श्यायादमी। पक्षिणि। बाज० इ० प्र०। महाकायोऽमन्दवेगः श्येनहृत व्याख्यातारः॥ श्यायते। श्यैङ्०। शास्त्राह्ङञविभ्यइनच्। पाण्डुरे। शुक्ले॥ त्रि० तद्वति॥

श्येनघण्टा। स्त्री० दन्तीवृक्षे। एरण्डफलायाम्॥

श्येनचित्। पुं० आहवनीयधारणार्थ० इष्टकानिर्मितस्थलविशेषे। श्येनइवचितः। चिञ०। कर्मण्यग्न्याख्यायामितिक्विप्॥

श्येनजीवी। पुं० क्रयविक्रयादिना श्येनयोजीवति० तस्मिन्॥

श्येनी। स्त्री० शुक्लवर्णायाम्। वर्णादनुदात्तोपधात्तोनइति० ङीप्० तकारस्यनकारादेशश्च॥ त्रिष्टुप्छन्दः ११ प्रभेदे॥ यथा। श्येन्यु द्दीरितारजौरलौगुरुः॥ यस्यकीर्त्तिरिन्दुकुन्दचन्दनश्येनशैवलीकपावनीमदा। व्रजस्त्रीवविभ्रमस्यविभ्रमातंभजामिभावगम्यमच्युतम्॥ श्येनयोषिति।

श्येनीपुत्रः। पुं० जटायुषि। सम्पातेरनुजे। दशरथराजसखे॥

श्येनम्पाता। स्त्री० मृगयायाम्॥ पतनम्पातः। श्येनस्यपातः। कर्तृषष्ठ्यासमासः। श्येनपातोऽस्यांवर्त्तते। घञः साकांक्रिये तिञः। श्येनतिलस्यपातेञे० इतिमुमागमः॥

श्योनाकः। पुं० श्योनाकद्रुमे। सोनागाछ इ० गौ० भा० प्र०॥ अस्यपर्यायायथा। मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः। श्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः॥ शोषकश्चारलाविति। सोनापाटा० इ० भा० प्र०॥ अस्यगुणायथा। श्योनाकोदीपनःपाके कटुकस्तुवरोहिमः। ग्राहीतिक्तोनिलश्लेष्मपित्तकासामनाशनः॥ टुण्टुकस्यफलंबालंरूक्षंवातकफापहम्। हृद्यंकषायंमधुरंरोचनंलघुदीपनम्। गुल्मार्शःक्रमिहृत्प्रौढंगुरुवातप्रकोपणम्॥ श्यायते। श्यैङ्गतौ। पिनाकादौ निपातितः॥

श्रत्। अ० श्रद्धायाम्॥

श्रथनम्। न० वधे॥ यत्ने॥ पुनः पुनर्हर्षणे॥ बन्धने॥ मोक्षणे॥ शिथिलीकरणे॥

श्रद्दधानः। त्रि० श्रद्धायुक्ते। श्रद्धावति॥ यथा। श्रद्दधानः शुभांविद्यामाददीतावरादपि। अन्त्यादपिपरंधर्मंस्त्रीरत्नंदुष्कुलादपीति॥ श्रत्० श्रद्दधातेर्विभाषा॥

श्रद्धा। स्त्री० सम्प्रत्यये। आदरे। आस्तिक्यबुद्धौ। शास्त्रार्थप्रत्यये॥

गुरुवेदान्तादिवाक्येषु विश्वासे । गुरुवेदान्तादिवाक्येषु • इदमित्थमेवेतिप्रमारूपायामास्तिक्यबुद्धौ । शास्त्राचार्योपदिष्टेर्थेऽननुभूतेप्येवमेवैतदितिविश्वासे ॥ निगमाचार्यवाक्येषुभक्तिः श्रद्धेतिविश्रुतेतिपूज्यपादोक्तिः ॥ प्रत्ययो धर्मकार्येषु दृढ श्रद्धेत्युदाहृता । नास्त्यश्रद्दधानस्यधर्मकृत्ये प्रयोजनमितिस्मृतिः ॥ इयंवैराग्यस्यपत्नी । वैराग्यस्यचद्वेभार्ये श्रद्धाभक्तिश्चेत्युक्तः ॥ श्रद्धानम् । डुधाञ् • । श्रदन्तरोरुपसर्गवद्वृत्तिर्वाच्या । आतश्चोपसर्गइत्यङ् । टाप् ॥ इच्छायाम् । काङ्क्षायाम् । स्पृहायाम् ॥ चेतसः प्रसादइति पातञ्जलभाष्यम् ॥ श्रद्धात्रिविधा । सात्त्विक्यादिभेदात् । यथाहि । श्रीभगवानुवाच । त्रिविधा भवतिश्रद्धादेहिनांसास्वभावजा सात्त्विकीराजसीचैवतामसीचेतितांशृणु ॥ सत्त्वानुरूपासर्वस्यश्रद्धाभवतिभारत । श्रद्धामयोऽयंपुरुषोयोयच्छ्रद्धः सएवसः । यजन्तेसात्त्विकादेवान्यक्षरक्षांसिराजसाः । प्रेतान्भूतगणांश्चान्येयजन्तेतामसाजनाइति ॥

श्रद्धालुः । स्त्री• दोहदवत्याम् ॥ श्रद्दधाति । डुधाञ् • । स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्यआलुजित्यालुच् । श्रद्धशीलत्वाद्वा ॥ त्रि• श्रद्धायुक्ते ॥

श्रद्धावान् । त्रि• श्राद्धे । अतिशयेनश्रद्दधाने । श्रद्धासमन्विते ॥ श्रद्धास्त्यस्यास्मिन्वा । मतुप् ॥

श्रद्धाविरहितः । त्रि• ऋत्विग्देवादिनाश्रद्धारहिते । अश्रद्दधाने ॥

श्रद्धेयः । त्रि• विश्वसनीये । श्रद्धामर्हः ॥ आगमोपपत्तिभ्यांहिनिश्चितोर्थः श्रद्धेयोभवत्यव्यभिचारादितिपूज्यपादाः ॥

श्रन्थः । पुं• श्रन्थने ॥

श्रन्थनम् । न• ग्रन्थने । गुम्फे ॥ यथा । सन्दर्भोरचनागुम्फः श्रन्थनंग्रन्थनंसमाइतिहेमः ॥

श्रन्थितः । त्रि• ग्रन्थिते । गुम्फिते ॥ कृतवधे ॥

श्रपितः । त्रि• पक्वे । घृतदुग्धजलभिन्नपक्वद्रव्ये ॥ यथा । निष्पक्वंक्वथितेपक्वन्त्वाज्यंक्षीरंपयः सृतम् । अन्यत्तुश्रपितंश्राणं •समुदक्तोद्धृतेसमे• इतिजटाधरः ॥ आप्राक्तः ॥

श्रपिता । स्त्री• काञ्जिके ॥ इतिकेचित् ॥

श्रमः । पुं• अभ्यासे । अभ्यसने ॥ यथाभ्यासे । खुरल्याम् । शरविद्यायां ॥ यत्नातिशये ॥ क्लमे । परिश्र

मे । आयासे । व्यायामे ॥ तपसि ॥ खेदे । गमनादिप्रयुक्तखेदादौ । श्रम : खेदोऽध्वरत्यादेरितिलक्षणम् ॥ श्राम्यत्यनेन । श्रमुतपसिखेदे । घञ् । नोदात्तोपदेशस्येतिवृद्ध्यभाव : ॥

श्रमण : । पुं॰ तपस्विनि । श्रमणा : परिव्राड्भिरितिपूज्यपादा : ॥ बुद्धभिक्षुके । निर्ग्रन्थे । यतौ । जति॰ ॰ द्व॰ भा॰ प्र॰ । न॰ श्रमे । त्रि॰ निन्द्यजीविनि ॥ तपस्विनि ॥ श्राम्यति । श्रमु॰ । ल्यु : ॥

श्रमणा । स्त्री॰ सुदर्शनायाम् । मांस्याम् । मुण्डीर्याम् । शबरीभेदे ॥

श्रमणी । स्त्री॰ चतुर्थाश्रमप्राप्तायाम् । तपस्विन्याम् ॥

श्रमवारि । न॰ आयासेनस्वेदविन्दौ ॥

श्रमी त्रि॰ श्रमयुक्ते ॥

श्रय : । पुं॰ श्रयणे । आये । श्रयणम् । श्रिञ्सेवायाम् । एरच् ॥

श्रयणम् । न॰ आये । आश्रये ॥ श्रिञो ल्युट् ॥

श्रव : । पुं॰ कर्णे । श्रवणे । श्रूयतेऽनेनश्रवणंवा । श्रुश्रवणे । ऋदोरप् ॥

श्रवण : । पुं॰ नक्षत्रविशेषे । श्रवणायाम् । न॰ श्रुतौ । श्रोत्रकर्मणि । श्रुतिस्मृतीतिहासपुराणेषुशब्दतात्पर्यावधारणे । तदर्थनिर्धारणानुकूलन्यायविचारे ॥ षड्विधलिङ्गैरशेषवेदान्तानामद्वितीयेवस्तुनितात्पर्यावधारणे । वेदान्तानामशेषाणामादिमध्यावसानत : । ब्रह्मात्मन्येवतात्पर्यमितिधी : श्रवणंभवेदित्युक्ते : ॥ आचार्यस्यमुखादेवश्रवणंसफलंभवेत् ॥ कर्णेन्द्रियेणसगुणस्यनिर्गुणस्यवाशब्देनज्ञाने । सुनना॰ द्व॰ भा॰ प्र॰ । पुं॰ न॰ कर्णे । कान॰ द्व॰ भा॰ प्र॰ । कर्णपुंनपुंसकयो : । श्रवणावनिलस्यचेतिदर्शनात् । नस्त्रियांश्रवण :कर्णइतिक्लीवमाख्यभिधानाच्च ॥ श्रूयतेऽनेन । करणेल्युट् ॥

श्रवणद्वादशी । स्त्री॰ श्रवणानक्षत्रयुक्तायांभाद्रशुक्लद्वादश्याम् ॥

श्रवणशीर्षिका । स्त्री॰ श्रावणीवृक्षे । मुण्डीर्याम् ॥

श्रवणा । स्त्री॰ द्वाविंशतितमेनक्षत्रे ॥ तत्रजातस्यफलंयथा । शास्त्रानुरक्तो बहुपुत्रमित्र : सत्पुत्रभक्तिर्विजितारिवर्ग : । यज्जन्मकालेश्रवणाद्विदस्यप्रेमोपरासश्रवणप्रवीण : ॥ श्रावणपूर्णिमायाम् । श्रावण्याम् ॥ श्रवणनयुक्तापौर्णमासी । नक्षत्रेणेत्यण् । तस्य॰ लुबविशेषइतिलुप् । टाप् । मुण्डीरीवृक्षे ॥

श्रवणाह्वा । स्त्री॰ मुण्डीरिकायाम् ॥

श्रव : । न॰ यशसि ॥ कर्णे ॥ श्रूयते

ऽनेनवा । उ० । सर्व्वधातुभ्योऽसुन् ॥

श्रवाय्यः । पुं० यज्ञपशौ ॥ शृणोति । उ० । श्रुदक्षिस्पृहिगृहिभ्य आय्यः ॥ श्रवाय्यः • श्रवणीयइतिवेदभाष्यम् । अस्मिन्नर्थे • वाच्यलिङ्गः ॥

श्रविष्ठा । स्त्री० धनिष्ठानक्षत्रे ॥ श्रवणं श्रवः । ऋदोरप् । प्रसिद्धः श्रवोऽस्त्यस्याः । मतुप् । अतिशयेनश्रववति । अतिशयनेतमबिष्टनाविति इष्ठन् । विन्मतुपोर्लुगितिमतुपोलुक् ॥

श्रविष्ठाजः । पुं० बुधग्रहे ॥ त्रि० तज्जातमात्रे ॥

श्रव्यम् । न० सुंदरवाक्ये ॥

श्राणम् । त्रि० । पक्वे ॥ श्राति । श्रा पाके । क्तः । संयोगादेरातोधातोर्यण्वतइति• तस्यनः ॥ अपिते ॥

श्राणा । स्त्री० । उष्णिकायाम् । यवागाम् ॥ श्रायतेस्म । श्रा० । कर्म्मणिक्तः । संयोगादेरितिनिष्ठानत्वम् ॥ पक्वायाम् ॥

श्राद्धम् । न० शास्त्रोक्तविधानेनपितृणांकर्म्मणि ॥ तल्लक्षणंयथा । संस्कृतव्यञ्जनाद्यञ्चपयोदधिघृतान्वितम् । श्रद्धयादीयतेयस्मात्श्राद्धंतेननिगद्यते• बृहस्पतिवचनात् • श्रद्धयाऽन्नादेर्दानंश्राद्धमितिवैदिकप्रयोगाधीनयौगिकमितिश्राद्धतत्त्वम् ॥ वेदबोधितपात्रालम्भनपूर्व्वकप्रमीतदैवताकद्रव्यत्यागविशेषः । सम्बोधनपदोपनीतान्• पित्रादीन्• चतुर्थ्यन्तपदेनोद्दिश्य• हविस्त्यागे ॥ तच्च श्राद्धंद्वादशविधमपरिमितविश्वामित्रोक्तेः । तथाहि । नित्यंनैमित्तिकंकाम्यंवृद्धिश्राद्धंसपिण्डनम् । पार्व्वणञ्चेतिविज्ञेयंगोष्ठ्यांशुद्ध्यर्थमष्टमम् ॥ कर्माङ्गंनवमंप्रोक्तंदैविकंदशमंस्मृतम् ॥ यात्रार्थैकादशंप्रोक्तंपुष्ट्यर्थंद्वादशंस्मृतमिति ॥ विवृतञ्चैतद्भविष्यपुराणेयथा । अहन्यहनियच्छ्राद्धंतन्नित्यमभिधीयते । वैश्वदेवविहीनंतदशक्तावुदकेनतु ॥ एकोद्दिष्टन्तुयच्छ्राद्धंतन्नैमित्तिकमुच्यते । तदप्यदैवंकर्त्तव्यमयुग्मानाशयेद्द्विजान् ॥ कामायविहितंकाम्यमभिप्रेतार्थसिद्धये । पार्व्वणेनविधानेनतदप्युक्तंखगाधिप ॥ वृद्धौयत्क्रियतेश्राद्धंवृद्धिश्राद्धंतदुच्यते । सर्व्वंप्रदक्षिणंकार्य्यंपूर्व्वाह्णेतूपवीतिना ॥ गन्धोदकतिलैर्युक्तंकुर्य्यात्पात्रचतुष्टयम् । अर्घ्यार्थंपितृपात्रेषुप्रेतपात्रंप्रसेचयेत् । येसमानाइतिद्वाभ्यांएतज्ज्ञेयंसपिण्डनम् । नित्येनतुल्यंशेषंस्यादेकोद्दिष्टेस्त्रियाअपि ॥ अमावास्यांयत्क्रियतेतत्पार्व्वणमुदाहृ

तम् । क्रियतेवापवर्ग्यियत तत्पा
वर्गमितिस्थिति : ॥ गोष्ठायतत्
क्रियतेश्राद्धं गोष्ठीश्राद्धं तदुच्यते
। बहूनांविदुषांसम्पत सुखार्थंपि
तृतृप्तये ॥ क्रियतेशुद्धयेयत्तुब्रा
ह्मणानान्तुभोजनम् । शुद्ध्यर्थमि
तितत्प्रोक्तं वैनतेयमनीषिभि : ॥
निषेककालेसोमेचसीमन्तोन्नयनेत
था । ज्ञेयंपुंसवनेचैवश्राद्धंकर्मा
ङ्गमेवच ॥ देवानुद्दिश्ययच्छ्राद्धंतद्दै
विकमिहोच्यते । हविष्येणविशि
ष्टेनसप्तम्यादिषुयत्नत : ॥ गच्छन्
देशान्तरंयत्तु श्राद्धंकुर्याच्चसर्पिषा।
यात्रार्थमितितत्प्रोक्तंप्रवेशेचनसंश
य : ॥ शरीरोपचयेश्राद्धमर्थोप
चयएवच । पुष्ट्यर्थमेतद्विज्ञेयमौप
चायिकमुच्यते० इति ॥ पञ्चविध
मपिब्रह्मपुराणवचनात्तद्यथा । नि
त्यंनैमित्तकंकाम्यंवृद्धिश्राद्धंतथैव
च । पार्वणञ्चेतिमनुनाश्राद्धंपञ्च
विधंस्मृतमिति ॥ श्रद्धाचास्ति ।
प्रज्ञाश्रद्धार्चाभ्योणइतिण : ॥ य
द्वा । श्रद्धाप्रयोजनमस्य । चूडा
दिभ्यउपसङ्ख्यानमित्यण् ॥ कलाव
स्यानुष्ठानमागमोक्तविधिनैवकार्य
म् । यथाहभगवान् सदाशिव : ।
आगमोक्तविधिंहित्वाय : श्राद्धं
कुरुतेनर : । श्राद्धंतद्विफलंसोपि
पितृभिर्नरकंव्रजेत् । ततस्तीयश्रा

पितृसमंपिण्डोमलमयोभवेत् । त
स्मान्मर्त्य : प्रयत्नेनशाङ्करंमतमा
श्रयेत्इति ॥ त्रि० श्रद्धान्विते ॥
श्राद्धदेव: । पुं० यमे । धर्मराजे
। यमे ॥ श्राद्धस्यदेव : ० अंशभा
क्त्वात्० पितृपतित्वाद्वा ॥
श्राद्धप्रदेश: । पुं० खड्गहस्तीर्थादिषु ॥
श्राद्धशाकम् । न० कालशाके ॥
श्राद्धिक : । त्रि० श्राद्धिनि । अद्य
तनएवश्राद्धान्नभोजिनि । श्राद्ध
शब्द : कर्मनामधेयंतत्साधनेद्रव्ये
लक्षणयावर्त्तते । श्राद्धंभुक्तमनेन
। श्राद्धमनेनभुक्तमितिठनाविति
ठन् ॥ श्राद्धसम्बन्धिद्रव्ये ॥
श्राद्धी । त्रि० श्राद्धिके ॥ श्राद्धम
नेनभुक्तमितीनि : ॥
श्रान्त : । पुं० यतौ । शान्ते ॥ त्रि०
क्लान्ते । श्रमयुक्ते ॥ श्राम्यते:क्त: ॥
श्रान्तकाय : । त्रि० निवृत्तसंलापे ॥
श्रान्तसंवाहनम् । न० श्रमान्वितस्या
सनादिप्रदानद्वाराश्रमोपशमने ॥
श्राम : । पुं० मासे ॥ मण्डपे ॥ का
ले ॥
श्रामणेर : । पुं० जिनभिक्षो: शिष्ये
। चेलुके । महापासके ॥
श्राय : । पुं० आश्रये । शरणे ॥ श्रय
णम् । श्रिञ् सेवायाम् । श्रिणीभु
वोनुपसर्गइतिघञ् ॥ त्रि० श्रीदे
वताकेइविरादौ ॥ श्रीर्देवताऽस्य

। श्रण् ॥

श्राव : । पुं॰ श्रवणे ॥

श्रावक : । पुं॰ शाक्यमुने: शिष्ये ॥ काके । वायसे ॥ दूरध्वनौ । त्रि॰ श्रावयितरि ॥ श्रावयति । श्रु॰ । णवुल् ॥

श्रावण : । पुं॰ मासविशेषे । नभसि । श्रावणिके ॥ श्रवणापौर्णमास्यस्मिन् । सास्मिन्पौर्णमासीत्यर्थे विभाषाफाल्गुनीतिपाक्षिकोण् ॥ शब्दे ॥ श्रवणेनगच्छति । शेषद्व्यण् ॥ पाषण्डे ॥ इ॰ मेदिनिकर: ॥

श्रावणा : स्त्री॰ इध्यालोबुधे ॥

श्रावणिक : । पुं॰ नभोमासि । श्रावणे ॥ श्रवणापौर्णमास्यस्मिन्नस्ति । विभाषाफाल्गुनीश्रवणाकार्त्तिकीचैत्रभ्यष्ठतिठक् ॥

श्रावणी । स्त्री॰ श्रवणायाम् । श्रावणमाससम्पूर्णिमायाम् ॥ अस्यामृषितर्पणंभवति । तत्कालादिकमाहकालिदास: । पूर्वाह्नकालसमयाव्युतशारदान्तायापूर्णिमानभसिसत्रवणातुतस्याम् । शिष्यायुतोत्तरपितासुनितर्पणंस्याच्चेत्सङ्गमोभवतिवायवयंतदानं॥केचित्समभिच्छंतितदैवतर्पणंश्रुतौबहस्तश्रुतिशाखिनोयहै । स्यात्सङ्क्रमेवासतिसर्वशाखिनांतर्पणंश्रावणशुक्लपञ्चमी : स्यात्सत्रवान्त्वेवसुपाकृतौस्यात्पूर्वान्वितावापिचपाकयत्न । तथासितापक्षदशोसमुक्तातथाष्टकेतत्समयाभिरूपे : । ज्यो॰ २१ अध्याय : । ४६ ४८ । श्रवणेनयुक्तापौर्णमासी । नक्षत्रेत्यण् ; ङीप् । मुंडोर्याम् ॥

श्रावस्ती । स्त्री॰ देशविशेषे । धर्मपत्तने ॥

श्राविष्ठीय : । त्रि॰ श्रविष्ठायांजाते छण्प्रत्यय : ॥

श्राव्यम् : त्रि॰ श्रुतिपथमधुरे ॥

श्रित : । त्रि॰ आश्रिते ॥ संलग्ने ॥ श्रयति । श्रिञ्॰ । गत्यर्थाकर्मकेतिकर्त्तरिक्त : ॥

श्रितवान् । त्रि॰ श्रिते ॥ श्रिञ : क्तवतु ॥

श्री : । पुं॰ सौमेश्वरमतेषड्रागान्तर्गतप्रथमरागे ॥ हनुमद्भरतयोर्मते पञ्चमरागे ॥

श्री : । स्त्री॰ वेशरचनायाम् ॥ शोभायाम् ॥ भारत्याम् । सरस्वत्याम् ॥ लवङ्गे ॥ सरलद्रुमे ॥ लक्ष्म्याम् । पद्मालयायाम् । पद्मायाम् । कमलायाम् । हरिप्रियायाम् ॥ त्रिवर्गसम्पत्तौ ॥ विधायाम् ॥ उपकरणे ॥ विभूतौ ॥ नात्मानमवमन्येतपूर्वाभिरसमृद्धिभि: । आमृत्यो : श्रयमन्विच्छेन्नेनांमन्येतदुर्लभाम् ॥ म

तौ ॥ विल्वद्रुमे ॥ अंबुजे ॥ अधिकारे ॥ प्रभायाम् ॥ कीर्त्तौ ॥ वृद्धौ ॥ सिद्धौ ॥ ध्यानाद्यमातरि ॥ तारायाम्, । बुद्धदेव्याम् ॥ श्रयतिहरिम्० श्रयन्त्येतामितिवा । श्रिञ्० । क्विव्वचीति० क्विप्‌दीर्घौ ॥ कर्त्तरि विहितस्यक्विप: कर्मण्यसम्भव: कृदिकारादितिङीष्‌तुन०कृत्प्रत्ययोयद्इकारइतिव्याख्यानात् । कृदन्तंयदिकारान्तमितिपक्षे पि०कारग्रहणे तत्सामर्थ्यादिकेवलग्रहणात् । दुर्घटस्तु०ङीषि०श्रीमितापिरचितइच्छतीत्याह ॥ विद्याशक्तौ ॥ श्रयतिपारतन्त्र्याच्चिदात्मानमितिश्री: ॥ राजलक्ष्म्याम् ॥ शरीरशोभायाम् । सर्वोत्कृष्टत्वेनात्मत्वाश्रयतयास्वीक्रियतेप्रलयसुषुप्त्यादौसर्वभूतैरिता,क्या० जीवत्वोपाधिभूयामामविद्यायाम् ॥ देवादिनाम्न: पूर्वंश्रीशब्दप्रयोग: कर्त्तव्यइत्याह । देवंगुरुंगुरुस्थानंक्षेत्रंक्षेत्राधिदेवताम् । सिद्धंसिद्धाधिकारांश्चश्रीपूर्वंसमुदीरयेदितिप्रयोगसार: ॥ स्वर्गगामित्वादिनासिद्धोऽधिकारीयेषांनराणामितानेन० जीवतांश्रीशब्दादित्वंमाल्लोनतुमृतानांतथेताधुनिकशिष्टानामाचार: ॥ पद्मेश्रीशब्दद्वन्द्वप्रमाणंयथा । षड्गुरो: स्वामिन: पञ्चहे भृत्येचतुरोरिपौ । श्रीशब्दानांत्रयंमित्रएकंपुत्रभार्ययोरिति ॥ उक्तगाथायां १ इत्यौ ॥ ग. श्री: । यथा । श्रीस्ते । सान्त्वाम् ॥

श्रीकण्ठ: । पुं० नीलकण्ठे । शिवे ॥ कालकूटविषधारणात्० श्री: शोभाकण्ठेयस्य स: । धृतंकण्ठेविषंघोरंतत: श्रीकण्ठनामभैति नीलकण्ठस्तत: ॥ कुरुजाङ्गलदेशे ॥

श्रीकण्ठपदलाञ्छन: । पुं० मालतीमाधवनाटककर्त्तरि० भवभूतिकवौ ॥

श्रीकण्ठसख: । पुं० कुवेरे ॥ इ० इ० युध: ॥

श्रीकन्दा; स्त्री० बन्ध्याकर्कोटक्याम् ॥

श्रीकर: । पुं० विष्णौ ॥ स्मरतांशृण्वतांस्तुवतांकीर्त्तयतामर्चयतांभक्तानांश्रियंमोक्षसाम्राज्यलक्ष्मींकरोति । कृञोहेतुताच्छील्यानुलोम्येष्विति कृअट: ॥ न० रक्तोत्पले ॥ त्रि० श्रीकारके ॥ करोति । डुकृञ्० । अच् ॥ श्रिय: कर: ॥

श्रीकरणम् । न० लेखन्याम् ॥

श्रीकरी । स्त्री० शक्तिविशेषे ॥

श्रीकान्तः । पुं॰ विष्णौ ॥

श्रीकारी । पुं॰ मृगविशेषे । वेगि हरिणे ॥ इ॰ रा॰ नि॰ घट: ॥

श्रीकुञ्जम् । न॰ सरस्वत्यास्तीर्थे ॥

श्रीखण्डः । पुं॰ न॰ चन्दने ॥ इ॰ ति॰ शेषः ॥

श्रीगर्भः । पुं॰ विष्णौ ॥ श्रीर्विभूतिः गर्भोयस्य ॥ खड्गे ।

श्रीग्रहः । पुं॰ पक्षिणांपानीय शालायाम् । शकुनिप्रपायाम् ॥

श्रीघनः । पुं॰ सर्वज्ञे । बुद्धे । जिने । मुनीन्द्रे ॥ श्रिया॰ ज्ञानपुण्यसम्भारेण॰ बुद्ध्या वा॰ घनः पूर्णः घनमूर्त्तित्वान्नपत्वम् ॥ न॰ दधि ॥

श्रीजः । पुं॰ कामदेवे ॥

श्रीतालः । पुं॰ तालवृक्षसदृशवृक्षविशेषे । मृदुताले । विशालपत्रे । मसीलेख्यदले ॥

श्रीतीर्थम् । न॰ तीर्थविशेषे ॥

श्रीदः । पुं॰ पुण्यजनेश्वरे । कुबेरे ॥ श्रियंददाति॰ ददातिवा । देवोदारोवा॰ आतइतिकः ॥ चि॰ श्रीप्रदे । शोभादातरि ॥

श्रीदेवी । स्त्री॰ तीर्थविशेषे ॥

श्रीधरः । पुं॰ विष्णौ ॥ श्रिया: वक्षसिधरोधारकः ॥ भूतादौ हृदे ॥ शालग्रामविशेषे । यथा । वति चक्रं द्विचक्रान्तुवनमालाविभूषितम् । श्रीधरं देवविमर्शं यं श्रीप्रदं गृहिणांसदा ॥

श्रीनगरम् । न॰ श्रीविद्याख्याने ॥

श्रीनन्दनः । पुं॰ कामदेवे ॥

श्रीनिकेतनः । पुं॰ विष्णौ ॥

श्रीनिवासः । पुं॰ विष्णौ । नारायणे ॥ श्रियोनिवासः । निनिश्चयेन॰ अपायंविना॰ श्रीर्वसतुय त्रवायस्यवक्षसिअनपायिनिश्रीर्वसति॰ सङ्गत्यर्थः । यथा । श्रियोनिवासोयस्योरः पानपात्रं मुखं दृशाम् । बाहवोलोकपालानां सारङ्गानांपदाम्बुजमिति ॥ यद्वा श्रीशब्दे नश्रीमन्तोलक्ष्यन्ते । श्रीमतस्तुनित्यंनिवासोऽस्य । यतोलक्ष्मीस्ततोहरिरित्युक्तं ॥

श्रीपतिः । पुं॰ पुरुषोत्तमे । विष्णौ ॥ अमृतमथनेसर्वानसुरान्सर्वान् देवांश्चविहायविष्णुमेवपतित्वेनवृतवतीतिविष्णुपुराणप्रसिद्धं ॥ श्रियः पतिः ॥ नृपतौ । पृथिवीनाथे ॥

श्रीपथः । पुं॰ राजमार्गे ॥ इ॰ हे॰ चन्द्रः ॥

श्रीपर्णम् । न॰ अग्निमन्थे ॥ वक्षी । पद्मे । श्रीः पर्णे॰ पर्णेषुवाऽस्य । अर्श आद्यच् ।

श्रीपर्णिका । स्त्री॰ कट्फले । कायफल॰ इ॰ प्र॰ ॥ काश्मर्याम् ।

गम्भार्याम् ॥ स्वार्थे कन् । ह्रस्वः ॥
श्रीपर्णी । स्त्री॰ काश्मर्याम् । गम्भार्याम् ॥ इठे । कुम्भ्याम् । वारिपर्ण्याम् ॥ श्रीयुक्तानिपर्णान्यस्याः ॰ श्रीपर्णेषुवस्याता । पाककर्णप र्णेत्यादिनाङीष् ॥ कट्फले ॥ शाल्मली ॥
श्रीपर्वत : । पुं॰ श्रीशैले ॥ तीर्थविशेषे ॥
श्रीपिष्ट : । पुं॰ सरलद्रुमरसे । सरलद्रवे ॥ श्रिय : सरलद्रुमस्यपिष्ट : ॰ तच्चूर्णेनजमितस्वात् ॥
श्रीपुत्र : । पुं॰ अश्वे ॥ कामदेवे ॥
श्रीपुष्पम् । न॰ लवङ्गे ॥ पद्मकाष्ठे ॥
श्रीप्रसूनम् । न॰ लवङ्गे ॥
श्रीफल : । पुं॰ बिल्वे । मालूरे ॥ श्रीप्रदः॰ श्रीप्रियंवाफलमस्य । शाकपार्थिवादिः । श्रीफलस्तुवरस्तिक्तोग्राहीरूक्षोऽग्निपित्तकृत् । वातश्लेष्महरोबल्योलघुरुष्णाश्चपाचनः । राजादनवृक्षे ॥
श्रीफला । स्त्री॰ आमलक्याम् ॥ नील्याम् ॥ क्षुद्रकारवेल्ल्याम् ॥
श्रीफलिका । स्त्री॰ आमलक्याम् ॥ क्षुद्रकारवेल्ल्याम् ॥ महानीलीवृक्षे ॥
श्रीफली । स्त्री॰ धात्र्याम् । आमलक्याम् ॥ नीलिकायाम् ॥
श्रीवल्ली । स्त्री॰ कटफलायाम् ॥

श्रीभद्र : । पुं॰ चित्रगुप्तसुतेकायस्थजातिविशेषे ॥
श्रीभद्रा । स्त्री॰ भद्रमुस्तके ॥
श्रीभागवतम् । न॰ पुराणार्के । महापुराणान्तर्गतपुराणविशेषे ॥
श्रीभ्राता । पुं॰ घोटके ॥ विधौ । चन्द्रे ॥ समुद्रोत्पन्नत्वात् ॥
श्रीमान् । पुं॰ तिलकवृक्षे । शुकके ॥ अश्वत्थवृक्षे ॥ शिवे ॥ विष्णौ ॥ कुबेरे ॥ इन्द्रे ॥ त्रि॰ मनोज्ञे ॥ धनिके । श्रीले ॥ सर्वातिशयितश्रियि । अखण्डितैश्वर्यसम्पन्ने ॥ महाराजचक्रवर्त्तिनि ॥ श्री : लक्ष्मीः सम्पत् ॰ शोभा॰ कान्तिर्वा॰ सा अस्मिन्नस्ति । तदस्यास्त्यस्मिन्निति मतुप् ॥ कचेयतूंषिसामानिसाद्रश्रीरमृतासताम् । तया युक्तामहात्मान : श्रीमन्त : शास्त्रसम्मता : ॥
श्रीमति : । स्त्री॰ राधायाम् ॥
श्रीमती । स्त्री॰ श्रीयुक्तायाम् ॥ येषितामभिधानस्यपूर्वमेतत्प्रयोजयेत् ॥
श्रीमद : । पुं॰ धनमदे । सर्वमदाधमे ॥ यथा । नह्यन्योजुषतोजोष्यान्बुद्धिभ्रंसीरजोगुणः । श्रीमदादाभिजात्यादिर्यत्रस्त्रीद्यूतमासवः ॥ हन्यन्तेपशवोयत्रनिर्दयैरजितात्मभि : । मन्यमानैरिमंदेहमजराम

सु॰ मन्त्ररम् ॥

श्रीमलापहा । स्त्री॰ भूम्यपवायाम् ।। गम्भपवार्यां ॥

श्रीमस्तक : । पुं॰ रसोने ॥ इ॰ वि॰ शेष : ॥

श्रीमुख : । पुं॰ सप्तमेवत्सरे ॥ तत्फलंयथा । सुभिक्षं चेममारोग्यं वर्षाकालं सुशोभनम् । सस्यवृद्धिं विजानीयात् ॰श्रीमुखेसुरवन्दिते ॥ ७ ॥ न॰ शोभितानने ॥

श्रीमूर्त्ति : । स्त्री॰ देवताविग्रहे ॥ विष्णुप्रतिमायाम् ॥

श्रीयुक्त : । श्रीयुत : । त्रि॰ लक्ष्मीविशिष्टे । श्रीमति ॥

श्रीरङ्ग : । पुं॰ पुण्यक्षेत्रविशेषे ॥ श्रीरङ्गाख्यं महापुण्यं यत्रसन्निहितोहरिरितितन्त्रम् ॥

श्रीरस : । पुं॰ सरलरसे । श्रीवेष्टे ॥

श्रीराग : । पुं॰ षड्रागान्तर्गततृतीयरागे ॥

श्रीराम : । पुं॰ दशरथात्मजे ॥

श्रील: । त्रि॰ श्रीमति । लक्ष्मीवति ॥ लक्ष्मणे । श्रियायुक्ते ॥ श्रीरस्योस्ति । सिध्मादित्वाल्लच् ॥ श्रियंलातिवाला॰ आदाने । आतोनुपसर्गेक :

श्रीलता । स्त्री॰ महाज्योतिष्मत्याम् ॥

श्रीवत्स पुं॰ विष्णोश्चिह्नविशेषे । कृष्णस्यदुर्वासस : पदाघातरूपेरेखाविशेषे ॥ महापुरुषलक्षणभूते॰ वक्षस्थस्य तवर्तदक्षिणावर्त्तरोमावर्त्तविशेषवा ॥ प्रदक्षिणावर्त्तविचित्ररोमश्रीवत्ससक्लिष्टविभूषिताङ्गमिति गरुडपुराणात् ॥ वदतिमहत्वम् । वद्व्यक्तायांवाचि । वृतृवदिहनिकमिकषिभ्य : सइतिस : । श्रीयुक्तोवत्स : ॥ विष्णौ । कृष्णे । गृहविशेषे ॥ सुरुङ्गाप्रभेदे ॥ अर्द्धेलोष्वजौ ॥

श्रीवत्सकी । पुं॰ हृत्तवक्रावर्त्तहये ॥

श्रीवत्सभृत् । पुं॰ हरौ । विष्णौ ॥

श्रीवत्सलाञ्छन : । पुं॰ विष्णौ । श्रीवत्सोमहापुरुषलक्षणभूतस्वेतरोमावर्त्तविशेषोलाञ्छनं चिह्नमस्येतिविग्रह : ॥

श्रीवत्साङ्क : । पुं॰ विष्णौ ॥

श्रीवराह : । पुं॰ आदिवराहे । विष्णौ ॥

श्रीवल्लभ : । पुं॰ परमात्मनि ॥ श्रिया : विद्याशक्तेर्वल्लभस्तदाकारे ॥

श्रीवाटी । स्त्री॰ नागवल्लीभेदे ॥

श्रीवारक : । पुं॰ शाकविशेषे । सितावरे । सूच्याह्वे । सूचीपत्रके । सिराला॰ सिरयारा॰ सिरियारी॰ इ॰ भा॰ प्र॰ ॥ तच्छाकप्रकारोयथा । श्रीवारकंदलंयाम्यमारमालिसुसाधितम् । पौष्टिकाशोषितं तैलेकासमर्दसमन्वितम् ॥ वातपित्तह

रावल्याविबन्धाध्मानमाशिनी । क
फकृन्मूत्रकृच्छ्रघ्नीभेदिनीसारसाध
नी ॥ सा० श्रीबालीत्यर्थः ॥

श्रीवाली । स्त्री० श्रीवारकी० शाकवि
शेषे ॥

श्रीवासः । पुं० विष्णौ । नारायणे ॥
श्रियोवासः । अत्रवसति० श्रीर
नपायिनी० वसतीत्यर्थः ॥ शिवे ।
हरे ॥ पद्मे । वृकधूपे । सरलद्रु
मे । श्रीवेष्टे ॥ अस्यगुणाः । श्रीवा
सोमधुरस्तिक्तः स्निग्धोष्णस्तुवरः
सरः । पित्तश्लेष्मातमूर्द्धाक्षिस्वररो
गकफापहः ॥ रक्षोघ्नोस्वेददौर्गं
न्ध्ययूकाकण्डूव्रणप्रणुत् ॥

श्रीवासवः । पुं० चित्रगुप्तात्मजेकाय
स्थजातिविशेषे ॥

श्रीविद्या । स्त्री० महाविद्याविशेषे ।
परदेवतायाम् । त्रिपुरसुन्दर्याम् ॥

श्रीवृक्षः । पुं० बिल्ववृक्षे ॥ अश्वत्थ
वृक्षे ॥ श्रीप्रदः ० श्रीप्रियोवावृक्षो
ऽस्य । शाकपार्थिवादिः ॥

श्रीवत्सः । पुं० अश्वस्यवक्षस्यावर्त्ते ॥

श्रीवत्सकी । पुं० श्रीवत्साकावर्त्तविशि
ष्टेऽश्वे ॥ तल्लक्षणंयथा । वक्षोमध्या
वर्त्तचतुष्टयस्य कण्ठेभवेद्यस्यचरोच
मानः । श्रीवत्सकीनामहयः सभ
र्त्तुः श्रीपुत्रपौत्रादिविवर्द्धयेस्यादि
ति ॥ श्रीवत्सकीवसतिचेद्रोमावर्त्ती
सुखिपिचेतितुरङ्गयन्ती ॥

श्रीवेष्टः । पुं० सरलद्रवस्यरसे । वृक
धूपे । श्रीवासे ॥ तस्यगुणायथा ।
श्रीवेष्टः कटुकस्तिक्तकषायः श्ले
ष्मपित्तजित् । योनिदोषरुजाजीर्णं
व्रणघ्नाध्मानदोषनुत् ॥ श्रीसंज्ञकः
० श्रियोवावेष्टोनिर्यासः ॥

श्रीशः । पुं० विष्णौ ॥ श्रीरामे ॥ श्रि
यईशः ॥

श्रीशैलः । पुं० भारतवर्षस्थपर्वत
विशेषे ॥ सिद्धिंतपोविधमनोविल
यासमर्थाश्रीशैलशृङ्गकुहरेषुकदोप
लभ्ये । गात्रंयथामरलताः परिवे
ष्टयन्तिकर्णेयथाविरचयन्तिखगाश्च
नीडम् ॥ इतियोगतारावली ॥

श्रीसंज्ञम् । न० लवङ्गे ॥ श्रियः संज्ञा
सञ्ज्ञायस्य ॥

श्रीहरिः । पुं० परमात्मनि ॥ श्रियं
जीवस्योपाधिभूतामविद्यांहरति०
आत्मज्ञानप्रदानेननाशयति० इति
श्रीहरिः ॥ श्रियंदधाने । विष्णौ ॥

श्रीहस्तिनी । स्त्री० भूरुण्ड्याम् । हाती
सुंडा० इ० गौ० दे० भा० प्र० ॥
श्रियाहस्तः ० श्रीहस्तः । सविद्य
तेयस्याः । अतइनिः ॥ यथा । ह
स्तंगृह्णातिहस्तयति । अवश्यंश्रि
यंहस्तयति । आवश्यकेतिणिनिः ॥

श्रुघ्निका । श्रुघ्नी । स्त्री० सर्जिकाक्षारे ॥

श्रुतम् । न० शास्त्रे ॥ शास्त्रविचारे ।

वेदे । श्रवणे । सुमना• द्रु• भा• ॥ त्रि• विश्रुते । आकर्णिते । श्रवणगोचरे ॥ श्रूयते• श्रवणं वा । श्रुश्रवणे । क्त : ॥ अश्राविता । श्रु• । क्त : ॥

श्रुतकीर्त्ति : । पुं• देवर्षौ ॥ स्त्री• जनकभ्रातुः कुशध्वजस्य कन्यायाम् । त्रि• कीर्त्तियुक्ते ॥

श्रुतदेवी । स्त्री• सरस्वत्यां ॥

श्रुतर्षि : । पुं• सुश्रुताद्यृषिषु ॥ सुश्रुताद्या : श्रुतर्षयड्डतित्रिकाण्डशेष : ॥

श्रुतश्रवा: । त्रि• आकर्णितयशसि ॥

श्रुतश्रवा । स्त्री• श्रीकृष्णस्यपितृष्वसरि । शिशुपालमातरि ॥

श्रुतश्रवोनुज : । पुं• शनैश्चरग्रहे ॥

श्रुतश्रेणी । स्त्री• द्रवन्त्यां ॥

श्रुतादानम् । न• ब्रह्मवादे ॥ द्रु• हा• ली• ॥

श्रुताध्ययनसम्पन्न : । त्रि• धर्मशास्त्रज्ञे ॥ यथा । श्रुताध्ययनसम्पन्ना : कुलीना: सत्यवादिन: । राज्ञासभासद: कार्या : शत्रौमित्रेचयेसमा : ॥

श्रुतान्वित : । त्रि• शास्त्रज्ञे ॥

श्रुतार्थ : । पुं• शाब्दबोधविषयीभूतार्थे । श्रवणमात्रबोध्येर्थे ॥ यथा । श्रुतार्थस्यपरित्यागादश्रुतार्थस्य कल्पनात् । प्राप्तस्यबाधादित्येवं परिसङ्ख्यात्रिदोषिकेति ॥

श्रुतायु : । पुं• सूर्यवंशीयनृपतिविशेषे ॥

श्रुति : । स्त्री• वेदे । आम्नाये । वेदाख्यपरदेवतायाम् ॥ विनियोगविधे : सहकारिभूतेप्रमाणविशेषे ॥ तत्रनिरपेक्षोरव : श्रुति : । साच त्रिविधा । विधात्री• अभिधात्री• विनियोक्त्रीच , तत्राद्यालिङ्गाद्यात्मिका• द्वितीयाव्रीह्यादिश्रुति : • यस्यशब्दस्यश्रवणादेवसम्बन्ध : प्रतीयतेसाविनियोक्त्री । साऽपि त्रिविधा । विभक्तिरूपा• एकाभिधानरूपा• एकरूपाचेति । तत्रविभक्तिश्रुत्याङ्गत्वम्• यथाव्रीहिभिर्यजेतेति• तृतीयाश्रुत्या• व्रीहीणांयागाङ्गत्वम्• तदपिपुरोडाशप्रकृतितया• अरुणयाएकहायन्यागवासोमंक्रीणातीत्यस्मिन्वाक्येआरुण्यस्यापितृतीयाश्रुत्याक्रयाङ्गत्वम्• तदपिगोरूपद्रव्यपरिच्छेदद्वारा• नतुसाक्षादमूर्त्तत्वात् । व्रीहीन प्रोक्षतीतिप्रोक्षणस्यव्रीह्यङ्गत्वं द्वितीयाश्रुत्या• तत्रप्रोक्षणं• नव्रीहिस्वरूपार्थंतस्यतेनविनाप्युपपत्ते : । किन्त्वपूर्वसाधनत्वप्रयुक्तम्• व्रीहीनूप्रोक्ष्ययागानुष्ठानेऽपूर्वानुपपत्ते : । एवंसर्वत्राङ्गेषु• अपूर्वप्रयुक्तमङ्गत्वंबोध्यम् । एवमिमामप्यभाषन्रसनामृतस्रोतस्त्वाभिधानीमा

श्रुति :

दृत्त० इत्यत्र० द्वितीयाश्रुत्या० म
न्त्रस्याश्वाभिधानाङ्गत्वम् । यदाश्वव
नीयेजुहोतीत्याहवनीयस्यहोमाङ्ग
त्वं सप्तमीश्रुत्या । एवमन्योपिविभ
क्तिश्रुत्याविनियोगोज्ञेय : । पशुना
यजेतेत्यत्र एकत्वपुंस्त्वयो: सामाना
धिकरण्यश्रुत्याकारकाङ्गत्वम् । य
जेतेत्याख्याताऽभिहितसङ्ख्याया
भावनाङ्गत्वमसमानाभिधानश्रुतेरे
वपदश्रुत्याचयाग ङ्गत्वम्० नचामू
र्त्तायास्तस्या : कथंभावनाङ्गत्वम्०
कर्तृपरिच्छेदद्वारातदुपपत्ते : । क
र्त्ताचात्रोपलभ्य : ० आख्यातेनहि
भावनोच्यते० साचकर्त्तारंविनाऽनु
पपन्नेतितमाक्षिपति । सेयंश्रुति
र्लिङ्गादिभ्य : प्रबला० लिङ्गादिषु
नप्रत्यक्षोविनियोजक : शब्दोस्ति०
किन्तुकल्प्य : । यावत्तेविनियो
जक : शब्द : कल्प्यते० तावत्प्र
त्यक्षयाश्रुत्याविनियोगस्य क्लृप्तत्वेन
तेषांकल्पकत्वशक्तिर्व्याहतत्वात् । अ
तएवैन्द्र्यालिङ्गेनेन्द्रोपस्थानार्थत्व
म्० किन्त्वैन्द्र्यागार्हपत्यमुपतिष्ठत
इत्यत्र० गार्हपत्यमितिद्वितीया
श्रुत्या० गार्हपत्योपस्थानार्थत्वम् ॥
अवदेवीगीतायांदेवीवाक्यंयथा ।
सर्वज्ञाया : सर्वशक्तेर्मेकोवेद :
समुत्थित: । अज्ञानस्यममाभावा-
दप्रमाणानवश्रुतिरितिसर्वज्ञात्-
सर्वशक्तेश्चमत्तइतिपाठेतुमत्तोमत्
स्वरूपादित्यर्थ : ॥ प्रयोगविध्युप
योगिनिप्रमाणविशेषे ॥ तत्रक्रमप
रंवचनंश्रुति : । तच्चद्विविधम् ।
केवलक्रमपरम्० तद्विशिष्टपदार्थ
क्रमपरञ्च । तत्रवेदंकृत्वावेदिंक
रोतीतिकेवलक्रमपरम्० वेदि
करणादेर्वचनान्तरप्राप्तत्वात् । वष
ट्कर्त्तु : प्रथमभक्षइतितुक्रमवि-
शिष्टपदार्थपरम्० एकप्रसरताभ
ङ्गभयेनभक्षानुवादेनक्रममात्रस्यवि
धातुमशक्यत्वात् । सेयंश्रुतिरित
रप्रमाणापेक्षयाबलवती० तेषांव
चनकल्पनद्वाराक्रमप्रमाणत्वात् ।
अतएवाश्विनग्रहस्यपाठक्रमात्तृ-
तीयस्यापिग्रहणप्रसक्तावाश्विनोद
शमोगृह्यतइतिवचनाद्दशमस्यैवग्र
हणमित्युक्तम् । कर्ण । अस्यप
र्याया । कर्णशब्दस्तोत्रेचश्रुति:
स्त्रीश्रवणंश्रव : ॥ अस्यशुभाशुभ
लक्षणं यथा । रक्तात्यपरुषस्त्रस्तक
र्णा : स्यु : पापमृत्यव : । निर्मां
सेश्चिपिटेभोगा: कृपणाह्रस्वकर्ण
का : ॥ शङ्कुकर्णाश्चराजानोरोम
कर्णा : शतायुष : । हस्तत्कर्णाश्च
राजानोधनिन : परिकीर्त्तिता :
॥ श्रवणे । वाक्यजनितवाक्या
र्थविज्ञाने ॥ मननंनिदिध्यासन
सहकृतेश्रवणज्ञाने ॥ श्रोत्रकर्मणि॥

वार्त्तायाम् ॥ अभ्यासे ॥ षड्जादिस्वरारम्भकावयवेशब्दविशेषे ॥ तदुक्तम् । प्रथमश्रवणाच्छब्दः श्रूयतेह्रस्वमात्रकः । साश्रुतिः सम्यग्विज्ञेयास्वरावयवलक्षणेति ॥ अव गमे ॥ श्रूयते । स्त्रियांक्तिन्निति कर्मणिक्तिन् ॥ श्रूयतेधर्मोऽनयेति वा । श्रुयजीषिस्तुभ्यः करणइति क्तिन् ॥

श्रुतिकटः । पुं॰ प्रायश्चित्ते ॥ सर्पे ॥ पापशोधने । प्रायश्चित्ते ॥ इ॰ मेदिनिहेमचन्द्रौ ॥

श्रुतिकटुः । पुं॰ कठोरशब्दे ॥

श्रुतिजीविका । स्त्री॰ स्मृतौ ॥

श्रुतितत्पर । त्रि॰ वेदाभ्यासरते ॥ सकर्णे ॥

श्रुतिधरः । त्रि॰ श्रुतमात्रेणधारके ॥ तदौषधमुक्तंगारुडेयथा । हरिरुवाच । हस्तिकर्णरजोवैमूलंगृहीत्वाचूर्णयेद्धर । सर्वरोगविनिर्मुक्तंचूर्णंपलशतंशिव ॥ सक्षीरं भक्षितंकुर्यात्मन्दाहेनवपध्वज । नरंश्रुतिधरंशूरंमृगेन्द्रगतिविक्रमम्-पद्मगौरप्रतीकाशंयुक्तंदशशतायुषा । षोडशाब्दाकृतिंविप्रसततंदुग्धभोजितम् । मधुसर्पिः समायुक्तंजग्धमायुष्करंभवेत् । तज्जग्धं मधुनासार्द्धंदशवर्षसहस्रिणम् । कुर्यान्नरंश्रुतिधरंप्रमदाजनवल्लभ-

मिति ॥ १८१ अध्यायः ॥

श्रुतिवर्ज्जितः । त्रि॰ बधिरे ॥ नास्तिके ॥ श्रुतिभ्यां॰ श्रुत्यावावर्ज्जितः ॥

श्रुतिवेधः । पुं॰ कर्णवेधे ॥

श्रुतिस्फोटा । स्त्री॰ कर्णस्फोटायाम् । त्रिपुटायांलतायाम् ॥

श्रुतोपनिषत्कः । त्रि॰ ज्ञानिनि ॥

श्रेटी । स्त्री॰ लीलावत्युक्ताङ्कविशेषे ॥

श्रेणिः । पु॰ स्त्री॰ वीथ्याम् । आली । पङ्क्तौ ॥ समानशिल्पिसंहतौ । कारुसंहतौ । एकेनशिल्पेनपण्येनवायेजीवन्ति॰ तेषांसमूहे ॥ श्रयति॰ श्रीयतेवा । श्रिञ्॰ । वह्निश्रीतिनिः ॥ एकमुख्येसजातिसमूहे ॥ सेकपात्रे ॥

श्रेणिकः । पुं॰ मगधदेशीयनृपतिविशेषे ॥ इतिहेमचन्द्रः ॥

श्रेणी । स्त्री॰ श्रेणिशब्दार्थे ॥

श्रेणीधर्मः । पुं॰ वणिगादीनांधर्मे ॥

श्रेयः । न॰ मुक्तौ । निर्वाणे । निःश्रेयसे । वेदबोधितेपरमपुरुषार्थे । स्वरूपावस्थाने । अनपायिसुखाविलक्षणे । आगमज्ञापितेहिते ॥ यथा । इहैवनरकव्याधेश्चिकित्सांनकरोतियः । गत्वानिरौषधंदेशंव्याधिस्थः किंकरिष्यति ॥ यावत्तिष्ठतिदेहोयतावत्तत्त्वंसमभ्यसेत् । सन्दीप्तेभवनेकोनुकूपंखनतिपार्वे

ति । व्याघ्रीवास्ते जराचायुर्याति भिन्नघटाम्बुवत् । निघ्नन्तिरिपुवद्रोगास्तस्माच्छ्रेय : समाचरेत् ॥ यावन्नाश्रयतेदु : खंयावन्नायान्तिचापद : । यावन्नेन्द्रियवैकल्यंतावच्छ्रेय : समाचरेत् ॥ कालोनत्वायतेनानाकार्यै: संसारसम्भवै : । सुखदु : खैर्जनोहन्तनवेत्तिहितमात्मन : इतिकुलार्णवेप्रथमोल्लास : ॥ कल्याणे । मङ्गले । शुभे ॥ धर्मे । । वेदविहितैप्राणिनामभ्युदयनि : श्रेयससाधने॰ प्रवृत्तिनिवृत्तिलक्षणे । पुण्ये ॥ त्रि॰ अतिप्रशस्ते । शस्ते ॥ इदमनयोरतिशयेनप्रशस्तम् । द्विवचनेतीयसुन् । प्रशस्यस्यश्र : । विद्याद्यधिके ॥ धर्मार्थावुच्यतेश्रेय : ॰ कामार्थौ॰ धर्मएवच । अर्थएवेहवाश्रेयस्त्रिवर्गइतितुस्थिति : ॥ अयमुपदेशोबुभूत्सून्प्रतिबोध्य : ॥

श्रेयसी । स्त्री॰ करिपिप्पल्याम् ॥ अभयायाम् । पाठायाम् । शठाम्बायाम् । श्रेष्ठायाम् ॥ उगित्वान्ङीप् ॥

श्रेयांस : । पुं॰ व्रताईद्विशेषे ॥

श्रेष्ठ : । पुं॰ कुबेरे । धनदे ॥ विप्रे ॥ नृपे ॥ मुख्यप्राणे । न॰ गोदुग्धे । गव्ये ॥ त्रि॰ अग्र्ये । वरे । पुष्कले । सत्तमे । अतिशोभने ॥ अयमेषामतिशयेनप्रशस्य : । अतिशायनेतमबिष्ठनावितीष्ठन् । प्रशस्यस्यश्र : ॥ प्रधानभूते ॥ ज्येष्ठे ॥ वृद्धे ॥

श्रेष्ठकाष्ठ : । पुं॰ शाकवृक्षे ॥

श्रेष्ठता । स्त्री॰ श्रेष्ठत्वे ॥

श्रेष्ठा । स्त्री॰ स्थलपद्मिन्याम् । उत्तमायांनार्याम् ॥ ज्येष्ठानक्षत्रे ॥

श्रेष्ठाम्लम् । न॰ वृक्षाम्ले ॥

श्रेष्ठी । पुं॰ कुलीनमर्थशिल्पिनि ॥

श्रोण : । त्रि॰ जङ्घाहीनेपङ्गौ ॥ श्रोणति । श्रोणृसङ्घाते । पचाद्यच् ॥ यद्वा । शृणोति । श्रु॰ । बाहुलकान्न : ॥

श्रोणि : । स्त्री॰ कट्याम् ॥ श्रोणति । श्रोण्॰ । इन् ॥ यद्वा । श्रूयतेपुंभि : । श्रु॰ । वह्निश्रिश्रुयुद्रुग्लाहात्वरिभ्योनिदितिनि : ॥ पथि ॥

श्रोणीफलम् । न॰ कटौ ॥

श्रोणीफलकम् । न॰ कटिपार्श्वे । कटौ ॥ श्रोणि: फलकमिव॰ चर्माकारत्वात् ॥

श्रोणिबिम्बम् । न॰ कटिसूत्रे ॥

श्रोणिसूत्रम् । न॰ खड्गबन्धनसूत्रे । परतला॰ इ॰ भा॰ प्र॰ ॥

श्रोणी । स्त्री॰ कट्याम् ॥ पथि ॥ कृदिकारादितिपक्षेङीष् ॥

श्रोतव्य : । त्रि श्रवणीये । श्रोतुंयोग्ये । श्रोतव्य : श्रुतिवाक्येभ्योम

त्वच्छ्रोपपत्तिभिः ॥
श्रोतः । न० कर्णे ॥
श्रोता । त्रि० श्रवणकर्त्तरि । योह्यर्थं सम्यगवबुध्यते सएवश्रोताभवति ॥ यथा । बक्तुरेवहितत्जाड्यं श्रोतायदनबुध्यते । इति ॥ अपिच । बोधविहीनैश्रोतरिवक्तुर्वाक्यं प्रयातिवैफल्यम् । नयनविहीने भर्त्तरिलावण्यमिवस्वञ्जनाक्षीणामिति ॥ शृणोति । श्रु० । तृच् ॥
श्रोत्रम् । न० श्रुतौ । कर्णे । शब्दग्रहणलिङ्गे इन्द्रियविशेषे । शब्दाभिव्यञ्जकेन्द्रिये ॥ शृणोत्यनेनेतिश्रोत्रम्० शब्दश्रवणं प्रतिकरणम् । श्रूयतेऽनेनवा । श्रु० । ष्ट्रन् । इयमाश्रुभसिभ्यस्त्रिनितिष्ट्रन् ॥ कर्णशष्कुल्यवच्छिन्नं नभएवश्रोत्रम् ॥
श्रोत्रियः । पुं० छान्दसे । अधीतवेदे । विद्याचारवति । स्नातके ॥ छन्दोऽधीते । श्रोत्रियश्छन्दोधीतइति० छन्दः शब्दस्य० श्रोत्रभावोघन्प्रत्ययश्छन्दोध्यायिनिनिपात्यते ॥ छन्दोमःवाध्यायिनि ॥ श्रोत्रियलक्षणं यथा । जन्मनाब्राह्मणोज्ञेयः संस्कारैर्द्विजउच्यते । विद्याभ्यासीभवेद्विप्रः श्रोत्रियस्त्रिभिरेवहि ॥ इतिपाद्मे उत्तरखण्डे ११६ अध्यायः ॥ अपिच । एकां शाखांसकल्पांवाषड्भिरङ्गैरधीत्यच । षट्कर्मनिरतोविप्रः श्रोत्रियोनामधर्मवित् ॥ इतिदानकमलाकरः ॥
श्रोत्रियता । स्त्री० श्रौते । श्रोत्रियत्वे ॥
श्रोत्रियत्वम् । न० श्रौते । वेदवेदाङ्गपारगत्वे । वेदान्तार्थपारगत्वे ॥ श्रोत्रियस्यभावः । त्व: श्रोत्रियेकामराहित्यात्सर्वानन्दाः सङ्गस्थिताः । सोश्नुतेसकलान्कामान्सहेतिप्राहतित्तिरिः ॥
श्रौतम् । न० अग्नित्रये । गार्हपत्याहवनीयदक्षिणाग्निषु० त्रि० वेदसम्बन्धे ॥ श्रुतौभवम्० श्रुतेरिदमित्यादर्थेषुवा० शैषिकोऽण् ॥ श्रुतिविहितधर्मादौ ॥ यथा । धर्मज्ञैर्विहितोधर्मः श्रौतः स्मार्त्तोद्विधाद्विजैः । दानाग्निहोत्रसम्बन्धमिज्याश्रौतस्यलक्षणम् ॥ स्मार्त्तोवर्णाश्रमाचारोयमैश्चनियमैर्युतः । पूर्वेभ्योवेदयित्वेह० श्रौतं सप्तर्षयोब्रुवन् ॥ ऋचोयजूंषिसामानिब्रह्मणोऽङ्गानिसाश्रुतिः । मन्वन्तरस्यातीतस्यस्मृत्वातन्मनुरब्रवीत् ॥ ततः स्मार्त्तः स्मृतोधर्मोवर्णाश्रमविभागशः । एवंवैद्विविधोधर्मः शिष्टाचारः सउच्यते । विज्ञेयः श्रवणाच्छ्रौतः स्मरणात् स्मार्त्त उच्यते ॥ इज्यावेदात्मकः

श्रौतः स्मार्त्तोश्चाग्निमात्मकइति मात्स्ये १२० अध्यायः॥
श्रौतयज्ञः। पुं॰ अग्निष्टोमादयश्चपौर्णमासादौ॥ स्तुत्याप्रोक्तः श्रौतः। अण्। सचासौयज्ञश्च॥
श्रौतसंस्कृतिः। स्त्री॰ वेदोक्तसंस्क्रियायाम्। यथा। गृहस्थस्यक्रियाः सर्वाआगमोक्ताः कलौशिवे। नान्यमार्गैः क्रियासिद्धिः कदापिगृहमेधिनाम्॥ भैरवकीर्त्याग्निमेदिविवेदोक्तं दण्डधारणम्। कलौनास्त्येवतत्त्वज्ञे यतस्तच्छ्रौतसंस्कृतिरिति म॰ नि॰ तन्त्रम्॥
श्रौषम्। न॰ श्रोत्रियतायाम्। श्रोत्रियस्यकर्मभावोवा। युवादित्वादण्॰ श्रोत्रियस्ययलोपश्च॥ श्रोत्राणांसमूहे॥ भिक्षादण्॥
श्रौषट्। अ॰ देवहविर्दाने॥ श्रूयतेऽनेन। श्रु॰। बाहुलकात्॰ डौषट्॥
श्लक्ष्णः। त्रि॰ स्तोके। अस्यपर्यायायथा। स्तोकाल्पक्षुल्लकाः सूक्ष्मंश्लक्ष्णंदभ्रंकृशंतनु। स्त्रियांमात्राचुटिः पुंसिलवलेशकणाणवः॥ इति॥ मनोहरे॥ सुखस्पर्शे। अपरुषे। स्निग्धे॥ श्लिष्यते॰ श्लिष्यतिवा। श्लिषश्चालिङ्गने। श्लिषेरच्चोपधायाइतिक्सः॥
श्लक्ष्णकम्। न॰ पूगफले॥
श्लक्ष्णतीक्ष्णाग्रम्। न॰ शृङ्गे। शूके॥ श्लक्ष्णंकृशञ्चतत्तीक्ष्णञ्च॰ तच्चतदग्रञ्च॥
श्लक्ष्णत्वक्। पुं॰ अश्मन्तकवृक्षे॥ सुन्दरवल्कले॥
श्लक्ष्णभूमिः। स्त्री॰ कृष्णमृदि॥
श्लथः। त्रि॰ शैथिल्याढ्ये। शिथिले॥
श्लाघनम्। न॰ अभिनन्दने॥
श्लाघा। स्त्री॰ अभिलाषे। इच्छायाम्॥ उपासनौ। परिचर्यायाम्॥ प्रशंसायाम्। अविद्यमानगुणसम्बन्धज्ञापने॥
श्लाघिष्ठः। त्रि॰ श्लाघ्यतमे॥
श्लाघ्यः। त्रि॰ प्रशंस्ये। श्लाघनीये। स्तुत्ये॥ आशास्ये॥
श्लिकुः। पुं॰ सेवके। भृत्ये॥ श्लिष्यति॰ यावत्कार्यंलगतिव्याप्रियते। श्लिषश्चालिङ्गने। श्लिषेः कद्येतिकुः कस्यान्त्यादेशः॥ षिङ्गे॥ न॰ ज्योतिःशास्त्रे॥
श्लिषा। स्त्री॰ आलिङ्गने॥
श्लिष्टः। त्रि॰ सम्पृक्ते। गत्यर्थाऽकर्मकेति॰ श्लिषेः क्तः॥ श्लेषयुक्तशब्दादौ। भिन्नार्थैकरूपान्वितवाक्ये॥ तल्लक्षणं यथा। श्लिष्टमिष्टमविस्पष्टमेकरूपान्वितं वचइति॥
श्लीपदम्। न॰ पादरुग्भिदि। पादवल्मीके॥ अस्यनिदानन्तु। यः सज्वरोवङ्क्षणयोर्भृशार्त्तिः शो

थोन्त्यांपादगतः क्रमेण। तच्छ्लोपदंश्यात्कारकर्णनेत्रभिश्रोष्ठनासास्वपिकेचित्तु:॥ पुराणोदकभूयिष्ठाः सर्वत्तुषुचशीतलाः। ये देशास्तेषुजायन्ते श्लीपदानिविशेषतः। इति॥ विशेषतइत्युक्तेरन्यत्रापिभवतीतिबोध्यते॥

श्लीपदप्रभवः। पुं॰ आम्रवृक्षे॥

श्लीपदापहः। पुं॰ पुत्रजीववृक्षे॥

श्लीपदी। त्रि॰ व्याधिनाम्नुलचरणे॥

श्लीलः। त्रि॰ लक्ष्मीवति। श्रीलि॥ श्रियंलाति। ला॰। कः। कपिलकादित्वाल्लत्वम्॥

श्लेषः। पुं॰ संयोगे। सम्भौ॥ शब्दालङ्कारविशेषे। तस्यलक्षणादयोयथा। वाच्यभेदेनभिन्नायद्युगपद्भाषणस्पृशः। श्लिष्यन्तिशब्दाः श्लेषोसावक्षरादिभिरष्टधा। अर्थभेदेन शब्दभेदइतिदर्शने॰ काव्यमार्गेस्वरोनगण्यतइतिचमये॰ वाच्यभेदेन भिन्नाअपिशब्दायद्युगपदुच्चारणेन श्लिष्यन्ति॰ भिन्नस्वरूपमपह्नुवते॰ सश्लेषः। सचवर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनानांभेदादष्टधा। क्रमेणोदाहरणम्। अलङ्कारः शङ्काकरनरकपालः परिजनो विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः। अवस्थेयं स्थाणो रपि भवति सर्वा मरगुरोर्विधौ वक्रे मूर्ध्नि स्थितवति वयं केपुनरमी॥ विधौचन्द्रेएव॰ विधौ दैवेवक्रे कुटिलेएव॰ वक्रे प्रतिकूले॰ मूर्ध्नि मस्तकेस्थितवतिसतिसर्वामरगुरोर्महादेवस्याप्येयमवस्थाभवति॰अमीमानुषावयंपुनः केकस्यांगणनायामित्यर्थः। अत्रविधाविव्युवर्णे॰ वर्णयोः श्लेषः॥ पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव। विलसत्करेणुगहनं सम्प्रति सममावयोःसदनम्॥ भक्तिप्रह्वविलोकनप्रणयिनी। नीलोत्पलस्पर्धिनी। ध्यानालम्बनताम्। समाधिनिरतैर्नीते हितप्राप्तये। लावण्यैकमहानिधौ रसिकतां लक्ष्मीदृशौ तन्वती युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः॥ एषवचनश्लेषोपि॥ महदे सुरसन्धम्मे तमव समासङ्गमागमाहरणे। हरबहुसरणं तं चित्तमोहमवसरउमेसहसा॥ अयं सर्वाणि शास्त्राणिहृदिज्ञेषुचवक्ष्यति। सामर्थ्यकृदमित्राणांमित्राणाञ्चनृपात्मजः॥ रजनिरमणमौलेः पादपद्मावलोकक्षणसमयपराप्तापूर्वसम्पत्सहस्रम्। प्रथमनिवहमध्ये जातुचित्तप्रसादादहमुचितरुचिः स्यांनन्दितासातथामे॥ सर्वस्वंहरसर्वस्त्वंभवच्छेदतत्परः। नयोपकार

साम्यम् आयासितनुवर्त्तनम् ।
भेदाभावात्प्रकृत्यादेर्भेदोऽपि नव-
मो भवेत् । नवमोऽप्ययमपि भिन्न-
क्रमः ॥ उदाहरणम् । योऽसकृ-
त्परगोत्राणां पक्षच्छेदक्षणक्षमः ।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स रा-
जते ॥ अत्र प्रकरणादिनियमाभा-
वात् द्वावप्यर्थौ वाच्यौ ॥ अर्थाल-
ङ्कारविशेषः ॥ तल्लक्षणादयो यथा ।
श्लेषः स वाक्य एकस्मिन् यत्रानेका-
र्थता भवेत् ॥ एकार्थप्रतिपा-
दकानामेव शब्दानां यत्रानेकोऽर्थः
स श्लेषः । उदाहरणम् । उदय-
मयते दिङ्मालिन्यं निराकुरुतेत-
राम् नयति निधनं निद्रामुद्रां प्रव-
र्त्तयति क्रियाः । रचयतितरां स्वै-
राचारप्रवर्त्तनकर्त्तनम् बत बत ल-
सत्तेजःपुञ्जो विभाति विभाकरः ॥ अ-
त्राभिधाया अनियन्त्रणात् द्वावप्य-
र्कभूपौ वाच्यौ ॥ श्लेषणम् ।
श्लिष + । घञ् ॥ ऐक्ये । श्लिष्य-
ति । श्याद्यधौतिणः ॥

श्लेषणम् । न० एकीभवने ॥

श्लेष्मकः । पुं० कफे ॥

श्लेष्मकरः । त्रि० कफवर्द्धकद्रव्येषु ॥ तानि यथा । भोजनानन्तरं स्ना-
नं जलपानं तृषां विना । तिलतैलं
स्निग्धतैलं स्निग्धामामलकीद्रवम् ॥
पर्युषितान्नं तक्रञ्च पक्वं रम्भाफलं द-
धि । माध्वीं शर्करातोयं सुस्नि-
ग्धस्थलसेवनम् ॥ नारिकेलोदकं
रूक्षस्नानं पर्युषितं जलम् । तरमु-
ज्जापक्वफलं सुपक्वं कर्कटीफलम् ॥
प्रातःस्नानं च वर्षासु मूलकं श्लेष्म-
कारणम् । तज्जलं ब्रह्मरन्ध्रे च मस्त-
होयं विनाशनमिति० ब्र० वै० १६
अध्यायः ॥

श्लेष्मघना । स्त्री० मल्ल्याम् ॥ के-
तक्याम् ॥

श्लेष्मघ्नः । त्रि० श्लेष्मनाशके ।
न० मधुनि ॥ श्लेष्माणं हन्ति ।
हन० । अमनुष्ये तिटक ॥

श्लेष्मघ्ना । स्त्री० मल्लिकायाम् ॥
कम्पल्लके ॥ इ० हे० न्द्रः ॥

श्लेष्मघ्नी । स्त्री० मल्लिकायाम् ॥ ज्यो-
तिष्मत्याम् ॥ टित्वान्ङीष् ॥ त्रि-
कटुनि । व्योषे । इ० मे० करः ॥

श्लेष्मणः । पुं० श्लेष्मले । बहु-
वारके ॥ सञ्चितकफे । त्रि०
श्लेष्मशीते । श्लेष्मास्त्यस्य । पा-
मादित्वान्नः ॥

श्लेष्मणा । स्त्री० वृक्षभेदे । तपर्ग्या-
म् । गुरुस्कन्धे ।

श्लेष्मा । पुं० कफे ॥ तत्प्रकोपहे-
तुर्यथा । गुरुमधुररसातिस्निग्ध-
दुग्धेक्षुभक्ष्यद्रवदधिदिननिद्राप-
यःसर्पिःप्रपूरैः । तुहिनपतनका-
ले श्लेष्मणः सम्प्रकोपः प्रभवति

दिवसादौभुक्तमात्रेवसन्ते ॥ तस्य शमनं यथा । स्तैमित्यंमधुरास्यता शिशिरताशैत्यंप्रसेकोमलप्राचुर्यंस्थिरतारसस्यलवणः कण्डूरतिस्वल्पता । आलस्यंचिरकारिताकठिनताशोथारुचिः स्निग्धतातन्द्रात्वप्युपदेहकासगुरुताश्वेताः कफोत्थारुजः ॥ तत्प्रशमनताकारणंयथा । गुरुशीतमृदुस्निग्धंमधुरस्थिरपिच्छिलाः । श्लेष्मणः प्रशमंयान्तिविपरीतगुणैर्गुणाः ॥ रूक्षक्षारकषायतिक्तकटुकव्यायामनिष्ठीवनस्त्रीसेवाध्वनियुद्धजागररतिक्रीडापदाघातनम् । धूमात्युष्णशिरोविरेकवमनम्दीपनाद्यादिकंपानाहारविहारभेषजमिदंश्लेष्मार्तमुग्रंजयेत् ॥ श्लिष० । सर्वधातुभ्योमनिन् ॥

श्लेष्मलः । पुं० शेलौ । श्लेष्मातके ॥ त्रि० श्लेष्मयुक्ते । कफिनि ॥ श्लेष्मास्यास्ति । सिध्मादिभ्यश्चेतिपक्षेलच् ॥

श्लेष्मवान् । त्रि० श्लेष्मणि ॥ लज्ञभावेमतुप् ॥

श्लेष्महः । पुं० कटफलवृक्षे ॥

श्लेष्महरः । त्रि० श्लेष्महरद्रव्येषु ॥ तानियथा । वह्निस्वेदंभृष्टभङ्गपक्कतैलंविशेषकम् । भक्तंशुष्कभक्ष्यश्चशुष्कपक्कहरीतकी ।

पिण्डारकमपक्कञ्चरम्भाफलमपक्ककम् । विश्वबारंसिन्धुबारमनाहारमपानकम् ॥ सघृतंरोचनाचूर्णं सघृतंशुभ्रकंरम् । मरीचंपिप्पलीशुष्कमाद्रकंजीरकंमधु ॥ द्रव्याण्येतानिगव्यविसद्यश्लेष्महराणिचेतिब्र० वै० १६ऽध्यायः ॥

श्लेष्मातः । पुं० श्लेष्मातके । बहुवारके ॥

श्लेष्मातकः । पुं० शेलौ । शीतौ । बहुवारके । लसोडा० इ० भा० प्र० ॥ श्लेष्माणमततिसाततत्यगमने । कृत्भिक्षिपसंज्ञयोरपूर्वस्यापि ॥

श्लैष्मिकः । त्रि० कफजे ॥ श्लेष्मणः शमनंकोपनंवा । वातपित्तश्लेष्मभ्यः शमनकोपनयोरितिठञ् । कफशमने ॥

श्लोकः । पुं० पद्ये । अनुष्टुप्प्रभेदे ॥ यथा । पञ्चमोलोगुरुः षष्ठः सप्तमस्तुसमेलघुः । पादेश्विषमेगश्चेच्छ्लोकोऽनुष्टुप्चकीर्त्तितः ॥ क्वचित्पादेतुविषमेपञ्चमाद्यास्त्रयोपिलाः । तेक्वापिसर्वेगाः श्लोकेक्वचित्के बलपञ्चमः ॥ यशसि ॥ यथा । पुण्यश्लोकोनलोराजापुण्यश्लोकोयुधिष्ठिरः । पुण्यश्लोकाचवैदेहीपुण्यश्लोकोजनार्दनः ॥ वेदमन्त्रे ॥ सङ्घाते । श्लोक्य

ते ॥ श्लोकुसङ्घाते । घञ् ॥
श्लोककार । पुं॰ वाल्मीकिमुनौ ॥ श्लो
कङ्कृति ॥ श्लोकं करोतिकर्मण्यण् ॥
श्लोक्य : । त्रि॰ पुण्यकीर्त्त्यर्हे ॥
श्व : कार्य्यम् । न॰ आगामिन्यह्नि
कर्त्तव्ये ॥ यथा । श्व : कार्यमद्य
कुर्वीतपूर्वाह्णे चापराह्णिकम् ॥
नहिमृत्यु : प्रतीक्षेत कृतंवाप्यथवा
कृतम् ॥ इतिकुलार्णवतन्त्रम् ॥
श्व : श्रेयसम् । न॰ शिवे । भद्रे ।
कल्याणे । मङ्गले । शुभे । श्वस्
शब्दोऽपरपदस्थाश्चश्व : शब्द : काल
वाच्यपि । अभिधत्तेस्वभावेन॰ सै
नैमीमङ्गलार्थकाविति पाणिनीयम
तदर्पण : ॥ परमात्मनि । परान
न्दे । प्रशस्ते । शान्ते । सुखे ॥
श्व : आगामीश्रेयोऽस्य । श्वसीव
सीय : श्रेयसङ्कल्पश्च समासान्त : ॥
श्व : श्रेयइतिविग्रहे॰ मयूरव्यंस
कादित्वात्समास : ॥
श्वगण : । पुं॰ कुक्कुरसमूहे ॥
श्वगणी । त्रि॰ शुनांपोषकी ॥ श्वगणो
ऽस्यऽस्तीति : ॥
श्वग्राही । त्रि॰ शुनांपोषकी ॥ शुनां
ग्राही ॥
श्वचक्रम् । न॰ कुक्कुरचेष्टायाम् ॥ प
श्यवाराह्याम् ॥
श्वदंष्ट्रक : । पुं॰ गोक्षुरे ॥
श्वदंष्ट्रा । स्त्री॰ गोकण्टके । गोक्षुरके

शुनोदंष्ट्रेव ॥
श्वधूर्त्त : । पुं॰ शृगाले ॥
श्वा । पुं॰ ग्राममृगे । अस्य पर्याया य
था । कौलेयक : सारमेय : कुक्कु
रोमृगदंशक : । शुनकोभषक: श्वा
स्यादिति ॥ शुनोलक्षणं यथा । पा
दा : पञ्चनखास्त्रयो ऽग्रचरणा : ष
ड्भिर्नखैर्दक्षिण स्तास्त्रोष्ठाग्रनखो
मृगीश्वरगतिर्जिघ्रन्भुवं यातिच ।
लाङ्गूलंससटं॰ दृगृक्षसदृशी कर्णौच
लम्बौ मृदू यस्य स्यात् सकरोतिपो
ष्टुरचिरात्पुष्टांश्रियं वै गृहे ॥ इति
वाराही ॥ अस्यपरीक्षातुमृगयार्थं
शाकुनार्थं कौतुकार्थमपीक्षिता ।
श्वान : पोष्यास्ततस्तेषामचवक्ष्या
मिलक्षणम् ॥ गुणजातिप्रभेदेनशु
नोभेदाह्यनेकश : । सात्त्विकाराज
साश्चैवतामसाश्चविधामता: ॥ च
श्रान्ताश्चपरिक्षीणा : पविचा॰ स्व
ल्पभोजिन : । श्वानस्तेसात्त्विका :
प्रोक्ताहश्यन्तेचक्कचित्क्कचित् । १ ।
क्रुधाचडुभुजोदीर्घागुरुवक्षस्तनूद
रा : । जाङ्गलस्याजाङ्गिकाश्चगान
स्तेराजसामता : ॥ २ । अल्पश्रमे
णयेश्रान्तालम्बजिह्वागुरूदरा : ।
श्वानस्तेतामसाश्च या : सन्ध्याव
नसमाश्रया : ॥ ३ । ब्रह्मादिजाति
भेदेनचतुर्द्धासर्वएवहि । शुभादो ॥
र्घास्त्र्यक्तकर्णालघुपुच्छास्तनूदरा:

पाम्नया । वध्यवासांसिगृह्णीयु :
शय्याश्वाभरणानिचेतिमनु : ॥ च
ण्डाल : श्वपच : क्षत्तासूतोवैदेह
कस्तथा । मागधायोगवौचैवसप्त
तेन्त्यावसायिन : ॥ इत्यङ्गिरा : ॥
श्वपच : डोम० डुमडा० इ० भा०
प्र० ॥ श्वानंपचति । डुपचष् ० ।
पचाद्यच् ॥

श्वपदम् । न० कुक्कुरपादे ॥

श्वपाक : । पुं० निषादे । चंडाले ॥
तस्योत्पत्तिर्यथा । क्षत्तुर्जातस्तथो
ग्रायांश्वपाकइतिकीर्त्त्यते० इतिम
नु : । शूद्रेणवैश्यायांजात : क्षत्ता
० क्षत्रियेणशूद्रायांजाताउग्रा० ते
नतस्यांजात : श्वपाकइत्युच्यतइति
कुल्लूकभट्ट : ॥

श्वफल : । पुं० बीजपूरे ॥

श्वफल्क : । पुं० वृष्णिपुत्रे । अक्रूर
पितरि ॥

श्वफल्कपुत्र : । पुं० अक्रूराख्ययादवे ॥

श्वभीरु : । पुं० फेरौ । शृगाले ॥

श्वभ्रम् । न० भूछिद्रे । तत्पर्याया
यथा । कुहरंशुषिरंविवरंबिलम् ।
छिद्रंनिर्व्यथनंरोकंरन्ध्रंश्वभ्रंवपा
शुषिरिति ॥ श्वभ्रयति । श्वभ्रग
तौ । अन्त : । पचाद्यच् ॥ शुभ्रो
भगमभ्रंव्योमाम्बवा ॥ विदीर्णभू
भागे ॥

श्वयथु : । पुं० शोथे । त्वग्विवर्द्धने



श्वयति० श्वयनमनेनवा । टुओ
श्विगतिवृद्ध्यो : । ट्वितोऽथुच् ॥

श्वयीचि : । पुं० चन्द्रे ॥ व्याधौ ॥
श्वयति । टुओश्वि० । श्वयते
र्दिदितिईचि : । गुणायादेशौ ॥

श्ववृत्ति : । स्त्री० सेवायाम् । चाक
री० इ० भा० प्र० ॥ सेवातुदीन
इष्टिसंदर्शनस्वामितर्जननीचक्रिया
दिधर्मयोगात्० शुनोवृत्तिरिव ।
शुनइववृत्तिर्वा । सेवाश्ववृत्तिरा
ख्यातातस्मात्तांपरिवर्ज्जयेदिति
मनु : ॥

श्वव्याघ्र : । पुं० श्वापदे । व्याघ्रादि
हिंस्रपशौ ॥

श्वशुर : । पुं० पूज्ये ॥ पतिपत्न्यो :
पितरि ॥ पत्यु : पितापत्न्या : श्व
शुर : ० पत्न्या : पितापत्यु : श्व
शुर : ॥ शुद्धत्यास्वर्ये० पूजायांवा
। आशु अश्नुते० अश्नुतेवा । अशूव्या
प्तौ० संघातेच । आवश्विरादाबि
त्युरन् ॥

श्वशुरा । स्त्री० ब्राह्म्याम् ॥

श्वशुरौ । पुं० २ सहोक्त्या० श्वश्रू
श्वशुरयो : । श्वश्रूश्चश्वशुरश्च
तौ । श्वशुर : श्वश्वेतिपाणि
न्येकशेष : ॥

श्वशुर्य्य : । पुं० देवरे । श्याले ॥
श्वशुरस्यापत्यम् । राजश्वशुरा
द्यत् ॥

श्वश्रूः । स्त्री॰ सासुभिति । श्वशुरभार्यायाम् । पतिपत्न्योः प्रसवाम् । पत्युर्मातापत्न्याः श्वश्रूः॰ पत्न्याः मातापत्युः श्वश्रूः । श्वशुरस्त्री॰ श्वशुरस्योकाराकारलोपश्चेत्यूङ् । पुंयोगलक्षणस्यङीषोऽपवादः ॥

श्वश्रूश्वशुरौ । पुं॰ २ सश्रोश्चश्वशुरश्च ॥ श्वश्रूश्चश्वशुरश्चतौ । श्वश्रूः पूर्वनिपातोपमात्तुल्या प्रकीर्त्तितेतिश्वश्रूःश्वस्याभ्यर्हितत्वात्पूर्वनिपातः ॥

श्वः । अ॰ अनागतदिने ॥ आगामिअहः पृषोदरादिः । ऐषमोह्य श्वसोन्यतरस्यामितिनर्देशस्याचानुकूलः ॥

श्वसनः । पुं॰ स्पर्शने । वायौ ॥ मदनद्रुमे । मयनफलेतिप्रसिद्धे ॥ न॰ श्वसिते । श्वासे ॥ श्वसित्यनेन । श्वसप्राणने । ल्युट् ॥ निजर्लेविश्वसिति । नन्द्यादित्वाल्लुर्वा ।

श्वसना । स्त्री॰ श्वासोच्छ्वासवद्वायांधमन्याम् ॥

श्वसनाशनः । पुं॰ सर्पे ॥ श्वसनोऽशनंयस्यसः ॥

श्वसनेश्वरः । पुं॰ अर्जुनद्रुमे ॥

श्वसनोत्सुकः । पुं॰ अहौ । सर्पे ॥

श्वसितम् । न॰ श्वासे ॥ उच्छ्वासमारुते । फूत्कारे ॥ श्वसिति । श्वस॰

। क्त ॥

श्वस्तनः । पुं॰ भूतघ्ने । कुक्करौंधा॰ इ॰ भा॰ प्र॰ ॥

श्वस्तनः । त्रि॰ श्वोभवेवस्तुनि ॥ ऐषमोह्य श्वसोन्यतरस्यामिति॰ त्यप् भावेस्त्यू॰ स्त्री॰ तुट्च ॥ न॰ भविष्यत्काले । इतिराजनिर्घण्टः ।

श्वस्त्य । त्रि॰ श्वोभवे । श्वस्तने । ऐषमोह्य श्वसोन्यतरस्यामितित्यप् ॥

श्वानम् । न॰ शुनांसमूहे । खण्डिकादित्वादञ् ॥ पुं॰ कुक्कुरे ॥ इ॰ श॰ र॰ लौ ।

श्वानकः । पुं॰ शुनि ॥

श्वानचिल्लिका । स्त्री॰ शाकविशेषे । शुनकचिल्ल्याम् ॥

श्वानलीमापहः । पुं॰ तीर्थविशेषे ॥

श्वानी । स्त्री॰ शुन्याम् ॥

श्वापदः । पुं॰ व्याघ्रादिहिंस्रपशौ ॥ व्याघ्रादयोवनचराः पशवः श्वापदामताः ॥ शुनोदन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषुदीर्घोवाच्यइतिदीर्घः ॥ त्रि॰ शौवापदे ॥ श्वापदस्येदम् । श्वापदस्यान्यतरस्यामितिपाक्षिकऐच्निषेधः ॥

श्वाविन्-ट् । पुं॰ शल्यपशौ । साउ॰ इ॰ प्र॰ सूक्ष्मलोमवति ॥ श्वानंविध्यति । व्यध॰ । क्विप् । नहिवृतीतिदीर्घः ॥

श्वाश्व: । पुं॰ भैरवे ॥

श्वास: । पुं॰ श्वसिते । प्राणनवायोरन्त: प्रवेशने । समाध्यङ्गरेचकविरोधिनि । प्राणवायौ ॥ श्वसिति । श्वस॰ । श्वाद्येतिण: ॥ रोगविशेषे ॥ विशु मोनरक: स्यान्तो जायते श्वासकासवान् । घृततैलप्रदातव्यं सहस्रपलसम्मितं मितिगात तपीयकर्मविपाक: ॥ अस्यौषधं यथा विभीतकस्यवे चूर्णं मधु श्वासनाशनम् ॥ पिप्पलीत्रिफलाचूर्णं मधुसैन्धवसंयुतम् । सर्वरोगज्वरश्वासशोषपीनसहृद्रोगविदितिगारुडे १८८ अध्याय: ॥ घ्राणे ॥ हारीद्घाटने ॥

श्वासकास: । पुं॰ श्वासयुक्तकासरोगे । श्वासजनककासे ॥ यथा । कासवृद्ध्या भवेच्छ्वास: पूर्वैर्वा दोषकोपनै रितिगरुडपुराणम् ॥

श्वासकुठार । पुं॰ । श्वासरोगस्यौषधविशेषे ॥ यथा । रसोगन्धो विषञ्चापि टङ्कणञ्च मन: शिला । एतानि कर्षमात्राणि मरिचञ्चाष्टकर्षकम् ॥ कटुत्रयं कर्षयुग्मं पृथक्चर्विनि: क्षिपेत् । रस: श्वासकुठारोयं सर्वश्वासनिवारण इति भावप्रकाश: ॥

श्वासप्रश्वासधारणम् । न॰ प्राणायामे । श्वासप्रश्वासयोर्धारणं यत्रतत् ॥

श्वासहेति: । पुं॰ निद्रायाम् । स्वापे ॥

श्वासारि: । पुं॰ पुष्करमूले ॥

श्वासी । पुं॰ वायौ । त्रि॰ श्वासरोगिणि ॥

श्वित्रम् । न॰ श्वेतकुष्ठे । कुष्ठे ॥ श्वित्रते । स्फिताबरणे , स्फायितस्यौतिरक् ॥ अस्यौषधन्तु । धात्रीखदिरयो: क्वाथं पीत्वा बकुचसंयुतम् । शङ्खेन्दुधवलं श्वित्रं हन्ति तूर्णं न संशय: ॥

श्वित्रघ्नी । स्त्री॰ पीतपर्णाम् । बिकूटी॰ इति॰ गौ॰ भा॰ प्र॰ ॥

श्वित्री । त्रि॰ श्वेतकुष्ठवति । श्वित्रमस्यास्मिन्नस्ति । अतइनिठनाविति इनि: ॥

श्वेत: । पुं॰ शुभ्रवर्णे । सपेट्॰ इ॰ भा॰ ॥ द्वीपविशेषे । श्वेतद्वीपे ॥ अद्रिविशेषे । इलावृतस्योत्तरे हिमवत्स्वयोजनविस्तीर्णे प्रागायतेहिरण्मयवर्षमर्यादागिरौ ॥ वानरविशेषे ॥ यथारामायणे । श्वेतोरजतसङ्काशश्चपलो भीमविक्रम: । बुद्धिमान्वानरवरस्त्रिषु लोकेषु विश्रुतइति ॥ कपर्दिके ॥ शुक्रग्रहे ॥ शङ्खे ॥ श्वेताभ्रे ॥ शिवावतारविशेषे ॥ न॰ रूप्ये । त्रि॰ शुक्लवर्णविशिष्टे ॥ श्वेतते । श्विता॰ । पचाद्यच् ॥

श्वेतक: पुं॰ वराटके ॥ न॰ रूप्ये ॥

श्वेतकण्टकारी । स्त्री० नाकुल्याम् । कण्टवार्त्ताक्यां ॥

श्वेतकन्दा । स्त्री० अतिविषायाम् ।

श्वेतकिणिही । स्त्री० गिरिकर्णिकायाम् । शिरीषपत्र्याम् । विषघ्निकायाम् ॥ श्वेता चासौ किणिही च

श्वेतकुञ्जरः । पुं० ऐरावते ॥ शुक्लगजे ॥ श्वेतश्चासौ कुञ्जरश्च ॥

श्वेतकुशः । पुं० तृणविशेषे ॥ सितदर्भे । ह्रस्वकुशे । पूते । यज्ञभूषणे । सूचीमुखे । पुण्यतृणे । बर्हिषि ॥

श्वेतकुष्ठम् । न० शुक्लकुष्ठे ॥ अस्यौषधं यथा । सोमराजस्य बीजानि नवनीतयुतानि च मधुनास्वादितानि स्युः शुक्लकुष्ठहराणि वै ॥

श्वेतकेतुः । पुं० उद्दालकस्यर्षेस्तनये । श्रुतिप्रसिद्ध आरुणेयमुनौ ॥ केतुग्रहविशेषे ॥ बुद्धे ॥

श्वेतकेशः । पुं० रक्तशिग्रौ ॥ शुक्लकचे ॥

श्वेतकोलः । पुं० शफरमत्स्ये ॥

श्वेतखदिरः । पुं० शुक्लखदिरे । सोमवल्के । कदरे ।

श्वेतगजः । पुं० इन्द्रहस्तिनि । ऐरावणे । अभ्रमातङ्गे । चतुर्दन्ते ॥

श्वेतगरुत् । पुं० हंसे ॥ श्वेता गरुतोऽस्य ॥

श्वेतगुञ्जा । स्त्री० चूडालायाम् । श्वेतकाम्बोज्याम् । काकादन्याम् ॥

श्वेतचन्दनम् । न० शुक्लचन्दने ॥

श्वेतचिल्ली । स्त्री० शाकभेदे । वास्तुक्याम् । सुपथ्यायाम् । श्वेतचिल्लिकायाम् । ज्वरघ्न्याम् । वृद्धवास्तुक्याम् । इति शब्दचन्द्रिका ॥ अथ श्वेतचिल्ल्या गुणाः ॥ श्वेतचिल्ली सुमधुरा क्षारा शिशिरा च सा । त्रिदोषशमनी पथ्या ज्वरदोषविनाशिनी ॥ (printed: अथ श्र॰ इ॰ भा॰ प्र॰ ॥ अस्या गुणा यथा । श्वेतचिल्ली सुमधुराक्षाराचशिशिराचसा । त्रिदोषशमनीपथ्याज्वरदोषविनाशिनी ॥)

श्वेतच्छदः । पुं० हंसे ॥ श्वेताश्छदा यस्य सः । गन्धपत्रे । वायु इ॰ वु॰ भा॰ ॥

श्वेतजीरकः । पुं० अजाज्याम् । गौरजीरके ॥

श्वेतटङ्कणम् । न० क्षारविशेषे द्रावकरे । मालतीतीरसम्भवे ॥

श्वेतदूर्वा । स्त्री० पाण्डुरदूर्वायाम् । अस्याः पर्यायास्तु । गोलोमी शतवीर्या च गण्डाली शकुलाक्षकः इति गुणास्तु । श्वेतदूर्वा कषाया स्यात् स्वाद्वी व्रण्या च जीवनी । तिक्ता हिमा विसर्पास्रतृट्पित्तकफदाहनुत् । इति ॥

श्वेतद्युतिः । पुं० इन्दौ । चन्द्रे ॥

श्वेतद्वीपः । पुं० शक्रहस्तिनि । हस्तिमल्ले । चतुर्दन्ते । ऐरावणे ॥

श्वेतद्वीप : । पुं॰ द्वीपविशेषे ॥ यत्रानिरुद्धमूर्त्तिर्भगवानास्ते ॥

श्वेतधातु : । पुं॰ खटिकायाम् ॥ शुक्लवर्णधातुमात्रे ॥

श्वेतधामा । पुं॰ इन्दौ । घनसारे अब्धिफेने ॥

श्वेतनील : । पुं॰ अम्बुदे । मेघे ॥ शुक्लनीलवर्णे ॥

श्वेतपत्र : । पुं॰ हंसे ॥ न॰ शुभ्रपर्णे ॥

श्वेतपत्ररथ : पुं॰ सृष्टिरिक्ष्मणि । विधातरि ॥ श्वेतपक्षोहंसोरथोवाहनंयस्य ॥

श्वेतपद्मम् । न॰ पुण्डरीके । सिताम्भोजे । शुभ्रपद्मे ॥

श्वेतपर्णा । स्त्री॰ कुम्भिकायाम् । वारिपर्ण्याम् ॥

श्वेतपर्णास : पुं॰ श्वेततुलस्याम् अर्ज्जके । गन्धपत्रे ॥

श्वेतपाटला । स्त्री॰ शुक्लपाटलायाम् ॥

श्वेतपिङ्ग : । पुं॰ सिंहे ॥ इ॰ हे॰ न्द्र : ॥

श्वेतपिङ्गल : । पुं॰ सिंहे ॥ त्रि॰ शुक्लकपिलवर्णयुक्ते ॥

श्वेतपिण्डीतक : । पुं॰ महापिण्डीतके ॥

श्वेतपुष्प : । पुं॰ सिन्धुवारवृक्षे ॥

श्वेतार्के । श्वेतकरवीरे ॥ वरुणद्रुमे । न॰ शुक्लवर्णकुसुमे ॥

श्वेतपुष्पक : । पुं॰ करवीरवृक्षे ॥

श्वेतपुष्पा । स्त्री॰ मृदङ्ग्याम् । श्वेतघोषा॰ इ॰ गौ॰ भा॰ प्र॰ ॥ नागदन्त्याम् । मृगेर्वारौ ॥ श्वेतानिपुष्पाणियस्या : ॥

श्वेतपुष्पिका । स्त्री॰ महाशणपुष्पिकायाम् ॥ पुत्रदात्र्याम् ॥ इ॰ रा॰ नट : ॥

श्वेतप्रसूनक : । पुं॰ वृक्षविशेषे । वरुणद्रुमे ॥

श्वेतभण्डा । स्त्री॰ श्वेतापराजितायाम् ॥

श्वेतमन्दारक : । पुं॰ पृथ्वीकुरङ्के । दीर्घायुष्ये । श्वेतआकड़॰ भा॰ प्र॰ ।

श्वेतमरिचम् । न॰ शिग्रुवीजे ॥ श्वेतं मरिचमिव ॥ शुक्लमरिचे ॥

श्वेतरक्त : । पुं॰ पाटलवर्णे । श्वेतयुक्तोरक्त : ॥

श्वेतरञ्जनम् । न॰ सीसके ॥

श्वेतरथ : । पुं॰ दैत्यगुरौ । शुक्रे ॥ श्वेतोरथोऽस्य ॥ शुक्लवर्णस्यन्दने ॥

श्वेतराजी । स्त्री॰ चिचिण्डे । सुदीर्घफले ॥

श्वेतरोचि : । पुं॰ चन्द्रे ॥

श्वेतरोहित : । पुं॰ सितपुष्पे । सि

ताक्ष्ये । श्वेतरोहितः• इ• भा• प्र• वृत्ते ॥

श्वेतलोध्र : । पुं• पट्टिकालोध्रे ॥

श्वेतवचा । स्त्री• अतिविषायाम् ॥ वचाप्रभेदे । मेध्यायाम् । हैमवत्याम् । सा च वच• इ• भा• प्र• ॥

श्वेतवल्कल : । पुं• उदुम्बरवृक्षे ॥ शुक्लत्वचि ॥

श्वेतवाजी । पुं• चन्द्रे ॥ पार्थे । अर्जुने ॥ कर्के । शुक्लाश्वे ॥

श्वेतवासा : । पुं• शुक्लवस्त्रधारिसन्न्यासिनि ॥ इ• हलायुध : ॥ त्रि• परिहितशुक्लवसने ॥

श्वेतवा : । पु• इन्द्रे ॥ श्वेताएनं वहन्ति । दम्- श्वेतानि हयनेवा । मन्त्रे श्वेतवहेतिगिवमेविषये• श्वेतवहादीनांडस् पदस्येति• यवपदत्वं तत्रविरवनोपश्चादेडस् । श्वेतवाशौ• श्वेतवाहः• श्वेतवोभ्यामित्यादि ॥

श्वेतवाहन : । पुं• चन्द्रे । शशिनि ॥ धनञ्जये । अर्जुने ॥ मकरे ॥

श्वेतवाहो । पुं• अर्जुने । पार्थे ॥

श्वेतवृन्ता । स्त्री• वनतिक्तायाम् । विसर्पिण्याम् । गिरिजायाम् ॥

श्वेतवृहती । स्त्री• क्षुद्रवार्ताक्याम् । श्वेतफलायाम् ॥

श्वेतवृक्ष : । पुं• वरुणद्रुमे ॥

श्वेतशरपुङ्खा । स्त्री• क्षुपविशेषे । सितशायकायाम् । सितपुङ्खायाम् ॥

श्वेतशिग्रु : । पुं• शुक्लशोभाञ्जने । सतीक्ष्णगन्धे । मधुशिग्रुके ॥

श्वेतशिंशपा । स्त्री• शुक्लशिंशपावृक्षे ॥

श्वेतशिम्बिक : । पुं• निष्पावे । भटवांस• इ• भा• प्र• ॥

श्वेतशुङ्गः । पुं• यवे ॥

श्वेतशूरण : । पुं• वनशूरणे ॥

श्वेतसर्प : । पुं• शुक्लवर्णभुजगे । वरुणवृक्षे ॥

श्वेतसर्षप : । पुं• गौरसर्षपे ॥

श्वेतसार : । पुं• कद्दरे । खदिरे ॥

श्वेतसुरसा । स्त्री• श्वेतपुष्पशेफालिकायाम् । भूतवेश्याम् ॥ शोभनोरसोऽस्या : । श्वेताचासौ सुरसाच ॥ श्वेततुलस्याम् ॥

श्वेतस्पन्दा । स्त्री• विष्णुक्रान्ताभेदे ॥

श्वेतहय : । पुं• उच्चैःश्रवसि । इन्द्राश्वे ॥ अर्जुने । पार्थे ॥ चन्द्रे ॥ शुक्लवर्णाश्वे । कर्के ॥

श्वेतहस्ती । पुं• ऐरावते । शुक्लगजे ॥

श्वेता । स्त्री• वराटिकायाम् ॥ काष्ठपाटलायाम् ॥ शङ्खिन्याम् ॥ अपराजितायाम् ॥ स्फट्याम् ॥ अतिविषायाम् ॥ श्वेतवृहत्याम् ॥

श्वेतकण्टकार्य्याम् । पाषाणभेदाम् ॥ श्वेतदूर्व्वायाम् । शिलावल्कलायाम् ॥ वंशरोचनायाम् ॥ शर्करायाम् ॥ लताविशेषे । छुरिकापत्रिकायाम् । पर्व्वमूलायाम् ॥ ऋषिप्रियायाम् ॥ गुणास्तु । श्वेतातिमधुराशीतास्तन्यदारुचिकारिका ।

श्वेताचिल्लत् । स्त्री॰ शुक्लचिल्लतायाम् । चिभाण्डाम् ॥

श्वेताम्लि: । स्त्री॰ क्षुपविशेषे । चम्लिकायाम् पिष्टोडाम् ॥

श्वेतार्क: । पुं॰ शुक्लार्कवृक्षे । तपने । शर्करापुष्पे । हस्तमल्लिकायाम् ॥ अस्यगुणा । श्वेतार्क: कटुकस्तिक्तउष्णोमलविशोधन: । मूत्रकृच्छ्रास्रशोफास्त्रिव्रणदोषविनाशनइति ॥

श्वेतावर: । पुं॰ सितावरशाके ॥

श्वेताश्व: । पुं॰ अर्ज्जुने ॥ सहदेवपाण्डवे ॥

श्वेताह्वा । स्त्री॰ सितपाटलायाम् ॥

श्वेतेक्षु: । पुं॰ सितेक्षौ । वंशपत्रके । पाण्डुरेक्षौ ॥ अस्यगुणा: । श्वेतेक्षु: कठिनोरुच्योगुरुश्चकफमूत्रकृत् । दीपन: पित्तदाहघ्नो विपाकेशोषणस्तथेति ॥

श्वेतोदर: । पुं॰ कुवेरे ॥ त्रि॰ चि

काण्डशेष: ॥

श्वोवसीयसम् । न॰ कल्याणे । मङ्गले ॥ वसुशब्द: प्रशंसावाची॰ ईयसुन्नन्त: । श्वस्शब्दउत्तरपदार्थप्रशंसामाशीर्विषयमाह । श्वोवसीयइतिविग्रहे॰ मयूरव्यंसकादित्वात्समास: । श्वोवसीय: श्रेयस्तुल्यच्समासान्त: अर्थपरपदस्थाच्श्व: शब्द: कालवाच्यपि । अभिधत्तेस्वभावेनतेनेमौमङ्गलार्थकाविति पाणिनीयमतदर्पण: । श्वोवसीयसन्तेभूयात् ॥

षकाक्षरस्य प्रारम्भ:

ष: । पुं॰ षकारे ॥ कचे ॥ त्रि॰ विज्ञे । निपुणे ॥ श्रेष्ठे ॥

षट्क: । पुं॰ षण्णांसङ्घे ॥ सङ्ख्याया: संज्ञासङ्घसूत्राध्ययनेष्वितिकन् ॥ षड्भिरूपेणगृह्णातीत्यर्थे तु॰ तावतिथेनगृह्णातीतिकन्वक्तव्य: पूरणप्रत्ययस्यचनित्यंलुक् । षष्ठेनरूपेणगृह्णाति॰ षट्कोदेवदत्त: ॥

षट्कट् । न॰ षडूषणे ॥

षट्कर्ण: । पुं॰ कर्णवेधहीनयोरपत्ययोर्विद्यमानयोस्तृतीयस्यापत्यस्यसम्भावनायाम् ॥

षट्कर्म्मा । पुं॰ यागादिभिर्युते ब्राह्मणे ॥ षट्कर्म्माण्यध्ययनादीन्यस्य । तानियथा । कृष्याध्ययन

दानानियाजनाध्यापनेतथा । प्रतिग्रहश्चतैर्युक्तः षट्कर्माविप्रउच्यतइति ॥ बहुपोष्यवर्गे गृहस्थब्राह्मणे ॥ ऋतायाचितभैक्षकृषिवाणिज्यकुसीदानिषट्कर्माण्यस्य ॥ न० षण्णांकर्मणांसमाहारे । अध्यापनादिषट्सुकर्मसु ॥ यथा । अध्यापनमध्ययनंयजनंयाजनंतथा । दानंप्रतिग्रहश्चैवषट्कर्माण्यग्रजन्मनइति ॥ शान्त्यादिषट्सुकर्मसु ॥ तानियथा । शान्तिवश्यस्तम्भनानिविद्वेषोच्चाटनेतथा । मारणान्तानिशंसन्तिषट्कर्माणिमनीषिणइति ॥ त्रि० षट्कर्मकर्त्तरि ॥

षट्काष्टकम् । न० विवाहादिविचारे दोषविशेषे ॥ यथा । यदिकन्याष्टमेभर्त्ताभर्त्तुः षष्ठेचकन्यका । षट्काष्टकंविजानीयात्तद्वर्ज्यंतंविदुर्बुधैरपि ॥

षट्कूटा । स्त्री० भैरवीदेवताविशेषे ।

षट्कोणम् । न० वज्रे ॥ षडस्रे । लग्नात्षष्ठगृहे ॥

षट्कोणः । पुं० न० षड्भ्यः कोषेभ्यउत्पन्ने वपुषि ॥ यथाहुः । पितृभ्यामशितादन्नात्षट्कोषंजायतेवपुः । स्नायवोस्थीनिमज्जाचजायन्तेपितृतस्तथा । त्वङ्मांसशोणितमितिमातृतश्चभवन्तिहि ॥

षट्चक्रम् । न० शरीरस्थपद्माकारषट्प्रकारचक्रे ॥

षट्चरणः । पुं० भ्रमरे ॥ यूकायाम् ॥

षट्तिली । पुं० माघशुक्लैकादश्यांभिस्यामुपवासंकृत्वाद्वादश्यांषट्तिलाचारविशिष्टे ॥ यथा । मृगशीर्षेश्रवणेमाघेमासिप्रजायते । एकादश्यांसितेपक्षेसोपवासोजितेन्द्रियः ॥ द्वादश्यांषट्तिलाचारंकृत्वापापात्प्रमुच्यते । तिलस्नायीतिलोद्वर्त्तीतिलहोमीतिलोदकी ॥ तिलस्यदाताभोक्ताचषट्तिलीनावसीदतीति ॥

षट्त्रिंशत् । स्त्री० सङ्ख्याविशेषे । छत्तीस० इ० भा० प्र० त्रि० । सङ्ख्येये ॥ यथा षट्त्रिंशदुपचाराः ॥

षट्त्रिंशत्तत्त्वम् । न० शैवशास्त्रप्रसिद्धतत्त्वसमूहे ॥ यथा । प्राणापानसमानाश्चोदानव्यानौचवायवः । भूतैश्चपञ्चभिः सार्धैश्चतुर्दशभिरिन्द्रियैः ॥ चतुर्विंशतितत्त्वानिसाङ्ख्यशास्त्रविदोविदुः । महान्कालः प्रधानञ्चमायाविद्याचपूरुषः ॥ इतिपौराणिकाः प्राहुस्त्रिंशत्तत्त्वानितैः सह । बिन्दुनादौशक्तिशिवौशान्तातीतौपरंततः ॥ षट्त्रिंशत्तत्त्वमित्युक्तंशैवागमविशारदैरितिमानसोल्लासः ॥

षट्पदः । पुं० भ्रमरे ॥ षट्पदानियस्य ॥ यूकायाम् ॥ न० मात्रा

न्तान्तरे । यथा । षट्कलमादौ तदनु चतुस्तुरगं परिसन्ततु । षेविधि कलं कलय चतुष्पदमेव सन्निनु० ॥ छन्द : षट्पदनामभवति फणिना बकगीतं० रुद्रे विरतिमुपैति न्नूय तिसुखकरमुपनीतम् । उल्लालयुगलमन्ते भवेदष्टाविंशतिकलमिदम् ० शृणुपञ्चदशैविरतिश्रितं पठनैप णिडतजनहितम् ॥ तथा । बामक रोदरकलितकमलसोदरकचिवदना ० गुरुपुरतोपितवेदनामनल्पतिगु रुमदना० भवदभिलषणविशेषरभसपरिशोषितदिवसा० मुञ्चतिचन्द्र भयेनरजनिमधिकोचितमपिसा । मिलदुद्दिविनिहितभवदभिसरणार ञ्चतरङ्गमनङ्गगमति० भवतीय विलोकनमन्तरानमनेरथसुखमनु भवति ।

षट्पदप्रिय : । पुं० नागकेशरवृक्षे ॥ न० रक्तोत्पले ॥

षट्पदा । स्त्री० यूकायाम् ॥

षट्पदातिथि : । पुं० चाम्रवृक्षे ॥

षट्पदानन्द : । पुं० पुष्पवृक्षविशेषे । किङ्किराते । पीतभद्रे ॥

षट्पदानन्दवर्द्धन : । पुं० किङ्किराते । अशोकपादपे ।

षट्पदी । स्त्री० यूकायाम् । द्व० छेन्द : ॥

षट्पदेष्ट : । पुं० नीपे । कदम्बे ॥

षट्प्रज्ञ : । पुं० कामकेलौ । कामुके पिङ्गे ॥ धर्मादिशास्त्रवित्ते ॥ यथा । धर्मार्थकाममोक्षपुलोकतत्त्वार्थयोरपि । षट्सुप्रज्ञास्ति यस्यैत्वै० सषट्प्रज्ञइतिस्मृत : ॥ द्व० चि० शेष : ॥

षड : । पुं० पेयान्तरे । भेदे ॥

षडंश : । त्रि० षष्ठांशे ॥ सङ्ख्याशब्दस्यवृत्तिविषयेरूपार्थत्वम् ॥

षडङ्ग : । पुं० वेदे ॥ षट्शिक्षादीन्यङ्गान्यस्य । चतुर्गे चारके । न० शिक्षादिषेदाङ्गेषु ॥ यथा । शिक्षाकल्पौव्याकरणं निरुक्तं ज्योतिषं तथा । छन्दश्चेतिषडङ्गानिवेदानां वैदिकाविदु : ॥ छन्द : पादौतु वेदस्यहस्तौकल्पस्तुकथ्यते । ज्योतिषामयनंनेत्रं निरुक्तं श्रोत्रमुच्यते ॥ शिक्षाघ्राणन्तुवेदस्यमुखंव्याकरणंस्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्मलोकेमहीयते ॥ द्व० स्मृति : ॥ शरीरस्यषडवयवे । यथा । जङ्घे बाहूशिरोमध्यं षडङ्गमिदमुच्यते० वृत्ति ॥ हृदादिषु ॥ हृच्छिरश्च शिखाचैवकवचं नयनत्रयम् । करतलकरपृष्ठौ च षडङ्गं न्यासकर्मणि ॥ गव्यांशेषे ॥ यथा ॥ गोमूत्रं गोमयं क्षीरं सर्पिर्दधि च रोचना षडङ्गमेतन्माङ्गल्यंपवित्रं सर्वदागवा मितिस्मृति : ॥

षडङ्गजित् । पुं॰ जनार्द्दने ॥ त्रि॰ षडङ्गजेतरि ॥

षडङ्गधूपः । पुं॰ । देवदेयधूमविशेषे ॥ यथा । गुग्गुल्वगुरुषोशीरशर्करामधुचन्दनैः । धूपयेदाज्यसंमिश्रैर्नीचैर्द्देवद्देशिक इति ॥

षडङ्गवित् । पुं॰ शिक्षादिवेदाङ्गज्ञे । पङ्क्तिपावनब्राह्मणे ॥ षडङ्गानि शिक्षादीनि यो व्याचष्टे सः ॥

षडभिज्ञः । पुं॰ अद्वयवादिनि । सर्वज्ञे । बुद्धे ॥ दिव्यंचक्षुः श्रोत्रं परचित्तज्ञानं पूर्वनिवासानुस्मृतिः आत्मज्ञानं वियद्गमनं कायव्यूहादिसिद्धिश्चेति षट् अभिज्ञा ज्ञानमानानि यस्य सः । षट्सु दानशीलक्षान्तिवीर्यध्यानप्रज्ञासु अभिज्ञा आद्यं ज्ञानमस्येति वा ॥

षडशीतिः । स्त्री॰ अर्कसङ्क्रान्तिविशेषे ॥ यथा । षडशीतिर्भवे द्वापन्त्युक् कन्याझषेषु चेति ॥ षडधिकाऽशीतिसङ्ख्यायाम् ॥

षडशीतिचक्रम् । न॰ मिथुनकन्याधनुर्मीनराशिस्थरवेः शुभाऽशुभफलज्ञानार्थं नरचाङ्गनराकारचक्रे ॥ यथा । मुखे वेकं करे वेदाः पादयुग्मे द्वयं द्वयम् । क्रोडे वाणस्तथा वेदाः करे सव्येतरेऽपि च । द्वयं द्वयं तथा नेत्रे मस्तके त्रितयं तथा । द्वयञ्च तथा गुह्ये षडशीत्यां रवेः स्थिते ॥ मुखे दुःखं करे लाभः पादयोर्भ्रमणं हृदि । कान्ताप्राप्त्यन्नं वामे हस्ते स्यात् स्वीयमे नृणाम् ॥ सम्मानं नेत्रयोः शेवअपमानश्च मस्तके । गुह्ये चैव भवेन्मृत्युः षडशीतिफलश्रुतिरिति ॥

षडष्टकम् । न॰ षट्काष्टयोगे ॥ स तु वरकन्ययोः स्वस्वराश्यपेक्षया परस्परषष्ठाष्टमराशिसम्बन्धः । स च मित्रारिभेदेन द्विविधः । तत्र मित्रषडष्टकं यथा मकरसमेतं मिथुनं । कन्याकलसौ मृगेन्द्रमीनौ च । वृषभतुलेऽलिमेषौ कर्कटधनुषौ च मित्रविधौ ॥ षडष्टकाविति शेषः ॥ अरिषडष्टकमाह । मकरः करिकुलरिपुणा कन्या मेषेण सहझषस्तुलया । कर्किघटौ वृषधनुषौ वृश्चिकमिथुने च वैरिविधौ ॥ यदि कन्याष्टमे भर्त्ता भर्त्तुः षष्ठे च कन्यका । षडष्टकं विजानीयात्तद्वर्ज्यं तद्विद्गैरपि ॥

षडाननः । पुं॰ कार्त्तिकेये । महासेने । स्कन्दे । गुहे ॥ कृत्तिकानामग्निपत्नीनां षण्णां स्तनपानार्थं षट् आननानि यस्य सः ॥

षडूषणम् । न॰ । मिश्रितकटुषट्कद्रव्ये । यथा । पञ्चकोलं समरिचं षडूषणमुदाहृतम् । पञ्चकोलगुणं तत्तु रूक्षमुष्णं विषापहमिति भाव

प्रकाश : ॥

षड्गया । स्त्री० षड्विधगयायाम् ॥ यथा । गयागजो गयादित्यो गायत्री च गदाधरः । गया गयासुरश्चैव षड्गया मुक्तिदायिका इति वायुपुराणे गयापद्धतिः ॥

षड्गवम् । न० गोषट्कयुक्तहलादौ ॥ यथा । अष्टागवं धर्महलं षड्गवं जीविकार्थिनाम् । चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम् ॥ षण्णां गवां समाहारः । गोरतद्धितलुकीति समासान्तष्टच् ॥

षड्गुणरहितः । पुं० मधुरादिषड्गुणरहिते परमात्मनि ॥

षड्गुणेशः । पुं० षडिन्द्रियनियन्तरि ॥

षड्ग्रन्थः । पुं० महाकरञ्जपादपे । षट् ग्रन्थयो यस्य । अच्प्रत्यन्ववपूर्वादित्यत्राजिति योगविभागादच् ॥ षट्ग्रन्थाः यस्य वा ॥

षड्ग्रन्था । स्त्री० वचायाम् ॥ षट् ग्रन्थाः ग्रन्थयो यस्याः सा ॥ शट्यम् ॥ शुक्लवचायाम् ॥

षड्ग्रन्थिः । पुं० षट्पर्वणि ॥ स्त्री० वचायाम् ॥ न० पिप्पलीमूले ।

षड्ग्रन्थिका । स्त्री० शट्याम् । गन्धमूल्याम् । षट् बहवो ग्रन्थयो यस्याः । स्वार्थे कन् ॥

षड्जः । पुं० तन्त्रीसमुत्थिते कण्ठोत्थिते च स्वरविशेषे ॥ षड्भ्यः स्थानेभ्यो जातः । पञ्चम्यामिति डः ॥ यथा । नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संस्पृशन् । षड्भ्यः सञ्जायते यस्मात् तस्मात् षड्ज इति स्मृतः ॥ मयूरस्वरतुल्योऽयम् । यथा । षड्जं रौति मयूरो हि गावो नर्दन्ति चर्षभम् । अजाविरौति गान्धारं क्रौञ्चो नदति मध्यमम् ॥ तानसेनमते सप्तस्वराणां मध्ये प्रथमस्वरोऽयम् ॥

षड्धा । अ० षट्प्रकारे ॥ सङ्ख्याया विधार्थे धा ॥

षड्विधः । त्रि० षट्प्रकारे ॥ षट् विधाः प्रकारा यस्य ॥

षड्भावविरहितः । त्रि० अस्तीत्यादिशरीरधर्मरहिते परमात्मनि अस्तीत्यादयो यथा । अस्ति जायते वर्द्धते विपरिणमते अपक्षीयते विनश्यतीति ॥

षड्भुजः । त्रि० षड्हस्तयुक्ते ॥

षड्भुजा । स्त्री० चण्डिकायाम् ॥ रुद्रचण्डायाम् ॥ चण्डवत्याम् ॥ न० षड्रेखाभिधफललताविशेषे । मधुफलायाम् । हस्तकर्कट्याम् । तिक्तफलायाम् । खरबूजा० इ० भा० प्र० ॥ अस्याः फलगुणा यथा । तिक्तं बाल्ये तदनु मधुरं किञ्चि

दम्लश्चपाकेनिष्पक्वंचेत्तद्घृतसमं-
तप्यंषंशुष्टिदायि । हृष्यंदाहश्रम
विभ्रमनंमूत्रशुद्धिंविधत्ते पित्तो
न्मादापहरकफदंषड्भुजंबीर्यंका-
रीतिराजनिघंण्टः ॥

षड्रसः । पुं॰ मधुरादिषट्प्रकार
रसे ॥ यथा । मधुरोलवणस्तिक्तः
कषायोम्लः कटुस्तथा । सन्तीतिरस
नीयत्वादन्नाद्येषड्मीरसाः ॥ ए
षांनामलक्षणंयथा । मधुरंगीह्य
मित्याहुरिक्षुवादौसचलक्ष्यते । ल
वणस्तुपटुःप्रोक्तःसैन्धवादौसदृ
श्यते ॥ तिक्तस्तुपिचुमर्दादौव्यक्त
मास्वाद्यतेरसः । कषायस्तुवरस्तू
क्तःसचपूगीफलादिषु ॥ कटु
स्तुक्षारसंज्ञः स्याम्मरिचादौसचे
ष्यते । इतिराजनिघंण्टः ॥

षड्राम् । न॰ षडहे ॥

षड्रेखा । स्त्री॰ षड्भुजायाम् ॥
खर्बूजे ॥

षड्लवणम् । न॰ सपञ्चलवणंमृ
त्स्नालवणं । मृत्स्नापितेपञ्चलव
णं ॥

षड्वक्त्रः । पुं॰ कार्त्तिकेये ॥

षड्वर्गः । पुं॰ लग्नहोरादिषु ॥ यथा
। त्रिंशद्भागात्मकंलग्नंहोरातस्यार्द्ध
मुच्यते । लग्नत्रिभागोद्रेष्काणोन
वभागोनवांशकः ॥ द्वादशांशोद्वा
दशांशस्त्रिंशांशस्त्रिंशद्भकाः । ष
ड्वर्गाःकथितास्त्वेतेषांक्रममुदी
रितम् ॥ षष्ठांवर्गः । षडिन्द्रिय
सुखे ॥

षड्वर्षः । त्रि॰ षड्वर्षाणिभूतः॰ बाल
के ॥ तद्धितार्थेतिसमासः । चित्त
वतिनित्यमितिखठ्ओस्तद्धितयोर्लु
क् ॥

षड्वाद । पुं॰ भ्रमरे ॥

षड्विन्दुः । पुं॰ हरौ । विष्णौ ॥ की
टविशेषे ॥ शिरोरोगापहे॰ पक्वतै
लविशेषे ॥ यथा । एरण्डमूलंतग
रंशताह्वाजीवन्तिकासैन्धवरास्नेभि
च । भृङ्गंविडङ्गंमधुयष्टिकाचवि
श्वौषधंकृष्णतिलस्यतैलम् ॥ अजा
पयस्तैलविमिश्रितश्चचतुर्गुणेभृङ्ग
रसेविपक्वम् । षड्विन्दवोनासिक
योःप्रदेयाःसर्वाहिहन्युःशिर
सोविकारान् ॥ च्युतांश्चकेशान्प
लितांश्चदन्तान्निर्बध्यमूलान्सुदृढीक
रोति । सुपर्णगृध्रप्रतिमश्चचक्षुः
कुर्वन्तिबाह्वोरधिकंबलञ्च ॥ जीव
न्तिकाचहरीतकीशाकविशेषः ॥
इतिभावप्रकाशः ॥

षड्विन्द्या । स्त्री॰ तैलिन्याम् ॥

षण्डः । पुं॰ गोपतौ । वृषभे ॥ समू
हे ॥ पुं॰ न॰ कदम्बे । पद्मादिक
दम्बे । पद्मकुमुदादिसङ्घाते ॥ स
मोति । षणुदाने । अमन्ताड्ः ।
बाहुलकात्सत्वाभावः ॥

षण्डाली । स्त्री० सरस्याम् । कामुकस्त्रियाम् । तैलमाने । छटाक० इ० भा० प्र० । इतिहेमचन्द्रोमेदिनिकरश्च ॥

षण्ढः । पुं० षण्डशब्दार्थे ॥ शास्यतिशिश्नाभावात् । शमउपशमे । शमेढः । बाहुलकात्षः ॥ यद्वा । समति । षमष्टमवैकल्ये । सनिदंत्यादिनाषमेर्ढः । बाहुलकात्सत्वाभावः ॥ षण्ढस्पर्शेसूर्यदर्शनम्० स्पर्शनम्० स्पर्शेतुस्नानंसूर्यावलोकनञ्चप्रायश्चित्तम् ॥

षण्मुखः । पुं० कार्त्तिकेये । स्कन्दे । षट्मुखान्यस्य ॥

षण्मुखा । स्त्री० षट्भुजायाम् । खरबूजा० इ० भा० ॥

षट् । त्रि० सङ्ख्यान्तरे । छ छै० इ० भा० । सङ्ख्येये ।

षष्टिः । स्त्री० सङ्ख्यान्तरेसाठ० इ० भा० । सङ्ख्येये । षट्दशतः परिमाणमस्य । प्रकृतेः षष्भावस्तिप्रत्ययेोऽपदत्वञ्च० पङ्क्तिविंशतित्रिंशत्चत्वारिंशत्पञ्चाशत्षष्टीतिनिपातनात् ॥

षष्टिकः । पुं० न० योगरूढे० धान्यविशेषे । साठी० इ० भा० प्र० । षष्टिकाख्यधान्यविशेषाः षष्टिकाः षष्टिरात्रेणपच्यन्तइतिष्ठतीयान्तात्कन्० रात्रशब्दलोपश्चनिपात्यते । धान्यविशेषएवायंसाधुर्नमुद्गेषु० ते पिषष्टिरात्रेणपच्यन्ते ॥ अस्यलक्षणगुणाश्चयथा । गर्भस्थाएवयेपाकंयान्तितेषष्टिकामताः ॥ षष्टिकः शतपुष्पश्चप्रमोदकमुकुन्दकौ । महाषष्टिकइत्याद्याः षष्टिकाः समुदाहृताः ॥ एतेपिब्रीहयः प्रोक्ताब्रीहिलक्षणदर्शनात् ॥ षष्टिकामधुराःशीतालघवोबद्धवर्चसः । वातपित्तप्रशमनाः शालीनांसदृशागुणाः । तत० साठीगुणाः षष्टिकायाम् ॥ अपिच । गौरासील षष्टिकोऽयंद्विधास्यादाद्योकच्यः शीतलोदोषहारी । बल्यः पथ्योदीपनोवीर्यकृत्त्वि दृक्तेतस्मात्किञ्चिदूनोद्वितीयः ॥

षष्टिका । स्त्री० साठीतिप्रसिद्धधान्ये । अस्याः गुणाः । षष्टिकाप्रवरातेषांलघ्वीस्निग्धात्रिदोषजित् । स्वाद्वीमृद्वीग्राहिणीचबलदाज्वरहारिणीति ॥ रक्तशालिगुणैस्तुल्यातत स्वल्पगुणाः परे ॥ तेषांषष्टिकशतपुष्पादीनाम् । परे० षष्टिकशतपुष्पादयः ॥ शरदिषष्टिकाभिः पार्वणन्नित्यमितिवाचस्पतिमिश्राः ॥

षष्टिक्यम् । न० षष्टिकधान्योत्पत्त्युचितभूमौ ॥ षष्टिकानांभवनङ्क्षेत्रम् । यवयवकषष्टिकाद्यदितियत् ॥

षष्टिज : । पुं॰ षष्टिकधान्ये

षष्टितम : । त्रि॰ षष्टेः पूरणे ॥

षष्टिदुर्गा । स्त्री॰ स्कन्दभार्यायाम् ॥ तिथिभेदे ॥

षष्टिधा । अ॰ षष्टिप्रकारे ॥

षष्टिमत्त : । पुं॰ गजे ॥ षष्टिवर्षपर्यन्तं यः पुर्वाङ्गेण्यत्वा॰षष्टिमत्तो हस्तीतिसारस्वताभिधानम् ॥

षष्टिलता । स्त्री॰ भ्रमरमार्याम् ॥

षष्टिहायन : । पुं॰ गजे । हस्तिनि ॥ धान्यविशेषे ॥ त्रि॰ षष्टिसङ्ख्यकवत्सरवयोयुक्ते ॥

षष्ठ : । त्रि॰ षसांपूरणे ॥ तस्यपूरणे डट् षट्कतिकतिपयचतुरां थुक् ॥

षष्ठान्नकालिक : । त्रि॰ तृतीयदिनभोजिनि ॥ न॰ द्विविदिनानन्तरभुक्ते ॥ यथा । द्व्यन्तरेव्यन्तरेभुक्तमाहुः षष्ठान्नकालिकम् ॥

षष्ठिका । स्त्री॰ षष्ठाम् ॥

षष्ठी । स्त्री॰ कात्यायन्याम् । गौर्याम् ॥ मातृकाविशेषे ॥ साचप्रकृतेः षष्ठीकला॰स्कन्दभार्याच ॥ यथा । प्रकृतेरितिसम्बन्धे॰प्रधानांशस्वरूपायादेवसेनाचनारद । मातृकासुपूज्यतमासाषष्ठीचप्रकीर्त्तिता ॥ पुत्रपौत्रादिदात्रीचधात्रीत्रिजगतांसती । षष्ठांशरूपाप्रकृतेस्तेनषष्ठीप्रकीर्त्तितेतिश्रीदेवीभागवतम् ॥ तिथिविशेषे । गुरुतिथौ ॥ षसांपूरणाम् । ङस्॰ ओस्॰ आम्॰ इतिविभक्तौ ॥ अस्यास्सम्बन्धोऽर्थः स्वराजपुरुषोपगवादिशब्दानांप्रवृत्तिनिमित्तम् गोमान्धनवानित्यादौनांचप्रवृत्तिनिमित्तम्॰ अपत्यापत्यवत्सम्बन्धादेः शब्दप्रवृत्तिनिमित्तत्वात् ॥ एतत्प्रत्ययान्तत्वाटित्वात ङीप् ॥षष्ठ्यान्तिथावुत्पन्नस्यफलं यथा । विद्वान्वरिष्ठश्चतुरः सुकीर्त्तिः प्रलम्बबाहुर्बहुकीर्णगात्रः । सत्यप्रतिष्ठोधनपुत्रयुक्तः षष्ठीप्रसूतोमनुजश्चिरायुरिति ॥

षष्ठीदण्डकपाठ : । पुं॰ । ग्रन्थविशेषे ॥ यत्रैकशतषष्ठ्यार्थाउक्ताः ॥

षाट्कौशिक : । पुं॰ स्थूलदेहे ॥ यथा । मज्जास्थिस्नायवः शुक्रादृक्तात्त्वङ्मांसशोणितम् । इतिषाट्कौशिकोनामदेहोभवतिदेहिनाम् ॥

षाडव : । पुं॰ गाने । रागस्यजातिविशेषे । सप्तषट्स्वरमिलितरागरागिण्यौ । यथा । औडवः पञ्चभिः प्रोक्तः स्वरैः षड्भिस्तुषाडवः । सम्पूर्णः सप्तभिर्ज्ञेय एवंरागस्त्रिधामतः ॥ रसविशेषे ॥ सचरसविशेषउक्तः सूदशास्त्रे । यथा । सितामध्वादिमधुरैर्द्राक्षादाडिमजीरसः । विरलश्चेत्कृतोरा

ग : सान्द्रश्चेत्षाडव : स्मृत : ॥ इति ॥ अपिच । षाडवामधुराम्ला दिरससंयोगपाचितादृति । गुडा म्बुप्रभृतय : षाडवादृत्यर्थ : ॥

षाड्गुण्यिक । पुं॰ इन्द्रियषड्वर्गविषये ।

षाड्गुण्यम् : न॰ राज्ञां राज्यकार्य्योपा येषुषट्सु ॥ यथा । सन्धानासनम् • सन्धिं कृत्वाऽवस्थानम् १ यात्रा सन्धानम् २ । विगृह्यासनम् • वैरं कृत्वाऽवस्थानम् । ३ । यात्रां सम्परिगृह्यासनम् • शत्रोर्भयप्रद र्शनार्थं यानं प्रदर्श्यस्वस्थाने ऽवस्था नम् ४ द्वैधीभाव : • उभयत्रस न्धीकरणम् ५ । चान्येषांसंश्रय : • दुर्गादिमहाराजस्यबाश्रय: ६ इतिमहाभारतेराजधर्म : ॥ सन्धि र्नाविग्रहोयानमासनंद्वैधमाश्रयइ त्यमर : " षड्गुणाएव । चतुर्वर्णा दित्वात्स्वार्थेष्यञ् ॥

षाण्मातुर : । पुं॰ शक्तिधरे । कार्त्ति केये ॥ षण्णांमातृणामपत्यम् । मा तुरुत्सङ्ख्यासम्भद्रपूर्वायाइत्यण् • उत्वंरपरत्वञ्च ॥

षाष्ठ : । त्रि॰ षष्ठे ॥

षिड्ग । पुं॰ कामकेलौ । कामुके । नागरे । विटे । लुच्चा • इ • भा • ॥ सेटति • षिव्यतिवा । षिटचनादरे । बाहुलकाद्गन् • सत्वाभावश्च ॥

षु : । पुं॰ गर्भविमोचने ॥

षोडन् । त्रि॰ षड्दन्तयुक्ते ॥ षट्द न्ताअस्य । वयसिदन्तस्येतिदत्रादे श: । तत: षषउत्वंदतदशधासूत्त रपदादेष्टुत्वञ्च• धासुवेतिवाच्यम् ॥

षोडश : । त्रि॰ षोडशानाम्पूरणे । तस्यपूरणेडट् ॥

षोडश । पुं॰ नित्यंबहुवचनान्त : । ए काधिकपञ्चदशसङ्ख्यायाम् ॥ ग र्भाधानादिसंस्कारेषु ॥ तेयथा । गर्भाधानंपुंसवनंसीमन्तोन्नयनंतथा । जातकर्माभिधानञ्चनिष्क्रम : प्रा शनन्तत : ॥ चूडोपनयनंवेदव्रता नाञ्चचतुष्टयम् ॥ गोदानंसेवनि न्मोक्षोविवाह : षोडशक्रमात् ॥ ष ट्चदशचषडधिकादशवा । षषउ त्वंदतदशधासूत्तरपदादेष्टुत्वञ्च• धासुवेतिवाच्यम् ॥ त्रि॰ सङ् ख्येये ॥

षोडशक : । पुं॰ षोडशसङ्ख्यापरि मितेगणविशेषे ॥ यथा । षोडशक स्तुविकारइति । पञ्चभूतानि• ए कादशेन्द्रियाणिचेत्येतानिविकारप दवाच्यानि ॥

षोडशकला : । स्त्री॰ चन्द्रमण्डलस्य षडधिकादशभागेषु ॥ यथा । अमृ तामानदापूषातुष्टि : पुष्टीरतिर्धृ ति : । शशिनीचन्द्रिकाकान्तिर्ज्यो त्स्नाश्री : प्रीतिरङ्गदा ॥ पूर्णापू र्णामृताकामदायिन्य : शशिन :

काला: ॥

षोडशदानम् । न० श्राद्धादौ षोडश प्रकारदेयद्रव्ये ॥ तत्क्रममाहुः सा म्प्रदायिकाः । भूम्यासनं जलं वस्त्रं प्रदीपोन्नं ततः परम् । ताम्बूल च्छत्रगन्धाश्चमाल्यं फलमतः परम् ॥ शय्याचपादुकागावः काञ्चनं र जतन्तथा । दानमेतत्षोडशकं प्रे तमुद्दिश्यदीयते ॥ तत्षोडशषोड शकै रेकोदानसागरोभवति ॥

षोडशभुजा । स्त्री० षोडशहस्तयुक्ता यां दुर्गायां ॥

षोडशमातृकाः । स्त्री० गौर्यादिषु ॥ यथा । गौरीपद्माशचीमेधासाविवी विजयाजया । देवसेनास्वधाशान्तिः पुष्टिर्धृतिः क्षमा ॥ आत्मनोदेव ताचैवतथैवकुलदेवता ॥

षोडशर्त्विक्क्रतुः । पुं० षोडशर्त्विक् साध्ये० ज्योतिष्टोमयागे० द्वाद शाहसाध्यसत्रयागेच ॥ तत्रर्त्वि जांनामानियथा । ब्रह्मा १ ब्राह्म णाच्छंसी २ आग्नीध्रः ३ पोता ४ एतेसार्ववेदीयाः ॥ होता ५ मै त्रावरुणः ६ अच्छावाकः ७ ग्राव स्तोता ८ एतेऋग्वेदिनः ॥ अध्व र्युः ९ प्रतिप्रस्थाता १० नेष्टा ११ उन्नेता १२ एतेयाजुषाः ॥ उद्गा ता १३ प्रस्तोता १४ प्रतिहर्त्ता १५ सुब्रह्मण्यः १६ एतेसामगाः ॥

ज्योतिष्टोमेद्वादशशतगोदक्षिणावि भागः षोडशर्त्विजाम् । तद्विकृ तौभूतेसत्रात्मकेद्वादशाहसाध्ये० शतेनाह्निनेदीक्षयन्तीत्यादिदर्शने ननिर्णीयते । तत्रविभागमनुरप्या ह । सर्वेषामर्द्धिनोमुख्यास्तदर्धे नार्द्धिनोऽपरे । तृतीयिनस्तृतीयांशा श्चतुर्थांशैकपादिनः ॥ दक्षिणागो शतविभागायश्रौतकात्यायनोपि । चत्वाद्दशद्वादशआद्येभ्यः षट्ष ट् द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्य स्तिस्रस्तिस्रइतरेभ्यः । तुल्यषोड षर्त्विजांचतुरश्चतुरः कृत्वाचत्वा रोवर्गाइतिमलमासतत्त्वम् ॥

षोडशांशुः । पुं० शुक्रग्रहे ॥ षोडश अंशवोऽस्य ॥

षोडशाङ्गः । पुं० धूपविशेषे ॥ यथा । गुग्गुलुं सरलं दारुपद्मं मलयसम्भ वम् । ह्रीवेरमगुरुं कुष्ठंगुडं सर्जं रस ङ्घनम् ॥ हरीतकींनखींलाक्षांज टामांसीश्चशैलजम् । षोडशाङ्गं वि दुर्धूपं देवपित्र्येचकर्म्मणि ॥ त्रि० षोडशावयववति ॥

षोडशाङ्घ्रिः । पुं० कर्कटे ॥

षोडशारम् । न० षोडशदलपद्मे ॥

षोडशार्चिः । पुं० शुक्रग्रहे ॥

षोडशावर्त्तः । पुं० शङ्खे ॥

षोडशिकाम्रम् । न० पलपरिमाणे ॥

षोडशी । पुं० यज्ञपात्रविशेषे ॥ सतो

षकमाचविशेषे ॥ समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति ॥

षोडशी । स्त्री॰ दशमहाविद्यान्तर्गतमहाविद्याविशेषे ॥ यथा । काली तारामहाविद्याषोडशीभुवनेश्वरी । भैरवीछिन्नमस्ताचविद्याधूमावती तथा ॥ बगलासिद्धविद्याचमातङ्गी कमलात्मिका । एतादशमहाविद्याः सिद्धविद्याः प्रकीर्त्तिताः ॥ जनविंशतिपिण्डदानक्रियायाम् ॥ षोडशानांपूरणी । डट् । ङीप् ॥

षोढा । अ॰ षड्धा । षट्प्रकारे ॥ षोढाषट्धावाकुरु । सङ्ख्यायाविधार्थेधा । षषउत्वंदतृदशधासूत्तरपदादेष्टुत्वञ्च॰धामुवेतिवाच्यम् ॥

ष्ठीवनम् ।) ष्ठेवनम् ।) न॰ फुत्कृत्यश्लेष्मणः प्रक्षेपे । ष्ठिवुनिरसने । ल्युट् । ष्ठिवुसिव्योर्ल्युटिदीर्घोवेतिस्वामी ॥

ष्ठ्यूतम् । त्रि॰ ष्ठीवने ॥ ष्ठिवु॰ । कर्मणिक्तः । च्छ्वोरित्यूठ् ॥ *

सकारवर्णप्रारम्भः

सः । पुं॰ सकारे । ईश्वरे । सर्पे । पक्षिणि । विष्णौ । सगणे॰ । ऽपुं॰ ॥

संयः । पुं॰ कङ्काले ॥ इ॰ श॰ च॰ का ॥

संयत् । पुं॰ स्त्री॰ युद्धे । चाबोधमे । समितौ ॥ संयतनम्॰ संयमनंवा । यतीप्रयत्ने॰ यमउपरमेवा । सम्पदादित्वात्क्विप् । गमादीनामितिमलोपः । तुक् ॥

संयतः । त्रि॰ बद्धे ॥ संयम्यतेस्म । यम॰ । क्तः ॥ कृतसंयमे ॥

संयतेन्द्रियः । त्रि॰ वशीकृतेन्द्रिये ॥ संयतानिविषयेभ्योनिवर्त्तितानि॰ इन्द्रियाणियेनसः ॥

संयत्तः । त्रि॰ उद्युक्ते ॥

संयद्वरः । पुं॰ नृपे । संयच्छति । यम॰ । कृत्वरच्छत्वरेतिष्वरच् । निपातनान्मस्यदः ॥

संयन्ता । त्रि॰ संयमनकर्त्तरि । नियन्तरि ॥ संयच्छति । यम॰ । सम्पूर्वः । तृच् ॥

संयमः । पुं॰ व्रताद्यङ्गपूर्वदिनकर्त्तव्याचारे । नियामे । वियमे । यामे । यमे । संयामे । संयमने ॥ धारणाध्यानंसमाधिरितित्रयमेकविषयं॰ संयमशब्देनोच्यते । तयमेकत्रसंयमइतिपतञ्जलिः ॥ सर्ववर्णानुष्ठेयः सकलपुरुषार्थोपयुक्तोयंसंयमः । तथाचमनुः । इन्द्रियाणांविचरतांविषयेष्वपहारिषु । संयमेयत्नमातिष्ठेद्विद्वान्यन्तेववाजिनामिति ॥ विद्वान्॰ विषयेषुवर्त्तमानानामिन्द्रियाणांजयित्वादिदोषान्जानन्नित्यर्थः ॥ धर्माधर्मफलदानेनानुग्रहेनिग्रहेच ॥ संयमनम् । यमः समुपनिविषुचेतिपक्षेऽप्

॥ संयते ॥

संयमक : । वि० नियन्तरि ॥ संयमिनि ॥

संयमन : । पुं० यमलोके ॥ न० बन्धने ॥ व्रते ॥

संयमनी । स्त्री० यमस्य पुर्य्याम् ॥ यथा श्रीनृगेन्द्रसंहितायाम् ॥ मृत्योः संयमनी तुङ्गलोहप्राकारमण्डला । कालपाशपितृव्याधिप्रेतमारीभिर्विता ॥ कालपाशादिजुष्टा० ऽत्युन्नतायसप्राकारसमूहा० संयमनी नाम दक्षिणस्यां यामपुरीत्यर्थः ॥

संयमित : । वि० जातसंयमे ॥ तारकादित्वादितच् ॥ यमिते ॥

संयमी । पुं० मुनौ ॥ वि० संयमवति ॥ स्थितप्रज्ञे ॥ यानिशासर्वभूतानां तस्यां जागर्त्ति संयमी ॥ संयमोऽस्यास्ति । इनि : ॥

संयाता । स्त्री० सम्भूययातायाम् । पितेनद्यौपान्तरगमने ॥ समुदितानां गमने ॥

संयाम : । पुं० संयमे ॥ संयमनम् । यम : समुपनिविषुचेतिपक्षे घञ् ॥ संयते ॥

संयाव : । पुं० घृतक्षीरगुडगोधूमचूर्णसिद्धे भोज्यविशेषे ॥ यथा । संयावस्तु घृतक्षीरगुडगोधूमपाकजइति ॥ पिष्टकविशेषे । पेराक० पिराकी ० इ० भा० प्र० ॥ यथा । पर्य्यःसाज्यसमितानिर्मिता घृतभर्जिताः । कुट्टिताश्चोलिताः शुभ्राः शर्कराभिर्विमर्दिताः ॥ तत्र चूर्णं क्षिपेदेला लवङ्ग मरिचानि च । नारिकेरं सकर्पूरं चारबीजान्यनेकशः ॥ घृताक्तसमितापुष्टैः पोटिकां रचितां ततः । तस्यां तत्पूरणं न्यस्य कुर्य्यान्मुद्रां दृढां सुधीः ॥ सर्पिषि प्रचुरे तान्तु सुपचेन्निपुणो जनः । प्रकारश्चैः प्रकारोयं संयाव इति कीर्त्तितः ॥ मठकेन समो ज्ञेयः संयावोऽपि गुणैर्जनैः ॥ लोके० गुंभा इति प्रसिद्धोयम् ॥ संयूयते मिश्रीक्रियते गुडादिभिः । यु० । समियुद्रुदुव इति घञ् ॥

संयुक्त : । वि० संलग्ने । संयोगाश्रये ॥ सम्यक् युक्तः ॥

संयुक्तसमवाय : । पुं० सन्निकर्षे ॥ यथा० घटरूपप्रत्यक्षे संयुक्तसमवायः सन्निकर्षः । चक्षुः संयुक्ते घटेरूपस्य समवायात् ॥

संयुक्तसमवेतसमवाय : । पुं० सन्निकर्षविशेषे ॥ यथा० रूपत्वसामान्यप्रत्यक्षे० संयुक्तसमवेतसमवायः सन्निकर्षः । चक्षुः संयुक्ते घटे रूपं समवेतम्० तत्र रूपत्वस्य समवायात् ॥

संयुग : । पुं० युद्धे । आयोधने । जन्योरर्थे ॥ संयोजनम् । युजिर्० । घञ् । रथदुर्गेतिनिर्देशात् कुत्वम्

भाव:। प्रतिजनादिषुसंयुगशब्द पाठाद्वा॥

संयुक्। वि॰ गुणवति। सम्बन्धिनि॥ संयुज्यते। युज॰। क्विप्चेति क्विप्॥

संयुत:। वि॰। संयुक्ते। बद्धे॥

संयोग:। पुं॰ प्रश्लेषे। इमौसंयुक्ता विति व्यवहारहेतौ॰ नवद्रव्यवर्त्तिनि॥ मेलने। सम्बन्धे॥ सन्निकर्षभेदे॥ चक्षुषाघटप्रत्यक्षजनने संयोगसन्निकर्ष:॥ संबन्धमात्रे॥ संयुज्यतेऽनेन। युजिर्॰। घञ्॥ न्यायमतेसंयोगोगुणपदार्थ:। सचाप्राप्तवस्तुद्वयस्यप्राप्तिरूप: सम्बन्धविशेष:। सचत्रिविधोयथा। एककर्मजन्य:। यथापर्वतेपक्षिसंयोग:। १। उभयकर्मजन्य:। यथा मेषद्वयसंयोग:। २। संयोगजन्यसंयोग:। यथाकपालतरुसंयोगजन्यतरुकुम्भसंयोग:। ३। कर्मजन्यसंयोगोऽपिद्विविध:। अभिघात: ॰ तस्माच्छब्दोजायते। १। नोदन: ॰ तस्माच्छब्दोनजायते। २॥ अत्रप्रमाणम्। अप्राप्तयोस्तुयाप्राप्ति: सैवसंयोगईरित:। कीर्त्तितस्त्रिविधस्त्वेषआद्योन्यतरकर्मज:॥ तथोभयो: कर्मजन्योभवेत्संयोगजोऽपर:। आदिम: श्येनशैलादिसंयोग: परिकीर्त्तित:॥ मेषयो: सन्निपातोय: सद्वितीयउदाहृत:। कपालतरुसंयोगात् संयोगस्तरुकुम्भयो:॥ द्वितीय: स्यात्कर्मजोऽपिद्विधैवपरिकीर्त्तित। अभिघातोनोदनश्चशब्दहेतुरिहादिम:॥ शब्दाहेतुर्द्वितीय: स्यादिभागोऽपित्रिधाभवेदितिभाषापरिच्छेद:॥ उदयात्पूर्वदशम्या: शेष॥ यथा। उदयात्प्राक्दशम्यास्तुशेष: संयोगइष्यते। उपरिष्टात्प्रविशस्तुतस्मात्तांपरिवर्ज्जयेत्॥ सन्निधौ॥

संयोगपृथक्त्वम्। न॰ न्यायविशेषे॥ यथा। एकस्यकर्मणोनित्यत्वकाम्यत्वाभ्यांद्विरूप्याङ्गीकारे॰ नित्यानित्यसंयोगविरोध:। नैवम्॰ संयोगपृथक्त्वन्यायात्। सचन्यायश्चतुर्थाध्यायउक्त:। यथा। खादिरेपशुंबध्नाति॰ खादिरंवीर्यकामस्ययूपंकुर्वीतेतिश्रूयते। अत्रसंशय:। किंकाम्यस्यैवखादिरतानित्येपिस्यादुतनेति। तत्रफलार्थत्वेनानित्यतया॰ नित्यप्रयोगाङ्गतानयुक्ता। यत्तुनित्येपिखादिरत्वश्रवणं॰ तत्काम्यस्यैवपशुबन्धनाययूपाश्रयज्ञापनार्थमतोननित्येखादिरतेति प्राप्ते॰ राद्धान्तायचतुर्थाध्यायसूत्रम्। एकस्यतूभयत्वेसंयोगपृथक्त्वमिति। अतसंयोग: सम्बन्धमा

त्वम् • पृथक्त्वंभेद : । एकस्याश्वा
दिरश्वक्रत्वर्थत्वपुरुषार्थत्वरूपोभया
त्मकत्वेवाक्यद्वयेनचक्रतुशेषत्वफल
शेषत्वलक्षणसंयोगभेदावगमान्नि
त्यानित्यसंयोगविरोध : । नथा
श्रयत्वानार्थमित्यवाच्यं • सन्निधा
नादेवाश्रयलाभात् । अतउभयार्था
खादिरतेति । एवंदध्नाजुहोति • द
ध्नेन्द्रियकामस्येत्यादावुभयार्थंतेव
। दधित्वस्यद्वेधाश्रवणादितिप्राय
श्चित्ततत्त्वम् ॥

संयोगितः । त्रि• आत्तसंयोगे ॥ तार

संयोगी । त्रि• संयोगविशिष्टे ॥
कादित्वादितच् ॥

संयोजनम् । न• संयोगे ॥ रतिलक्ते । नि
धुवने । मैथुने ॥ द्र• हारावली ॥

संयोजितः । त्रि• पदार्थान्तरेणसंयु
क्तीकृतेपदार्थे । उपाहिते । मेलि
ते ॥ संयोज्यतेस्म युजिर् • । यश
न्त : । क्त : ॥

संरब्ध : । त्रि• संलग्ने । कुपिते ॥

संरम्भ : । पु• आटोपे ॥ उत्साहे
॥ यथा । कार्यारम्भेषुसंरम्भःस्थे
यउत्साहइष्यते ॥ कोपे ; क्रोधे
॥ यथा । प्रणिपातप्रतीकार : सं
रम्भोहिमहात्मनाम् ॥ संरम्भणम् ।
रभराभस्ये । घञ् । रभेरशब्लुटो
रितिनुम् ॥

संरम्भी । त्रि• क्षुभिते । संरम्भयुक्ते ॥

संराधि : । स्त्री• निष्पत्तौ ॥

संराधनम् । न• समाध्यादौ । भ
क्तिध्यानप्रणिधानाद्यनुष्ठाने ॥ सं
राध्यतेऽनेन । राध • । भावक
रणादौल्युट् ॥

संराव: । पु• आरवे । आरावे । शब्दमा
त्रे ॥ संरवणम् । रुशब्दे । उप
सर्गेरुवक्तिभावेघञ् ॥

संरावी । त्रि• प्रशस्तशब्दविशिष्टे ॥

संरुद्ध : । त्रि• प्रतिबद्धे ॥ घिरग
याकृतिख्याते ॥

संरूढ : । त्रि• प्रौढे ॥ अङ्कुरिते ।
सम्यूर्वाद्रुहिगत्यर्थेतिक्तः । ढत्वधत्व
ष्टुत्वढलोपदीर्घा : ॥

संरोध : । पु• क्षेपे ॥ रोधे ॥ सं
रोधनम् । रुधिर् । घञ् ॥

संलग्न : । त्रि• संयुक्ते ॥ सम्य
कलग्न : ॥

संलय: । पु• निद्रायाम् । शयने ॥
सम्यक्लीयतेऽत्र । लीङ्श्लेषणे ।
एरच् ॥ प्रलये ॥

संलाप : । पु• प्रीत्यामिथोभाषणे
। अन्योन्यप्रीतिभाषणे ॥ संल
पनम । लप• । घञ् ॥ आ
लापएकेनापिक्रियते • संलापस्तुपर
स्परभाषणमेवेतिभेद : ॥ उक्तिप्र
त्युक्तिमद्वाक्यंसंलापइतिकीर्त्यते
॥ कृत्युज्ज्वलनीलमणि : ॥

संव : । पु• शस्त्रे । वज्रे । कुलि

शे । संवयति । वय० । अच् ॥
संवत् । अ० वर्षे । वत्सरे ॥ संवय
ति । वयगतौ । क्विप् । यलोपः ।
तुक् ॥
संवत्सरः । पुं० वत्सरे । अब्दे ॥
सम्यग्वसन्त्यत्रर्त्तवोमासादयश्च ।
वसनिवासे । संपूर्वाच्चिदिसरप्रत्य-
यः । सस्यार्द्धधातुकइतिसस्यतः
संवत्सरपरिवत्सरेडावत्सरानुवत्स
रेदावत्सरेषुप्रथमवत्सरे ॥ तत्र
दाशुक्लप्रतिपदिसङ्क्रान्तिर्भवति०
तदासौरचान्द्रयोर्मासयोर्युगपदुप
क्रमोभवति० ससंवत्सरः । त
तः सौरमानेन० वर्षेषड्दिना
निवर्द्धन्ते० चान्द्रमानेन० ह्रस
न्तीतिद्वादशदिनव्यवधानादुभयोर
ग्रपश्चाद्भावोभवति । एवंपञ्चवर्षा
णिगच्छन्ति । तन्मध्येद्वौमलमासौ
भवतः षष्ठः संवत्सरोभवति ।
तदेवचान्तरभेदेन० संवत्सरादिप
ञ्चकंसमामनन्ति ॥ एषामुद्धारस्तु
। शकाब्दात्पञ्चभिः शेषात्सम्
वत्सरादिवत्सराः । सम्परीदानुपू
र्वास्तथेदापूर्वकामता० इति ।
कालात्मशास्त्रेतिविष्णौ ॥
संवत्सरमुखी । स्त्री० ज्येष्ठशुक्लदश
म्याम् । दशहरायाम् ॥ यथा ।
ज्यैष्ठस्यशुक्लदशमीसंवत्सरमुखी-
स्मृता । तस्यांस्नानंप्रकुर्वीतदान
ञ्चैवविशेषतः । इतिब्रह्मपुराण
म् ॥
संवत्सरा । स्त्री० दुर्गायाम् ॥
संवद् । अ० वर्षे ॥ संवदतिभाषा
न् । वद० विच् ॥
संवदनम् । न० संवादे ॥ समाले
चे ॥ वशीकृतौ ॥
संवननम् । न० वशक्रियायाम् । व
शीकरणे ॥ सम्पूर्वोवनुयाचने
वशीकरणार्थः । ल्युट् ॥
संवरः । पुं० अनेकान्तवादिनांसप्त
पदार्थान्तर्गतपदार्थविशेषे ॥ य
था । इन्द्रियसंयमरूपप्रतिष्ठध्यान
म्० आस्रवनिरोधात्मकत्वात्०सं
वृणोत्यास्रवमितिसंवरश्चतुर्थः ।
वृङ्वृञ्भ्यां० ग्रहवृ० दृत्यादिना
कर्मण्यप् ॥
संवरणम् । न० गोपने ॥ सम्यक्
वरण वेष्टनम् ॥ आवरणे ॥
संवर्गः । पुं० प्राणे ॥ वायौ ॥
संवर्जनादर्थात्सङ्ग्रहणात्० स
ङ्ग्रसनाद्वाऽग्न्यादीनां० वायुः
संवर्गः । संवृङ्क्ते । वृजि० ।
घञ् । कुत्वम् ॥
संवर्गविद्या । स्त्री० वायूपासनवि
द्यायाम् ॥ संवर्गस्यविद्या ॥
संवर्त्तः । पुं० प्रलये ॥ संवर्त्ततेज
गदत्र । वृतु० । हलश्चेतिघञ् ॥
मुनिविशेषे ॥ श्रुत्यादिप्रसिद्धेपर

महंसेऽग्रेरवतारे ॥ अथद्रुमे । क
र्षफले ॥ योगविशेषे ॥ यथा । स
ममीरविबारिवप्रतिपद्ध्वासरे ।
संवर्त्तसंज्ञकोयोगोगदित : शुभ
कर्मसु ॥ मेघाधिपविशेषे । संवर्त्त
सवह्कूट्कः ॥

संवर्त्तक :। पुं॰ कालाग्निरुद्रे ॥ ब
लदेवस्यलाङ्गले ॥ और्वे । बाडवा
ग्नौ ॥ त्रि॰ प्रवर्त्तके ॥ संवर्त्तय
ति । इतु॰ ण्वुल् ॥

संवर्त्तकी । पुं॰ बलदेवे । अच्यु
ताऽग्रजे ॥ द्व॰ त्रि॰ शेषः ॥

संवर्त्तवापी ।.स्त्री॰ तीर्थविशेषे ॥

संवर्त्तिः । स्त्री॰ पद्मादिनवपत्रे ।
संवर्त्तिकायाम् ॥ संवर्त्तते । इतु
॰। इपिपिरुहिवर्तिविदिच्छिदि
कीर्त्तिभ्यश्चेतीन् ॥

संवर्त्तिका । स्त्री॰ पद्मादीनांनवद
ले ॥ पद्मस्यकेसरसमीपस्थदले ॥
संवर्त्तिरेव । स्वार्थेकन् ॥ गुणा
स्तु । संवर्त्तिकाहिमातिक्ताकषाया
दाहहृट्प्रणुत् । मूत्रकृच्छ्रगुदव्या
धिरक्तपित्तविनाशिनी ॥

संवर्द्धक :। पुं॰ संवर्द्धनकारिणि ॥

संवर्द्धनम् । नं॰ सम्यग्वृद्धौ । सं
वर्द्धितेतच्छील : । बुधयुक्तौ । अ
नुदात्तश्चेतियुच् ॥ संदीपने ॥

संवर्द्धित :। त्रि॰ पुष्टे । सम्यग्वृ
द्धिविशिष्टे ॥

संवलनम् । न॰ मिश्रणे ॥

संवलित :। त्रि॰ मिलिते । मिश्रि
ते । एकत्रीकृते ॥

संवसथ :। पुं॰ ग्रामे ॥ संवसन्त्यत्र
। वस॰ । उपसर्गेवसइत्यथच् ॥

संवह :। पुं॰ सप्तवाय्वन्तर्गतप्रम
स्तवायौ ॥ सतद्वहवायोरुपरिस्थ
इतिसिद्धान्तशिरोमणि : ॥ वा
योस्तुर्यस्कन्धे ॥ यथा। धवस्तो
नयउग्रभीम : च पश्चसाक्षय : ।
खभियुग्मोथवाभेद्यस्तुर्य : सं
वहोगण : ॥ ४ ॥

संवाटिका । स्त्री॰ शृङ्गाटके ॥

संवाता । पुं॰ संवत्सरे ॥ बाते
र्गत्यर्थाच्छतप्रत्यय : ॥

संवाद :। पुं॰ परस्परवचनाविरो
धे ॥ वाचिके । सन्देशवाक्ये ।
समाचारे ॥ संवदनम् । वद॰ ।
घञ् ॥

संवादिनी । स्त्री॰ सहग्याम् ॥ य
था । षड्जसंवादिनीतिरघु : ॥

संवार्य्य :। त्रि॰ संवरणीये ॥

संवास :। पुं॰ गृहे ॥ पुरवासि
नांविहारार्थंपुरमध्येवहिर्वाऽनाव
तस्थाने । सन्निवेशे । निकर्ष
णे ॥

संवाहक :। पुं॰ अङ्गविमर्दके ॥

संवाहनम् । न॰ भारादेर्वाहने ॥
अङ्गमर्द्दने । पादमर्द्दनादौ ॥ वह

प्रापणे । स्वार्थे ण्यन्ताल्ल्युट् । वाहनमाहितादिति निपातनाद्दीर्घ इत्येके ॥
संवाहितः । त्रि॰ सम्भारिते ॥
संविग्नः । त्रि॰ उद्विग्ने ॥ सम्भ्रान्ते ॥ ओविजी भयचलनयोः संपूर्वः । क्तः । ओदितश्चेति नः । श्वीदितइति नेट् ॥
संवित्तिः । स्त्री॰ प्रतिपत्तौ ॥ ज्ञानाववादे ॥ विद्ज्ञाने । स्त्रियां क्तिन् ॥
संवित्॰ द्॰ स्त्री॰ ज्ञाने । सम्भाषायाम् ॥ क्रियाकारे । आजौ । सङ्ग्रामे । नाम्नि ॥ अङ्गीकारे ॥ प्रतिज्ञायाम् ॥ आचारे । तोषणे ॥ संयमे ॥ सङ्केते । यथा । प्रवृत्तौ च निवृत्तौ च संविदः स्थापयेद्द्विजइति । कृतव्यवस्थायाम् ॥ यथा । संविदस्य व्यतिक्रमइति ॥ मनीषायाम् ॥ संवेदनम्॰ संविद्यतेऽनया वा । विद्ज्ञाने॰ विद चेतनादौ वा । सम्पदादित्वात् क्विप् ॥
संविदितः । त्रि॰ अङ्गीकृते । अङ्गीकृते । संविद्यतेस्म । विद्ज्ञाने । क्तः ॥
संविधा । स्त्री॰ भोग्यवस्तुनि । सामग्र्याम् ॥ संविधीयतेऽनया । संविपूर्वात् धाञः आतश्चोपसर्ग इतिकः ॥
संविधानम् । न॰ उत्पादने ॥
संविभागः । पुं॰ विभज्य प्रतिपादने ॥
संविद्यतीर्थम् । न॰ तीर्थविशेषे ॥
संविषा । स्त्री॰ अतिविषायां ॥
संवीक्षणम् । न॰ अन्वेषणे । अपहृतवस्तुनस्तात्पर्येणान्वेषणे । सम्यक् तात्पर्येण विविधप्रकारैरीक्षणम् ॥
संवीतः । त्रि॰ दृढे । आवृते । मद्यादिनावेष्टिते । संवीयतेस्म । व्येञ् संवरणे । क्तः ॥
संवीताङ्गः । त्रि॰ आच्छादितदेहे ॥
संवृतः । त्रि॰ सङ्कुचिते ॥ यथा । नासंवृतमुखः कुर्याद्धास्यं जृम्भां तथाक्षुतमिति । निगूढे । गुप्ते । संवेष्टिते । सम्पूर्वाद्वृञः क्तः ॥
संवृतिः । स्त्री॰ वागिन्द्रियप्रयुक्ते व्यवहारे ॥ गोपने ॥ संवरणम् । वृञ्॰ क्तिन् ॥
संवृत्तः । त्रि॰ सञ्जाते । सम्यक्प्रवृत्ते ॥ सम्पूर्वाद्वर्ततेः क्तः ॥ पुं॰ वरुणे ॥
संवृत्तिः । स्त्री॰ संवरणे ॥ अविद्याविषयेलौकिकेव्यवहारे ॥ लौकिक्यांबुद्धौ ॥ अविद्यायाम् ॥ संव्रियते॰ आच्छाद्यते तत्त्वं यया । विभ्रमे ॥ संवर्त्तनम् । वृतु॰

क्तिन् ॥

संवेग : । पुं॰ सम्भ्रमे । हर्षादिना कर्मसुत्वरणे ॥ श्रद्भुतपरस्त्र्यादिदर्शनात्सत्वरतायाम् ॥ संवेजनम् । श्रोविजी॰ घञ् । सम्यग्वेगे ॥

संवेद : । पुं॰ वेदने । अनुभवे ॥ विदज्ञाने । सम्पूर्व : । घञ् ॥

संवेदनम् । न॰ संवेदे ॥

संवेद्य : । त्रि॰ ज्ञेये ॥

संवेश : । पुं॰ स्वापे । निद्रायाम् ॥ स्त्रीरतिबन्धे ॥ पीठे ॥ संवेशनम् । विश॰ । घञ् ॥

संवेशनम् । न॰ मैथुने ॥ उपभोगस्थाने ॥

संव्यानम् । न॰ उत्तरीयवस्त्रे ॥ अंशुके : वस्त्रे ॥ संवीयतेऽनेन । व्येञ्संवरणे । ल्युट् ॥

संशप्तक : । पुं॰ समयात् सङ्ग्रामादनिवर्त्तिनि ॥ समयात्॰ कुलाचाराच्छपथाद्वा॰ सङ्ग्रामादनिवर्त्तिनोऽपराङ्मुखाश्चपलायमानाश्चाक्रोशन्ति॰ तेसंशप्तका : कथ्यंते ॥ नारायणस्यसेनाविशेषे ॥ शपनम् । शपश्चाक्रोशे । भावेक्त : । संशप्तंशपथंकरोति । तत्करोतीतिणिच् । ण्वुल॰ क्तान्वा ॥ सम्यक्॰ शप्तंसत्यंयस्येतिवा ॥

संशम : । पुं॰ निरवशेषनाशे ॥ संशमनम् । शम॰ भावेघञ् ॥

संशमनम् । न॰ शमने । यथा । नशोधयतियद्दोषान्समान्नोदीरयत्यपि । समीकरोतिसंवृद्धांस्तत्संशमनमुच्यते ॥ नशोधयति॰नोर्ध्वाधोमार्गाभ्यांपातयति । नोदीरयति॰नवर्द्धयति ॥ सु॰भा॰प्र॰श : ॥

संशय: । पुं॰ सन्देहे । द्वापरे ॥ अस्यलक्षणंयथा । एकस्मिन्धर्मिणिविरुद्धनानाधर्मवैशिष्ट्यज्ञानं॰ संशयइति । यथास्थाणुर्वापुरुषोवेति ॥ विचिकित्सायाम् ॥ योग : साधनीयेनवेत्युभयकोटिस्पृशिविज्ञाने ॥ अतद्रूपप्रतिष्ठत्वेनविपर्ययान्तर्गतोपिसन्नुभयकोटिस्पर्शित्वेकस्कोटिस्पर्शित्वरूपावान्तरविशेषविवक्षयाचविपर्ययाद्भेदो बोद्धव्य : ॥ प्रतिबन्धके ॥ संशयंलक्षयतिगोतम : । समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यानुपलब्ध्याव्यवस्थातश्चविशेषापेक्षोविमर्श : संशय: । १ । २३ । संशयइतिलक्ष्यनिर्देश : विमर्शइत्यत्रविशब्दोविरोधार्थ : । स्मृशिर्ज्ञानार्थ : एकस्मिन्धर्मिणीतिपूरणीयम् । तेन॰एकधर्मिणिविरोधेनभावाभावप्रकारकंज्ञानमसंशय : । तत्रकारणमुक्तिंविशेषलक्षणान्य

र्म्मसमानेत्यादि । उपपत्तिस्थानम् । तथाच समानस्य विरुद्धकोटिद्वयसाधारणधर्मस्य ज्ञानादित्यर्थः । तथाच साधारणधर्मवद्धर्मिज्ञानजन्योऽसाधारणधर्मवद्धर्मिज्ञानजन्यश्चेत्यर्थः । विप्रतिपत्तिर्विरुद्धकोट्योरुपस्थापकः शब्दस्तस्मादित्यर्थः । यद्यपि शब्दस्य न संशायकत्वम् तथापि शब्दात् कोटिद्वयोपस्थितौ मानसः संशय इति वदन्ति उपलब्धेर्ज्ञानस्य अनुपलब्धेर्व्यतिरेकज्ञानस्य याऽव्यवस्था सद्विषयकत्वानिर्धारणं प्रामाण्यसंशय इति फलितोऽर्थः ॥ अन्ये तु उपलब्ध्यव्यवस्था प्रामाण्यसंशयः । अनुपलब्धिरुपलब्धिभ्रमत्वम् तदव्यवस्था तत्संशय इत्याहुः । वस्तुतस्तु प्रामाण्यसंशयस्य न संशयहेतुत्वम् किन्तु गृहीताप्रामाण्यकज्ञानस्य विरोधितया सति प्रामाण्यसंशये तज्ज्ञानस्याविरोधितया साधारणधर्मदर्शनादित एव संशयोत्पत्तिरिति । उपलब्धेत्यादिकं तादृशस्थले संशयो भवतीत्येतावन्मात्रपरम् । चकारो व्याप्यसंशयस्य व्यापकसंशयहेतुत्वं समुच्चिनोतीति वदन्ति । विशेषापेक्ष कोटिस्मरणसापेक्ष । वस्तुतस्तु संशयधारावाहिकत्वं स्यात्तत्राह । विशेषेति । विशिष्यं विशेषदर्शनम् अपेक्षते निवर्त्तकत्वेन तथाच विशेषदर्शननिवर्त्यत्वकथनम् एवमविशेषदर्शनजन्यसंशयइत्युक्तम् ॥ १।२३ । संशयनम् । शीङ् एरच् ॥

संशयात्मा । त्रि० इदमेवं भवति न वेति सर्व्वत्र संशयाक्रान्तचित्ते । संशये आत्मा मनो यस्य सः । संशयात्मा विनश्यति ।

संशयानः । त्रि० संशयापन्ने । संशययुक्ते ॥

संशयापन्नः । त्रि० संशयिनि ॥

संशयापन्नमानसः । त्रि० सन्देहके । संशयिते । सांशयिके ॥ संशयमापन्नं मानसं यस्य यस्मिन् विषये वा ॥

संशयालुः । त्रि० संशयितरि ॥

संशयितः । त्रि० सन्देहविषये । विचिकित्सिते ॥

संशयिता । त्रि० सन्देहाश्रये । संशयकर्त्तरि । यथाहुः । अस्ति स्वयमित्यस्मिन्नर्थे कश्चास्ति संशयः पुमः । अत्रापि संशयश्चेत् संशयिता यः स एव भवसि त्वम् । ४ ।

संशितः । त्रि० सम्यक् सम्पादिते ॥ संशितं व्रतम् । सम्यक् सम्पादितमित्यर्थः ॥ व्रतविषयकयत्नवति ॥ संशितो ब्राह्मणः । व्रतविषयकयत्नवानित्यर्थः ॥ सम्यक् शायते स्म

। शीतनूकरणे । क्तः । शाकोरन्यतरस्यामित्यत्र० श्यतेरित्वम्० । व्रतेनित्यमिति० नित्यमित्वम्व्यवस्थितविभाषात्वात्ध्य० व्रतविषयेश्यतेर्नित्यमित्वम् । मुनिशिते ॥ सम्यक्तनूकृते । सूक्ष्मे ॥

संशितव्रत : । त्रि० व्रतयत्ने ॥ सम्यक्शितानितीक्ष्णीकृतानि० अतिदृढानिव्रतानियस्यसतथा । श्यतेरित्वंव्रतेनित्यम् ॥

संशुद्ध : । त्रि० सम्यक्शुद्धिविशिष्टे ॥

संशुद्धि: । स्त्री० सम्मार्ज्जने । शरीरादिमार्ज्जने । शौचे ॥

संशुष्क : । त्रि० आतपादिनासंशोषितवस्तुनि ॥

संशोक : । पुं० औष्ण्ये ॥

संशोकज: । त्रि० स्वेदजे ॥ औष्ण्याज्जायमानेयूकादौ ॥ तेषांस्वाण्डजेअन्तर्भाव : ॥ यद्वा । औष्ण्याद्भूमिमुद्भिद्यजातेमशकादौ । तेषामुद्भिज्जेऽन्तर्भाव : । तथाचसंशोकजोनाण्डजोद्भिज्जाभ्यामतिरिच्यते ॥

संशोधनम् । न० संशुद्धौ ॥ स्यानादृच्छिनंपेद्दूर्ष्ममघोवादोषसञ्चयम् । संशोधनंतदेवस्याद्दर्वालीफलंयथा ॥

संशोधित: । त्रि० शुद्धीकृतवस्तुनि ॥

संश्यत् । न० कुहके । इन्द्रजाले । मायायाम् ॥ सम्यक्श्यतीति । शिञ्क्षयने । संश्यत्वदद्विदित्यत्रयति :। निपातनात्० सुडित्याशेपश्च ॥

संश्यान : । त्रि० शीतेनसङ्कुचिते ॥

संश्रय : । पुं० राज्ञामाश्रयाख्येगुणे । परिपीड्यमानस्यबलवदाश्रयणे ॥ आश्रयायाम् ॥ नवनेनन्दनोदृशेनचैत्ररथसंश्रये० द्युतिरामायतोदृशंमाम् ॥ आश्रये ॥ बले ॥

संश्रव : । पुं० अङ्गीकृतौ । प्रतिज्ञाने ॥ सम्पूर्वाच्छृणोते : ० ऋदोरबित्यप् ॥

संश्रित : । त्रि० अनुजीविनि । आश्रिते ॥

संश्रुत : । त्रि० अङ्गीकृते ॥ संश्रूयतेस्म । श्रुश्रवणे । क्त : ॥

संश्लिष्ट: । त्रि० आश्लिष्टे । मिलिते॥

संश्लेष : । पुं० उपगूहने ॥ संश्लेषणम् । श्लिषआलिङ्गने । घञ् ॥

संश्वत् । न० संयति । मायायाम् ॥ संश्वत्वदद्विदित्यत्र० सुभूतिचन्द्र : सम्पूर्वाच्छ्वयते : संश्वदित्याह । संश्वत्कुहकेस्नेयंसंश्वत्तत्त्वंवतेसमे । कृतयुग्मादिकोप्यम ॥

संसक्त : । त्रि० अन्योन्यश्लिष्टे । अव्यवहिते । संलग्ने ॥ संसज्यतेस्म । षञ्जसङ्गे । क्त : ॥ लोहदारुमयै: पाशैर्दृढंवद्धोविमुच्यते । स्त्रीधना

दिषु संसक्तोमुच्यतेनकदाचन ॥

संसक्तिः। स्त्री॰ संश्लेषे ॥

संसत्॰द्। स्त्री॰ परिषदि। सभायाम् ॥ संसीदन्त्यस्याम्। षद्लृविशरणादौ। सम्पदादित्वात्क्विप् ॥

संसरणम्। न॰ असम्बाधचमूगतौ। रथादीनामसम्बाधगमने ॥ घण्टापथे। नगरस्योपनिर्गमे ॥ संसारे ॥ रणारम्भे ॥ समारम्भे ॥ प्राणिजन्मनि। पुनःपुनर्योनिसम्बन्धे ॥ गतौ। सम्यक्सरन्त्यनेन॰ सम्भूयसरन्त्यनेनावा। सृगतौ। करणादौल्युट्। वाहुलकाद्वाल्युट्। युवतुयुक्तः। घञ्लुडपवादत्वात् ॥

संसर्गः। पुं॰ सङ्गे। सङ्गमे। समवायादिसम्बन्धे ॥ संसर्जनम्॰ सम्सृज्यतेवा। सृज॰। घञ् ॥

संसर्गाभावः। पुं॰ सम्बंधरहितत्वे ॥ न्यायमतेऽभावपदार्थविशेषः। सतुभेदभिन्नाभावः। सचत्रिविधः। प्रागभावः १ ध्वंसः २ अत्यन्ताभावः ३ इतिभेदात्। यथा। अभावस्तुद्विधासंसर्गान्योन्याभावभेदतः। प्रागभावस्तथाध्वंसोप्यत्यन्ताभावएवच। एवंत्रैविध्यमापन्नः संसर्गाभावइष्यते। इ॰ भा॰ प॰ ॥ भेदत्वंतादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम्। विनाश्यभावत्वंप्रागभावत्वम् १ जन्याभावत्वम्ध्वंसत्वम् २ नित्यसंसर्गाभावत्वमत्यन्ताभावत्वम् ३। इतिसिद्धान्तमुक्तावली ॥

त्वम्ध्वंसत्वम् २ नित्यसंसर्गाभाव

संसर्गी। त्रि॰ संसर्गविशिष्टे ॥ मत्वर्थीयइनिः ॥ सृजिन ॥ सम्पूर्वात्सृजेः॰सम्पृचानुरुधेतिविनुण् ॥

संसर्पः। पुं॰ मासविशेषे ॥ यथा। यदात्वधमासोभवति॰ तदाक्षयमासस्यपूर्वोत्तराबधिमासौभवतः। तत्रपूर्वस्मिन्नधिमासे ॥ सचमलमासः किन्तुशुद्धतुल्यः। उत्तरएवासंक्रान्तोमलमासः। तथाच आचार्याः। एकस्मिन्नपिवर्षे चेद्वौमासावधिमासकौ। पूर्वोमासः प्रशस्तःस्यादपरस्तुमलिम्लुचइति ॥ संसर्पणे ॥

संसर्पणम्। न॰ सम्यक्प्रकारेणगमने ॥

संसर्पी। त्रि॰ संसर्पविशिष्टे। सम्यग्गमनशीले।

संसारः। पुं॰ मृषाज्ञानसम्भूतवासनायाम् ॥ यथा। संसारमिथ्याधीप्रभवावासनेति ॥ भवे। स्वादृष्टोपनिबद्धशरीरपरिग्रहे। जन्ममरणलक्षणे। प्रमातृताप्रमुखकर्तृत्वाद्यनर्थे ॥ अविद्यायाम् ॥ यथोक्तंशङ्कराचार्यैः। संसारः स्वप्रतुल्योहिरागद्वेषादिसङ्कुलः। स्व

कालिसत्यवद्भातिप्रबोधेऽसत्यवद्भवेदिति ॥ अपिच । अयमतिचारितया कृतयासंसारोभातिरमणीयः । अथपुनः परमार्थदृशानकिमपिसारोगरमणीयद्गतिमिल्हयमिश्रः ॥ दुःखे ॥ कृच्छ्रेणामेध्यमध्येनियमितततनुभिः स्थीयतेगर्भवासे • कान्ताविश्लेषदुःखव्यतिकरविषयोयौवनेचोपभोगः । वामाक्षीणामवज्ञाविहसितवसतिर्वृद्धभावोप्यसाधुः संसारेरेमनुष्याः वदतयदिसुखंस्वल्पमप्यस्तिकिञ्चित् ॥ संसरति कालान्तरम् । सृ० । घञ् • ॥ संसरणम् • .वा ॥ दुःखमूलंहिसंसारः सयस्यास्तिसदुःखितः । त्यागः कृतोयेनससुखीनापरः प्रिये ॥ प्रभवंसर्वदुःखानामालयं सकलापदाम् । आश्रयंसर्व्वपापानांसंसारंवर्जयेत्प्रिये ॥ अवध्यत्र न्यनघोरमखोक्तमक्षाविषम् । अयस्त्रखंडनंदेविसंसारः सक्तचेतसाम् ॥ आदिमध्यावसानेषुदुःखंसर्वमिदंयतः । तस्मात्सन्त्यज्यसंसारंतत्त्वनिष्ठः सुखीभवेत् ॥ इति कुलार्णवे १ उल्लासः ॥

संसारगुरुः । पुं॰ प्रद्युम्ने । कामदेवे । मनोजन्मनि । रूपास्त्रे ॥ संसारश्रगुरुः ॥

संसारबन्धनिर्मुक्तिः । स्त्री॰ नानायोनिसम्बन्धनिवृत्तौ ॥ संसारएव बन्धः • तस्मान्नितरांमुक्तिः ॥

संसारमार्गः । पुं॰ मिथ्याज्ञाने ॥ भगे । योनौ ॥

संसारबीजम् । न॰ कामकर्मप्रवृत्तिकारणे॰ अज्ञाने ॥

संसारवृक्षः । पुं॰ अव्यक्तादिस्थावरान्तेद्रुमसदृशे ॥ यथा । कदलीस्तम्भवन्निःसारोऽनेकशतपाखण्डबुद्धिविकल्पास्पदस्तत्वविजिज्ञासुभिर्निर्धारितेदंतत्त्वो॰ वेदान्तनिर्धारितपरब्रह्ममूलसारो॰ ऽविद्याकामकर्मव्यक्तबीजप्रभवो॰ ऽपरब्रह्मविज्ञानक्रियाशक्तिद्वयात्मकहिरण्यगर्भाङ्कुरः • सर्वप्राणिलिङ्गभेदस्कन्धः • तत्तृष्णाजलावसेकोद्भूतदर्पो॰ बुद्धीन्द्रियविषयप्रवालाङ्कुरः • श्रुतिस्मृतिन्यायविद्योपदेशपलाशो॰ यज्ञदानतपआद्यनेकक्रियासुपुष्पः सुखदुःखवेदनानेकरसः • प्राण्युपजीव्यानन्तफलस्तत्तृष्णासलिलावसेकप्ररूढबद्धीकृतदृढबद्धमूलः सत्यनामादिसप्तलोकब्रह्मादिभूतपक्षिकृतनीडः • प्राणिसुखदुःखोद्भूतहर्षशोकजातनृत्यगीतवादित्रक्ष्वेडितास्फोटितहसिताकृष्टरुदितहामुञ्चमुञ्चेत्याद्यनेकशब्दकृततुमुलीभूतमहारवो॰ वेदान्तविहितब्रह्मात्मदर्शनासङ्गशस्त्रकृतो

च्छेदएषसंसारवृक्षोनिरूपितोवेदान्तेष्वाचार्यैः । तथोक्तंश्रीकृष्णमिश्रैः । अमुष्यसंसारतरोरबोधमूलस्यचोन्मूलविनाशनाय । विश्वेश्वराराधनबीजजाततत्त्वप्रबोधान्नपरोऽभ्युपायइति ॥

संसारहृत् । पुं॰ आत्मबोधे ॥

संसारहेतुः । पुं॰ आत्मनोऽविद्यायाम् ॥

संसारी । पुं॰ संसारविशिष्टप्राणिनि । भोक्तरि । संसारोऽस्यास्ति । इनिः ॥ कर्तृत्वादिधर्मवति ॥

संसिद्धिः । स्त्री॰ सम्यक्सिद्धौ ॥ प्रकृतौ ॥ स्वभावे ॥ मदोद्यतायांस्त्रियाम् ॥ मुक्तौ । मोक्षे ॥ देहेन्द्रियसङ्घातस्याऽशुद्धिक्षयेणसम्यग्ज्ञानोत्पत्तियोग्यतायाम् । श्रवणादिसाध्यायांज्ञाननिष्ठायाम् ॥ फले ॥ साङ्गयोगमनुष्ठायपरिसमापनंसंसिद्धिरितियोगिनः ॥ संसेधनम् । षिधुसंराद्धौ । क्तिन् ॥

संसृतिः । स्त्री॰ संसारे ॥ प्रवाहे ॥ संसारणं । सृ॰ । क्तिन् ॥

संसृष्टः । त्रि॰ संसर्गे ॥ वमनादिनासंशुद्धे ॥ विभागानन्तरंप्रीत्यापुनःसंमिलितधने ॥ यथा । विभक्तोयः पुनःपित्राभ्रात्रावैकत्रसंस्थितः । पितृव्येणाथवाप्रीत्यासतुसंसृष्टउच्यते॰ इतिवृहस्पतिः ॥ संसर्जनम् । सृज॰ । क्तः ॥

संसृष्टिः । स्त्री॰ काव्यालङ्कारविशेषे ॥ यथा । सैषासंसृष्टिरेतेषांभेदेनयदिहस्थितिः । एतेषांशब्दार्थालङ्काराणांयथासम्भवमन्योन्यनिरपेक्षतयः॰ यदिह॰ शब्दभागएव॰ अर्थविषयएव॰ उभयत्रापिवाऽवस्थानं॰ सैकार्थसमवायस्वभावसंसृष्टिः । तत्रशब्दालङ्कारसंसृष्टिर्यथा । वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया । चलितयाविदधेकलमेखलाकलकलोलकलोलदृशान्यया ॥ अर्थालङ्कारसंसृष्टिर्यथा । लिम्पतीवतमोङ्गानिवर्षतीवाञ्जनंनभः । असत्पुरुषसेवेवदृष्टिर्निष्फलतांगता ॥ पूर्वत्रपरस्परनिरपेक्षौयमकानुप्रासौसंसृष्टिंप्रयोजयतः । उत्तरत्रतुतथाविधे॰ उपमोत्प्रेक्षे । शब्दार्थालङ्कारयोःसंसृष्टिर्यथा । सोणत्थिएत्थगामेजोएअंमहमहन्तलावण्णम् । तरुणाणंहिअअलुडिंपरिसंपन्तींणिवारेइ ॥ नास्त्यत्रग्रामेयएतांस्फुरल्लावण्याम् । तरुणानांहृदयलुण्ठनंपरिसङ्क्रामन्तींनिवारयतीतिसं-स्कृतम् ॥ हृदयलुण्ठनमितिरूपकम्॰ आयुष्मतमितिवत् । पूर्वोक्तिषुअनुप्रासः । एवंशब्दार्थालङ्कारयोःसंसृष्टिरियम् ॥ यथानुप्रा

सोऽरूपकश्चान्योन्यानपेक्षे । संसर्गश्चतयोरेकवाक्ये छन्दसिवासमवेतत्वात् ॥

संसृष्टी । त्रि॰ संसृष्टत्वविशिष्टे ॥

संसेवनम् । न॰ सम्यगन्नादीनांउपभोगे ॥ तत्र निघण्ट्वादिप्रोक्तव्यतिरिक्तानांद्रव्याणांभक्षणं निषेधति । अज्ञातजातिगुणरूपविधानकानामन्नादिबीजरसपुष्पफलौषधानाम् । संसेवनंसुकृतसौख्ययशोभिवृद्ध्यै निःसंशयं नरवरोविदधीतनाच ॥

संस्कारः । पुं॰ अनुभवे । मानसकर्म्मणि । वासनायाम् ॥ प्रतियत्ने । उत्कृष्टगुणाधाने । संस्क्रियते॰ अनेन ॰श्रौतेनस्मार्त्तेनवाकर्म्मणापुरुषइतिसंस्कारः । स्वीयस्वीयजातीसामान्यविशेषविहितवैदिकस्मार्त्तकनुष्ठानद्वाराऽदृष्टविशेषाधायकइतियावत् । तद्गुणयःतदर्थोक्तदिनशुद्ध्यादिरपिसंस्कारशब्देनोच्यते ॥ अथोक्तं श्रीमहानिर्व्वाणतन्त्रे । संस्कारेणविनादेविदेहशुद्धिर्न्नजायते । नासंस्कृतोधिकारीस्याद्दैवेपित्र्ये चकर्म्मणि ॥ अतोविप्रादिभिर्व्वर्णैः स्वस्ववर्णोक्तसंस्क्रियाः । कर्त्तव्याः सर्व्वथायत्नैरिहामुत्रहितेप्सुभिः ॥ तेचदशषोडशाष्टचत्वारिंशद्भेदभिन्नाः प्रोक्तायथा । जीवसेकः पुंसवनं सीमन्तोन्नयनंतथा । जातनाम्नोर्निष्क्रमणमन्नाशनमतःपरम् ॥ चूडोपनयनोद्वाहाः संस्काराः कथितादश । शूद्राणाञ्शूद्रभिन्नानामुपवीतंनविद्यते । तेषांनवैवसंस्काराद्विजातीनांदशस्मृताः ॥ नित्यानिसर्व्वकर्म्माणितथानैमित्तिकानिच । काम्यान्यपिवरारोहेकुर्य्याच्छाम्भववर्त्मना ॥ षोडशयथा । गर्भाधानंपुंसवनं सीमन्तोन्नयनंततः । जातकर्माभिधानञ्चनिष्क्रमः प्राशनंतथा ॥ चूडोपनयनंवेदव्रतानाञ्चचतुष्टयम् । गोदानंमेचलीन्मोक्षोविवाहः षोडशक्रमात् ॥ अष्टचत्वारिंशद्यथा । गर्भाधानमथापिपुंसवनकंसीमन्तजातक्रियानामान्नादनचौलकोपनयनश्रौतव्रतान्यप्यथ । चत्वारिस्नपनंविवाहकरणंपञ्चाभियज्ञाअपिसंस्थाः सप्तचसप्तसप्तइतितेसंस्कारजाअष्यमी । देवताप्रतिष्ठायांषट्संस्कारायथा । जातनाम्नोर्निष्क्रमणमन्नप्राशनमेवच । चूडोपनयनञ्चैतेषट्संस्काराः शिवोदिताइतिमहानिर्व्वाणतन्त्रम् ॥ संस्क्रियतेऽनेन । कृञोघञ् । व्युत्पत्तौ ॥ न्यायमतेगुणविशेषे ॥ सचत्रिविधः वेगाख्यसंस्कारः १ अयंमूर्त्तपदार्थस्थायी॰ क्वचिद्वेगजन्यः ॰क्वचित्कर्म्मजन्यश्च । स्थितिस्थापकसंस्कारः२

अथ पृथिवीगुण : • केषाञ्चिन्मते पृथिव्यादिचतुष्पदार्थानांगुण : • अयमतीन्द्रिय : स्पन्दनकारणञ्च । भावनाख्यसंस्कार : ३ अयमात्म मोऽतीन्द्रियगुण : • उपेक्षानात्म कनिश्चयजन्य : • अयं स्मरणप्रत्य भिज्ञयो : कारणञ्च । यथाह विश्व नाथतर्कालङ्कार : । संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने । मूर्त मात्रे तु वेग : स्यात्कर्मजो वेगज : क्वचित् ॥ स्थितिस्थापकसंस्कार : क्षितौ केचिच्चतुर्ष्वपि । • अतीन्द्रि य : सविज्ञेय : क्वचित्स्पन्दोपिका रणम् ॥ भावनाख्यस्तु संस्कारो जो वस्तुविरतीन्द्रिय : । उपेक्षाऽनात्म कस्तस्य निश्चय : कारणं भवेत् ॥ स्म रणे प्रत्यभिज्ञायामप्यसौ कारणं भवे दिति ॥ अथ जातकर्मादिक्रियाक लाप : समग्र : उक्तकालक्रमेणशरी रसंस्कारार्थं स्त्रीणामपि भवति । त थाचमनु : । अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषत : । संस्कारा र्थं शरीरस्य यथाकालं यथाक्रमम् ॥ वैवाहिको विधि : स्त्रीणां संस्कारो वैदिक : स्मृत : । पतिसेवा गुरौ वा सो गृहार्थोऽग्निपरिक्रियेति ॥ चात्व त्• जातकर्मादिक्रियाकलाप : । गृहकृत्यमेवसायं प्रात : समिद्धो मादिरूपोऽग्निपरिचर्यं त्वर्थ : ॥

संस्कारज : । त्रि• संस्कारात्जाते ॥
संस्कारवर्जित : । पुं• व्रात्ये ॥ त्रि• गर्भाधानादिसंस्कारविधुरे ॥
संस्कारस्कन्ध : । पुं• वासनाप्रपञ्चे । रूपविज्ञानवेदनासंज्ञास्कंधानां वासनायाम् ॥ रागद्वेषाभिनिवेशेषु । रागादय : क्लेशा : • उपक्लेशा श्चमदमानादयो• धर्माधर्मौचेतिवा चस्पतिमिश्रा : ॥
संस्कारहीन : । पुं• व्रात्ये ॥ त्रि• गर्भाधानादिसंस्कारवर्जिते ॥ संस्का रैरुपनयनादिभिर्गर्भाधानादिभि र्वा• हीन : ॥
संस्कार्य : । पुं• कर्मभेदे• प्रोक्षा दौ ॥ त्रि• संस्कारार्हे ॥
संस्कृतम् । न• लक्षणोपेते । पाणि न्यादिव्याकरणबोधिते । गीर्वाणवा ण्याम् ॥ संस्कृतं नामदैवीवागन्वा ख्यातामहर्षिभि : ॥ त्रि• कृत्रिमे ॥ भक्ते ॥ भूषिते । संस्कृयतेस्म । क्त : ॥ व्युत्पन्ने । अपनीतमले । शोधिते । कृतसंस्कारे ॥ पक्वे ॥
संस्कृतात्मा । पुं• दीक्षयादीक्षिते ॥
संस्कृति : । स्त्री• संस्क्रियायाम् ॥ संस्करणम् । डुकृञ् • । क्तिन् ।
संस्क्रिया । स्त्री• संस्कृतौ । शवदाहा दिक्रियायाम् ॥ मलापनयने ॥ संस्कारायकरणम् । डुकृञ् • । कृञ: शचेतिश: । रिङ् इयङ् ॥ टाप्

योऽविप्रभिन्नस्वस्वस्वयोनिसंस्कृयाम्। सेवेनवत्मनाकुर्यादेषधर्मः कलौयुगे ।

संस्तरः । पुं॰ प्रस्तरे । पल्लवादिरचितशय्यायाम् । सांथरा॰ इ॰ भा॰ प्र॰ ॥ अध्वरे । यज्ञे ॥ संस्तीर्यते । स्तृञ् आच्छादने । ऋदोरप् ॥

संस्तवः । पुं॰ परिचये । सङ्गतिस्तवने ॥ संस्तवनम् । ष्टुञ् स्तुतौ । ऋदोरप् ॥ सम्यक् स्तुतौ ॥

संस्तवान : । त्रिं॰ कामिनि ॥ संस्तौति । ष्टुञ्॰ । सम्यानश् स्तुवङ्व्यामच् ॥

संस्तावः । पुं॰ क्रतुषुद्विजन्मनांस्तुतिभूमौ । यज्ञच्छन्दोगैः क्रियमाणायां स्तुतिभूमौ । यत्रस्तावकद्विजावस्थानभूमौ ॥ समेत्यस्तुवन्त्यत्र । ष्टुञ्॰ । यज्ञेसमिस्तुवइतिअधिकरणेल्युटोपवादोघञ् ॥ संस्तवनंवा ॥

संस्तुतः । त्रि॰ सम्यक् स्तुतिविषयीभूते । संस्तूयतेस्म । ष्टुञ्॰ । क्तः । सहशब्देननिरूपिते ॥ परिचिते ॥

संस्त्यानम् । न॰ संहतौ । उपचये ॥

संस्त्यायः । पुं॰ सन्निवेशे ॥ संस्थाने ॥ विस्तृतौ । सङ्घाते ॥ संस्त्यानम् । ष्ट्यै स्त्यैशब्दसङ्घातयोः ॥ घञ् । आतोयुक् ॥ गृहे ॥

यथा । संस्त्यायान्प्रविशेयुरिति ॥

संस्थः । पुं॰ चरे ॥ निजराष्ट्रकेचरे ॥ क्रतुभेदे ॥ सन्तिष्ठतेऽनेन । ष्ठा॰ । अङ् ॥ वि॰ अवस्थिते ॥

संस्था । स्त्री॰ स्थितौ ॥ सादृश्ये ॥ नाशे ॥ न्याय्यपथस्थितौ । मर्यादायाम् ॥ सन्तिष्ठतेऽनया । सम्यगवस्थानंवा । ष्ठा॰ आतश्चोपसर्गइत्यङ् ॥ व्यवस्थायाम् । समाप्तौ ॥ व्यक्तौ ॥ प्रलयचतुष्टये । यथा । नैमित्तिकः प्राकृतिकोनित्यआत्यन्तिकोलयः । संस्थेतिकविभिः प्रोक्तश्चतुर्धास्यस्वभावतइति पुराणम् ॥

संस्थानम् । न॰ आकृतौ ॥ मृतौ ॥ सन्निवेशे ॥ चतुष्पथे ॥ संस्थीयतेऽनेनवा॰ संस्थितिर्वा । ष्ठा॰ । भावाधिकरणादौल्युट् । चिह्ने ॥ त्रि॰ शिवादौ ॥ समीचीनंस्थानमस्य ॥

संस्थापनम् । न॰ स्थिरीकरणे ॥

संस्थितः । त्रि॰ मृते ॥ व्यवस्थिते ॥ सम्यक् स्थिते । उत्थिते । सन्तिष्ठतेस्म । ष्ठा॰ गत्यर्थाकर्मकेतिक्तः ॥

संस्थितिः । स्त्री॰ तत्त्वे । संस्थाने ॥ मृत्यौ ॥

संस्पर्शः । पुं॰ स्पर्शे । त्वगिन्द्रियग्राह्यगुणविशेषे ॥ यथा । आलापाद्गात्रसंस्पर्शात्॰ नि : श्वा

सात्सङ्गमोगनात् । सङ्गम्यासना ध्यायात्प्रापंसङ्क्रमतेनृणामिति-च्छागलेय: ॥ सम्प्रयोगे । सम्व न्धे ॥ संस्पर्शनम् । स्पृशसंस्प र्शने : अकर्त्तरिचकारकेसंज्ञाया मितिघञ् ॥

संस्पर्शज: । त्रि॰ विषयेन्द्रियसं बन्धाज्जातेभोगे । येहिसंस्पर्शजा भोगादुःखयोनयएवते । आद्यन्तवन्त: कौन्तेयनतेषुरमतेबुध: ॥

संस्पर्शा । स्त्री॰ जनूकायाम् । जनी नामगन्धद्रव्ये । स्पृशति । संस्पृ श्यतेवा । स्पृश॰ । पदरुजेति घञ्॰ पचाद्यच्॰ कर्मणिघञ् वा॰ ॥

संस्फाल: । पुं॰ मेषे ॥

संस्फुट: । त्रि॰ फुल्ले । विकसिते ॥ स्फुटति । स्फुटविकसने । इ गुपधेतिक: ॥

संस्फेट: । पुं॰ युद्धे । रणे ॥ संस्फेटनम् । स्फिटअनादरे । घञ् ॥

संस्फोट: । पुं॰ युद्धे ॥ संस्फोट नम् । स्फुटिर्॰ । घञ् ॥

संस्मरणम् । न॰ संस्कारजन्यज्ञाने । संस्मृतौ

संस्मृति: । स्त्री॰ संस्मरणे ॥ स्त्रि यांक्तिन् ॥

संस्वेदजम् । न॰ स्वेदजेशाकविशे षे ॥ तथाहि । उक्तंसंस्वेदजं शाकंभूमिच्छत्रंशिलीन्ध्रकम् । छि त्रिंगे:मयकाष्ठपुरुषादिष्वतदुद्भवे-सर्वेसंस्वेदजा: शीतादोषला: पि च्छिलाश्चते । गुरवश्छर्दातीसारज्व रश्लेष्मामयप्रदा: ॥ श्वेता: शुचि स्थलीकाष्ठवंशगोव्रजसम्भवा: ना तिदोषकरास्तेषु: शेषास्त्यक्तव्या विगर्हिता: ॥ त्रि॰ भूव: शरी रस्यस्वेदात्प्रजातेदंशमश-कादिरूपेभूतग्रामे ॥

संहत: । त्रि॰ सङ्गते । मिलिते दृढे ॥ हृढसन्धौ ॥ संहन्यतेस्म । क्त: ॥

संहतजानु: । त्रि॰ सज्ञौ । संह तजानुके ॥

संहतजानुक: । त्रि॰ सज्ञौ ॥ संहतेमिलितेजानुनीयस्य: ॥

संहतल: । पुं॰ मिलितपाणिद्वये । प्रतले । निहतले । विस्तृता ङ्गल्योर्मिलितयोर्मिदचिणयो:पा ण्यो: ॥ संहतंसङ्घट्टंलाति । ला॰ । आतोनुपसर्गेइतिक: ॥

संहति: । स्त्री॰ समूहे । वृन्दे । निकुरम्बे । कदम्बे ॥ अल्पानाम पिवस्तूनांसंहति:कार्यसाधिका । तृणैर्गुणत्वमापन्नैर्बध्यन्तेमत्तद-न्तिन: ॥ संहति: श्रेयसीपुंसां स्वकुलैरल्पकैरपि । तुषेणापिप

रित्यक्ताः नम्ररोहिष्मितण्डुलाः ॥ घनतायाम् ॥ संहन्यते । हन्तेः क्तिन् ॥ घाते ॥

संहननम् । न० कलेवरे । गात्रे । शरीरे ॥ संहंति० संहन्यतेवा । हन० । कृत्यल्युटइतिल्युट् ॥ यद्वा । संहन्यन्तेऽस्मिन्भूतानि । करणेतिल्युट् ॥ दृढाङ्गत्वे ॥

संहननाङ्गः । त्रि० कठिनावयवे ॥ संहन्यतेनिविडीभवन्ति० अङ्गानि यस्य सः ॥

संहर्षः । पुं० स्पर्द्धायाम् ॥ मुदि । सुखे ॥ घर्षणे । घृष्टौ ॥ प्रभञ्जने । पवने । संहर्षणम् । हृषतुष्टौ । घञ् ॥

संहारः । पुं० प्रलये ॥ सङ्कोचने सङ्क्षेपे ॥ नरकविशेषे ॥ हरयंहारः । हृञोभावेघञ् । सम्यक्हारोऽत्र ॥ यद्वा । संह्रियतेऽनेन । अध्यायन्यायेतिघञन्तः साधुः ॥ असिताङ्गादिभैरवान्तर्गतभैरवविशेषे ॥

संहारमुद्रा । स्त्री० विसर्जनमुद्रायाम् ॥

संहितः । त्रि० सहिते ॥ योजिते ॥ सन्धीयतेस्म । डुधाञः क्तः । दधातेर्हिः ॥ मिलिते ॥

संहितपुष्पिका । स्त्री० मिश्रेयायाम् ॥

संहिता । स्त्री० मन्वादिप्रणीतधर्मशास्त्रे ॥ पुराणसंहितासु ॥ पञ्चसंहितायथा । ब्रह्मणश्चशिवस्यापिप्रह्लादस्यतथैवच । गौतमस्यकुमारस्यसंहिताः परिकीर्त्तिताः ॥ चतस्रोयथा । ब्राह्मीभागवतीशैवीवैष्णवीचप्रकीर्त्तिताः । चतस्रः संहिताः पुण्याधर्मकामार्थमोक्षदाः ॥ षट्संहितायथा । आद्यासनत्कुमारोक्ताद्वितीयासूतसंहिता । तृतीयाशाङ्करीविप्राश्चतुर्थीवैष्णवीमता ॥ तत्पराःसंहिताब्राह्मीसौराख्यासंहितामतेति ॥ संधौवर्णानामतिशयितसन्निधौ । वर्णसंयोगे ॥ वेदैकदेशे ॥ सम्पूर्वाद्धधातेः कर्मणिक्तः । दधातेर्हिः ॥

संहूतिः । स्त्री० बहुभिर्विहिताह्वाने ॥ समाह्वानम् । सम्पूर्वात्० ह्वेञः स्त्रियांक्तिन् ; वचिस्वपीति सम्प्रसारणम् ॥

संहृतः । त्रि० कृतसंहारेसङ्क्षिप्ते ॥

संहृतिः । स्त्री० संहारे ॥

संहृष्टः । त्रि० प्रहर्षिते ॥

सकटः । पुं० शाखोटवृक्षे ॥

सकटाक्षः । पुं० दराक्षे ॥ त्रि० कटाक्षसहिते ॥

सकण्टकः । पुं० शैवाले । पूती

कारके ॥ त्रि॰ कण्टकयुक्ते ॥

सकर : । त्रि॰ सहस्ते ॥ राजस्व विशिष्टे ॥ शुण्डयुक्ते ॥ सकिरणे ॥ करेणसहवर्त्तते य : स: ॥

सकरुण : । त्रि॰ सदये । करुणाविशिष्टे ॥

सकर्ण : । त्रि॰ श्रवणशीले । श्रुतितत्परे ॥ सावधाने ॥

सकर्मक : । पुं॰ कर्मयुक्तपचत्यादिधातुषु ॥

सकल : । पुं॰ सगुणेशिवे ॥ यथोक्तं शारदातिलके । निर्गुण : सगुणश्चेतिशिवोज्ञेय : सनातन : । निर्गुण : प्रकृतेरन्य : सगुण : सकल : स्मृतस्त्विति ॥ कलाप्रकृतिस्तयासहवर्त्तते ॥ त्रि॰ सम्पूर्णे । सर्वस्मिन् ॥ कलाभियुक्ते । कलाभि : परिपूर्णे ॥

सकलप्रिय : । पुं॰ चणके ॥ त्रि॰ सर्वेषांप्रीतिविषये ।

सकलाज्ञानम् । न॰ समग्रज्ञाने ॥

सकषाय : । त्रि॰ सरागे ॥ कषाये णकामक्रोधादिमलेनसहवर्त्तमाने ॥ कषायविशिष्टे । कसैला॰ इ॰ भा॰ प्र॰ ॥

सकाम : । त्रि॰ कामनाविशिष्टे । कामिनि ॥ पुंसोयाविषयापेक्षासकामइतिभण्यते । तेनयुक्तोदीनमना : सकाम : प्रोच्यतेबुधै: ॥ सकामाश्चैवनिष्कामाद्विविधाभुविमानवा : । कामिनांफलमित्युक्तं चयितांस्वप्रराज्यवत् । निष्कामानान्तुनिर्वाणंपुनरावृत्तिवर्जितम् ॥ सहकामेनवर्त्तते । सहप्रस : ॥

सकाश : । पुं॰ समीपे ॥ त्रि॰ काशयुक्ते ॥

सकुरण्ड : । पुं॰ साकुरुण्डवृक्षे ॥

सकुल : । त्रि॰ कुलान्विते ॥

सकुल्य : । त्रि॰ सगोत्रे । सप्तमपुरुषानन्तरंदशमपुरुषपर्यन्तसन्तती ॥ दशाहेनसपिण्डास्तुशुध्यन्तिप्रेतसूतके ॥ त्रिरात्रेणसकुल्यास्तु॰ स्नात्वाशुध्यन्तिगोत्रजा : ॥ दायाधिकारिसकुल्यास्तु॰ पञ्चमपुरुषावधय : । यथाहबौधायन : । प्रपितामह:॰ पितामह:॰ पिता॰ स्वयं॰ सोदर्य्यभ्रातर : सवर्णा:॰ पुत्र॰ पौत्र॰ प्रपौत्रोएतानविभक्तदायादान्सपिण्डानाचष्टे । विभक्तदायादान्सकुल्यानाचष्टे सत्स्वङ्गजेषुतद्गामीह्यर्थोभवतीति ।

सकृत् । अ॰ सहार्थे । एकवारे ॥ एकवारम् । एकस्यसकृच्चेतिसुच् । संयोगान्तस्येतिसुचोलोप : ॥ सकृदंशोनिपततिसकृत्कन्याप्रदीयते । सकृदाहददानीतित्रीण्येतानिसतांसकृत् ॥

सकृत्प्रज : । पुं॰ काके । वायसे ॥

सकृत्प्रजायस्यस : ॥ सिंहे ॥

सकृत्फला । स्त्री॰ कदल्याम् ॥ सकृत्फलान्यस्या : ॥

सकृद्गर्भ : । पुं॰ खिसरे । खच्चर॰ इ॰ भा॰ प्र॰ ॥

सकृद्विभात : । त्रि॰ एकदैवकृत्स्ना ऽभिव्यक्ते ॥ सदैवविभाति । सदा भारूपे ॥

सकृद्वीर : । पुं॰ एकवीरवृक्षे ॥

सक्त : । त्रि॰ अविरते । लग्ने ॥ अभिनिविशेनलग्ने । कर्त्तव्याभिमानेनफलाभिसन्धिनाचकर्म्मण्यभिनिविष्टे ॥ सज्यतेस्म । सञ्ज सङ्गे । क्त : ॥

सक्तचेता : । त्रि॰ आसक्तचित्ते ॥ यथा । अवध्यवध्यनंघोरमस्त्रीकृत महाविषम् । अगम्लखण्डनंदेवि संसार : सक्तचेतसाम् ॥

सक्ति : । स्त्री॰ सङ्गे ॥ षञ्जे : क्तिन् ॥

सक्तव : । पुं॰ न॰ भृष्टयवचूर्णे । भृष्टयवादिचूर्णे । सत्तू॰ इ॰ भा॰ प्र॰ ॥ सचति । षचसेचने । सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥ अस्यलक्षणादयो यथा । धान्यानिभ्राष्टभृष्टानियन्त्रपिष्टानिसक्तव : ॥ तत्रयवसक्तवो यथा । यवजा : सक्तव : शीतादीपना : लघव : सरा : । कफपित्त हरा रूक्षा लेखनाश्चप्रकीर्त्तिता : ॥ तेशीताबलदावृष्याबृंहणाभेदनास्तथा । तर्प्पणामधुराहृद्या : परिणामेबलावहा ॥ कफपित्तश्रमक्षुत्तृट्व्रणनेत्रामयापहा : । प्रशस्ताघर्मदाहाढ्य व्यायामार्त्तशरीरिणाम् ॥ चणकयवसक्तवस्तु । निस्तुषैश्चणकैर्भृष्टैस्तुर्यांशैश्चयवै : कृता : । सक्तव : शर्करासर्पिर्युक्तायीष्मेतिपूजिता : । शालिसक्तवोयथा । सक्तव : शालिसम्भूतावह्निदालघवोहिमा : । मधुराग्राहिणोरुच्या : पथ्याश्चबलशुक्रदा : नभुक्त्वानरदैश्छित्त्वा नतिशायांनबाबहून् । नजलान्तरितान्नद्वि : सक्तूनद्यान्नकेवलान् ॥ पृथक्पानंपुनर्दानंसामिषंपयसानिशि । दन्तच्छेदनमुष्णञ्चसप्तसक्तुषुवर्ज्जयेत् ॥ अर्द्धर्चादि : ॥

सक्तुक : । पुं॰ विषप्रभेदे ॥ यदुग्न्थि : सक्तुकेनैवपूर्णमध्य : संसक्तुक : ॥

सक्तुफला । स्त्री॰ समीवृक्षे ॥ सक्तुवत्फलमस्या : । अजादित्वात्टाप् ॥

सक्थि । न॰ जानूर्द्ध्वभागे । ऊरौ । सांथल॰ इ॰ भा॰ ॥ सजति॰ सज्यतेवा । सञ्जसङ्गे । असिसञ्जिभ्यां क्थिन् ॥

सक्रियम्। न॰ व्यक्ते। परिस्पन्दवति। तथाहि। बुद्ध्यादयउपासमुपासं देहत्वजन्मि॰ देहान्तरस्योपादद्तद्धृतितेषांपरिस्पन्दः। शरीरपृथिव्यादीनाञ्चपरिस्पन्दः प्रसिद्धएव॥ त्रि॰ क्रियासहिते॥

सक्षणः। त्रि॰ कृतावसरे॥

सक्षत्रम्। अ॰ क्षत्रियाणांयोग्यत्वे॥ क्षत्रियाणांसम्पत्तिः अव्ययं विभक्तीतिसम्पत्तावव्ययीभावः। सम्पत्तिश्चसमस्यमानोत्तरपदस्यायोग्यप्रवृत्तिनिमित्तम्॥

सक्षम। त्रि॰ क्षमतायुक्ते॥ क्षमाविशिष्टे॥

सक्षारः। त्रि॰ लवणयुक्ते॥

सखा। पुं॰ मित्रे। सुहृदि। वयस्ये। सवयसि। स्निग्धे। अर्थितेप्रतिषिधस्थितेचैवप्रवर्त्तनम्। व्यसनेचापरित्यागस्त्रिविधंसखिलक्षणम्॥ अपिच। सत्यागासहनोबन्धुः सदैवानुगतः सुहृत्। एकक्रियोभवेन्मित्रंसमप्राणः सखाभवेदिति॥ समानः ख्यायतेलोकैः। ख्याप्रकथने। समानेख्यः सचोदात्तइतीण्॰ सवडित्॰ यलोपः॰ समानस्यतूदात्तः सद्भावादेशश्च॥ सहाये। अमात्यादौ॥

सखिता।) स्त्री॰ सख्ये.
सखित्वम्।) न॰

सखी। स्त्री॰ आली। वयस्यायाम्॥ सख्यशिश्वीतिङीष्॥

सख्यम्। न॰ मैत्र्ये। मित्रतायाम्। सप्तपदीने। सौहार्दे॥ दशाब्दाख्यंपौरसख्यंपञ्चाब्दाख्यंकलाभृताम्। त्र्यब्दपूर्वंश्रोत्रियाणांस्वल्पेनापिस्वयोनिषु॥ इतिमनुः॥ सख्युर्भावः कर्मवा। सख्युर्यः। सख्येनिषिध्यायथा। कृतमेरेशठेस्तव्येकामुकेचगतघृणे। निर्लज्जेनैवकर्त्तव्यंसख्यंमतिमतासदेति॥ हितोपदेशे॥

सगद्गदः। पुं॰ भयेनहर्षेणवाअश्रुपूर्णनेत्रत्वे। सति॰ कफरुद्धकण्ठतयायोवाचोमन्दत्वसकम्पादिविकारस्तस्मिन्॥ त्रि॰ तद्वति॥

सगन्धः। पुं॰ चंपके। ज्ञातौ दायादे॥ त्रि॰ गन्धयुक्ते॥

सगरः। पुं॰ अयोध्याधिपतौ॰ बाहुराजपुत्रे॰ सूर्यवंशीयेनृपतिवरे। नामनिरुक्तन्तु। सपत्नयातुगरस्तस्यैदत्तोगर्भजिघांसया। गरेणसहतेनैवजातस्तत्सगरोऽभवदिति॥ अर्हद्भेदे। त्रि॰ गरसहिते। सविषे॥

सगर्भः। पुं॰ सोदरे॥ समानोगर्भो यस्य सः। सगर्भ्यतिनिर्देशात्समानस्य सः॥ अभ्यन्तरितसूक्ष्मपत्रादियुक्तकुशादौ॥

सगर्भा । स्त्री० गर्भवत्याम् ॥

सगर्भ्यः । पुं० सहोदरे ॥ समानेगर्भेभवः । सगर्भसयूथेतियत् । सगर्भेतिनिर्देशात्सः ॥ यद्वा । सह्तुल्येगर्भेकुक्षौभवः ॥

सगुणः । पुं० गन्धादिविशिष्टे ॥ विद्यादियुक्ते ॥ यथा । सगुणोनिर्गुणोवापिसन्नायोवलवत्तरः । तुषेणापिपरिभ्रष्टस्तण्डुलोनाङ्कुरायते ॥ मायाशवलितसर्वज्ञे सर्वशक्तियुक्तेब्रह्मणि ॥

सगुणा । स्त्री० दुर्गायाम् ॥ गुणवत्याम् ॥

सगोत्रम् । न० गोत्रे । कुले । पुं० सप्तमादूर्द्ध्वपुरुषे । त्रि० अभिन्नगोत्रे । ज्ञातौ ॥ समानंगोत्रंकुलमस्य ज्योतिर्जनपदेतिसमानस्यसः ॥

सग्धिः । स्त्री० सहभोजने । अदनम् । अद० । स्त्रियांक्तिन् । वहुलंछन्दसीतिघस् । घसिभसोर्हलीच्युपधालोपः । झलोझलीतिसलोपः । झषस्तथोर्धोधः । झलांजश्झशीति घस्यगः । समानाग्धिः । समानस्यच्छन्दसीतिसभावः ॥ सहग्धिर्वा । सहस्यसः संज्ञायाम् ॥

सङ्कटः । त्रि० सम्बाधे । सङ्कीर्णे । अल्पावकाशे । वर्त्मादौ । सम्यक्कटति० आवृणोति । कटेवर्षावरणयोः । पचाद्यच् ॥ यद्वासम्बाधे इत्येकेषाम् । सम्प्रोदश्चकटच् ॥ न० दुःखे ॥

सङ्कटा । स्त्री० देवीविशेषे ॥ योगिनीप्रभेदे ॥

सङ्कटाक्षः । पुं० धवहक्षे ॥

सङ्कथनम् । न० सम्यग्भाषणे ॥

सङ्कथा । स्त्री० परस्परभाषणे । सम्भाषणे । मिथः प्रेमगोष्ठाम् ॥

सङ्करः । पुं० सम्मार्जन्यादिक्षिप्तधूल्यादौ । अवकरे । सङ्कारे ॥ सङ्कीर्यते । कॄविक्षेपे ॥ सायांवा । अप्रदोरप् ॥ व्यामिश्रत्वे । मिश्रितत्वे ॥ परस्परात्यन्ताभावसमानाधिकरणयोरेकाधिकरण्ये ॥ यथा मूर्त्तत्वंमनसिवर्त्तते० भूतत्वंनास्ति । आकाशेभूतत्वंवर्त्ततेमूर्त्तत्वंनास्ति । पृथिव्यांभूतत्वंनास्ति । पृथिव्यांभूतत्वंवर्त्तते० मूर्त्तत्वञ्चास्तीतिजातिसाङ्कर्यमिति ॥ सामान्यजातौ । वर्णसङ्करजातौ ॥ अलङ्कारविशेषे ॥ यथा । अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वन्तुसङ्करः । एतएवालङ्कारायवात्मन्यनासादिततत्तन्नभावाः परस्परमनुग्राह्यानुग्राहकतांदधति० सएषांसङ्कीर्यमाणस्वरूपत्वात्सङ्करः । उदाहरणम् यथा । आर्त्तेसीमन्तरिचमरकतेनिह्नुतेहेमताटङ्कपत्रेलुप्तायांमेखलायांझटितिमणितुलाकोटियुग्मेगृ

ष्टौति । शोणं बिम्बौष्ठकान्त्यात्वदरि मृगदृशामित्वरीणामरण्ये राजन् गुञ्जाफलानांस्रजइतिशबरानैव हृ ( ? ) हरन्ति ॥ अत्रतद्गुणमपेक्ष्य ( ? ) न्तिमताप्रादुर्भूतं तद्‌गुणश्चतद्गुणः सचेतसांप्रभूतचमत्कृतिनिमित्तमित्यनयोरङ्गाङ्गिभावः ॥ अस्यान्ये भेदाः काव्यप्रकाशादिषुद्रष्टव्याः ॥

सङ्करी । स्त्री॰ सङ्कार्याम् ।

सङ्करीकरणम् । न॰ नवविधपापान्तर्गतपापविशेषे ॥ यथाहविष्णुः । अथपुरुषस्यकामक्रोधलोभाख्यं रिपुत्रयंभवति॰ परिग्रहप्रसक्तमयिशेषादृगृहाश्रमिणः । तेनायमाक्रान्तोऽतिपातकमहापातकानुपातकोपपातकेषुवर्त्तते॰ जातिभ्रंशकरेषु॰ सङ्करीकरणेषु॰ अपात्रीकरणेषु॰ मलावहेषु॰ प्रकीर्णकेषु॰ ॥ तद्यथा । खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा । सङ्करीकरणंज्ञेयंमीनाहिमहिषस्यचेतिमनुः ॥ गर्दभतुरगोष्ट्रमृगहस्त्यजागमेषमत्स्यसर्पमहिषाणामप्रत्येकं वधः सङ्करीकरणं ज्ञेयमितिकुल्लूकभट्टः ॥

सङ्कर्षकः । त्रि॰ सङ्कर्षणकर्त्तरि ॥

सङ्कर्षणः । पुं॰ सीरपाणौ । बलभद्रे ॥ सम्यक्कर्षतिशत्रुशरीरमायुधैः । कृषविलेखने । नन्यादि

त्वाल्ल्युः ॥ सम्यक्कृष्यतेवा । कर्मणिल्युट् ॥ गर्भस्यसम्यक्कर्षणादा । यथोक्तंहरिवंशे । गर्भसंकर्षणात्सोऽसौसङ्कर्षणः स्मृत इति ॥ अहङ्काराधिष्ठातरि ॥ द्रष्टृदृश्ययोः सम्यक्कर्षणमेकीकरणंयेन न॰ अन्यत्रस्थितस्यान्यत्रनयने ॥ आकर्षणे ॥ सम्यक्प्रकारेणकर्षणम् ॥

सङ्कलनम् । न॰ क्रमादुत्क्रमतोवाऽङ्कयोगे । जोडदेना॰ इ॰ भा॰ प्र॰ कालशब्दसङ्ख्यानयोः । सम्पूर्वः । ल्युट् ॥

सङ्कलितः । त्रि॰ सङ्गृहीते । सङ्गृहीते एकत्रीकृते । अङ्कान्तरेणैकीकृताङ्के । जोडदियाअङ्कइतिभाषा ॥ सङ्कल्यतेस्म । कालसङ्ख्याने । क्तः ॥ पुञ्जीकृतधान्यादौ ॥

सङ्कल्पः । पुं॰ मानसकर्म्मणि । इदमहंकुर्यामितिमनसोव्यापारे । इष्टङ्करिष्यामीत्यादिलक्षणेऽन्तःकरणपरिणामे ॥ इदंनीलमिदंपीतमितिविषयविवेचने ॥ इष्टसाधनताज्ञाने । समीचीनत्वेनभावने ॥ अहङ्करोमीतिकर्तृत्वाभिमाने ॥ दुष्टेष्वपिविषयेषु॰ अशोभनत्वाद्धर्मेनशोभनाध्यासे ॥ अनेनकर्मणेदमिष्टफलंसाध्यते॰ इत्येवंविषयायांबुद्धौ ॥ तिथ्याद्युल्लेखपूर्वकनामगोत्राद्युच्चारणपूर्वकेवाक्यविशेषे ॥

काम्ये कर्म्मणि सर्व्वत्र बुधः सङ्कल्पमाचरेत् । विधिवाक्यानुसारेण सम्पूर्णमुक्तानयिद्रव्यागमोक्ष्णैः ॥ यथा । स्मृत्वा विष्णुं ततः सद्भिर्मासपक्षतिथीस्ततः । समुल्लिख्य निमित्तानि सङ्कल्पं रचयेत् सुधीः ॥ अत्र हारीतः । मनसा सङ्कल्पयति० वाचाऽभिलपति० कर्म्मणा चोपपादयतीति ॥ सङ्कल्पेन विना राजन् यत् किञ्चित् कुरुते नरः । फलञ्चाप्यल्पकं तस्य धर्म्मस्यार्द्धक्षयो भवेत् ॥ सङ्कल्पनम् । क्लृप् सामर्थ्ये । भावे घञ् ॥ इच्छायाम् ॥ कामहेतौ ॥ सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः । व्रतानि यमधर्म्माश्च सर्व्वे सङ्कल्पजाः स्मृताः ॥ काम जानामि ते मूलं सङ्कल्पात् किल जायसे । न त्वां सङ्कल्पयिष्यामि समूलो न भविष्यसि ॥

सङ्कल्पजन्मा । पुं० मदने । कामदेवे ॥

सङ्कल्पसम्भवः । )
सङ्कल्पमूलः । ) पुं० कामदेवे ॥
सङ्कल्पयोनिः । )

संकसुकः । त्रि० अस्थिरे । चलस्वभावे ॥ दुर्ज्जने ॥ संकसति । क[illegible]णौ । सञ्चिकसउक्तन् । सस्य क् [illegible] ॥

संकारः । पुं० [illegible]



सम्मार्ज्जन्यवपुञ्जिते । अवकरे । सङ्कीर्य्यते । कृ विक्षेपे हिंसायां वा । कर्म्मणि घञ् ॥

संकारी । स्त्री० नवदूषितकन्यायाम् । भुक्तकन्यायाम् ॥ इति मेदिनिहेमचन्द्रौ ॥

संकाशः । पुं० अन्तिके ॥ त्रि० उत्तरपदस्थस्तुल्यार्थे ॥ यथा० पद्मसंकाशः ॥ यथा वा । सम्पदः स्वप्नसंकाशा यौवनं कुसुमोपमम् । तडिच्चपलमायुष्यं कस्य स्याज्जानतो धृतिरिति ॥ संकाशते । काशृ दीप्तौ । पचाद्यच् ॥

संकिलः । पुं० अग्निकुक्कुटे । दहनोल्कायाम् ॥

संकीर्णः । पुं० अम्बष्ठादिचण्डालपर्य्यन्तमिश्रजातौ । तथाऽमरः । आचण्डालात्तु संकीर्णा अम्बष्ठकरणादयः । शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्द्विजन्मनोः ॥ शूद्राक्षत्रिययोरुग्रो० मागधः क्षत्रियाविशोः । माहिष्योऽर्य्याक्षत्रिययोः० क्षत्तार्य्याशूद्रयोः सुतः ॥ ब्राह्मण्यां क्षत्रियात् सूत० स्तस्यां वैदेहको विशः । रथकारस्तु माहिष्यात् करण्यां यस्य सम्भवः ॥ स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः । इति ॥ मिश्रितरागे ॥ नानाजातीयवर्णे ॥ त्रि० निचिते ॥ अशुद्धे ॥ अनादिभिर्मिश्रवकाशे । सं

कुले। आकीर्णे॥ संकीर्णसप्त। कृविशेषे। सः स्वतद्भ्रातोः। रद्राभ्यामितिनत्वम्॥ संकटे॥ परस्परविजातीये॥

संकीर्तनम्। न॰ सम्यगुक्तौ। सम्यक्प्रकारेणदेवतादिनामोच्चारणे॥ यथा। शमायालंजलंवह्नेस्तमसोभास्करोदयः। शान्तिःकलिरघौघस्यनामसंकीर्तनंहरेरिति॥ नामसंकीर्तनंनित्यंक्षुतप्रस्खलितादिषु। वियोगंशीघ्रमाप्नोतिसर्वानर्थैर्नसंशयः। सम्यक्कीर्तनम्॥

सङ्कीर्त्तितः। त्रि॰ सम्यगुच्चरिते॥

सङ्कुचितः। त्रि॰ सङ्कोचयुक्ते निद्राणे। मीलिते। मुद्रिते॥ यथा। नरासङ्कुचितःपत्यायेनत्रासोष्टतोगतः। समयेनिष्टसुग्रीवमावालिपथमन्वगाः॥ सङ्कुचति। क्विचसङ्कोचने। रुचिवचिकुचिकुटिभ्यःकितच्॥

सङ्कुलम्। न॰ परस्परपराहतेवाक्ये। क्लिष्टे। मातामेवन्ध्येति विरुद्धार्थवचने। यथा। यावज्जीवमहंमौनीब्रह्मचारीपितामम- । मातावममवन्ध्यासीत्स्मराभोलुपमोभवान्। इति॥ संकीर्णे। कुलसंस्त्याने। इगुपधत्वात्कः॥ युद्धे॥ त्रि॰ जनादिभिर्निरवकाशे। व्याप्ते। आकीर्णे। सङ्कीर्णे॥ अविस्पष्टवाचि॥

सङ्कृतिः। स्त्री॰ चतुर्विंशत्यक्षरायांवृत्तौ॥

सङ्केतः। पुं॰ स्वाभिप्रायव्यञ्जकचेष्टाविशेषे। प्रज्ञप्तौ। परिभाषायाम्। शब्द्याम्। समये। आकारे॥ न्ययमते॰ सङ्केताद्योयथा। सङ्केतोलक्षणार्थपदशक्तिः। अस्मात्पदप्रतिपाद्योऽर्थएवपदार्थइत्यभिधीयते। इदंपदमिममर्थंबोधयत्विति॰ अस्माच्छब्दादयमर्थोबोद्धव्यइतीच्छा॰ संकेतरूपाशक्तिः। नवाधुनिकसङ्केतःपरिभाषा। तयार्थबोधकंपदंपारिभाषिकम्। यथाशास्त्रकारादिसङ्केतितनदीवृद्ध्यादिपदम्। ईश्वरसङ्केतःशक्तिः॰ तयार्थबोधकंपदंवाचकम्। अथागोत्वादिविशिष्टबोधकगवादिपदम्। तत्रैवयौगिकवादिर्वाच्यः सएवमुख्यार्थउच्यते। इतिशक्तिवादेगदाधरीटीका। सङ्केतनम्। कितनिवासे। घञ्॥

सङ्केतनिकेतनम्। न॰ प्रियमेलनार्थावधारितस्थाने॥

सङ्कोचः। पुं॰ मीनविशेषे॥ बन्धे॥ बहुविषयत्वेनशक्यार्थादेरल्पविषय

यस्यापने ॥ यथा । सामान्यश ब्दार्थस्य विशेषनिष्ठत्वं सङ्कोचः ॥ न० कुंकुमे ॥ सङ्कोचति० सङ्कुच्यते वा । यद्वा । सङ्कोचयति सङ्कोच्यते वा कुचसम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । अच्० घञ् वा । सङ्कुचतीति विग्रहेन सम्यङ् । कुचसङ्कोचनकृत्यस्य कुटादित्वे न गुणाभावप्रसङ्गात् ॥

सङ्कोचनी । स्त्री० लज्जालुलतायाम् ॥

सङ्कोचपिशुनम् । न० कुंकुमे ॥

सङ्क्रन्दनः । पुं० दुश्च्यवने । इन्द्रे ॥ सम्यक् क्रन्दयति । क्रन्दिक्रन्दिवाह्वाने रोदने च । ल्युः ॥ न० रोदने ॥

सङ्क्रमः । पुं० क्रमणे । जलोपरिगमनार्थं काष्ठपाषाणादिभिर्निर्मिते० मार्गे ॥ सङ्क्रमत्वाप्रोच्चयामि लोकानां संक्रमं यथा । दद्य सोऽहं तथा स्वर्गे संक्रमो मे प्रदीयताम् ॥ भानो राश्यन्तरप्रवेशे । संक्रमणे ॥ त्रुटिः सहस्रभागो यः सकालोरविसंक्रमः पुं० न० दुर्गसञ्चरे । दुर्गद्वारे फलकादिनिर्मितसञ्चारमार्गे ॥ संक्रमणम् । क्रमु० । घञ् । नोदात्तोपदेशस्य मान्तस्यानाचमेरिति न वृद्धिः ॥

संक्रमणम् । न० संक्रान्तौ । सम्पूर्वात् क्रमेर्ल्युट् ॥ गमने ॥

संक्रान्तः । त्रि० ससङ्गे ॥ संक्रान्तिविशिष्टे ॥ क्रमागतधनादौ ॥ प्राप्ते ॥ गते ॥

संक्रान्तिः । स्त्री० राश्यन्तरसंयोगानुकूलव्यापारे । सूर्यादीनां प्राग्राशितोऽपरराशौ संक्रमणे ॥ तत्र संज्ञाविशेषा यथा । अयने द्वे विषुवे द्वे चतस्रः षडशीतयः । चतस्रो विष्णुपद्यस्तु संक्रान्त्यो द्वादश स्मृताः ॥ अपि च । वृषालिघटसिंहेषु विष्णुपद्यर्कसंक्रमे । षडशीतिर्भवेत्स्यापन् युक्कन्याझषेषु च ॥ विषुवन्तु समाख्यातं तुलामेषाभयोस्तथा । याम्यायनं कर्कटे स्यान्मकरे चोत्तरायणम् । संक्रमणम् । क्रमु० । स्त्रियां क्तिन् । अनुनासिकस्येति दीर्घः ॥

संक्रामः । पुं० दुर्गसञ्चरे ॥

संक्लेदः । पुं० आर्द्रीभावे ॥

संक्लेशः । पुं० दुःखे ॥ संक्लेशनम् । क्लिशू विबाधायाम् । घञ् ॥

संक्षयः । पुं० प्रलये ॥ नाशे ॥

संक्षिप्तः । त्रि० संहृते ॥ कृतसंक्षेपे । संक्षेपयुक्ते ॥

संक्षुब्धः । त्रि० आकुले ॥ आकुलीभूते ॥

संक्षेपः । पुं० सङ्ग्रहे ॥ स्वल्पे ॥ समासे ॥ स्तोकेनभूयसोऽभिधा

ने ॥ सङ्ख्यायते सङ्ख्येपवा ।
ख्यप० । घञ् ॥

सङ्ख्येपणम् । न० विस्तृतानां संक्षेपणे । समसने सम्पूर्णीकृत्यपि ल्युट् ॥

सङ्ख्येपयोग : । पुं० ध्यानयोगभ्रमूमध्यानीयेयोगे ॥ यमाहार्जुनायश्री भगवान् । यथा । स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरेभ्रुवो: । प्राणापानौसमौकृत्वानासाभ्यन्तरचारिणौ ॥ यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायण : । विगतेच्छाभयक्रोधोय : सदामुक्तएवस : ॥

सङ्ख्येप्ता । पुं० हरौ ॥ त्रि० सङ्क्षेपकारके ॥ विस्तृतं सूक्ष्मरूपेणसङ्क्षिपति । क्षिपप्रेरणे । तृच् ॥

सङ्क्षोभ : । पुं० सम्स्खलने । चाञ्चल्ये ॥

सङ्ख्यम् । न० मृधे । आस्कन्दने । युद्धे ॥ सङ्ख्यानम् । चक्षिङ्० ख्याप्रकथनेवा : भावेकोबाहुलकात् ॥ त्रि० सङ्ख्येये ॥

सङ्ख्या । स्त्री० विमर्शे । चर्चायाम् । विचारणायाम् । विचारे ॥ सम्यक् विवेकेनात्मकथने ॥ सम्यगात्मबुद्धौ ॥ एकद्व्यादौ ॥ यथाहामरसिंह : । सङ्ख्या : सङ्ख्येयेष्वादशत्रिषु । विंशत्याद्या : सदैकत्वेसर्वा : सङ्ख्येयसङ्ख्ययो: । सङ्ख्यार्थेद्विबहुत्वेस्तस्तासुचानवते : स्त्रिय : ॥ पङ्क्ते : शतसहस्रादिक्रमाद्दशगुणोत्तरमिति ॥ अस्यार्थ: । आदश० दशशब्दमभिव्याप्य । आङ्मर्यादाभिविध्योरित्यव्ययीभाव : । नपुंसकाद्न्यतरस्यामितिपक्षेटच्न । एकादिकानवदशपर्यन्ता : ० सङ्ख्या : सङ्ख्येये० त्रिलिङ्गाच । तेनसङ्ख्यासङ्ख्येययो : सामानाधिकरण्येनवृत्ति : । यथा० एक : पट : ० एकाशाटी० एकंवस्त्रम् । त्रिशब्दोऽवधारणे० सङ्ख्येयएव० नतुसङ्ख्यायामित्यर्थ: । तेन० एकोविप्रइत्यादिभवतिनतुविप्रस्यैकइत्यादि । किन्तु । द्व्येकयोर्द्विवचनैकवचनइतिसूत्रे० द्व्येकयोरितिनिर्देशात्सङ्ख्यामात्रेपिसम्भव : । तेनघटानांपञ्चत्यपिस्यादितिसुभूति : । वार्त्ताकुरेषाशुश्रूषप्रयुक्तेतिवैशकप्रसङ्गच्छते । विंशतिराद्यायासांता : सङ्ख्या : ० सङ्ख्येयसङ्ख्ययोर्वर्त्तंते० एकवचनान्ताश्च० यथा:विंशतिर्गाव: ० गवांविंशति : । विंशत्यादीनांयदासङ्ख्यार्थस्तदाद्विवचनबहुवचनेअपिस्त : । यथाद्वेविंशती० गाव : ० गवांवातिस्रोविंशतयइति । तासुविंशत्यानवतिमभिव्याप्यस्त्रीलिङ्गा : ।

भिन्नलिङ्गे नापिसमानाधिकरण्ये स्त्रीलिङ्गा : । यथाविंशत्यापुरुषै : कृतम्॰ विंशति : कुण्डानीति । पङ्क्तेर्दशगुणोत्तरं क्रमात्॰ शतसहस्रादिविज्ञेयम् । यथा॰ एकं दशगुणितं पङ्क्तिरुच्यते॰ दशपङ्क्तय : शतम्॰ दशशतानिसहस्रम्॰ दशसहस्राण्ययुतमित्यादिज्ञेयम् ॥ यथाहलीलावत्याम् ॥ एकदशशतसहस्रायुतलक्षप्रयुतकोटय: क्रमश: । अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात् ॥ जलधिश्चान्त्यंमध्यं परार्द्धमितिदशगुणोत्तरासंज्ञा । सङ्ख्यायास्थानानांव्यवहारार्थंकृता: पूर्वैरिति ॥ विष्णुपुराणेश्रीपराशरउवाच । स्थानात्स्थानंदशगुणमेकस्माद्गण्यतेद्विज । ततोऽष्टादशमेभागेपरार्द्धमभिधीयते ॥ परार्द्धद्विगुणंयत्तुप्राकृत : प्रलयोद्विज । तदाऽव्यक्तेऽखिलंव्यक्तंसहेतौलयमेतिवै ॥ इति ॥ न्यायमतेतु । चगणनव्यवहारेकारणत्वम् । एकत्वंनित्यवस्तुनिनित्यमन्यत्रानित्यम् द्वित्वादिपरार्द्धपर्यन्तमपेक्षाबुद्धिजन्यं । एवमपेक्षाबुद्धिनाशेनैषांनाश: । पर्याप्तिसम्बन्धेनानेकाश्रयेतिच्छन्ति ॥ सङ्ख्यानम् । सङ्ख्यायतेऽनयावा । चक्षिङ् : ख्याञ् । ···मश्चेत्यङ् ॥

सङ्ख्यात : । त्रि॰ कृतसङ्ख्ये । गणिते । सङ्ख्यायतेस्म । ख्या॰ । क्त: । चक्षिङादेशोवा । ख्याते ॥

सङ्ख्यानम् । न॰ सङ्ख्यायाम् । प्रकाशे ॥

सङ्ख्यावान् । पुं॰ पण्डिते । सुधियि ॥ सङ्ख्याविचारणाऽस्त्यस्य । मतुप् ॥ त्रि॰ सङ्ख्यायुक्ते ॥

सङ्ख्येय : । त्रि॰ सङ्ख्यायोग्ये । गणनीये । गण्ये ॥ सङ्ख्यातुंयोग्य : । ख्या॰ । यत् । ईत् ॥

सङ्ग : । पुं॰ सङ्गमे । मेलने ॥ सङ्गदोषोयथा । निस्सङ्गएवमोक्ष : स्याद्दोषा : सर्वेपिसङ्गजा : । सङ्गात्पतत्यधोज्ञानीचावश्यंकिमुताल्पवित् ॥ सङ्ग : सर्वात्मनात्याज्य : सचेत्त्यक्तुमशक्यते । ससद्भि : सहकर्त्तव्य: सन्त : सङ्गस्यभेषजम् । सत्सङ्गश्चविवेकश्चनिर्मलंनयनद्वयम् । यस्यनास्तिनर : सोऽन्ध : कथंनस्यादमार्गग : ॥ इतिश्रीकुलार्णवतन्त्रम् । सद्भि : सङ्गंप्रकुर्वीतसिद्धिकाम : सदानर : । नासद्भिरिहलोकायपरलोकायवाहितमितिगरुडपुराणम् ॥ विष्णुपुराणमपियथा । मत्स्यस्यसङ्गाद्भवहयोमेसुतादिरागोमुषितोस्मिलेन । नि : सङ्गतामुक्तिपदंयतीनांसंगादशेषा : प्रभवन्तिदोषा : । इति ॥ रागे ॥

फलाभिलाषे । आसंगे : अत्यन्तं सुखहेतुरेवेत्येवं शोभनाध्यासलक्षणे प्रीतिविशेषे ॥ अभिनिवेशे । अ हमेव करोमीति कर्तृत्वरूपे । कर्तृत्वाभिनिवेशे ॥ सञ्जनम् । षञ्जसंगे । घञ् ॥ संगोऽप्रवृत्तिरिति वैद्या: । यथा । वातमूत्रपुरीषाणां संगोध्मानं क्लमो रुजा । जठरे बात जाश्चान्ये रोगा: स्युर्वातनिग्रहात् ॥ रुजा जठरे० इतिसम्बन्ध: ॥ प्रतिबन्धे ॥

संगणिका । स्त्री० अप्रतिरूपकथायाम् ॥ इ० त्रि० शिष्टसङ्कीर्णवर्ग: ॥

संगतम् । न० सौहृदे ॥ सुखजनकोक्तौ । हृदयङ्गमेयुक्तियुक्तवाक्ये । संगतियुक्ते ॥ सत्सं योगजीफले ॥ त्रि० सङ्गते ॥ युक्ते ॥ उपसन्ने ॥ संगच्छतेस्म । गत्यर्थेतिकर्त्तरिक्तः ॥

संगति: । स्त्री० संगमे ॥ ज्ञाने ॥ उपोद्घातादिषट्के ॥ यथा । स प्रसंगउपोद्घातोहेतुताऽवसरस्तथा । निर्वाहकैक्यकार्यत्वे षोढासंगतिरिष्यते ॥ संश्लेषे ॥ सङ्गच्छने ॥ सम्पूर्वाद्गमे : क्तिन् ॥

संगतिका । स्त्री० वर्णवृत्तान्तरे ॥ यथा । सगणं पुर : कुरुशोभितं जगणद्वयं गुरुसंगतम् । फणिराजवक्त्रनिवेदिताभवतीहसंगतिकाहिसा ॥ यथा । अवधेहि किञ्चिदनुत्तरं प्र

वदामिसिन्धुपसत्वरम् । तवदिक्षु कीर्त्तिविलासिनीप्रतिबिम्बगेहनिवासिनी ॥

संगम: । पुं० संगे । मेलके ॥ नद्यादिमेलके ॥ स्त्रीपुंसयोर्मिथुनीभावे ॥ यथा । विदग्धस्यविदग्धेनसंगमोगुणवान्भवेत् । विदग्धायाइति वा ॥ सचप्रथममध्यमोत्तमभेदात् त्रिविध: । यथाहव्यास: । त्रिविधं तत्समाख्यातंप्रथमंमध्यमोत्तमम् । अदेशकालभाषाभिनिर्जनेच परस्त्रिया: ॥ कटाक्षावेक्षणंहास्यं प्रथमंसाहसंस्मृतम् । १ । प्रेषणं गन्धमाल्यानांधूपभूषणवाससाम् । प्रलोभनञ्चान्नपानैर्मध्यमंसाहसं स्मृतम् । २ । सहासनंविविक्तेषु परस्परसमाश्रय: । केशाकेशिग्रहश्चैवसम्यक्संग्रहणंस्मृतमितिमिताक्षरा ॥ संगमनम् । ग्रहवृद्गति गमेरप् ॥

संगर: । पुं० युद्धे । समरे ॥ आपदि ॥ क्रियाकारे ॥ संविदि । विषे ॥ अङ्गीकारे ॥ न० । शम्याफले । सांगर० इ० भा० प्र० ॥ संगरणम्० संगीर्यतेवा० अनेनवा । गॄ शब्दे । ऋदोरप् । पुंसीतिघोवा ॥ प्रतिज्ञायाम् ॥ यथा । सत्यसंगर: ॥

संगरहित: । त्रि० नि:संगे ॥ अ

हमेश्मद्दायाश्चिकन्नृत्याद्यभिमान रूपोऽङ्गारापरपर्यायोराक्षसोगदर्शविशेष : संग : तेनशून्ये । संगेन रहित :॥

संगव : । पुं॰ पञ्चधाविभक्तदिनस्य द्वितीयांशे । प्रात : कालात् परस्मिन्मुहूर्त्तत्रये ॥ यथा । प्रात : कालिमुहूर्त्तांस्त्रीन् संगवस्तावदेवतु । मध्याह्न॰ त्रिमुहूर्त्त : स्यादपराह्णस्तत : परम् । सायाह्नस्त्रिमुहूर्त्त : स्याच्छ्राद्धं तत्रनकारयेदिति ॥ सम्बर्ते ॥

संगवर्ज्जित : । त्रि॰ नि : संगे सन्यासिनि ॥ संगैर्वर्ज्जित : ॥ बाह्यवस्तुस्पृहाहीने ॥

संगविवर्ज्जित : । त्रि॰ चेतनाचेतन सर्वविषयशोभनाध्यासरहिते ॥

संगी । त्रि॰ सक्ते । संगविशिष्टे ॥ यथा । आमृत्युतोनैवमनोरथानामन्तोऽस्तिविज्ञातमिदं मयाद्य । मनोरथासक्तिपरस्यचित्तं नजायतेवैपरमार्थसंगि ॥

संगीतम् । न॰ तौर्यत्रिके । प्रेक्षणार्थंनृत्यगीतवाद्ये । यथा । गीतवाद्यनृत्यत्रयं नाम्यं तौर्यत्रिकंमतत् । संगीतं प्रेक्षणार्थेऽस्मिन् शास्त्रोक्तेनाट्यधर्मिकेतिहेमचन्द्र : ॥ अपिच । तालवाद्यानुगं गीतं नटीभिर्यत्प्रगीयते । नृत्यञ्चानुगतं रंगेतत् संगीतकमुच्यते ॥

संगीतशास्त्रम् । न॰ नृत्यगीतवाद्यानांशिक्षाशास्त्रे । तत्तु॰ सोमेश्वरभरतहनुमत् कल्लिनाथमतभेदाच्चतुर्विधम् । अधुनातुहनुमन्मतं प्रचलितमस्ति । तस्याध्याया : सप्त । स्वराध्यायोरागाध्यायस्तालाध्यायोनृत्याध्यायोभावाध्याय : कोकाध्यायोहस्ताध्यायश्चेति ॥ अस्यमुहूर्तमाहकालिदास : । हरेर्भेचति थ्येभगर्भेहरेर्भेहरेभेचमैत्रेथवैष्णवे हरेभे । हरेर्भेऽविष्ठाहयेन्थ्येसदङ्गिकिलारम्भयेन्नाव्यसङ्गीतशास्त्रम् । इति ॥ हस्तोमृगश्चैवधनिष्ठाचमूलितथाश्रवणातथा । पञ्चानांहरिभानांहिमर्थावेध्यामनीषिभि : ॥

संगीति : । स्त्री॰ आलापे ॥ संगीते ॥

संगीर्ण : । त्रि॰ संविदिते । संश्रुते । उरीकृते । अङ्गीकृते ॥ सङ्गीर्यतेस्म । गृनिगरणे । क्त : ॥

सङ्गुप्त : । पुं॰ बुद्धभेदे ॥ त्रि॰ संगोपनाश्रये ॥

संगूढ : । त्रि॰ सङ्कलिते । रेखादिना पुञ्जीकृतधान्यादौ । संगुह्यतेस्म । गुहू॰ । क्त : ॥

संगृहीत : । त्रि॰ एकत्रीकृते । सङ्कलिते ॥

संगोपनम् । न॰ सम्यग्गोपने ॥

संग्रहः । पुं॰ समाहृतौ । एककर्तृकाणामनेककर्तृकाणां वा एकाभिप्रायाणां वाक्यानां संग्रहणे । इति हट्टदुह्रङ्गे ॥ ग्रहे ॥ सङ्क्षेपे । विस्तृतार्थानां समासेन निबन्धने । अर्णवे । संग्रहणम् । ग्रहवृद्धिनिश्चिगमश्चेत्यप् ॥ सङ्क्षेपेण गृह्यन्ते नानास्थाने विप्रकीर्णा अर्था बुध्य-न्तेऽस्मिन्निति॰ बाहुलकादधिकरणेऽप् वा ॥ परमात्मनि । विष्णौ ॥ संगृह्णाति प्रलये सर्वं जगत् स्वात्मन्युपसंहरतीति संपूर्वाद्ग्रहेः पचाद्यच् ॥ ग्रन्थविशेषे ॥ इति कोयटः । सप्तलक्षश्लोकसङ्ख्यो व्याडिकृतो ग्रन्थ इति प्रसिद्धिः । इति हिमरत्नम् ॥

संग्रहणम् । न॰ संग्रहे तीर्थारण्यादिनिर्जनदेशे परस्त्रिया सह सम्भाषणादौ । सङ्ग्रहणदण्डे । यथा । परस्त्रियं योऽभिवदेत् तीर्थेऽरण्ये वनेऽपि वा । नदीनां वापि सम्भेदे स संग्रहणमाप्नुयात् । उपचारक्रिया केलिः स्पर्शो भूषणवाससाम् । सह खट्वासनञ्चैव सर्वं संग्रहणं स्मृतम् ॥ स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तथा । परस्परस्यानुमते सर्वं संग्रहणं स्मृतम् ॥ सम्यक् गृह्यते ज्ञायते येन परस्त्रीभोगाभिलाषवृत्तिः॰ सम्पूर्वात्॰ ग्रहेर्ल्युट् ॥

संग्रहणी । स्त्री॰ ग्रहणीरोगभेदे । यथा । अन्त्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता । अपक्वं धारयेत्तत्र पक्वं तु त्यजति ह्यप्यधः स्वस्याः स्वरूपम् । सुश्रुतोऽपि । षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता । आमपक्वाशयान्तः स्था ग्रहणी साभिधीयते ॥ अस्याः प्रभेदः संग्रहणी । यथा । द्रवं घनं सितं स्निग्धं सकटीवेदनं-मशकृत् । आमं बहु सपैच्छिल्यं सशब्दं मन्दवेदनम् ॥ पक्षान्मासाद्दशाहाद्वा नित्यं वापि विमुञ्चति । अन्त्रकूजनमालस्यं दौर्बल्यं सदनं भवेत् । दिवा प्रकोपो भवति रात्रौ शान्तिञ्च गच्छति । दुर्विज्ञेया दुर्निवारा चिरकालानुबन्धिनी । सा भवेदामवातेन तेन संग्रहणी मतेति ॥

संग्रहभोजनम् । न॰ चन्द्रसूर्योपरागकालभोजने ॥

संग्रामः । पुं॰ युद्धे ॥ संग्रामणम् । संग्रामयुद्धे । इत्यमरः ॥ सङ्गते । समुच्चये । ग्रसेराचेतिमन्वा ॥

सङ्ग्रामपटहः । पुं॰ रणतूर्ये ॥ शङ्खादिरणवाद्ये ॥

सङ्ग्राहः । पुं॰ फलकमुष्टौ फलकग्रहणस्थाने ॥ मुष्टिबन्धनक्रियायाम् । मुष्टिबन्धे ॥ यथा । अहो महच्च सङ्ग्राहः ॥ सङ्ग्रह

याम् । गृहउपादाने : समिम् हाविति गृहैर्घञ् ॥

सङ्घाटो । पुं॰ कुटजवृक्षे ॥

सङ्घ : । पुं॰ चये : समूहे ॥ सजातीयानां विजातीयानाञ्च जन्तूनांवृन्दे । यथा पक्षिसङ्घो भिक्षुसङ्घो वणिक्सङ्घ : ॥ संहन्यते॰ परिच्छिद्यतेऽनेन संहननं वा । सङ्घोद्घौ गणप्रशंसयोरिति टिलोपोऽप्प्रत्ययो घत्वञ्च निपात्यते ॥

सङ्घचारी । पुं॰ मत्स्ये ॥ त्रि॰ बहुभि : सहगामिनी ॥

सङ्घजीवी । पुं॰ व्रातीने ॥

सङ्घटनम् । न॰ योजनायाम् ॥

सङ्घट्ट : । पुं॰ अन्योन्यविमर्द्दे । घटने ॥

सङ्घट्टनम् । न॰ सङ्घट्टे ॥ मेलने ॥ घटने ॥

सङ्घट्टना । स्त्री॰ संघट्टने ॥

संघट्टा । स्त्री॰ लतायाम् ॥

संघट्टित : । त्रि॰ निचिते ॥

संघट्टी । त्रि॰ पद्मभवे । पस्त्री॰ डू॰ पद्मका॰ डू॰ भा॰ ॥

संघतिथ : । पुं॰ संघानांपूरणे ॥ बहुपूगगणसङ्घस्येति डट्॰ तिथुगागमविधानात्॰ सङ्घस्या संख्यात्वे पिडट् ॥

संघपुष्पी । स्त्री॰ शङ्खपुष्प्याम् । धातक्याम् ॥

संघर्ष : । पुं॰ स्पर्द्धायाम् । पराभिभवेच्छायाम् ॥ संघर्षणे ॥ द्रव्यसंघर्षस्तटस्थपीडाकर : । यथा वृषभकलहाद्वृक्षपादभङ्ग:॰ ॥ हृपुमकृर्षे । घञ् ॥ संसर्पे ॥

संघाटिका । स्त्री॰ युग्मे ॥ कुट्टन्याम् ॥ जलकण्टके ॥ घ्राणे ॥

संघात : । पुं॰ घाते ॥ संहतौ । सङ्घे । यथा । सङ्घाता : खल्वमुत्सर्वे ह्यत्यागमविदाम्पदेश : ॥ अप्रसृतावयवेसमूहे ॥ श्लिष्टावयवत्वे । पञ्चभूतपरिणामे । सेन्द्रियशरीरे ॥ नरकविशेषे ॥ सम्यक्घातोऽव॰ सम्यक्घातयन्त्यवेतिवा । यद्वा । संहन्यन्तेऽव । हन्तेर्घञ् । हनस्तोचिण्णलो : । हेश्चन्तेरितिघ : ॥ कफे ॥

संघातपत्रिका । स्त्री॰ शतपुष्पायाम् ॥

संघातवाद : । पुं॰ लोकायतिकानां नास्तिकानां वादे ॥ सयथा । अनादौ चार्वाकैर्लोकैर्नेश्वरादिरपेच्यते । प्रत्यक्षसङ्घातभेदशक्तिभि: सर्वं सिद्धत : ॥ यथौषधानां सङ्घातेमादेरागोरसायनम् । तथैवभूतसङ्घाते चैतन्यञ्चान्यजीवतीति ॥

सङ्कुचित : । त्रि॰ सङ्कुष्टे । सङ्कु

प्यतेऽस्म । घ ञिर् विशब्दने । क्तः कृच्छ्रम् त्वरसङ्कुषाख्ननामितिपच्चे इट् ॥

सङ्कुष्ट : । त्रि० सङ्कुचिते । संश ब्दिते । सम्यगघोषणाश्रये ॥ स ङ्कुप्यतेऽस्म । घुषिर् । कृच्छ्रम् त्वर सङ्कुषाख्ननामितिपच्चे इडभाव : ॥

सचल: । त्रि० चलभिन्ने । अस्थिरे ॥

सचि : । स्त्री० शच्याम् ॥ सर्वेन्द्रि येषुसचति । षचसमवाये । सर्व धातुभ्यइन् ॥

सचिक्कण : । त्रि० स्निग्धे ॥

सचिव : । पुं० अमात्ये । मन्त्रिविशे षे ॥ कार्यसहाया : सचिवाबुद्धि सहायास्मन्त्रिण : प्रोक्ताइतिभेद: ॥ अथसचिवा : तेचभेदा७८ध्याये ५४८श्लोकेद्रष्टव्या : । सहाये । चेटे । सचनम् । सच० । सवधा भ्यइन् । सचिंवाति । वा० आ तोनुपसर्गेक : ॥

सचिवामय : । पुं० विसर्परोगे ॥

सची । स्त्री० इन्द्राण्याम् ॥ कृदिका रादितिङीष् ॥

सचीनन्दन: । पुं० नयन्ते । गौडदे शीत्पन्ने कलौवैष्णवविशेषधर्मप्रव- र्त्तकेचैतन्यदेवे ॥ यथाशाकेमुनि व्योमयुगेन्दुगण्ये १४०७ पुण्ये तिथौफाल्गुनपौर्णमास्याम् । भै लोक्यभाग्योदयपुण्यकीर्त्तिर्देव : सचीनन्दनआविरासीत्इतिचैत न्यचन्द्रोदयनाटकम् ॥

सचेतन : । त्रि० सप्राणे ॥

सचेता: । त्रि० अव्याकुलचित्ते ॥ प्र सन्नचित्ते ॥

सचेष्ट : त्रि० चेष्टयासहवर्त्तमाने ॥

सच्चरा । स्त्री० हरिद्रायाम् ॥

सच्चित् । न० ब्रह्मणि ॥

सच्चिदानन्दम् । न० ब्रह्मणि । नित्यज्ञानसुखस्वरूपे ॥ त्रि० सा कारदेवविशेषणे ॥

सच्चिदानन्दलक्षणम् । त्रि० पर मात्मनि ॥ सच्चिदानन्दै:० अनृ तजडदु : खप्रतियोगिभिर्लक्ष्यते० विरुद्धधर्माणामसत्त्वाभावरूप णयाज्ञायते० इतिसच्चिदानन्दल क्षणम् ॥ यद्वा । सन्तोसर्वदास्था यिनौयौचिदानन्दौज्ञानानन्दौतौ लक्षणंस्वरूपमस्य ॥

सच्छाकम् । न० आर्द्रके ॥

सजम्बाल : । त्रि० पङ्किले । पङ्कवि शिष्टे । जम्बालेनपङ्केनसहेति विग्रह : ॥

सजाति : । पुं० समानजातिस्त्री पुंसयो: पुत्रे ॥ यथ । सवर्णेभ्य: सवर्णासुजायन्तेहिसजातय । अ निन्द्येषुविवाहेषुपुत्रा : सन्तान वर्द्धना : ॥ त्रि० समानजातौ ॥

सजातीय : । त्रि० समानजातीये ॥

जातीभवी जातीय : । समानस्ये तियोगविभागात् सादेश : ॥

सजुः । अ॰ सहार्थे ॥

सजूः । स्त्री॰ प्रीतियुक्तायाम् । सेवा युक्तायाम् । जोषणम्॰ जुट् । जुषाप्रीतिसेवनयोः । भावेक्विप् । स हजुषावर्त्तते॰ यासा॰ सजूः । बहुव्रीहौ सहस्यसभाव : । ससजु षोरुः । र्वोरितिदीर्घः ॥

सज्ज : । त्रि॰ सन्नद्धे । वर्मिते । बद्धसन्नाहे ॥ सज्जतिस्म । षस्ज गतौ । अच् ॥ सन्भृते ।

सज्जन : । पुं॰ महाकुले । कुलीने । आर्ये । अस्यलक्षणंयथा । निजाचारयाहिंसोयैकुर्वन्तोविद्रस त्तमम् । पापाभिलाषरहिताः स ज्जनास्तेप्रकीर्त्तिताइति । क्रियायोगसारे १६ ऽध्याय : । न॰ उपरक्षणे । सैन्यरक्षणायनियुक्त प्रहरिकादौ । गुल्मे । घट्टे । त्रि॰ कुलीने । सति । सतृचा सौजनश्च सज्जनोऽनेन॰ सत्॰ शोभनम् जन्यतेवाऽनेन । षस्जग तौ॰ अनोप्रादुर्भावेवा । ल्युट् । महात्मनि ।

सज्जना । स्त्री॰ पल्याणादारोपणे नेभसज्जीकरणे । कल्पनायाम् । षस्जगतौ । ण्यन्त : ण्यासश्रन्थेति युच् । सज्जस्त्वेनश॰ तश्चजश्

त्वेनज : ॥

सज्जा । स्त्री॰ वेशे । सन्नाहे । साज ना॰ इ॰ भा॰ प्र॰ ॥

सज्जित : । त्रि॰ वशीकृते ॥ भूषिते । कृतसज्जे ॥ वर्मिते । सन्नद्धे ॥ षस्ज॰ । क्त : ॥

सञ्च : । पुं॰ पुस्तकलिखनार्थपत्रचये । सांची॰ इ॰ भा॰ ॥ यथा । श्री ताडीपत्रैसर्ज्जसमैपत्रसुसञ्चिते । त्रिचित्रकांबिपाश्चैर्वचर्मणासम्पुटी कृते । रक्तेनवाथकृष्णेनमसूत्रेण्याब द्धितेनच । दृढसूत्रसुबद्धेनपत्रर्वाबि धकृतेनच ॥ यस्तुवादशसाहस्रीसं हिताःसुपरिलिखयेत् । ददातिचाभियु क्तायसयातिपरमांगतिमितिदेवीपु राणेविद्यादानमाहात्म्यफलनामा ध्याय : ॥

सञ्चत् । पुं॰ प्रतारके ॥

सञ्चय : । पुं॰ समूहे । निवहे ॥ स ञ्चीयते । चिञ्॰ । एरच् ॥

सञ्चयनम् । न॰ सञ्चये ॥

संचयी । त्रि॰ संचयशीले । सङ्ग्रह कर्त्तरि ॥ सञ्चयोऽस्यास्ति । इनि : ॥ संचयीनावसीदतेति ॥

संचर : । पुं॰ सेतौ । मार्गे ॥ देहे ॥ संचरन्त्यनेन । गोचरसंचरेति साधु : ॥

संचलनम् । न॰ कम्पने ॥

संचाय्य : । पुं॰ क्रतौ । यज्ञे ॥ सं

हारकः ॥

संज्ञम् । न॰ पीतकाष्ठे ॥ त्रि॰ स
न्नजानुके । संहतजानुके ॥ सं
ज्ञायति ।

संज्ञपनम् । न॰ मारणे ॥ मारण
तोषणनिशामनेषुज्ञा । ज्ञपमिच्चे
तिवा । भाविल्युट् ॥

संज्ञप्तिः । स्त्री॰ मारणे ॥ विज्ञप्तौ ॥

संज्ञा । स्त्री॰ नामनि ॥ यथाप्रत्या
य्यतेसासंज्ञेतिमहाभाष्यम् । प
र्यायमितियावत् । मांचसंज्ञिनं
बोधयति ॥ गायत्र्याम् ॥ चेतना
याम् । बुद्धौ ॥ रविपत्नीयाम् ॥ ह
स्ताद्यैरर्थसूचनायाम् ॥ संज्ञा
नम् । ज्ञानवबोधने । आतश्चोप
सर्गइत्यङ् ॥ सम्यक्ज्ञायतेइति
कर्मणिवाङ् ॥ सङ्केते ॥

संज्ञास्कन्धः । पुं॰ नामप्रपञ्चे । दे
वदत्तादिनामधेये ॥ सविकल्पके
॥ सविकल्पप्रत्ययः॰ संज्ञासंसर्ग
योग्यप्रतिभासः । यथा । डित्थः॰
कुण्डली॰ गौरो॰ ब्राह्मणोगच्छ
तीत्येवंजातीयकइतिवाचस्पतिमि
श्राः । सविकल्पप्रत्ययइत्यनेन॰
विज्ञानस्कन्धोनिर्विकल्पइतिभेदः
स्कन्धयोर्ध्वनितइतिकल्पतरुः ।
गौरश्वइत्यादिशब्दसञ्जल्पितप्रत्यय
इत्यानन्दगिरयः । गौरश्वइत्यादि
शब्दादिविशिष्टवस्तुविषयकसविक

ल्पप्रत्ययइतिप्रत्तिकाराः ॥

संज्ञी । त्रि॰ संज्ञावति ॥ संज्ञया
यः प्रतीयतेससंज्ञीतिमहाभाष्य-
कृत् ॥ संज्ञास्यास्ति । व्रीह्यादि
त्वादिनिः ॥

संज्ञुः । त्रि॰ संहतजानुनि ॥ संह
तेसंलग्नेजानुनीयस्य । प्रसम्भ्यां
जानुनोर्ज्ञुः ॥

सञ्ज्वरः । पुं॰ अग्निजतापे । सन्तापे
॥ संज्वरयति । ज्वररोगे । ण्यन्ता
त्॰ पचाद्यच् ॥

सटम् । न॰ व्रतिनः शिखायाम्-

सटा । स्त्री॰ । जटायाम् ॥
यथा । जटाजटिर्जटीजूटोजुटक
लुसटंसटा । कोटीरंजूटकंहस्तं शि
खायांव्रतिनामपीतिशब्दरत्नावली
॥ सटति । षटअवयवे । अच् ॥
केसरे ॥

सटाङ्कः । पुं॰ सिंहे ॥ व्रतिनि ॥ स
टायुक्तशिखायस्य ॥

सटिः ।
सटिका । स्त्री॰ } गन्धाम् । गन्धप
सटी ।

लाश्याम् । वनयादो॰ पञ्चहरिद्रा॰
इ॰ गौ॰ भा॰ प्र॰ ॥

सणः । पुं॰ शणे ॥

सणिडशः । पुं॰ सन्दंशे ॥

सण्डीनम् । न॰ खगगतिक्रिया
याम् । पक्षिणोवक्रादीपतने ॥

सङ्कतडयनम् । डीङ्विहायसा गतौ । नपुंसकेभावेक्तः । खा द्यचोदितत्वादित्वान्निष्ठानत्वम् ॥ सण्डीनंसम्यक्पतनमितिमहाभारतम् ॥

सण्डीनडीनम् । न॰ खगानांगतिभ गममभार्थे ॥

सण्डीनोड्डीनम् । न॰ खगानांगतिभे॰ उड्डगमने ॥

सत् । अ॰ आदरे ॥ आदरानादरयोः सदसतीतिनिपातसंज्ञा ॥

सत् । न॰ सत्ये । सद्‌स्थायिनि । अनृतशून्यब्यासत्ते । बाधाभावोपलक्षितस्वरूपसत्तात्मके । सत् स्वभावेवेदान्तसिद्धपरमेश्वरे । कालत्रयाबाध्येब्रह्मणि ॥ यद्विषया बुद्धिर्नव्यभिचरति॰ तत्सदितिभाष्यम् ॥ त्रि॰ सत्ये । भावत्वाश्रये ॥ साधौ । नित्यानित्य वस्तुविवेकादिसाधनसम्पन्ने मुमुक्षौ । शिष्टे । वेदोक्तकारिणि वेदशास्त्रानुसारेणवर्त्तमाने । धीरे ॥ मान्ये ॥ प्रशस्ते ॥ धार्मिके ॥ विद्यमाने । अस्तीतिविधिमुखेनप्रतीयमाने ॥ यत्सम्बन्धितयाय द्विद्यते॰ तत्तत्सदित्युच्यते ॥ व्यक्ते । विधिमुखेनप्रमाणस्यविषये ॥ कर्मवैगुण्यापनोदनसमर्थे ॥ पृथिव्यप्तेजसु ॥ सद्भावेसाधुभावेचसदित्येतत्प्रयुज्यते । प्रशस्ते कर्मणितथासच्छब्दः पार्थयुज्यते ॥ यज्ञेतपसिदानेचस्थितिः सदितिचोच्यते । कर्मचैवतदर्थीयंसदित्येवाभिधीयते ॥ अस्ति । अ सभुवि । लट शत्रादेश । श्नसोरल्लोपः ॥ सत्तायालिङ्गि । अस्तिता मात्रेवस्तुनि ॥ शान्ते ॥ अस्ति ब्रह्मेतिवास्मास्तित्वविदि ॥ भावि ष्यतीत्यातुमिष्टोस्यायमावोषविस्मृतः । स्मर्यतेस्मृतमुक्तःवैवंसत्त्व वक्तुधोच्यते ॥

सततम् । अ॰ सर्वदार्थे निरन्तरे

सततम् । न॰ अनारते । अश्रान्ते । सम्तते । सन्तन्यतेस्म । तनुविस्तारे । क्तः । अनुदात्तोपदेशेतिनलोपः । समोवाहिततयोरितिपक्षे समोमलोपः ॥ क्रियान्तरैरव्यवधानमत्रार्थः । क्रियाविशेषणेस्यक्लीवत्वम् । द्रव्यविशेषणेतुत्रिलिङ्गम् ॥ पुं॰ विषमज्वरविशेषे ॥ तल्लक्षणं यथा । अहोरात्रेसततकोद्वौकालावनुवर्त्ततइति । द्वौकालौ॰ अ न्येककालरात्रावेककालमयतोदेषात्साम्प्रदीरात्रेप्रत्यंकंद्वौद्वौप्रकोपकालौ ॥

सततग : । पुं॰ वायौ ॥ त्रि॰ सर्वदागमनशीले ॥ सततंगच्छति । गमृ॰ । डः ॥

सततविमुक्त : । त्रि० सर्वदैवमुक्ते • मकदाचिद्पिबद्धे ॥

सततयायी । त्रि० सदाविनश्वरे ॥

सततोत्थित : । त्रि० निरन्तरमुद्युक्ते ॥ सततमुत्थित : ॥

सतत्त्वम् । न० स्वभावे । यथात्मये ॥ त्रि० तत्त्वेनसहिते ॥ तत्त्वेनवास्त वरूपेणसहवर्त्ततेइति ॥

सतर्क : । त्रि० सभये । तर्केणसहवर्त्तमाने ॥

सती । स्त्री० दाक्षायण्याम् । उमायाम् ॥ साध्व्याम् । पतिव्रतायाम् ॥ साध्व्याम् ॥ विद्यमानायाम् ॥ सौराष्ट्रमृदि ॥ प्रमाणान्तरबाधा योग्यायाम् ॥ यथा सत्यपत्नी । यथा । सत्यपत्नीसतीमुक्ते : पूजिताज गतीप्रिया । यथाविनाभवेल्लोकोऽसं धुतारहित : सदा ॥ यत्रसत्त्वमन्ति नास्ति० तत्राविश्वासात् • मनुष्य: स्नेहंनकरोति० इतितस्यतारहि तेऽभवतीतियुक्तमेव ॥ प्रतिष्ठाच्छ न्द: प्रभेदे ॥ नगिसती ॥ यथा । मुररिपोतवपदम् । नमतिसाननु सती । अस्ति० एकस्मिन्नगत्‌वौ । अस० । शतृ । श्नसोरल्लोप : । उ गित्वात्ङीप् ॥

सतीन : । पुं० वंशे । कलाये । वा यौ ॥

सतीनक : । पुं० वंशे ॥ कलाये । ख ण्डकी । मटरइ० भा० प्र० ॥ अ लावखिपुट : प्रोक्त : सतीनीवर्त् लोमत : इतिव्याडि : ॥ सतिनो वैहन : प्रभु : । संज्ञायामितिस मास : । कलदन्तादित्वयलुक् ॥ स तीनं वाहुं करोति । अन्त्येप्येपी तिव : ॥

सतीर्थ्य : । पुं० परस्परमेकगुरो : शिष्ये । सहाध्यायिनि । समाने तीर्थेगुरौवसति । समानतीर्थेवा सीतियत् । तीर्थेये० इतिसमानस्य स : ॥

सतील : । पुं० सतीने ॥ वंशे० इ० मुद्रांकिताङ्गारावली ॥

सतीलक : । पुं० सतीनके । मटर इ० भा० प्र० कलाये ॥ तिलेन० तिलवत्कृष्णवर्णचिह्नेनसहवर्त्तते० इतिसतील : । निपातनादिकारस्य दीर्घ : । स्वार्थेक : ॥

सतीला । स्त्री० कलायविशेषे । नि ष्पिडकायाम् । त्रिपुटे ॥

सतुषम् । न०तुषयुक्तसस्ये ॥ धान्ये ॥ य था । सस्यंचैवगतंप्राहु : सतुषं धान्यमुच्यते । आमंवितुषमित्युक्तं स्विन्नमन्नमुदाहृतम् ॥

सतूर्य्य : । त्रि० वादित्रसहिते । तूर्य्यै: तूर्यघोषै : सहित : ॥

सतृट् । त्रि० तृष्णायुक्ते । तृषिते ॥

सतृकदम्ब: । पुं० व्रजभुवि । कदम्बे ।

सत्कर्म्म । न॰ वेदविहितक्रियायाम् ॥ सत्कर्मयोग्योनजनोनवाप : शौचकारणम् । यस्मिन्ननुदितेत स्मिनमेदिवाप्रभासते । इतिविष्णुपुराणम् ॥

सत्काण्डमार : । पुं॰ रक्तकाञ्चने ॥

सत्काण्ड : । पुं॰ चिल्ले ।

सत्कार : । पुं॰ अत्यादरे ॥ साधुरयंतपस्वीत्र आवश्यं वं क्रियमाणायांस्तुतौ ॥ कौमुद्यादिषु ॥ यथा । तस्मादेता : सदापूज्या : भूषणाच्छादनाशनै : । भूतिकामैर्नरैर्नित्यंसत्कारेषूत्सवेषुचेति । एता : • नार्य : ॥ पूजायाम् ॥

सत्कृत : । त्रि॰ कृतसत्कारे । पूजिते ॥ अर्हते ॥

सत्कृति : । स्त्री॰ सत्क्रियायाम् । सत्कारे ॥

सत्क्रिया । स्त्री॰ सत्कारे । आदरस्यक्रियायाम् ॥ अवदाहादिक्रियायाम् । संस्क्रियायाम् ॥

सत्तम : । त्रि॰ पूज्यतमे । साधीयसि । इत्तमे । अतिशोभने । एषमेषामतिशयेनसन् । अतिशायनेतमविष्ठनाविति तमप् ।

सत्ता । स्त्री॰ सजातीयविजातीयस्वगतभेदरहितानुभूतौ । विद्यमानतायाम् । साधुतायाम् । जातिविशेषे । इतिभाषापरिच्छेद : ॥ भावेतल् ॥

सत्तामात्रम् । त्रि॰ केवलपरमात्मस्वरूपे ॥

सत्य : । पुं॰ श्रीरामे । दशमुखान्तके । विष्णौ ॥ यथा । श्रीरामेप्यवतरेविष्णु : सत्यै : सहस्रधीरामे. । सत्यायामभवत्सत्य: सत्यरूपीजनार्दनइतिकौर्मे ४८ ऽध्याय : । अश्वत्थवृक्षे । नान्दीमुखश्राद्धदेवे । यथा । इष्टिश्राद्धेक्रतुर्दक्ष : • सत्यौनान्दीमुखेवसु : । नैमित्तिकेकालकामौ॰ काम्येचधुरिलोचनाविति ॥ तपोलोकादूर्द्ध्वतनेलोके । सत्यलोके ॥ यथे त्त मृगेन्द्रसंहितायाम् । तत्र : सत्याधिप : स्थानंसत्यलोक : स्वयम्भुव : । कामातिशयसम्पन्न : कोटयोनवसप्तच । सावित्रीमूर्त्तिमत्यास्ते यत्रवेदाःससानुगा : ॥ ततस्तपोलोकानन्तरम्॰ सत्यमेवतुशिल्वात्॰ प्राप्तकत्याधिपत्यस्य ब्रह्मण : स्थानम्॰ इत्यर्थ: । न॰ कृतयुगे ॥ शपथे ॥ यथोक्तं श्रीमहानिर्वाणे । सत्यंब्रवीमिसत्कल्पयस्पृष्ट्वाकोलंगुरुंद्विजम् । गङ्गातोयंदेवमूर्त्तिंकुलशास्त्रंकुलामृतम् । देवीनिर्माल्यमथवाकथनंशपथोभवेत् । तथानृतंवदन्मर्त्य : कल्पान्तंनरकंव्रजेत् ॥ अपापत्नीकार्यालयोगीयायश्चापिवा । तत्कार्यंसर्वथामर्त्यै : स्वीकृतं

मपथेनयत् ॥ स्रोकारोऽलङ्गनाच्च दुष्यं तुपलमेकमभोजनैः । अमेध्याशितमुष्णं ध्यजादगाहंकपायनैः ॥ कुलधर्मोऽपि सत्येन विधिनाचेन्न सेवितः । मोक्षायश्रेयसे न स्यात् कौलिपापायकेवलम् ॥ इति ॥ तथ्ये । अव्यभिचारिणि । अनृतविरोधिनि । यथादृष्टार्थभाषणे । प्रमाणेनावबुद्धस्यार्थस्य तस्यैवभाषणे । यथाच । यथातिष्ठन्तिपुण्यानि सत्यमाश्रित्यपार्वति । तथाऽनृतंसमाश्रित्यपातकान्यखिलान्यपि ॥ अतः सत्यविहीनस्य सर्वपापाश्रयस्य च ताडनाद्दमनाद्राजानपापार्हः शिवाज्ञया ॥ अपसलघुयामुक्तं पाद्मे क्रियायोगसारे । यथार्थकथनं यच्च सर्वलोकसुखप्रदम् ॥ तत् सत्यमितिविज्ञेयं नसत्यं तद्विपर्ययमिति ॥ तस्याकारास्तोक्ताम हाभारते राजधर्मे यथा । सत्यञ्च समताचैव दमश्चैवनसंशयः । अमात्सर्यं क्षमाचैव ह्रीस्तितिक्षानसूयता ॥ त्यागोध्यानमथार्यत्वं धृतिश्च सततं दया । अहिंसाचैवराजेन्द्र सत्याकारास्त्रयोदशेति ॥ सत्यप्रशंसायथा । नहि सत्यात् परोधर्मो नानृतात् पातकंपरम् । नहिमातुः परोबन्धुर्न गुरुमन्त्रात् परः ॥ इ० ब्र० वै० पु० ॥ अपिच

महानिर्वाणतन्त्रे । प्रकटेऽत्रकलौ देविसर्वे धर्माद्दुर्बलाः । स्थास्यत्येकसत्यमात्रंतस्मात्सत्यमयोभवेत् ॥ सत्यधर्मं समाश्रित्ययत्कर्म कुरुते नरः । तदेवसकलंकर्म सत्यं जानीहि सुव्रते । नहि सत्यात्परोधर्मो न पापमनृतात्परम् । तस्मात्सर्वात्मनामर्त्यः सत्यमेकंसमाश्रयेत् ॥ सत्यहीनावृथापूजासत्यहीनोवृथाजपः । सत्यहीनंतपोव्यर्थमूषरेवपनंयथा ॥ सत्यरूपंपरम्ब्रह्मसत्यं हि परमंतपः । सत्यमूलाः क्रियाः सर्वाः सत्यात् परतरं न हि ॥ अतएवमयाप्रोक्तं दुष्कृतप्रबलेकलौ । कुलाचारोऽपि सत्येनकर्त्तव्योऽच्छन्नभावतः ॥ गोपनाद्धीयतेसत्यं नगुप्तिरनृतंविना । तस्मात्प्रकाशतः कुर्य्यात् कौलिकः कुलसाधनम् । कुलधर्मं जुगुप्स्यर्थं नानृतंस्यात्जुगुप्सितम् । यदुक्तं कुलतन्त्रे पुनस्तंत्र प्रबलेकलौ ॥ धर्मस्य चतुष्पाद स्त्रेतायांपादहीनकः । द्विपादो द्वापरेदेविपादमात्रं कलौयुगे । तत्रापिसत्यं बलवत्तपः खण्डंदयापि च । सत्यपादेकृतेलोपेधर्मलोपः प्रजायते । तस्मात्सत्यं समाश्रित्य सर्वंकर्माभिसाधयेत् ॥ कुलाचारंविनायस्मात्स्यु पायः कुलिप्रवि

। तथानृतप्रविशश्च त्वक्तीनिश्चेय संभवेत् । इति ॥ अश्वमेधसहस्त्र अस्तलयाधृतम् । अश्वमेध सहस्र द्धिसत्यमेकंविशिष्यते ॥ अमृतभाषणरूपवाग्व्यापारनिरोधि, अनर्थाननुबन्धियथाभूतार्थवचने । प्रियहितयथार्थभाषणे ॥ अबाधिततात्पर्यविषयेतत्त्वावेदकेवेदाख्येप्रमाणे ॥ तदुपजीविनिपुराणादौ ॥ प्रमाणमूलेऽबाधितार्थेवाक्ये ॥ सिद्धान्ते ॥ भूतपञ्चके ॥ सच्छब्देनपृथिव्यप्तेजांसि० त्यशब्देनवाय्वाकाशौ । सञ्चत्यञ्च० अनयोः समाहारः । मम दर्शने । परमार्थरूपे । अद्वैतवस्तुनि० परमब्रह्मणि ॥ द्वैताद्वैतयोः प्रमाणभूतवेदप्रतिपाद्यत्वात्कश्यसत्यत्वकस्यासत्यत्वमित्याकाङ्क्षायामाहाचार्यः अद्वैतमेवसत्यं० तस्मिन्० द्वैतं० नसत्य०मध्यस्तम् । रजतमिव० शुक्तिकायाम्० मृगतृष्णायामिवो० दकस्फुरणम् । आरोपितंयद्विश्वा० दद्वैतंवस्त्व०ऽवस्तुनिर्द्वैते । युक्तं नैव० तदाख्यात्० सत्ये० अध्यासो० भवत्य० ऽसत्यानाम्: यथारोपण० मुभयो० स्वार्तिरिक्तयकस्यचिद्०भाव: । आरोपणं नशून्ये० तस्मा० द्वैतसत्यतातो

स्था ॥ एकमूलेऽद्वैतेश्रुतिरेवप्रमाण०मित्याह । प्रत्यक्षाद्यनवगतं० श्रुत्याप्रतिपादनीयमद्वैतम् । द्वैतंनप्रतिपाद्यम्० तत्स्वयमेवलोकसिद्धत्वात् ॥ ५४ ॥ इति ॥ भूतपञ्चके । सच्छब्देनपृथिव्यप्तेजांसि । तच्छब्देनवाय्वाकाशौ । सञ्चत्यञ्चसत्यमितिव्याख्यानात् ॥ व्यक्ताकलितत: पूर्वमुद्रैमव्यक्तरूपकम् । सत्त्वमविनाशंवसत्यंतद्वस्तुकथ्यते ॥ त्रि० तथ्यवति ॥ अबाध्ये ॥ सतिसत्सु वासाधुः तत्रसाधुरितियत् ॥ पारमार्थिके । यथा । सत्यस्यसत्य: परमेश्वर: । सत्यस्यभूतपञ्चकस्यसत्य: पारमार्थिकोनाशेप्यवशिष्यमाणरूप: ॥

सत्यकाम: । पुं० जाबालर्षौ ॥ ईश्वरे ॥ सतयाअवितथा: कामायस्य स: ॥

सत्यगङ्गा । स्त्री० कामरूपदेशप्रसिद्धायांनद्यां ॥

सत्यंकार: । पुं० अवश्यंमयैतत्कर्तव्यमितिसत्यकरणे । सत्यापने ॥ सत्यस्यकरणम् । भावेघञ् । कारेसत्यागदस्येतिमुम् । समयकरणे ॥

सत्यंकारकृत: । त्रि० अवश्यंमयैतत्कर्तव्यमितिसत्यंकृत्वाग्रहेयं तस्मिन् । वयाना० साङ्० भा० प्र० ॥

सत्यतपाः। पुं॰ मुनिविशेषे ॥

सत्यधृतिः। पुं॰ ऋषिविशेषे ॥ त्रि॰ अवितथधैर्ये ॥ सत्या अवितथविषया धृतिर्यस्य ॥

सत्यनारायणः। पुं॰ स्कन्दपुराणप्रसिद्धे देवताविशेषमूर्तिकल्पित् ॥

सत्यपरः। पुं॰ परमेश्वरे ॥ सत्यं परं श्रेष्ठं प्राप्तिसाधनं यस्मिन् सः ॥

सत्यफलः। पुं॰ बिल्ववृक्षे ॥

सत्यभामा। स्त्री॰ श्रीकृष्णस्याष्टमहिष्यन्तर्गतमहिषीविशेषे ॥ दुर्गायाम् ॥

सत्यभारतः। पुं॰ कृष्णद्वैपायने। वेदव्यासे

सत्यम्। अ॰ अङ्गीकारे ॥ प्रश्ने ॥ अभ्युपगते ॥ प्रतिबोधे ॥ सत्ये ॥

सत्यम्भरा। स्त्री॰ द्रुमद्वीपस्थमहत्यां नद्याम् ॥

सत्ययज्ञः। पुं॰ पौलुषिनाम्नि मुनिविशेषे ॥

सत्ययुगम्। न॰ चतुर्युगानां प्रथमयुगे। कृते ॥ यथा। कृतं सत्ययुगं त्रेताग्नायौ॰ द्वापरयज्ञियौ। कलिर्भारकः कर्मयुगमिति त्रिकाण्डशेषः ॥

सत्ययोनिः। पुं॰ परमेश्वरे ॥ सत्यस्य भूतपञ्चकस्य योनिः कारणम् ॥

सत्ययौवनः। पुं॰ विद्याधरे ॥

सत्यरतः। पुं॰ सत्यव्रतराज्ञः पुत्रे ॥ व्यासे ॥ त्रि॰ सत्यवादिनि ॥ सत्ये रतः ॥

सत्यलोकः। पुं॰ सप्तलोकान्तर्गतलोकविशेषे ॥ यथा। षड्गुणेन तपोलोकात् सत्यलोको विराजते। अपुनर्मारकाय यत्र ब्रह्मलोको हि स स्मृतः ॥ जनलोकात्तपश्चैव षड्गुणेन द्वादशकोट्युच्छ्रायेण तपोलोकानन्तरं सत्यलोकः। अपुनर्मारकाः पुनर्मृत्युशून्याः ॥

सत्यवचाः। पुं॰ ऋषौ ॥ त्रि॰ सत्यवादिनि ॥

सत्यवान्। पुं॰ नृपान्तरे ॥ त्रि॰ सत्यवादिनि ॥ सत्यमस्यास्मिन् मतुप्। मादुपधाया इति मतो र्वः ॥

सत्यवती। स्त्री॰ व्यासमातरि। काल्याम् ॥ नारदस्य पत्न्याम् ॥ ऋचीकमुनेर्भार्यायाम् ॥ सत्यवाग्विशिष्टायाम् ॥ उगित्वान्ङीप् ॥

सत्यवतीसुतः। पुं॰ व्यासे ॥

सत्यवाक्। पुं॰ ऋषौ ॥ काके ॥ त्रि॰ सत्यवादिनि ॥ सत्या वागस्य ॥

सत्यवाक्यः। पुं॰ भगवतीपुराणप्रसिद्धे मुनिविशेषे ॥ त्रि॰ सर्वास्ववस्थास्वपि सत्यवचने ॥ सत्यं वाक्यमस्य।

सत्यवादी । त्रि० यथार्थवक्तरि । सत्योद्ये ॥

सत्यवृत्तः । त्रि० अकपटचरिते ॥

सत्यव्रतः । पुं० ईश्वरे । सत्यं व्रतं सङ्कल्पोऽस्य ॥ सूर्य्यवंशीयस्य त्र्य्यारुणस्यात्मजे राजर्षिविशेषे । योऽसौ त्रिशङ्कुसंज्ञामवाप ॥ त्रि० सत्यसङ्कल्पे ॥

सत्यसङ्कल्पः । त्रि० अमोघवाञ्छिते । ईश्वरे ॥ सत्याः सङ्कल्पा यस्य ।

सत्यसङ्गरः । पुं० त्रिशिरसि । श्रीदे । कुबेरे ॥ कूटास्त्रवर्जितेऽसुराणांयुद्धे ॥ त्रि० सत्यप्रतिज्ञे ॥

सत्यसन्धः । पुं० कैकेयीतनये । भरते । जनमेजये ॥ त्रि० सत्यप्रतिज्ञे ॥ सता सन्धा प्रतिज्ञा यस्य ॥

सतासन्धा । स्त्री० द्रौपद्याम् ॥

सत्या । स्त्री० दुर्गायाम् ॥ जनकात्मजायाम् । सीतायाम् ॥ व्यासमातरि । सत्यवत्याम् ॥ सत्यभामायाम् ॥ विनापि प्रत्ययं पूर्व्वोत्तरपदलोपः ॥ सत्यभामेत्याम् । अविनाशिन्यां ॥

सत्याकृतिः । स्त्री० सत्यापने । मयैतदवश्यंकर्त्तव्यमिति तथ्यकरणे । सत्यक्रिया० सा इ० भा० प्रसिद्ध निश्चये ॥ सत्यस्य करणं । स्त्रियां क्तिन् । सत्यादशपथे० कृतिडाच् ॥

सत्याग्निः । पुं० अगस्त्यमुनौ । च डाक्कर्म्माग्नौ ॥

सत्यानृतम् । न० वाणिज्ये ॥ सत्यसहितमनृतम् । शाकपार्थिवादिः ॥

सत्यापनम् । न० सत्यङ्कारे । सत्याकृतौ ॥ सत्यस्य करणम् । सत्यापपाशेति णिजापुकौ । भावे ल्युट् ॥

सत्योद्यम् । न० सत्यवचे । सत्यस्य वदने ॥ वदः सुपि क्यप् चेति क्यप् ॥

सत्त्रम् । न० क्रतौ । यज्ञे ॥ सदादाने ॥ आच्छादने ॥ अरण्ये ॥ कैतवे ॥ यज्ञविशेषे । गवायनादिक्रतुविशेषे ॥ यजमाना एव समाना ऋत्विगादिरूपेण० कर्म्म कुर्व्वन्ति० तस्मिन् यज्ञे सदन्नदाने सततान्नदाने ॥ धने ॥ गृहे ॥ कर्म्मणि ॥ सीदन्त्यत्राऽनेनवा । षद्लृविशरणगत्यवसादनेषु । ष्ट्रन् ॥ गृधुमौख्यादित्वाबोधः ॥ सतः साधून् त्रायतेवा । त्रैङ् पालने । आतोनुपसर्गे कइतिकः । नपुंसकत्वात्सत्रमिति ॥

सत्त्रम् । अ० सहार्थे । सत्राऽवती । त्रैङ्पालने । अम् । यरोहित्वम् ॥

सत्त्रशाला । स्त्री० प्रतिश्रये । अन्नदानाद्युद्वसिते ॥

सत्रा । अ० सहार्थे ॥ सत्राकलवैगाईस्याम् ॥ सत्रायते । त्रैङ्० । क्विप् ॥

सत्राजित् । पुं० कृष्णस्य श्वशुरे ॥

सत्त्रायणम् । न॰ बहुयजमानके॰ वैदिकेकर्म्मणि ॥

सत्त्रि : । पुं॰ गजे । हस्तिनि ॥ अब्दे । मेघे ॥ त्रि॰ जयशीले ॥

सत्त्रिजातकम् । न॰ व्यञ्जनविशेषे ॥ यथा । मांसंबहुघृतेभृष्टंसिक्ताचोष्णाम्बुनामुहुः । जीरकाद्यैसमायुक्तंपरिशुष्कंतदुच्यते ॥ तदेवघृततक्राढ्यंप्रदिग्धंसत्त्रिजातकम् ॥

सत्त्री । पुं॰ गृहपतौ । सदान्नादिदानकर्त्तरिगृहस्थे ॥ नाशौचंसत्त्रिणांसते॰ नकारूणांस्वकर्म्मणि ॥ ऋत्विजि ॥ सत्त्रं॰ यज्ञतन्त्रमस्यास्ति । अतइनिठनाविती॰नि : ॥

सत्त्व : । पुं॰ न॰ जन्तौ ॥ न॰ प्रकृतेर्गुणविशेषे । प्रीत्यात्मकेसत्त्वगुणे ॥ येतुप्रीतिर्न्दु : खाभावादतिरिच्यते॰ एवंदु : खमपिनप्रीत्यभावादन्यदितिमन्यन्ते॰ तान्प्रत्यात्मग्रहणम् । नेतरेतराभावा : सुखादय : • अपितुभावा : ० आत्मगब्दस्यभाववचनत्वात्॰ प्रीतिरात्माभावोयेषांतेप्रीत्यात्मान : । भावरूपताचैषांगुणानामनुभवसिद्धा॰ परस्पराभावात्मकत्वेतुपरस्पराश्रयापत्तेरेकस्याप्यसिद्धेरुभयासिद्धिरितिभाव : । सत्त्वंलघुप्रकाशकमिष्टंसाङ्ख्याचार्य्यै : । यतुसुखहेतुस्तत्सुखात्मकंसत्त्वम् ॥ चेतोधर्म्मविशेषे ॥ यस्मिन्सतिनकुतश्चिद्भयमुत्पद्यतेनकस्यामप्यवस्थायाम्विषाद : समुपजायतेतत्सत्त्वमितिव्याख्यातार : । तथाहि । एकाकिनीवनवासिनिष्वराजलक्ष्म्यनीतिशास्त्रे । सत्त्वोच्छ्रितेमृगपतौ॰ राजेतिगिर : परिणमन्ति ॥ पिशाचादौ ॥ बले । पराक्रमे ॥ द्रव्ये ॥ स्वभावे ॥ आत्मत्वे ॥ व्यवसाये । असुषु । प्राणेषु ॥ चित्ते ॥ रसे ॥ आयुषि ॥ धने । शिवे ॥ यथा । अन्यदुच्छृङ्खलंसत्त्वमन्यच्छास्त्रनियन्त्रितम् । सामानाधिकरण्यंहितेजस्तिमिरयो : कुतइति ॥ जीवात्मनि ॥ अन्त : करणे ॥ निर्विकारमनसि ॥ यथा । व्यसनेऽभ्युदयेवापिश्चविकारेसदामन : । ततुसत्त्वमितिप्रोक्तमिति ॥ उत्साहशक्तौ ॥ चित्तधैर्य्ये ॥ सतोभाव : । तस्यभावस्त्वतलौ । सीदन्त्यस्मिन्गुणाद्या : । षद्लृ॰ । अन्येभ्योपिदृश्यन्तइतित्वन्वा ॥

सत्त्वतनु : । पुं॰ वासुदेवे ॥

सत्त्वरम् । न॰ शीघ्रे । अविलम्बिते ॥ त्रि॰ तद्वति ॥ सहत्वरयावर्त्तते । सहस्यस : ॥ अविलम्बितेक्रियाविशेषणत्वाद्द्रव्येवर्त्तमानंक्लीवम् । द्रव्येतुत्रिलिङ्गं ॥

सत्त्वविशाल : । पुं॰ भुव : प्रभृतिस

स्यान्तेलोके । त्रि० सत्त्ववहुले । ऊर्द्ध्वंसत्त्वविशाल:॥ सत्त्वेन विशाल : ॥

सत्त्वसंशुद्धि : । स्त्री० अन्त : करणस्य निर्मलतायाम् । श्रवणादिपरिपाकेणान्त : करणस्यासम्भावना:विपरीतभावनादिमलराहित्ये सम्यक्शुद्धि : संशुद्धि : सत्त्वस्य संशुद्धि : । तथा : सम्यक्भगवत्तत्त्वस्फूर्त्तियोग्यता ॥

सत्त्वसङ्क्षय : । पुं० चित्तभङ्गे ॥ प्रारब्धकार्यासिद्ध्यादेर्विषाद : सत्त्वसङ्क्षय : ॥

सत्त्वसमाविष्ट : । त्रि० सत्त्वेनआत्मना० आत्मविवेकज्ञानेहेतुनाचित्तगतेनातिशयेन० सम्यग्ज्ञानप्रतिबन्धकरजस्तमोमलराहित्येन० आसमन्तात्फलाव्यभिचारेण० आविष्टे व्याप्ते ।

सत्त्वसम्पन्न : । त्रि० सद्भावापन्ने ।

सत्त्वस्थ : । त्रि० सत्त्ववृत्तिप्रधाने ॥ पुं० विष्णौ ॥ सत्त्वं सत्त्वगुणं प्रकाशात्मकमधितिष्ठतिपालनोपाधितयाविष्णुरूपेणेतिसत्त्वस्थोविष्णु: । यद्वासत्त्वेषुसर्वप्राणिषुअन्तरूपेणान्तर्यामिरूपेणचतिष्ठतीतिसत्त्वस्थ : । छा० । सुपिस्थइतिक : ॥

सत्पत्रम् । न० संवर्त्तिकायाम् ॥

सत्पथ : । पुं० अर्चितेऽध्वनि । संस्यासीपन्थाश्च । सन्महदितितत्पुरुष : । समासान्तश्च ।

सत्पुत्र : । पुं० सदपत्ये ॥ सत्पुत्रेणतुजातेनवैणोपिपित्रदिवंययौ । पुन्नाम्नोनरकात्त्रात : सतेनसुमहात्मना ॥

सत्पुरुष : । पुं० पूज्यमानपुरुषे ॥

सत्प्रतिग्रह : । पुं० साधुजनदत्तद्रव्यग्रहणे ॥ सद्भ्य : साधुभ्य : प्रतिग्रहोदानग्रहणम् । यथा । सप्तवित्तागमाधर्म्यादायोलाभ : क्रियोजय : । प्रयोग : कर्मयोगश्चसत्प्रतिग्रहएवचेतिमनु : ॥

सत्प्रतिपक्ष : । पुं० तुल्यव्यक्तौ । प्रतियोगिनि ॥ न्यायमते० साध्याभावसाधकंहेत्वन्तरंयस्यतस्मिन् ॥ यथा । शब्दोनित्य : श्रवणत्वात् शब्दवत् शब्दोऽनित्य:कार्यत्वाद् घटवदिति ॥ यद्वा । ह्रदोवह्निमान्धूमात्० इत्यादौवह्न्यभावव्याप्यवद्ध्रदादिरिति ॥

सत्फल : । पुं० दाडिमवृक्षे ॥ शोभनफलवतिवृक्षे ॥

सत्सङ्ग : । पुं० साधुसङ्गमे । सधर्म्मवर्त्तिजनसमागमे । यथोक्तंकुलार्णवे । सत्सङ्गश्चविवेकश्चनिर्मलंनयनद्वयम् । यस्यनास्तिनर : सोन्ध : कथंनस्यादमार्गगच्छति ॥

सत्सार : । पुं० खादिरे । खदिरसा

रे । वृत्तविशेषे ॥

सधुत्कारम् । न० सम्यक्कृते ॥ धुत्कारेण सह वर्त्तमाने ॥

सदंशकः । पुं० कर्कटे । कुलीरे ॥ त्रि० दंशयुक्ते ॥

सदंशवदनः । पुं० कङ्कपक्षिणि । रणालङ्करणे । आमिषप्रिये ॥

सदञ्जनम् । न० कुसुमाञ्जने ॥

सदनम् । न० वस्त्ये । भवने । गृहे ॥ सीदन्त्यत्र । षद्लृ० । अधिकरणे ल्युट् ॥ तोये । जले ॥ ग्लानौ ॥ यथा । दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमथारुचिमिति ॥

सद्व्ययः । त्रि० विनाशापचयोपलक्षितसर्वविकारशून्ये । सञ्चासौ अव्ययश्चेति कर्मधारयः ॥

सदश्वः । पुं० दान्ताश्वे ॥

सदः । स्त्री० न० सभायाम् ॥ सीदन्त्यस्याम् । षद्लृ० । असुन् ॥

सदसदात्मकम् । न० स्वरूपपररूपाभ्यां निरूपणीये सर्वस्मिन् जगति । जगद्धि व्यवहारदृष्ट्या सत् । परमार्थदर्शनेनासत् । तत्स्वरूपम् ॥ सदसती आत्मा स्वरूपं यस्य तत् ॥

सदसच्छब्दामनिर्वचनीयम् । न० अज्ञानस्योत्कृष्टलक्षणे ॥ नेदमसम्भवि० अज्ञानस्य सत्त्वे चिदात्मवद्बाधाभावप्रसङ्गात् । असत्त्वे च वन्ध्यासुतादिवदपरोक्षप्रतिभासानुपपत्तेः बाध्यप्रतीत्योस्त्वोश्चानैप्रसिद्धत्वाद्युक्तं तस्यानिर्वचनीयत्वम् ॥

सदसद्योनिः । स्त्री० धर्म्माधर्म्ममिश्रत्वाद्ब्राह्मणादिमनुष्येषु । तेषु हि राजसंमिश्रं फलं भुज्यते । सदसतोर्योनिः ॥

सदसद्वादी । पुं० अकलङ्कवितथप्रभृतिषु० अर्हत्सु ॥

सदसद्विकारम् । न० जगति ॥ सत् आकाशवायुरूपममूर्त्तभूतद्वयम् । असत् तेजोजलभूमिरूपं मूर्त्तभूतत्रयम् । तयोर्विकारं तत्परिणामरूपं यत् तत् ॥

सदस्पतिः । पुं० सभाधिपतौ ॥ सदसः पतिः ॥

सदस्यः । पुं० विधिदर्शिनि । सभायामन्यूनाधिकविचारके० ऋत्विग्विशेषे ॥ सदसि साधुः । तत्र साधुरिति यत् ॥ सभ्ये ॥ सदसि यज्ञसभायामृत्विग्भ्योऽन्ये मिलिता ये ब्राह्मणास्ते सदस्याः ॥

सदा । अ० सर्वकाले । सर्वदार्थे ॥ सर्वस्मिन् काले सर्वैकान्यकिंयत्तदः काले दा । सर्वस्य सोऽन्यतरस्यां दि ॥

सदाकारः । पुं० आत्मनि । अस्तीत्येतन्मात्रव्यवहारकारणभूता-कारो यस्य सः ॥

सदागतिः । पुं० वाते । वायौ ॥

सदागतिरस्य ॥ साक्षि ॥ निर्वाणे ॥ सदोश्वरे ॥ सूर्य्ये ॥

सदाचार : । पुं॰ प्रात : कृत्यादि नियमाचरणेनसाधुव्यवहारे । शिष्टाचारे ॥ यथमनु : । तस्मिन् देशेयआचार : पारम्पर्य्यक्रमागत : वर्णानांसान्तरालानांससदाचारउच्यते ॥ तस्मिन्देशे॰ ब्रह्मावर्तदेशे ॥ सताम्आचार : ॥ सदाचार सतापुंसाञ्ज्ञेतोलोकावुभावपि । विशेष: कालिकावःमनपुराणादौ द्रष्टव्य : ॥ त्रि॰ तद्वति ॥

सदाचारवान् । त्रि॰ सदाचारविशिष्टे । सदाचारिणि ॥

सदातन : । पुं॰ विष्णौ ॥ त्रि॰ नित्ये ॥ सदाभव : । सायञ्चिर मित्यादिना॰ ट्युट्युलातुट्च ॥

सदातोया । स्त्री॰ एलापर्ण्याम् ॥ सदानीरायांसरिति ॥

सदादान : । पुं॰ अभ्रमातङ्गे । ऐरावते ॥ हेरम्बे । लम्बोदरे ॥ गन्धहस्तिनि । मत्तगजे ॥ न॰ नित्यदाने ॥ त्रि॰ सर्वदादानशीले ॥ सदादानंयस्य ॥

सदाम : । पुं॰ समदे ॥

सदानन : । त्रि॰ शोभनवदने । सतूर्णाननंयस्य ॥

सदानन्द : । पुं॰ सदाशिवे ॥ सदा आनन्द : सन्॰ सर्वदास्थायीवा आनन्दोयस्य । सत : साधून्वा नन्दयतीतितथा ॥ त्रि॰ सतताह्लादयुक्ते ॥ यथा । ममानन्दे सदानन्द : सदानन्दोभविष्यति । ममानंदेनिरानन्दोनिरानन्दोभविष्यतीतिपुराणे भगवतीवाक्यम् ॥

सदानत : । पुं॰ खञ्जनखगे ॥

सदानीरवहा । स्त्री॰ करतोयायाम् ॥

सदानीरा । स्त्री॰ करतोयायांसरिति ॥ गौरीविवाहसमये॰ शङ्करकरगलितसम्प्रदानतोयप्रभवत्वात्॰ सदानीरंयस्या: चरजलत्वात् । तथाचावस्मृति : । प्रथमेकल्पे देवीव्युद्धंगजारजखला । सर्वरक्षवशाम्यः करतोयाम्वुवाहिनीति ॥

सदापुष्प : । पुं॰ नारिकेलवृक्षे ॥ श्वेतार्के ॥ न॰ कुन्दे । माल्ये ॥

सदापुष्पी । स्त्री॰ रक्तार्के । आदित्यपुष्पिकायाम् ॥

सदाप्रद : । त्रि॰ सततदातरि ॥

सदाप्रसून : । पुं॰ अर्कवृक्षे ॥ रोहितके ॥ कुन्दवृक्षे ॥

सदाफल : । पुं॰ स्कन्धफले ॥ उदुम्बरे । नारिकेले ॥ बिल्वे ॥ सदाफलानियस्मिन् ॥

सदाफला । स्त्री॰ विसन्धिपुष्पवृक्षे ॥ वार्त्ताकुविशेषे । सदावृन्त॰ इ॰ भा॰ ॥ सदाफलाविदोषघ्नी

रक्तपित्तप्रसादनी । कण्डूकच्छूह
रीचेच० वार्ताकीगुणवत्तरैतिराज
वल्लभ : ॥
सदाभद्रा । स्त्री० गम्भार्याम् । भद्र
पर्ण्याम् ॥
सदामुदितम् । न० दानपदवाच्या
यांपञ्चम्यांसिद्धौ ॥ त्रि० सर्वदा
हृष्टे ॥
सदायोग : । पुं० स्वस्वरूपाविर्भावे ॥
सदायोगी । पुं० विष्णौ ॥ शिवे ॥
सदाविर्भूतस्वरूपे ॥ सदायोगो
स्यास्य । इनि : ॥ अन्येषांचित्त
वृत्तिनिरोधरूपयोगश्चात्मस्वरूपा-
विर्भाव : । ईश्वरस्यतुस्वरूपानाव
रणात्स्वरूपयाथात्म्याविर्भाव :
सर्वदास्तीत्यर्थ : ॥
सदाशय : । त्रि० साधुभिप्राये ॥
सत्आशयोयस्य ॥
सदाशिव : । पुं० महादेवे । शम्भौ
॥ सदासर्वदा० शिवंकल्याणंय
स्य० यस्माद्वा ॥
सदृक्ष : । त्रि० सदृशे ॥ समानमात्म
नापश्यति० समानइवपश्यतिवा
। दृशिर्प्रेक्षणे ।त्यदादिष्विवत्यच०
क्सोपिवाच्यइतिक्स : । दृक्षेचेति
समानस्यसादेश : । रूढिरियंना
वावयवार्थोग्राह्य : ॥
सदृक् । त्रि० सदृशे ॥ समानमा
त्मनापश्यति० समानइवपश्यति

वा । दृशिर्० । त्यदादिष्वितिं०
क्विन् । दृग्दृशवतुष्विति सभाव :
रूढिशब्दोयमितिनावदर्शनक्रिया
पेक्षास्ति ॥
सदृश : । त्रि० तुल्ये । समे । सदृशि
॥ समानमात्मना० समानइववाप
श्यति । दृशिर्० । त्यदादिष्वि
तिकञ् । दृग्दृशवतुष्वितिसभा
व : । रूढिरियमितिनावदर्शनक्रि
यापेक्षास्ति ॥ उचिते ॥
सदृशस्पन्दनमस्य । न० निष्पन्दे ॥
सदेश : । त्रि० निकटे ॥ देशान्विते
॥ समानोदेशोस्य ॥
सद्गति : । पुं० ईश्वरे ॥ सन्ति
ब्रह्मवादिन : सन्त : ० तैर्गम्यते
प्राप्यतेइतितथा ॥ स्त्री० शोभन
गतौ ॥ [illegible] ॥ स
तीगतिर्बुद्धिरस्य ॥ सतामस्तित्र
स्तीतिविदुषांगति : प्राप्यंस्थानंस
द्गति : ॥
सद्गुरु : । पुं० कौले ॥ यथोक्तंमहा
निर्वाणे । शाक्तशाक्तोगुरु : श
स्त : शैवेशैवोगुरुमत : । वैष्णवे
वैष्णव : सौरेसौरोगुरुस्सदाहृत :
॥गाणपेगाणपश्चैवकौल:सर्वत्रसद्गु
रु : । अत : सर्वात्मनाधीमान्कौ
लाद्दीक्षांसमाचरेदिति ॥
सद्भाव : । पुं० अविद्यमानत्वप्रसक्तायां
विद्यमानत्वे । सत : सन्भावस्त्रयो

भावोधर्मः सत्त्वप्रमेयत्वादिस्तस्मिन् ॥ अस्तित्वे । देवदत्तस्य पुत्रादिकमस्तीत्यस्मिन्नर्थे ॥

सद्भूत : । त्रि॰ सत्ये ॥

सद्म । न॰ वेश्मनि । निकेतने । गृहे ॥ तोये । पानीये । नीरे ॥ सीदन्त्यत्र । अदन्तविषरणगत्यवसादनेषु : मनिन् ॥

सद्य : कृतम् । न॰ मामनि ॥ त्रि॰ तत्कालकृते ॥

सद्य : प्राणकर: । त्रि॰ तत्क्षणात् बलकारकद्रव्यादौ ॥ यथा । सद्योमांसं नवान्नञ्च बालास्त्रीक्षीरभोजनम् । घृतमुष्णोदकस्नानं सद्य : प्राणकराणिषट् ॥

सद्य : प्राणहर : । त्रि॰ तत्क्षणात् आयुषोनाशकद्रव्यादौ ॥ यथा । शुष्कंमांसं स्त्रियोवृद्धाबालार्कस्तरुणंदधि । प्रभातेमैथुनं निद्रासद्य: प्राणहराणिषट् ॥

सद्य:शुद्धि: । स्त्री॰ सद्य : शौचे ॥ यथा । देशान्तरमृतेबालेसद्य : शुद्धिर्यतौमृते ॥ इ॰ गारुडे १०७ अध्याय : ॥

सद्य : शोथा । स्त्री॰ कपिकच्छाम् ॥

सद्य : शौच : । पुं॰ कार्शादिषु ॥ ते यथा । कारव : शिल्पिनोवैद्या : दासीदासस्तथैवच । राजानोराजभृत्याश्चसद्य : शौचा : प्रकीर्त्ति



ता : ॥ मिश्रेयोगरूढञ्चायं पुराणशुद्धिविवेकादौद्रष्टव्य : ॥

सद्य : । अ॰ तत्क्षणे । सपदीत्यर्थे ॥ समानेऽहनि॰ इत्यस्मिन्नर्थे॰ सद्य: पक्षत्परार्यैषमइत्यादिना समानस्य सभावोऽद्यस्चाहनिनिपात्यते ॥ यथा । सद्योवलहरानारी सद्योवलकरं पय: । स्त्रियं गच्छेत् पय:पीत्वातास्वल्पाकपुन : पिवेदिति ॥

सद्यस्क : । त्रि॰ नवीने । नूतने ॥

सद्योजात : । पुं॰ शिवे ॥ मत्से ॥ त्रि॰ तत्क्षणोत्पन्ने ॥

सद्योनि : । पुं॰ देवे । सुरे ॥ सात्त्विकोऽफलभुजि ॥ सतोयोनि: ॥

सद्योभावी । पुं॰ तर्णके । गोवत्से ॥ त्रि॰ तत्क्षणभवनयोग्ये ।

सद्रूप : । त्रि॰ अबाध्यस्वरूपे । सर्वदास्थायिस्वरूपे ॥ सत्सदास्थायीरूपं यस्य ॥

सद्वक्ता । पुं॰ सत्कथके । सम्यक्सोववक्ताच ॥

सद्वृत्तम् । न॰ सच्चरित्रे । साधुस्वभावे ॥ त्रि॰ तद्युक्ते ॥ यथा । नासमञ्जसशीलैस्तु सहासीतकदाचन । सद्वृत्तसंनिकर्षोहि क्षणार्द्धमपिशस्यते ॥

सद्वृत्ति : । स्त्री॰ शास्त्राविरुद्धजीवने ॥ प्रमाणान्तरबाधायोग्यायांब्रह्माकारायांवृत्तौ ॥ सतीचासौवृत्तिश्च

सतिसर्वदाश्चाविनिवर्त्तिनी ॥

सहृत्तिभाक् । त्रि॰ सहृत्तिविशिष्टे । यथा । पथ्याशिनांशीलवतांनराणांसहृत्तिभाजांविजितेन्द्रियाणाम् । एवंविधानामिदमायुरत्र त्वंसदाप्रदृद्धमुनिप्रसादः ॥

सधर्म्मचारिणी । स्त्री॰ गृहिण्याम् ॥

सधर्म्मा । त्रि॰ तुल्ये ॥ समानोधर्मो यस्यस : ॥ धर्म्मादनिच्केवलात् ॥

सधर्म्मिणी । स्त्री॰ समानधर्म्मवत्याम्भार्यायाम् । पत्न्याम् ॥ सहधर्मोस्त्यस्याः॰ कर्म्मसुपत्न्यासहाधिकारात् । धर्म्मशीलवर्णान्ताच्चेति॰ इनि : । वोपसर्जनस्येतिसः ॥

सधर्म्मी । त्रि॰ समानधर्माचारिणि ।

सधवा । स्त्री॰ पतिवत्याम् ॥

सधिः । पुं॰ अग्नौ ॥ सहधारणे । सहस्थितौ ॥ धानंधिः । सहधिः सधिः ॥

सधिः । पुं॰ वृषभे ॥ सहते । षह॰ । सहेर्धश्चेतीसन् ॥

सध्रीची । स्त्री॰ सख्याम् ॥

सध्रीचीनः । त्रि॰ सम्यग्गामिनि ॥ विभाषाञ्चेरदिक्स्त्रियामितिखः । सहस्यसध्रिः ॥

सध्र्यङ् । त्रि॰ सहचरे । सहगच्छति । सहाञ्चति । ऋत्विगादिनाक्विन् । सहस्यसध्रिः । चनहितामितिक्विलोपः ॥

सनः । पुं॰ घण्टापाटलिवृक्षे ॥ पुं॰ स्त्री॰ हस्तिकर्णास्फालिते ॥ दाने । सनोतिषणुदाने । प॰ अच् ॥ त्रि॰ चलितेऽते ॥

सनकः । पुं॰ विष्णोः पारिषदभेदे । ब्रह्मणः सुते । मुनिविशेषे ॥

सनत् । अ॰ नित्यार्थे ॥

सनत् । पुं॰ ब्रह्मणि । द्रुहिणे ॥

सनत्कुमारः । पुं॰ वेदव्यसंश्चितान्नैतरित्रह्मणः पुत्रे । वेधाभे ॥ सनत्॰ नित्यंकुमारः । यद्वा । सनत्॰ ब्रह्मातस्यकुमारोऽपत्यम् ॥ तन्त्रमकारणम् हरिवंशे । यथोक्तम्सतथैवाहंकुमारइतिविद्धिमाम । तस्मात्सनत्कुमारेतिनाम प्रतिष्ठितम् । इति । जिनानांद्वादशसार्वभौमान्तर्गतसार्वभौमविशेषे ॥ न॰ उपपुराणविशेषे ॥

सनन्दः । पुं॰ सनन्दने । ब्रह्मणः पुत्रे । सयथा । सनकश्चसनन्दश्चसनातनमथात्मभूः । सनत्कुमारश्चमुनीन्निष्क्रियान्नूर्द्धरेतसः ॥ चसकादित्तसम्बन्धः ॥

सनन्दनः । पुं॰ ब्रह्मणश्चतुर्थपुत्रे ॥ यथा । धर्म्मभार्याऽहिंसाख्यातस्यांपुत्रचतुष्टयम् । सम्प्राप्तंमुनिशार्दूल्योगशास्त्रविचारकम् ॥ ज्येष्ठ : सनत्कुमारोभूत्॰ द्वितीयश्चसनातनः । तृतीयः सन

कीनामचतुर्थस्सनन्दनइति ॥ सनत्कुमारे ॥
सनपर्णी । स्त्री० असनपर्ण्याम्
सना । अ० नित्ये ॥ सनति । षणसम्भक्तौ । आप्रत्ययः ।
सनाखल: । पुं० सनखले । यथा । महेन्द्रभीमविमलकुरुक्षेत्रगयाः खलाः । सनापदोत्तराः साहशासाः सनखलाः खगः ।
सनात् । अ० नित्यार्थे ।
सनातन: । पुं० अच्युते । विष्णौ ॥ शिवे ॥ अजे । वेधसि ॥ पितॄणाम तिथौ ॥ दिव्यमनुष्ये । ब्रह्मणः पुत्रे । मुनिविशेषे ॥ परम्पराप्राप्ते० उपाधिपरिच्छेदेपिवस्तुतः परमात्मस्वरूपत्वान्नित्ये० आत्मज्ञानंविनाछेत्तुमशक्यसंसारहक्षे ॥ त्रि० स्थिरे । मुनिस्वजे । सर्वदैकरूपे । अविनाशिनि ॥ श्रुतौ ॥ सनाभवः । सायञ्चिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौतुट्च् ॥ अनादिपरम्परागते । चिरन्तने ॥
सनातनी । स्त्री० लक्ष्म्याम् ॥ सरस्वत्याम् ॥ दुर्गायाम् । भवान्याम् ॥ निर्वचनन्तु । सर्वकालेसनाप्रोक्तं विद्यमानेतनोतिच । सर्वस्मिन्सर्वकालेषुविद्यमानासनातनीति ॥ अपिच । निर्गुणस्यचनित्यस्यवाचकस्सनातनः । सदानित्यानिर्गुणायाकीर्तितासासनातनीति ॥ टित्वात्ङीप् ॥
सनत्कुमार: । पुं० ब्रह्मणः पुत्रे० सनत्कुमारे ॥ सनात्० नित्यंकुमारः ॥
सनाथ: । त्रि० सस्वामिके । नाथवति ॥
सनाथा । सनाथिका । स्त्री० पतिवत्न्याम् । जीवद्भर्तृकायाम् ॥
सनाभ: । पुं० सोदरेभ्रातरि ॥
सनाभि: । पुं० ज्ञातौ । सपिण्डे ॥ सहोदरे । समानोनाभिर्मूलपुरुषोऽस्य । ज्योतिर्जनपदेतिसमानस्य सः ॥ त्रि० तुल्ये । सदृशे ॥
सनामक: । पुं० श्रीभाण्डे ॥ त्रि० समाननामवति ॥
सनि: । स्त्री० भक्तौ । दाने ॥ सनोति । षणुदाने । खनिकष्यज्यादिना० इन् ॥ सननंवा ॥ अध्येषणायाम् । गुर्वादेः प्रार्थनयाक्वचिदर्थेनियोजने ॥ यथा । हेस्वामिन्नमाभिषिक्तंकुरु । अपिच । त्वाहिनायकुलाचारनलिनीकुलवल्लभ । त्वत्पादाम्भोरुहच्छायांदेहिमूर्ध्निकृपानिधे० इति ॥
सनित: । त्रि० प्रतिपन्ने ॥
सनिष्ठीवम् । न० सष्ठीवनवचसि । सनिष्ठेवे । निष्ठेवनम् । ष्ठिवुनिरसने । घञ् । लघूपधगुणः । ष्ट

षिद्रादित्वादीकार: । सहनिष्ठी वेन० स्रेष्मकफादिनिर्गमनेनवर्त्ततेद्रुतिसनिष्ठीवम् ॥ त्रि० तद्वति ॥

सनिष्ठेवम् । न० सश्लेष्मथूत्कारे । अब्यक्ते ॥ निष्ठेवनम्० निष्ठेव: । ष्ठिवु० । घञ् । लघूपधगुण: । सहनिष्ठेवेनश्लेष्मकफादिनिर्गमनेनवर्त्ततद्रुतिसनिष्ठेवम् ॥ अव्यक्तं सनिष्ठेवमित्यमर: ॥ त्रि० तद्वति ॥

सनी । स्त्री० सनिशब्दार्थे ॥

सनीड: । त्रि० निकटे । समीपे । उपकण्ठे ॥ समानं नीडं वासस्थानमस्य । सहनीडमेतिवा ॥

सनुतर् । अ० अन्तर्द्धाने ॥

सन्तत: । पुं० ज्वरविशेषे ॥ तल्लक्षणंयथा । सप्ताहंवाद्शाहंवाद्वादशाहमथापिवा । सन्तत्यायोऽविसर्पीस्यात्सन्तत: सनिगद्यतइति ॥ विकल्पोवातिकादिभेदात् । सन्तत्यानैरन्तर्येण । अविसर्पीअपरित्यागी ॥ न० सतते ॥ त्रि० तद्वति ॥ व्याप्ते ॥ विस्तीर्णे ॥ सन्तन्यतेस्म । तनु० । क्त: । अनुदात्तोपदेशेतिनलोप: । समोवाहितततयोरितिपक्षे मलोपाभाव: ॥

सन्ततम् । अ० सातत्ये ॥

सन्तताभ्यास: । पुं० स्वाध्याये ॥

सन्तति: । स्त्री० गोत्रे । अभिजने । सन्ताने ॥ पङ्क्तौ । पुत्रपौत्रादौ पारम्पर्ये ॥ विस्तारे ॥ तनये ॥ दुहितरि ॥ सन्तन्यते । तनोतेस्त्रियांक्तिन् । पारम्पर्ये ॥

सन्तप्त: त्रि० अध्वगमनादिनाश्रान्ते । तत्पर्यायायथा । सन्तापितसन्तप्तौधूपितधूपायितौचदूनश्चेति ॥ सन्तप्यतेस्म । तपसन्तापे । क्त: अकर्मकत्वात्कर्त्तरिवाक्त: ॥ परमोद्विग्ने ॥ अग्निजतापयुक्ते ॥

सन्तमसम् । न० विष्वग्ध्वान्ते । व्यापकान्धकारे ॥ समन्तात्सर्वत: ० तम: । अवसमन्धेभ्यस्तमसइत्यच् ॥

सन्तरणम् । न० तरणे । पारगमने । प्लवनपूर्वकदेशान्तरगमने ॥

सन्तर्द्दनम् । न० दृढसंश्लेषे ॥

सन्तर्पणम् । न० प्रीणने । तृप्तौ ॥ द्राक्षादाडिमखर्जूरीकदलीशर्करालाजाचूर्णमध्वाज्यसम्मिलिते ॥ त्रि० तृप्तिकारके ।

सन्तर्प्पित: त्रि० सम्यक्प्रीणिते

सन्तान: पुं० सन्ततौ । विस्तारे ॥ गोत्रे । वंशे । अन्ववाये ॥ अपत्ये ॥ सन्तन्यते । तनुविस्तारे ॥ घञ् ॥ सुरद्रुमे । कल्पवृक्षे ॥ सम्यक्तनोतिपुष्पाणिवल्लितीति स्वर्णं०तनोतेरुपसङ्ख्यानाण्: ॥ सम्यक्तन्यन्तेपुष्पाण्यस्मिन्नित्यधि

करणे इत्यच्चेतिघञ्वा ॥

सन्तानिका । स्त्री॰ मर्कटजालके ॥ छुरिकाफले । फेने ॥ क्षीरादिसारे । मलाइ॰ इ॰ भा॰ ॥ सन्तानिकागुणः शीतालघ्यापित्तास्रवातनुत् । तर्पणीबृंहणीस्निग्धाबलासवलशुक्रदा ॥

सन्तापः । पुं॰ अग्निजतापे । सञ्ज्वरे ॥ सन्तापयति । तपसन्तापे । ण्यन्तः । पचाद्यच् ॥ सम्यग्गुतापे । औष्ण्ये ॥

सन्तापनः । पुं॰ स्मराशुगविशेषे ॥ त्रि॰ सम्यक्तापकारके ॥

सन्तापितः । त्रि॰ अध्वादिनाश्रान्ते । सन्तप्ते ॥ सन्ताप्यतेस्म । तपदाहेचुरादिः । क्तः । अकर्मकत्वात्कर्त्तरिवाक्तः ॥

सन्तारः । पुं॰ सन्तरणे ॥

सन्तिः । स्त्री॰ दाने ॥ अवसाने ॥ पुं॰ भृत्ये ॥

सन्तुष्टः । त्रि॰ उत्पन्नालम्प्रत्यये । निवृत्तस्पृहे । सन्तोषयुक्ते ॥ यथा । अप्राप्तेऽपिरिक्थस्यसम्प्राप्तेसमतांगतः । अदृष्टखेदाखेदोयः सन्तुष्टइतिकथ्यतइति ॥ असन्तुष्टाद्विजानष्टाः सन्तुष्टाश्चमहीभुजः । सलज्जागणिकानष्टानिर्लज्जाश्चकुलाङ्गना ॥ पुं॰ अश्वत्थवृक्षे । खत्तरइ॰ भा॰ प्रसिद्ध ॥

सन्तृणः । त्रि॰ विद्धे । व्याप्ते ॥

सन्तोषः । पुं॰ विद्यमानभोगोपकरणादधिकस्यानुपादित्साकृपायांचित्तवृत्तौ । ध्यानमग्ने । यदृच्छालाभसन्तुष्टौअलाभेचाविषादे । अलम्बुद्धौ । यथासम्भवभृत्यात्मवर्गाणांधारणार्थमग्रजपरम्परायत्नाद्यनुष्ठानमात्रोचितधनानधिकायांस्पृहायाम् ॥ सन्तोषामृततृप्तानांयत्सुखंशान्तचेतसाम् । कुतस्तद्धनलुब्धानामितश्चेतश्चधावताम् ॥ धृतौ । स्वास्थ्ये ॥

सन्त्रासः । पुं॰ साध्वसे । भये ॥

सन्दंशः । पुं॰ कङ्कमुखे । संदशतीति घ्यातेलोहयन्त्रविशेषे । एकाङ्गानुवादेनविधीयमानयोरप्यङ्गयोरन्तरालेविहितत्वंसन्दंशः ॥ नरकविशेषे ॥

सन्दंशिका । स्त्री॰ सुचुच्याम् ॥ लौहयन्त्रविशेषे । कातारि॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

सन्दर्भः । पुं॰ प्रबन्धे । रचनायाम् । ग्रन्थने ॥ प्रकरणे ॥

सन्दर्शनम् । न॰ साक्षात्कारे । संदृश्यते । दृशिर्॰ । ल्युट् ॥ सम्यक्प्रकारेणदर्शनंवा ॥

सन्दष्टः । त्रि॰ सम्यक्प्रकारेणदष्टे

सन्दानम् । न॰ दामनि । देहमकालेपादबन्धनरज्जौ ॥ सन्दीयते

सम्पूर्वाद्दाण्वन्धनइत्यस्मात्ल्युट् । पुं॰ गजस्याष्ठीवतोरधोभागे ॥

सन्दानिका । स्त्री॰ अरिखदिरे । विट्खदिरे ॥

सन्दानितः । त्रि॰ बद्धे ॥ सन्दान्यतेस्म ॥ दामखण्डने । क्तः ॥

सन्दानिनी । स्त्री॰ गोगृहे ॥

सन्दावः । पुं॰ पलायने । प्रद्रावे ॥ सन्द्रवणम् । द्रुगतौ । समियुद्रुदुवइतिघञ् ॥

सन्दाहः । पुं॰ मुखतालुओष्ठदाहे ॥

सन्दिग्धः । त्रि॰ संशयग्रस्ते । संशययुक्ते ॥ सन्दिह्यतेस्म । दिह॰ । क्तः ॥

सन्दिग्धमतिः । त्रि॰ सन्देहविषयीभूतबुद्धियुक्ते ॥

सन्दिग्धार्थः । पुं॰ सन्देहविषयीभूतार्थे ॥ त्रि॰ तद्विशिष्टे ॥

संदितः । त्रि॰ बद्धे । अस्यपर्यायाः । बद्धसन्दानितंमूतमुद्दितंसन्दितंसितमिति ॥ सन्दीयतेस्म । दो अवखण्डने । क्तः ॥ सन्द्यतेस्म॰ वा ॥ ग्रथिते ॥

सन्दिष्टम् । न॰ वार्त्तायाम् । सन्देशे ॥ त्रि॰ व्याहृते । उक्ते । कथिते ॥

सन्दिष्टार्थः । त्रि॰ सन्देशहरे ॥ इ॰ कथितम् ॥

संदिहानः । त्रि॰ सांशयिके ॥ यथा । सन्दिहानः सांशयिकः संशयापन्नमानसः ॥

सन्दिह्यमानः । त्रि॰ संशयविषयीभूते । सांशयिके ॥

सन्दी । स्त्री॰ खट्वायाम् ॥ निषद्याखट्टिकासन्दीतित्रिकाण्डशेषः ॥

सन्दीप्तः । त्रि॰ प्रज्वलिते । अस्य ठा॰ इ॰ भा॰ ॥ यथायावत्तिष्ठतिदेहोयंतावत्तत्त्वंसमभ्यसेत् । सन्दीप्ते भवनेकोनुकूपंखनतिपावकेति ॥ सन्दीप्यतेस्म । दीपीदीप्तौ । क्तः । ईदित्वान्नेट् ॥

सन्दीप्यः । पुं॰ मयूरशिखावृक्षे ॥

सन्दृशः । त्रि॰ सन्दर्शनविषये ॥ नसन्दृशेतिष्ठतिरूपमस्य ॥

सन्देशः । पुं॰ संवादे । संदेसा॰ इ॰ भा॰ ॥ घोटकस्यद्वयोरपिद्वन्तपार्श्वयोर्मध्यवर्त्तिनोद्देशेदन्तौ सन्देशावुच्येते ॥ सन्दिश्यते । दिश॰ । हलश्चेतिघञ् ॥

सन्देशवाक् । स्त्री॰ वाचिके । परेणोक्तार्थस्यपरम्प्रत्युक्तौ ॥ सन्दिश्यतेइतिसंदेशः । संदेशार्थः॰ तस्यवाक् ॥ सन्दिष्टोर्थोययेत्युच्यते सा ॥

सन्देशहरः । पुं॰ दूते ॥ संदेशंवाचिकंहरति । हञ्॰ । हरतेरनुद्यमनेऽच् ॥

संदेशहारकः । पुं॰ दूते ॥ संदेशस्य हारकः ॥

सन्देहः । पुं॰ विचिकित्सायाम् । संशये । हृदयशङ्कौ । यथा । व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति । न हि संदेहमात्रादलक्षणता भवति । पुनः प्रमाणान्तरेण निश्चयोत्पादादिति । संदेहनम् । दिहउपचये । भावे घञ् । देहमध्यभागे ॥ सन्दिह्यते॰ उपचीयते द्वित्ववा । पृथिव्यादिभूतैरुपचिते शरीरे । अलङ्कारविशेषे । यथा । विषयो विषयी च साहृश्यात्कविसम्मतात् । संदेहगोचरौ स्यातां संदेहालङ्कृतिश्च सेति ॥

सन्दोहः । पुं॰ निसरे । समूहे ॥ सन्दुह्यते । दुहप्रपूरणे । घञ् ॥

सन्द्रावः । पुं॰ पलायने । अस्य पर्यायायथा । प्रद्रावोद्रावसन्द्रावसन्दावाविद्रवोद्रवः । अपक्रमोपयानश्चेति ॥ सन्द्रवणम् । द्रुगतौ । समियुद्रुदुवद्रुतिघञ् ॥

सन्धा । स्त्री॰ स्थितौ ॥ प्रतिज्ञायाम् ॥ सन्धानम् ॰ अचवा । डुधाञ्॰ । आतश्चोपसर्गे इत्यङ् ॥

सन्धाता । पुं॰ शौरौ ॥ कर्मफलैः पुरुषान्सन्दधाति । डुधाञ्॰ । तृच् । सन्धर्त्ता संयोजयति कर्मफलैः पुरुषान्वा । त्रि॰ सन्धानकर्त्तरि ॥

सन्धानम् । न॰ अभिषवे । सुराकरणे । सुरोत्पत्तिप्रकारे । मद्यचुआवन। ॰ इ॰ भा॰ ॥ सङ्घट्टने । मिथोऽवयवसंयोजने । जोडजोडना॰ इ॰ भा॰ । सन्धीयते । डुधाञ्॰ । ल्युट् ॥ काञ्जिके ॥ मदिरायाम् ॥ अवदंशे ॥ सौराष्ट्रे ॥ धनुःशरयोःक्रमे ॥ यथा । तदाशुकृतसन्धानंप्रतिसंहर सायकम् । आर्त्तत्राणाय वः शस्त्रं नप्रहर्त्तुमनागसि ॥

सन्धानितः । त्रि॰ सन्धानविशिष्टे । सङ्घटिते ॥ इतच् ॥

सन्धानी । स्त्री॰ स्वर्णरूप्यान्यसद्मनि । कुप्यशालायाम् ॥ संधाने । संधिकायाम् ॥

संधार्य्यः । त्रि॰ अनुष्ठेये ॥

संधिः । पुं॰ राज्ञांषड्गुणान्तर्गतगुणविशेषे । स्वर्णादिदानेनबन्ध्वादिभिः प्रीत्युत्पादनात्मैक्यकरणे । पणबंधेनकार्य्ये । अरिविजिगीषोर्व्यवस्थाकारणरूपे॰ ऐक्यसंधौ ॥ उभयोर्मेलने ॥ यथा । अभीष्टं संधिंपरिज्ञायचयंस्वस्यनिरीक्ष्यच । स्वामिनेकथयेत्संधिंमन्त्रीहितकरप्रभो ॥ तथाचोक्तं रामा

यथेमाल्यवता । यथा । ततस्तु सुमहाप्राज्ञो माल्यवान्नाम राक्षसः । रावणश्वशुरः श्रुत्वा मातुः पैता महोऽब्रवीत् ॥ विद्यास्वभिविनीतो राजा राजन्नयानुगः । स प्रशास्ति चिरमैश्वर्यमरींश्च कुरुते वशे ॥ सन्दधानो हि कालेन विगृह्णंश्चारिभिः सह । स्वपक्षवर्धनं कुर्वन् महदैश्वर्यमश्नुते ॥ हीयमानेन कर्त्तव्यो राज्ञा सन्धिः समेन च । नशत्रुमवमन्येत ज्यायान् कुर्वीत विग्रहम् ॥ अधिकबलस्तु शत्रुं नावमन्येत नोपेक्षेत । किन्तु तेन सह विग्रहं कुर्वीत । हीयमानः समश्च सन्धिं कुर्यादित्यर्थः ॥ तन्मह्यं रोचते सन्धिः सह रामेण रावण । यदर्थमभियुक्ताः स्म सा च तस्मै प्रदीयताम् ॥ तस्य देवर्षयः सर्वे गन्धर्वाश्च जयैषिणः । विरोधं मा गमस्तेन सन्धिस्ते न च रोच्यतामिति सन्धीयते पूर्वोत्तररूपेऽस्मिन्निति सन्धिः संयोगे । ग्रंथि । सन्धाने ॥ सन्धानम् । भावे क्तिः ॥ पर्वसन्धौ ॥ सन्धीयते दानादिना अस्मिन् । डुधाञ् । उपसर्गे घोः किः ॥ सुरङ्गायाम् ॥ भगे ॥ योनौ । सङ्घट्टने । एकपर्य्यंन जीविनां सङ्घे । साधकाश्रि ॥ रूपकाणां मुखाद्यङ्गे । नाट्याङ्गे ॥ यथा । मुखं प्रतिमुखं गर्भोऽवमर्शोपसंहृतिरिति सन्धयः पञ्च ॥ भेदे ॥ व्याकरणे तु । वर्णद्वयमेलने । संहितायाम् ॥ तल्लक्षणं यथा अर्द्धमात्रोच्चारणकालेनाव्यवहितयोर्वर्णयोर्द्रुततरोच्चारणं सन्धिरिति । सन्धिविधायकसूत्रविहितकार्ये वा ॥

सन्धिका । स्त्री० अभिषवे । मद्यसन्धाने ॥

सन्धिचौरः । पुं० चौरविशेषे । कुम्भिले । हारके ॥

सन्धिजा । स्त्री० पुष्पविशेषवृक्षे ॥ तिसन्धौ ॥

सन्धिजीवकः । त्रि० कुसृत्याविभ्रान्वेषिणि । पार्श्वके ॥

सन्धितः । त्रि० संधियुक्ते मिलिते ॥

सन्धित्सुः । त्रि० सन्धातुमिच्छौ । दधातेः सन्नन्तादुप्रत्ययः ॥

सन्धिनालः । पुं० सुगंधिद्रव्यविशेषे । नखे । शङ्के ॥

सन्धिनी । स्त्री० क्रान्तमैथुनायां गवि । वृषभाक्रान्तायाम् ॥ अकालदुग्धोस्रायाम् । दोहकालेऽप्यः । स्रोह्यादित्वादिनिः । अवश्यं सन्धेया । आवश्यकेणिनि

सन्धिपूजा । स्त्री० शारदीयमहापूजाङ्गे तत्तीयपूजायाम् ॥ यथा । अष्टमीनवमीसन्धौ तृतीया खलु कथ्यते । तत्र पूज्यात्वहं पुत्रयोगिनीग

वसयुता ॥ अपिच । अष्टम्यांसंधिवेगेसकलपरिजनैः पूजयेत्सत्वभावैरिति ॥

संधिबंधः । पुं० भूमिचम्पके ॥

संधिबंधनम् । न० शिरायाम् ॥

संधिला । स्त्री० सुरङ्गायाम् । गूढमार्गे । सुरङ्ग० इ० भा० प्र० ॥ नद्याम् ॥ मन्दिरे । शोकसि ॥

संधिवल्ली । स्त्री० चिसन्धिपुष्पे ॥

संधिवेला । स्त्री० कालविशेषे । अहोरात्रादिमिलनकालरूपे ॥

संधिहारकः । पुं० कुम्भिले । संधिचौरे ॥

संधुक्षिकः । त्रि० प्रदीप्ते ॥

सन्ध्यम् । न० स्वप्नस्थाने ॥ संध्यंस्वप्नस्थानमितिवेदेदर्शनात् ॥

सन्ध्या । स्त्री० पितृप्रसूम् ॥ नदीविशेषे ॥ युगसन्धौ ॥ चिन्तायाम् संश्रवे ॥ सीम्नि ॥ संधाने ॥ कुसुमान्तरे ॥ दुर्गायाम् ॥ अहोरात्रसंधौ ॥ यथा । अहोरात्रस्य यः संधिः सूर्यनक्षत्रवर्जितः । सा तु संध्यासमाख्याता मुनिभिस्तत्त्वदर्शिभिरिति ॥ कालभार्येयम् । यथा कालस्य तिस्रो भार्याः संध्यारात्रिदिनानि च । याभिर्विना विधाता च सङ्ख्यां कर्त्तुं न शक्यत इति ॥ संध्यारात्रिदिनानामपि कालाधीनत्वात् स्त्रीसहचरत्वात् स्त्रीत्वम् ॥ प्रातर्मध्याह्नसायाह्नरूपकालविशेषे ॥ त्रिकालविहितकर्मविशेषे ॥ यतोक्तं महानिर्वाणतन्त्रे । संध्यात्वैकालिकीकार्या वैदिकी तान्त्रिकी क्रमात् । उपासनाया भेदेन पूजां कुर्याद्यथाविधि ॥ ब्रह्ममन्त्रोपासकानां गायत्रीजपनात् प्रिये । स्नानाद्यस्मिँस्तत्तद्वाच्यं संध्या भवति वैदिकी ॥ अन्येषां वैदिकी संध्या सूर्योपस्थानपूर्वकम् । अर्घ्यदानं दिनेशाय गायत्रीजपनं तथा ॥ अष्टोत्तरसहस्रं वा शतं वा दशधा पिवा । जपानां नियमो भद्रे सर्वतान्त्रिककर्मणि ॥ शूद्रसामान्यजातीनामधिकारोऽस्ति केवलम् । आगमोक्तविधौ देवि सर्वसिद्धिस्ततो भवेत् ॥ प्रातः सूर्योदयः कालो मध्याह्नस्तदनन्तरम् । सायंसूर्यास्तसमयस्त्रिकालानामयं क्रमः । इति ॥ तत्काले० उपास्या० अपिदेवता० संध्या । तथाचयाज्ञवल्क्यः । संधौ संध्यामुपासीत नास्तगेनोद्गते रवाविति ॥ उपासनोपक्रमसोऽहसंवर्त्तः । प्रातः संध्यां सनक्षत्रामुपासीतयथाविधि । सादित्यांपश्चिमांसंध्यामर्द्धास्तमितभास्करामिति ॥ गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनमेतत्त्वनुदितहोमीतरविषयम् । सन्ध्याकर्माच

सानितुस्वयंहिमोविधीयतइतिदक्षो
क्तो ॥ मध्याह्नसन्ध्यायाश्चष्टम
मुहूर्तकालमाहस्मृति : । पूर्वा
परेतयाःसन्ध्येसन्धर्व प्रकीर्त्तिते ।
सप्तसूर्येपिमध्याह्नेमुहूर्त : सप्त
मोपरीति ॥ त्रिविषमाहव्यास :
गायत्रीनामपूर्वाह्णे० सावित्री
मध्यमेदिने । सरस्वतीचसायाह्ने
सैवसन्ध्यात्रिपुस्मृता प्रतिग्रहान्न
दोपाच्चपातकादुपपातकात् । गा
यत्रीप्रोच्यतेतस्मादगायन्तंत्रायते
यत: ॥ सवितृद्योतनात्सैवसावि
त्रीपरिकीर्त्तिता । जगत : प्रसवि
त्रीत्वाद्वाग्रूपत्वात्सरस्वतीति ॥
एतत्सन्ध्यात्रयंप्रोक्तं ब्राह्मण्यंय
दधिष्ठितम् । यस्यनास्त्यादरस्तत्र
सब्राह्मणउच्यतइति । सन्ध्याहो
नोऽशुचिर्नित्यमनर्ह : सर्वकर्म
स्वितिचस्मृति : । सन्ध्याहीन :
शूद्रवद् व्यवहर्त्तव्य : । यथाहमनु
। नतिष्ठतितुय: पूर्वांनोपास्ते यश्च
पश्चिमाम् । सशूद्रवद्बहिष्कार्य: स
र्वस्माद्द्विजकर्मणइतिचनेनैवप्र
त्यवायेनसन्ध्योपासनस्यनित्यतो
क्ता । नित्यत्वेपिसर्वंदापेहितपाप
च्चयस्यफलत्वमविरुद्धमितिकुल्लूक
भट्टोगौड : । अत्रशातातप: । अ
नर्ह्याणास्तुषट्प्रोक्ताः कपिलागतवा
दिन: । आद्योराजभृतस्तेषांद्वि



तीय : क्रयविक्रयी ॥ तृतीयोव
हुयाज्य :स्याच्चतुर्थोग्रामयाजक: ।
पञ्चमस्तुभृतस्तेषांग्रामस्यनगरस्यच
॥ अनादित्यांतुय : पूर्वांसादित्यां
चैवपश्चिमाम् । नोपासीतद्विज :
सन्ध्यांसषष्ठोऽब्राह्मण : स्मृत : ॥
राजभृतोराजसेवक : । ग्रामादेर्भृ
तोभरणीय : ॥ जननमरणाशौचेत
न्निषेधोयथा । सन्ध्यांपञ्चमहाय
ज्ञंनैत्यिकंस्मृतिकर्म्मच । तन्म
ध्येहापयेत्तेषांदशाहान्तेपुन : क्रि
या ॥ सायंसन्ध्यानिषेधकालो
यथा । सङ्क्रान्तौपक्षयोरन्तेद्वाद
श्यांश्राद्धवासरे । सायंसन्ध्यांन
कुर्वीतकृतेचपितृहाभवेत् ॥ इ
ति ॥ तत्कालेशयनादिनिषेधो
यथा । स्वप्नमध्ययनंस्नानमुद्वर्त्तं
भोजनंगतिम् ॥ उभयोःसंध्ययो
र्नित्यंमाध्याह्नेचैववर्ज्जयेदिति ॥
अस्याःगुणफलमाहशातातप : । अ
न्नृतंमद्यगन्धञ्चदिवामैथुनमेवच ।
पुनातिवृषलस्यान्नंबहि: सन्ध्याह्यु
पासिता । गृहेषुप्राकृतीसन्ध्यागो
ष्ठेशतगुणास्मृता । नदीषुशतसा
हस्रीह्यनन्ताशिवसन्निधौ । प्राकृ
तोएकगुणा ॥ कालपरिमाणमाह
याज्ञवल्क्य: । ह्रासवृद्धीहिसततं
दिवसानांयथाक्रमम् । सन्ध्यामु
हूर्तमात्रंवैह्रासेवृद्धौचसासमैति ॥

समाप्तिकालं चाह । जपन्नासीतसा
वित्रीं प्रत्यगातारकोदयात् । सन्ध्यां
प्राक् प्रातरेवं हितिष्ठेदासूर्य्यदर्श
नात् ॥ प्रत्यक् पश्चिमाभिमुख : ।
प्राक् पूर्वाभिमुख : । आसीतेति
सायंजपेआसातत्तीर्थम् । तिष्ठे
दितिप्रातर्जपेजर्द्धत्वार्थम् , मध्या
ह्नसन्ध्याजपेप्यूर्द्धतैव ॥ सम्यग् ध्या
यन्त्यस्याम् । ध्यैचिन्तायाम् ; आ
तश्चोपसर्गइत्यङ् ॥ यद्वा । सन्द
धाति । डुधाञ् । आतूदित्वाद्य
क् । आतोलोप : । तीर्थविशेषे ।

सन्ध्यांश : । पुं॰ युगसन्धौ ॥ पश्चात्स्थ
विवरणं युगे ॥

सन्ध्याकाल : । पुं॰ मुहूर्त्तमात्रे ॥ स
न्ध्याकालेप्रणवव्याहृतित्रयोपेतांसा
वित्रीं ब्राह्मणादिर्जपेत् ॥ सन्ध्या
या: काल: ॥ आहारंमैथुनंनिद्रां
सन्ध्याकालेविवर्ज्जयेत् । कर्म्मचा
ध्ययनंशान्तिदानप्रतिग्रहौ ॥

सन्ध्याचल : । पुं॰ शैलविशेषे । स
न्ध्यांवशिष्ठ : कृतवान् । तत्रयस्मा
द्विधे : सुत : । अत : सन्ध्याचलं
नामतस्यगायंतिदेवता : ॥ सचद
क्षिणस्यांकाष्ठायांचोभकाख्यशैला
देशान्यांवर्त्तते ॥

सन्ध्यानाटी । पुं॰ शंभौ । शिवे ॥

सन्ध्यापुष्पी । स्त्री॰ जात्याम् । माल
त्याम् । सुमनायाम् ।

सन्ध्याबल : । पुं॰ राक्षसे ॥

सन्ध्यावलि : । पुं॰ शिवालयोत् सृष्ट
वृषे ॥ येशिवायतनोत्सृष्टास्ते सन्ध्या
बलयोवृषा : ॥

सन्ध्याभ्रम् । न॰ स्वर्णगैरके ॥ सान्ध्य
मेघे ॥

सन्ध्यारागः । पुं॰ लोहिते । न॰ सि
न्दूरे ॥

सन्ध्याराम : । पुं॰ विधातरि ॥

सन्ध्यालक्षणम् । न॰ सन्ध्यास्वरूपे ।
यथा । अर्द्धास्तमितानुदितात्सूर्या
दस्पष्टभं नभोयावत् । तावत्सन्ध्या
कालश्चिह्नैरेतै : फलंवाच्यम् ॥
चिह्नानिफलानिच॰ वाराहीसंहि
तायाम्द्रष्टव्यानि ॥

सन्ध्योपासनम् । न॰ सन्ध्यायांब्रह्म
णोऽभिन्नायागायत्र्याध्याने ॥ यथा
। नभिन्नांप्रतिपद्येतगायत्रींब्रह्मणा
सह । साहमस्मीत्युपासीतविधि
नायेनकेनचिदितिव्यास : ॥ सन्ध्या
या : सन्ध्याकालाधिष्ठात्र्यागायत्री
देव्याउपासनंध्यानम् ॥ यथा ।
ब्रह्मणोपासितासन्ध्याविष्णुनाशङ्क
रेणच । कस्तांनोपासयेद्देवींसिद्धि
कामोद्विजोत्तमइतियाज्ञवल्क्येन
देवीत्वेनकीर्त्तनात्सन्ध्यारूपाया-
देव्या : प्राणायामादिनोपासनमा
राधनमित्यर्थ : ॥ यद्वा । सन्ध्ये
तिप्राणायामादिकर्म्मनामउपासनं

सेवनमनुष्ठानमित्यादावदित्यर्थः ॥

सन्नः । पुं॰ पियालवृक्षे ॥ त्रि॰ अवसादसंयुते । शीर्णे ॥

सन्नकः । पुं॰ पियालवृक्षे ॥

सन्नकद्रुः । पुं॰ पियालवृक्षे । चारवृ॰ भा॰ प्र॰ ॥ सन्नोलीनः कद्रुः पिङ्गलवर्णोऽस्य ॥

सन्नतः । त्रि॰ सम्यक्प्रह्वीभूताङ्गे ॥ संनमतिस्म । णम॰ । क्तः ॥

सन्नतिः । स्त्री॰ ध्वनौशब्दे ॥ प्रणतौ ॥ नम्रतायाम् ॥ यथा । हरिवंशे । यवक्री : श्री : स्थितास्तत्र । यत्रश्रीस्तत्रसन्नतिः । सन्नतिर्श्रीस्तथाश्रीश्च नित्यं कृष्णे महात्मनि ॥ सम्यक् ॰ नतिः ॥ आनुकूल्ये ॥

सन्नद्धः । त्रि॰ युद्धायसज्जे । धृतसन्नाहे । अस्यपर्यायायथा । सन्नद्धोवर्मितः सज्जोदंशितोव्यूढकङ्कटः । इति ॥ व्यूढकवचयास्थिते ॥ सन्नह्यति॰ सन्नह्यतेस्मवा । णहबन्धने । अकर्मकत्वात्॰ कर्त्तरि॰ कर्मणिवाक्तः । मन्त्रादिसंयुते ॥ सज्जाते ॥ यथा । तत्रैवसन्नद्धमनोस्त्रपक्षैतिरघुः ॥

सन्नद्रुः । पुं॰ पियाले ॥

सन्नयः । पुं॰ समवाये । समूहे । पृष्ठस्थायिबले । अनुसैन्ये ॥ सन्नयनम्सन्नीयतेवा । सन्नयतिवा । णीञ्प्रापणे । एरच् । पश्चादन्वः ॥

सन्नहनम् । न॰ कवचादिधारणे ॥

सन्नाहः । पुं॰ कवचे । वर्मणि ॥ संवर्मयति॰ सन्नह्यत्यात्मनेसज्यतोऽस्मात् । सन्दंशते॰ दंशयते॰ सन्नाहेपदस्थकम् ॥

सन्नाह्यः । पुं॰ सन्नाहयोग्ये । युद्धहस्तिनि ॥

संनिकर्षः । पुं॰ संनिधाने । समीपे । निकटे ॥ पतितशयितसंनिधौ ॥ लयस्थाने ॥ न्यायमतेन॰ विषयेन्द्रियसम्बन्धे ॥ सव्रत्नानस्यकारणम् ॥ संनिकर्षणम् । कृष॰ । घञ् ॥

संनिकर्षणम् । न॰ संनिधौ । संनिकर्षे ॥ कृषिल्युट् ॥

संनिकृष्टः । त्रि॰ समीपे । संनिकृष्यते स्म । कृषिः क्तः ॥

संनिधम् । न॰ संनिधाने । संनिधौ ॥

संनिधानम् । न॰ संनिधौ । निकटे ॥ आश्रये ॥ यथादेवानांसन्निधानमिति ॥ न॰ लयस्थाने ॥ सम्यङ्निधीयतेऽस्मिन् । ल्युट् ॥

सन्निधिः । पुं॰ संनिधाने । अन्तिके ॥ इन्द्रियगोचरे । प्रत्यक्षे ॥ वाक्यार्थज्ञानहेतौ । पदानामविलम्बेनोच्चारणे ॥ प्रहरेप्रहरेऽसंनिहितोच्चारितानि॰ गामानयेत्यादिपदानि नप्रमाणम्॰ सांनिध्याभावात् ।

संनिधानम् । डुधाञ० । उपसर्गयोः क्तिः ॥

संनिपतनम् । न० सम्यङ्निपाते ॥

संनिपातः । पुं० सङ्गमे । मेलने ॥ तालविशेषे ॥ यथा । एकएवगुरुर्यत्रसंनिपातः सउच्यतइति ॥ त्रिदोषजनितरोगविशेषे ॥ यथा । यत्रद्वयेकोल्बणः स्यात्पञ्चहीनमध्याधिकः षट् । समैश्चैकोविकारास्तेसंनिपातास्त्रयोदश० इतिचरकोक्तत्रयोदशसंनिपात उक्ताः । तेयथा वातोल्बणः १ । पित्तोल्बणः २ । कफोल्बणः ३ । वातपित्तोल्बणः ४ । वातश्लेष्मोल्बणः ५ । पित्तश्लेष्मोल्बणः ६ । एवंषट् । अधिकवातोमध्यपित्तोहीनकफः १ । अधिकवातोमध्यकफोहीनपित्तः २ अधिकपित्तोमध्यवातोहीनकफः ३ । अधिकपित्तोमध्यकफोहीनवातः ४ । अधिककफोमध्यवातोहीनपित्तः ५ । अधिककफोमध्यपित्तोहीनवातश्चेतिषट् ६ । समैर्वातपित्तकफैश्चल्बणएकः १ । एवंत्रयोदशसंनिपाताः ॥ संनिपतनम् । पतॢ० । घञ् ॥ समूहे ॥

संनिपातज्वरः । पुं० त्रिदोषज्वरे ॥ त्रिदोषजनकोवातपित्तश्लेष्मरोगाः । वह्निर्निरस्यकोष्ठाग्निंरसगाज्वरकारिणः ॥ यथाह । संनिपातप्रकालस्यकश्चिद्देवनिर्दयी । चिकित्साशेषयोस्तस्माल्लब्धप्रतापशन् ॥ त्रिदोषजगदयस्तमोघयोस्तुवैराट् । यात्मापितस्यदातव्यः किंपुनः कनकादयस्तिलोल्लिस्तराज ॥

संनिपातनुत् । पुं० )
संनिपातारिपुः । पुं० ) नेपालनिम्बे । दृष्टनिम्बे । ज्वरान्तके ॥

संनिबद्धः । त्रि० संयोजिते । सम्यग्बन्धनयुक्ते ॥ संनिपूर्वोबधेः क्तः ॥

संनिभः । त्रि० सदृशे ॥ संनिभातिभा० । आतश्चोपसर्गइतिकः ॥

संनिरोधः । पुं० लये ॥

संनिवायः । पुं० समुदाये ॥

संनिविष्टः । त्रि० स्थिते ॥ उपविष्टे ॥

संनिविष्टोद्भवः । पुं० उपविष्टाग्निभावे ॥

संनिवृत्तः । त्रि० प्रत्यागते ॥

संनिवृत्तिः । स्त्री० सम्यङ्निवर्तने ॥

संनिवेशः । पुं० पुरादौगृहादिरचनापरिच्छिन्नप्रदेशे । निकर्षणे ॥ पुरादेर्बहिर्विहारभूमौ ॥ नगरादिवहिः स्वैरविहारचारुभूमिषु । तत्रहथंनिगदितंसंनिवेशोनिकर्षमितिशब्दरत्नावल्यो । संनिविशन्तेऽत्र । विश० । हलश्चेतिघञ्

। सम्यङ्निवेशने । रचनायाम् ॥

संनिहितम् । न० कुरुक्षेत्रे० सरोविशेषे । वि० समीपस्थे । निकटे ॥

संनिहितातीर्थम् । न० तीर्थविशेषे ॥

संनीति : । स्त्री० सम्यङ्न्याये ॥ सम्प्रापणे ॥

सन्मानम् । न० आदरे ॥ यथा । असन्मानात्तपोवृद्धि : सन्मानात्तु तप : क्षय : । अर्चित : पूजितो विप्रोदुग्धागौरिवगच्छतीति ॥ अपिच । तथाचरेतवैयोगीसतांधर्ममनुस्मरन् । जनायथाऽवमन्येरन् गच्छेरन्नैवसङ्गतिमिति ॥ सत्तन्मानञ्च ॥ महतांधने ॥ यथा । संसारेपुनिमग्नानांस्वस्मिन्पूज्यत्वमानिनाम् । ईश्वरात्कामकामानांसन्मानंमहतांधनं ॥

सन्मार्ग : । पुं० सदाचारे । श्रुत्यनुसारिस्मृत्युक्तेऽर्थे ॥ वेदमार्गे ॥ सतांस्वत : प्रमाणभूतानामप्रामाण्यकारणरहितानांवेदानांमार्ग : ० ब्रह्मपरत्वम् ॥

सन्न्यस्त : । वि० सम्यक्त्यागविशिष्टे० संन्यासिनि ॥ सम्यङ्न्यस्तानि० आत्मातिरिक्तानियेन । सम्यक्त्यक्ते । समर्पिते ।

सन्न्यास : । पुं० त्यागे । सर्वकर्म्मतत्फलपरित्यागे । सर्वकर्म्मणांभगवतिसमर्पणे । सफलकाम्यकर्मत्यागे । यात्यन्तिकत्यागरूपेचतुर्थाश्रमे ॥ यथा । यदामनसिवैराग्यंजायतेसर्ववस्तुषु । तदैवसन्न्यसेद्विद्वानन्यथापतितोभवेत् ॥ अपिच । चित्तस्यकर्महेतुत्वात्तत्त्यागोज्ञानसाधनम् । एषणात्रयसन्न्यासोविनात्यागेनलभ्यते ॥ ज्ञानस्यहेतु : सन्न्यासइतिशास्त्रेषुडिण्डिम : ॥ सचद्विविधोयथा । सन्न्यासस्त्रिविध: प्रोक्तोविद्वद्विविदिषाश्रमैरिति । तमेतंवेदानुवचनेनब्राह्मणाविविदिषन्तीतिश्रुतौ० ब्राह्मणाइत्यत्र० ब्राह्मण : प्रव्रजेद्गृहादित्यत्रच० ब्राह्मणशब्दस्त्रैवर्णिकपर : । तेन० ब्राह्मण : क्षत्रियोवापिवैश्योवाप्रव्रजेद्गृहादितिस्मृतेरविरोध: । तत्रैवंनिर्णयश्चाचार्याणाम् । यश्चतुर्थाश्रमरूपंदण्डधारणादिलिङ्गधारणंतत्तुविप्राणामेव । यस्तुसर्वकर्मत्यागलक्षणस्तत्फलत्यागरूपोवासन्न्यास : सतुत्रैवर्णिकसाधारणइति ॥ एतदेवस्पष्टमुक्तंश्रीमहानिर्वाणतन्त्रे । चत्वार : कथितावर्णाश्चाश्रमाअपिसुव्रते । आचाराश्चापिवर्णानामाश्रमाणांपृथक्पृथक् ॥ कृतादौकलिकालेतुवर्णा: पञ्चप्रकीर्त्तिता : । ब्राह्मण : क्षत्रियोवैश्य : शूद्र : सामान्यएवच ।

सुखरकरेषुचोत्तरास् ॥ नीरक्ति स्थिरसदनेऽकन्मराशिवर्ज्जितेस्थिरराश्युदयेसतीत्यर्थः ॥

सन्न्यासी । पुं॰ चतुर्थाश्रमिणि । अवधूते । अस्यपर्य्यायायथा । भिक्षुः परिव्राट् कर्मन्दीपाराशर्य्यपिमस्करीति ॥ ज्ञानसन्न्यासिनः केचिद्वेद सन्न्यासिनोऽपरे । कर्मसन्न्यासिनस्त्वन्येत्रिविधाः परिकीर्त्तिताः ॥ यः सर्वसङ्गनिर्मुक्तोनिर्द्वन्द्वश्चा पिनिर्भयः । प्रोच्यतेज्ञानसन्न्यासी ॰स्वात्मन्येवव्यवस्थितः ॥ वेद मेवाभ्यसेन्नित्यंनिराशीर्निष्परिग्रहः । प्रोच्यतेवेदसन्न्यासीमुमुक्षुर्विजितेन्द्रियः ॥ यस्त्वग्नीनात्मसात्कृत्वाब्रह्मार्पणपरोद्विजः ज्ञेयः सकर्मसन्न्यासीमहायज्ञपरायणः ॥ त्रयाणामपिचैतेषांज्ञानीत्वभ्यधिकोमतः । नतस्यविद्यतेकर्मनलिङ्गावाविपश्चितः ॥ युगभेदेसन्न्यासिनांनामान्युपाधयश्चयथा । आदौवेदान्ताचार्य्योब्रह्मा । द्वितीयाचार्य्योविष्णुः । तृतीयाचार्य्योरुद्रः । चतुर्थाचार्य्योवशिष्ठः पञ्चमाचार्य्यः शक्तिः । षष्ठः पराशरः । सप्तमोव्यासः । अष्टमः शुकः । नवमोगौडः दशमोगोविन्दः एकादशः श्रीशङ्कराचार्य्यः ॥ सत्ययुगे॰आचार्य्यत्रयंब्रह्मविष्णुरुद्राः । त्रेतायामाचार्य्यत्रयंवशिष्ठशक्तिपराशराः द्वापरेआचार्य्यद्वयंव्याससुकौ । कलावाचार्य्यत्रयंगौडगोविन्दशङ्कराचार्य्याः ॥ शङ्कराचार्य्यस्यचत्वारशिष्याःस्वरूपाचार्य्यः पद्मपादाचार्य्यःत्रोटकाचार्य्यः ॰पृथ्वीधराचार्य्यश्चेति । अथदशनामानि । स्वरूपाचार्य्यस्यशिष्यौतीर्थाश्रमौ । पद्माचार्य्यस्यवनारण्यौ । त्रोटकाचार्य्यशिष्याः ॰गिरिपर्वतसागराः । पृथ्वीधराचार्य्यस्यशिष्यत्रयं॰सरस्वतीभारतीपुरीचेतिशङ्कराचार्य्यरचितसप्तमसूत्रम् ॥ अपिच । तीर्थाश्रमवनारण्यगिरिपर्वतसागराः । सरस्वतीभारतीचपुरीतिदशकीर्त्तिताः ॥ तेषांलक्षणानियथा । त्रिवेणीसङ्गमेतीर्थेतत्त्वमस्यादिलक्षणे । स्नायात्तत्त्वार्थभावेनतीर्थनामासउच्यते ॥ १ ॥ आश्रमग्रहणेप्रौढआशापाशविवर्ज्जितः । यातायातविनिर्मुक्तएतदाश्रमलक्षणम् ॥ २ ॥ सुरम्येनिर्झरेदेशेवनेवासंकरोतियः । आशापाशविनिर्मुक्तोवननामासउच्यते ॥ ३ ॥ अरण्येसंस्थितोनित्यमानन्दनन्दनेवने । त्यक्त्वासर्वमिदंविश्वमारण्यलक्षणंकिल ॥ ४ ॥ वासोगिरिवरेनित्यंगीताभ्यासेहितत्परः । गम्भीराचलबुद्धिश्चगिरिनामासउच्यते ॥ ५ ॥

वसेत् पर्वतमूलेषु प्रौढो वै ध्यानधारणात । सारात् सारं विजानाति पर्वतः परिकीर्त्तितः ॥ ६ ॥ वसेत् सागरगम्भीरो वनरत्नपरिग्रहः । मर्यादाश्च न लङ्घेत सागरः परिकीर्त्तितः ॥ ७ ॥ स्वरज्ञानवशो नित्यं सुरवाद्यौकवीश्वरः । संसारसागरे साराभिज्ञो योगी हि सरस्वती ॥ ८ ॥ विद्याभारेण सम्पूर्णः सर्वभारं परित्यजेत् । दुःखभारं न जानाति भारती परिकीर्त्तितः ॥ ९ ॥ ज्ञानतत्त्वेन सम्पूर्णः पूर्णतत्त्वपदे स्थितः । परब्रह्मरतो नित्यं पुरी नामा स उच्यते ॥ १० ॥ इति श्रीशङ्करविजये श्रीविद्यारण्यस्वामिनः ॥ अस्य धर्माचरणादिकं मनुस्मृतौ ब्रह्मवैवर्त्ते गरुडकूर्मपुराणादिषु द्रष्टव्यम् । विधानन्तु श्रीमहानिर्वाणतन्त्रे श्रीमदाशिवेनोक्तं तत् ततोऽवगन्तव्यम् ॥ सन्यासेऽस्यास्ति । यतञ्च नि ॥ अभ्यासञ्चिविधिमाह शौनकः । सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्यं नैव पिण्डोदकक्रिया ॥ निदध्यात् प्रणवेनैव बिले भिक्षोः कलेवरम् । प्रोक्षणं खननञ्चैव सर्वं तेनैव कारयेत् इति ॥

सन्मुख : । त्रि॰ अभिमुखे ॥

सपच : । त्रि॰ निश्चितसाध्यवति । साध्यवत्त्वनिश्चयविषये ॥ यथा धूमवत्त्वे॰ महानसम् ॥ अनुकूले ॥ समानः पक्षः ॰ इति विग्रहे॰ समानस्य तियोगविभागात् सादेशः ॥ यद्वा । सशब्दः सदृशवचनः । तेनास्वपदविग्रहो बहुव्रीहिः ॰ समानः पक्षोऽस्य॰ इति सपक्षः ॥

सपण : । पुं॰ ग्लहे ॥ पणेन सह वर्त्तमाने॰ व्यवहारविशेषे ॥ यथा यद्यहमत्र पराजितो भवामि॰ तदा शतं दास्यामीति ॥

सपत्नाकरणम् । न॰ अत्यन्तपीडने ॥ सपत्रनिष्पत्राद्इति व्यथने इति डाच् ॥

सपत्नाकृत : । पुं॰ शरव्यमृगादौ ॥ त्रि॰ अत्यन्तपीडिते ॥

सपत्नाकृति : । स्त्री॰ अत्यन्तदुःखे । निष्पत्राकृतौ ॥

सपत्न : । पुं॰ शत्रौ ॥ सपत्नीव । व्यञ्जन सपत्नइति निर्द्देशात्कारः । इवार्थे अल् प्रत्ययो वा ।

सपत्नारि : । पुं॰ वेष्टवंशे ॥ शत्रोः शत्रौ ॥ सपत्नस्य अरिः ॥

सपत्नी । स्त्री॰ समानपतिकायाम् ॥ समान एकः पतिर्यस्याः ॰ इति विग्रहे॰ सपत्न्यादिषु समानस्य सभावो निपात्यते । नित्यं सपत्न्यादिष्विति ङीप् ॥

सपत्नीक : । पुं॰ पत्नीसहिते ॥ सह पत्न्या वर्त्तते इति तथा नद्यृतश्चेति

तेनमातामहादीनामेकपिण्डसंबन्धेपिनसपिण्डता ॥ सपिंडस्यभाव : । तल् । टाप् ॥

सपिण्डीकरणम् । न० श्राद्धविशेषे । प्रेतपिण्डस्य पितृपिण्डेनसहमिश्रीकरणे ॥ तत्रपूर्णेसंवत्सरेसपिण्डीकरणमितिमुख्यकल्प: ॥ तदशक्तौनवमेमास. तदशक्तौषष्ठेमास : तत्राप्यसक्तौत्रिपक्ष : तत्राप्यशक्तावशौचापगमेप्रथममासस्यद्वादशभिर्दिनैर्द्वादशमासिकानिश्राद्धानिनिवर्त्यत्रयोदशाह : सपिण्डीकरणकाल : ॥ सपिण्डीकरणविषयेकूर्मपुराणंयथा । सपिण्डीकरणंप्रोक्तंपूर्णेसम्वत्सरेपुन : । कुर्याच्चत्वारिपात्राणिप्रेतादीनांद्विजोत्तमा : ॥ प्रेतार्थंपितृपात्रेषुपात्रमासेचयेत्तत : ये समानाइतिद्वाभ्यांपिण्डानप्येवमेवहि ॥ सपिण्डीकरणेश्राद्धंदेवपूर्वंविधीयते । पितॄनावाहयेदत्रपृथक्पिण्डंचनिर्दिशेत् ॥ येसपिण्डीकृता प्रेतानतेषांस्यात्पृथक्क्रिया । यस्तुकुर्यात्पृथक्पिण्डंपितृहासोपिजायते॥इति ॥

सपीतक : । पुं० राजकोषातक्याम् ॥

सपीति: । स्त्री० आत्मीयेनजनेनसहमिलित्वैककालकृतेपाने । तुल्यपाने । पानम् । पापानेक्तियांक्तिन् । घुमास्थेतीत्वम् । समानापीति । समानस्यच्छन्दसीतिसभाव: । सपीतिर्वा । सहस्यस : संज्ञायां ॥

सपीतिका । स्त्री० हस्तिघोषायाम् ॥

सपुत्र : । त्रि० पुत्रेणसहवर्त्तमाने ॥

सप्तक : । पुं० सप्तसङ्ख्यायाम् ॥ त्रि० सप्तसङ्ख्याविशिष्टे ॥ सप्तभि : क्रीतेवस्तुनि ॥ सङ्ख्यायाअतिशदन्ताया : कन्नित्यार्हीयेष्वर्थेषुकन् ॥

सप्तकी । स्त्री० मेखलायाम् । काञ्च्याम् । कटिभूषणे ॥ सपति । षपसमवाये । बाहुलकात्तन् । स्वार्थेकन् ॥ यद्वा । सप्तभिरनेकाभि : किङ्किणीभिर्वा० सप्तस्वरान्वा० कायति । कैशब्दे । आतोनुपसर्गेक : । गौरादित्वान्ङीष् ॥

सप्तगङ्गम् । न० तीर्थविशेषे ॥

सप्तगोदावरम् । न० सप्तानांगोदावरीणांसमाहारे ॥ तीर्थविशेषे ॥

सप्तच्छद : । पुं० सप्तपर्णवृक्षे । काण्डेकाण्डेसप्तच्छदाअस्य । सङ्ख्याशब्दस्यवृत्तिविषयेवीप्सार्थत्वम् । न० तस्यपुष्पे ॥

सप्तजिह्व: । पुं० अनले । अग्नौ ॥ सप्तकाल्यादयोजिह्वाआहुतिग्रसनार्था यस्यस : । तायथा । कालीकरालीचमनोजवाचसुलोहिताचैवसुधूम्रवर्णा । स्फुलिङ्गिनीविश्वरुचीचदेवीलेलायमानेतिचसप्तजिह्वा: इति

मुण्डकम् ॥ उत्तरार्द्धे ० उशाप्रदी प्तावक्रपीठयोनिःसप्तेवकीलाः कथि ताश्चजिह्वाः०इतिपाठान्तरमन्यत्र॥
सप्तज्वालः। पुं० वह्नौ॥
सप्ततन्तुः। पुं० यज्ञे। सवे। अध्व रे। सप्तभिश्छन्दोभिरग्निजिह्वा भिर्वा० तन्यते। तनु०। सिततनि गमीतितुन्॥ यद्वा। सप्तजिह्वा च्छन्दांसिवा० तन्यन्तेऽत्र॥ सप्त तन्तवः संस्थायस्यवा॥
सप्ततिः। स्त्री० दशाधिकषष्टिसङ्ख्या याम् ७०। सप्तत० सू० आ० प्र० ॥ सङ्ख्येये॥ सप्तदशत: परि माणमस्य। पङ्क्तिविंशतित्रिंशच्च त्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीति नवतिशतमितिनिपातनात्प्रकृते सप्तभावस्तिप्रत्ययश्च॥
सप्ततितमः। त्रि०। सप्ततेः पूरणे॥ तस्यपूरणेडट्। विंशत्यादिभ्यस्तम डन्यतरस्यामितिडटस्तमडागमः॥
सप्तदशः। त्रि०सप्तदशानांपूरणेॱडट्॥
सप्तदश। त्रि०। सङ्ख्याभेदे। स प्ताधिकदशसु १७॥ सङ्ख्येये॥
सप्तदशावयम्। न० लिङ्गशरीरे॥ सप्तदशअवयवायस्यस:। तेयथा। ज्ञानेन्द्रियपञ्चकम्० बुद्धिमनसी कर्मेन्द्रियपञ्चकम्प्राणादिपञ्चवाय वइति॥
सप्तदीधितिः। पुं०। स्वर्धदीधितौ।
वह्नौ॥
सप्तद्वीपपतिः। पुं०। सप्तद्वीपानाम धिपतौ॥ द्वीपास्तु० जम्बूशाककुश क्रौञ्चद्वीपशब्दे द्रष्टव्याः॥
सप्तद्वीपा स्त्री०। वसुमत्याम्। भू मौ॥ यथा। मनोः स्वायम्भुव स्यासन्दशपुत्रास्तुतत्समाः। ये रियंपृथिवीसर्वासप्तद्वीपासपत्त ना॥ ससमुद्राकरवतीप्रतिवर्ष निवेशितेति॥ यस्याः परिमाण मुक्तं ब्रह्मवैवर्त्ते। कोटिद्वयंत्रिप ञ्चाशद्योजनत: परम्। पञ्चाश ल्लक्षाणि सप्तद्वीपाससागरा॥ ततोहिममयीभूमिर्द्देवक्रीडोव रानने। देवानांक्रीडनार्थायसा लोकालोकस्तत: परमिति॥सप्त द्वीपायस्यांसा॥
सप्तधा। अ० सप्तप्रकारे॥
सप्तधातुः। पुं० शरीरे। सप्त धातवस्त्वगादयोयस्मिन्॥
सप्त। त्रि० सङ्ख्याविशेषे। सा तइतिभा० प्र०॥ सङ्ख्येये। य थासप्तसमुद्राः॥ सपति। षप समवाये। सप्यशूभ्यांतुट्चेतिक निन्॥
सप्तनाडीचक्रम्। न० स्वरोदये क्तोवृष्टिज्ञानार्थं यत्नतचाड्कितसप्त नाडिकसर्पाकारचक्रे॥
सप्तनामा। स्त्री० आदित्यभक्ता

याम् ॥

सप्तपत्रः । पुं० सप्तच्छदे ॥ मुद्गरवृक्षे ॥ सप्तसप्तपत्राण्यस्य ॥

सप्तपदार्थवादः । पुं० आर्हतानांवादे ॥ यथा । जीवाजीवात्मकंविश्वं० चेतनः स्वशरीरवत् । परिणामावयवानजीवः षड्विधः स्मृतः ॥ मही धरादिरेकः स्यात्पञ्चधा चास्रवादिकः ; आस्रवः संवरो निर्जरो बन्धो मोक्ष एव च ॥ इन्द्रियाण्यविवेकादिः कोशो लुञ्चादिभिस्तपः । जन्मान्यूर्ध्वंगतिस्तेतिपञ्चानामर्थ उच्यते ॥ स्यादस्तीत्यादिनासप्तभङ्गीन्यायेन वादिनः । सप्तैवकमशोऽपास्यमतमसाधयेत्सुधीरिति ॥

सप्तपदी । स्त्री० विवाहाङ्गसप्तपदीगमने ॥ सप्तानांपदानांसमाहारः । द्विगोरिति ङीप् ॥

सप्तपर्णः । पुं० छातवनीतिख्यातेवृक्षे । पर्यायास्तु । सप्तपर्णोविशालत्वक् शारदोविषमच्छदइति ॥ सप्तपर्णोव्रणश्लेष्मवातकुष्ठास्रजन्तुजित् ॥ दीपनः श्वासगुल्मघ्नः स्निग्धोष्णस्तुवरः सरः इतिगुणाः ॥ काण्डेकाण्डेसप्तसप्तपर्णान्यस्य । क्वचित्सङ्ख्यावाच्यस्यवृत्तिविषयेवीप्सार्थत्वमितिकैयटादिव्याख्यानात् ॥

न० मिष्टान्नविशेषे ॥ यथा । द्राक्षादाडिमखर्जूरमृदितामं सशर्करम् । लाजचूर्णसमध्वाज्यंसप्तपर्णमुदाहृतम् ॥

सप्तपर्णी । स्त्री० लज्जालौ ॥

सप्तपलाशः । पुं० सप्तपर्णद्रुमे ॥ सप्तसप्तपलाशानिपत्राण्यस्य सुश्रुतः ॥ न० सप्तपर्णपुष्पे ॥

सप्तपातालम् । न० सप्तसङ्ख्याकाधोभुवने ॥ यथा । अतलंवितलञ्चैवनितलञ्चगभस्तिमत् । महाख्यंसुतलञ्चाग्र्यंपातालंसप्तमंविदुरिति ॥ नामान्तराण्यपियथा । आभासंपरतालाख्यंवितलंचगभस्तिमत् । महातलंरसाकञ्चपातालं सप्तमंमुने ॥ इति ॥ एतेषामधिपायथा । सप्तस्वेतेषुदैत्येन्द्रभुजङ्गगणदाःवराः । सप्तसप्तसमाख्यातास्तानप्यग्रनिबोधमे ॥ दैत्याः शङ्कुश्रुतिः पूर्वेप्रह्लादः शिशुपालकः कर्कस्तुकोहिरण्याक्षोवज्रभौमबलिस्तथा ॥ काद्रवेयाः कुटिलशिरामुकिः कम्बलस्तथा । काकोटकोथकाकाद्ग्दोदर्शस्तक्षकस्तथा ॥ विकटाक्षोहिताक्षश्चयमाख्योविकटाननः करालोभीमनिर्ह्रादः पिङ्गलश्चेतिराक्षसाः इति ॥

सप्तपुत्रसूः । स्त्री० सप्तवत्सकरायाम् । सप्तपुत्रायाम् ॥

सप्तप्राणा : । पुं॰ ब॰ सप्तेन्द्रियेषु ॥ यथा । अन्त : करणत्वान्मनसएकत्वेन॰ पञ्चकर्मेन्द्रियाणामेकत्वसङ्ख्ययाचहे॰ पञ्चबुद्धीन्द्रियाणि॰ सङ्कलनयासप्तेन्द्रियाणि॰ सप्तप्राणपदवाच्यानिभवन्तीति ॥ शीर्षण्येषुसप्तप्राणेषु ॥

सप्तभङ्गी । स्त्री॰ अनेकान्तवादिनां न्यायविशेषे ॥ देहग्रहणात्पूर्वंजीव : किमस्ति॰ उतनेतिथ : पर्यनुयुङ्क्ते॰ तम्प्रति॰ अनेकान्तवादिभ्युपगन्तव्य : । स्यथा । स्यादस्ति॰ स्यान्नास्ति॰ स्यादस्तिचनास्तिच॰ स्यादवक्तव्य:॰ स्यादस्तिचावक्तव्यश्च॰ स्यान्नास्तिचावक्तव्यश्च॰ स्यादस्तिचनास्तिचावक्तव्यश्चेति । अवश्ययत्पर्यनुयोक्तव्यंतत्तत्सदसत्तयासमाधेयम् । तत्रवाच्यतयाऽवाच्यतयापिचविरोधप्राणिस्तुघटनीय : । इतिसप्तभङ्ग्यसेोघवन्माधवतामशीघ्रमिहकिन्तु ॥ यतस्यादस्तिस्यान्नास्तिस्यादितिपटुगर्जिभिर्नाश्यतेजगत्सर्वमिति ॥

सप्तभद्र : । पुं॰ शिरीषवृक्षे ॥

सप्तभूरादय : । पुं॰ ब॰ प्राणिनां कर्मज्ञानफलोपभोगस्थानविशेषेषु॰ यथापाठक्रममुपर्युपरिवर्त्तमानेषु॰ भूर्भुव : स्वर्महर्जनतप : सत्येषु ॥

सप्तम : । त्रि॰ सप्तानांपूरणे ॥ डट् । तस्यमडागम : ॥

सप्तमी । स्त्री॰ तिथिविशेषे । सां तें॰ कृ॰ भा॰ प्र॰ ॥ तत्रोत्पन्नजनस्यफलंयथा । कान्याप्रजेोर्दैरिकुलेभसिंहोविशालनेत्र : प्रथितप्रभाव : । देवद्विजाचारसिकोमहात्माक्षात्सप्तमीज: क्षितिवित्तहर्त्ता ॥ व्रतादौषष्ठीयुताग्राह्या ॥ ङि॰ ओस्॰ सुप्॰ इतिविभक्तौ ॥ टित्वान्ङीप् ॥

सप्तरक्तम् । न॰ शरीरस्यरक्तवर्णविशिष्टेषुसप्तावयवेषु ॥ तच्चसमुद्रवाक्यंयथा । पाणिपादतलौरक्तौनेत्रान्तरनखानिच । तालुकाधरजिह्वाश्चसप्तरक्तं प्रशस्यतइति ॥

सप्तर्षय: । पुं॰ ब॰ मरीच्यादिमुखेषु॰ चित्रशिखण्डिषु । यथोक्तंपाद्मेसृष्टिखण्डे । सप्तर्षिमण्डलंतस्माद्दृश्यतेसर्वतोपरि । तत्रसप्तर्षय : सन्तिविनियुक्ता: प्रजासृजा ।। मरीचिरत्रि: पुलह: पुलस्त्य:क्रतुरङ्गिरा : । वशिष्ठश्चमहाभाग । ब्रह्मणोमानसा : सुता : ।।सप्तब्रह्माण इत्येतेउच्यन्तेब्रह्मवादिभि : । सम्भूतिरनसूयाचक्षमाप्रीतिश्चसन्नति : ॥ अरुन्धतिस्तथालज्जाततपत्न्योलोकमातर : । एतासांतपसा

चैतद्धार्य्यतेभुवनत्रयम्॥सन्ध्यात्रयमु पासीनागायत्रीजपतत्परा : । त स्मिंश्लोकेवसन्त्येतेब्राह्मणाब्रह्मवा दिनइतिपाद्मे ११ऽध्याय : ॥

सप्तला । स्त्री॰ नवमालिकायाम् ॥ सप्तलाति । ला॰ । आतोनुपेति क : ॥ चर्मकषायाम् । सातला याम् ॥ गुञ्जायाम् ॥ पाटलाया म् ॥

सप्तवाहन : । पुं॰ आदित्ये ॥ सप्ता श्वावाहनान्यस्य । सप्तनामकएको श्वोवाहनमस्यवा ॥ एकोश्वोवह तिसप्तनामेतिश्रुते : ॥ वहति॰ आदित्यरथम् ॥

सप्तशती । स्त्री॰ सप्तशतिकायाम् ॥ सप्तशतमन्त्रात्मकदेवीमाहात्म्ये ॥ गीतायाम् ॥ सप्तानांशतानांसमा हार : । द्विगोरितिङीप् ॥

सप्तशलाक : । पुं॰ विवाहोपयोगि वेधविशेषे ॥ यथा । ऊर्ध्वगा : सप्तरेखास्तुतिर्य्यक्सप्तविलिख्यच कृत्तिकादिषुतु : सप्तऋक्षाणिता सुसंलिखेत् ॥ चन्द्ररेखाग्रनक्षत्रं यत्रतिष्ठतिचेत्सदा । वेध : सप्त शलाकाख्योविवाहेतत्रवर्ज्जयेत् ॥ यद्रेखायांचन्द्रस्तिष्ठतिसाचन्द्ररेखा ॰ तत्स्थितंग्रहचक्रंतस्मिन्सूर्यादिसू र्यादीनामन्यतमेग्रह : कश्चिद्यदिति ष्ठति॰ तदासप्तशलाकाख्योवेध : स्यात् ॰ तत्रविवाहंवर्ज्जयेदिति ॥ यथा : ग्रहोसप्तशलाकभिन्न : पा पैरपापैरथवाविवाहे । रक्तांशुकेनै वतुरोदमानाश्मशानभूमिंप्रमदाप्र यातीतिफलं ॥

सप्तशिरा । स्त्री॰ नागवल्ल्याम् ॥ ताम्बूल्याम् ॥

सप्तशृङ्ग : । पुं॰ हिमाचले ॥ सप्त शृङ्गवति । दक्षिणदेशप्रसिद्धेगि रिविशेषे । तत्रप्रसिद्धेम्बिका स्थाने ॥

सप्तसप्ति: । पुं॰ दिवाकरे । सूर्य्ये ॥ सप्तगायत्र्यादीनिछन्दांसि॰ सप्त- योऽश्वा:॰ यस्यस : ॥ यथा । इया श्चसप्तछन्दांसितेषांनामानिमेशृणु। गायत्रीचबृहत्युष्णिग्जगतीत्रिष्टुवे वच । अनुष्टुप्पङ्क्तिरेतानिच्छन्दां सिहरयेहरेरितिविष्णुपुराणम् । सप्ताश्वरूपाश्छन्दांसिवहन्तेवातरं हसइतिमत्स्यपुराणञ्च ॥

सप्तसमिध : । स्त्री॰ बहुवचनान्त:॰ सप्तप्राणानांसप्तसुविषयेषु ॥ विष येषुसमिध्यन्तेप्राणा : ।

सप्तसागर: । पुं॰ महादानविशेषे ॥

सप्तसारस्वतम् । न॰ तीर्थविशेषे ॥

सप्तसू : । स्त्री॰ सुतवस्करायाम् । सप्तपुत्रप्रसूतायाम् ॥

सप्तस्रोत : । न॰ तीर्थप्रभेदे । दक्षि णेनहिमवत:कश्यपाश्रमे॥ यथा

स्रोतोभिः सप्तभिर्यर्वितस्ध्रुंतोसप्त धात्वधातु । सप्तानांप्रीतयेनान्नास प्तस्रोतः प्रवहति ॥

सप्तांशुपुंगव : । पुं० शनिग्रहे ॥

सप्तार्चिः । पुं० दमुनसि । शुक्रे । अग्नौ । वैश्वानरे ॥ सप्तअर्चिषोऽस्य ॥ चित्रकवृक्षे ॥ शनिग्रहे ॥ त्रि० क्रूरचक्षुषि ॥ सप्तार्चिषिः॰सप्तप्राणानांदीप्तयः स्वविषयानुद्योतनानीत्यर्थः ॥

सप्तावर्त्तः । पुं० तीर्थविशेषे ॥

सप्ताश्वः । पुं० हरिदश्वे । उष्णरश्मौ । सूरे । सूर्ये ॥ सप्तअश्वाः सन्त्यस्य ॥ अर्कवृक्षे ॥

सप्ताश्ववाहनः । पुं० सूर्ये ॥

सप्तिः । पुं० घोटके । पीतौ । तुरगे ॥ सपतिसेनायांसमवैति । षपसमवायो । क्तिच् । बाहुलकात् तिर्वा ॥

सप्तेन्द्रियम् । न० सप्तप्राणेषु ॥

सप्तोपधातवः । पुं० व० सप्तसङ्ख्यकोपधातुषु ॥ यथा । माक्षिकं तुल्यकाभ्रेचनीलाञ्जनशिलाऽऽलकाः । रसकश्चेतिविज्ञेयाएतेसप्तोपधातवः ॥ शरीरस्थसप्तधातुभवसप्तोपधातुषु ॥ यथा । स्तन्यंरजश्चनारीणांकालेभवतिगच्छति । शुद्धमांसभवः स्नेहोयः सासक्तौर्व्वसा ॥ स्वेदोदन्तास्तथाकेशा

तथैवौजश्चसप्तमम्इतिधातुभवाज्ञेयाएतेसप्तोपधातवइति ॥

सफलः । त्रि० फलिते । फलवति ॥

सबलः । त्रि० सैन्ययुक्ते ॥ सामर्थ्यवति ॥ बलेनसहवर्त्ततेइति ॥

सबलिः । पुं० दिनावसाने । उत्सूरे । विकाले ॥ त्रि० बलिसहिते ॥

सबाधः । त्रि० पीडायुक्ते ॥ निषेधयुक्ते ॥ बाधया० बाधेनचसहवर्त्तमानः ॥

सब्रह्मचारी । पुं० समानवेदव्रताचारिणि । यथाहामरः । एकब्रह्मव्रताचारामिथः सब्रह्मचारिणइति । ब्रह्मवेदस्तदध्ययनार्थंव्रतमप्युपचाराद्ब्रह्म० एकस्मिन्ब्रह्मणिव्रताचरणंयेषांतेमिथः परस्परं० सब्रह्मचारिणोभवन्तीत्यर्थः ॥ समानंब्रह्मचरति । व्रतइतिणिनिः । चरणेब्रह्मचारिणीति० समानस्यसः ॥ समानेब्रह्मणिचरतिवा ॥

सभर्तृका । स्त्री० पतिवत्याम् ॥ सहभर्त्तास्तियस्याः । नद्यृतश्चेतिकप् ॥

सभा । स्त्री० गोष्ठ्याम् । समज्यापरिषद्गोष्ठीसभासमितिसंसदः । चास्थानीक्लोबमास्थानंस्त्रीनपुंसकयोःसदः ० इत्यमरः ॥ सहभान्तियेयस्यांवा । भादीप्तौ । सुपीतिकः । अन्यत्रापीतिडोवा । भिदादिङ्वा ॥ समानोभान्त्यस्यामितिवा ।

सभामक्षेतियोगविभागात्• सभायाङ्कतिनिर्देशाद्वासमासस्यसादेशः। अस्यालक्षणंयथा। यस्मिन्देशे निषीदन्तिविप्रावेदविदस्त्रयः। राज्ञश्चाधिकृतोविद्वान्ब्रह्मणस्तांसभांविदुरितिमनुः॥ चत्वारोवेदधर्मज्ञाः पर्षत्त्रैविद्यमेववा। साब्रूतेयंसधर्मःस्यादेकोवाध्यात्मवित्तमः• इतियाज्ञवल्क्यः॥ विद्वत्संहतौ॥ भाः प्रकाशस्तयासहवर्त्तते• इत्युक्तेः॥ ग्रामनगरादौनियतजनसमूहस्थाने॥ सामाजिके। सभ्ये॥ द्यूते॥ मन्दिरे। राज्ञोऽमात्यादिदर्शनगृहे॥ अनुक्तविधेयस्थेयःसभ्यपुरुषवतीजनतासभा। अनुविधेयोराजादिः• स्थेयान्मध्यस्थः॥

सभागः। त्रि॰ सभाकृतौ॥ अन्यैःपूज्यमाने॥ भजनंभागः• पूजा॰ सेवा। सहभागेनवर्त्तमानः॥ •भागसहिते॥

सभाजनः। पुं• सभ्ये॥ न• गमनागमनादिसमयेसुहृदादेरालिङ्गनादिव्यग्रश्नस्वागतादिनानन्दोत्पादने। आनन्दने। आप्रच्छने॥ सभाज प्रीतिसेवनयोः। ल्युट्॥

सभाजितः। त्रि• पूजिते॥

सभाज्यः। त्रि• पूज्ये। भजनीये॥

सभापतिः। पुं• सभाधिपतौ॥ यथा। श्रीमद्यामपुरेसायाह्नरनामासभापतिरिति॥

सभारचना। स्त्री•राजमन्दिरनिर्मितौ॥ यथा। चापाकृतिन्यंस्तनृपासनोद्रा सतोतिकीर्णा नृपगौरवोचिता। निषादवीरे विंद्धीत मन्त्रिणा नरे रनूचानरसामरैः सभा॥

सभासत्•द्। पुं• सभास्तारे। सभ्ये। सामाजिके। सभासदानोइ। श्रुताध्ययनसम्पन्नाः कुलीनाः सत्यवादिनः। राज्ञासभासदःकार्याः शत्रौमित्रेचयेसमाइतियाज्ञवल्क्याः॥ श्रुताध्ययनसम्पन्नाः• धर्मशास्त्रज्ञाः। कुलीनाः• साङ्कर्यदोषशून्यमातापितृवंशपरम्पराकाः॥ सभायामधिकृतत्वेनलौकिकानांधर्माधर्मविवेकनार्थंसीदतिउपविशति। षद्लृ•। सत्सूद्विषेतिक्विप्॥ समाङ्विशाकः सामान्यः सब्राह्मणपुरोहितः। ससभ्यः प्रेक्षकोराजास्वर्गेतिष्ठतिधर्मतः॥ तत्रब्राह्मणाअनियुक्ताः• सभ्यास्तुनियुक्ताइतिभेदः। तत्रनियुक्तानांयथावस्थितार्थकथनेपियदिराजान्यथाकरोतितदाऽसौनिवारणीयोन्यथादोषः। यथाहकात्यायनः। अन्यायेनापितंयान्तंयेनुयान्तिसभासदः। तेपितद्भागिनस्तस्माद्बोध

नीय : सतैर्नृपइति ॥

सभास्तार : । पुं॰ सभासदि । सभांस्तृणाति । स्तॄञ् आच्छादने । कर्मण्यण् ॥

सभिक :। पुं॰ द्यूतकारके । प्रतिभूत्वादिनाद्यूतप्रयोजके ॥ सभाद्यूतमाश्रयत्वेनास्यास्ति । व्रीह्यादित्वाट्ठन् ॥

सभोचित : । पुं॰ पण्डिते ॥ त्रि॰ सभायोग्ये ॥

सभ्य : । पुं॰ सभासदि ॥ यथा । सभ्येनावश्यवक्तव्यं धर्मार्थसहितं वच : । शृणोतियदिनोराजास्यात्सभ्यस्तदाऽनृण : इति ॥ गीतापमोदाद्यर्थयाज्ञिकं : प्रथितेऽग्नविशेषे ॥ सभायांसाधु : । सभाया य : ॥ कुलीने ॥ साधौ ॥ त्रि॰ प्रत्ययिते । विश्वासपात्रे ॥ सभासम्बन्धिनि ॥

सम् । अ॰ शोभनार्थे ॥ समार्थे ॥ सङ्गार्थे ॥ प्रकृष्टार्थे ॥ सर्वतोभावे ॥ समुच्चये ॥

सम : । त्रि॰ समाने । तुल्यार्थे ॥ साध्वर्थे ॥ सर्वशब्दार्थे ॥ रागद्वेषादिरहिते ॥ समंत । षमवैक्लव्ये । पचाद्यच् । सर्वार्थे सर्वनामसंज्ञा ॥ अवक्रे ॥ निम्नोन्नतानुपर्श्योरनारम्भात् ॥ सर्वेषुभूतेष्वात्मौपम्येनसर्वत्रसुखंदुःखंच

पश्यतितस्मिन् ॥ न॰ सम्पूर्णे । समाप्रकाशाभ्यांसर्वाभिन्ने॰ निर्विशेषे॰ सर्वविकारशून्ये॰ कूटस्थे॰ नित्ये॰ एकस्मिन्॰ सर्वत्रैकरूपे॰ प्रतिदेहमेकस्मिन्॰ ब्रह्मणि ॥ समभ्याने ॥ सर्वसमर्थे ॥ अलङ्कारविशेषे ॥ यथा । समंयोग्यतयायोगोयदिसम्भावित क्वचित् । इदमनयो : श्लाघ्यमितियोग्यतया सम्बन्धस्यनियतविषयमध्यवसानस्यतदासमम् । तत्सद्योगेऽसद्योगेच । उदाहरणम् : धातु : शिल्पातिशयनिकषस्थानमेषामृगाक्षीरूपेदेवोप्ययमनुपमोदत्तपत्र : स्मरस्य । जातंदैवात्सदृशमनयो : सङ्गतंयत्तदेतच्छृङ्गारस्योपनतमधुनाराज्यमेकातपत्रम् ॥ यथावा । चित्रंचित्रंवतवतमहच्चित्रमेतद्विचित्रंजातोदैवादुचितरचनासंविधाताविधात । यन्निम्बानांपरिणतफलस्फीतिरास्वादनीयायच्चैतस्याः कवलनकलाकोविद : काकलोक: ॥ नक्षत्रविशेषाणांसंज्ञायाम् ॥ यथा । समंमृदुक्षिप्रध्रुवैर्भौऽग्निमघाश्चिपूर्वाह्नपभमितिपच्चदमकचरेषु ॥ पुं॰ विष्णौ ॥ मयाश्रयासत्वात्तेवृत्तितया । सर्वत्रालेपुसर्वविकाररहितत्वाद्वा । राशिविशेषाणांसंज्ञाविशेषे ॥ यथा ।

क्रूरोऽथसौम्यः • पुरुषोऽङ्गनाच• ओजोऽथयुग्मं विषमः समश्च । च राश्यादूयस्तकनामधेयामेषाद्योमीनान्तमः प्रदिष्टाः ॥ मानस्यप्रकारविशेषे ॥ सतुयदागीतवाद्ययोस्तालोगानकर्तृर्स्वपादादिचालनम्च• एकदासमभाविनपततितदाभवतीतिसङ्गीतशास्त्रम् ॥

समकक्षः । वि• तुल्ये । समे ॥

समकन्या । स्त्री• विवाहोपयुक्तायाम् ॥ इतिधनञ्जयः ॥

समकोलः । पुं• अजभक्षे । द्विरसने । सर्पे ॥ इ• वि• शेषः ॥

समक्षम् । अ• अक्ष्णोः समीपे ॥ अक्ष्णोसमीपंयोग्यं वा । अव्ययंविभक्तीतिसमीपे• यथार्थेवाऽव्ययीभावः । प्रतिपरोतिटच् ॥

समगन्धकः । पुं• कृत्रधूपे ॥

समगन्धिकम् । न• उशीरे ॥

समग्रः । वि• समस्मिन् । सर्वस्मिन् । विश्वस्मिन् । अशेषे । सम्पूर्णे ॥ सङ्गतमग्रमस्य ॥ समंयसते वा । अन्येष्वपीतियसेर्ड्ः ॥ शोभनाग्रके ॥ सत्रायेणफलेनविद्यतेयत्तत ॥

समङ्कः । पुं• मूषके ॥ सम्यक्प्रकारेणछिद्रादिकारणेन• अङ्कयति• चिह्नयतिवस्त्रादिकम् । अचि• । अच् ॥

समङ्गा । स्त्री• मजीठइ• प्र• ओषधौ । पर्यायास्तु । मञ्जिष्ठाविकसाजिङ्गीसमङ्गाकालमेषिका । मण्डूकपर्णीभण्डीरीभण्डीयोजनवल्ल्यपीति ॥ लज्जालौ । नमस्कार्याम् । गण्डकार्याम् ॥ सम्यगङ्गति । अगि• । पचाद्यच् ॥

समचित्तः । वि• हर्षविषादशून्यमनसि । आत्मविदि ॥ समंचित्तंयस्य ॥ एकविषयकान्तःकरणकर्तरि ॥

समजः । पुं• पशूनांवृन्दे ॥ संभीयतेऽत्रवा । अज• । समुदोरजःपशुष्विस्यप् ॥ मूर्खसंहतौ ॥ न• विपिने ॥

समज्ञा । स्त्री• यशसि । कीर्तौ ॥ समेःसर्वैर्ज्ञायते । ज्ञा• । घअर्थेकः ॥

समज्या । स्त्री• परिषदि । सभायाम् ॥ समजन्त्यस्याम् । अज• । संज्ञायांसमजेतिक्यप् । अजेःव्यपिवीभावोन ॥

समञ्जसम् । न• उचिते । न्याये ॥ सम्यगञ्जोऽत्र । अचप्रत्यन्ववेत्यचाऽजातियोगविभागाच्च ॥ यद्वा ! सङ्गतमञ्जसातत्त्वमत्र । क्लीनपुंसकेङ्गतिङ्कत्वम् । वि• समीचीने ॥ अभ्यस्ते ॥ अविरुद्धे । युक्ते ॥ न्याय्ये । स्वस्थवाधि ॥

समगठ : । पुं० माषभेदे । गण्डीरे ॥

समता । स्त्री० साम्ये । समत्वे ॥ समत्वमाराधनमच्युतस्येतिप्रह्लादवचनम् ॥ समवर्तित्वे । मध्यस्थत्वे ॥ चित्तस्यरागद्वेषादिरहितावस्थायाम् । तत् ॥

समतिसृष्ट : । त्रि० अनुज्ञाते ॥

समतीत : । त्रि० चिरं विनष्टे ॥

समत्र्यम् । न० समभागासुगुडशुण्ठीहरीतकीषु ॥

समदर्शनम् । न० समाभदृष्टौ ॥

समदर्शी । त्रि० सम्यग्दर्शिनि । ज्ञानिनि । सदेकरूपवस्तुदर्शनशीले । पण्डिते ॥ समं ब्रह्मद्रष्टुंशीलं यस्य । णिनि : ॥

समदृक् । पुं० ज्ञानिनि । ब्रह्मात्मैक्यज्ञानवति ॥ समं ब्रह्मपश्यति । दृशिर्० । क्विप् ॥ यदीवाद्यरैवा कुसुममयमेवाहयदिवामणीवालोष्टेवावज्ञवतिरिपौवासुहृदिवा । तृणेवास्त्रैवाममसमदृशोयान्तुदिवसा : क्वचित्पुण्यारण्ये शिवशिवशिवेतिप्रलपत : ॥

समदृष्टि : । स्त्री० सर्वत्रतुल्यदर्शने ॥ यथा । दु : खेसुखेचविप्रेन्द्रया दृष्टिर्वर्ततेसदा । तथाशत्रौचमित्रेचसमदृष्टिस्तुसास्मृतेतिपद्मपुराणे क्रियायोगसारे १६ऽध्याय : ॥

समधिक : । त्रि० अधिके । अतिरिक्ते । सम्यगधिक : ॥

समधिगत : । त्रि० प्राप्ते । अधिगते ॥ सम्यगधिगत : ॥ अधिगतपरमार्थान्पण्डितान्मावमंस्थास्तृणमिवलघुलक्ष्मीर्नैवतान्संरुणद्धि । अभिनवमदलेखाश्यामगण्डस्थलानांनभवतिबिसतन्तुर्वारणंवारणानां ॥

समधुर : । त्रि० मधुररसयुक्ते ॥ समासभारे ॥ मधुरेणसहविद्यते ॥ समाधूर्भारोयस्यस: । ऋक्पूरित्य: ॥

समन्त : । पुं० समन्ततोऽर्थे ॥ सीमनि ॥

समन्तत : । अ० चतुर्दिगभिव्याप्तौ । परित : । सर्वत : । विष्वक्० ॥ समन्तात् । आद्यादित्वात्तसि: ॥

समन्तदुग्धा । स्त्री० स्नुहीद्रुमे । सीहुण्डे ॥ समन्ताद्दुग्धमस्या : ॥

समन्तपञ्चकम् । न० कुरुक्षेत्रे ॥

समन्तभद्र : । पुं० सुगते । बुद्धे । समन्तंभद्रंयस्यस : । समन्तात्सर्वत : पुण्यसम्भारतो० ज्ञानसम्भारतश्चभद्र : श्रेष्ठ : । पञ्चमीतियोगविभागात्समास: । पृषोदरादि: ॥

समन्तभुक् । पुं० अनले । अग्नौ ॥

समन्तात् । अ० समन्ततोऽर्थे ॥

समन्यु : । त्रि० सक्रोधे ॥

समन्वय: । पुं० लिङ्गैः शास्त्रस्यतात्पर्यसम्बन्धे ॥ भिन्नानांसरूपतायाम् ॥

सम्यगन्वय : ॥
समन्वारम्भणम् । न॰ समनुगमने ॥
समन्वित : । त्रि॰ सम्यगन्विते । संयुक्ते ॥
समन्वितलय : । पुं॰ एकताले ॥ सम्यक् अन्वितौ लयौ नृत्यगीतवाद्यानां साम्यंधरस : ॥ सम्यगन्वितौ लयौ मध्यमलयौ यस्मिन् ॥
समपद : । पुं॰ रतिबन्धविशेषे ॥ यथा । योषित् पादौ हृदिस्थाप्यकराभ्यां पीडयेत् स्तनौ । यथेष्टं ताडयेद्योनिं बन्ध : समपद : स्मृतइति ॥ न॰ युद्धकाले धन्विनां पादन्यासविशेषे । धन्विनां पादयोस्तुल्यरूपतया धारणे ॥ धन्विनां स्थाने ॥
समपर्य्यासनम् । न॰ परिवर्त्तने ॥
समपादम् । न॰ धन्विनां पादयोस्तुल्यरूपतया धारणे ॥
समबुद्धि : । त्रि॰ सर्व्वत्रारागद्वेषशून्ये ॥ क : कौतुककर्मा॰ कृत्यव्यापृतबुद्धौ ॥
समभिव्याहार : । पुं॰ सहिते ॥
समभिव्याहृत : । त्रि॰ सहोच्चरिते ॥ सहिते ॥
समभिहार : । पुं॰ साभीक्ष्ण्ये । पौन : पुन्ये ॥ भृशार्थे ॥ समभिहरणम् । हृञ्॰ । घञ् ॥ सम्यगभिहारो वा ॥ विप्रकीर्णानां द्रव्याणां राशीभावे । शेषशेषिवाचकपदयो : सहोच्चारणे ॥
समभूमि : । स्त्री॰ समानस्थाने । भाजी ॥
समम् । अ॰ सहार्थे । सार्द्धम् । सत्रम् ॥ समति । षम॰ । अम् ॥
समय : । पुं॰ काले । दिष्टे । अनेहसि ॥ सम्यगेति । इण् गतौ । पचाद्यच् ॥ कार्यकाले ॥ समयेहिसर्वमुपकारिक्षतम् । सर्वं समये कृतमुपकार्यं भवति ॥ शपथे ॥ आचारे ॥ सिद्धान्ते ॥ विधि । संविदि ॥ क्रियाकारे ॥ निर्देशे ॥ सङ्केते ॥ भाषायाम् ॥ सम्पदि ॥ नियमे ॥ अवसरे ॥ समयनम्॰ समीयन्तेऽनेनवा॰ समेतिवा । इण्॰ इगतौवा । एरच्॰ पुंसीतिघोवा । पचाद्यज्वा ॥ सङ्गमे ॥
समयकार : । पुं॰ सङ्केते ॥
समयज्ञ : । त्रि॰ कालज्ञे ॥ समयंजानाति । ज्ञा॰ । क : ॥
समयभेदी । त्रि॰ संविद्व्यतिक्रमकारिणि ॥
समया । अ॰ अन्तिके । निकटे ॥ मध्ये ॥ समेति॰ समयनं वा । इण्॰ । आ: समिण् निकषिभ्याम् ॥ कालविज्ञापने ॥
समयाचार : । पुं॰ समयोचिताचरणे ॥ तन्त्रविशेषे ॥

समयाध्युषित : । पुं॰ सूर्यनक्षत्रवर्ज्जितेकाले ॥ समय : अध्युषितो यस्मिन् ॥

समयी । पुं॰ भगवत्याचरणभक्तिभावप्रतिपादकशास्त्रनिष्ठे ॥

समर : । पुं॰ न॰ युद्धे । रणे ॥ सम रणम् । ऋगतौ॰ भ्वादि: । अदोरप् ॥

समरभ : । पुं॰ रतिबन्धविशेषे ॥ यथा । स्वजङ्घाद्वयसंयुक्तं कृत्वा योषित्पदद्वयम् । स्तनौधृत्वा रमेत् कामी बन्ध : समरभ : स्मृतइति ॥

समरविजया । स्त्री॰ यात्राप्रभेदे ॥ समरविजयाचयात्रायोगविलग्नस्थिती शयोगेषु ॥ क्षितीश्वयोगेषु॰ राजयोगेषु । तात्कालग्रहबलवशेनतदवधेतियात्रावार्त्ताद्रष्टव्या ॥

समर्थ : । त्रि॰ हिते ॥ शक्ते । शक्तिसम्पन्ने ॥ संबद्धे । उपायकुशले ॥ समर्थवते॰ समर्थ्यतेवा । अर्थउपयाच्ञायाम् । चुरादय॰ । अच्वा ॥ सम्बद्धार्थे ॥

समर्थता । स्त्री॰ सामर्थ्ये ॥

समर्थनम् । न॰ अनुचितोचितनिश्चये ॥ सम्प्रधारणायाम् ॥ अर्थयते: सम्पूर्वात्॰ ल्युट् ॥ चोद्यपरिहारे ॥

समर्थना । स्त्री॰ समर्थने ॥ युच् ॥

समर्थयिता । त्रि॰ प्रतिपादयितरि ॥

समर्थित : । त्रि॰ कृतसमाधाने ॥

समर्द्धक : । त्रि॰ वरदातरि । वरदे । इष्टार्थप्रदेदेवतादौ ॥ समृध्नोति । ऋधुवृद्धौ । ण्वुल् ॥

समर्पणम् । न॰ सम्यगर्पणे । आदरेणार्पणे । सौंपना॰ इ॰ भा॰ प्र॰ ॥

समर्प्पित : । त्रि॰ कृतसमर्पणे ॥ सम्प्रोते । सम्प्रवेशिते ॥ स्थापिते ॥

समर्य्याद : । पुं॰ समीपे ॥ त्रि॰ मर्यादासहिते ॥ समानामर्यादास्य । सहमर्यादयेतिवा ॥ हेमचन्द्रस्तु । समर्यादंमर्यादासहितेपिच । मुख्यानुयायिनिशिष्टेप्रकृतस्यानुवर्त्तने । दोषाद्यादे॰ कृत्याद ॥

समल : । त्रि॰ मलिने । आविले ॥

समवतार : । पुं॰ तीर्थे ॥

समवर्त्ती । पुं॰ परेतराजि । धर्मराजे । पितृपतौ । यमे ॥ त्रि॰ तुल्यवर्त्तनशीले ॥ समंवर्त्तितुंशीलमस्य । सुप्यजातौणिनिस्ताच्छील्ये : ॥

समवसर्ग्या । स्त्री॰ रज्ज्वाम् ॥ समवस्रज्यते । सृज॰ । समवपूर्वाच्चेतिण्यत् । चजो:कुत्वम् ॥

समवस्थित : । त्रि॰ अविनाशिनि । जन्मादिविनाशान्तभावविकारशून्यतया॰ सम्यक्तयाऽवस्थिते ॥

समवाकार : । पुं॰ नाटकभेदे ॥

समवाय : । पुं॰ समूहे ॥ कस्याश्चि

त्क्रियायांमेलने ॥ सम्बन्धविशेषे ॥ यथा । घटादीनांकपालादौद्रव्येषुगुणकर्मणोः। तेषुजातेश्चसम्बन्धः समवायः प्रकीर्त्तितः ॥ अवयवावयविनोः गुणगुणिनोः क्रियाक्रियावतोः जातिव्यक्त्योः नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवायइत्यर्थः ॥ यथावा । श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः । कर्णविवरवर्त्याकाशस्य श्रोत्रत्वात् । शब्दस्याकाशगुणत्वात् । गुणगुणिनोश्चसमवायात् । सर्वांवयसम्बन्धः । सचएकएव ॥ समवायते । अय । घञ् ॥

समवायिकारणम् । न० उपादानकारणे ॥ यत्समवेतंकार्यमुत्पद्यते । तत्समवायिकारणम् । यथातन्तवः पटस्य । पटश्चस्वगतरूपादेः । यथावा । परमाणुद्वयणुकस्य । कपालञ्चघटस्य । सर्वसमवायिकारणं द्रव्यमेव : समवायेस्यस्य । इतिः । तत्तत्कारणम् ॥

समवेत : । वि० मिलिते । सङ्गते ॥ समवायसम्बन्धेनवृत्तौ ॥ यथा । यत्समवेतंकार्यंभवतिज्ञेयन्तुसमवायिजनकंतत् ॥

समवेतसमवाय : । पुं० सन्निकर्षविशेषे ॥ यथा । शब्दत्वसाक्षात्कारेसमवेतसमवाय : सन्निकर्ष : । श्रोत्रसमवेतेशब्दे । शब्दत्वस्यसमवायात् ॥

समनुयान : । त्रि० सम्यक्प्रकारेणव्याप्तिविशिष्टे ॥

समष्टि : । स्त्री० सामान्ये । समस्तव्याप्ते ॥ यथा । समस्तस्येनसंव्याप्तिः समष्टिरितिकीर्त्तितेति अपिच । समष्टिरीश : सर्वेषांस्वात्मतादात्म्यवेदनात् । तदभावात्तदन्येतुज्ञायन्तेव्यष्टिसंज्ञयेति । सङ्गते ॥

समष्ठिल : । पुं० क्षुपविशेषे । भण्डीरे । नद्याम्रे । अ.म्रगन्धके । कोकाये । कण्टकिफले । उपदंशे । कोकुर्ण । इ० भा० ॥

समष्ठिला । स्त्री० गण्डीरे । गण्डरदुी० इ० प्र० भाषे ॥ सम्यगष्ठिलाबीजंयस्याः ॥

समष्ट्यज्ञानम् । न० सकलाज्ञाने ॥

समष्ठिल : । पुं० समष्ठिले ॥

समष्ठिला । स्त्री० समष्ठिलायाम् ॥ समेतिष्ठति । मिथिलादयश्चेति साधु : ॥

समष्ठीला । स्त्री० समष्ठिलायाम् ॥

समसनम् । न० समासेआदानामैक्यसाधने । अनेकस्यपदस्यएकपदीभवने ॥ सङ्क्षेपणे ॥ असुक्षेपणे । सम्पूर्वाल्ल्युट् ॥

समसुप्ति : । स्त्री० कल्पान्ते । महा

प्रलये । तुल्यगमने ॥
समस्तः। वि॰ सर्वावयवविशिष्टे । सकले । समस्मिन् । पूर्णे ॥
समस्तमिमं । अमु॰ । त्तः ॥ सीयकरणे ॥ सफले ॥ पुञ्जीकृते । नि:क्षिप्ते ॥
समस्थ :। वि॰ धनधान्यादियुक्ततया सम्यगवस्थिते ॥ समेतिष्ठति। ष्ठा॰ । सुपिस्थइतिकः ॥ समभावेन स्थिते । समाने ॥
समस्थली । स्त्री॰ गङ्गायमुनयोर्मध्यस्थदेशे ॥ अन्तर्वेदिः समस्थलीतिहेमचन्द्रः ॥
समस्या । स्त्री॰ श्लोकस्यैकेनपादेन॰ श्लोकार्थाभिधानपूरणे । समासार्थायाम् ॥ समसननमस्यांसाप्यत्वेप यम् । अमु॰ । यत्॰संज्ञापूर्वक त्वाद्‌वृद्‌ध्यभावः ॥ सुमेरोर्विकृतत्वा धार्यापि चक्राननना गरैः । स्मर नारायण येनक्षेतायांराष्ट्रोदितः ॥
समा । स्त्री॰ अलङ्कारविशेषे ॥ सास मालङ्कृतिर्योगोयस्स्नेरनुरूपयो रितिलक्षणात् ॥
समाः । स्त्री॰ शरदि । संवत्सरे । वत्सरे । हायने ॥ समन्ति॰ विक्लवं कुर्वन्तिसर्वम् । षमष्टमवैक्लव्ये । पचाद्यच॰ टाप् । प्रायेणायंबहुवचनान्तः ॥
समांशहारी । वि॰ समभागार्हे ॥ यथा । समांशहारिणोमातापुत्राणां-

भ्रातृपत्न्योपतिरितिदायतत्त्वम् ॥ पत्नीतिप्रयोगस्तुप्रामादिकएव ॥
समांशिक :। वि॰ समभागार्हे ॥ यथा । यदिकुर्यात्समानंशान्प त्न्यः कार्याः समांशिकाः । नद त्तंस्त्रीधनंयासांदत्तेस्वर्द्धंप्रकीर्तित मितिदायतत्त्वम् ॥
समांशी । वि॰ तुल्यभागिनि ॥ यथा । ज्येष्ठंवाश्रेष्ठभागेनसर्वेवास्युः समांशिनइतिदायतत्त्वम् ॥
समांसमीना । स्त्री॰ प्रतिवर्षप्रसूतायांगवि ॥ समायांसमायांविजायते । समांसमांविजायतेइतिखः । उत्तरपदेयश्भक्त्योर्लोपः॰ पूर्वं दलेयलोपएव ॥
समाकर्ष :। पुं॰ सम्यगाकर्षणे ॥
समाकर्षी । पुं॰ दूरगामिगन्धे । निर्हारिणी ॥
समाकुल : । वि॰ संयुते ॥
समाकृष्ट :। वि॰ सम्यगाकृष्टे ॥
समाक्रान्त :। वि॰ सम्यक्कृताक्रमणे । व्याप्ते ॥ अधिष्ठिते ॥
समाख्या । स्त्री॰ नाम्नि । संज्ञायाम् ॥ कीर्त्तौ । यशसि ॥ योगलभ्यार्थे ॥ विनियोगविधि: सहकारिभूतप्रमाणविशेषे ॥ समाख्यायौगिकःशब्दः । साचद्विविधा । वैदिकीलौकिकीच , तत्र॰ होतृचमसभक्षणाहत्वं॰ होतृचम

स्मृतिः वेदिक्याःसमाख्यया। प्रत्येकंतत्तत्पदार्थानांलौकिक्या अर्थवत्तिमितिसमाख्येतितत्त्वबोधः॥ अपर्णा॥

समागतः। त्रि॰ सम्प्राप्ते॥ आगमसमाश्रये। सम्यगागमनविशिष्टे॥

समागमः। पुं॰ संयोगे॥ सम्यगागमने॥ संप्राप्तौ॥

समाघातः। पुं॰ वधे॥ युद्धे॥ समाहननम्। घञ्। हनस्तोऽचिण्णलोः। इतिहन्तेरिति घः॥

समाचयनम्। न॰ राशीकरणे॥

समाचरणम्। समाचारे। समाङ्पूर्वाच्चरेर्ल्युट्॥

समाचारः। सम्यगाचरणे। वर्णाश्रमादिधर्माणामाचरणे॥ समाचरणम्। समाङ्चरेर्भावेघञ्॥ व्रतग्रन्थे॥

समाजः। पुं॰ पशुभिन्नानांसमूहे। यथा॰ समाजोब्राह्मणानां॰ समाजःक्षत्रियाणाम्॥ अनेकेषां प्रामाणिकजनानांवासस्थाने॥ सभायाम्। उत्सवेषुसङ्घाते॥ संवीयतेऽत्र। अज॰ घञ्। अघञ्पोरित्युक्तेर्वीभावोन। समुदोरजःपशुष्विति क्तविधिः॥ हस्तिनि॥ इत्यनेकार्थकोषः॥

समाज्ञा। स्त्री॰ ख्यातौ॥ समाज्ञायते। समाङ्पूर्वात्ज्ञावबोधने॰ इत्यस्मादातश्चोपसर्गइत्यङ्॥

समादरः। पुं॰ सम्माने॥

समादानम्। न॰ सङ्ग्रहे। समीचीनग्रहणे। सौगताह्निके। सौद्धानांनित्यकर्मणि। सम्भाषायाम्॥

समाधानम्। न॰ ब्रह्मणिमनःस्थिरीकरणे। अवधाने। प्रणिधाने। चित्तैकाग्र्यानुगुण्यं समाधानमितिन्यायमञ्जरी॥ निगृहीतस्यमनसः श्रवणादौ॰ तदनुगुणविषयेचसमाधिः समाधानमितिलघुचन्द्रिका॥ श्रवणादिविषयकादिग्व्योमननादिमङ्ग्रहार्थः। तदनुगुणेत्यत्र॰ गुरुशुश्रूषापुस्तकसम्पादनतद्रक्षणादिः श्रवणाद्यनुगुणोविषयोनिर्दिश्यते॰ नपुनःसुखदासद्र्यान्नादिसङ्ग्रहादेरपिश्रवणाद्यनुकूलत्वात्तदर्थमठरक्षप्रतिग्रहादावपि चित्तसमाधिः कर्त्तव्यइत्युपदिश्यते। दण्डमाच्छादनंकौपीनंपरिग्रहेच्छेषं विसर्जयेदितिसन्न्यासकालीन्याजितस्यदण्डकौपीनाद्यतिरिक्तस्य॰ विनाप्रतिप्रसवशास्त्रंसङ्ग्रहानुपपत्तेरित्यर्थः। योगयोगसामर्थ्ये। तत्परतायाम्। सम्यक्आधानम्॥

समाधिः। पुं॰ समर्थने। समर्थनम्शक्यं॰ अध्यवसायो दुर्घटस्यघटनंवा। नीवाके॥ नीवाकोवचना

भावयुक्तिस्वामी। धान्यादिषु मूल्योत्कर्षपूर्वकोऽनादरयुक्तिसम्भृतिः॥ नियमे। अङ्गीकारे। मौनव्रतादौ। सिद्धान्ते। इन्द्रियरोधे। एकाग्रभक्तियोगे। ध्याने। काव्यगुणविशेषे अलङ्कारप्रभेदे। यथा। समाधिः सुकरं कार्यं कारणान्तरयोगतः साधनान्तरोपकृतेन कर्त्रा। यदुक्तेन कार्यमारभ्यमाणं समाधीयते स समाधिर्नाम। उदाहरणम्। मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः। उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितमिति॥ समाधीयतेऽस्मिन् मनो ज्ञानैः। डुधाञ्। उपसर्गे घोः किरित्यधिकरणे किः॥ कारणसामग्र्याम्॥ ध्याने। चित्तस्यैकाग्र्यात्मना निश्चलावस्थाने॥ स च समाधिर्द्विविधः। सविकल्पको निर्विकल्पकश्चेति। तद्विवरणं सविकल्पकनिर्विकल्पकशब्दे द्रष्टव्यम्। ध्यानमेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः। सर्वथा विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाहः। मतु चित्तभूमिभेदेन द्विविधः। सम्प्रज्ञातोऽसम्प्रज्ञातश्चेति। चित्तस्य पञ्चभूमयो भवन्ति। क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति। समाधीयतेऽस्मिन् सर्वमिति व्युत्पत्त्या समाधिरन्तः



करणम् परमात्मा वा॥ अत्र भूयो स्वावस्थानं समाधिरिति गीयते। द्विविधो हि समाधिर्भवति। लयपूर्वको बाधपूर्वकश्चेति। तत्र तदनन्यत्वमारम्भणशब्दादिभ्य इति न्यायेन कारणव्यतिरेकेण कार्यस्यासत्त्वात्। पञ्चीकृतपञ्चमहाभूतकार्यं व्यष्टिरूपं समष्टिरूपविराट्कार्यत्वात् तद्व्यतिरेकेण नास्ति। तच्चापि पृथिवी शब्दस्पर्शरूपरसगन्धाख्यपञ्चगुणा। तथा समष्टिरूपमपि पञ्चीकृतपञ्चभूतात्मकं कार्यम्। अपञ्चीकृतपञ्चमहाभूतकार्यत्वात्। सा च पृथिवी गन्धेतरचतुर्गुणकार्यत्वात् तद्व्यतिरेकेण नास्ति। ताश्चतुर्गुणा आपो। गन्धरसेतरत्रिगुणात्मकतेजःकार्यत्वात् तद्व्यतिरेकेण नास्ति। तदपि त्रिगुणात्मकं तेजो। गन्धरसरूपेतरद्विगुणवायुकार्यत्वात् तद्व्यतिरेकेण नास्ति। सोऽपि द्विगुणात्मको वायुः। शब्दमात्रगुणाकाशकार्यत्वात् तद्व्यतिरेकेण नास्ति। स च शब्दगुण आकाशो बहु स्यामिति परमेश्वरसङ्कल्पात्मकाहङ्कारकार्यत्वात् तद्व्यतिरेकेण नास्ति। तदपीक्षणरूपं महत्तत्त्वं मायापरिणामत्वात् तद्व्यतिरेकेण नास्ति। तदपि मायाख्यकारणं ब्रह्मत्वेनापेत

न्योऽध्यस्तत्वात्• तद्व्यतिरेकेणासतोऽप्यनुसन्धानेन• विद्यमानेति कार्यकारणात्मके प्रपञ्चे• एतस्मा चगोचरीयः समाधिः• सत्यपूर्वक उच्यते। तत्र तत्त्वमस्यादिवेदान्तमहावाक्यार्थज्ञानाभावेनाऽविद्यातत्कार्यस्याक्षीणत्वात्• एवं चित्तविक्षेपकारणसत्त्वेन• पुनः कृत्स्नप्रपञ्चोत्थानात्• अयं सुषुप्तिवत् सबीजः समाधिर्मुख्यः। मुख्यस्तु• तत्त्वमस्यादिमहावाक्यार्थसाक्षात्कारेण• अविद्यायां निवृत्तौ सर्गक्रमेण तत्कार्यनिवृत्तिरनाद्यविद्यायाश्च पुनरुत्थानाभावेन तत्कार्यस्यापि पुनरुत्थानाभावान्निर्बीजो बाधपूर्वकः समाधिः। स एव• सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे। आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते इत्यनेन श्लोकेन प्रदर्शितः। तथाहि। सर्वाणि निखिलानि स्थूलरूपाणि संस्काररूपाणि च। इन्द्रियकर्माणि• इन्द्रियाणां श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानां पञ्चानां• वाक्पाणिपादपायूपस्थाऽऽख्यानां वाह्यानाम्• आन्तर्योश्च मनोबुद्ध्योः कर्माणि• शब्दश्रवणस्पर्शग्रहणरूपदर्शनरसग्रहणगन्धग्रहणानि• वचनादानगमनविसर्गोत्सर्गानन्दाख्यानि च• सङ्कल्पाध्यवसायौ च।

समाधिः

एवं प्राणकर्माणि च• प्राणानां• प्राणापानव्यानोदानसमानाख्यानां पञ्चानां कर्माणि• बहिर्नयनमधोनयनमाकुञ्चनप्रसारणाद्यशितपीतसमानयनमूर्द्ध्वनयनमित्यादीनि। अनेन पञ्च ज्ञानेन्द्रियाणि• पञ्चकर्मेन्द्रियाणि• पञ्चप्राणाः• मनोबुद्धिश्चेति सप्तदशात्मकं लिङ्गमुक्तम्• तच्च सूक्ष्मभूतसमष्टिरूपं• हिरण्यगर्भाख्यमिष्टविवक्षितमिति वेदितुं सर्वाणीति विशेषणम्। आत्मसंयमयोगाग्नौ• आत्मविषयकः संयमो धारणाध्यानसम्प्रज्ञातसमाधिरूपस्तत् परिपाके सति योगो• निरोधसमाधिः। यं• पतञ्जलिः सूत्रयामास। व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधलक्षणचित्तान्वयो निरोधपरिणाम इति। व्युत्थानं• क्षिप्तमूढविक्षिप्ताख्यं भूमित्रयम्• तत्संस्काराः समाधिविरोधिनः तैर्योगिप्रयत्नेन प्रतिदिनं प्रतिक्षणञ्चाभिभूयन्ते• तद्विरोधिनश्च निरोधसंस्काराः प्रादुर्भवन्ति• ततश्च निरोधमात्रक्षणे चित्तान्वयो निरोधपरिणाम इति। तस्य फलमाह। ततः प्रशान्तवाहिता संस्कारादिति। तमोरजसोः क्षयात् विक्षेपशून्यत्वे शुद्धसत्त्वरूपं चित्तं प्रशान्तमित्युच्यते। पूर्व

पूर्वप्रशमसंस्कारपाटवेनतद्वाधिक्यं प्रशान्तवाहितेति । तत्कारणञ्च सूचयामास । विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोन्यइति । विरामोह॰स्य परमः तस्यप्रत्ययः कारणंहस्य परमार्थः पुरुषप्रयत्नस्तस्याभ्यासः पौनःपुन्येनसम्पादनम्॰ तत्पूर्वकस्तस्मान्योऽन्यः सम्प्रज्ञातादिलक्षणोऽसम्प्रज्ञातइत्यर्थः । एतादृशोयथात्मसंयमयोगःस एवाग्निस्तस्मिन्॰ज्ञानदीपिते॰ज्ञानंवेदान्तवाक्यजन्योब्रह्मात्मैक्यसाक्षात्कारः॰तेनाविद्यातत्कार्यनाशद्वारादीपितेप्रज्वलितेशाधपूर्वकेसमाधौसमिद्धमिल्लिङ्गशरीरमपरिजुह्वतिप्रविलापयन्तीत्यर्थः । तदेकतानतामेतिससमाधिर्विधीयते ॥ तत्॰ ध्यानम्॰ ऐकतानताम्॰ ध्येयैकनिर्भासत्वम्॰ यदाऽभ्येति॰ तदा॰समाधिरितिशास्त्रेषु प्रदिश्यते ॥ लक्षणन्तु । निर्विकारतयावृत्त्या ब्रह्माकारतयापुनः । वृत्तिविस्मरणंसम्यक्समाधिर्ज्ञानसंज्ञकः ॥ अपिच । ध्यातृध्यानेपरित्यज्यक्रमाद्ध्येयैकगोचरम् । निवातदीपवच्चित्तंसमाधिरभिधीयतइति । पुनश्च । नित्यंशुद्धंबुद्धियुक्तंसत्यमानन्दमद्वयम् । तुरीयमक्षरंब्रह्माहमस्मिपरंपदम् । अहमव्रह्मेत्यव स्थानंसमाधिरितिगीयते ॥ कू॰ गा॰ ४४ ॥ अपिच । तस्यैवकल्पनाहीनंस्वरूपग्रहणंहियत् । मनसा ध्याननिष्पाद्यंसमाधिः सोभिधीयते ॥ कू॰ वि॰ पु॰ स अपरञ्च । द्वन्द्वगुणसमाहारमनात्मत्वेनपश्यतः । अन्तः शीतलताशश्वत्समाधिरितिकथ्यते ॥ इतियोगवाशिष्ठे उपशमप्रकरणम् ॥ समाधीयतेसर्वमस्मिन्॰ समाधानमनेनवा । समाङ्पूर्वाद्धाञोऽधिकरणादौ॰ उपसर्गेधोः किः ॥

समाधिविघ्नः । पुं॰ लयविक्षेपकषायरसास्वादलक्षणेषुचतुर्षु ॥

समाधिस्थः । त्रि॰ व्युत्थितचित्तः ॥ समाधियुक्तः ॥ यथा । मनः सङ्कल्परहितमिन्द्रियार्थानचिन्तयन् । यस्तुब्रह्मणिसंलीनंसमाधिस्थः सकीर्त्तितः ॥ ध्यायतः परमात्मानमात्मस्थंयस्ययोगिनः । मनस्तन्मयतांयातिसमाधिस्थः सकीर्त्तितः ॥ इतिगारुडेगीतासारे २४॰ अध्यायः ॥

समानः । पुं॰ हन्नाभिसर्वसन्धिवर्त्तीवायुविशेषः । शरीरमध्यगतेऽशितपीतान्नपानादिसमीकरणकर्त्तावायौ । नाभिसंस्थिते ॥ यथा । पीतंभक्षितमाघ्रातंरक्तपित्तकफानिलम् । समंनयतिगात्रेषुसमानो

नाममात्रतद्वृत्ति । अत्रउक्तलक्षणे ष ॥ समानशब्देनपूर्वाचार्य्यैर्नि र्दिष्टाद्वक्ष्यमाणादसमानाद्वृ तिवचनाद्दितिकैयटः । वचना दिति । यथा॰ वृद्ध उक्त कल्ल लक्ष्मदसमानाद्वृत्तिपूर्वव्याकरण वचनादित्यर्थइतिविवरणम् । त्रि॰ सती । साध्वी ॥ समे । तुल्ये । ऊनातिरिक्तवर्ज्जे ॥ एकस्मिन् ॥ समन्तादनित्यनेन । अन॰ । हल श्चेतिघञ् ॥ समतिवा अम॰ । ...कौत्स्यवयोवचनमक्षिपुनामग् । आगमशासनमनित्यमितिनुमन ॥ सहमानेनवर्त्ततइतिवा । वीप सर्जनस्येतिसभावः ॥ समानं मानमस्येतिवा । समानच्छन्द सीतिसः ।

समानकालीनः । त्रि॰ समकालो त्पत्तिकः ॥ यथा । गोषुदुह्यमानास्वागतः॰ दुग्धास्वागतइत्यादौ समानकालीनत्वंभासते । तेनगो विषयकवर्त्तमानदोहनकालीनग मनानुकूलकृतिमान् । एवंगोवि षयकातीतदोहनसमानकालीनाती तगमनानुकूलकृतिमानितिबोधः ॥

समानयानकर्म्मा । पुं॰ सन्धेः प्रभेदे ॥ यथा । तात्कालिकफललाभा र्थमुत्तरकालीनफललाभार्थंवाबल राजान्तरेणसहान्यंप्रतियानादिक र्म्मक्रियते॰ ससमानयानकर्म्मासन्धि र्ज्ञेयः ॥

समानाधिकरणः । पुं॰ समानविष ये ॥

समानाभिहारः । पुं॰ समानगुणानां मिश्रणे ॥ यथा॰ तोयदमुक्तजल बिन्दूनां॰ जलाशयेसमाभिहारः । यथाशोभाक्षिताद्दुग्धपतितानांग व्यदुग्धानाम् ॥

समानालङ्कृतिः । स्त्री॰ अलङ्कारवि शेषे ॥ यथा । समानालङ्कृतिर्यो गेवस्तुनोरनुरूपयोरिति ॥

समानिका । स्त्री॰ वर्णवृत्ताक्षरे ॥ ग्गारमेकवायदासद्गुलाभवेत्तदा । सप्तवर्णनिर्मितासासमानिकामता ॥ यथा । पद्मचारुचक्षुषानीलनीर जत्विषा ॥ चालिमन्मनोहृतंम मद्गमोपितम् ॥ अनुष्टुभ्भेदेपि । ग्लौरजौसमानिकातु । यथा । यत्कृष्णपादपद्ममस्तिहृत्तडागस द्म । धीः समानिकापरेणनो चिताचमत्परेण ॥

समानोदकः । पुं॰ चतुर्द्दशपुरुषप र्य्यन्तं जन्मनामस्मृतिपर्य्यन्तं च ॥ गोत्रजमात्रे ॥

समानोदर्य्यः । पुं॰ सहोदरे । सो दर्य्ये ॥ समानेउदरेशयितः स्थि तः । समानोदरेशयितश्चोदात्त इतियत् । विभाषोदरइतिपा

षिकत्वात्सादेशोन ॥

समाप : । पुं॰ देवयजने ॥ समाचा पोर्यस्मिन् । ऋकपूरिव्य : ॥

समापक : । त्रि॰ समापनकर्त्तरि ॥ समापयति । ण्वुल् ॥

समापत्ति : । स्त्री॰ यदृच्छयासङ्गतौ ॥

समापनम् । न॰ परिच्छेदे ॥ समाप्तौ ॥ वधे ॥ समाधाने ॥ लब्ध । प्राप्ते ॥

समापन्न : । त्रि॰ समाप्ते ॥ प्राप्ते । क्लिष्टे ॥ वधे ॥

समापय्य । अ॰ समाप्तिंप्रापय्येत्यर्थे ॥

समापिका । स्त्री॰ वाक्यसमापकक्रियायाम् ॥ तत्रतिबाद्योभवन्ति । यथा । देवदत्तोगच्छति । क्वचित् क्तान्तादिपदेनापिवाक्यसमाप्ति : । यथा । नान्नाहष्ट : शिवोजने । क्वचित्तव्याद्यन्तक्रियायाअपिवा क्यसमापकत्वम् । यथा । मया काशिगन्तव्यम् । याकादन्तक्रि याऽसमापिका॰ तत्रयत्वादयोभव न्ति । यथा । गच्छन्भुङ्क्ते । भु क्त्वाव्रजति पीत्वास्वपिति ॥

समापित : । त्रि॰ कृतसमापने ॥ यथा । आरब्धंमलमासात्प्राक् यत्कर्मनसमापितम् । आगतेमल मासेपितत्समाप्यंनसंशयइतिमल मासतत्त्वम् ॥

समाप्त : । त्रि॰ समाप्तिंगते । स माप्तिविशिष्टे ॥ यथा । समाप्ते यद्भिन्नाभोयानुभयेतदन्यथाकृतम् । यतस्तदन्यथाभूतंततएवसमाप यैदितितिथ्यादितत्त्वं ॥

समाप्ति : । स्त्री॰ अवसाने ॥ सम र्थने ॥ समापनम् । आप्लृ॰ । स्त्रि न्नावादिभ्य : ॥ परिप्राप्तौ ॥

समाप्तिका । स्त्री॰ समाप्त्यर्थे ॥

समाप्त्यर्था । स्त्री॰ समस्यायाम् ॥

समाप्य : । त्रि॰ समापनीये ॥

समायोग : । पुं॰ संयोगे ॥ समवा ये ॥ प्रयोजने ॥ समायोजनम् । युजिर्॰ । घञ् ॥ युद्धे॰ । र तौ॰ ; अन्वये॰ । वशीकरणसा धने ॥

समारत : । त्रि॰ उपरते ॥

समारम्भ : । पुं॰ उपक्रमे । प्रारम्भे । यथा । समारम्भाभग्ना : • कतिकतिनवारांस्तवपशो : पिपा सोस्तुच्छे स्मिन्द्रविणमृगतृष्णार्णवजले । तथापिप्रत्याशाविरमतिम तेऽद्यापिशतधानचार्थंब्रूमोतोभि पतमशनियोषघटितमिति ॥ औ णम॰ विटौषम् ॥ समारभ्यते । रभेर्घञ् । रभेरशब्लिटोरिति नुम् ॥

समारोपित : । त्रि॰ विषयप्रयुक्ते ॥ सम्यक्कृतारोपणे । सम्यक्

ल्पिते ॥ सम्यक्‌ पारोपित : ॥

समारोह : । पुं॰ सम्यगारोहणे । नीचादूर्द्धगमने ॥ सोपाने ॥ समारुह्यतेऽनेन॰ समारोहणम्‌ । समारोहतिवा । रुहे : कर्म्मणि॰ भावे वाघञ्‌ । पचाद्यच्‌वा ॥

समालम्बी । पुं॰ भूतृणे ॥

समालम्भ : । पुं॰ विलेपने । कुङ्कुमादिविलेपे ॥ समालम्भनम्‌ । डुलभष प्राप्तौ । घञ्‌ । उपसर्गात्‌खल्‌घञोरितिमुम्‌ । घातने ॥

समालम्भनम्‌ । न॰ विलेपे ॥ घातने ॥ सम्यक्‌ स्पर्शने ॥

समालिङ्ग : । पुं॰ समालिङ्गने ॥

समाली । पुं॰ कुसुमाकरे ॥

समावर्त्त : । पुं॰ विष्णौ ॥ संसारचक्रस्यसम्यगावर्त्तकइतितथा । जननमरणादिरूपं संसारचक्रमज्ञजीवान्‌ प्रतिसम्यगावर्त्तयन्‌ समावर्त्तइत्यर्थ : । समाङ्‌ पूर्वाद्‌ वृतेर्ण्यन्तात्‌ पचाद्यच्‌ ॥ समावर्त्तनम्‌ । हृतु॰ । भावेघञ्‌ ॥

समावर्त्तनम्‌ । न॰ साङ्गाधीतवेदस्य गुरोरनुज्ञयागृहागमे । वेदाध्ययनानन्तरगार्हस्थ्याधिकारप्रयोजककर्म्मणि ॥ सम्पूर्वाद्वर्त्तेर्ल्युट्‌ ॥

समावाय : । पुं॰ समुदाये । समूहे : ।

समावास : । पुं॰ स्थाने ॥

समाविष्ट : । वि॰ आक्रान्ते ॥

समावृत्त : । पुं॰ लब्धानुज्ञे । साङ्गवेदाध्ययनानन्तरं त्वमिदानीं गृहस्थोभवेतिगार्हस्थ्यायगुरो : प्राप्तानुज्ञे ॥ समावर्त्तितेऽस्य । हृतु॰ । मत्वर्थेतिक्त : ॥

समावेदनम्‌ । न॰ निवेदने ॥

समावेश : । पुं॰ विन्यासे ॥ एकत्रसहावस्थाने ॥

समावेशित : । वि॰ सहावस्थिते ॥ प्रविष्टे ॥

समाश : । पुं॰ सहभोजने ॥

समाश्रय : । पुं॰ वासस्थाने ॥ सम्यक्‌॰ आश्रय : । सम्यगाधारे । सहाये ॥

समाश्रित : । वि॰ सम्यक्‌ शरणागते ॥ सम्यक्‌ प्रकारेणाश्रित : ॥

समाश्वस्त : । वि॰ सञ्जातविश्वासे ॥

समाश्वास : पुं॰ सम्यगाश्वासे ॥

समास : । पुं॰ सङ्क्षेपे । समर्थने ॥ ऐकपद्ये । पदयो : पदानांवाए कीकृतौ । समसने । समसनम्‌॰ पदयो : पदानांवा॰ एकपदीकरणम्‌ समास : सङ्क्षेप : । भावे घञ्‌ । सचानेकधा॰ द्वैध्यम्‌ । सचतुर्द्धा॰ प्रधानार्थस्वभावातुविध्यात्‌ । तथाचोक्तं महाभाष्ये । इहकश्चित्‌समास : पूर्वपदार्थप्रधान : ॰ कश्चिदुत्तरपदार्थप्रधान : ॰ कश्चि

द्वन्यपदार्थप्रधान : ० क्वचिदुभय पदार्थप्रधानइति ॥ पुनश्चद्विविधो नित्योऽनित्यभेदात् । अविग्रहोनित्यसमास : ० अस्वपदविग्रहोवा० समग्रमानयावत्पदरहितविग्रहइतियावत् । । तद्भिन्नोऽनित्य : ॥ अपिच । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपा : पञ्चवृत्तय : । परार्थाभिधानंवृत्तिः० परशब्दस्यार्थस्तस्याभिधानमितियावत् । वृत्त्यर्थबोधकंवाक्यंविग्रह: । सद्विधा । लौकिकोऽलौकिकश्च । परिनिष्ठितत्वात्साधुर्लौकिक : । प्रयोगानर्होऽसाधुरलौकिक : । यथाराज्ञ : पुरुष : । राजन्‌ङस्० पुरुषसु० इति । अविग्रहोनित्यसमासोऽस्वपदविग्रहोवा । समासश्चतुर्द्धेतिप्रायोवादः०अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वाधिकारस्थिभूतानामपिसहसुपेतिविधानात् । पूर्वपदार्थप्रधानोऽव्ययीभाव : ० उत्तरपदार्थप्रधानस्तत्पुरुषः० अन्यपदार्थप्रधानोबहुव्रीहि : । उभयपदार्थप्रधानोद्वन्द्वः इत्यपिप्रायंप्रवादः प्रायोभिप्रायः । सूपप्रति० उन्मत्तगङ्गमित्याद्यव्ययीभावे० अतिमालादौतत्पुरुषे० द्वित्रा : सपुत्रइत्यादिबहुव्रीहौ० दन्तोष्ठमित्यादिद्वन्द्वे चाभावात् । तत्पुरुषविशेष : कर्मधारयः० तद्विशेषोद्विगु: । अनेकपदत्वंद्वन्द्वबहुव्रीह्योरेव०तत्पुरुषस्य क्वचिदेवेत्युक्तम् ॥ किञ्च । सुपां सुपातिङानाम्नाधातुनाऽथतिङांतिङा । सुवन्तेनेतिपञ्चोक्तय: समासः षड्विधोबुधै : ॥ सुपा० राजपुरुष : । तिङा० पर्यभूषत् । नाम्ना० कुम्भकार : । धातुना० कटप्रूः अजस्रम् । तिङां० तिङा० पिबतखादत । तिङांसुपा० कृन्तविचक्षणेतियस्यांक्रियायांसाकृन्तविचक्षणा । एहीडादयोन्यपदार्थेइति० मयूरव्यंसकादौपाठात् समास : ९ समुदाये । समूहे ॥

समासक्त : । त्रि० सम्यगासक्ते । संयुक्ते ॥

समासञ्जनम् । न० समासङ्गे । मेलने संयोगे ॥

समासत्ति : । स्त्री० संनिकर्षे ॥

समासन्न : । त्रि० प्रत्यासन्ने । निकटवर्त्तिनि ॥ समासीदतिस्म । षद्‌लृ० । गत्यर्थेतिक्त : । समासाद्यतेस्मवा ॥

समासवान् । पुं० तुन्ने । नन्दिवृक्षे ॥ त्रि० समासाश्रये । समासविशिष्टे ॥

समासादित: । त्रि० आहृते । प्राप्ते ॥

समासाद्य : । त्रि० प्राप्ये । गम्ये ।

थासु शक्ये । समोसाद्यते। षद्लृ॰। कर्मणिक्यन्त् ।
समासार्था । स्त्री॰ समस्यायाम् । पूरयितुं प्रदाकाङ्क्षायाम् । कविशक्तिपरीक्षार्थमपूर्णतया पठ्यमानायाम् । यथा । शतचन्द्रं नभस्तलमिति । तत्र॰ दामोदरकराघातविह्वलीकृतचेतसा। दृष्टं चाणूरमल्लेनेत्यादिना॰ सा॰ पूर्यते ॥ समासोऽर्थोयस्याः ।
समासोक्तिः । स्त्री॰ अर्थालङ्कारभेदे ॥ यथा । परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः । प्रकृतार्थप्रतिपादकवाक्येन॰ श्लिष्टविशेषणमाहात्म्यान्नतु विशेष्यस्यसामर्थ्यादपि॰ यदप्रकृतस्यार्थस्याभिधानंसासमासोक्तिः ॥ उदाहरणम् । लहिऊणतुज्झबाहुफंसंजीएसकोविउल्लासो । जयलच्छीतुहविरहेणहोउज्जलादुव्वलाणसा ॥ अत्रजयलक्ष्मीशब्दस्यकेवलंकान्तावाचकत्वंनास्ति । प्राकृतस्यसंस्कृतन्तु । लब्ध्वातवबाहुस्पर्शंयस्याः सकोऽप्युल्लासः । जयलक्ष्मीस्तवविरहेणखलूज्ज्वलादुर्बलाननुसेति ॥ अत्रबाहुस्पर्शलाभप्रयुक्तोल्लासादिसाधारणविशेषणबलाज्जयलक्ष्मीःतत्कान्तोनायिकात्वेनाप्रस्तुतरूपतयागम्यतइतिसमासोक्तिरलङ्कारः ॥

समाहरणम् । न॰ समाहारे ॥
समाहारः । पुं॰ । समुच्चये । सम्मुदायकरणे । एकत्रकरणे । बहूनांभिन्नानांवाक्यव्यापारेणबुद्ध्यावापङ्क्तीकरणे । त्रिभुवनत्रयाद्यपेक्षीकरणे । सङ्क्षेपे॥ सम्हृते । संहतिप्रधानेचार्थे विशेषे ॥ यथा छत्रोपानहम्वाक्त्वचम् । शमीदृषदमिति ॥ अत्र संहतेरेकत्वादेकवचनं नित्यक्लीबतावभवतो ॥ समाहरणम् । हृञ् । घञ् । सम्यगाहारे ॥
समाहितः । त्रि॰ यतात्मनि । अनन्यमनसि । समाहितत्वमेकाग्र्यंमनसः श्रवणादिषु ॥ समाधिस्थे ॥ उक्तसिद्धान्ते ॥ आहिते ॥ निर्विवादीकृते ॥ प्रतिज्ञाते । संस्कृते । अङ्गीकृते ॥ समाधीयते स्म । क्तः । दधातेर्हिः ॥ सम्यगाहितः स्थितो वा ॥ सावधाने ॥ अलङ्कारान्तरे ॥
समाहृतः । त्रि॰ सम्मीलिते ॥
समाहृतिः । स्त्री॰ सङ्ग्रहे । समाहरणम् । भावेक्तिन् ॥ एककर्तृकाणामनेककर्तृकाणांवाएकाभिप्रायाणांवाक्यानांसमाहरणे ॥ सङ्क्षिप्यते॰ सङ्क्षेपेणप्रतिपाद्यतेऽनया । क्तिन् ॥
समाहृयः । पुं॰ आह्वये । सङ्गरे ॥ आह्वाने ॥ प्राणिद्यूते । पशुभिः

पत्त्रिभिर्याद्यते ॥ तस्यनिषिद्धत्वं यथा । द्यूतंसमाह्वयञ्चैवराजाराष्ट्रान्निवारयेत् । राज्यान्तकरणावेतौ द्वौदोषौपृथिवीक्षिताम् ॥ प्रकाशमेततत्तास्कर्य्यंयद्देवनसमाह्वयौ । तयोर्नित्यंप्रतीघातेनृपतिर्यत्नवान्भवेत् ॥ अप्राणिभिर्यत्क्रियतेतल्लोकेद्यूतमुच्यते । प्राणिभिः क्रियतेयस्तुसविज्ञेयः समाह्वयः ॥ द्यूतंसमाह्वयञ्चैवयः कुर्यात्कारयेतवा । तान्सर्वान्घातयेद्राजाशूद्रांश्चद्विजलिङ्गिनइति ॥ स समाह्वयन्तोऽत्र । ह्वेञ्स्पर्द्धायाम् । पुंसीतिघः । बाहुलकात्त्वम् ॥

समाह्वा । स्त्री० गोजिह्वायाम् । गोजियालता० इ० भा० प्रसिद्धा ॥

समित् । अ० निन्दायाम् ॥

समित् । स्त्री० युद्धे । आयोधने । रणे ॥ समयनम् । इणगतौ । सम्पदादित्वात्क्विप् । तुक् ॥

समितः । त्रि० सङ्गते ॥ सम्यक्कृतः ॥

समिता । स्त्री० गोधूमचूर्णविशेषे । मयदा० इ० भा० प्र० ॥ यथा । गोधूमाधवलाधौताः कुट्टिताः शोषितास्ततः । प्रोक्षितायन्त्रनिष्पिष्टाश्चालिताः समितास्मृतेतिराजनिघण्टः ॥

समितिः । स्त्री० आजौ । सम्पराये । अभ्यामर्दे । सङ्गमे ॥ सभायाम् ॥ सङ्गमे ॥ साम्ये ॥ संहतौ ॥ सहविद्यमानामिलितेर्वासमितिः प्रमाऽस्याम् । समयनम् ॰ समीयतेवाऽस्याम् । इणगतौ । क्तिन् । समयन्त्यस्यांवा ॥

समितिञ्जयः । पुं० श्रीहरौ ॥ समितौयुद्धेजयति । जिजये । संज्ञायांभृतवृजीत्यादिनाखच्मुमागमः ॥ समितिंयुद्धंजयतीतिवा ॥

समितिनन्दनः । त्रि० युद्धेसमर्थे ॥ नन्दतीतिनन्दनः । समितौयुद्धेनन्दनः ॥

समिथः । पुं० वह्नौ ॥ समेति । इण० समीणाद्वतिथक् ॥ सङ्ग्रामे सम्यगेतिजयार्थमत्र ॥

समिद्धः । त्रि० प्रज्वलिते । सम्यग्दीप्ते । समिद्धेमाजाघ्रतीक्ष्णेऽहीतीतियथा ॥

समिद्वरः । पुं० किंशुकवृक्षे ॥

समित् । स्त्री० अग्निसन्दीपनार्थतृणकाष्ठादौ । इन्धने । एधसि । समिन्धने । इन्धन० इ० भा० प्र० ॥ समिध्यतेऽनया । ञिइन्धीदीप्तौ । सम्पदादित्वात्करणेक्विप् । नलोपः ॥ होमीयकाष्ठे ॥ तल्लक्षणं यथा । प्रादेशमात्रासमिधः सवल्कास्तु । ताभिरोः । समि धः

कल्पयेत्प्राज्ञ : सर्वकर्मसु सर्वदे तिमत्स्यपुराणम् ॥ छन्दोगपरिशिष्टेपि । नाङ्गुष्ठादधिकान्यूनासमित्स्थूलतयाक्वचित् । नविर्मुक्तत्वचार्चैवनसकोटानपाटिता ॥ प्रादेशान्नाधिकानोनानतथास्याद्विशाखिका । नसपत्रानिर्वीर्याहोमेषुचविजानतेति ॥ निषिद्धलक्षणंयथा । विशीर्णाविदलाह्रस्वावक्रा : स्थूलाद्विधाकृता : । कृमिदष्टाश्चदीर्घाश्चसमिधोनैवकारयेत् ॥ अत्र दोषोयथा । विशीर्णायु : क्षयंकुर्याद्विदलापुत्रनाशिनी । ह्रस्वानाशयतेपत्नीवक्रावन्धुविनाशिनी ॥ कृमिदष्टारोगकरीविद्वेषणकरीद्विधा । पशून्मारयतेदीर्घास्थूलाचार्थविनाशिनीतितन्त्रम् ॥ नवग्रहाणांसमिधोयथा । अर्क : पलाश : खदिरस्त्वपामार्गोऽथपिप्पल : उदुम्बर : शमीदूर्वा: कुशाश्चसमिध : क्रमादिति ॥

समिध : । पुं॰ असिताचिर्षि । अग्नौ ॥

समिन्धनम् । न॰ समिधि ॥

समिर : । पुं॰ वायौ ॥ इ॰ दे॰ च न्द्र : ॥

समी । स्त्री॰ शम्याम् । बीजगुप्त्याम् ॥ समति । षम॰ । अच् । गौरादि : ॥

समीकम् । न॰ साम्परायिके । युद्धे ॥ समनम् । षम॰ । अनीकादय श्चेतिकन् ॥ सम्यगयनंवा । ईगत्यां । बाहुलकात्क : ॥

समीक्षम् । न॰ साङ्ख्यशास्त्रे ॥

समीक्षणम् । न॰ सम्यङ्निरूपणे ॥ प्रेक्षणे ॥ सम्यक्प्रकारेणईक्षणं दर्शनम् ॥

समीक्षा । स्त्री॰ तत्त्वे ॥ बुद्धौ ॥ निभालने । समीक्षणे । दर्शने ॥ मीमांसाशास्त्रे ॥ सम्यगीक्षणमनयावा ॥ ईक्ष॰ । गुरोश्चेत्य : । टाप् ॥ यत्ने ॥

समीक्ष्य : । त्रि॰ समीक्षणीये । दर्शनीये ॥

समीक्ष्यमाण : । त्रि॰ प्रेक्ष्यमाणे ॥

समीर : । पुं॰ समुद्रे । अकूपारे ॥ संयन्तिऽस्मिन् । इण॰ । समीणइतिचट्दीर्घत्वञ्चधातो : ॥

समीची । स्त्री॰ मृग्याम् । एण्याम् ॥ वन्दनायाम् ॥ टित्वान्ङीप् ॥

समीचीनम् । न॰ सत्ये । ऋते । तथ्ये ॥ त्रि॰ तद्वति ॥ सम्यगेव । विभाषाञ्चेरदिक्स्त्रियामितिख : । सम : समि ॥ शोभने ॥

समीन : । त्रि॰ समाम॰ अभीष्टे॰ भृते॰ भूते॰ भाविनि । समाया : ख : ॥ मौनसहिते ॥

समीप : । त्रि॰ अव्यवहिते । निकटे

॥ सङ्गताआपीयस्मिन् । कप् । पूरिण्य : समासान्त : । दृव्यन्तरुपसर्गेभ्योपईत् ॥
समीपकम् । न० निकटे ॥
समीपता । स्त्री० समीपत्वे । सामीप्ये । नैकट्ये ॥
समीर : । पुं० मारुते । श्वसने । स्पर्शने । वायौ ॥ सम्यगीरयतिगच्छति । ईरयतिप्रेरयतिवा । ईरगतौकम्पनेच । अच् । स्त्रातिनक्षत्रे ॥ समीरणे ॥
समीरण : । पुं० श्वसने । नभस्वति । वाते । पवने ॥ सम्यगीरयति० गच्छति० सम्यगीरयतिप्रेरयतिवा । ईर० । युच्० ल्युर्वा ॥ पथिके । पान्थे ॥ फणिज्झके । मरुवके । मरुवा० इ० प्र० पुष्पवृक्षे ॥
समीरसार : । पुं० विल्वे ॥
समीरित : । त्रि० उद्दीपिते ॥ क्षिप्ते ॥ समीर्यतेस्म । ईर् । क्त : ॥
समीहन : । पुं० विष्णौ ॥ सृष्ट्याद्यर्थं समीहते । ईह० । नन्द्यादित्वाल्ल्यु : ॥
समीहा । स्त्री० वाञ्छायाम् ॥ सम्यगीहनमनया । ईह० । गुरोश्चहल: ॥
समीहित : । त्रि० वाञ्छिते ॥ सम्यक्ईहित : ॥
समुख: । त्रि० वाग्मिनि । वावदूके ॥
समुचित : । त्रि० यथायोग्ये । सम्यगुचित : ॥
समुच्चय : । पुं० सहावस्थानलक्षणे० एकाधिकरणे ॥ समाहारे, राशीकरणे । यथा । राशीकृतेवेणूनामसमाहार : समुच्चय : । चार्थविशेषे । परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वये ॥ यथागार्ग्योशास्त्रमपचतिपठतिचचैत्र : ॥ समुच्चयनम् । चिञ० । एरच् ॥ इन्दे ॥ अर्थालङ्कारभेदे । यथा । तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करंभवेत्० समुच्चयोऽसौ ॥ तस्य प्रस्तुतस्यकार्यस्य० एकस्मिन्साधकेस्थिते० साधकान्तराणियत्रसम्भवन्तिससमुच्चय : उदाहरणम् । दुर्वारा : स्मरमार्गणा : प्रियतमोदूरेमनोप्युत्सुकंगाढंप्रेमनवंवयोऽतिकठिना : प्राणा : कुलंनिर्मलम् । स्त्रीत्वंधैर्यविरोधिमन्मथसुहृत्काल : कृतान्तोक्षमीनोसख्यश्चतुरा : कथंनुविरह : सोढव्यइत्थंशठ : ॥ अत्रविरहासहत्वंस्मरमार्गणाएवकुर्वते० तदुप्रियतमदूरस्थित्याद्युपात्तम् । एषएवसमुच्चय:० सद्योगे०ऽसद्योगे० सदसद्योगेचपर्यवस्यतीतिनपृथग्लक्ष्यते । तथाहि । कुलममलिनंभद्रामूर्त्तिर्मति: श्रुतशालिनीभुजबलमलंस्फीतालक्ष्मी : प्रभुत्वमखण्डितम् । प्र

क्रतिसुभगाऽर्चितेभाबाऽर्मीभिरयं जनोब्रजतिसुतरांदर्पं राजंसएवतबा : क्षुधा : ॥ अवसतांयोग : उदाहरणे स्वसतांयोग : यथोदितसधूसरो॰ गलितयौवनाकामिनी॰ सरोविगतवारिजं॰ मुखमनक्षरं स्वाकृती । प्रभुर्द्धनपरायण : ॰ सततदुर्गत : सज्जनोऽनृपाङ्गणगत : खलो॰ मनसिसप्तशल्यानिमे ॥ अवशशिनिधूसरेशल्ये शल्यान्तरापीतिशोभनशोभायोग : ॥ द्वितीय : समुच्चयोयथा । सत्त्वन्यायुगपद्यागुणक्रिया : । गुणौचक्रियेगुणक्रिया : । क्रमेणोदाहरणम् । विदलितसकलारिकुलंतवबलमिदमभवदाशुविमलञ्च । प्रखलमुखानिनराधिपमलिनानितथानिजातानि ॥ अथमेकपदेतयावियोग : प्रियया चोपगत : सुदु : सहोमे । नवबारिधरोदयादहोभिर्भवितव्यञ्च निरातपत्वरम्यै : कलुषञ्चतवाहितेष्वकस्मात्सितपङ्कजसोदरश्रिचक्षु : । पतितञ्चमहीपतेन्द्रतेषां वपुषिप्रस्फुटमापदांकटाक्षै : ॥ बहूनांसमाहारे ॥ खलेकपोतन्यायेनबहूनांकार्यसाधने । कारणानां समुद्योग : सहितीय : समुच्चय : ।

समुच्छेद : । पुं॰ विनाशे ।

समुच्छ्रय : । पुं॰ विरोधे । वैरे ॥ उन्नते । उन्नतौ ॥ सङ्‌पूर्वकः श्रयणम् । श्रिञ्॰ । एरच् ॥

समुच्छ्राय : । पुं॰ समुच्छ्रये ॥ सम्यगुच्छ्राय : ॥

समुच्छ्रित : । त्रि॰ उच्चे ॥

समुज्झित : । त्रि॰ त्यक्ते ॥ समुज्झ्यतेस्म । उज्झउत्सर्गे । क्त : ॥

समुत्कीर्ण : । त्रि॰ सम्यगुल्लिखिते । विद्धे ॥

समुत्क्रम : । पुं॰ ऊर्द्धगमने ॥ सम्यगुत्क्रमे ॥

समुत्क्रोश : । पुं॰ कुररपक्षिणि ॥ सम्यमुत्क्रोशति । क्रुश॰ । अच् ॥

समुत्त : । त्रि॰ क्लिन्ने ॥ समुनत्ति । उन्दीक्लेदने । अकर्मकत्वात्कर्त्तरिक्त : । नुदविदेतिपक्षेनत्वाऽभाव : ॥

समुत्थ : । त्रि॰ समुद्भवे ॥ समुत्थिते ॥

समुत्थानम् । न॰ समुद्योगे । व्याधीनांनिर्णये । ऊर्द्धगमने ॥ सम्यक्प्रकारेणोत्थाने । उठावना॰ उभाकर्ना॰ इ॰ भा॰ । यथा । इन्द्रध्वजसमुत्थानं प्रमादान्नकृतंयदि । तदाद्वादशमेवर्षे कर्त्तव्यंनान्तरापुन : ॥

समुत्थित : । त्रि॰ सम्यगुत्थिते ॥

समुत्पतनम् । न॰ कूर्दने ।

समुत्पन्न : । त्रि॰ समुद्भूते ॥

समुत्पिञ्ज : । त्रि० अत्यंतव्याकुले ॥ समुत्पिञ्जते । पिजिहिंसायाम् । अच् ॥ पुं० भृशमाकुलसैन्ये । पिञ्जले ॥

समुत्सुक : । त्रि० अनुरक्ते । सम्यगुत्कण्ठिते ॥ सम्यगिष्टार्थोद्युक्ते ।

समुद् । त्रि० सानन्दे ॥ मुदासहवर्त्तते द्व० ॥

समुद्धृत : । त्रि० कूपादेरुद्धृतजलादौ । उद्धृते । समुद्ध्रियतेस्म । अस्य० । क्त : ॥

समुदय : । पुं० सङ्घे । गणे । समूहे ॥ संयुगे । रणे । युद्धे ॥ समुद्गमे ॥ समुदीयते० समुदयतेवा । इण० । अयगतौवा । एरच् ० । पचाद्यच्वा ॥ समैरुदये ॥ राज्ञांधान्यहिरण्याद्युत्पत्तिस्थाने ॥ समुदयन्ति० उत्पद्यन्ते० अस्मादर्था : । एरच् ॥ दिने । न० लग्ने ॥

समुदागम : । पुं० समन्ताज्ज्ञाने ॥

समुदाचार : । पुं० अभिप्राये । आशये ॥

समुदाय : । पुं० समूहे ॥ युद्धे ॥ समुदायते । अयगतौ । आङ्पूर्व : । घञ् । समुदयनम् । अवदानादौ घञ्वा ॥ पृष्ठस्थायिबले ॥ उद्गमे ॥

समुद्दित : । त्रि० समुत्पतिते समुद्गते ॥ सम्यक्प्रकारेणकथिते ॥

समुदीषणम् । न० पक्षिणांपरस्परस्पर्द्धयागमने

समुद्ग : । पुं० सम्पुटके ॥ समुद्गच्छति । गम्लृ० । अन्येष्वपीतिड : ॥ यमकभेदे ॥ अर्द्धाभ्यास : समुद्ग : स्यादस्यभेदास्त्रयोमता: ॥ त्रि० मुद्गसहिते ॥

समुद्गक : । पुं० सम्पुटके । भूषणाद्यावपने ॥ समुद्गच्छति । गम्लृ० । अन्येष्वपीतिड : । स्वार्थेकन् ॥

समुद्गत : । त्रि० उत्पतिष्णौ ॥

समुद्गम : । पुं० ऊर्ध्वगतौ ॥ उत्पत्तौ ॥

समुद्गयमकम् । न० चित्रकाव्यप्रभेदे ॥ यथा । अयशोभिदुरालोके कोपधामरणाहते ॥ अयशोभिदुरा० लोके० कोपधा० मरणाहते ॥ अस्यार्थ : । अय: शुभावहोविधि:० अयशोभी० भाग्यवान् । सचासौदुरालोक:० तेजस्वित्वाद्दुर्दर्शश्चेतिविशेषणसमास:० तस्मिन् । कोपधामकोपाश्रय : कुपितइत्यर्थ : । अतएवरणाहत:० रणार्थीत्यर्थ : । कोपधामचासौ० रणाहतश्चतस्मिन्० एवंविधेवीरलोके । अयशोभिदुरा० स्वाम्यनादरनिमित्ता

पकोर्त्तिनिवर्त्तिका॰ उपधा॰ उपायः॰ मरणाद्दते॰ प्राणत्यागं विमेत्यर्थः। का॰ नकापीत्यर्थः॥
समुद्गीतम्। त्रि॰ उच्चैर्गीते॥
समुद्गीर्णः। त्रि॰ वमिते॥ उत्तोलिते। कथिते॥
समुद्धतः। त्रि॰ अविनीते॥ समुद्गीर्णे॥ समुद्धन्तिस्म॰ समुद्धन्यतिस्मवा। हन्तेर्गत्यर्थत्वात्कर्त्तरि क्तः कर्मणिवा॥
समुद्धरणम्। न॰ उद्धरणे॥ सम्यगुद्ध्रियते। उद्धरतेर्ल्युट्॰ भावेवा॥ वान्तान्ने॥ उन्नये॥ भुक्तोज्झितोन्मूलितयोः स्यादुद्धरणमुन्नयेइतिरभसः॥
समुद्धर्त्ता। त्रि॰ उद्धारकर्त्तरि॥ ऋणशोधके॥ सम्यगनायासेन॰ उत्॰ ऊर्ध्वे सर्वबाधावधिभूतेशुद्धेब्रह्मणिधर्त्ता॰ धारयिता॥ उन्मूलयितरि॥ यथा॥ वनस्पतीनांसमुद्धर्त्तुरिति रघुः॥
समुद्धृतः। त्रि॰ समुत्क्षिप्ते॥ अपनीते॥ उत्थापिते॥ यथा। जलौघमग्नासचराचराधरा विषाणकोट्याखिलविश्वमूर्त्तिना। समुद्धृतायेनवराहरूपिणासमेस्वयम्भूर्भगवान्प्रसीदतु॥ सम्यक्प्रकारेणउद्धृतः॥
समुद्भवः। पुं॰ उत्पत्तौ॥ कारणे
सम्यगुद्भवः। समुद्भवत्यस्मात्॥ अपादानार्थे॥ भुवोप्‌॥
समुद्भूतः। त्रि॰ समुत्पन्ने॥
समुद्रः। पुं॰ अम्भोधौ। तत्पर्यायाः। समुद्रो॰ ऽब्धिरकूपारः॰ पारावारः॰ सरित्पतिः। उदन्वानुदधि॰ सिन्धुः॰ सरस्वान्॰ सागरो॰ ऽर्णवः। रत्नाकरो॰ जलनिधि॰ र्यादःपति॰ रपाम्पतिरिति। समुनक्ति॰ उन्दी॰। स्फायीतिरक्॥ चन्द्रोदयेसम्यक्उन्दन्तिक्लिद्यन्तिअपोयत्रवा। अपाम्वैसमुन्दनससमुद्रइतिस्मतद्वायुपुराणम्॥ समीचीनाः॰ उद्राः॰ जलचरविशेषायस्मिन्निति वा॥ सहमुद्रयामर्यादयावर्त्तते॰ इतिवा। परमात्मनि॥ समुत्पद्यभूतानिद्रवंतिलयंगच्छन्त्यस्मिन्निति व्याख्यानात्॥ सङ्ख्याविशेषे॥ अन्त्यादिंशतिगुणः समुद्रइति रामायणटीकायांमाहेश्वरीव्याख्यानात्॥ ठगणस्यद्वितीयपर्याये आदिगुरुचिकले॰ऽऽ।। त्रि॰ मुद्रयासहितेपत्रादौ॥
समुद्रकफः। पुं॰ समुद्रफेने॥ समुद्रस्यकफइव॥
समुद्रकान्ता। स्त्री॰ नद्याम्॥ समुद्रस्यकान्ता। समुद्रः कान्तोयस्यावा॥ पृक्कायाम्॥

समुद्रगा । स्त्री॰ नद्याम् ॥
समुद्रगृहम् । न॰ जलयन्त्रालये । फुहारिकाघर॰ इ॰ भा॰ वि॰ शेष : ॥
समुद्रचुलुक : । पुं॰ अगस्त्यमुनौ ॥ समुद्रचुलुकोगण्डूषोस्य ॥
समुद्रदयिता । स्त्री॰ नद्याम् ॥
समुद्रनवनीतम् । न॰ पीयूषे ॥ चन्द्रे ॥ समुद्रस्यनवनीतमिव ॥
समुद्रनेमि : । स्त्री॰ समुद्रमेखलायाम् । भूमौ ॥ समुद्रोनेमिरिवनेमिरस्या : ॥
समुद्रफलम् । न॰ अब्धिफले । औषधविशेषे ॥ तद्गुणायथा । फलंसमुद्रस्यकटूष्णकारि॰ वातापहंभूतनिरोधकारि । त्रिदोषदावानलदोषहारिकफामयभ्रान्तिनिरोधकारीतिरा॰ नि॰ वर्ग : ॥
समुद्रफेन : । पुं॰ फेने । अब्धिकफे । डिण्डीरे ॥ समुद्रफेनश्चक्षुष्योलेखन : शीतल : सर. । कषायोविषपित्तघ्न : कर्णरुक्कफहृल्लघु ॥
समुद्रमेखला । स्त्री॰ भुवि । अचलायाम् । विश्वम्भरायाम् ॥ स्थिरायाम् ॥ समुद्रोमेखलायस्या : ॥
समुद्रयात्रा । स्त्री॰ पोतेनसमुद्रगमने । समुद्रयात्राद्य : कलौ निषिद्धायथा । समुद्रयात्रास्वीकार : कमण्डलुविधारणम् । द्विजानामसवर्णासुकन्यासूपयमस्तथा । देवरेणसुतोत्पत्तिर्मधुपर्केपशोर्वध : । मांसादनंतथाश्राद्धेवानप्रस्थाश्रमस्तथा ॥ दत्तायाश्चैवकन्यायापुनर्दानंवरस्यच । दीर्घकालंब्रह्मचर्यंनरमेधाश्वमेधकौ ॥ महाप्रस्थानगमनंगोमेधश्चतथामख : । इमान्धर्मान्कलियुगेवर्ज्यानाहुर्मनीषिण इतिबृहन्नारदीयम् ॥ अपिच । एतानिलोकगुप्तार्थंकलेरादौमहात्मभि : । निवर्त्तितानिकर्माणिव्यवस्था॰ पूर्वकंबुधैरिति ॥
समुद्रयानम् । न॰ पोते । वहित्रे ॥ यथा । समुद्रयानेरत्नानिमहामूल्यानिसाधुभि : । रत्नपरीक्षकै : सार्द्धमानयिष्येबहूनिचेतिवराहपुराणम् ॥
समुद्रयायी । त्रि॰ समुद्रेवहित्रादिनाद्वीपान्तरगामिनिजने ॥ समुद्रयायीबन्दीचतैलिक : कूटकारक : वृत्तिमनु : ॥ समुद्रयायिभि : सार्द्धंसंविदंसूच्यनिर्गतइतिवराहपुराणं ॥
समुद्ररसना । स्त्री॰ पृथ्व्याम् ॥ समुद्रोरसनाकाञ्चीयस्या : ॥
समुद्रलवणम् । न॰ कौंडके । त्रिकू

टे । सामुद्रे ॥ समुद्रस्थलवणम् । समुद्रजलजातं लवणं वा ॥

समुद्रवह्निः । पुं॰ वाडवे । वडवानले ॥

समुद्रविजयः । पुं॰ दशार्हनृपविशेषे ॥

समुद्रसिन्धुसङ्गमः । पुं॰ । तीर्थविशेषे ॥

समुद्रसुभगा । स्त्री॰ गङ्गायाम् ॥

समुद्रा । स्त्री॰ शम्यां ॥ शम्यां ॥

समुद्रान्तम् । न॰ जातीफले ॥ अध्यवसाने ॥

समुद्रान्ता । स्त्री॰ तुण्डिकेय्याम् कार्पास्याम् ॥ समुद्रोन्तोयस्याः ॥ यद्वा । मुद्रयासहवर्त्तमानोन्तः समीपेयस्याः । आच्छादकत्वात् ॥ दुरालभायाम् । यासे । यवासे ॥ समुद्रोन्तोऽस्त्यस्याः । अर्शआद्यच् ॥ समुद्रोन्तोऽस्यावा ॥ मरुन्मालायाम् ॥ पृक्कायाम् ॥ समुद्रोंतोऽस्याः ॥

समुद्राम्बरा । स्त्री॰ पृथिव्याम् । अचलायाम् ॥ समुद्रोम्बरंवसनं यस्याः ॥

समुद्रायणा । स्त्री॰ नद्याम् । सरिति । समुद्रोऽयनं गतिर्यस्याः ॥

समुद्रारुः । पुं॰ ग्राहविशेषे । सेतुबन्धे ॥ तिमिङ्गिले ॥

समुद्रेकः । पुं॰ प्रादुर्भावे ॥

समुन्दनम् । न॰ आर्द्रीभावे । हैमे । स्नेहे । उन्दी॰ ल्युट् ॥

समुन्नः । त्रि॰ आर्द्रे । समनत्ति । उन्दी॰ अकर्मकत्वात् कर्त्तरिक्तः । नुदविदेतिपक्षे नत्वम् । सम्यगुन्नं क्लिन्नं वा ॥

समुन्नतः । त्रि॰ समुन्नद्धे ॥ सम्भविशेषे । द्रु॰ धरणि ः ॥

समुन्नतिः । स्त्री॰ समुच्छ्रये । उत्सेधे ॥ अतिवृद्धौ ॥

समुन्नद्धः । त्रि॰ समुद्धृते ॥ पण्डितमन्ये ॥ गर्विते । दृप्ते ॥ ऊर्ध्ववद्धे ॥ प्रभौ ॥

समुन्नयः । पुं॰ समुच्छ्रये

समुन्नाहः । पुं॰ उच्छ्राये ॥

समुपक्रमः । पुं॰ आरम्भे ॥ समुपक्रमणम् । क्रमु॰ । घञ् ॥

समुपजोषम् । अ॰ आनन्दे । काल्यार्थे ॥ समुपजोषणम् । जुषीप्रीतिसेवनयोः । अम्प्रत्ययः ॥

समुपस्थितः । त्रि॰ प्राप्ते ॥

समुपेतः । त्रि॰ सम्प्राप्ते ॥

समुपेयिवान् । त्रि॰ सम्यगुपगते ॥

समुल्लसत् । त्रि॰ सम्यगुल्लासयुक्ते ॥ यथा । दरस्मितसमुल्लसद्दनकान्तिपूरामृतैर्भवानलविभर्जितानक्लिष्टमूर्जयन्तीनरान् । चिदेकमयचन्द्रिकाचयचमत्कृतिन्नन्वतीतमोऽतु ममगंतमोः सर्पदिग्नन्तोरङ्गना ॥

समुल्लिखन् । त्रि॰ पादादिनाभूमि

खननकर्त्तरि ॥

समुल्लेख : । पुं० सम्यक्क्षयने । सम्यगुल्लारणे ॥

समूढ : । त्रि० पुञ्जिते । भुग्ने ॥ सद्योजाते ॥ अनुप्लुते ॥ शोधिते ॥ दमिते ॥ ऊढे ॥ विवाहिते ॥

समूरु : । पुं० अजिनयोनौ । हरिणप्रभेदे ॥ शोभनावूरूयस्य ॥

समूल : । त्रि० सप्रमाणके ।' मूलसहिते ॥ मूलेनसहवर्त्तमानइति तथा ॥

समूह : । पुं० व्यूहे । सन्दोहे । व्रजे । समुदाये । समूहौ ॥ ऊह० घञ् ॥

समूहक्षार : । पुं० क्षारनिकुरम्बे ॥

समूहगन्धम् । न० जवादिनि । गन्धाढ्य ॥

समूहनी । स्त्री० ऊहन्याम् । सम्मार्ज्जन्याम् ॥

समूहित : । त्रि० एकत्रीकृते ॥

समूह्य : । पुं० यज्ञाग्नौ । परिचाय्ये । उपचाय्ये ॥ समुह्यते० समूह्यतेवा । वहप्रापणे० ऊहवितर्केवा । अग्नौपरिचाय्योपचाय्यसमूह्याइतिसाधु : । अग्निधारणार्थस्थलविशेषे ॥

समृद्ध : । त्रि० अधिकवृद्धौ । समृद्धियुक्ते ॥ समृध्नोतिस्म । ऋधुवृद्धौ । अकर्मकत्वात्कर्त्तरिक्त : ॥

समृद्धि: । स्त्री० महद्वृद्धौ । एधायाम् । धनसम्पत्तौ । अपेक्षितार्थसम्पत्तौ ॥ समर्द्धनम् । ऋधु० । क्तिन् ॥

समेत : । त्रि० मिलिते । संयुक्ते ॥ यथा । श्रीनाथेनसमेत:स्वच्छन्दंकुरुकेलिमिति ॥ अपिच । नामसमेतंकृतसङ्केतंवादयतेमृदुवेणुमिति ॥

समेत्य । अ० मिलित्वेत्यर्थे ॥

समेधित : । त्रि० सम्यग्वर्धिते ॥

समोदकम् । न० मथिताधाम्बुदधिनि । उदश्विति ॥ सममुदकंयस्मिन् ॥

समोसा । पुं० स्वनाम्नेवलोकभाषायाम् सूदशास्त्रेअप्रसिद्धेखाद्यविशेषे ॥ निर्माणप्रकारोयथा : मण्डकाख्यकृतापट्टीपूरणेनप्रपूरिता । त्रिकोणशृङ्गाटकाकारंसम्बिलिख्योत्कनिष्ठया । घृतेपचेत्समोसेतिनाम्नाचप्रोतिसूपकै : ॥ गुरुच्यंवातजिद्बल्यंवृष्यंपित्तापहंगुरु । श्लेष्मलश्चगुणोयेोहिमांसभेदात्सजायते ॥

सम्पत्ति : । स्त्री० विभवोत्कर्षे । लक्ष्म्याम् । सम्पदि ॥ साचैशानपत्नी यथा । ईशानपत्नीसम्पत्ति: पूजिता असुरैर्नरै: । सर्वलोकाद्दरिद्राश्चजगत्सर्वयाविनेतिभागशतम् ॥ दृष्टप्राप्तौ ॥ सम्पदनमनयावा । पदगतौ । स्त्रियांक्तिन् । मुक्तौ । ऋद्धिनामौषधौ ॥ गुणोत्कर्षे ॥

सम्पत्०द०। स्त्री० भूती॥ गुणोत्कर्षे॥ हारभेदे॥ सम्पद्गमनमयावा। पद०। सम्पदादित्वात्क्विप्॥ अथसम्पद उच्यन्ते खल्पेकर्मविकर्मणः। महतस्त्विन्तनं सम्पत्तया प्राप्यंमहाफलम्॥ इतीयतारायाम्॥ वासनासन्ततीशरीरारम्भकालेपुण्यादिकर्मभिरभिव्यक्तायाम्। साद्विधा। दैवी० आसुरीति भेदात्। अनयोर्विस्तारस्तुभगवद्गीतायांषोडशाध्यायेयथा। श्रीभगवानुवाच। अभयंसत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः। दानंदमश्चयज्ञश्चस्वाध्यायस्तपआर्जवम्। अहिंसासत्यमक्रोधस्त्यागश्शान्तिरपैशुनम्। दयाभूतेष्वलोलुप्त्वंमार्दवं ह्रीरचापलम्॥ तेजः क्षमाधृतिः शौचमद्रोहोनातिमानिता। भवन्तिसम्पदंदैवीमभिजातस्यभारत॥ दम्भोदर्पोभिमानश्चक्रोधः पारुष्यमेवच। अज्ञानश्चाभिजातस्य पार्थसम्पदमासुरीम्॥ दैवीसम्पद्विमोक्षायनिबन्धायासुरीमता। माशुचः सम्पदंदैवीमभिजातोसि पाण्डव॥ द्वौभूतसर्गौलोकेस्मिन् दैवआसुरएवच। दैवोविस्तरशः प्रोक्तआसुरंपार्थमेशृणु॥ प्रवृत्तिञ्चनिवृत्तिञ्चजनानविदुरासुराः। नशौचंनापिचाचारोनसत्यंतेषुविद्यते॥ असत्यमप्रतिष्ठन्तेजगदाहुरनीश्वरम्। अपरस्परसम्भूतंकिमन्यत्कामहैतुकम्॥ एतांदृष्टिमवष्टभ्यनष्टात्मानोऽल्पबुद्धयः। प्रभवन्त्युग्रकर्माणः क्षयायजगतोऽहिताः॥ काममाश्रित्यदुष्पूरंदम्भमानमदान्विताः। मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्त्तन्तेऽशुचिव्रताः॥ १०॥ चिन्तामपरिमेयाञ्चप्रलयान्तामुपाश्रिताः। कामोपभोगपरमाएतावदितिनिश्चिताः॥ आशापाशशतैर्बद्धाः कामक्रोधपरायणाः। ईहन्तेकामभोगार्थमन्यायेनार्थसञ्चयान्॥ इदमद्यमयालब्धमिदंप्राप्स्येमनोरथम्। इदमस्तीदमपिमेभविष्यतिपुनर्धनम्॥ असौमयाहतः शत्रुर्हनिष्येचापरानपि। ईश्वरोहमहंभोगीसिद्धोहंबलवान्सुखी॥ आढ्योभिजनवानस्मिकोन्योस्तिसदृशोमया। यक्ष्येदास्यामिमोदिष्यइत्यज्ञानविमोहिताः॥ अनेकचित्तविभ्रान्तामोहजालसमावृताः॥ प्रसक्ताकामभोगेषुपतन्तिनरकेऽशुचौ॥ आत्मसम्भाविताःस्तब्धाधनमानमदान्विताः। यजन्तेनामयज्ञैस्तेदम्भेनाविधिपूर्वकम्॥ अहङ्कारंबलंदर्पंकामंक्रोधञ्चसंश्रिताः। मामात्मपरदेहेषुप्रद्विषन्तोऽभ्यसूयकाः॥

तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः । आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ तस्माच्छास्त्रं प्रमाणन्ते कार्य्याकार्य्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि ॥ २४ ॥ इति ॥

सम्पदम् । न० समेपदयुगे ॥

सम्पद्यमानः । त्रि० मिलिते ॥

सम्पद्या । स्त्री० अलक्ते । लाक्षारसे ॥

सम्पन्नः । त्रि० सम्पत्तिसहिते । समृद्धे ॥ साधिते ॥ सङ्गते । एकीभूते ॥ विशिष्टे ॥ सम्पद्यतेस्म । पद० । क्तः । रदाभ्यामिति नत्वम् ॥

सम्परायः । पुं० समीके । युद्धे ॥ आपदि ॥ उत्तरकाले ॥ सम्यक् परेत्कालिकं यत्रेति सम्परायः ॰ परलोकस्तस्मिन् ॰ इति व्याख्यातारः ॥ सम्परायणम् । इण् ॰ । एरच् अय० इणगतौ वा । अच् ।

सम्परायकम् । ) न० युद्धे ॥
सम्परायिकम् । )

सम्परेतः । त्रि० मृते ॥

सम्पर्कः । पुं० मेलके ॥ रतौ । सुरते ॥ सम्बन्धे । संयोगे ॥

सम्पर्की । त्रि० सम्पर्कविशिष्टे ॥

सम्पाकः । पुं० आरग्वधे ॥ सम्यक् पाके ॥ त्रि० तर्कके । याचके ॥ धृष्टे ॥ सम्यक्पाकोऽस्य ॥ सम्यक् पचनम् ॰ सम्यक् पच्यतेऽनेन वा । डुपचष् ० । हलश्चेति घञ् ॥

सम्पाटः । पुं० तर्कौ ॥ इ० श० माला ॥

सम्पातः । पुं० पक्षिगतविशेषे । पतने ॥ सम्भूयपतने ॥ सम्पारे ॥ सम्यक् पतनम् । पत्लृ० । घञ् ॥ सम्यक्पतन्त्यनेनेति व्युत्पत्त्या० कर्म्मणः क्षये ॥

सम्पातिः । पुं० पक्षिराजे । अरुणात्मजे० जटायुषोज्येष्ठभ्रातरि ॥ सम्यक्पाति । पातेरतिः ॥

सम्पातिकः । पुं० सम्पातौ ॥

सम्पादकः । त्रि० निष्पादके । सम्पन्नकर्त्तरि ॥ धनादिसङ्ग्राहके ॥

सम्पादनम् । न० निष्पादने । मार्ज्जने ॥

सम्पादितः । त्रि० योजिते ॥ स

स्थिते ॥

सम्पीडः । पुं॰ मोटने ॥

सम्पीडनम् । न॰ सम्यक् प्रकारेणव्यथने ॥

सम्पुटः । पुं॰ कुरुवके ॥ समुद्गके ॥ पेटके । एकजातीयोभयमध्यवर्त्तिनि ॥ रतिबन्धविशेषे ॥ यथा । सम्प्रसार्य्योभयोपाद्दौशय्यागतकपोलकः । भगलिङ्गस्य संयोगाद्रमते सम्पुटोह्यसः ॥

सम्पुटकः । पुं॰ समुद्गके । भूषणाद्यावपने । ङव्ता॰ ह॰ भा॰ प्र॰ । सम्पुच्यते । पुटसंश्लेषणे । क्तुन् ॥

सम्पूर्णः । पुं॰ रागजातिविशेषे ॥ यथा । औडवः पञ्चभिः प्रोक्तः स्वरैः षड्भिस्तुषाडवः । सम्पूर्णः सप्तभिः प्रोक्तोरागजातिस्त्रिधामतेति ॥ त्रि॰ न्यूनत्वदोषरहिते । कृत्स्ने । परिपूर्णे ॥ साङ्गे ॥ सम्पूर्य्यतेस्म । पूरी॰ । ण्यन्तः । कर्त्तरि॰ कर्म्मणिषान्तः ॥

सम्पृक्तः । त्रि॰ खचिते । मिश्रिते । आरब्धे । कबरे । मिश्रे ॥ संयुक्ते ॥ संसृष्टे । सम्पृच्यतेस्म । पृची॰ । क्तः ॥

सम्प्रचालः । पुं॰ तपोविशेषलक्षसंस्त्रीवानप्रस्थविशेषे ॥

सम्प्रज्ञातः । पुं॰ समाधिप्रभेदे ॥ त्रि॰ सम्यक् प्रकर्षेणज्ञाते ॥

सम्प्रज्ञातसमाधिः । पुं॰ सविकल्पकसमाधौ ॥ ब्रह्माहमस्मीतिचिन्तयतो॰ यावच्चेतोव्यापृतिस्तावत्सम्प्रज्ञातसमाधिः ॥

सम्प्रतापनः । पुं॰ कुम्भीपाके ॥

सम्प्रति । अ॰ अधुनार्थे ॥ सम्॰ प्रति॰ एतयोः समाहारद्वन्द्वः ॥ न्याय्ये ॥

सम्प्रतिः । पुं॰ पूर्व्वकल्पस्थार्हद्भेदे ॥

सम्प्रतिपत्तिः । स्त्री॰ उत्तरविशेषे । साध्यस्यसत्यकथने ॥ अर्थ्याभियोगं प्रत्यर्थीयदितं प्रतिपद्यते । सातु सम्प्रतिपत्तिः स्यात्शास्त्रविद्भिस्तदाहृता । निश्चये ॥ उत्पत्तौ ॥

सम्प्रतिपन्नः । त्रि॰ सम्यग्ज्ञाते ॥

सम्प्रतिष्ठा । स्त्री॰ स्थितौ ॥

सम्प्रतीतिः । स्त्री॰ सम्यक्ख्यातौ ॥ सम्यक्ज्ञाने ॥

सम्प्रत्ययः । पुं॰ आदरे । भक्त्यतिशये ॥ ज्ञाने । निश्चये ॥ यथासंज्ञासम्प्रत्ययायसंज्ञात्वनिश्चयायेतितदर्थः ॥

सम्प्रदाता । त्रि॰ दातरि । सम्प्रदानकर्त्तरि ॥

सम्प्रदानम् । न॰ दानपात्रे । चतुर्थीकारके । त्यागोद्देश्ये ॥ सम्यक् प्रकर्षेणदीयतेऽस्मै तत् । सम्यक् प्रकृष्टदानं वा ॥

सम्प्रदायः। पुं॰ गुरुपरम्परागतसदुपदेशे। आम्नाये॥ आगमोक्ता वैष्णवसम्प्रदाया यथा। श्रीशिव उवाच। वैखानसः सामवेदादौ श्रीराधावल्लभी तथा। गोकुलेशो महेशानि तथा वृन्दावनी भवेत्॥ पाञ्चरात्रः पञ्चमः स्यात् षष्ठः श्रीवीरवैष्णवः। रामानन्दी हरिव्यासी निम्बार्कश्च महेश्वरि॥ तथा भागवतो देवि दश भेदाः प्रकीर्त्तिताः। शिखी मुण्डी जटी चैव बहिश्चिद्दण्डी क्रमेण च॥ एकदण्डी महेशानि वीरश्चैव तथैव च। सप्त पाशुपताः प्रोक्ता दश धा वैष्णवा मताः॥ एतेषां लक्षणं देवि शृणुष्वैकेन शाम्भवि। वेवेष्टि सर्वं संव्याप्य स्तप्रति स वैष्णवः॥ वैखानसादिदीक्षाद्यैर्भूषितः स्मार्त्तवैष्णवः। श्रीराधावल्लभं देवि शृणुष्वैकेन शाम्भवि॥ वैष्णवाचारनिरतो विष्णुतन्त्रैकपारगः। अनन्यचेताः शान्तात्मा विष्णुचिन्तापरायणः॥ श्रीराधावल्लभो देवि गोकुलेशं शृणु प्रिये। नानाभूषणसम्पन्नो नानासुगन्धिभूषितः। गवां कुलं प्रीणयिता केलिकृष्णस्वरूपधृक्। शरीरमर्थं प्राणांश्च तन्निवेदनकारकः॥ अन्तः शक्तिपरो देवि बहिर्वैष्णवरूपधृक्। गन्धर्वाचारनिरतो लतावेष्टनतत्परः॥ सम्प्रदायो गोकुलेशः सर्वसिद्धिकरो भुवि। वृन्दावनाख्यं देवेशि शृणुष्वैकेन साम्प्रतम्॥ विगताशः प्रसन्नात्मा विष्णुभक्तिपरायणः। कामिनीसङ्गचपलो वनक्रीडाविनोदधृक्॥ सौगन्ध्यभूषिततनुः स्त्रीध्यानैकपरायणः। विष्णुसारूप्यतत्त्वज्ञः प्रोक्तो वृन्दावनी शिवे॥ पाञ्चरात्रो महेशानि तथैव वीरवैष्णवः। पूर्वमेव महेशानि कीर्त्तितः परमेश्वरि॥ राशक्तिरितविख्यातामः शिवः परिकीर्त्तितः। सदानन्दो शान्तचित्तो प्रसन्नात्मा विचारधृक्॥ सर्वसमरूपश्च रामानन्दी प्रकीर्त्तितः। हरिव्यासं महेशानि यथावदवधारय॥ पापसंहरणाशक्तो विष्णुभक्तो जितेन्द्रियः। यमादिनियमैर्युक्तो भक्त्याचारपरायणः॥ स्वोपयोगफलत्यागी परकार्यपरायणः। हरिव्यासो महेशानि शिवभक्तिस्वरूपधृक्॥ निम्बार्काख्यं सम्प्रदायं शृणुष्वैकेन साम्प्रतम्। नित्यार्चनक्रमासक्तः स्वतन्त्रैकपरायणः॥ बाह्यपूजादिनिरतो नान्यभक्तः प्रसन्नधीः। आर्यपथान्वितः स्वच्छः स्वच्छन्दाचारतत्परः॥ स्वतन्त्रस्मार्तविद्धो निम्बार्को भगवान् हरिः॥ अथ भागवतं देवि कथयामि शृणु प्रिये। विष्णुभक्त्यैकनिपुणो विजितात्मा

प्रसन्नधी : ॥ स्मातेगशन्विताोदेवि तदन्याचारतत्पर : । आर्यपद्मान्वितोदेवितथास्वरूपवेशधृक्॥ शैवश्चैव तस्यसङ्गात्पुन : स्मातपरायण : । केवलंविष्णुतत्त्वज्ञः प्रोक्तोभागवत: शिवे ॥ इतिश्रीभक्तिसङ्गमतन्त्रे १ खण्डे ८ पटल : ॥ पद्मपुराणोक्ता वैष्णवसम्प्रदायभेदा यथा । श्रीमन्नारायणोब्रह्मानारदोव्यासएवच । श्रीलमध्वपद्मनाभोनृहरिर्माधवस्तथा ॥ अक्षोभ्योजयतीर्थश्चज्ञानसिन्धुर्महानिधि: । विद्यानिधिश्चराजेन्द्रो जयधर्ममुनिस्तथा । पुरुषोत्तमोब्रह्मण्योव्यासतीर्थमुनिस्तथा । श्रीमांल्लक्ष्मीपति : श्रीमान्माधवेन्द्र पुरिस्तथा ॥ सम्प्रदायविहीनायेमन्त्रास्ते निष्फलामता : । अत : कलौभविष्यन्तिचत्वार : सम्प्रदायिन : ॥ श्रीमाध्विरुद्रसनकावैष्णवा : क्षितिपावनाइति ॥ सम्प्रदानम् । इदाञ् • । घञ् • आतइतियुक् ॥

सम्प्रधारणम् । न• विचारे॥ सम्प्रश्ने ।

सम्प्रधारणा । स्त्री• उचितानुचितनिरूये : समर्थने । इदमुचितमेवेति निश्चये ॥ सम्प्रधारणम् । धृञ्• । ण्यन्त : । ण्यासेतियुच् ॥

सम्प्रमोष : । पुं• विस्मरणे ॥

सम्प्रयोग : । पुं• रते ॥ निधुवने ॥ ॥ यन्विता । सम्बन्धे ॥ कार्मणे । वशीकरणादिकर्मणि ॥ त्रि• प्रार्थिते ॥

सम्प्रयोगी । पुं• कलाकेली । कामी । कामुके । सप्रयोजने ।

सम्प्रश्न : । पुं• संप्रधारणे ।

सम्प्रसाद : । पुं• सुषुप्त्यवस्थायाम् ॥ सम्यक्प्रसीदत्यस्मिन् । षद्लृ• । घञ् ॥ विदुषि ॥ प्राज्ञे ॥

सम्प्रसाधनम् । न• परिष्कारणे ॥ शोभाजनके ॥

सम्प्रहार : । पुं• गतौ ॥ युद्धे । रणे सम्प्रहरणम् । हृञ् • । घञ् ॥ इनमे० इतिधरणि ॥

सम्प्रहृष्ट : । त्रि• पुलकिते । पुलकितगात्रे ॥

सम्प्राप्त : । त्रि• समागते ॥ सम्यक् प्रकारेणप्राप्त : ॥

सम्प्राप्ति : । स्त्री• सम्यक्प्रापणे ।

सम्प्रैष : । पुं• नियोगे । विधौ ॥

सम्प्लव : । पुं• एकीभावेनेतरेतरघनीभावे ॥ व्यामिश्रणे ॥ महापूरे ॥ वारिपूरे ॥ प्रलये ॥ सङ्घोभे । उन्नती ॥ यथा । मेघ : सम्प्लवते ॥ सम्प्लवनम् । प्लुङ् • । ऋदोरप् ॥ सम्प्लवतेवा । पचाद्यच् ॥

सम्प्लवोपल:। पुं• चन्द्रकान्ते ॥

सम्फाल : । पुं• मेषे ॥

सम्फुल्ल : । त्रि• विकचे । विकसिते । प्रफुल्ले ॥ सम्फलति । अफ

ज्ञानविषयत्वे । ओत : क्त :, यादितश्चेतोऽभाव : ॥ उतफुल्लसम्फुल्लयोरुपसङ्ख्यानमिति • तत्त्वम् : ॥

सम्बद्ध : । त्रि • बंधनविशिष्टे ।। सम्यक् प्रकारेण बद्ध : । सम्बन्धयुक्ते ॥ संबद्ध्यतेस्म । बध • । क्त : ॥

सम्बन्ध : । पुं • संसर्गे । न्याये । द्रव्यद्वय : । संयोगादौ ॥ आदिना • समवायस्तादात्म्यं विषयविषयिभावश्चेति गृह्यते ॥ सम्पर्के । स च त्रिविध : । विद्यायोनिज : प्रीतिजश्चेति भेदात् ॥ संसर्गे ॥ यथा । एकपदार्थेऽपरपदार्थसम्बन्ध : संसर्गमर्यादया भासते • स च • प्रतियोग्यनुयोग्याधाराधेयविषयविषयभावादिरिति प्रथमव्युत्पत्तिवादीय गादाधरी ॥ सम्बन्धो बहुविधो जन्यजनकसेव्यसेवकबोध्यबोधकप्रतिपाद्यप्रतिपादकादिभेदात् ॥ प्रश्लेषे । संश्लेषे ॥ षष्ठ्यर्थे ॥ तृतीयानुबन्धे ॥ यथा वेदान्तिनां प्रत्यग्ब्रह्मणोरैक्यप्रमेयस्य • तत्प्रतिपादकोपनिषत्प्रमाणस्य च • बोध्यबोधकभावलक्षण : सम्बन्ध : ॥ सम्बन्धत्रये ॥ यथा । पदयो: सामानाधिकरण्यम् पदार्थयोर्विशेषणविशेष्यभाव : • प्रत्यगात्मपदार्थयोर्लक्ष्यलक्षणभावश्चेति । तदुक्तम् । सामानाधिकरण्यञ्च विशेषणविशेष्यता । लक्ष्यलक्षणसम्बन्ध : पदार्थप्रत्यगात्मनामिति ॥ दायविभागोपयोगिनि । स द्विविध : । यथा, सम्बन्धो द्विविधो ज्ञेयो विवाहाज्जन्मनस्तथा । तत्रौद्वाहिकसम्बन्धादपरो बलवत्तर • स्मृति ॥ बन्धनम् • बन्ध : । बन्धे हलश्चेति घञ् । सम्यक्बन्ध : ॥ यावत : कुरुते जन्तु : सम्बन्धान् मनस : प्रयान् । तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कव : ॥ स्वदेहमपि जीवोऽयं मुक्त्वा याति कुलेश्वरि । स्त्रीमातृपितृपुत्रादिसम्बन्ध : केन हेतुना ॥ त्रि • शक्ते ॥ हिते ॥ सम्बध्यते । कर्मणि घञ् ॥

सम्बन्धी । त्रि • सम्बन्धविशिष्टे । गुणवति । संयुक्ते । मातृपक्षे । श्वशुरादौ । जामातृश्यालकादौ ॥ सम्बन्धोऽस्यास्ति । इनि : ।

सम्बर : । पुं • दैत्यविशेषे । हरिणविशेषे ॥ मत्स्यभेदे । शैलप्रभेदे ॥ जिनान्तरे । सेतौ ॥ न • सलिले । जले । बौद्धव्रतविशेषे ॥ संयमे । संवयति । षम्ब सम्बन्धने । बाहुलकादरन् ॥

सम्बरारि : । पुं • मनसिजे । कामदेवे । सम्बरस्य दैत्य • विशेषस्यारि : ॥

सम्बरी । स्त्री • मतमूल्याम् ॥ शम्बर्याम् ॥

सम्बरोद्भवम् । न • गण्डलवणे ॥

सम्भावनम् । न॰ आत्मोत्कर्षप्रकाशनायाम्युक्तौ ॥ यथा अपिस्तुयां विष्णुम् । अवाङ्मनसगोचरं विष्णुमपिस्तुयादित्यधिकोक्तिः । एतादृशस्यान्यदीयस्तवने सामर्थ्यम स्तीत्यत्र किं वक्तव्यमितिभावः । सम्भाव्यते । ल्युट् । ण्यासश्रन्थो युच् । सम्भावनं । क्रियासुयोग्यताध्यवसाय इतिमुग्धबोधव्याकरणम् ॥ अलङ्कारविशेषे ॥ यथा । सम्भावनं यदीदं स्यादित्यूहोन्यसिद्धये । यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव ॥

सम्भावना । स्त्री॰ योग्यतायाम् ॥

सम्भावनीयः । त्रि॰ सम्भावनायोग्ये । संभाव्ये ॥

सम्भावितः । त्रि॰ मानिते । बहुमानं प्राप्ते । पूज्यताम्प्राप्ते । बहुमते ॥ यथा । मृत्याभावे भवतिमरणं किन्तुसम्भावितानामिति ॥ चिन्तिते ॥

सम्भाव्यः । त्रि॰ सम्भावितुं योग्ये । सम्भावनीये ॥

सम्भाषणम् । न॰ आभाषणे ॥ सम्पूर्वाद्भाषिल्युट् ॥ नन्वेच्छाशुच्यधार्मिकैः सह सम्भाषेत ॥

सम्भाषा । स्त्री॰ संभाषणे ॥

सम्भिन्नः । त्रि॰ संयुक्ते ॥ सङ्कुचिते ॥ सम्यग्भेदविशिष्टे ॥

सम्भुः । पुं॰ जनितरि ॥ यजमाने ॥ सम्भवति । भू॰ । विप्रसम्भ्यो डुसंज्ञायामितिड्डुः ॥

सम्भूतः । त्रि॰ उत्पन्ने । सम्भवति स्म । भू॰ । क्तः ॥

सम्भूतविजयः । पुं॰ श्रुतकेवलिसंज्ञकेबौद्धविशेषे ॥

सम्भूतिः । स्त्री॰ हिरण्यगर्भाख्यायां देवतायाम् ॥ सम्यग्भूतिरैश्वर्यं यस्याः । सम्भवनं वा॰ सम्भूतिः । सम्भवमात्रे ॥ यथा । कामान्मातापिताचैनं यदुत्पादयतोमिथः । सम्भूतिं तस्यतांविद्याद्यद्योनावभिजायतइतिमनुः ॥ यद्योनौमातृकुक्षावभिजायतेअङ्गप्रत्यङ्गानिलभते । तत्तस्यसम्भवमात्रं पश्वादिसाधारणं । यतः । आचार्यस्त्वस्ययांजातिंविधिवद्वेदपारगः । उत्पादयतिसावित्र्यासासत्याऽजराऽमरेतिमनुः ॥

सम्भूयसमुत्थानम् । न॰ मिलित्वैकमत्यावणिगादीनांकर्मकरणे ॥ आदिनानटनर्त्तकप्रभृतयोग्राह्याः ॥ तत्तुविवादपदविशेषः ॥

सम्भृतः । त्रि॰ सम्यादिते । संहते ॥ पूर्णे ॥ सम्यक्पुष्टे ॥ जनिते ॥ सम्यक्धारि । भृञ्॰ । क्तः ॥

सम्भृतिः । स्त्री॰ सम्भारे । सम्यक्पोषणे ॥ सम्यग्भरणे । सम्यग्धा

रणे ॥

सम्भेद: । पुं॰ सिन्धुसङ्गमे । सरितो मिथ: सङ्गमे । नद्योर्नद्योर्नद्यौ समुद्रयोश्च मेलके । सम्भिद्यन्ते मिलन्त्यत्र । भिदिर्॰ । इत्यर्थे तिघञ् ॥ स्फुटने । सङ्गे । मेलने ॥

सम्भोग: । पुं॰ भोगे । रते । निधुवने । सुरते ॥ स्त्रीणां सम्भोगएव मण्डनम्॰ तदभावे सर्व्वमण्डनस्याप्यमण्डनत्वम् । जिनशासने । शुण्डायाम् ॥ हर्षे ॥ शृङ्गारविशेषे ॥ तल्लक्षणं यथा । दर्शनस्पर्शनादीनि निषेवेते विलासिनौ । यत्रानुरक्तावन्योन्यं सम्भोग: समुदाहृतश्चेत साहित्यदर्पणम् ॥

सम्भोगी । पुं॰ कामिनागरे ॥ त्रि॰ सम्भोगवति ॥ सम्भोगोविद्यतेऽस्य । इनि: ॥

सम्भोजनी । स्त्री॰ बहुपुरुषभोजनात्मिकायां भिक्षायाम् ॥ यथाहमनु: । सम्भोजनीसाऽभिहितापैशाचीदक्षिणाद्विजै: । इहैवास्तेतु सा लोके गौरन्धेवैकवेश्मनीति ॥ सहभुज्यतेयया । भुज॰ । ल्युट् । ङीप् । दक्षिणादानक्रियेत्यर्थ: ॥

सम्भोज्य: । त्रि॰ संभोजयितव्ये ॥

सम्भ्रम: । पुं॰ भयादिजनितत्वरायाम् । संवेगे ॥ साध्वसे । भये ॥ आदरे ॥ अप्राप्तप्राप्तौहि सम्भ्रमोऽभ्यन्नाप्रकामस्य ॥ सम्भ्रमणम् । भ्रमुधनवस्थाने । भावे॰ घञ् । नोदात्तोपदेशस्येतिवृद्धि: ॥ महाभ्रमे । सूत्रे ॥ इत्यजयपाल: ॥

सम्भ्रान्त: । त्रि॰ संविग्ने ॥

सम्मत: । त्रि॰ निर्णीते ॥ अनुमते । सम्मानभाजि । महाजनाङ्गीकृते ॥

सम्मति: । स्त्री॰ अभिलाषे ॥ अनुज्ञायाम् ॥ अभिप्रायस्यबोधने ॥ पूजने । यथा॰ देवदेवन्द्योसि । अवशाक्यादेरामन्त्रितस्येति सम्मतौ हित्वम् ॥

सम्मद: । पुं॰ हर्षे । त्रि॰ तद्वति ॥ मदोहर्षे । प्रमदसम्मदौहर्षे इत्यप् ।

सम्मर्द: । पुं॰ सम्बाधे । परस्परपीडायाम् । भीड॰ इ॰ भाषा॰ प्र॰ ॥

सम्मर्द्दज: । पुं॰ गन्धभेदे ॥ यथा । सगन्धकण्वो बिल्वगन्धनीतिलकांस्तथा । प्रभृतीनांरसोयोऽसौनिष्पीड्य परिगृह्यते । ससम्मर्द्दोद्गतोगन्ध: सम्मर्द्दजइतीप्यतइति ॥

सम्माद: । पुं॰ मत्स्यविशेषे ।

सम्मानम् । न॰ समादरे । गौरवे । यथा । सम्मानाद्ब्राह्मणोनित्यमुद्विजेत विषादिव । अमृतस्येवचाकाङ्क्षेदवमानन्तुसर्व्वत: ॥ इति ॥

सम्मानित: । त्रि॰ समादृते । गौरविते ॥

सम्मार्ज्जक: । त्रि॰ सम्यङ्मार्ज्जन

कर्त्तरि ॥

सम्मार्ज्जनम् । न॰ संशुद्धौ । संशोधने । मलापनयने ॥ सम्यङ्मार्ज्जनम् ॥

सम्मार्ज्जनी । स्त्री॰ शोधन्याम् । वर्द्धन्याम् । सोहनी॰बढनी॰इ॰भा॰॥ सम्मार्ज्यतेऽनया । मृजशुद्धौ । करणे ल्युट् । मृजेर्वृद्धिः ॥

सम्मार्ज्जितः । त्रि॰ विरजस्के । मांजा॰इ॰भा ॥ सम्यङ्मार्ज्जितः॥

सम्मितः । त्रि॰ सदृशे । परिच्छिन्ने । मिते । मिणा॰मिन॰ इ॰भा॰ ॥ सम्यङ्मितः ॥

सम्मिश्रः । त्रि॰ संयुक्ते ॥

सम्मुखः । त्रि॰ अभिमुखे । अग्रपृष्ठे ॥

सम्मुखीनः । पुं॰ दर्पणे । समंसर्वंमुखं॰ सम्मुखम् । समस्यस्थात्तलोपोनिपातसिद्धः । सर्वस्य मुखस्यदर्शनः । यथामुखसम्मुखस्यदर्शनः खड्गतिखः ॥

सम्मूढः । त्रि॰ सम्यङ्मोहयुक्ते । मुग्धे ॥

सम्मूर्च्छनः । पुं॰ टयादौ ॥

सम्मूर्च्छनम् । न॰ अभिव्याप्तौ । उच्छ्राये । मोहे ॥ मुर्च्छामोहसमुच्छ्राययोः । ल्युट् । उपधायाश्चेति दीर्घः ॥

सम्मूर्च्छनोद्भवः । पुं॰ मत्स्यादौ ॥

सम्मूर्च्छा । स्त्री॰ सकलेन्द्रियमनसां स्वविषयग्रहणाशक्तिहेतावस्थाविशेषे ॥

सम्मूर्च्छितः । त्रि॰ सम्पिण्डिते ॥ संहृतकरणे । विज्ञानशून्ये ॥ प्रतिफलिते ॥

सम्मृष्टः । त्रि॰ संशोधिते । शुद्धान्ने ॥ संमृज्यतेस्म । मृजशुद्धौ । कर्म्मणिक्तः ॥ मक्षिकाद्यपनयनेनशोधितेव्यञ्जनादौ ॥

सम्मोदः । पुं॰ प्रीतौ ॥

सम्मोहः । पुं॰ विवेकायोग्यत्वे । कार्याकार्यविवेकाभावे ॥ विकृतमतित्वे ॥ सम्मोह्यतेऽनेन । सम्पूर्वान्मुहेर्घञ् ॥

सम्मोहनम् । न॰ अस्त्रविशेषे ॥ सम्मोह्यतेऽनेन । मुहवैचित्त्ये । ल्युट् ॥

सम्मोहा । स्त्री॰ वर्णवृत्तान्तरे ॥ यथा । टीकाचीहार : सम्मोहासारः । वर्णाः पञ्चवंनागाधीशोक्तम् ॥ यथा । दूरंयातालोधे रावन्याली । क्षणोमायावीनिर्व्दोभावी ॥

सम्मोहितः । त्रि॰ जातसम्मोहे । सम्यङ्मोहविषयीकृते ॥ स्वरूपावरणेनविक्षिप्ते ॥

सम्यग्ज्ञानम् । न॰ एकरूपेज्ञाने । औपनिषदेज्ञाने । यथानिरूपणाद्वितिज्ञानंवस्तुतत्वत्वादेकरूपम्॰ एवंनिर्विशेषचैतन्यात्मकोऽहमिति

ज्ञानम् सम्यग्ज्ञानम् ॥

सम्यग्दर्शनम् । न० यथार्थदर्शने । शास्त्रोपपत्तिभ्यामवधारितेऽर्थे याथार्थ्यदर्शने ॥ कर्मज्ञानस्य ब्रह्मत्वादात्मन्येकत्वबुद्धिरेवसम्यग्दर्शनमित्यापृर्भाष्यकारो : ॥

सम्यक् । अ० दृढे ॥ प्रशंसायाम् ॥

सम्यक् । त्रि० मनोज्ञे ॥ सङ्गते ॥ सत्यवचने । ऋते ॥ संशयादिशून्ये ॥ अर्थेनसहसम्यगञ्चतिसङ्गच्छतयितिसम्यक् । अञ्च्० ऋत्विगादिना० क्विन् । सम: समीतिसम्यादेश : ॥

सम्यग्व्यय : । पुं० व्ययतुरीयांशव्यये ॥

सम्राट् । पुं० राजसूययागकर्त्तरि । राजसूयिनि । चतुरब्धिसीमावच्छिन्नायाभूमेरीश्वरे । चक्रवर्त्तिनि । सार्वभौमेनृपश्वरे ॥ द्वादशराजमण्डलस्येश्वरे ॥ कियत्परिमाणायाभूमेराज्ञोनृपान्येभ्योऽत्यधिकाज्ञयाशास्ति० तस्मिन्नृपे । राज्ञ्याज्ञाशासके ॥ यथाह येनेष्टंराजसूयेन० मण्डलस्येश्वरश्चय : ॥ शास्तियश्चाज्ञयाराज्ञ : स सम्राडित्यमर : ॥ सम्यक्० राजति ॥ राज्० । क्विप् । मोराजिसम : क्वौ ।

सद्यावसानम् । न० तीर्थविशेषे ॥

सयोनि : । पुं० इन्द्रे ॥ त्रि० समानयोनौ ॥

सर : । पुं० वाटे । दध्यग्रे । दध्युत्तरे । दध्नउपरिस्थसमाने ॥ गतौ ॥ वायौ ॥ लवणे ॥ निर्झरे ॥ नीरे । जले । सरोवरे ॥ त्रि० सारके । भेदके ॥ सरति । सृ० । अच् । दधस्तूपरियोभागो घन : स्नेहसमन्वित : । सलोकेसरइत्युक्तोदध्नोमण्डस्तुमस्त्विति ॥ सर: स्वादुर्गुरुर्वृष्यो वातवह्निप्रणाशन: । सौम्योवस्तिप्रवर्त्तन : पित्तश्लेष्मविवर्द्धन : ॥

सर : कावा : । पुं० हंसे ॥

सर : काकी । स्त्री० वरटायाम् । हंस्याम् ।

सरक: । पुं० न० शीधुपात्रे । शीधुपाने । इक्षुशीधुनि । अविच्छिन्नाध्वगपङ्क्तौ । अविच्छिन्नाध्वगानां पङ्क्तिर्यस्मिन् । सरक० सडक० इ० भा० प्र० वर्त्मनि । न० गगने । आकाशे ॥ तीर्थविशेषे ॥ सरसि ॥ त्रि० गन्तरि । गतिशीले ॥ स्रियते । सृङ् गतौ । कृञादिभ्य: संज्ञायांवुन् ॥ सरति । सृगतौ । प्रसृत्य : समभिहारेवुन्० इतिवुन् ॥

सरघा । स्त्री० मधुमक्षिकायाम् ॥ रङ्घणम् । रघिगतौ । स्वजे घञे

तिचित्करणादन्ये भ्योपीतिच : आगमशास्त्रस्यानित्यत्वान्ननुम् । सङ्घटेघणगत्यावर्त्तते ।।
सरणम् । न॰ नवनीते ।।
सरजा : । स्त्री॰ मलिनायाम् । रजस्वलायाम् ।। इ॰ वि॰ शेष : ।।
सरट् । पुं॰ वायौ ।। वारिदे ।। सरघायाम् ।। सरति । सृ॰ । सर्त्तेरटि : ।।
सरट : । पुं॰ कृकलासे । सरति । सृ॰ । शकादिभ्योऽटन् ।।
सरटि : । पुं॰ वायौ ।। मेघे ।।
सरटु : । पुं॰ सरटे ।।
सरणम् । न॰ गमने । लोहमले ।। सरणतस्फोल : । सृ॰ । जुचङ्क्रम्यंक्रमादिना युच् ।। धावने । भावेल्युट् वा ।।
सरणा । स्त्री॰ गन्धालिकायाम् । प्रसारण्याम् ।। विस्तृतायाम् ।। सरति । सृ॰ । बाहुलकात् युच् । टाप् ।।
सरणि : । स्त्री॰ पङ्क्तौ । मार्गे । पद्धतौ । श्रयणे ।। सरत्यनया । सृगतौ । अर्त्तिसृधृधमीत्यनि : ।।
सरणी । स्त्री॰ कटभारायाम् ।। पथि । पङ्क्तौ ।। ङीष् ।। सरनाईं॰ इतिहिमगिरिप्रसिद्धेनिष्पदयानविशेषे ।।
सरण्ड : । पुं॰ धूर्त्ते ।। सरटे ।। भूषणविशेषे ।। सरति । सृ॰ । आण्डन्कृसृभृवृञ्इत्यण्डन् ।। कामुके ।। खगे ।।
सरण्यु : । पुं॰ वारिवाहे ।। मारुते ।। अग्नौ ।। सरति । ससर्त्ति वा । सृ॰ । सृयुवचिभ्योऽन्युजागूजक्नुच इत्यन्युच् ।। सरण्यु : शीघ्रगामीति वेदभाष्यम् ।। जले ।।
सरत् । पुं॰ तन्तौ । सूत्रे ।।
सरथ : । त्रि॰ रथेनसहवर्त्तमाने ।।
सरद्वान् । पुं॰ गौतममुनौ ।।
सरपत्रिका । स्त्री॰ पद्मपत्रे ।।
सरभसम् । त्रि॰ ससत्वरे ।।
सरमा । स्त्री॰ कुक्कुर्याम् ।। देवशुन्याम् ।। राक्षसीभेदे । विभीषणस्यपत्न्याम् ।। सरति सृ॰ । बाहुलकादम : ।। कश्यपस्यस्त्रीविशेषे । भ्रमरादीनांमातरि ।। त्रि॰ श्रीयुते ।
सरयु : । पुं॰ पवने । वाते ।।
सरयु : । स्त्री॰ नदीविशेषे ।। सरति । सृ॰ । सर्त्तेरयु : ।
सरयू : । स्त्री॰ नदीप्रभेदे । सरति । सृ॰ । सर्त्तेरयूरित्येके ।। सरयूसलिलंस्वादुबलपुष्टिप्रदायकं ।।
सरल : । पुं॰ पीतद्रौ । पूतिकाष्ठे ।। अस्यगुणा : । सरलोमधुरस्तिक्त : कटुपाकरसोलघु : । स्निग्धोष्ण : कर्णकण्ठाक्षिरोगरक्षोहर :

स्मृतः। कफानिलस्वेदयूकाका सालक्ष्मीव्रणापहः॥ स्मृतं॥ देवदारुविशेषे॥ बुद्धे॥ अग्नौ॥ सरति। सृ॰ धातुलकादलच्। वृषादित्वाद्वाकलः। वाहुलकाद्गुणः॥ त्रि॰ उदारे॥ ऋजौ। अवक्रे॥ यथा। सरलाविरलायन्ते घनाय न्ते कलिद्रुमाः॥ नवमीनवपुन्नागायस्मिन् संसारकानने॥

सरलद्रवः। पुं॰ वृकधूपे। श्रीवेष्टे॥ सरलस्यदेवदारोः द्रवः॥

सरला। स्त्री॰ सर्वानुभूतौ। त्रिपुटायाम्। त्रिवृति। श्वेतत्रिधारेति ख्यातौषधौ॥ सरति। सृ॰। धा तुलकात् कलन्। टाप्॥

सरलाङ्गः। पुं॰ श्रीवेष्टे॥

सरलायिका। स्त्री॰ सानैय्याम्॥

सरः। न॰ नीरे॥ तडागे। स त्वानन्तोभयजलाशये। अस्य जलगुणाः। सारसं लघुतृष्णाघ्नं बल्यं स्वादुकषायकदिति॥ देवखातजलाशये॥ स्त्रियते। सृगतौ। कर्मण्यसुन्।

सरसम्। न॰ सरसि॥ रसवतिमांसि॥ त्रि॰ रससंयुक्ते॥

सरसम्प्रतम्। न॰ खुड्डाम्। त्रिकपटे॥

सरसा। स्त्री॰ द्राक्षायाम्॥ रसविशिष्टायाम्॥

सरसिजम्। न॰ पद्मे॥ सरसिजातम्। जनजननेॱजनीप्रादुर्भावेवा। सप्तम्यांजनेर्डः। तत्पुरुषकृति॰ ङेरलुक्॥

सरसी। स्त्री॰ कासारे। सरसि॥ स्त्रियते। सृ॰। कर्मण्यसुन्। गौरादित्वान्ङीष्॥ प्रकृतिच्छन्दः २१ प्रभेदे॥ तल्लक्षणोदाहरणं यथा। नजभजजाजरौयदितदागदितासरसीकवीश्वरैः॥ चिकुरकलापशैवलकृतप्रमदासुलसद्रसोर्मिपुॱफुल्लटवक्त्रनाम्बुजासुविलसद्भुजग्रालतृणालवल्लिषु। कुचयुगचक्रवाकमिथुनानुगतामुकुलाकुलतूहलो॰व्यरचयदच्युतोव्रजमृगीनयनासरसीषुविभ्रमं॥

सरसीकः। पुं॰ सारसपक्षिणि॥

सरसीरुहम्। न॰ पद्मे। नलिने। सारसे। सरस्यांरोहति। रुह॰। इगुपधेतिकः। तत्पुरुषेकृतीत्य लुक्॥

सरस्वान्। पुं॰ सागरे। अर्णवे॥ नदे। सरोनीरं॰गतिर्वाऽस्त्यस्मिन्। भूम्निमतुप्। तसौमत्वर्थइति भत्वान्नपदकार्यम्॥ त्रि॰रसिके॥

सरस्वती। स्त्री॰ वाण्याम्। वाचि॥ वाग्देव्याम्। पर्यायास्तु। ब्राह्मीतुभारतीभाषागीर्वाग्वाणीसरस्वती ति॥ अस्याध्यानं यथा। वाणीम्

पूर्णनिशाकरोज्ज्वलमुखीकर्पूर कुंदप्रभांचन्द्रार्द्धाङ्कितमस्तकांनिजकरैः संबिभ्रतीमादरात् । वीणामक्षगुणंसुधाढ्यकलशंबिद्याञ्च तुङ्गस्तनींदिव्यैराभरणैर्विभूषित-तनुंहंसाधिरूढाभजे ॥ नदीविशेषे । प्लक्षसमुद्भवायाम् ॥ वाक्प्रदायाम् । ब्रह्मसुतायाम् ॥ अ स्याजलगुणायथा।सरस्वत्याजलंस्वादुपूतंसर्वरुजापहम् । रुच्यञ्च दीपनंपथ्यंदेहकान्तिकरंलघु ॥ सातुदेशभेदेनसप्तनाम्नीयथा । पुष्करेपितामहयज्ञेसमाहूता॰ सुप्रभा १ नैमिषेसत्रयाजिभिर्ऋषिभिराहूता॰ काञ्चनाक्षी २ गय देशेगयराजयज्ञआहूता॰ बिशाला ३।उत्तरकोशलायामौद्दालकमुनियज्ञेसमाहूता॰ मनोरमा ४। ऋषभद्वीपिकुरुक्षेत्रेकुरुराजयज्ञेस माहूता॰ ओघवती ५। गङ्गाद्वारे दक्षप्रजापतियज्ञेसमाहूता॰ सुरेणु: ६। हिमालयेब्रह्मणः पुनर्यज्ञेसमाहूता॰ बिमलोदा ७ त त्सप्तसरस्वत्यः समागताः । अ तस्तत्तीर्थंसप्तसारस्वतनाम्नाप्रसिद्धमितिमहाभारतेशल्यपर्वं ॥ स्त्रीरत्ने ॥ गवि ॥ नदीषु ॥ मनुपत्न्याम् ॥ ज्योतिष्मत्याम् ॥ब्राह्म्यामौषधौ ॥ सोमवल्ल्याम् ॥ दुर्गायाम् ॥

बुद्धशक्तिविशेषे ॥ सरोऽस्त्यस्याः । सरांसिसन्त्यस्यांवा । मतुप् । ङीप् ॥ तीर्थविशेषे ॥

सरस्वतीसङ्गमः । पुं॰ तीर्थविशेषे ॥

सरस्वतीसागरसङ्गमः । पुं॰ तीर्थविशेषे ॥

सरस्वत्यरुणासङ्गमः । पुं॰ तीर्थविशेषे ॥

सरहस्यः । त्रि॰ मन्त्रदेवताध्यानसहिते

सरा । स्त्री॰ विस्तृतायाम् ॥ गन्धालिकायाम् । प्रसारण्याम् ॥ झरे॥

सरागः । त्रि॰ रागसहिते ॥

सरावः । पुं॰ शरावार्थे । सेर॰ इ॰ भा॰ प्र॰ कुडवद्वयपरिमाणे । मानिकायाम् ॥ मृत्पात्रविशेषे । वर्द्धमानके ॥ यथा । वरंसरावहस्तस्यचण्डालागारवीथिषु । भिक्षार्थमटनंकार्य्यंराज्यंनान्यचनौरिपु ॥ सरणम् । स्त॰ । कर्देरप् । सरतिवा । अच् । सरंसरादाऽवति । अव । अण्॰ अत्र्वां ॥

सरिः । पुं॰ स्त्री॰ निर्झरे । उत्से ॥ सरणम् । स्त॰ । अचइः ॥

सरिका । स्त्री॰ हिङ्गुपत्र्याम् ॥

सरित् । स्त्री॰ नद्याम् । तरङ्गिण्याम् ॥ सरति । स्त॰ । हृसृरुहियु षिभ्यइतिसर्वरिति: ॥ सूत्रे ॥

सरितामनाथः । सरिताम्पतिः । पुं॰ समुद्रे ॥

सरितांवरा । स्त्री॰ गङ्गायाम् ॥ यथा । त्वं देवसरितांनाथः त्वं देवि सरितांवरे । उभयोः सङ्गमे स्नात्वाम् मुञ्चामि दुरितानि वै ॥ इति गङ्गासागरसङ्गमस्नानमन्त्रः ॥

सरित्पतिः । पुं॰ समुद्रे । पारावारे । सरितांपतिः ॥

सरिद्वरा । स्त्री॰ गङ्गायाम् । विपा पद्याम् ॥ सरित्सु वरा ॥

सरिन्नाथः । पुं॰ समुद्रे ॥

सरिमा । पुं॰ अनिले । वायौ ॥ सरति । सृ॰ । हृभृधृसृस्तृशृभ्य इमनिच् ॥

सरिलम् । न॰ सलिले । जले ॥ रलयोरैक्यम् ॥

सरिषपः । पुं॰ सर्षपे । कटुस्नेहे ।

सरी । स्त्री॰ निर्झरे ॥

सरीसृपः । पुं॰ सर्पे । पृदाकौ । आशीविषे ॥ कुटिलं सर्पति । सृप॰ । नित्यंकौटिल्ये गताविति यङ् । पचाद्यच् । यङोऽचिचेति यङो लुक् ॥ वृश्चिकादौ ॥

सरीसृपम् । त्रि॰ अतिशयेन चलति ।

सरूपः । त्रि॰ सदृशे ॥ समानं रूपमस्य । ज्योतिर्जनपदेति समानस्य सः ॥

सरोजम् । न॰ अब्जे । पद्मे ॥ सरसि जातम् । जनी॰ सप्तम्यां जनेर्डः । तत्पुरुषेकृत्यबहुलमित्यलुक् ॥

सरोजखण्डः । पुं॰ पद्मवने ॥ सरोजानां समूहः । कमलादिभ्यः खण्डः ॥

सरोजन्म । न॰ पद्मे ॥

सरोजी । पुं॰ ब्रह्मणि । सुरज्येष्ठे ॥ लोकनाथे । बुद्धभेदे ॥

सरोजिनी । स्त्री॰ कमलाकरे । पद्मखण्डे ॥ पद्मे ॥ कासारे ॥ सरोजानि सन्त्यस्याम् । पुष्करादित्वादिनिः ॥

सरोत्सवः । पुं॰ सारसखगे ॥

सरोधः । त्रि॰ रुद्धे ॥ रोधेन सह वर्त्तमानः ॥

सरोरुट् । ) पुं॰
सरोरुहम् । ) न॰ अम्बुजे ॥

सरोरुहासनः । पुं॰ ब्रह्मणि । कमलासने ॥

सरोवरः । पुं॰ पद्माकरे । तडागे ॥

सर्गः । पुं॰ स्वभावे । निर्मोक्षे ॥ निर्मोक्षस्त्यागो मोक्षाभावो वा । मोक्षाभावे यथा । इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ॥ निश्चये ॥ यथा । गृहाण शस्त्रं यदि सर्ग एष ते॰ इति ॥ अध्याये । मोहे । उत्साहे ॥ अनुमतौ ॥ सृज्यते । सृज विसर्गे । कर्मणि घञ् ॥ सृष्टौ ॥ यथा । सर्गश्च प्रतिसर्गश्चेति ॥ कौमार आर्षः प्राजापत्यो मानव इत्यादिभेदैः पुराणेषु विस्तरेणोक्तः॰ द्वैतप्रपञ्चे । स्थूलदेहोत्पत्तौ । अचे

तनसृष्टौ ॥ सज्यन्ते येषु सृष्ट्याः प्राणिनाइतिव्युत्पत्त्या० पृथिव्यादिलोकाः सर्गपदवाच्याः ॥ अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहम् । भूतसूक्ष्मेन्द्रियार्थानांसम्भवःसर्ग उच्यते ॥ इतिश्रीविष्णुभागवतम् ॥

सर्गक्रमः । पुं० प्रकृतेर्महदाद्युत्पत्तिक्रमे ॥ यथा । प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणस्तुषोडशकः । तस्मादपिषोडशकात्पञ्चभ्यः पञ्चभूतानीति ॥ सर्गस्योत्पत्तेः क्रमः ॥

सर्गबन्धः । पुं० महाकाव्ये ॥ सर्गाणांबन्धोयत्र ॥

सर्ज्जः । पुं० सालवृक्षे । सर्जुआ० इतिख्याते ॥ सृजति । सृजेरिगुपधत्वात्कः ॥

सर्ज्जकः । पुं० पीतसाले । आसने । बन्धूकपुष्पे । विजयसार० इ० भा० प्र० वृक्षे ॥ सृजति । सृजधिसर्गे । ण्वुल् । यद्वा । सर्ज्यते । षर्जअर्जने कुन् ॥ त्रि० सृष्टिकर्त्तरि ॥

सर्ज्जगन्धा । स्त्री० रास्नायाम् ॥

सर्ज्जतैलम् । न० सर्ज्जस्नेहे । रालतेल इ० भा० ॥ तैलंसर्ज्जरसोद्भूतंविस्फोटव्रणनाशनम् । कुष्ठपामाकृमिहरंवातश्लेष्मामयापहम् ॥

सर्ज्जनम् । न० विसर्ज्जने ॥ सृष्टौ ॥

सर्ज्जनिर्यासः । }
सर्ज्जमणिः । } पुं० राले । धूनके

सर्ज्जरसः । पुं० धूनके । यक्षधूपे । सर्ज्जस्यसालस्यरसः ॥ वाद्यभाण्डविशेषे ॥

सर्ज्जिः । } स्त्री० } सर्ज्जिकाक्षारे ।
सर्ज्जिका । } } सज्जी० इ० भा० प्र० सर्ज्जिकाल्पगुणातस्माद्विशेषाद्गुल्मशूलहृत् । तस्मात् यवक्षारात् ॥

सर्ज्जिकाक्षारः । पुं० कापोते । सुवर्च्चके । सौवर्चले । रुचके । सज्जी० साजी० इ० भा० प्र० सर्ज्जिकारजसः क्षारः । शाकपार्थिवादिः । सर्ज्जिकांदग्ध्वाक्रियमाणः क्षारइत्यर्थः ॥

सर्ज्जिक्षारः । पुं० } सर्ज्जिकाक्षारे ॥
सर्ज्जी । स्त्री० }

सर्ज्जूः । स्त्री० वणिजि । विद्युति । सर्ज्जति । षर्जअर्जने । कृषिचमितनिधनिसर्ज्जिखर्ज्जिभ्यऊः ॥ अभिसारे ॥ हारे ॥

सर्ज्यः । पुं० सर्ज्जरसे ॥

सर्प्पः । पुं० अहौ । नागेभ्योपकृष्टे । अस्यपर्यायाः यथा । सर्प्पः पृदाकुर्भुजगोभुजङ्गोहिर्भुजङ्गमः । आशीविषोविषधरश्चक्रीव्यालः सरीसृपः ॥ कुण्डलीगूढपाच्चक्षुःश्रवाःकाकोदरः फणी । दर्वीकरोदी

र्पपृष्ठोदन्दशूकोबिलेशय: ॥ उरग: पन्नगोभोगोजिह्मग: पवनाशनकुति ॥ सर्पति । सृप्लृगतौ । पचाद्यच् ॥ नागकेशरे । श्मश्रुयारिविमक्कच्छ जातिविशेषे ॥ पद्ममाचक्रद्वितीय भेदे ८ । ८० ॥ पद्ममाचक्रपचष्ठप्रभेदे ॥ ८८० ॥ सर्पणे । गमने ॥

सर्प्पकङ्कालिका । स्त्री० वृक्षभेदे ॥ सर्प्पकङ्कालिका० तीक्ष्णा० विषदंष्ट्रा० विषापहेतिपर्याया: ॥

सर्प्पकङ्काली । स्त्री० सहायाम् । सर्प्पकङ्कालिकायाम् ॥

सर्प्पगन्धा । स्त्री० अहिभुजि । रक्तपत्रिकायाम् ॥ वृक्षविशेषे । छत्राकी० सर्प्पगन्धाचरसनाचपलङ्कषेति पर्याया: ॥

सर्प्पग्रह: । पुं० सर्पग्रहणतुण्डौ ॥

सर्प्पघातिनी । स्त्री० सर्पकङ्काली भेदे । सर्प्पसहायाम् । सर्पाङ्ग्यां ॥

सर्प्पिम् । त्रि० गच्छति ॥

सर्प्पद्विष: । पुं० नकुले ॥ द्रु० हे० न्द्र: ॥

सर्प्पदंष्ट्र: । पुं० दन्तीवृक्षे ॥

सर्पदंष्ट्रा । स्त्री० वृश्चिकाल्याम् ॥

सर्प्पदंष्ट्रिका । स्त्री० अजशृङ्ग्याम् ॥

सर्प्पदण्डा । स्त्री० सैंहल्याम् ॥

सर्प्पदण्डी । स्त्री० गोरक्ष्यां ॥

सर्प्पदन्ती । स्त्री० नागदन्त्यां ॥

सर्प्पदमनी । स्त्री० वन्ध्याकर्कोटक्याम् ॥

सर्प्पनामा । स्त्री० सर्पघातिन्याम् ॥

सर्प्पनिर्मोचन: । पुं० धूपविशेषे ॥ यथा, कार्पासास्थिभुजङ्गत्वग्यानि मोचनं भवेत् । सर्प्पनिर्मोचनोधूप: प्रशस्त: सततंगृहे ॥

सर्प्पपुष्पी । स्त्री० नागदन्त्याम् ॥

सर्पफणज: । पुं० सर्पफणजात मणौ ॥

सर्पभुक् । पुं० मयूरे ॥ सर्पान् भुङ्क्ते । भुज० । क्विप् ॥ द्विमुखाहौ ॥ त्रि० सर्पभक्षके ॥

सर्पराज: । पुं० अहिराजे । वासुकौ ॥ सर्पाणांराजा । राजाह: सखिभ्यष्टच् ॥

सर्पलता । स्त्री० नागवल्ल्याम् ॥

सर्पविद्या । स्त्री० गारुडे ॥ सर्पाणांविद्या ॥

सर्पसत्रम् । न० जनमेजयारब्धे सर्पनाशकेयज्ञविशेषे ॥

सर्पसत्री । पुं० जनमेजये ॥

सर्पसहा । स्त्री० सर्पघातिन्याम् ॥

सर्पसुगन्धा । स्त्री० रास्नायाम् ॥

सर्पहा । पुं० नकुले ॥ द्रु० हे० न्द्र: ॥

सर्पाक्षम् । न० रुद्राक्षे ॥

सर्पाक्षी । स्त्री० कन्दविशेषे । गन्ध

नाकुल्याम् ॥ वृक्षविशेषे गरुडा
ख्याम् ॥ अस्या : गुणा : । सर्पाक्षी
कटुकातिक्ता सोष्णा क्रमिनिकृन्त-
नी । वृश्चिकोन्दुरुसर्पाणांविषघ्नी
व्रणरोपणीति ॥ सर्पान् अक्षति । अ
क्षू व्याप्तौ । कर्म्मण्यण् । ङीप् ॥
सर्पाक्षीनागफणीतिभावमिश्र : ॥

सर्पाख्य : । पुं० मञ्जिष्ठ कन्दभेदे । ना
गकेसरे ॥ त्रि० सर्पनामके ॥

सर्प्पाङ्गी । स्त्री० सर्प्पघातिन्याम् ॥
सैंहल्याम् । रास्नायाम् ॥

सर्प्पादनी । स्त्री० व्यालगन्धायाम् ॥

सर्प्पाराति : । पुं० गरुडे ॥ सर्पाणा
मराति : ॥

सर्प्पारि : । पुं० नकुले ॥

सर्प्पावास : । पुं० श्वेतचन्दने ॥ पा
ताले ॥ सर्प्पाणामावास : ॥ बहुव्री
हिर्वा ॥

सर्प्पाशन : । पुं० मयूरे ॥

सर्प्पाश्रय : । पुं० नागकेशरे ॥

सर्प्पिणी । स्त्री० सर्पस्त्रियाम् ॥

सर्पिर्द्दर्वी । स्त्री० तीर्थविशेषे ॥

सर्प्पि : । न० आज्ये । घृते ॥ सर्प
ति । सृप्लृ० । अर्चिशुचिहुसृपिच्छा
दिच्छर्दिभ्यइसिरितीसि : ॥

सर्प्पी । स्त्री० सर्पिण्याम् ॥ जातित्वा
न्ङीष् ॥

सर्प्पेष्टम् । न० श्रीखण्डचन्दने ॥

सर्म्म : । पुं० गमने ॥ सरति । सृ०
। अर्त्तिस्तुसुहुसृधिक्षिमन् ॥

सर्व्व : । पुं० ईश्वरे । शिवे । हरे ॥
विष्णौ । हृषीकेशे । हरौ ॥ यथा
। असतश्चसतश्चैवसर्वस्यप्रभवाप्य
यात् । सर्वस्यसर्वदाज्ञानात्सर्व
मेतंप्रचक्षते ॥ असत : कारणात्म
कस्य० सत : कार्यात्मकस्यसर्वस्य
प्रपञ्चस्यप्रभवाप्ययात्उत्पत्तिप्रलय
स्थानत्वात् । तथाचसर्वोपादानत
यासर्वात्मकत्वात्सर्वइत्यच्युतेऽ
त्यर्थ : ॥ सर्वति । सर्व हिंसाया
म्० इत्यत : सर्वगतावित्यतोवा०
वयोरभेदात्० पचाद्यच् । सरति
। सृगतौ । सर्वनिघृष्वेतिसाधुर्वा
सृतमनेनविश्वंवा । पूर्ववत् ॥
न० । नामरूपात्मकेजगति ॥ त्रि०
। विश्वस्मिन् । समस्मिन् । अशे
षे । निरविशेषे । । कृत्स्ने ॥ यथा
। सर्वरत्नमयोमेरु : सर्वाश्चर्यमयं
नभ : । सर्वतीर्थमयीगङ्गासर्वदे
वमयोहरिरितिवह्निपुराणं ॥

सर्व्वंसहा । स्त्री० वसुमत्याम् । भुवि
। भूमौ ॥ सर्वंसहते । षहमर्षणे
। पू : सर्वयोरितिखच् । अरुर्द्वि
षदितिमुम् ॥ सर्वसहावसुमतीस
हतेनत्विदंद्वयम् । अकार्यपादघा
तस्वदीपतापश्चयैवच ॥ पतीभूमौ
निराधारोदीपोनसंस्थाप्य : ॥
त्रि० सर्वसहिष्णौ ॥

सर्वकर्त्ता । पुं॰ स्रष्टरि । ब्रह्मणि ॥

सर्वकर्म्मसन्न्यासः । पुं॰ देहादिव्यापाराणामविद्ययात्मन्यक्रियेसमारोपितानांविद्ययाबाधे ॥ सर्वकर्मणां सम्यङ्न्यासः ॥

सर्व्वकर्मीणः । त्रि॰ पुरुषे ॥ सर्वंकर्माणिव्याप्नोति । तत्सर्वादेरितिखः ॥

सर्वकेशी । पुं॰ नटे ॥ सर्वकेशोऽस्यास्ति । सर्वादेश्चेति॰ इनिः ॥

सर्वक्षारः । पुं॰ बहुक्षारे । महाक्षारे । सावन् इ॰ भा॰ प्र॰ । मलवस्त्रविशोधके ॥

सर्व्वगः । पुं॰ शङ्करे ॥ ब्रह्मणि । विभौ ॥ आत्मनि ॥ सर्वंगच्छति । गम्लृ॰ । अन्यात्यन्तेतिडः ॥ न॰ सलिले ॥ त्रि॰ सर्वत्रगामिनि ॥

सर्व्वगतः । त्रि॰ विभौ ॥ सर्वानुस्यूतिसम्भावे ॥ यच्चकिञ्चिज्जगत्यस्मिन्दृश्यतेश्रूयतेपिवा । अन्तर्वहिश्चतत्सर्वंव्याप्यनारायणः स्थितः ॥ सर्वगतत्वंसर्वाव्यवधानमावमितिव्याख्यातारः । व्यापित्वमितियावत् ॥

सर्वगन्धम् । न॰ कुङ्कुमादिगन्धद्रव्यवृन्दे ॥ यथा । कुङ्कुमागुरकर्पूरकस्तूरीचन्दनेषु । चतुर्जातकादौ ॥ यथा ॥ चतुर्जातककर्पूरकक्कोलागुरुकुङ्कुमम् । लवङ्गसहितञ्चैवसर्वगन्धंविनिर्द्दिशेदिति ॥

सर्व्वगा । स्त्री॰ प्रियङ्गौ ॥

सर्व्वग्रन्थिः । पुं॰ )<br>सर्व्वग्रन्थिकम् । नं॰ ) पिप्पलीमूले ॥

सर्व्वङ्कषः । त्रि॰ खले ॥ सर्वङ्कषति । कषहिंसायाम् । सर्वकूलाभ्रेतिखच् । अरुर्द्विषादितिमुम् ॥

सर्वजनीनः ।<br>सर्व्वजनीयः । ) त्रि॰ सार्वजनिके ॥ सर्वस्यासौजनश्च । पूर्वकालैकेतितत्पुरुषः । सर्वजनायहितः । सर्वजनाट्ठञ्खश्च । षष्ठीतत्पुरुषात्तु॰ छः ॥

सर्व्वजित् । पुं॰ वत्सरविशेषे ॥ तत्फलंयथा । उद्यतोऽश्वर्णमेघोजलंनैवोपजायते । महार्घंसर्वजिद्वर्षेसर्वमेववरानने ॥ त्रि॰ सर्वजयकर्त्तरि ॥

सर्व्वजीवः । पुं॰ ईश्वरे । सर्वान्जीवयति । जीव॰ । अच् ॥

सर्व्वज्ञः । पुं॰ शिवे । ईश्वरे ॥ सर्वंजानाति । सर्वविषयावच्छिन्नचैतन्यलक्षणज्ञानवानिति । ज्ञा॰ । आतोनुपसर्गेकः ॥ यद्वा । सर्वेज्ञायन्तेस्वात्मनः सर्वस्यापरोक्षत्वात् ॥ यद्वा । सर्वेज्ञायस्मात्॰ सर्वेज्ञायेनवा ॥ सर्वस्यासौज्ञश्चेतिवा ॥ आनन्दमये ॥ यथा । अशेषप्राणिबुद्धीनांवासनास्तत्रसंस्थिताः । ता

भिः क्रोडीकृतसर्वतेनसर्वज्ञर्द्धि
रितः ॥ तत्र० सौषुप्तेऽज्ञानेकार
णभूतेकार्य्यभूतानांसर्वप्राणिबुद्धी
नांवासनानिवसन्ति० ताभिर्वासना
भिः सर्वंजगत्० क्रोडीकृतम्०
विषयीकृतम्० तेनसर्वबुद्धिवास
नावदज्ञानोपाधिकत्वेनसर्वज्ञत्वमु
च्यतेइत्यर्थः ॥ परमार्थपण्डिते
॥ जिनेन्द्रे ॥ बुद्धे । सुगते ।
त्रि० सकलज्ञातरि ॥

सर्वज्ञत्वम् । न० सर्वज्ञतायाम् ॥
परमार्थतोसङ्गस्यापिचैतन्यस्याध्या
सिकसर्वज्ञानद्वारासर्वावभासक
तायाम् ।

सर्वज्ञा । स्त्री० दुर्गायाम् ॥ सर्व
ज्ञासर्ववेत्तृत्वाच्छान्तत्वाच्छान्ति
रुच्यते । इतिदेवीपुराणम् ॥

सर्वज्ञानमिमठः । त्रि० सर्वकर्म
णि० ब्रह्मणि० सगुणेनिर्गुणे
च० यज्ज्ञानंत्रिविधम्० प्रमाणतः
प्रमेयतश्च० प्रयोजनतश्चतत्रमठः०
सर्वप्रकारेणायोग्ये ॥

सर्वतःपाणिपादम् । न० चैतन्ये ॥

सर्वतःशुभा । स्त्री० प्रियङ्गुवृक्षे ।

सर्वतःश्रुतिमत् । न० चैतन्ये ॥

सर्वतन्त्रम् । न० सकलशास्त्रे ॥

सर्वतन्त्रसिद्धान्तः । पुं० गौतमो
क्तेसिद्धान्तविशेषे ॥ तथाहि ।
सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतःस
र्वतन्त्रसिद्धान्तः ॥ अस्यार्थः ।
सर्वतन्त्राविरुद्धः० सर्वशास्त्राभ्यु
पगतइतियावत् । वस्तुतोयथाश्रु
तएवार्थः । अन्यथा० तन्त्रेऽधि
कृतइत्यस्यवैयर्थ्यापत्तिः० अतएव
घटाद्यादेरसदुत्तरत्वमपिसर्वतन्त्र
सिद्धान्तः । नचतन्त्रेऽधिकृतइति
स्पष्टार्थंलक्षणेतुनदेयमेवेतिवाच्य
म् । मनसइन्द्रियत्वस्यापिसर्वतन्त्र
सिद्धान्ततापत्तेः । नव्यास्तुसर्व
स्योपलक्षणमात्रत्वात्० वादिप्रति
वाद्युभयाभ्युपगतः कथानुकूलो
र्थः सइतिवदन्तीति ॥ २८ ॥

सर्वतः । अ० समन्ततोर्थे ॥ सर्व
स्मात् । पञ्चम्यास्तसिल् ॥

सर्वतापनः । पुं० कामदेवे ॥ त्रि०
सर्वतापके ॥

सर्वतिक्ता । स्त्री० काकमाच्याम् ॥

सर्वतीर्थवरह्रदः । पुं० तीर्थवि
शेषे ॥

सर्वतोभद्रः । पुं० चित्रकाव्यविशेषे
। तदुदाहरणम्यथा ।

| स | का | र | ना | ना | र | का | स |
|---|---|---|---|---|---|---|---|
| का | य | सा | द | द | सा | य | का |
| र | सा | ह | वा | वा | ह | सा | र |
| ना | द | वा | द | द | वा | द | ना |

। अस्यार्थः ।

पुनः कीदृशीसिना० सकाराः स

यस्मा : सोऽस्माहा:• नाना• नाना विधाश्च• ये० चारा : चरीयांस मृत्रा • तेषांकासा:• गतिभेदा • कायाः• विग्रहाश्च• तेषांसाद दद्ति• इतिसादद्राः• नाग्नका रका : सायकायक्षीसातयोक्ता । रसेन• रागेण• चाहवेयस्याः• सा•रसाश्वा• रचरागिणीत्यर्थ :। वाश्वसाराणांवाश्वश्रेष्ठाणां•येनादाः हृषादिवोषा : तेषांनादं कलहंद दृति• इतिनाददानि• ते : सह्क लशायमानानिनादनानि•याद्यानि• यस्यासा• वाश्चारनादनाददवाद वा । चतएवतेषांतुल्यतोक्तिरतिश यो क्ति :। सर्वतोभ्रमणात्सर्वतोभ द्राख्यश्चित्रबन्ध :। चतएवदण्डी। तदृष्टं सर्वतोभद्रम्भ्रमणं यदिसर्व तद्दूति ॥ निम्बे ॥ विष्णुरथे ॥ व्यू हविशेषे । सर्वतोभद्रमत्र । सर्वतो भद्रंयस्माद्वा । न• देवयानविशे षे । हवित्सर्गव्रतप्रतिष्ठादिपूजा धारमण्डलविशेषे ॥ तत्त्वशारदादि तन्त्रेषुद्रष्टव्यम् ॥ पुं• न• ईश्वर सद्मविशेषे । चतुर्द्वारालिन्दशोभि राजगृहान्तरे ॥ चतु : शालचतु- र्द्वार : सर्वतोभद्रसंज्ञितइत्युक्त :॥ सर्व्वतोभद्रा । स्त्री• गम्भार्याम् ॥ न टयोषिति ॥ सर्वतोभद्रंयस्या :॥ सर्वतोमुख :। पुं• विधौ । ब्रह्मणि ।

उपे । रुद्रे । शिवे ॥ चेत्त्रज्ञे । चात्मनि ॥ चग्नौ ॥ ब्राह्मणे ॥ स्वर्गे । न • चम्बुनि । जले ॥ चा काशे । खे ॥ सर्वतोमुखान्यस्य । सर्वदिग्गमनात् ॥

सर्व्वत्र । च• सर्वस्मिन्काले ॥ सर्व स्मिन्देशे । सर्वस्मिन्दिशि ॥ सप्त म्यास्त्रल् ॥ सर्वत्रखलुदृश्यन्तेसाध वोधर्मचारिण :। शूरा :शरण्या : सौमित्रेतिर्यग्योनिगतेष्वपि ॥

सर्व्वत्रग :। पुं• वायौ । त्रि• सर्व व्यापिनि । सर्वकारणे ॥ सर्वत्रग च्छति । गम्लृ• । डप्रकरणेसर्वत्र पन्नयोरुपसङ्ख्यानाड्ड :॥

सर्व्वत्रगामी । पुं• चनिले ॥ त्रि• सर्वत्रदिग्देशकालेषुगमनकर्त्तरि

सर्व्वत्रसमदर्शन :। त्रि• सर्व- स्मिन्नरिमित्रादौसमंदर्शनंयस्यतस्मिन् ॥

सर्व्वथा । च• हेतौ ॥ बाढे ॥ सर्व्व प्रकारेणेत्यर्थे ॥ सर्वै :प्रकारै :। प्रकारवचनेथाल् ॥ यथा । विद्यते नखलुकश्चिदुपाय : सर्वलोकपरि तोषकरोय :। सर्वथास्वहितमाच रणीयंकिङ्करिष्यतिजनोबहुजल्प : । प्रतिषेधायाम् । भृशे ॥

सर्व्वयावर्त्तमान :। त्रि• सर्वथाप्रा रब्धकर्मवशादिधर्मातिक्रम्यवर्त्त- माने

सर्व्वदमनः। पुं॰ शकुन्तलात्मजे॰ भरते॥ कार्त्तवीर्य्ये॥

सर्व्वदर्शनः। पुं॰ विष्णौ॥ सर्व्वाणिदर्शनात्मकान्यस्मिन्निस्यस्य सर्व्वात्मकत्वात्॥

सर्व्वदर्शी। पुं॰ विष्णौ॥ सर्व्वेषां प्राणिनांकृताकृतंसर्व्वंपश्यतिस्वाभाविकेनबोधेनेतितथा॥ बुद्धे॥ त्रि॰ सर्व्वज्ञे॥ सर्व्वंद्रष्टुंशीलमस्य। सुप्यजातौणिनिस्ताच्छील्ये॥

सर्व्वदा। अ॰ सर्व्वस्मिन्काले॥ सर्व्वैकान्यकिंयत्तदः कालेदा॥

सर्व्वदुःखक्षयः। पुं॰ मोक्षे॥ सर्व्वदुःखानांक्षयोविनाशोऽस्मिन्॰ इतितथा॥ सर्व्वपीडानाशे।

सर्व्वदृक्। त्रि॰ सर्व्वज्ञे अखिलस्यपदार्थस्यावलोकयितरि। सर्व्वंपश्यति। दृशिर्॰। क्विप्॥ ईश्वरे॥ सर्व्वमतीतानागतादि॰ पश्यतिस्वरूपबोधेनेतितथा। क्विन्प्रत्ययश्चेत्यत्रबहुव्रीह्याश्रयणात् कुत्वम्॥

सर्व्वदेवमुखः। पुं॰ अनले। अग्नौ।

सर्व्वधातमः। त्रि॰ सर्व्वस्यधारयितृतमे॥

सर्व्वधारी। पुं॰ वत्सरविशेषे॥ तत्फलंयथा। कोद्रवाः शालिमुद्गाश्चकङ्गुमाषास्तथैवच। सुलभंजायतेसस्यंजगत्सर्व्वधारिणि॥ त्रि॰ सर्व्वधारणशीले॥

सर्व्वधुरावहः। पुं॰ सर्व्वधुरीणे॥ सर्व्वाचासौधूश्च॰ सर्व्वधुरा। पूर्व्वकालैकसर्व्वेतिसमासः। ऋक्पूरित्यः। वहतीति॰ वहः। अच्। सर्व्वधुरायाः वहः॥

सर्व्वधुरीणः। पुं॰ रथलाङ्गलादिसर्व्वभाराणांवाहकेगवादौ। सर्व्वधुरावहे॥ सर्व्वधुरांवहति। खः। सर्व्वधुरादितिखः॥

सर्व्वनाम। न॰ सर्व्वादिपञ्चत्रिंशत्सु॥ तानियथा। सर्व्व॰ विश्व॰ उभ॰ उभय॰ डतर॰ डतम॰ अन्य॰ अन्यतर॰ इतर॰ त्वत्॰ त्व॰ नेम॰ सम॰ सिम॰ पूर्व्वपरावरदक्षिणोत्तरापराधराणिव्यवस्थायामसंज्ञायाम्। स्वमज्ञातिधनाख्यायाम्। अन्तरंबहिर्योगोपसंव्यानयोः। त्यद्॰ तद्॰ यद्॰ एतद्॰ इदम्॰ अदस्॰ एक॰ द्वि॰ युष्मद्॰ अस्मद्॰ भवतु॰ किम्॰ इति॥

सर्व्वनियन्ता। त्रि॰ परमेश्वरे। चिदात्मनि॥ परमार्थतोऽसङ्गस्याऽपिचैतन्यस्य॰ आध्यासिकसम्बन्धसम्वद्‌धाज्ञानद्वारासर्व्वजीवप्रवर्त्तकत्वेन॰ सर्व्वनियन्तृत्वमितिध्येयम्॥

सर्व्वन्दमः। पुं॰ शाकुन्तलेये॰ भ

रथे ॥

सर्व्वपथीण : । पुं॰ सारथौ ॥ सर्व्वपथान्व्याप्नोति । तत्सर्वादे पथ्य ङ्गकर्मपात्रपात्रं व्याप्नोतीतिख : ॥

सर्व्वपथीन : । पुं॰ रथे ॥ सर्व्वपथान्व्याप्नोति । तत्सर्वादेरितिख: ॥

सर्व्वपात्रीण: । पुं॰ ओदने ॥ सर्व्वपात्रं व्याप्नोति । तत्सर्वादेरितिख: ॥

सर्व्वपूर्णत्वम् । न॰ सम्भारे ।

सर्व्वभक्ष : । त्रि॰ सर्व्वभक्षणकर्त्तरि ॥

सर्व्वभक्षा । ) स्त्री॰ गलस्तन्याम् । सर्व्वभक्ष्या । ) छाग्याम् । अजायाम् ॥ इ॰ हे॰ न्द्र : ॥

सर्व्वभूतगुहाशय : । पुं॰ चिदात्मनि॰ परमेश्वरे ॥ सर्वभूतानांस्थावरजङ्गमानां॰गुहासुबुद्धिषुशेते । शीङो धिकरणेशेतेरित्यच् ॥

सर्व्वभूतप्रणेता । पुं॰ लोकात्मनिपरमेश्वरे ॥ यथाहु : । द्यांमूर्द्धानंयस्य विप्रावदन्ति॰ खंवैनाभिंचन्द्रसूर्य्यौ चनेत्रे । दिश : श्रोत्रे विद्धिपादौ क्षितिञ्चसोचिन्त्यात्मासर्वभूतप्रणेता । इति ॥

सर्व्वभूतात्मक: । त्रि॰ प्रत्यगभिन्नेपरमात्मनि ॥

सर्व्वभूतात्मभूतात्मा । पुं॰ आत्मज्ञानिनि ॥ यथा । जडाजडात्मकं सर्वमात्मभावंप्रपश्यति । सएवसर्वभूतात्मभूतात्माप्रोच्यतेबुधैरिति सर्वभूतात्मभूतश्च॰ आत्माखण्डपञ्चदश्य ॥

सर्वभूताशयस्थित : । त्रि॰ आत्मनि॰ चैतन्यानन्दघनेचिन्मात्रे ॥ सर्वभूतानामाशयेहृद्येन्तरयामिरूपेण॰ प्रत्यगात्मरूपेणचस्थितोय : सएवस : ॥

सर्वभृत् । त्रि॰ नामरूपात्मकस्थलजगतोधारके॰ पोषकेच॰ चिदात्मनि॰ ॥ मायया॰ सदात्मना॰ सर्वङ्कल्पितं॰ धारयति॰ पोषयतिच॰ निरधिष्ठानभ्रमायोगात् । डुभृञ्धारणपोषणयो : । क्विप् । तुक् ॥

सर्वमङ्गला । स्त्री॰ दुर्गायाम् ॥ सर्वेभ्य : सर्वेषांवामङ्गला ॥ सर्वाणिमङ्गलानियस्याइतिवा ॥ सर्वाणिहृदयस्थानिमङ्गलानिशुभानिच । ददातिचेप्सितांल्लोकेतेनसासर्वमङ्गलेतिदेवीपुराणम् ॥ अपिच । मङ्गलं मोक्षवचनमाङ्वोदातृवाचक: । सर्वान्मोक्षान्याददातितेनसासर्वमंगला ॥ हर्षेसम्पत्तिकल्याणेमङ्गलंपरिकीर्त्तितम् । तान्ददातिचयादेवीसाएवसर्वमङ्गला ॥ इ॰ ब्र॰ वै॰ पु॰ ॥ अन्यच्च । सर्वमङ्गलशब्दश्च सम्पूर्णार्थवाचक: । आकारोदातृवचनस्तस्मात्सासर्वमङ्गला ॥ ॥ इ॰ ब्र॰ वै॰ पु॰ श्रीकृष्णजन्मखण्डे २७ऽध्याय : ॥

सर्वमय : । त्रि॰ सर्वात्मके ॥

सर्व्वमङ्गल्यम् । न॰ कपर्द्दके ॥

सर्व्वमूषक : । पुं॰ अनेहसि ॥ काले ।

सर्व्वमेध : । पुं॰ सर्वस्वदक्षिणे॰ विश्वजिदाद्ये । यज्ञे ॥

सर्व्वम्भरि : । पुं॰ प्राणे ॥ सर्व्वस्विभर्त्ति । सर्वस्यमुमागमोऽभृञ् इतिनिपातनात् ॥

सर्व्वयोगविनिसृत : । त्रि॰ असङ्गे । सर्वसम्बन्धविनिर्गते ॥ योगशब्देनसम्बन्धउच्यते । सर्वेचतेयोगा: सम्बन्धास्तभ्योविनिसृत : विनिर्गत : ॥

सर्व्वरत्नकम् न॰ कांचविशेषे ॥

सर्व्वरस : । पुं॰ सर्जरसे । धूनके ॥ वीणाप्रभेदे ॥ लवणरसे ॥ सर्वैरस्यते । रसआस्वादने । अदन्तोऽयन्त : । घञ्॰ अज्वा ॥ सर्वेरसायस्मिन्वा ॥ परमानन्दे॰ आत्मनि ॥ सर्वे रसा : सुखानिविद्यन्ते यस्मिन्स : ॥ पण्डिते ।

सर्व्वरसाग्र : । पुं॰ मण्डे ॥ रसस्यासावग्रश्च । रसस्याग्रइतिवा ॥ अग्रोरस : ॥ रसाग्र : । राजदन्तादित्वा । सर्वस्यरसाग्र : ॥

सर्व्वरसोत्तम : । पुं॰ लवणरसे ॥

सर्व्वर्त्तुपरिवर्त्त : । पुं॰ वत्सरे ॥

सर्व्वलिङ्गी । पुं॰ पाषण्डे । वेदविरुद्धाचारे॰ सर्ववर्णाश्रमचिह्नधारिणि ॥ नानाव्रतधरानानावेशा : पाषण्डिनोमता: ॥ सर्वाणिचतानिलिङ्गानिच । सर्वेषांलिङ्गानिसन्त्यस्य । अतइनि : ॥

सर्व्वलोह : । पुं॰ लोहमयवाणे । प्रक्ष्वेडने । समस्तधातौ ॥

सर्व्ववर्णिका स्त्री॰ गम्भार्याम् ॥

सर्व्ववल्लभ : । त्रि॰ सर्वप्रिये ॥

सर्व्ववल्लभा । स्त्री॰ असत्याम्नार्याम् ॥

सर्व्ववाच्य : । त्रि॰ सर्व्वनिन्दावागविषये ॥

सर्व्वविक्रयी । पुं॰ प्रतिषिद्धद्रव्याणांविक्रेतरि ॥

सर्व्ववित् । पुं॰ परमेश्वरे ॥ त्रि॰ विदितात्मतत्त्वे ॥ सर्व्वंसर्वंवेत्ति॰ विन्दतिवा । विद॰ विद्लृवा । सत्सूद्विषेत्यादिनाक्विप् ॥

सर्व्वविषयातीत : । त्रि॰ सर्वाश्रयात्मनि ! सर्वमविद्यातत्कार्यात्मकंविषयमतीत्यावस्थित : ॥

सर्व्ववेदा : । पुं॰ विश्वजिद्याष्टरि । सर्वस्वदक्षिणोपेतयागकर्त्तरि ॥ यथाहामर : । सर्ववेदा : सयेनेष्टो याग : सर्वस्वदक्षिणइति ॥ सर्वेवेदयति॰ लम्भयति॰ ऋत्विग्भ्यइतिसर्ववेदा : । विद्लृलाभे । असुन्त : । असुन् ॥

सर्व्ववेशी । पुं॰ नर्त्तके । नटे । सर्वेषांवेशः सोऽस्त्यस्य । इनिः । सकलवेशधारिणि । बहुरूपी॰ इ॰ भा॰ ॥

सर्व्वव्यापी । वि॰ आकाशवत्सकलपदार्थव्यापनशीले ॥ यथा । सर्वव्यापिनमात्मानंज्ञात्वाधीरोनशोचतीति ॥

सर्व्वशः । अ॰ सर्वप्रकारेणेत्यर्थे ॥

सर्व्वशाखामलम् । न॰ नक्षत्रविशेषेषु ॥ यथा । भरणीकृत्तिकापित्र्यविशाखाश्लेषभानि च । सर्वशाखामलंप्रोक्तंव्रतंतत्रविवर्ज्जयेत् ॥

सर्व्वशास्त्रवित् । वि॰ महानिर्वाणागमज्ञे ॥

सर्व्वशान्तिकृत् । पुं॰ दीःप्यमीः । शाकुन्तलेये ॥ वि॰ सर्वशांतिविधायिनि ॥

सर्व्वसंसर्गलवणम् । न॰ औषरके ॥

सर्व्वसङ्गतः । पुं॰ षष्टिकाधान्ये ॥ वि॰ सर्व्वप्रिये । सकलसङ्गतियुक्ते ।

सर्व्वसत्त्वसमुद्भवा । स्त्री॰ प्रावृषि ॥ सर्वेषांप्राणिनांसमुद्भवउत्पत्तितोजीवनतस्त्रयस्याम् ॥

सर्व्वसन्नहनार्थकः । पुं॰ सर्व्वसैन्यसन्नहने । सर्वाभिसारे ॥ सर्वेषांसन्नहनम्॰ सर्वसन्नहनम् । सर्वसन्नहनमर्थोयस्य सः ॥

सर्व्वसन्नाहः । पुं॰ सर्वात्मनि ॥

सर्व्वसहः । पुं॰ गुग्गुलौ ॥ वि॰ सकलसहिष्णौ ॥

सर्व्वसाक्षी । पुं॰ परमात्मनि ॥ सर्वेषांशुभाशुभकर्म्मणां॰साक्षी॰ साक्षाद्द्रष्टा ॥ वि॰ सर्व्वविषयद्रष्टरि ॥

सर्व्वसिद्धिः । पुं॰ श्रीफले॰विल्वे ॥ वि॰ सिद्धियुक्ते ॥

सर्व्वसुखप्रदः । पुं॰ परमात्मनि ॥ भगवति ॥

सर्व्वस्वम् । न॰ समस्तधने ॥

सर्व्वस्वी । पुं॰ गोपकन्यायांनापितात्जातेसङ्करजातौ ॥ वि॰ सर्व्वस्वविशिष्टे ॥

सर्व्वहरः । वि॰ सर्वसंहारकारिणि ॥

सर्व्वहितम् । न॰ मरिचे ॥ वि॰ सर्वेषांहितकारिणि ॥

सर्व्वाकारः । वि॰ समस्तदेहाद्याकारविशिष्टे॰ भगवति ॥ यथाहुराचार्याः । सर्वाकारोभगवानुपास्यतेयेनयेनभावेन । तत्तद्भावमभूत्वाचिन्तामणिवत्समभ्येतीति ॥ सर्वोपादानकारणत्वात् सर्वाकारत्वम् ॥

सर्व्वाङ्गम् । न॰ सकलावयवे ॥

सर्व्वाङ्गसुन्दरः । पुं॰ औषधविशेषे ॥ यथा । रसगन्धकतुल्यांशोद्वौभा

गोटङ्कणस्य च । मौक्तिकं विद्रुमं श
ङ्खमवनीयसमांशत: ॥ हेमभस्मा
र्द्धभागञ्च सर्वं खल्वे निधापयेत् । नि
म्बुद्रवस्य योगेन पिष्टिकाङ्कारयेद्भि
षक् ॥ पश्चाद्गजपुटं दत्वा शीतल
ञ्च समुद्धरेत् । हेमभस्मसमं तीक्ष्णं तो
ल्याद्धींदरदो मत: ॥ एकीकृत्य स
मस्तानि सूक्ष्मचूर्णानि कारयेत् ।
तत: पूजां प्रकुर्वीत भक्षयेद्दिवसे शु
भे ॥ सर्वाङ्गसुन्दरो ह्येष रोगराजनि
कृन्तन: । वातपित्तज्वरे घोरे सन्निपा
ते सुदारुणे ॥ अर्शसां ग्रहणीरोगे मे
हे गुल्मे भगन्दरे । निहन्ति वातजा
न् रोगान् श्लैष्मिकांश्च विशेषत: ॥
पिप्पलीमधुसंयुक्तं घृतयुक्तमथापि
वा । भक्षयेत् पर्णखण्डेन सितया
चार्द्रकेण वा ॥ गुडूचीमस्वसहितं
प्रमेहे च विशेषत: । रसरत्नाकर: प्रो
क्त: सिद्धयोगो रसोत्तम: ॥ रात्रि
काहितु तैलाम्लं तथा गाढ्यं विवर्ज्जये
त् । धूर्त्तभैषज्यरत्नावल्यां सर्वाङ्ग
सुन्दरो रस: ॥

सर्व्वाङ्गीण: । पुं॰ तापे ॥ सर्वाङ्गानि
व्याप्नोति । तत् सर्वादेरिति ख: ॥
त्रि॰ सर्वावयवसम्बन्धयुक्ते ॥

सर्व्वातिथि: । पुं॰ विश्वरक्षितरि ॥
सर्वातिथिपूजके ॥ सर्वे॰ अतिथ
यो यस्य स: ॥

सर्व्वात्मा । पुं॰ सर्वस्वरूपे ॥ सर्व्वप्र

यमे ।

सर्व्वात्मता । स्त्री॰ सर्वस्यात्मभेदे
॥ भावे तल् ॥

सर्व्वाध्यक्ष: । त्रि॰ सर्वस्मिन्नधिकृते
॥ सर्व्वप्रत्यक्षे ॥ सर्व्वनियन्तरि ।

सर्व्वानुकारिणी । स्त्री॰ शालपर्ण्याम् ॥

सर्व्वानुकारी । त्रि॰ सर्व्वसमे ॥

सर्व्वानुभूति: । स्त्री॰ श्वेततृवृ
तायाम् ॥ सर्व्वैरनुभूयतेऽस्याम्
॥ सर्वैरनुभूयते वा । कर्म्मणि क्ति
न् ॥ सकलज्ञाने । पुं॰ भूताह
द्विशेषे ॥ भाव्यर्हद्विशेषे ॥

सर्व्वान्नभक्षक: । त्रि॰ उदरपिशाचे ।
सर्वान्नभोजिनि ।

सर्व्वान्नभोजी । त्रि॰ सर्वान्नीने ॥ स
र्व्वेषामन्नानि॰ सर्व्वान्नानि । सर्वा
न्नानि भोक्तुं शीलमस्य । सुपीति णि
नि: ॥

सर्व्वान्नीन: । त्रि॰ सर्ववर्णान्नभक्षके
। सर्व्वान्नभोजिनि ॥ सर्वान्नानि भ
क्षयति । अनुपदसर्व्वान्नेति ख: ॥
भिक्षौ ॥

सर्व्वाभिसन्धक: । पुं॰ परगुणासहन
तया सर्व्वाधिक्षेपके । वैडालव्रतिका
दौ ॥ यथाह मनु: । धर्म्मध्वजी सदा
लुब्धश्छाद्मिको लोकदम्भक: । वै
डालव्रतिको ज्ञेयो हिंस्र: सर्व्वाभिस
न्धक इति ॥

सर्व्वाभिसन्धी । पुं॰ वैडालव्रतिके ।

छत्रातापसी । वि॰ सर्वाभिसंधान विशिष्टे ॥

सर्व्वाभिसार:। पुं॰ सर्वौघे। सर्वंस न्नहनार्थके। चतुरङ्गसैन्यसन्नाहे। सर्वेषु॰ अभिसरणम्। स॰। भावेघञ्॥

सर्व्वार्थसाधिका। स्त्री॰ दुर्गायाम्। वि॰ सकलप्रयोजनसाधके॥

सर्व्वार्थसिद्ध:। पुं॰ बुद्धभेदे। शाक्य मुनौ। शौद्धोदनौ। वि॰ लब्धार्थे। समस्तप्रयोजनसिद्धियुक्ते॥ सर्व्वार्थेषु संसिनिष्पन्न। सिद्ध शुक्र त्वात्सर्वे॰ खेतिसमास:॥ सर्वार्थ: सिद्धोऽस्येतिवा॥

सर्व्वार्थसिद्धि:। स्त्री॰ योगविशेषे। सर्वार्थसिद्धिसंज्ञके॥ सर्व्वार्था नांसिद्धि:॥

सर्वार्थसिद्धिसंज्ञक:। पुं॰ योगभेदे॥ यथा। मूलोत्तराकरतुरङ्गम पुष्यभानिसूर्ये॰ इन्दुर्विधिर्भैत्र गुरु: शशाङ्के। सार्पीहुताशनउ पान्त्यभमेवभौमे॰ वङ्कोन्दुमैत्रकर भानिविधिश्चसौम्ये॥ मैत्रान्त्यपु ष्यतुरगादितिभानिजीवे॰ हर्यन्त्य मैत्रतुरगादितयश्चशुक्रे। ब्राह्मानि लश्रवणभानिशनैश्चराहे॰ सर्वार्थ सिद्धिसहित: कथितोहियोग:॥

सर्वार्थानुसाधनी। स्त्री॰ सर्वार्थसाधि न्याम्। अम्बायाम्। दुर्गायाम्॥

यथा। धर्मादीश्चिन्तितान् यस्मात् सर्वलोकेषुयच्छति। ततोदेवीसमा ख्याता सा सर्वार्थानुसाधिनीतिदेवी पुराणे ४५ ऽध्याय:॥

सर्व्वावसर:। पुं॰ निःसंपाते। अ र्द्धरात्रे॥ सर्वेषामवसरोऽस्मिन्॥ ब॰ वि॰ शेष:॥

सर्व्वाशी। वि॰ निषिद्धभोजनादि शीले॥

सर्व्वाश्चर्य्यमय:। वि॰ अनेकाद्भुतप्र चुरे॥

सर्व्वाश्रमनमस्कृत:। पुं॰ अन्त्याश्रमे। परमहंसे॥

सर्व्वाशा। स्त्री॰ देशविशेषे॥

सर्व्वाहृण:। पुं॰ समस्तदिने॥

सर्व्वीय:। वि॰ सार्वे। सर्वस्मैहित म्। सर्वाणोरेतिपक्षे छ:॥

सर्व्वेन्द्रियगुणाभासम्। वि॰ श्रोत्रादि रूपाणि॥ सर्वेषांन्द्रिः करणानांश्रो त्रादीनां॰ मनः करणैश्चबुद्धि मनसोर्गुणौ॰ व्यवसायसङ्कल्पश्रव णवचनादिभिस्तद्विषयतयाऽवभा सतइव॰ सर्वेन्द्रियव्यापारैर्व्यापृ तमिवयत्॥ ततसर्वेन्द्रियाणिगु णाश्चतद्विषयानाभासयतिवा॥

सर्व्वेशान:। पुं॰ परमेश्वरे॥ सर्व्वे षामीशान:॥

सर्व्वेश्वर:। पुं॰ परशिवे॥ परमार्थ तोऽसङ्गस्यापिचैतन्यस्य॰ आध्यासि

कामम्बश्च सम्बद्धाज्ञानहारः सर्वम
योदाधारकमनःरूपत्वेन परमेश्वर
त्वम् । सर्वेषाम् ईश्वरः । स्वा
मिन्दमये ॥ यथा । अयं यत् सृजते वि
श्वं तदन्यथयितुं पुमान् । नकोऽपि
शक्तस्तेनायं सर्वेश्वर इति श्रुतः ॥
यथा च । नारायणमात्मानं ज्ञात्वा
सर्गस्थितिप्रलयहेतुम् । सर्वज्ञः
सर्वभूतः सर्वः सर्वेश्वरो भव
तीति ।

सर्व्वौघः । पुं॰ सर्वसन्नहनार्थके ।
सर्वस्यौघः ॥ गुरुविशेषे ॥

सर्व्वौषधिः । स्त्री॰ ओषधिवर्गविशे
षे ॥ यथा । कुष्ठं मांसी हरिद्रे द्वे मु
राशैलेयचन्दनम् । वचाकर्चूरमु
स्ताख्याः सर्वौषध्यः प्रकीर्त्ति
ताः ॥

सर्षपः । पुं॰ सरिषपे । तुभे । कट
म्बके ॥ सरति स्नेहोऽस्मात् । सृ॰
। सर्त्तेरपः शुक् चेत्यपः पुगागम
श्च ॥ सर्षपस्तु रसे पाके कटुः स्निग्धः
सतिक्तकः । तीक्ष्णोष्णः कफवा
तघ्नो रक्तपित्ताग्निवर्द्धनः ॥ रक्षोह
रो जयेत् कण्डू कुष्ठकोष्ठक्रिमिग्रहा
न् । यथा रक्तस्तथा गौरः किन्तु गौ
रो वरो मतः ॥ स्थावरविषप्रभेदे ॥
लिख्याषट्कपरिमाणे ॥ यथा । जा
लान्तरगते भानौ यच्चाणु दृश्यते रजः
। तैश्चतुर्भिर्भवेल्लिख्या लिख्याषड्भि
रसर्षपः ॥

सर्षपतैलम् । न॰ सर्षपाणां स्नेहे ।
स्नेहे तैले च ॥ दीपनं सार्षपं तैलं
कटुपाकरसं लघु । लेखनं स्पर्शवी
र्य्योष्णं तीक्ष्णं पित्तास्रदूषकम् ॥ क
फमेदोऽनिलार्शोघ्नं शिरःकर्णामया
पहम् । कण्डूकोठक्रिमिश्वित्रकुष्ठदु
ष्टव्रणप्रणुत् ॥ तद्वद्राजिकयोस्तैलं
विशेषान्मूत्रकृच्छ्रकृत् । राजिक
योः कृष्णराजिकाऽऽरक्तराजिका॰
तयोः ॥

सर्षपनालम् । न॰ सार्षपे काण्डे ॥
तीक्ष्णोष्णं सार्षपं नालं वातश्लेष्म
व्रणापहम् । कण्डूक्रिमिहरं दद्रु
कुष्ठघ्नं रुचिकारकम् ॥ पाकप्रका
रो यथा । सार्षपः कोमलो दण्डः
स्विन्नस्तक्रेण पीडितः । ततस्तैलै
र्हिङ्गुगाढ्यैर्भर्जितः सैन्धवा
न्वितः ॥ इति ॥

सर्षपशाकम् । न॰ सार्षपे शाके ॥
कटुकं सार्षपं शाकं बहुमूत्रमलं गुरु
। अम्लपाकं विदाहि स्यादुष्णं रूक्षं
त्रिदोषकृत् ॥ सक्षारं लवणं तीक्ष्णं
स्वादुशाकेषु निन्दितम् ॥

सर्षपी । स्त्री॰ खञ्जनिकायाम् ॥

सलम् । न॰ जले ॥ सलति । सल॰
। अच् ॥

सललितम् । त्रि॰ सविलासे ॥

सलिरम् । न॰ जले ॥ सलति । सल॰ ।

सलिलकलीति॰ इलच्। रलयोरैक्यम्॥

सलिलम्। न॰ जले। उपादाना ख्यायांद्वितीयायांतुष्टौ॥ सलति॰ गच्छतिनिम्नदेशम्। सलगतौ। सलिकल्यनिमहिभडिभगिडगगिड-पिगिडतुगिडकुकिभूभ्यइलच्। सलिलव्यञ्जकदेशादगागलिद्रष्टव्याः। कश्चिद्विशेषोवापिकालिदासोक्तो यथा। अथालुनोद्दुस्तरसिन्दुवाराः पर्णप्रशोलातिविशालशाखाः। बलमीकपार्श्वाः स्नुरगादिवल्वतलवा स्वनिर्दिश्यमलंसमाशु॥ येषामति शीतलयसत्वपुष्टिरुचीसाखादु सान्द्रसलिलाकिलशीघ्रशार्दा। इत्यंविलोक्यसुधामिहकूपवापी कासारकुण्डखननंविदधीतशश्वत्॥ नीचगतजलदेशमाह। सिंधुप्रतानमरुकापवगोडगंशिनिम्नंधरा न्तरगमम्वुनिसर्गभावात्। धारा-स्कुरुठतरुवङ्गविनिस्तुषोर्व्यांतरडन विकृतिमङ्गुणमाहुरार्याः॥ शुभजलस्थानमाह। यामादुदीरितदिग्युग्मोज्भागेचवेभमगडलविभागशतिप्रशस्तम्। वाच्यंवनंतदिहगभंकवोन्द्रभागेनिम्नाद्रिभूमितटिगोनगदिक्षिराभिरिति॥

सलिलकुन्तलः। पुं॰ शैवाले। सलिलस्यकुन्तलइव॥

सलिलकोष्टः। पुं॰ जलगटीे। सलमंदिरङ्ग॰ भा॰ प्र॰॥

सलिलजः। त्रि॰ जलोत्पन्ने॥ न॰ पद्मे॥

सलिलनिधिः। पुं॰ समुद्रे॥ यथा। पीत्वागज्जंन्त्वपस्तेदिशिदिशिजलदास्त्वंशरण्योगिरीणांसुतामावा सभाजाममरविटपिनांजन्मभूमिस्त्वमेवागाम्भीर्यंकिन्नुताद्दकत्वयिसलिलनिधेकिन्तुविज्ञापयामः सर्वोपायैनमेवाबकृषिमुनिकृपाद्दष्टयः काकुस्थोयाः॥ जलानांनिधिः॥

सलिलेन्धनः। पुं॰ वाडवाग्नौ॥ सलिलमिन्धनंयस्य॥

सलीलः। त्रि॰ लीलयासहवर्तमाने।

सलोकता। स्त्री॰ समानलोकतायाम्।

सल्लकी। स्त्री॰ गजभक्ष्यायाम्। शल्लक्याम्। सत्कृत्यलक्यतेखाद्यतेगजैः। लक॰। कुन्। गौरादि॥

सल्लक्ष्यम्। न॰ प्रत्यगभिन्नेब्रह्मणि॥ सच्चतल्लक्ष्यञ्चेतितथा॥

सवः। पुं॰ यज्ञे॥ सोमोयत्राभिषूयतेरसार्थंखण्ड्यतेयत्राध्वरेससवः॥ सस्नाने॥ सूयतेसोमोऽत्र। पुअ॰। ऋदोरप्॥ यद्वा। सूयतेऽत्रानेनवा। षूप्रेरणे। अप्॰घो वा। न॰ जले॥

सवनम्। न॰ यज्ञस्नाने। सूत्यायां

भिधीयतइति ॥ सुवति ॥ सुव ति॰ कर्मणिलिकः प्रेरयति । सूप्रेरणे । तृच् । धकर्ष्वर्च ॥

सवितृदैवत: । पुं॰ हस्तनक्षत्रे ॥ सविता दैवतंयस्य ॥

सवितम् । न॰ प्रसवसाधने ॥ सूयतेनेन । षू॰ । षत्रिंलूधूसूखनेतीत्र : ॥

सवितृय : । सूर्यसम्बन्धीये ॥

सवित्री । स्त्री॰ जनन्याम् । तृजन्तात्॰ ङीप् ॥

सविध : । त्रि॰ अन्तिके । निकटे ॥ समानाविधाऽस्य॰ सहविधयेतिवा ॥ सप्रकारे ॥

सविस्मय : । त्रि॰ आश्चर्ययुक्ते । वीस्मापन्ने ॥ विस्मयेनसहवर्त्ततइति तथा ॥

सवेश : । त्रि॰ निकटे ॥ वेशान्विते समानोवेशोऽस्य॰सहदेशेनेतिवा ॥

सव्य: । पुं॰ विष्णौ ॥ त्रि॰वामे । प्रतीपे प्रतिकूले । दक्षिणे ॥ सूयते । षू॰ । अचोयत् ॥ यद्वा । सुनोति । बाहुलकाद्य : ॥

सव्यभिचार : । पुं॰ हेत्वाभासान्तरे ॥ यथा । अनैकान्तिक : सव्यभिचार : । सव्यविध: । साधारणाऽसाधारणानुपसंहारिभेदात् ॥

सव्यलीक : । त्रि॰ सापराधे ॥

सव्यसाची । पुं॰ अर्जुने । पार्थे ॥

सव्येनवामेनहस्तेनापि॰ शराम्॰ सचितुंसन्धातुंशीलंयस्य । णिनि : ॥

सव्येष्ठ : । पुं॰ सारथौ ॥ सव्येतिष्ठति । सुपिस्थइतिक : । स्थास्थिन्स्पृणामितिष : । हलदन्तादिस्थलुक् ॥

सव्येष्ठा । पुं॰ सूते ॥ सारथौ ॥ सव्येवामेतिष्ठति । ष्ठा॰ । सव्येस्थश्छन्दसीति॰ क्रः : ॰ डिच्च । अम्बाम्बेत्यत॰स्थास्थिन्स्पृणामुपसङ्ख्यानात्षत्वम्॰ सुषामादित्वाद्वा । हलदन्तादित्यलुक् । सव्येष्ठरो॰ सव्येष्ठरइत्यादिरूपाणि ॥

सशस्त्र : । त्रि॰ शस्त्रयुक्तेभूम्यादौ ॥

सशस्त्रा । स्त्री॰ नागदन्त्याम् ॥

सश्मश्रु : । स्त्री॰ श्मश्रुयुक्तस्त्रियाम् । नरमानिन्याम् ॥

ससत्त्व : । त्रि॰ प्राणियुक्ते ॥

ससत्त्वा । स्त्री॰ गर्भिण्याम् ॥

ससन्देह : । पुं॰ अर्थालङ्कारप्रभेदे ॥ यथा । ससन्देहस्तुभेदोक्तौ॰ तदनुक्तौचसंशय : । भेदोक्तौयथा । अयंमार्त्तण्ड : किंसखलुतुरगै : सप्तभिरित: कृशानु: किंसर्वा: प्रसरतिदिशोनैवनियतम् । कृतान्त : किं साक्षान्महिषवहनोसावितिचिरंसमालोक्याजौत्वांविदधतिविकल्पान्नृपतिभटा: ॥ भेदोक्तावित्यनेनस्मि

बलमयं निश्चयगर्भोयाबन्निश्चयान्तो पिसन्देह: स्वीकृत: । यथा॥ इन्दु: किंब्रह्मकलङ्क सरसिजमेतत् किमम्बुकुचगतम् । ललितसविलासवचनै र्मुखमितिहरिणाक्षि निश्चितं परत: ॥ किन्तु निश्चयगर्भ इव नावनिश्चय: प्रतीयमानइत्यु पेक्षितोभट्टोद्भटेन । तद नुक्तीयथा । अस्या: सर्गविधौ प्रजापतिरभू च्चन्द्रोनुकान्तिप्रद: शृङ्गारैकरस: स्वयं नुमदनोमासो नुपुष्पाकर: । वेदाभ्यासजड: क थं नुविषयव्यावृत्तकौतूहलोनिर्मा तुं प्रभवेन् मनोहरमिदं रूपं पुराणो मुनि: ॥ त्रि॰ सन्देहसहिते ॥

ससुर: । त्रि॰ सदेवे । सुरासहिते । सुरेण॰ सुरयावा॰ सहवर्त्तते इति ॥

सस्मित: । त्रि॰ ईषद्धास्ययुक्ते ॥ य था । सस्मिताननसरोजमङ्गनेरिङ्ग माणमतिलोलकुन्तलम् । रोचनो ल्लसितभालमस्तुमेऽगर्वमनसिर्व गर्ववपुरित्यनुमितोजगदीश: ॥

सस्यम् । न॰ शस्ये । वृक्षादिफले ॥ धान्ये ॥ शस्त्रे ॥ गुणे ॥ सस्ति । षसषसिस्वप्ने । मोक्षासिभ्यो य: ॥

सस्यक: । पुं॰ मणिभेदे । नालिकेरा न्त: सस्याभमणौ । असौ । खड्गे ॥ वस्त्रे ॥ साधौ ॥ सस्येनगुणेन परिज्ञात: सस्यक: । सस्येनपरि ज्ञातइतिकन् ॥

सस्यमारी । पुं॰ महामूषके ॥

सस्यसंवर: । पुं॰ सालवृक्षे ॥ सस्यै: संव्रियते । वृञ् । ग्रहवृदृनिश्चिगमश्च ॥

सस्यसंवरण: । पुं॰ सालवृक्षे । स ल्युवा॰ ह॰ भा॰ प्र॰ ॥

सस्वेद: । त्रि॰ स्वेदसहिते ॥

सस्वेदा । स्त्री॰ दूषितायाम्कन्याया म् ॥

सह । अ॰ साकल्ये ॥ विद्यमाने ॥ सादृश्ये । यौगपद्ये । सार्द्धम्॰ साकम्॰ समम्॰ सममित्यर्थे । सहिते ॥ समृद्धौ । सम्बन्धे ॥ सहते । षहमर्षणे । पचाद्यच् ।

सह: । पुं॰ न॰ बले । पुं॰ मार्ग शीर्षे । न॰ पांशवे॰ लवणे ॥ त्रि॰ क्षमे ॥ क्षान्ते ॥ सहते॰ क्षमते । षह॰ । पचाद्यच् ॥

सहकार: । पुं॰ अतिसौरभाम्रे ॥ सह्वार॰ ह॰ भा॰ प्र॰ ॥ सहका रयति॰ मेलयतिहृदम् । अच् । तुषारादयश्च ल्यान्तोवासाधु: ॥ सा हाय्ये ।

सहकारी पुं॰ प्रत्यये ॥ त्रि॰ सह कार्य्यं कृति: ॥

सहकारित्वम् । न॰ तद्भिन्नत्वे सति तज्जन्यजनकत्वं॰ इतिनैयायिका: ॥

सहगमनम् । न॰ । अनुगमने ॥ यथा ॥ अपौलोकपालाधादित्यचन्द्राग्नि लान्याकाशभूमिजलहृदयावस्थिता

त्यर्यामिपुरुषयमद्दिमराविसन्ध्याध
मीयूयंसाक्षिणोभवत•ज्वलच्चितारो
हणेनपतिदेहेनसहगमनमहंकरो
मीत्यनुगमनेसङ्कल्पः॥

सहचरः। पुं• नीलझिण्टाम्॥ पी
तझिण्ट्याम्। पीयाबांसाइ॰ भा•
प्र• ॥ वि• अनुचरे॥ सहचरति
। चर•। पचाद्यच्॥ वयस्ये॥ प्र
तिबन्धिनी॥

सहचरितः। वि॰ सहानुष्ठिते ॥ स
हचारिते॥

सहचरी। स्त्री• नीलझिण्टाम्॥ पी
तझिण्टाम्॥ झिण्टीमात्रे॥ भा
र्यायाम्। पत्न्याम्॥ वयस्याया
म्॥ सहचरति। चर•। पचादौ
चरडितिटित्वनिपातनात्•ङीप्।

सहजः। पुं• निसर्गे। स्वभावे॥
तृतीयभवने॥ वि• सहोत्थे। सह
सम्भवे। सहोदरे॥ सहतुल्ये• उ
दरे• जात•। जनी•। अन्येष्व
पीतिडः॥

सहजन्मा। पुं• सोदरे॥ सहसमाने
उदरेजन्मयस्यसः॥

सहजमित्रम्। न• स्वाभाविकेसुहृदि
। यथा। अरिर्मित्रमुदासीनोऽन
न्तरस्तत्परः परः। क्रमेणमण्डलं
चिन्त्यंसामादिभिरुपक्रमैः॥ अ
रिः• शत्रुः। मित्रम्• सुहृद्॰
। उभयविलक्षणः• उदासीनः।
तेचत्रयस्त्रिविधाः। सहजाः•
कृत्रिमाः• प्राकृताश्चेति॥ सह
जंमित्रम्• भागिनेयपैतृष्वसीय-
मातृष्वस्रीयादिरितिमिताक्षरा॥

सहजा। स्त्री• भगिन्याम्। सहोदरा
याम्॥ प्रकृतिप्रभेदे। आत्मनास
हैवजातायाम्॥ यथापश्वादीना
माकाशगमनादिलक्षणाप्रकृतिः स
हजा॥ टाप्॥

सहजातः। वि• सहोदरे॥ यमजे॥

सहजारिः। पुं• स्वाभाविकेशत्रौ॥
यथा। सहजारिः सापत्न्यपितृव्य
तत्पुत्रादिरितिमिताक्षरायामाचा
राध्यायः॥

सहत्रुकम्। न• अस्थिसहितेपक्वमांसे
। सास्थिपक्वमांसे। हडमांसइति
प्रसिद्धे॥ यथा। छागादेर्मांसम्
र्व्वादेः कुट्टितंखण्डितंपुनः।
शुद्धमांसविधानेनपचेदेतत्सहत्रुक
म्॥ सहत्रुकंगुणान्येशुद्धमांसगु
णंस्मृतमितिभावप्रकाशः॥

सहदेवः। पुं• पञ्चमपाण्डवे। मा
द्रीतनये। नकुलानुजे॥ जरासंध
सुते॥ वि• देवेनसहिते॥

सहदेवा। स्त्री• बलायाम्॥ दण्डो
त्पले। शारिवौषधौ॥ मरुदेवा
याम्। अर्हन्मातरि।

सहदेवी। स्त्री• महाबलायाम्। पी
तपुष्पायाम्॥ यथा। ज्वरंहन्ति

शिरोवचासहदेव्याजटाभ्रुवम् ॥ ज्वरं विषमज्वरम् । सर्पाच्याम् ॥ पीतदण्डोत्पलायाम् ॥ सहदेवस्थभार्यायाम् ॥

सहदेवीगण : । पुं॰ प्रतिष्ठायाम् देवस्नानार्थमोषधीसमूहे ॥ यथा । पञ्चगव्यै :स्नापयेच्चसहदेव्यादिभिस्तत : । सहदेवीबलाचैवशतमूलोशतावरी ॥ कुमारीचगुडूचीचसिंहीव्याघ्रीतथैवच । याचौषधीतिमन्त्रेणस्नानमेषधिमङ्गले : ॥

सहधर्मिणी । स्त्री॰ वेदविधानेनोढायाम् । पत्न्याम् । द्वितीयायाम् । भार्यायाम् ॥ सहधर्मीस्त्यस्या : ॰ पश्चात्सहकर्मस्वधिकारात् । धर्मशीलवर्णान्ताच्चेतोनि: । वोपसर्जनस्य ॥

सहनम् । न॰ क्षमायाम् । प्रतीकारानिच्छायाम् ॥ यथा । सहनंसर्व्वदु :खानांतितिक्षामाशुभामतेति ॥ त्रि॰ क्षमयान्विते । सहिष्णौ । क्षमिणि ॥ सहतेतच्छील : । षह॰ अनुदात्तेतश्चेतियुच् । नन्द्यादित्वाल्लुर्वा ॥

सहनर्त्तनम् । न॰ एकत्रमण्डलाकारनृत्यकरणे ॥

सहनशील : । त्रि॰ सहिष्णौ ॥

सहपांशुक्रिड : । त्रि॰ वयस्ये ॥

सहपानम् । न॰ सपीतौ ॥

सहभावी । त्रि॰ सहायै ॥

सहभोजनम् । न॰ बहुभि :सम्मिल्यैकपात्रभोजने । सग्धौ ॥ सह॰ भोजनम् । सुप्सुपेतिसमास : ॥

सहमरणम् । न॰ मृतस्वामिनासहज्वलच्चितारोहणेनप्राणत्यागे ॥

सहमान : । त्रि॰ सहिष्णौ ॥

सहमाना । स्त्री॰ त्रैलोक्यात्मन: क्षीरसमुद्रदक्षिणदिग्भागे ॥ सहन्तेऽस्यांपापकर्मफलानियमपुर्यांप्राणिनइतितथा ॥

सहयज्वा : । त्रि॰ कर्माधिकृते ॥ यज्ञेनविहितकर्मकलापिन॰ सहयज्वेतद्वृत्ति ॥

सहयायी । त्रि॰ मिलितगामिनि । स॰यो॰ दृ॰ भा॰ ॥

सहयुद्वा । त्रि॰ कारितयुद्धे ॥ सहयोधितवान् । युध॰सहेचेतिक्वनिप् ॥

सहरमा । स्त्री॰ मुद्गपर्ण्यां ॥

सहर्ष : । त्रि॰ हर्षयुक्ते ॥

सहवास : । पुं॰ सहावस्थाने ॥ यथा । नसंवसेच्चपतितैर्नचाण्डालैर्नपुक्कसै : । नमूर्खैर्नावलिप्तैश्चनान्त्यैर्नान्त्यावसायिभिरितिमनु: ॥

सहवासी । त्रि॰ एकस्थानेयौगपद्येनावस्थानकर्त्तरि ॥ यथा । सहवासीविजानातिचेष्टितंसहवासिनामिति ॥

सहा: । पुं॰ मार्गशीर्षे । मार्गे ॥

इमस्त्रर्गी । सहति । षह० । ष सुन् ॥

सहः । न० बले ॥ मानसपाटवे ॥ ज्योतिषि ॥ सहते० सह्यतेऽनेना वा । षह० । असुन् ॥

सहस : । त्रि० सहासे ॥ हसिनसहव र्त्तत इति ॥

सहसा । अ० हठादर्थे ॥ अविमर्शे ॥ यथा । सहसाविदधीतनक्रियामवि वेकः परमापदांपदम् । वृणतेहि विमृश्यकारिणंगुणलुब्धाः स्वय मेवसम्पदः ॥ अतर्किते । आक स्मिके । अकस्मादर्थे ॥ सहसानि म्नतीभाविवियोगअनित्यं हृदिस्थि- त : । नाकारिगूहितुंशक्योवहस्य तिसमैरपि ॥ तत्क्षणादर्थे ॥ दि व : प्रसूनंसहसापपातेतितथा ॥ सहते । षह० । असाप्रत्ययः ॥

सहसान : । • पुं० मयूरे ॥ यज्ञे ॥ त्रि०क्षमायुक्ते ॥ सहते । षह० । ऋञ्जिवृधिमन्दिसहिभ्यः कित्इत्य सानच् ॥

सहस्य : । पुं० पौषमासि । सहसित्र लिसाधुः । तत्रसाधुरितियत् ।

सहस्रम् । न० दशशते० १००० । अ नन्ते ॥ विश्वंशतंसहस्रंचसर्वम क्षयंशाश्वतमितिमहाभारतम् ॥

सहस्रकाण्डा । स्त्री० श्वेतदूर्वायाम् ॥

सहस्रकिरण : । पुं० सूर्ये ॥ सहस्रं किरणायस्य ॥

सहस्रगुः । पुं० आदित्ये । भानौ ॥ स सहस्रंगवोरश्मीनांयस्यस : ॥ अत्र याज्ञवः । तासांशतानिचत्वारिरश्मी नांवृष्टिसर्ज्जने ॥ शतत्रयंहिमो- त्सर्गेतावद्घर्मस्यसर्ज्जने ॥ आनन्दा श्चहिमेध्याश्चनूतनापूतनाइति । च तुःशतंवृष्टिवाहास्ता : सर्वाअमृ ताःस्त्रियइति ॥

सहस्रजित् । पुं० हरौ ॥ सहस्रा ण्यसुराणांजयति । जि० । क्विप् ॥

सहस्रणी : । पुं० भीष्मे । गाङ्गेये ॥ सहस्रंरथिनो नयति० पालयति । णीञ्० । सत्सूद्विषेतिक्विप् ॥

सहस्रतम : । त्रि० सहस्रस्यपूरणे ॥ नित्यंशतादीतिडटस्तमडागमः ॥

सहस्रदंष्ट्र : । पुं० पाठीनमत्स्ये ॥ स हस्रंदंष्ट्रायस्य सः ॥

सहस्रदंष्ट्री । स्त्री० पाठीने । बोदा लमत्स्ये ॥

सहस्रद : । त्रि० बहुप्रदे ॥ सहस्रं ददाति । डुदाञ्० । कः ॥

सहस्रदो : । पुं० कार्त्तवीर्य्यार्ज्जुने ॥ ॥ सहस्रंदोषोबाहवोयस्यसः । ष त्वस्यासिद्धत्वाद्रुत्वविसर्गौ ॥

सहस्रधारः । पुं० विष्णुचक्रे ॥

सहस्रधारा । स्त्री० देवतास्नानार्थंस हस्रच्छिद्रयुक्तपात्रगलितजलधारा याम् ॥ यथा । सहस्रधारयादेवी०

स्नापयामिसुरेश्वरीमिति ॥

सहस्रनयन : । पुं॰ इन्द्रे ॥ सहस्रं नयनान्यस्य ॥

सहस्रनेत्र : । पुं॰ इन्द्रे ॥ विष्णौ ॥ सहस्रं नेत्राण्यस्य ॥

सहस्रपत्रम् । न॰ कमले । पद्मे । नलिने ॥ सहस्रम्बहूनिपत्राण्यस्य ॥

सहस्रपात् । पुं॰ विष्णौ ॥ सहस्रं पादायस्य । सङ्ख्यासुपूर्वस्येति पादस्यान्तलोपः ॥

सहस्रपाद : । पुं॰ कारण्डे ॥ मार्त्तण्डे ॥ यज्ञपूरुषे । विष्णौ ॥

सहस्रभित् । न॰ कस्तूर्याम् ॥ अम्लवेतसे ॥

सहस्रभुज : । पुं॰ विष्णौ ॥ कार्त्तवीर्यार्जुने ॥

सहस्रभुजा । स्त्री॰ दुर्गायाम् ॥ महालक्ष्म्याम् ॥

सहस्रमरीचि : । पुं॰ सूर्ये ॥

सहस्रमूर्द्धा । पुं॰ श्रीहरौ ॥ विष्णौ ॥ सहस्राणिअपरिमितानि मूर्द्धानोऽस्य ॥

सहस्रमूली । स्त्री॰ द्रवन्त्यामौषधौ ॥

सहस्रमौलि : । पुं॰ विष्णौ ॥ अनन्ते ॥

सहस्ररश्मि : । पुं॰ सूर्ये ॥

सहस्रवदन : । पुं॰ शेषे ॥ विष्णौ ॥

सहस्रबाहु : । पुं॰ कार्त्तवीर्यार्जुने ॥ बाणासुरे ॥

सहस्रवीर्य्या । स्त्री॰ दूर्वायाम् ॥ सहस्रवीर्याण्यस्याः ॥ महाशतावर्याम् ॥

सहस्रवेधम् । न॰ काञ्जिकविशेषे । चुक्रे ॥

सहस्रवेधी । पुं॰ अम्लवेतसे । चुक्रे ॥ कस्तूर्याम् ॥ न॰ रामठे । हिङ्गुनि ॥ त्रि॰ सहस्रवेधकर्त्तरि ॥ सहस्रं वेधितुं शीलमस्य । विध विधाने । सुप्यजातौणिनि : ॥

सहस्रशिखर : । पुं॰ विन्ध्याचले ॥

सहस्रा । स्त्री॰ अम्बष्ठायाम् ॥

सहस्रांश : । पुं॰ सहस्रतमेभागे ॥

सहस्रांशु : । पुं॰ भानौ । हंसे । तपने ॥ सहस्रमंशवोयस्य ॥

सहस्राक्ष : । पुं॰ आखण्डले । इन्द्रे ॥ विष्णौ सर्व्वलोकसाक्षिणि ॥ सहस्रमक्षीण्यस्य । सहस्राण्यपरिमितान्यक्षीण्यस्यवा॰ । बहुव्रीहौ सक्थ्यक्ष्णो : स्वाङ्गात्षच् ॥

सहस्रार : । पुं॰ न॰ शिरोवस्थिताधोमुखसहस्रदलकमले ॥

सहस्रार्चि : । पुं॰ विष्णौ । सूर्य्ये ॥ सहस्राण्यर्चींषियस्य स : सहस्राण्यनन्तान्यर्चींषिभासोयस्यविश्वरूपधरस्यविष्णोरिति ॥

सहस्री । पुं॰ सहस्रसङ्ख्यसैन्ययुक्ते ।

साहस्रं ॥ सहस्रं बलमस्त्यस्य । तपः सहस्राभ्यां विनीनी॰ इतीनि : ॥ बलिभिः सहस्रं चसाहस्रास्ते सहस्रि ण : ॥

सहा । स्त्री॰ नखभेषजे । दण्डोत्प लायाम् । सहदेवायाम् ॥ सुवर्ण ण्याम् ॥ घृतकुमार्याम् ॥ उर्व्याम् । भूमौ ॥ सहते । षह॰ । अच् । टाप् ॥ सेवन्त्याम् ॥ शुक्ल झिण्ट्याम् ॥ स्वर्णकङ्कास्याम् ॥ राम्नायाम् ॥ स्वर्णचोर्याम् ॥ त रुणीपुष्पे ॥ पीतदण्डोत्पलायाम् ॥

सहाचर : । पुं॰ पीतझिण्टाम् । कटसारिका॰ कटसैर्य्या॰ इ॰ भा॰ प्र॰ ॥ सहचरे ॥ सहआचरति । चर॰ । अच् ॥

सहाय : । पुं॰ चक्रवाके ॥ त्रि॰ सहचारिणि । अनुचरे । अभिसरे ॥ सहअयते॰ अयतिवा । अय॰ । इ गतौवा । पचाद्यच् ॥ राज्ञः सहायाश्च । सहसायतयापुष्टा : सततं प्रतिमानिताः ॥ राज्ञासहायाः कर्त्तव्याः पृथिवीं जेतुमिच्छतीति मात्स्ये १८८ अध्याय : ॥ अथोक्तं देवीभागवतेव्यासेन । शक्यायेत्थं मतिर्दत्ताहरिणाहवघातिने । प्रविष्टो यपर्व विष्णु : सहाय : प्रत्यपद्यत । अथापदि सहायोभूद्वासुदेव : कर्मसु न । समयेसुजन : सर्व : सं सारेस्मिन्नराधिप : ॥ दैवेविमुखतांप्राप्तेनकोप्यस्तिसहायवान् । पितामातातथाभार्याभ्राताबाथसहोदर : ॥ सेवकोवापिमित्रं वापुत्रश्चैवतथौरस : । प्रतिकूलेगतेदैवेनकोप्यस्तिसहायतामिति ॥

सहायता । स्त्री॰ सहायौघे । सहायानांसमूह : । गजसहायाभ्यामिति तल् ॥ साहाय्ये ॥ सहायस्यकर्म भावोवा । तल् ॥

सहायत्वम् । न॰ साहाय्ये ॥

सहार : । पुं॰ आम्रवृक्षे । रसाले ॥ महाप्रलये ॥ इतिहलायुध : ॥

सहारी । पुं॰ वर्णाह्वस्वाक्षरे ॥ आद्यन्तवर्णा : पश्चात्तवर्णा : । लघ्वक्षधारौवाच्य : सहारी ॥ यथा । कंसादिकं तुधर्मकहेतुम् । वंदेश्रुमाभम॰ इन्दीवराभम् ॥

सहारोग्य : । त्रि॰ नीरुजि ॥

सहित : । त्रि॰ सहिते । संयुक्ते ॥ सम्धीयतेस्म । डुधाञ् : क्तः । दधातेर्हि : । समोहितततयोर्वालोपः ॥ सम्यग्हिते ॥ हितेनसहवर्त्तमाने ॥

सहिता । त्रि॰ सोढरि । सहनशीले ॥ सहते । षह॰ । तृच् । तीषसहेतिवेट् ॥

सहिष्णु : । त्रि॰ सहने । क्षमरि ।

तितिक्षौ क्षमिणि । सहनशीलः । यथा । सहते शीतोष्णादीनि । षह० । अलङ्कृञिति० इष्णुच् ॥

सहिष्णुता । स्त्री० क्षमायाम् ॥

सहुरिः । पुं० आदित्ये । दिवाकरे ॥ स्त्री० क्षितौ ॥ सहते । षह० जसिसहोरुरिन् । सहुरिः सहनशीलइतिवेदभाष्यम् ।

सहृदयः । त्रि० प्रशस्तचित्ते । हृद याले ॥ सहहृदयेन । तेनसहेतिबहुव्रीहिः । प्राशिमात्रस्यतथात्वादेव० प्रशस्तपरत्वं हृदयशब्दस्य ॥

सहृल्लेखम् । न० विचिकित्सितान्ने ॥ यथा । विचिकित्सातुहृदयेयस्मिन्नप्रजायते । सहृल्लेखन्तुविज्ञेयं० पुरीषन्तुस्वभावतइति प्रायश्चित्तविवेकः ॥

सहोक्तिः । स्त्री० अर्थालङ्कारविशेषे ॥ यथा । सासहोक्तिः सहार्थस्यबलादेकंद्विवाचकम् । एकार्थाभिधायकमपिसहार्थबलादुभयस्यावगमकंसासहोक्तिः ॥ यथा । सह० दिअस०णिसाहिं० दीहरा० सासदण्डा०सहमणिवलएहिं० वाहधारा० गलन्ति । सुहअ० तुह० विओए० उव्विइगाए० सीहअतणुलदाए० दुव्वला० जीविदासा ॥ अस्यसंस्कृतन्तु । सहदिवसनिशाभिर्दीर्घाः श्वासदण्डाः० सहमणिवलयैर्बाष्पधारागलन्ति । सुभग० तववियोगे० तस्याः० उद्वेगशीलायाः० सहच० तनुलतायाः० दुर्बला० जीविताशेति ॥ इत्यानायमत्रप्रतीयमुक्तिः । श्वासानांबनप्रचुरतयादण्डत्वेननिरूपणम्०काश्यन्मिणिकङ्कणगलनम्० आशायादुर्बलत्वंकादाचित्कत्वम् । श्वासदण्डादिगतंदैर्घ्यत्वादिशब्दंदिवसनिशादिगतन्तु० सहार्थसामर्थ्यात्प्रतिपद्यते । अत्रसहोक्तिरलङ्कारः । अपिच । सहोक्तिः सहभावश्चेद्भासतेजनरञ्जन. । दिगन्तमगमत्तस्यकीर्त्तिः प्रत्यर्थिभिःसहेति ॥ लक्षणान्तरमपि । सहार्थेनान्वयोयत्रभवेदतिशयोक्तितः । कल्पितौपम्यपर्यन्तासासहोक्तिरिष्यतइति ॥

सहोटजः । पुं० मुनीनांपर्णशालायाम् । पर्णोटजे । यथा । मुनीनांसुचिताकुर्व्यांपर्णोटजसहोटजाश्रितिहारावली ॥

सहोढः । पुं० द्वादशपुत्रान्तर्गतपुत्रविशेषे ॥ यथा । यागर्भिणीसंस्क्रियतेज्ञाताज्ञातापिवासती । वोढुः सगर्भोभवतिसहोढइतिचोच्यतइतिमनुः ॥ संस्क्रियते० प

रिणोयति । अटायादेशयम् ॥ स हिष्यतेस्म । बह० । ता : सम्प्रसारणम् । गुण : ॥ त्रि० कठेनसहवर्त्तमाने ॥

सहोत्थ : । पुं० तृतीयभङ्गे ॥

सहोदर : । पुं० सहजे : सोदरेभ्रातरि ॥ सहउदरेणवर्त्तते । बोपसर्जनस्य ॥ सह० समानम्० उदरंयस्येतिवा ॥

सहोर : । त्रि० साधुनि ॥ सहते । बह० । किशोरादयश्चेतिचोरन् ।

सह्य : । पुं० मलयाद्रिसमीपवर्त्तिनिशैलविशेषे । न० आरोग्ये ॥ साम्ये । त्रि० सहनीये । सोढव्ये ॥ सुमधुरे ॥ सह्यते० सोढुंशक्योवा । बह० । शकिसहोश्चेतियत् ॥ गोदावरीभीमरथीकृष्णावेण्यादिकास्तथा । सह्यपादोद्भवानद्य : स्मृता : पापभयापहा : ॥

सा । स्त्री० लक्ष्म्याम् ॥ दुर्गायाम् ॥

सांयात्रिक : । पुं० पोतवणिजि । वहित्रगामिनिर्वणिग्जने ॥ संयात्राद्वीपान्तरगमनायसम्भूययात्रासाप्रयोजनमस्य । तदस्यप्रयोजनमितिठञ् ॥

सांयुगीन : । त्रि० रणोत्सुके । युद्धकुशले ॥ संयुगेरणेसाधु : । प्रतिजनादिभ्य : खञ् ॥

सांराविणम् । अ० न० समन्तात्कृत्स्ने (?) । इष्टशब्दध्वनौ ॥ संहूतौ ॥

सांवत्सर : । पुं० गणके ॥ अस्यलक्षणमाहवराहमिहर : । तत्रसांवत्सरोऽभिजात : प्रियदर्शनो० विनीतवेश :० सत्यवाक्अनसूयक :० समः० सुसंहितोपचितगात्रसन्धिरविकलश्चारु० करचरणनखनयनचिबुकदशनश्रवणललाटभ्रूत्तमाङ्गोवपुष्मान्गम्भीरोदात्तघोष :० प्रायःशरीराकारानुवर्त्तिनोहिगुणाश्चदोषाश्चभवन्ति ॥ १ ॥ तत्रगुणा : शुचिर्दक्ष : प्रगल्भोवाग्मीप्रतिभानवान्देशकालवित्सात्त्विकोनपरिषद्भीरु : सहाध्यायिभिरनभिभवनीय : कुशलोऽव्यसनीशान्तिकपौष्टिकाभिचारस्नानविद्याभिज्ञोविबुधार्चनव्रतोपवासनिरत : स्वतन्त्राश्चर्योत्पादितप्रभाव :पृष्टाऽभिधाय्यन्यत्रदैवात्ययात्ग्रहगणितसंहिताहोराग्रन्थ यवेत्ता ॥ २ विशेषोवाराह्यांसांवत्सरसूत्रे द्रष्टव्य : ॥ संवत्सरं वेत्ति । तदधोतेतद्वेदेत्यण् ॥ न० फले ॥ पर्वणि ॥ सन्धिवेलादिषु० संवत्सरात्फलपर्वणोरितिशैषिकोऽण् ॥

सांवत्सरिक : । त्रि० संवत्सरसम्बन्धिनि ॥ कालाट्ठञितिशैषिकेऽव्यर्थेष्वण् ॥ संवत्सरंव्याप्यभूते ॥ प्रतिवर्षंकर्त्तव्ये श्राद्धादिकर्म्मणि ॥

सांवर्त्तकः। पुं॰ प्रलयाग्नौ॥ प्रलयकर्त्तरि॥

सांमाद्रिकः। पुं॰ गेयायिकि॥ बू॰ ज॰ धरः॥

सांशयिकः। त्रि॰ संशययुक्ते। संशयापन्नमानसे। सन्दिग्धमने॥ संशयमापन्नः। संशयमापन्नइतिठक्॥

सांसर्गिकः। त्रि॰ संसर्गनिमित्ते॥

सांसारिकः। त्रि॰ संसारसम्बन्धिनि॥ सांसारिकसुखासक्तं ब्रह्मज्ञोस्मीतिवादिनम्। कर्मब्रह्मोभयभ्रष्टंतं त्यजेदन्त्यजंयथा॥

सांसिद्धिकः। पुं॰ आत्मनांगुणविशेषे॥ यथा। विशिष्टधर्मसंस्कारसमुद्दीपितचेतसाम्। गुणः सांसिद्धिकोभातिदेहापायेपिपूर्ववत्॥ विशिष्टेनेष्टापूर्तादिधर्मसंस्कारेणसम्यगुद्दीपितंप्रेरितंचेतोयेषांतेषांनपरदेहसंयोगे॰ यावद्देहापायेपिप्रागुक्तो गुणः प्रकाशतेससांसिद्धिकोनाम-बोद्धव्यः॥ सम्यक्सिद्‌धिः संसिद्‌धिः। तत्रभवः। ठक्॥

सांसिद्‌धिकी। स्त्री॰ प्रकृतौ यथा योगिनांसिद्‌धानामणिमाद्यैश्वर्यप्राप्तिप्रकृतिः॰ सांसिद्‌धिकीस्वाभाविकीसहजाचप्रकृतावत्या। प्रकृतिः शैलिविच्छेदास्वभावेनजहातिवा॥

सांस्थानिकः। त्रि॰ समीचीनस्थाने व्यवहर्त्तरि। संस्थानेव्यवहरति। कठिनान्तेतिठक्॥

सांहितिकः। त्रि॰ संहिताभिज्ञे॥ संहितामधीतेवेदवा। क्रतूक्थादीतिठक्॥

साकम्। अ॰ सहार्थे॥ सहवचनम्। अमप्रत्ययः॥ सहस्रोतिसः। आभीक्ष्ण्येणमुल्वा॥

साकम्प्रस्थाप्यः। पुं॰ यागविशेषे॥ साम्प्रस्थाप्येनयजेतपशुकामः॥

साकल्यम्। न॰ अशेषतायाम्॥ सकलस्यभावः। ष्यञ्॥

साकारः। त्रि॰ आकारविशिष्टे॥ यथासाकारमनन्तंविजीति। साकारापिनिराकारामायथावहुरूपिणीतिच॥ अपिच। साकारञ्चनिराकारं सगुणंनिर्गुणंप्रभुम्। सर्वाधारञ्च सर्वञ्चस्वेच्छारूपंनमाम्यहमिति॥

सकुरुण्डः। पुं॰ वृक्षविशेषे। ग्रन्थिफले। कर्बुरफले॥

साकेतम्। न॰ अयोध्यायाम्॥

साक्तुकः। पुं॰ यवे॥ सक्तुषुसाधुः। गुडादिषठक्॥ न॰ सक्तूनां समूहे। अचित्तहस्तिधेनोष्ठक्॥

साक्षरः। त्रि॰ अक्षरयुक्ते॥

साक्षात्। अ॰ प्रत्यक्षे॥ यथासाक्षाद्दृष्टा। सहाक्षेण॰ साक्षः। समततिं। क्विप्॥ तुल्ये॥ यथासाक्षा

लक्ष्मीः तुल्यार्थ साक्षाच्छब्दयोगे। तुल्यार्थैरतुलोपमाभ्यामिति। तृतीयाप्रयोगउचितः। साक्षाल्लक्ष्मीरित्यादिप्रथमान्तप्रयोगेतु। प्रत्यक्षार्थकएवप्रतिभाति। लक्ष्म्यासाक्षादिति। लक्ष्म्यातुल्यें तिवत्। लक्ष्मीसाक्षादितिभवतिच

साक्षात्कारः। पुं। इन्द्रानीमित्यमेविष्य परोक्षज्ञाने॥ प्रत्यक्षकरणे॥ साक्षात्करणम्। कञोघञ्॥

साक्षी। त्रि। प्रत्यक्षदर्शने। द्रष्टरि॥ साक्षादिन्द्रियार्थसन्निकर्षं विनैवेक्षतेपश्यतिप्रकाशयतीति। निर्विकारे। आत्मनि॥ स्वप्रकाशज्ञानमात्रस्वरूपोप्यात्माऽविद्योपहितः सन्। साक्षीत्युच्यते। यथा कुटस्थः निर्विकाराः। मर्त्यस्थादिभिर्यांदुःखीसाक्षिताकाविकारिणः भोविक्रियासहस्राणांसाच्यतोहमविक्रियइति॥ यथा। नेनस्वरूपबोधेनपश्यतिसर्वमितिसाक्षी। इत्ति व्यवधानमन्तरेणस्वाध्यस्तं सर्वं स्वरूपचैतन्येनपश्यतीत्यर्थः। साक्षाद्द्रष्टरिसंज्ञायामिति। इनिः॥ शून्यवादिभिरपिशून्यसिद्धयेसाक्ष्यभ्युपेय। किमुवक्तव्यमितरैरित्याह। प्रत्यक्षसाक्ष्यतिरेकेणनाभावोपिप्रसिध्यति। किमुभावोजगत्यस्मिन्मसाक्षीचानन्यसिद्धिकः। अभावोपि। शून्यमपीत्यर्थः॥ पुरेपौरान्नृपस्थानरयुवतिनामाक्रतिमयान्मुवेशान्स्वर्णालङ्करणकलितांश्चित्रसदृशान्। स्वयंसाक्षीद्रष्टेत्यपिचलयं ले: सहरमन मुनिर्व्यामोहंभजति गुरुदीक्षाचततम:॥ साक्षाद्द्रष्टरि। सर्वप्राणिनांसाक्षाच्छुभाशुभद्रष्टरि॥ चेतनस्त्वेनाविषयत्वेनचसाक्षित्वंद्रष्टृत्वञ्च। चेतनोहिद्रष्टाभवति। यस्मैप्रदर्श्यतेविषयः सभाक्षी॥ तथालोके। अर्थिप्रत्यर्थिनौ। विवादविषयंसाक्षिणेदर्श्यतः। एवंप्रकृतिरपिस्वचरितंविषयंपुरुषायदर्शयतीतिपुरुषःसाक्षी। नचाचेतनोवा। विषयोवा। शक्योविषयंदर्शयितुमिति। चैतन्यादविषयत्वाच्चभवति साक्षी। अतएवद्रष्टापिभवतीति साङ्ख्यविदः॥

साक्ष्यम्। न। साक्षिकर्मणि॥ यथा। समक्षदर्शनात्साक्ष्यंश्रवणाच्चैवसिद्ध्यतीतिमनुः॥

साख्यम्। न। सख्ये।

सागरः। पुं। समुद्रे। अब्धौ। सगरपुत्रैः खातेजलाशये॥ सगरस्यराज्ञोयम्। सगरेणावतारितत्वात्। तस्येदमित्यण्॥ क्षीरोदादिष्वप्युपमयासागरव्यपदेशइतिकद्धाः॥ मृगविशेषे॥ इंशपक्षस

ङ्ख्यायाम् ॥
सागरगा । स्त्री० नद्याम् ॥
सागरगामी । त्रि० सिन्धुगे । समुद्रयायिनि ॥
सागरगामिनी । स्त्री० नद्याम् ॥ सूक्ष्मैलायां ॥
सागरनेमि : ) पुं० पृथिव्याम् ॥
सागरमेखला : ) स्त्री०
सागरोनेनिर्मेखलावायस्याः ॥
सागरानूप: । पुं० समुद्रतीरप्रदेशे ॥ सागरस्यअनूप : ॥
सागराम्बरा । स्त्री०धरायाम् । धरित्र्याम् ॥ सागरोऽम्बरंवस्त्रम् यस्या : ॥
सागरालय : पुं० अप्पतौ । वरुणे ॥
सागरोत्थम् न० समुद्रलवणे । त्रि० सिंधुजे ॥
सागुरु : । पुं० शिंशपायां ॥
साग्र : । त्रि० अग्रेणसहिते ॥
साङ्कर्य्यम् । न० सङ्करतायाम् ॥ जातिसाङ्कर्यम्०पङ्क्तिसाङ्कर्यमिति । तत्रपङ्क्तिसाङ्कर्यदोषाय-था । नसंस्तिष्ठपतितेर्नचाण्डालैर्नपुल्कसैः । नमूर्खेर्नावलिप्तैश्चनान्त्यैर्नान्त्यावसायिभिः ॥ एकशय्यासनंपङ्क्तिभागुडपक्वान्नमिश्रणम् । याजनाध्यापनेयोनिस्तथैवसहभो-जनम् ॥ सहाध्यायस्तुदशमः सह-याजनमेवच । एकादशसमुद्दिष्टा-दोषा : साङ्कर्यसंज्ञिता : ॥ समीपेचाप्यवस्थानात्पापंसंक्रमतेनृणाम् । तस्मात्सर्वप्रयत्नेनसाङ्कर्यंपरिवर्जयेत् ॥ वह्निसाङ्कर्यदोषवारणोपाययथा । एकपङ्क्त्युपविष्टायेनस्पृशन्तिपरस्परम् । भस्मनाकृतमर्यादानतेषांसङ्करोभवेत् । अग्निनाभस्मनाचैवषद्भिःपङ्क्तिविभिद्यतइति कूर्मे १५ अध्याय : ॥
साङ्काश्यम् । न० नगरविशेषे ॥ सङ्काशेननिर्वृत्तंनगरम् : सङ्काशादिभ्योण्य : ॥
साङ्कृति : । पुं० मुनिविशेषे । वैयाघ्रपद्यगोत्रप्रवरे ।
साङ्ख्य: । पुं० कपिलमुनिकृतदर्शनविदिकापिले ॥ सङ्ख्यांप्रकुर्वतेचैवप्रकृतिञ्चप्रचक्षते । तत्त्वानिचतुर्विंशततेनसाङ्ख्याः प्रकीर्त्तिता : ॥ औपनिषदेपुरुषे ॥ सम्यक्ख्यायते० सर्वोपाधिशून्यतया प्रतिपाद्यते० परमात्मतत्त्वमनयेति० सङ्ख्या० उपनिषद्० तयैवतात्पर्यपरिसमाप्त्याप्रतिपाद्यतेय : साङ्ख्य : । सर्वोपनिषद : पुरुषएव । सन्यासे । सङ्ख्यासम्यगात्मबुद्धि : ० तांवहतीति० ज्ञानान्तरङ्गसाधनतयाससाङ्ख्य : ० सच सन्यास : ॥ न० वेदान्तशास्त्रे ॥ निरतिशयपुरुषार्थंप्राप्त्यर्थंसर्वा

मथ विवस्यर्थ सङ्ख्यातव्याः जीवो॰ ब्रह्म॰ तयोरैक्यं॰ तद्बोधोपयोगिनश्चश्रवणादयः पदार्थाः॰ ते सङ्ख्यायन्ते॰ व्युत्पाद्यन्तेऽस्मिन्॥ आत्मज्ञाने॥ शुद्धात्मतत्त्वविज्ञानं साङ्ख्यमित्यभिधीयते इति व्याससमृतिः॥ ज्ञानशास्त्रे षड्दर्शनान्तर्गतदर्शनविशेषे। कापिले॥ पञ्चमः कपिलोनामसिद्धेशः कालविप्लुतम्। प्रोवाचासुरये साङ्ख्यं तत्त्वग्रामविनिर्णयम्॥ इति श्रीभागवतम्॥ साङ्ख्यं सङ्ख्यात्मकत्वाच्च कपिलादिभिरुच्यते॰ इ॰ मत्स्यपुराणम्॥ सम्यक्ख्यायते प्रकाश्यते वस्तुतत्त्वमनयेति॰ सङ्ख्या सम्यग्ज्ञानम्॰ तस्यां प्रकाशमानमात्मतत्त्वं साङ्ख्यमिमिति श्रीधरस्वामी॥ अपिचाहुः। साङ्ख्यं हि कपिलमुनिना संसारविमुक्तिकारणं प्रोक्तम्। एताः सप्ततिरार्याभाष्यञ्चाप्यत्र गौडपादकृतम्॥ एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ। आसुरिरपि पञ्चशिखाय तेन च बहुधाकृतं तन्त्रम्। शिष्यपरम्परयागतमीश्वरकृष्णेन चैतदार्याभिः। संक्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम्॥ सप्तत्यां किलयेऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य। आख्यायिकाविरचिताः परवादविवर्जिताश्चापि॥ इति साङ्ख्यप्रवचनभाष्यम्। अस्याध्ययने प्रारम्भशुद्धिमाह कालिदासो यथा। चिदुम्भोश्वीयुग्मभेः सद्ग्रहाणां समारक्षितं साङ्ख्यशास्त्रादिशास्त्रम्। मृदुक्षिप्रशभ्रूड शभ्रूड युक्तौ दिने प्वित्रतद्बोधसिद्धिं तनोतीति॥

साङ्ख्यमतम्। न॰ षष्टितन्त्रादौ॥ साङ्ख्यानांमतम्॥ यथा। त्रिगुणं यत्प्रधानं तत्पुरुषार्थेन हेतुना। प्रवर्त्तते वासनात्त्वक्लृप्ति॰ स्त्वेति कापिलाः॥ नान्तः करणमेवात्मा॰ किन्त्वन्यः सर्वगतः स्वप्रकाश॰ स्वभोगापवर्गानुगुण्येन हेतुनायत्प्रधानं रक्षितदात्मनैव स्थितमन्तःकरण तत्सधर्म्मकं प्रवर्त्तते॰ तदैश्वर्य्यासनात्वेनोच्यत इति वदन्तीत्यर्थः॥

साङ्ख्ययोगः। पुं॰ चिन्तनविशेषे। निदिध्यासनपूर्वभाविना श्रवणमननरूपेण॰ नित्यानित्यविवेकादिपूर्वकेण॰ इमे गुणत्रयपरिणामा अनात्मनः सर्वे मिथ्याभूताः॰ तत्साक्षीभूतो नित्यो विभुर्निर्विकारः सत्यः समस्तजडसम्बन्धशून्य आत्मा त्वहिव वेदान्तवाक्यविचारजन्ये चिन्तने॥

साङ्गः। त्रि॰ अङ्गसहिते॥ अङ्गेन अङ्गैर्वा सहितः॥

साङ्गतिकः । त्रि० लोकेषु विचित्रप रिहासकथादिभिः सङ्गत्याचरत्यर्थि नि ॥ सङ्गतौभवे ॥

साङ्गमः । पुं० सङ्गमे ॥

साङ्गुष्ठा । स्त्री० गुञ्जायाम् ॥

साङ्गोपाङ्गः । त्रि० सम्पूर्णे ॥ अङ्गो पाङ्गैः सहितः ॥

साङ्ख्यसूचिकः । त्रि० सङ्ख्यसूत्राभि ज्ञे ॥ सङ्ख्यसूत्रमधीते वेदवा । क्रतूक्थादिसूत्रान्ताट्ठक् ॥

साङ्ख्यिकः । त्रि० सङ्ख्याभिज्ञे ॥ उक्थादित्वात् ठक् ॥

साङ्ग्रामिकः । त्रि० सङ्ग्रामोपयो गिरथादौ ॥ सङ्ग्रामेसाधुः ॥ गु डादिभ्यष्ठञ् ॥

साङ्कुट्टिकः । त्रि० सङ्कुट्टज्ञे ॥ सङ्कुट्टं वेद । उक्थादित्वाट्ठक् ॥

साङ्घातिकः । त्रि० मारात्मके ॥ अ न्यभात् षोडशेनघ्नते ॥ सङ्घाते साधुः । गुडादिभ्यष्ठञ् ॥

साचि । अ० वक्रे । तिरोर्थे । तिर्य गर्थे ॥ सचनम् । अवसमर्थाये । कृञ्जादिभ्यः ।

साचिशाटिका । स्त्री० स्त्रीतपुनर्न वा याम् ॥

साचिव्यम् । न० साहाय्ये ॥ सचिव स्यकर्मभावोवा । ष्यञ् ॥

साञ्जनः । पुं० कृकलासे ॥

साटोपः । त्रि० ससम्भ्रमे ॥

साण्टः । त्रि० । सान्ते ॥

सातत्यम् । न० अविच्छिन्नतयावर्त्त माने । सततस्यभावः । ष्यञ् ।

सातवाहनः । पुं० शालिवाहननृपे ॥

सातिः । स्त्री० दाने ॥ अवसाने । स मापनेसननम् ० सानस्य । समुदाने० षोन्तकर्मणिचक्तिन् । ऊतियू तौदित्यादिना० स्यतेरीत्वाभावो निपात्यते । सनोतेर्वा० अनसनेत्यात्व म् । सनुताद्वा । क्तिच् क्तौचे तिक्तिच् ॥

सातिसारः । त्रि० अतिसाररोगयुक्ते । अतिसारकिणि ॥ सहअतिसारे णवर्त्तते ॥

सातीनकः । पुं० कलाये ॥ सतो नकएव । प्रज्ञादाण् ॥

सात्मा । त्रि० हिते ॥

सात्यः । त्रि० सत्यशीले । सत्यंशी लमस्य । छत्रादिभ्योणः ॥ स्त्रियां ० ताच्छीलिकेणेपीति० ङीपि० हलस्तद्धितस्ये तियलोपि०सात्ती० । सांची० ह्र० भा० ॥

सात्यकिः । पुं० पार्थशिष्ये । युयुधा ने ॥

सात्ववतः । ) पुं० माठरे । बाद सात्ववतीयः । ) रायणे । वेदव्यासे ।

सात्वान् । त्रि० उपासके ॥ भगवद्भ क्ते ॥ सत्त्वत्शब्देन० सत्त्वमूर्त्तिर्भग

वान् । सत्त्वास्ततवाविद्यतेयस्य । मतुप् । स्वार्थेऽण् । वृद्धिः । अपर्त्वाद्दत्वोऽश्रवणम् । यथा । सूतआनोसिभद्रन्तेभगवान्सात्वतांपतिरिति ॥ सात्वतंनामतन्त्रम् । तत्करोतितदाचष्टइतिणिचिकृते । क्विप्चेतिक्विप्प्रत्ययेणेरनिटीतिणिलोपेकृतेपदंसात्वदिति सात्वतांपतिरितिनामभाष्यम् ॥ तथाच । सात्वतांसात्वततन्त्रमाचक्षाणानांभक्तानांपतिः पालकइतिव्याख्येयम् ॥

सात्वतः । पुं । कामपाले । मधुप्रिये । बलदेवे । रामे । हरौ । हिमकृति । श्रीकृष्णे ॥ द्वारार्थे । उपासके । भगवद्भक्ते ॥ यथोक्तंपाद्मे उत्तरखण्डे : सत्त्वसतत्त्वमयमत्त्वगुणसेवितकेशवम् : यैजन्यत्वेनमनसासात्वतमनुहाहृत : ॥ नि-षायकान्यकर्माणिनूभजैदेकाकिनंहरिम् । सत्यंसत्त्वगुणोपेतैभक्त्यातंसात्वतंविदुः ॥ मुकुन्दपादसेवासात्वतासमप्रर्णेपिच । कीर्त्तनेचरतीभक्तोनाम्नः स्मात्सुस्मरणेहरेः । वन्दनार्चनयोर्भक्तिर्निर्दिष्टास्सखायै : । रतिरात्मापर्णेयस्यदृढानन्तस्यसात्वत: । इति ९८ अध्याय । सत्त्वरुत्वात्स्वार्थिक : प्राधान्य । विजन्मनि । सुधन्वाचा

र्ये । यादवे ॥ सत्वतीपत्यमपुमान् उत्सादिभ्योऽञ् ॥ पुंभूम्नि । देशविशेषे ॥ यथा । यदवस्तुदशा र्हाः स्युः सात्वताः कुकुरान्ध-के । इतिचिकाण्डशेषः ॥ न । ए-करात्रतन्त्रे ॥

सात्वततन्त्रम् । न । वैष्णवतन्त्रे ॥ पञ्चरात्रागमे ॥ सात्वतानामभगवदुपासकानांतन्त्रम् ॥

सात्वतसंहिता । स्त्री । महापुराणेश्रीभागवते । यस्यांश्रीशुकमुनिर्भगवन्तं परमपुरुषं । भक्तिसत्पदानिपुंसः श्रोत्रे दत्तवान् ॥

सात्वती स्त्री । शिशुपालमातरि । कृष्णपितृष्वसरि । सात्वतोऽपत्यंस्त्री । उत्सादिभ्योऽञ् । ङीप् ॥ नाव्यवृत्त्यन्तरे ॥

सात्वतीसूनुः । पुं । चैद्ये । शिशुपाले ॥

सात्त्विकः । पुं । ब्रह्मणि । विधातरि ॥ चित्तविकाराभावभावविशेषे ॥ तल्लक्षणं यथा । सत्त्वोत्कटेमनसियेप्रभवन्तिभावास्तेसात्त्विकाइतिविदुर्निपुणावाते ॥ तेयथा । स्तम्भः स्वेदोथरोमाञ्चः स्वरभङ्गोथवेपथुः । वैवर्ण्यमश्रुप्रलयइत्यष्टौसात्त्विकागुणाः ॥ प्रलयोमूर्छा ॥ ग्रन्थान्तरे ॥ यथा । अफलाकांक्षिभिर्यज्ञोविधिदृष्टोय

दृश्यते । यद्दृश्यमेवेतिमनः समाधायससात्त्विकः ॥ आहारप्रभेदे । यथा । आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः । रस्याः स्निग्धाःस्थिराहृद्याआहाराः सात्त्विकप्रियाः ॥ सत्त्वेगुणेप्राधान्येनस्थितः ॥ नगणे० ॥।० ॥ त्रि०सत्त्वेगुणाढ्ये ॥ सत्त्वेनमानेनवस्थानिर्वृतः ॥ तेननिर्वृत्तमितिठञ् ॥ सत्त्वभवोवा० अध्यात्मादित्वाट्ठञ्वा ॥

सात्त्विकधनम् । न० शुद्धधने ॥ यथा । श्रुतशौर्यतपःकन्याशिष्ययाज्यान्वयागतम् । धनंसप्तविधंशुद्धंमुनिभिःसमुदाहृतम् ॥ श्रुतेनाध्ययनेन०शौर्येणजयादिना० कन्यागतङ्कन्ययासहागतंश्वशुरादेलब्धम्०शिष्यागतंगुरुदक्षिणादिना० याज्यागतंआर्त्विज्यलब्धम्०अन्वयागतम्दायादेभ्योलब्धम्०शुद्धंसात्त्विकमित्यर्थः ॥

सात्त्विकी स्त्री० दुर्गायाम् ॥ पूजाविशेषे । यथा । शारदीचण्डिकापूजात्रिविधापरिगीयते । सात्त्विकीराजसीचैवतामसीचेतितत्शृणु० सात्त्विकीजपयज्ञाद्यैर्नैवेद्यैश्चनिरामिषैः । माहात्म्यंभगवत्याश्चपुराणादिषुकीर्तितम् । पाठस्तस्यजपःप्रोक्तःपठेद्देवीमनास्तथेति ॥ देवीप्रकृतौ ॥

सादः । पुं० सन्नतायाम् । अवसादे ॥ सदनम् । षद्लृ० । घञ् ॥ कार्श्ये । क्लान्तत्वे ॥ यथा । शरीरसादादसमग्रभूषणैतिरघुः ॥

सादनम् । न० गृहे । सदने ॥ स्वार्थण्यन्तात्सदेर्ल्युट् ॥ मज्जने ॥

सादनी । स्त्री० कटुक्याम् । रक्ताङ्गाम् ॥ ङीप् ॥

सादिः । पुं० सारथौ ॥ योधे । योद्धरि । सीदति । षद्लृ० । वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्यइञ् ॥ त्रि०सादियुते ॥

सादितः । त्रि० सम्भिन्ने । विध्वस्ते । क्लान्ते ॥

सादी । पुं० अश्वारोहे । असवार० इ०भा०प्र० ॥ मातङ्गारोहे ॥ रथारोहे ॥ अवश्यंसीदति०सादयतिवा । षद्लृ० । आवश्यकेणिनिः । यत्रादिर्वा ॥

सादृश्यम् । न० उपमायाम् । तुल्यत्वे सदृशत्वे । तद्भिन्नत्वेसतितद्गतभूयोधर्मवत्त्वे ॥ यथा चन्द्रभिन्नत्वेसतिचन्द्रगताह्लादकत्वादिमत्त्वंमुखेचन्द्रसादृश्यम् । तत्पर्यायाश्च । तमन्वेत्यनुबध्नातितत्कल्पंतत्निषेधति । तस्यचानुकरोतीतिशब्दाःसादृश्यवाच

का : धृतिदण्डौ ॥ सदृशस्य भावः : गुणवचनब्राह्मणादिभ्यः ष्यञ् ॥ स्त्रियां षित्त्वान् ङीषि० सादृशी ॥ ष्यञः षित्करणादीकारो बहुलमिति वामनसूत्राद्वैकल्पिकः ॥

साद्धान्तः । पुं० राद्धान्ते ॥

साद्यस्कः । पुं० सोमयागविशेषे ॥

साधकः । त्रि० साधनकर्त्तरि । निष्पादके ॥ श्रवणाद्यनुष्ठातरि ॥ साध्नोति । साधसंसिद्धौ ण्वुल् ॥ पुं० पुत्रजीवद्रुमे ॥ षष्ठतारायाम् ॥

साधकतमम् । न० करणे । क्रियासिद्धावुत्कृष्टोपकारके ॥ हेतौ ॥ त्रि० अतिशयसाधके । अतिशायने तमप् ॥ प्रकृष्टं साधकं साधकतमम् ॥

साधनम् । न० करणकारके ॥ साध्यते० कर्म निष्पाद्यतेऽनेन । साध० । ल्युट् ॥ मृतसंस्कारे । सैन्ये ॥ सिद्धौषधौ ॥ गतौ ॥ निवर्त्तने । निवृत्तौ । उपाये ॥ साध्यमुद्दिश्य साधनं निरूप्यते । मेढ्रे ॥ दापने ॥ अनुगमे । धने ॥ मारणे । वधे । प्रमाणे ॥ मैत्रे ॥ मोहने ॥ जवे । वेगे ॥ मन्त्रसिद्धिकरणे ॥ सिद्धौ ॥ मोक्षसाधकेषु विशेषे । साधनचतुष्टये । यथा । नित्यानित्यवस्तुविवेकः० इहामुत्रार्थफलभोगविरागः० शमदमादिषट्कसम्पत्तिः० मुमुक्षुत्वञ्चेति ॥ साध० । भावकर्मकरणादौ ल्युट् ॥ साधयतिवा । नन्द्यादित्वाल्ल्युः ॥ तपसि । यथा । तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि तपस्यतः । दुर्भगत्वं वृथा लोको वहते सति साधने ॥ अल्पसाधनैरधिकारम्भो न सुकरः ॥

साधननिर्मुक्तः । त्रि० साधनाभ्यासरहिते ।

साधना । स्त्री० आराधनायाम् ॥

साधनाव्यापकत्वम् । न० साधनवन्निष्ठात्यन्ताभावप्रतियोगितायाम् ॥

साधनीयः । त्रि० साध्ये ॥

साधन्तः । त्रि० भिक्षुके । साध्नोति साध० तृभूवहिवसोत्यादिना० झच्० पित् ॥

साधयन्ती । स्त्री० मांसिकायाम् ॥

साधर्म्यम् । न० समानधर्मत्वे ॥

साधर्म्यवैधर्म्यसमौ । पुं० न्यायमते जातिविशेषलक्षणे ॥ यथाह गौतमः । साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ । २ ॥ उपसंहारे साध्यस्योपसंहरणे० वादिनाकृते० तद्धर्म्मस्य साध्यरूपधर्मस्य योविपर्ययो व्यतिरिक्तस्तस्य साधर्म्यवैधर्म्याभ्यां केवलाभ्यां व्याप्त्यनपेक्षाभ्यां यदुपपादनं ततोहेतोः साधर्म्यवैधर्म्यसमावुच्येते । तद्यमर्थः :

त्व्यै । यथा । प्रजनार्थंस्त्रिय : सृष्टा : सन्तानार्थंचमानवा : । त स्मात्साधारणोधर्म्म: श्रुतौपत्न्या सहोदित :॥ अपिच । अहिंसा सत्यमस्तेयंशौचमिन्द्रियसंयम: । द म : चमार्ज्जवन्दानंसर्वेषांधर्मसा धनमिति ॥ आत्मज्ञानंतितिचा चधर्म्म : साधारणोनृपेतिच ॥

साधारणस्त्री० । स्त्री०वेश्यायाम् ॥

साधारणानैकान्तिक : । पुं० हेत्वा भासान्तरे । साध्याभाववद्वृत्तौ ॥ यथापर्वतोऽग्निमान्० प्रमेयत्वादि ति । प्रमेयत्वस्यवह्न्यभाववतिह्रदे विद्यमानत्वात् । साध्यवदन्यवृ- त्तौ । यथा । शब्दोनित्य : ० नि : स्पर्शत्वात् नचविरुद्धसङ्कीर्णदोष : ० उपधेयसङ्करेऽप्युपाधे रसङ्करात् ॥

साधारणी । स्त्री० सदृशायाम् । स मानायाम् ॥ कुञ्चिकायामितिहे मचन्द्र : ॥

साधारण्यम् । न० साम्ये । कुञ्चिका याम् । इतिहेमचन्द्र : ॥

साधारिका । स्त्री० घटिकायाम् । नाडिकायां ॥

साधिका । स्त्री० साधनकर्त्र्याम् ॥ सुषुप्तौ ॥ सुप्तस्तुसाधकेतिहैम: ॥

साधित : । त्रि० दापिते । धनादिना वशीकृते । धनादिप्रदापिते ॥ प्र- दापितधने ॥ साध्यतेस्म । साध० । क्त : ॥ सिद्धे ॥

साधिमा । पुं० साधुत्वे ॥ साधोर्भाव : । इमनिच् ॥

साधिष्ठ : । त्रि० अतिशयेनबाढे । अतिदृढे । आर्य्ये ॥ न्याय्ये ॥ शो भनतमे । अयमेषामतिशयेनबा- ढ : । अतिशायिनेतमविष्ठनावि तोष्ठन् । अन्तिकबाढयोर्नेदसा- धौ ॥

साधिष्ठान : । त्रि० जीवे । अधिष्ठानेन कूटस्थचैतन्येनसहिते ।

साधीयान् । त्रि० अतिबाढे ॥ अति शोभने । अतिसाधौ ॥ अयमनयो रतिशयितोबाढ : साधुर्वा । द्विव चनेतीयसुन्० अंतिकबाढयोरिति बाढशब्दस्यसाधादेश : । टेरिति साधोष्टिलोप : ॥

साधु: । त्रि० उत्तमकुलोत्पन्ने । अस्य पर्यायायथा । महाकुलकुलीनार्य्य सभ्यसज्जनसाधवइति । वार्द्धुषि के ॥ चारौ । शोभने । मनोज्ञे । स्वभावसुन्दरे ॥ प्रवीणे । योग्ये ॥ स्वधर्म्मवर्त्तिनि ॥ अपकारिष्वप्युप कारशीले ॥ अद्रोहिणि ॥ पुण्यका रिणि ॥ वेदमार्गस्थे ॥ शास्त्रवि हितकारिणि ॥ सर्वहिते ॥ नित्या नित्यवस्तुविवेकादिसाधनचतुष्टय सम्पन्ने मुमुक्षौ ॥ कुलधर्माश्रिते ॥

सर्वपूज्ये ॥ यथा । शाक्तैर्वावैष्णवैःशैवैःसौरैर्गाणपतैरपि । कौलधर्म्माश्रितः साधुः पूजनीयोऽतियत्नतः ॥ साध्नोतिपरकार्यम् । धर्म्मम् अर्थम् । कामम् । मोक्षं वा । साध । कृवापेत्युण् ॥ पुं । व्याकरणेनप्रतिपादितेशास्त्रीयशब्दे ॥ यद्यपिसाधूनेवभाषितेतिनश्रूयतेतथापिफलनिर्द्देशवाक्येतन्निर्द्देशादेवेष्टशविधिः कल्प्यते । साधूनेवभाषितनापशब्दानिति ॥ मन्त्रोहीनः स्वरतोवर्णतोवेतिदर्शनात् ॥ मुनौ ॥ जिने ॥

साधुजः । त्रि । उत्तमकुलोद्भवे । साधौ ॥

साधुधीः । स्त्री । वरवत्सलायाम् । श्वश्रूम् ॥ सुन्दरबुद्धौ ॥ त्रि । तद्वति ॥ साध्वीधीर्यस्याः ॥ कर्मधारयोबहुव्रीहिर्वा ॥

साधुनिन्दितः । त्रि । प्रणाय्ये । साधुभिर्निन्दिते । साध्वसम्मतइतियावत् ॥

साधुपुष्पम् । न । प्रपौण्डरीके । स्थलपद्मे । साधुचतत्पुष्पञ्च ॥ उत्तमप्रसूने ॥

साधुभावः । पुं । असाधुत्वशङ्कायां साधुत्वे ॥

साधुवादः । पुं । सतामनुमोदने ॥ साधुवादोपवृंहितइतियथा ॥ साधोभिकतरे ॥

साधुवाहः । पुं । विनीताश्वे ॥ साधुश्चासौवाहश्च ॥

साधुवाही । पुं । विनीताश्वे । सुशिक्षितेतुरगे ॥ साधुवहनशील ः । वह । सुपीतिणिनिः ॥ त्रि । शोभनाश्वयुक्ते ॥

साधुवृक्षः । पुं । कदम्बद्रुमे ॥ वरुणवृक्षे ॥ साधुश्चासौवृक्षश्च ॥ मनोज्ञतरौ ॥

साधुवृत्तः । त्रि । सुचरित्रे ॥ साधूनामिवसमानसुखदुःखानांसुहृदांवृत्तम् ॥

साधुवृत्तिः । स्त्री । उत्तमजीविकायाम् ॥ सद्व्यवहारे ॥ सुन्दरवर्त्तने ॥ साध्वीचासौवृत्तिश्च ॥ साधीवृत्ति र्वा ॥ त्रि । तद्वति ॥ साध्वीवृत्तिर्यस्य ॥

साधुसङ्गमः । पुं । मनोनिग्रहस्योपायविशेषे । यस्तुवोधितमपितत्त्वं नसम्यग्वुध्यते । योवाविस्मरति । तयोः साधुसङ्गमएवोपायः । साधवोह्येनं पुनर्बोधयन्ति । स्मारयन्तिच ॥

साधुसमागमः । पुं । साधुसङ्गमे । यथा । त्यजदुर्जनसंसर्गं भजसाधुसमागमम् । कुरुपुण्यमहोरात्रंस्मरनित्यमनित्यतामिति ॥

साधूतम् । न । वह्निसङ्घाते ॥ प

यशीध्याम् ॥ मात१वे ॥ इत्यजयपालः। पाठान्तरे॰ साधुतमपि ॥

साध्यः। पुं॰ गणदेवताविशेषे ॥ साध्यंसिद्धिः। साध॰। कर्त्तरि॰ इतिभावेण्यत्। साऽस्त्यस्य। अर्शआद्यच्। साध्याद्वादशविख्याताः पुराणेषुपुरातनैः। तेयथा। मनोमन्ताप्राणस्तनयोयानोहयस्तथा। नारायणोनरस्चैवहंसश्चिस्तथाविभुः॥ प्रभुश्चद्वादशैवैतेसाध्याः प्रोक्ताःपुरातनैरिति ॥ विष्कम्भाद्यन्तर्गतयोगविशेषे ॥ तत्रोत्पन्नस्यफलं यथा। असाध्यसाध्यः किलसाध्यजातः शूरोतिधीरोविजितारिपक्षः। बुद्ध्याद्युपायैः परिसाधितार्थः परंकृतार्थः सुतरांविनीतः॥ स्मरे। कामे॥ देवे। सुरे॥ त्रि॰ साधनीये॥ कृच्छ्रोपायः सुखोपायोद्विविधः साध्यउच्यते॥ साधनार्हाभिमते॥ साध्यतेऽत्र। सतुपक्षः। यथा। प्रतिज्ञादोषनिर्मुक्तं साध्यंसत्कारणान्वितम्। निश्चितंलोकसिद्धस्य पक्षंपक्षविदोविदुः॥ साध्यंसाधनार्हाभिमतंपक्षंविदुः। यद्यप्यन्यत्साध्यंव्याप्यम्॰ तद्विशिष्टधर्मीपक्षइतिभेदः। तथाप्येवंवाक्प्रत्याप्यर्वादिधर्मविशेषविशिष्टस्यपक्षत्व

याधर्मिणोऽधर्मपर्दैरेवसाध्यत्वात् साध्यपक्षयोरभेदाभिधानमितिव्यवहारतत्त्वम् ॥ व्याप्ये ॥ साध्यतेऽनेनेतिव्युत्पत्त्यापक्षे ॥ यथा॰ पर्वतोवह्निमानित्यत्रपर्वतः॥ साधयितुंयोग्ये ॥ यथापर्वतोवह्निमानित्यत्रवह्निः साध्यः॥ साध्यस्य वस्तुनोऽभावेसाधनैःकिंप्रयोजनम्॥

साध्यतावच्छेदकम्। न॰ अनुमितिविधेयांशेभासमानधर्मे ॥

साध्यव्यापकत्वम्। न॰ साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वे ॥

साध्यसमः। पुं॰ हेत्वाभासान्तरे ॥ यथाहगोतमः। साध्याविशिष्टस्साध्यत्वात्साध्यसमः ॥ ४८ ॥ साध्येनवह्न्यादिना॰ अविशिष्ट॰ कुतइत्यतआह॰ साध्यत्वादिति॰ साधनीयत्वादित्यर्थः। यथाहि॰ साध्यंसाधनीयं॰ तथाहेतुरपिचेत्॰ साध्यसमइत्युच्यते। अतएवचासिद्धइतिव्यवह्रियते। अयञ्चाश्रयासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्धिभेदात्॰ त्रिविधः। आश्रयासिद्धिश्च॰ पक्षेपक्षतावच्छेदकाभावः। यथाकाञ्चनमयः पर्वतोवह्निमानित्यादौ। स्वरूपासिद्धिः॰ पक्षेहेतुतावच्छेदकावच्छिन्नस्याभावः। यथाह्रदोद्रव्यंधूमादित्यादौ

। व्याप्यत्वासिद्धिश्च॰ अव्यभिचरितसामानाधिकरण्यस्याभावः। न च स्वरूपासिद्धेरेवसूचाङ्गत्वप्रतीतेर्नोभयोर्लक्ष्यत्वमितिवाच्यम्। हेतुरितिपदं च्छ पूरणीयम्॰ हेतुपदस्वगमकहेतोर्व्याप्तिविशिष्टपक्षधर्मस्यबोधकम्॰ व्याप्तिविशिष्टपक्षधर्मद्रूत्येवपर्यंताम्। तथा च॰ तत्रकिञ्चिदंशसाध्यत्वेनैव साध्यसमत्वम्। अतएवसाध्येसाध्यतावच्छेदकाभावः साधनेसाधनतावच्छेदकाभावश्चव्याप्यत्वासिद्धिः। यथा॰ पक्षतावच्छेदकाभावपक्षतावच्छेदकवह्नेर्दादेरन्यतमत्वेनाश्रयासिद्धित्वम्॰ यथा च॰ पक्षेहेत्वभावहेतुमद्भेदादेरन्यतमत्वेन स्वरूपासिद्धित्वम्॰ तथा साध्यतावच्छेदकाभावादेरन्यतमत्वेन व्याप्यत्वासिद्धित्वं॰ चितयान्यतमत्वस्यासिद्धिसामान्यलक्षणंनीलधूमत्वादेरपिव्याप्यत्वासिद्धावन्तर्भावंवदन्ति। तेषामयमाशयः। व्याप्तिर्हि साध्यसम्बन्धितावच्छेदकरूपा॰ गुरुधर्मश्चसाध्यसम्बन्धितानवच्छेदकोऽतोनीलधूमत्वादेः साध्यसम्बन्धितानवच्छेदकत्वान्नव्याप्तिस्वरूपत्वम्। तथाऽसाध्यतावच्छेदकाभावादिरिव॰ साधनतावच्छेदकेव्याप्यतानवच्छेदकत्वमपि भवतिव्याप्यत्वासिद्धिरिति। ४८।

साध्यसिद्धिपादः। पुं॰ व्यवहारस्य चतुर्थपादे। सचनिर्णयपादः। यथा। प्रत्यर्थिनोऽग्रतोलेख्यमिति॰ भाषापादः प्रथमः। श्रुतार्थस्योत्तरंलेख्यमित्युत्तरपादोद्वितीयः। ततोऽर्थीलेखयेत्सद्यःप्रतिज्ञायापाद स्तृतीयः। तत्सिद्धौसिद्धिमाप्नोतीतिसाध्यसिद्धिपादश्चतुर्थः। यथा। भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः। आक्षिप्तचतुरंशस्तुचतुष्पादभिधीयते। इतिमिताक्षरा॥

साध्वसम्। न॰ भये॥ साधून्अस्यति। अस॰। अजितिमुकुटः तन्न। अणः प्रसङ्गात्। तस्मात्॰ साधूनामस्यसः॥ सम्भ्रमे॥

साध्वी। स्त्री॰ दुर्गायाम्॥ मेदायाम्॥ पतिव्रतायाम्॥ तल्लक्षणमाहहारीतः। आर्त्तार्तेमुदिताहृष्टे प्रोषितेमलिनाकृशा। मृतेम्रियेतयापत्यौसाध्वीज्ञेयापतिव्रतेति॥ मनुरपि। पतिंयानाभिचरति मनोवाग्देहसंयता। साभर्तृलोकानाप्नोतिसद्भिः साध्वीतिचोच्यते॰ इति॥ वोतोगुणवचनादिति ङीष्॥ शोभनायाम्॥

सानन्दः। पुं॰ गुच्छकरञ्जे॥ भुवकप्रभेदे॥ यथा। अष्टादशाक्षरे

र्युक्तीयशीर्षप्रदेशेभुव: । रुद्रस्क
संज्ञकीतालिसामन्दौबौरक्किरसि ॥
त्रि॰ षाङ्कादयुक्ते ॥
सानन्दूर: । पुं॰ तीर्थविशेषे ॥
सानसि: । पुं॰ काञ्चने । सनोति
षणुदाने । सानसिवर्णसीघ्यादि
नामसिप्रत्ययश्चधातोर्बुक् ॥ त्रि॰
सम्भजनीये ॥
सानिका । स्त्री॰ वाद्यविशेषे । सना
ई॰ इतिलोकप्रसिद्धे ॥ वंशी-
वाद्ये ॥
सानु: । पुं॰ न॰ स्त्री । प्रस्थे । पर्व
तस्यसमभूभागे ॥ वने ॥ वात्या
याम् ॥ मार्गे ॥ अग्रे ॥ कोविदे
॥ सनोति । षणु॰ । दृणनिजनी
तिञुण् । अर्के ॥ पल्लवे ॥
सानुक्रोश: । त्रि॰ सदये ॥
सानुज: । पुं॰ तुम्बुरुवृक्षे । तोया
पचे ॥ न॰ प्रपौण्डरीके ॥ त्रि॰ अ
नुजेनसहवर्तमाने ॥ सानुजं रा
ममीडे ॥
सानुबन्ध: । त्रि॰ सपरिवारे ॥ अवि
च्छिन्ने । सानुकूले ॥
सानुमान् । पुं॰ पर्वते ॥ सानवोवि
द्यन्तेऽस्य । मतुप् ॥
सानेयिका । स्त्री॰ सानेय्याम् ॥
सानेयी । स्त्री॰ वंश्याम् ॥ इ॰ म॰
र॰ श्री॰ ॥
सान्तपनम् । न॰ कृच्छ्रसान्तपनाभिधे



व्रतविशेषे ॥ यथा । गोमूत्रं गोमयं
क्षीरं दधिसर्पि: कुशोदकम् । ए
करात्रोपवासश्चकृच्छ्रं सान्तपनं स्मृ-
तम् ॥ गोमूत्रादिषड्द्रव्याण्येकी
कृत्य कस्मिन्नह्निभक्षयेत्॰नान्यत्
किञ्चिदद्यात् । अपरेद्युरेकोपवास
इत्येतत्॰सान्तपनं कृच्छ्रं स्मृतमित्य
र्थ: ॥ सन्तपति । तप॰ । ल्युट् ।
तस्येदङ्कर्म । अण् ॥
सान्तर: । त्रि॰ विरले ॥ अन्तरेणस
हित: ॥
सान्त्वम् । न॰ अत्यर्थमधुरेवाक्ये ।
आर्थमन: प्रीतिजनके ॥ साम
नि । प्रियशब्दार्थप्रदानसत्वस्वादि
भि: क्रोधोपशमने । द्रव्यं दास्या
मितुभ्यंमाभैषीरित्यादिसमाधा-
नोक्तौ ॥ सान्त्वयति । षान्त्वसामप्र
योगे । चुरादिरदन्त: । एरच्॰घञ्
वा ॥ दाक्षिण्ये ॥
सान्त्वनम् । न॰ प्रणये ॥ सामोपाये ॥
षान्त्व॰ । ल्युट् ॥
सान्त्वना । स्त्री॰ प्रणये ॥ प्रणय: सा
न्त्वमाननेतिकोषान्तरम् ॥ सामनि
सान्त्वनावाद: । पुं॰ प्रियवचने ॥
सान्दीपनि: । पुं॰ मुनिविशेषे ॥ य
स्माद्विद्याभिज्ञे॰अवन्तिपुरवासि
निकाश्यैरामकृष्णयोर्गुरौ । सन्दी
पनस्यापत्यम् । अतइञ् ॥
सान्दृष्टिकम् । पुं॰ व्यापारानन्तरं

आयमानि॰सख्यः फल्गि । सन्दृष्टौप्र ख्यचे भवम् । अध्यात्मादित्वाट्ठञ् । समानदृष्टिविषये ॥

सान्द्रम् । न॰ वने । चि॰ घने । नि बिडे । मृदौ । सद॰ अन्यते । अ दिवन्धने । बाहुलकाद्रक् ॥

सान्द्रपुष्पः । पुं॰ विभीतकवृक्षे ।

सान्द्रस्निग्धः । चि॰ घनस्निग्धे । मेदुरे ॥

सान्धिकः । पुं॰ शौण्डिके ॥ चि॰ सन्धिकर्त्तरि ॥

सान्धिवेलम् । न॰ संधिवेलायाम्भ वे ॥ सन्धिवेलायृतुनक्षत्रेभ्योण् ॥

सान्ध्यः । पुं॰ स्वप्ने ॥ सन्धिभवे ॥ स न्ध्यायाम्भवः । सन्धिवेलादित्वा दण् ॥

सान्ध्यकुसुमा । स्त्री॰ चिसन्धिपुष्पवृ क्षे ॥

सान्नहनिकः । चि॰ योधानांरणसन्ना हप्रवर्त्तके ॥ सन्नहनंप्रयोजनमस्य । तदस्यप्रयोजनमितिठक् ॥

सान्नाय्यम् । न॰ होतव्यद्रव्ये । हवि षिसम्यङ्नीयतेहोमार्थमग्निम्प्रति । णीञ् । पाय्यसान्नाय्येतिणयदा यादेशः समोदीर्घश्चनिपात्यते ॥

सान्निध्यम् । न॰ नैकट्ये ॥ निकटे ॥ सन्निधिरेव । चतुर्वर्ण्यादित्वात् स्वार्थेष्यञ् ॥

सान्निपातिकः । चि॰ सन्निपातज्वरो गी । सन्निपातश्रममनङ्कोपनंवा । सन्निपाताच्चेतिठञ् ॥

सान्यासिकः । पुं॰ भिक्षौ । पाराश रिणि ॥

सान्वयः । चि॰ सम्बन्धिनि ॥ कुलस हिते ॥ पुत्रपौत्रादिसहिते । यथा । येनधौतहिमविदमन्यवकुलतीश्च मम् । सक्षौवन्नेवगूढत्वमाशुगच्छ तिसान्वयः ॥

सापत्नः । पुं॰ सपत्नीतनये । सपत्न्या अपत्यम् । शिवादिभ्योण् । तत्र स पत्नेतिपाठेपिलिङ्गविशिष्टपरिभाष या॰ सपत्नीशब्दादपिसामान्यचि न्तया॰ढकंबाधित्वाऽणितिबोध्यम् ॥ वैरिणस्तनये ॥ तस्यापत्यमित्यण् ॰ शिवादित्वाद्वा ॥

सापत्नेयः । चि॰ सपत्न्यास्तनये ॥ सपत्न्याअपत्यम् ॥ स्त्रीभ्योढक् ।

सापत्नेयी । स्त्री॰ सपत्न्यादुहितरि ॥

सापत्रपा । स्त्री॰ लज्जायाम् ॥

सापराधः । चि॰ कृतापराधे ॥

सापिण्डः । पुं॰ सपिण्डे ॥ प्रज्ञा दिभ्यश्चेतिस्वार्थेऽण् ।

सापिण्ड्यम् । न॰ सपिण्डतायाम् ॥

साप्तपदीनम् । सख्ये । मित्रत्वे ॥ सप्तभिः पदैरवाप्यते । साप्तप दीनंसख्यमितिसाधु ॥

साफल्यम् । न॰ सफलतायाम् ॥

साभाव्यापत्तिः । स्त्री॰ साम्यप्राप्तौ ॥

सामकः । पुं॰ तर्क्कुशाणे ॥ सामाभिज्ञे ॥ साममधीते॰ वेदवा । क्रमादिभ्योवुन् ॥ न॰ मूलक्रणे ॥

सामगः । त्रि॰ ब्राह्मणविशेषे । छान्दोगे ॥ सामगायति । गै शब्दे । गापोष्टगितिटक् । टेर्लोपश्च : । तेनस्त्रियांसामगी ॥

सामगर्भः । पुं॰ विष्णौ ॥

सामग्री । स्त्री॰ कारणसमूहे ॥ यथा । सामग्रीचेत्फलविरहोव्यापिरेवेति तत्त्वमङ्क॰ पदाङ्कदूतः ॥ द्रव्ये ॥

सामग्र्यम् । न॰ समुदायत्वे ॥

सामजः । पुं॰ गजे ॥ कुञ्जरे ॥ त्रि॰ सामोत्थे । सामार्थे ॥

सामञ्जस्यम् । न॰ औचित्ये । युक्तियुक्ते ॥

साम । न॰ सहस्रशाखिपितृदेवताकेवेदविशेषे ॥ गीतिविशिष्टायामृचि ॥ ऋच्यध्यूढं सामोच्यते ॥ वाक्यविशेषस्थायांगीतौ ॥ सामपदन्तुगीतिमात्रस्यैवाभिधायकमित्यन्यत् । चतुर्णांवेदानांमध्येगानमाधुर्यैणातिरमणीयत्वाद्विष्णोर्विभूतिः सामेत्युच्यते । राज्ञांशत्रुवशीकरणायोपायविशेषे । सान्त्वे । प्रियवादः प्रदानसम्बन्धादिभिः शत्रोः क्रोधोपशमने ॥ यथा । परस्परोपकाराणांदर्शनंगुणकीर्त्तनम् । सम्बन्धस्यसमाख्यानमायत्याः सम्प्रकाशनम् ॥ वाचापेशलयासाधुतवाहमितिचार्पणम् । इतिसामविधानज्ञैः सामपञ्चविधंस्मृतम् ॥ स्यतिपापं॰ रोषं वाऽनेनवा । षोऽन्तकर्म्मणि । सातिभ्यांमनिन्मनिणाविति मनिन् ॥ सामनम् । सामसान्त्वप्रयोगे । बाहुलकात्कनिन्वा ॥ त्रि॰ शोभने । अनवद्ये ॥

सामनः । पुं॰ सामयति ॥ सामास्त्यस्य । पामादित्वान्नः ॥

सामनी । स्त्री॰ पशुबन्धनरज्जौ ॥

सामन्तः । पुं॰ प्रतिवासिनि ॥ सं लग्नोन्तएकदेशोस्य । प्रादिभ्योधातुजस्येतिसमासः । समन्तायाः स्वदेशाव्यवहितभूमेरयम् । तस्येदमित्यण् ॥ माण्डलिके ॥ चतुर्दिके ॥ त्रि॰ सहाये ॥

सामन्यः । पुं॰ सामविदि ॥ साम सुसाधुः॰ प्रवीणो॰ योग्योवा । तत्रसाधुरितियत् । येचाभावकर्म्मणोरितिप्रकृतिभावः ॥

सामयिकः । त्रि॰ समयोचिते । समयेकार्यकर्त्तरि ॥ समयः प्राप्तोस्य । समयस्तदस्यप्राप्तमितिठञ् ॥ विनयादित्वात्स्वार्थेठग्वा । समयोत्थे ॥

सामयोनिः । पुं॰ ब्रह्मणि । द्रुहिणे ॥ कुञ्जरे । गजे । त्रि॰ सा

सौत्ये ॥

सामरस्यम् । न० ऐकरस्ये ॥

सामर्थ्यम् । न० योग्यतायाम् ॥ शक्तौ ॥ विशेष्यविशेषणभावावगाह्युपस्थितिजनकत्वरूपे, एकार्थीभावे ॥ परस्पराकाङ्क्षारूपायांव्यपेक्षायाम् ॥

सामर्षः । त्रि० सरोषे ॥

सामवायिकः । पुं० अमात्ये । सम्बन्धिनि । त्रि० समवायसम्बन्धिनि ॥ समवायोत्ये । सामूहिके ॥ समवायंसमवैति । समवायान्समवैतीतिठक् । कृष्टसमवपूर्वस्य चोथः : प्रविश्यैकदेशीभवनम् । तत्रगुणभूतंप्रवेशंप्रति, प्रकृत्यर्थस्यकर्मताबोध्या । विशेष्यानुरोधेनतु, लिङ्गसप्तमीप्रायेणप्रयुज्यते । कुरुत्वे चेसमवेताइतियथा ॥

सामवित् पुं० उद्गातरि ॥ सामानिवेत्ति । विद० । क्विप् ॥

सामवेदः । पुं० कुजाधिपेवेदविशेषे ॥

सामाजिकः । पुं० सभासदि । सभास्तारे ॥ समाजंसमवैति । समवायान्समवैतीतिठक् ॥ समाजंरक्षतिवा । रक्षतीतिठक् ॥

सामाधिपतिः । पुं० भौमयष्टे ॥

सामानाधिकरण्यम् । न० पदयोः सम्बन्धविशेषे । पदयोरेकार्थनिष्ठत्वे ॥ सचसम्बन्धोभिन्नप्रवृत्तिनिमित्तानांशब्दानामेकस्मिन्नर्थेतात्पर्यसम्बन्धः । यथासोयंदेवदत्तइति वाक्ये तत्कालविशिष्टदेवदत्तवाचकसशब्दस्य, एतत्कालविशिष्टदेवदत्तवाचकायंशब्दस्यच, एकस्मिन्पिण्डेतात्पर्यसम्बन्धः ॥ यथोक्तमाचार्यैः एकवृत्तिरर्थेशब्दानां भिन्नप्रवृत्तिनिमित्तानाम् । सामानाधिकरण्यम् भवतीत्येवंवदन्तिलाक्षणिकाइति ॥ एकविभक्त्यन्तानांपदानां विशेषणविशेष्यभावेनैकार्थनिष्ठत्वे । तच्चमुख्यगौणभेदेनद्विविधं यथा । सामानाधिकरण्येकार्थस्त्वैक्येमुख्यतांव्रजेत् । यच्छिद्रमुत्पलंनीलमित्याद्यौतद्वैलक्षण्यात् ॥ अन्यस्यान्यचसम्पत्त्यात्सिंहस्पुरुषेयथा । सामानाधिकरण्यस्यगौणं सिंहः पुमानिति ॥ समानमधिकरणंययोस्तयोर्भावः ॥ एकाश्रयत्वे । अन्यदुच्छृङ्खलंसत्त्वमन्यच्छायानिबन्धितम्, सामानाधिकरण्यंहितेजस्तिमिरयोः कुतः ॥

सामान्यः पुं० पञ्चमेवर्णे । वर्णसङ्करे ॥ यथोक्तंमत्स्यनिर्वाणे । चत्वारः कथितावर्णाश्रमाश्चदिसुव्रते । आचारास्तुविवर्णानामाश्रमाणांपृथक्पृथक् ॥ कृतादौकलिकालेतुवर्णाः पञ्चप्रकीर्त्तिताः ।

ब्राह्मण : क्षत्रियो वैश्य : शूद्र : सामान्य एव चेति ॥

सामान्यम् । न० जातौ ॥ तद्द्विविधम् । यथा । सामान्यं द्विविधं प्रोक्तम् परञ्चापरमेव च । द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते । परभिन्ना च या जातिः सैवापरतयोच्यते । व्यापकत्वात् परापि स्याद्व्याप्यत्वादपरापि च । द्रव्यत्वादिकजातिस्तु परापरतयोच्यते । इति भाषापरिच्छेदः ॥ तल्लक्षणं यथा । नित्यत्वे सत्यनेकसमवेतत्वमिति । अनेकसमवेतत्वं संयोगादीनामप्यस्ति अत : सत्यन्तम् । नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्ति अत उक्तमनेकेति । नित्यत्वे सत्यनेकवृत्ति सामान्यमुपेत्य समवेतत्वमुक्तम् । एकव्यक्तिवृत्तिस्तु न जातिः । यत उक्तम् । व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः । रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः ॥ एकव्यक्तिकत्वादाकाशत्वं न जातिः । तुल्यवृत्तिकत्वाद्घटत्वं कलसत्वं न जातिद्वयम् । सङ्कीर्णत्वाद्भूतत्वं मूर्त्तत्वं न जातिः । अनवस्थाभयात् सामान्यत्वं न जातिः । विशेषव्यावृत्तस्वभावस्वरूपहानिः स्यादतो विशेषत्वं न जातिः । समवायसम्बन्धाभावात् समवायीनजातिः । द्रव्यादित्रिकवृत्तिरिति । परत्वमधिकदेशवृत्तित्वम् । अपरत्वमल्पदेशवृत्तित्वम् । सकलजात्यपेक्षया ऽधिकदेशवृत्तित्वात् सत्तायाः परत्वम् । एतद्बोधनाय द्रव्यादीति । तद्भिन्नसामान्यं सांजातीनामपरत्वम् । परभिन्नासत्ताभिन्ना । व्यापकत्वात् परापि स्याद्व्याप्यत्वादपरापि च । पृथिवीत्वाद्यपेक्षया व्यापकत्वात् अधिकदेशवृत्तित्वात् द्रव्यत्वम्परत्वम् । सत्तापेक्षया ऽल्पदेशवृत्तित्वात् द्रव्यत्वं अपरत्वञ्च । तथा च धर्मद्वयसमावेशादुभयमविरुद्धम् । इति मुक्तावली ॥ नित्यमेकमनेकानुगतं सामान्यम् । तच्च द्रव्यगुणकर्म्मवर्त्ति । तर्कसङ्ग्रहः ॥ सामान्यं गुणसाम्ये नयत्र वस्त्वन्तरैकतेति लक्षणलक्षितकाव्यालङ्कारविशेषः ॥ यथा । प्रस्तुतस्य केनचिद्गुणसाम्यविवक्षया । ऐकात्म्यं बध्यते योगात् तत्सामान्यमिति स्मृतम् । अतादृशमपि ताद्गतय विवक्षितुं यद्वस्तु तार्थं न सम्प्रक्तमपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते तत्समानगुणनिबन्धनात् सामान्यम् । उदाहरणम् । मलयजरसविलिप्ततनवो नवहारलताविभूषिता : सिततर

रद्दलपक्कतरक्वकचोदचिरामला
शुभाः। ममभृगविततधान्निभव-
लयतिधरामविभाव्यताङ्गताः प्रि
यवसतिं प्रयान्तिसुदमेवनिरस्तभ
येऽभिसारिकाः॥ अत्रप्रस्तुतत्द
न्ययोरन्यूनानतिरिक्ततयानिबद्ध
धवलत्वमेकात्मताहेतुः। अतएव
पृथगभावेनानयोरुपलक्षणम्॥
यथावा। विवस्वचातुल्यरूपांबध्
नांकणायितोगगडतलागतानि। भृ
ङ्गाः सहेलंयदिनापतिष्यन कोविद
श्चियन्नववम्पकानि॥ अत्रनिमित्ता
न्तरजनितापिनानात्वप्रतीतिः प्रथ
मप्रतिपन्नमभेदंनव्युदसितुमुत्सहते
प्रतीतत्वात्सद्यप्रतीतेश्चबाधायोगात्
सामानाम्। वि० साधारणे। अवि
शेषे। तुल्यतायाम्॥ अनेकसम्ब
न्ध्येकवस्तुनि॥ उत्सर्गे॥
सामानाच्छलम्। न० छलप्रभेदे॥
सम्भवतोऽर्थस्यातिसामानायोगाद
सम्भूतार्थकल्पनासामानाच्छलम्
। ५३॥ सामानविशिष्टसम्भवद
र्थाभिप्रायेणोक्तस्य० अतिसामाना-
योगादसम्भवदर्थकतुकल्पनया० दू
षणाभिधानं सामानाच्छलम्। य
था ब्राह्मणोयं विद्याचरणसम्पन्नइ-
त्युक्ते० ब्राह्मणत्वे न विद्याचरणसम्प
दं साधयतीतिकल्पयित्वा० परो
वदतिकुतोब्राह्मणत्वेन० विद्या
चरणसम्पत० व्रात्ये व्यभिचारा-
त्। ५३॥
सामान्यतोदृष्टम्। न० अदृष्टस्वलक्ष
णसामान्यविषयेऽनुमाने॥
सामान्यलक्षणा। स्त्री० अलौकिकस०
न्निकर्षविशेषे॥ सतु० अर्थव्र
ञ्चापकसामान्यज्ञानम्। यथा
एकघटदर्शनेसकलघटस्य नभव-
तिईदृशघटत्वादिज्ञानम्। तत्
प्रमाणंयथा। अलौकिकः सन्नि
कर्षस्त्रिविधः परिकीर्त्तितः।
सामान्यलक्षणाज्ञानलक्षणायोगज
स्तथा॥ आसत्तिराश्रयाणान्तुसा
मान्यज्ञानमिष्यते। तदिन्द्रियज
तद्धर्मबोधसामग्र्यपेक्षते॥ इति
भा०॥
सामान्यविधिः। पुं० अनान्यभिवि
धौ॥ यथा। नहिंस्यात्सर्वभू
तानीति॥
सामान्यशासनम्। न० सामान्या
धिकारे॥ राजलेख्यविशेषे॥
सामान्या। स्त्री० नायिकभेदे॥ या
चान्तरे॥ कथितंत्रिधारासरसे
व्वभिमतफलदाभवेत्सामान्या॥
सामानाभिनयः। पुं० वागङ्गसत्त्व
जेऽभिनये॥ यथा। सामानाः
भिनयोनामसत्त्वे योवागङ्गसत्त्वजः इ
ति॥
सामासिकः। पुं० साङ्क्षेपिके।

समासममृद्धे ॥

सामि । अ० अर्द्धे ॥ निन्दायाम् ॥ सामयति । सामसान्त्वप्रयोगे । चचुः ॥

सामिधेनी । स्त्री० धाय्यायाम् । अग्निज्वालनार्थमृचि । ऋक्सामिधेनी धाय्या च यास्यादग्निसमिन्धने ॥ समिधामाधानी । समिधाम धानेषेण्यण् । षित्वान्ङीष् । यस्येतिलोपः ॥ समिध ॥

सामिधेन्यः । पुं० मन्त्रविशेषे ॥ समिधामाधानः । समिधामाधाने षेण्यण् ॥

सामीची । स्त्री० वन्दनायाम् ॥

सामीप्यम् । न० सान्निध्ये । देशकालाभ्यां कृतायाम् प्रत्यासत्तौ । अव्यवहितत्वे ॥ समीपमेव । चतुर्वर्णादित्वात् ष्यञ् ॥

सामुद्रम् । न० देहलक्षणे ॥ लवणविशेषे । कडके । वशिरे ॥ अस्य गुणा यथा । सामुद्रं मधुरं पाके नातितीक्ष्णमगन्धरं गुरु । नात्युष्णं दीपनं भेदि सक्षारमविदाहि च ॥ श्लेष्मलं वातनुत्तिक्तमरूक्षं नातिशीतलम् ॥ समुद्रोदके सामुद्रमुदकं क्षारं सर्वदोषप्रकोपणम् ॥ समुद्रफेने ॥ धाराजलप्रभेदे ॥ तत् समुद्रानलक्षणं शुक्रदृष्टिबलापहम् । विस्रदोषलं तीक्ष्णं सर्वकर्मसु गर्हितम् ॥ सामुद्रन्त्वाश्विनेमासि गुणैर्गाङ्गवदादिशेत् । यतोऽगस्त्यस्य दिव्यर्क्षे दृश्यन्ते सकलं जलम् । निर्मलं निर्विषं स्वादु शुक्लं स्यादुदोषलम् ॥ तत् सामुद्रं जलम् । अत्रैव । फूत्कारविषवातेन नागानां व्योमचारिणाम् । वर्षासु सविषं तोयं दिव्यमप्याश्विनं विना ॥ त्रि० समुद्रोत्पन्नवस्तुनि । समुद्रे भवम् । तत्र भवइत्यण् ॥

सामुद्रकम् । न० समुद्रलवणे ॥ समुद्रोत्थे लवणपञ्चे ॥ तीर्थविशेषे ॥ त्रि० । स्त्रीपुंसयोश्चिह्नवेत्तरि ॥

सामुद्रिकः । त्रि० स्त्रीपुंसयोश्चिह्नज्ञे ॥ वेत्ता स्त्रीपुंसयोश्चिह्नं सामुद्रिक उदाहृत इति हारावली ॥ समुद्रसम्बन्धिनि ॥ समुद्रचारिणि ॥

सामूहिकः । त्रि० सामवायिके । समूहं समवैति । समवायान् समवैतीति ठक् ॥

साम्परायः । पुं० परलोके ॥ परलोकसाधने । सम्परायः परलोकः । तत्प्राप्तिप्रयोजनमेगालीयेनाधनविशेषे ॥

साम्परायिकम् । न० युद्धे । सम्मीके । समरे ॥ त्रि० पारलौकिके ॥ यथा । प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते । न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम् ॥ पारलौकि

सायकपुङ्खा । स्त्री॰ शरपुङ्खायाम् ॥
सायङ्काल : । पुं॰ सायाह्ने ॥
सायम् । अ॰ निशामुखे । दिनान्ते ॥
सानम् । घि॰ । षम् । युगा
गम : ॥
सायम्प्रातिक : । त्रि॰ सायम्प्रातर्भ
वे ॥ कालाट्ठञ् ॥
सायन्तन : । त्रि॰ सायङ्कालसम्बन्धि
नि ॥
सायाह्न : । पुं॰ विकालके । दिना
न्ते । पञ्चधाविभक्तस्याह्न : पञ्चमे
भागे । यथा । सायाह्ने त्रिमुहूर्त्तं
स्यात् श्राद्धं तत्र न कारयेत् । राक्षसी
नाम सा वेला गर्हिता सर्वकर्मसु ॥
अह्न : सायम् । सङ्ख्याविसायेति
ज्ञापकात् समास : । सायमोह्न
मतोपद्धतिभाष्याद्वा साधु : ॥
सायिका । स्त्री॰ क्रमस्थितौ ॥
सायुज्यम् । न॰ सयुग्भावे । एकदे
हदेहित्वैऐक्ये ॥ सयुजोभाव : ।
ब्राह्मणादित्वात् ष्यञ् ॥
सायोत्सव : । पुं॰ विकाले ।
सार : । पुं॰ बले ॥ स्थिरांशे ॥ यथा
। वेदान्यनेकशास्त्राणि चाल्पायुर्वि
घ्नकोटय : । तस्मात् सारं विजानी
यात् क्षीरं हंस इवाम्भस : ॥ मज्ज
नि । मज्जायाम् ॥ वज्रक्षारे ॥
रोगे । द्रुतिभरणी ॥ दाडिमे ॥
वायौ ॥ पाशके ॥ नवनीते ॥ द
ध्यग्रे । काव्यालङ्कारविशेषे ॥
यथा । उत्तरोत्तरमुत्कर्षो भवेत् सा
र : पराबधि : ॥ पर : पर्य्यन्तभा
गोऽवधिर्य्यस्य धाराधिरोहितया तत्त्व
वोत्कर्षस्य विश्रान्ति : । उदाहरण
म् । राज्ये सारं वसुधा॰ वसुधाया
म् पुरम्॰ पुरे सौधम् । सौधे तल्पं
तल्पे वराङ्गनाऽनङ्गसर्वस्वम् । न॰
जले । धने ॥ न्याय्ये । नवनीते ॥
विपिने । लोहसारे । यथा । च
माम्रच्छिखर : कारा यद्गान्यम्लेन लि
प्यते । लोहस्य यं च सूक्ष्माणि तत् सा
रमभिधीयते ॥ लोहसारस्य च ह
न्याद्ग्रहणीमतिसारकम् । अर्शसर्वा
ङ्गजं वातं शूलञ्च परिणामजम् ॥
छर्दिं च पीनसं पित्तं श्वासमाशु व्यपो
हति । त्रि॰ वरे । श्रेष्ठे ॥ यथा ।
असारे खलु संसारे सारमेतच्चतुष्टय
म् । काश्यां वास : सतां सङ्गो
गङ्गाम्भ : शिवपूजनम् ॥ दृढे ॥
विरस्मिस्तनु सरति कालान्तरम् । सृ॰
। स्थिरे॰ द्रुतिघञ् ॥ सार : श
बलपीतयोरिति विश्व : ॥
सारक : । पुं॰ तरलप्रवृत्तिहेतौ । ज
यपाले ॥ त्रि॰ विरेचके ॥ सरति
। सृ॰ । ण्वुल् ॥
सारखदिर : । पुं॰ दुष्खदिरे । घन
तरौ ॥
सारगन्ध : । पुं॰ चन्दने ॥

रैवतकमतेऽपि वामः ॥ सर्वेऽपि तव्यः कथितार्थकारी । क्रौञ्चद्वयस्याप्ययमेव वर्गः ॥ इति वसन्तराजः ॥ इन्दौ ॥ हंसे ॥ न० सरसीरुहे । पद्मे । भीमपानीयविशेषे ॥ यथा मद्याः शैवलराशिमीयवसंस्थ्य- तिष्ठति । तत् सरोजलजच्छन्नं तट म्भः सारसं स्मृतम् ॥ सारसं सलिलं वल्यं तृष्णाघ्नं मधुरं लघु । रोचनं तुवरं रूक्षं बद्धमूत्रमलं हितम् ॥ वि० सरोजाते ॥ सरसिभवः । अण् ॥

सारसनम् । न० ततुवनामोरस्के । कञ्चुकादावर्थिमध्यकायनिबद्धपट्टिकादौ ॥ यथा । कञ्चुकी वारबाणोऽस्त्री यत्तु मध्ये सकञ्चुकाः । बध्नन्ति तत् सारसनमधिकाङ्गोऽथ शीर्षकम् ॥ इत्यमरः ॥ काञ्च्याम् । मेखलायाम् । कटिभूषणे । स्त्री कट्यां वस्त्रबन्धने । सारमुत्कृष्टं सनमस्य षष्ठसम्भक्तौ । घः । स सारसनेनाल्पघस्के नवा । सारंस नीलशिखा । पश्चाद्गाने कर्मणः श्री वत्सविरचितम् । यथा । सारंबल मङ्गी० दीप्यतेऽनेन । असमतटी पूजादावेषु । करणे ल्युट् । अ सनूद्धादि ॥

सारसिका । स्त्री० सारस्याम् ॥ स्वार्थे कः ॥

सारसी । स्त्री० लक्ष्मणायाम् । सारसस्त्रियाम् ॥

सारस्वतः । पुं० देशविशेषे ॥ बिल्वदण्डे ॥ कल्पविशेषे ॥ यथा । सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः । तद्वृत्तान्तोद्भवं लोके तद्भागवतमुच्यते ॥ इति मात्स्ये ५०ऽ ध्यायः ॥ सरस्वतीनदीपुत्रमुनिविशेषे ॥ इति कश्चित् । सारस्वतदेशीयब्राह्मणे ॥ स च पञ्चविधगौडेषु प्रसिद्धः । यथा । सारस्वताः कान्यकुब्जा इति ॥ न० ब्रह्मीघृते ॥ त्रि० सरस्वतीतीरवासिनि ॥ सरस्वतीतीरसम्बन्धिनि ॥ सारस्वतदेशसम्बन्धिनि ॥

सारस्वताः । पुं० भूम्नि० देशविशेषे । विकर्णिकेषु ॥ यथा । कश्मीरास्तु माधुमताः सारस्वतास्तु विकर्णिकाः इति हेमचन्द्रः ॥

सारस्वतकल्पः । पुं० स्वायम्भुवमोक्षकातन्त्रोक्तेऽजडाहरे सरस्वत्युपासनाप्रकरणे ॥

सारस्वतव्रतः । पुं० न० मत्स्यपुराणोक्ते व्रतविशेषे ॥

सारस्वती । स्त्री० इष्टिविशेषे ॥ याज्ञिकाः । पठन्ति । आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदिति प्रायश्चित्तीयामाभूमेत्यध्येयं व्याकरणमिति महाभाष्यम्

सारा । स्त्री॰ स्नुहीप्रभेदे ॥ दूर्वायाम् कृष्णत्रिवृतायाम् ॥
साराथ : । त्रि॰ निष्कृष्टार्थे ॥
साराल : । पुं॰ तिले ॥
सारि : । पुं॰ स्त्री॰ पाशके ॥
सारिका । स्त्री॰ शारिकाख्यखगे । पीतपादायाम् । गोराटिकायाम् ॥ सरति । सृ॰ । ण्वुल् । प्रत्ययस्थादितीत्त्वम् ॥ वद्यान्तरे ॥
सारिणी । स्त्री॰ कपिलशिंशपायाम् ॥ कार्पासिकायाम् ॥ दुरालभायाम् ॥ प्रसारण्याम् ॥ रक्तपुनर्नवायाम् ॥ सहदेव्याम् ॥ दूर्लिरा अनिघण्ट : ॥
सारी । त्रि॰ बलयुक्ते । सबले ।
सारिष्ठ : । त्रि॰ अतिशयेनसारे ॥
सारी । स्त्री॰ सप्तलायाम् ॥
सारु । न॰ वर्णवृत्तप्रभेदे ॥ हारदण्डधारिसारु ॥ यथा । नन्दनन्दनम् भजामि ॥
सारुण : । त्रि॰ अरुणवर्णयुक्ते ॥
सारुणा । स्त्री॰ जपायाम् ॥
सारूप्यम् । न॰ सरूपतायां ॥
सारोष्ट्र : । पुं॰ देशभेदे ॥ सारउष्ट्रोयस्मिन् ॥
सारोष्ट्रिक: । पुं॰ विषविशेषे ॥ सारोष्ट्रे देशेभव : । अध्यात्मादित्वाट्ठञ् ॥
सार्गल : । त्रि॰ सप्रतिबन्धे ।

सार्थ : । पुं॰ जन्तुसङ्घे ॥ वणिकसमूहे ॥ समूहमात्रे ॥ याचिकजनानांसङ्घाते ॥ त्रि॰ सधने ॥ सफले । अभिधेयसहिते ॥ सरति • सियतेवा । सृ॰ । सर्त्तिरिति थन् ॥ अर्थेनसहवर्त्तमानोवा ॥ वापोष्ट्विक्स्वन्तोषुवनेषप्रवनेष्विव । सार्था : स्वैरंतदीयेषुचेरुर्वेश्मस्विवाद्रिषु ॥
सार्थक : । त्रि॰ सप्रयोजने ॥ अर्थेनसहवर्त्तमान : । सार्थक : ॥
सार्थवाह : । पुं॰ वणिजि ॥ सार्थं वहति । वह॰ । कर्म्मण्यण् ॥
सार्थिम : । त्रि॰ सार्थेस्थिते । सार्थोतिष्ठाति ॥
सार्द्र : । त्रि॰ आर्द्रे ॥ पर्यायास्तु । आर्द्रसार्द्रक्लिन्नतिमितस्तिमितसमुन्नमुत्तस्चेति ॥ सहआर्द्रणगुणेनेतितथा ॥
सार्द्ध : । त्रि॰ अर्द्धसहिते ॥ अर्द्धेनसहवर्त्तमान : ॥
सार्द्धम् । अ॰ साकमर्थे । सत्रम् । समम् । सहार्थे ॥ ऋध्यति । ऋधुवृद्धौ । बाहुलकात्कम् । सहऋद्धंवर्त्तते ॥
सार्प्प : । पुं॰ अश्लेषानक्षत्रे ॥ सर्पोदेवताऽस्य । सास्यदेवतेत्यण् ॥
सार्प्पराज्ञी । स्त्री॰ सर्पराजस्यवासुकेः पत्न्याम् ॥

सार्प्पिष:। त्रि० सर्पिः सम्बंधिनि। सर्पिषा संस्कृते॥ अण्॥

सार्पिष्क:। त्रि० घृतसंस्कृते॥ सर्पिषा संस्कृतं। तेनसंस्कृतमितिठक्॥ सार्पिष्कन्दाधिकं सर्पिर्दधिभ्यां संस्कृतं क्रमादितिहेमचन्द्र:॥

सार्व्व:। पुं० अर्हति। जिने॥ त्रि० सर्वहिते॥ सर्वस्मै हित:। सर्वपुरुषाभ्यां णढञाविति ण:॥

सार्व्वजनिक:। त्रि० सर्व्वजनीने॥ सर्वेजन:। पूर्वकालैकेतिसमास:। सर्वजनायहित:। सर्वजनाट्ठञ् खञ्चेतिठञ्॥

सार्व्वभौम:। पुं० सर्वपृथ्वीपतौ। चक्रवर्त्तिनि। कान्यकुब्जदेशे। उत्तरदिग्गजे॥ सर्वस्याम् भूमौ विदित:। तत्रविदितइत्यण्। अनुशतिकादित्वादुभयपदवृद्धि:॥ सर्वभूमेरीश्वरोवा। तस्येश्वरइत्यण्॥ सर्वभूमेर्निमित्तं संयोगउत्पातोवा। सर्वभूमिपृथिवीभ्यामणञाविव्यण्॥

सार्व्वजनीन:। त्रि० सर्व्वजनेसाधौ॥ खञ्॥

सार्व्वलौकिक:। त्रि० सर्वलोकविदिते॥ सर्व्वलोकेविदित:। लोकसर्वलोकाट्ठञ्। अनुशतिकादि:॥

सार्षपम्। न० सर्षपशाके॥ गुणा यथा। कटुकं सार्षपं शाकं बहुमलं गुरु। अम्लपाकं विदाहि स्वादु रूक्षं त्रिदोषकृत्॥ सक्षारं लवणं तीक्ष्णं स्वादु शाकेषुनिन्दितम्॥ सर्षपतैले॥ दीपनं सार्षपं तैलं कटुपाकरसं लघु। लेखनं स्पर्शवीर्योष्णं तीक्ष्णं पित्तास्रदूषकम्॥ कफमेदोनिलार्शोघ्नं शिर:कर्णामयापहम्। कण्डूकोठक्रिमिश्वित्रकुष्ठदुष्टव्रणप्रणुत्॥ तद्वद्राजिकयोस्तैलं विशेषान्मूत्रकृच्छ्रकृत्॥ राजिकयो:॰ कृष्णराजिकारक्तराजिकयो:॥

साष्टिता। स्त्री० समानर्द्धित्वे। समानैश्वर्य्ये॥

साल:। पुं० वृक्षमात्रे॥ प्राकारे॥ सर्ज्जपादपे। सखुआ० इ०भा० प्र०॥ सल्यते। षलगतौ। कर्म्मणिघञ्॥ न० धूनके॥

सालग्राम:। पुं० शालग्रामे॥

सालन:। )
सालनिर्यास:।) पुं० धूनके सर्ज्जरसे॥

सालपर्णी। स्त्री० सालपर्ण्याम्। विदारिगन्धायाम्॥ इ० श० र०लौ॥ साल:पर्णमस्या:। सालशब्दस्यशालपर्यसदृशैलक्षणा। पाककर्णेतिङीष्॥

सालपुष्पम्। न० स्थलपद्मे॥

सालरस:। पुं० राले। धूनके॥

सालवेष्टः । पुं॰ धूनके ॥
सालशृङ्गम् । न॰ प्राचीराग्रे ॥
सालसारः । पुं॰ तरौ । हिङ्गुनि ॥
सालिका स्त्री॰ शारिकायाम् ॥ षल॰ । ण्वुल् । ह्रस्वम् ॥
सालोक्यम् । न॰ एकलोकवासे । सलोकतायाम् ॥
सालिकः । पुं॰ पक्षिविशेषे । गृध्रले । शुद्रचूडे ॥
साल्वः । पुं॰ देशविशेषे । तद्देशस्थे पुंभूम्नि॰ कारकुक्षीयेषु ॥ साल्वास्तु कारकुक्षीया मरवस्तु दशेरकाः इति हेमचन्द्रः ॥ पुं॰ नृपतिविशेषे ॥ न॰ मूलविशेषे ॥ साल्वसूनम् । पुष्पमूलेषु वहुलमित्यणो लुक् ॥ वृद्धिप्रामाण्यात् साल्वशब्दस्य वृद्धत्वेऽपि विल्वादित्वं गवादित्वं वा बोध्यम् ॥ त्रि॰ साल्वदेशजे ॥ साल्वेषु भवः । कच्छादिभ्यश्चेत्यण् ॥ यथा॰ साल्वः पदातिर्व्रजति ॥
साल्वकः । त्रि॰ साल्वदेशजे ब्राह्मणादौ ॥ गवि ॥ यवाग्वाम् ॥ साल्वेषु जातः । अपदातौ साल्वादिति॰ गोयवाग्वोश्चेति वुञ् ॥
साल्वती । स्त्री॰ नाट्यवृत्तौ ॥
साल्वहा । पुं॰ श्रीकृष्णे ।
साल्वेयः । पुं॰ नृपान्तरे ॥ तस्यापत्ये ॥ साल्वेयस्यापत्यं॰ राजा वा । साल्वेयगान्धारिभ्यां चेत्यञ् ॥
सावधानः । त्रि॰ समाहितात्मकः रणे ॥ अवधानेन सह वर्त्तमानः ॥ सचेतने ॥
सावनः । पुं॰ यज्ञकर्मान्ते । यजमाने ॥ प्रचेतसि । वरुणे ॥ दिवसविशेषे । यथा । खरमरीच्युदयद्वयजान्तरं यदिह सावनसंज्ञदिनं स्फुटम् ॥ अपि च । अहोरात्रेण चैकेन सावनो दिवसः स्मृतः । इति । त्रिंशद्दिनात्मको मासो ॥ त्रिंशतासौरदिवसैः सावनः परिकीर्त्तितः ॥ न॰ सवनसम्बन्धिदिने । सोमयागे सवनत्रयस्याहोरात्रसाध्यत्वात् तत्सम्बन्धिदिनं सावनमिति माधवाचार्य्यः ॥
सावयवम् । न॰ व्यक्तौ ॥ अवयवेन सह वयवो मिथः संश्लेषः मिश्रणं संयोगः इत्यावत् अप्राप्तयोर्विन्द्या प्राप्तिः संयोगः तेन सह वर्त्तते तद्वत् सावयवम् । तथाहि॰ पृथिव्यादयः परस्परं संयुज्यन्ते॰ एवमन्येऽपि । न तु प्रधानस्य बुद्ध्यादिभिः संयोगस्तादात्म्यात् । नापि सत्त्वरजस्तमसां परस्परं संयोगोऽप्राप्तेरभावात् ॥ त्रि॰ अवयवविशिष्टे ॥
सावरः । पुं॰ मृगविशेषे ॥ न॰ तन्मांसे ॥ यथा । मांसं सावरसम्भूतं पाचितं मधुपाचितं । वैसवारोच्यते

कीर्णेंदिक्षुसैन्धवसम्भूते ॥ बलपुष्टि करंरुच्यं विष्टम्भिगुरुपाचनम् । सा वरंपललंशीतंसुस्वादुकफकृन्मतम् ॥ रसेपाकेचमधुरंरक्तपित्तनिवारणम् तद्भुक्त्वाशर्करांभूयोभक्षणायप्रक ल्पते ॥ भावप्रकाशेपि । सावरंपल लंस्निग्धंशीतलंगुरुच स्मृतम् । रसे पाकेचमधुरंकफदंरक्तपित्तहृत् ॥ त्रि॰ सवर्णेनसहिते ॥

सावर्ण: । पुं॰ अष्टममनौ ॥ यथो- क्तं देवीभागवते । छायासंज्ञासुता योसौद्वितीय: कथितोमनु: । पू र्वजस्यसवर्णोसौसावर्णस्तेनकथ्य तइति ॥

सावर्णि: । पुं॰ सूर्यतनये । अष्टम मनौ ॥ अष्टमेन्तरआयातेसावर्णि र्भवितामनु: ॥ सवर्णायाअपत्य म् । अतइञ् । इत्यधिकारे॰बाव् ह्वादिभ्यश्चेति॰इञ् ॥ यद्वा । अग्र जस्यवैवस्वतमनो: समानोवर्णइ तिसावर्णि: । यथोक्तं विष्णुपुरा णे । छायासंज्ञासुतोयोसौद्विती य: कथितोमनु: । पूर्वजस्यस वर्णोसौसावर्णिस्तेनकथ्यतइति ॥ गोत्रविशेषे ॥ यथा । वोत्स्यसाव र्णिगोत्रयोरौर्वच्यवनभार्गवजाम दग्न्याप्नवत: प्रवराइत्युद्वाहत- त्त्वं ॥

सावर्णिक: । पुं॰ मन्वन्तरान्तरे ॥ सावर्ण: क: प्रकाशोयस्मिन् ॥ अष्टममनौ । सावर्णिकोनाममनु र्भवान्भुविभविष्यतीत्युक्ते ॥

साविन्न: । पुं॰ शङ्करे ॥ वसौ ॥ ब्रा ह्मणे ॥ सूर्ये ॥ गर्भे ॥ न॰ यज्ञोप वीते ॥ सवितुरयम् । तस्येदमि त्यण् ॥

सावित्री । स्त्री॰ साल्वदेशीयसत्यव द्राजपत्न्याम् । मद्रदेशीयाश्वप तिराजकन्यायाम् ॥ ब्रह्मपत्न्या म् । सवितु: पृश्न्यामपत्न्यां जातायाम् । उमायाम् ॥ तन्ना मकारणंयथा । विदग्धैरर्चिता दे वीवेदयोगेषुपूजिता । भावशुद्ध स्वरूपातुसावित्रीतिनसास्मृतेतिदे वीपुराणे ४४ ऽध्याय: ॥ गाय त्र्याम् ॥ सर्वलोकप्रसवनात्सवि तासतुकीर्त्यते । यतस्तद्देवतादेवी सावित्रीत्युच्यतेतत: ॥ वेदप्रसव नाच्चापिसावित्रीप्रोच्यतेबुधैरिति- वह्निपुराणेब्राह्मणप्रशंसानामाध्या य: ॥ तन्नध्यायांमन्यत्रसमयेष त्यक्तसावित्रीजप: सायंप्रातर्होमा दिरूपयास्वकीयक्रिययाच्स्वका लि त्यक्तोब्राह्मण: क्षत्रियोवैश्योपिसत्व मेवनिन्दांगच्छतितस्मात्स्वकाले सा वित्रीजपस्वक्रियास्वनत्यजेत्सवितु रियम् । अण् । ङीप् । पुत्रहो मप्रसिद्धायांनद्याम् ॥

सावित्रीव्रतम् । न॰ ज्येष्ठकृष्णचतुर्दश्यामुक्तौकर्त्तव्ये नियमविशेषे । वटसावित्री॰इ॰भाषाप्रसिद्धे ॥
सावित्रीसूत्रम् । न॰ यज्ञोपवीते ॥
साशङ्क: । त्रि॰ सभये ॥
साशूक: । पु॰ कम्बले । इ॰ द्वारावली ॥
साश्रुधी: । स्त्री॰ श्वश्रूम् इ॰ विशेष: ॥
सास: । पुं॰ चापविशेषे ॥ असिना धनुषा सह वर्त्तते । तेन सहेति तव्हुव्रीहि: ॥
सासि: । त्रि॰ सखड्गे ॥ सहासिना वर्त्तते । तेन सहेति तुल्ययोगइति बहुव्रीहि: ॥
सासुम् : । पुं॰ सवाणे ॥ असुभिर्वाणै: सहित ॥
सास्थितमत्र्थम् । न॰ कांस्ये ॥ इ॰ वि॰ ष: ॥
सास्ना । स्त्री॰ गलकम्बले । गवाङ्गलस्यतिकम्बलाकृतिमांसे ॥ सस्ति । षसस्वप्ने । रास्नासास्नेति साधु: ॥
साहङ्कार: । त्रि॰ गर्वयुक्ते ॥
साहचर्य्यम् । न॰ साहित्ये । एकस्मिन्यान्वयित्वे । सामानाधिकरण्ये एकाधिकरणवृत्तित्वे ॥ सहचरस्य भाव: । ष्यञ् ॥
साहस: । पुं॰ अग्निविशेषे ॥ यथा । प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहस: । लक्षहोमे तु वह्नि: स्यात्कोटिहोमे हुताशन: ॥ इतितिथ्यादितत्त्वम् ॥ दमे । दण्डविशेषे ॥ स त्रिविधो यथा । प्रथम: साहस: स्मृत: । मध्यम: पञ्चविंशश्च : सहस्रमूल्येचोत्तम: ॥ लोभात् सहस्रं दण्ड्यन्तुमोहात्पूर्वन्तु साहसम् । भयाद्द्वौमध्यमौदण्ड्यौमैत्र्यात्पूर्व्वं चतुर्गुणमितिमानवे साक्षिप्रकरणे ८ ऽध्याय: ॥ न॰ बलात्कारकृतकार्ये । बलात्सम्पाद्यमाने क्रियमाणे पारुष्यादौ ॥ तथाचनारद: । सहसाक्रियतेकर्म यत्किञ्चिद्बलदर्पितै: । तत्साहसमितिप्रोक्तं सहोबलमिहोच्यते ॥ मनुष्यमारणं स्तेयंपरदाराभिमर्षणम् । पारुष्यमनृतञ्चेति साहसं पञ्चधास्मृतमिति ॥ दुष्कृतकर्म्मणि ॥ अविमृष्यकृतौ । पश्चाद्दोषमनालोच्याचरणे ॥ दमे ॥ जीवानपेक्षितकर्म्मणि । सहसि बले भवम् । तत्र भव इत्यण् ॥ शास्त्रत्यागे
साहसाङ्क: । पुं॰ विक्रमादित्यभूपतौ ॥ साहसिके ॥
साहसिक: । पुं॰ चौरे । अविचार्यकारिणि ॥ बलेनगृहदाहधनादिग्रहणकारिणि ॥ अवरात्रौ साहसान कार्या । यथाहमनु: । ऐन्द्रं स्थान

मभिप्रेप्सुर्यंशसाशयमव्ययम् । नो पैषे तच्चमपिराजासाहसिकंनर म् ॥ वाग्दुष्टात्तस्कराच्चैवदण्डे नैवचहिंसत : । साहसस्मनर : कर्त्ताविज्ञेय : पापकृत्तम : ॥ सा हसेवर्त्तमानन्तुयोमर्षयतिपार्थिव: । सविनाशंव्रजत्याशुविद्वेषंचाधि गच्छति ॥ नमित्रकारणाद्राजाविपु लाद्धाधनागमात् । समुत्सृजेत्सा हसिकान्सर्वभूतभयावहानिति ॥ सहसावलेनवर्त्तते । ओजस्स हो ऽम्भसावर्त्तत इतिठक् ॥

साहसिक्यम् । न॰ सहसाप्रवर्त्तने ॥ साहसिकस्यकर्म्म । ब्राह्मणादित्वा त्ष्यञ् ॥

साहसी । त्रि॰ साहसान्विते ॥

साहस: । पुं॰ सहस्रसङ्ख्याकगजा दिसैन्यवति ॥ सहस्रंबलमस्य । चण्चेत्यण् ॥ न॰ सहस्रद्वन्द्वे सहस्राणांसमूह : । भिक्षादिभ्यो ऽ ण् ॥ सहस्रमात्रे ॥ स्वार्थे ऽण् । यथा । हरिस्तेसाहस्रङ्कमलबलिमा धायपदयोर्यदेकोनेतस्मिन्निजमुद- हरन्नेत्रकमलमिति ॥ त्रि॰ सहस्र गुणाधिके ॥ यथा । विभियस्माच्च पयसो विशिष्टो दशभिर्गुणै : । उपां शु : स्याच्छतगुण : साहस्रोमान स:स्मृत इति ॥ सहस्रेणक्रीते ॥ शतमानविंशतिकसहस्रवसनाद-

ण् ॥ सहस्रसम्बन्धिनि ।

साहस्रकम् । न॰ तीर्थविशेषे ॥

साहस्रवम् । न॰ तीर्थविशेषे ॥

साहायकम् । न॰ साहाय्ये ॥ सहा यस्यकर्मभावोवा । सहायाद्वेतिवु ञ् । योपधाद्गुरूपोत्तमाद्वुञि- तिवा ॥

साहाय्यम् । न॰ सहायतायाम् ॥ सहायस्यकर्मभावोवा । ब्राह्मणा दित्वात्ष्यञ् ॥ साहाय्यंवरयामा सेतियथा ॥

साहित्यम् न॰ मेलने ॥ सहितस्य भाव : । ष्यञ् ॥ तल्लक्षणंयथा । परस्परसापेक्षाणांतुल्यरूपाणांयुग पदेकक्रियान्वयित्वंसाहित्यमिति श्राद्धविवेक : ॥ एकक्रियान्वयित्वं वा ॥ मनुष्यकृतरघुभट्टिमाघादि ग्रन्थे । काव्ये ॥

साह्नम् । न॰ साहाय्ये ॥ सह्नशब्द : सहायवाची । राक्षसानांवधेसाह्नं लङ्कायाश्चप्रधर्षणे तुतिरामायणव- चनात् ॥ सहितत्वे । मेलने ॥

साह्नय : । पुं॰ समाह्वये ॥

सिंह : । पुं॰ मृगेन्द्रे । पञ्चास्ये । कण्ठीरवे ॥ महासिंहे ॥ हिनस्ति । हिंसिहिंसायाम् । पचाद्यच् । पृषोदरादि : ॥ सिंह : प्र मुखानांपालनेमुहूर्त्तमाह । स्या दामोमोघवृत्तिमनल्पारुणानामग्निमे

स्वलघुभगर्कभेन्दैः । कर्म-पालनमुखं हिसपूर्वैः पुण्डरीकमुखैरितिनखानाम् ॥ इति ॥ पञ्चमराशौ ॥ तलग्नोत्पन्नस्य फलम् । सिंहलग्ने समुद्भूतोभोगीशत्रुविमर्दनः । स्वल्पोदरोल्पपुत्रश्च सोत्साहीगजविक्रमः ॥ उत्तरस्थः स्मृतः श्रेष्ठे । रक्तशोभाङ्कने । वर्द्धतांख्यकी । सिद्धति । षिचदहरणे । सिचैः संज्ञायांहनुमीकञ्च ।

सिंहकेलिः । पुं॰ पूर्वजिने । मञ्जुघोषे ।

सिंहकेशरः । पुं॰ बकुले ॥ सिंहसटायाम् ॥

सिंहतलः । पुं॰ संहतले । सव्यदक्षिणयोः पाण्योर्मिलितयोर्विस्तृताङ्गुल्योः । प्रतले ॥ सिंहस्येव तलमस्य ॥

सिंहतुण्डः । पुं॰ सीहुण्डे । स्नुह्याम् ॥

सिंहद्वारम् । न॰ प्रवेशद्वारे प्रवेशने । सिंहपौल॰ इ॰ भा॰ प्र॰ ॥ द्वाराग्रे स्तम्भोपरिस्थिते । तोरणे ॥

सिंहध्वनिः । पुं॰ सिंहशब्दे ॥

सिंहनादः । पुं॰ युद्धे सैन्यानांयोऽहङ्काररवः सःसिंहनादः । क्ष्वेडायाम् ॥ सिंहवन्नदनम् । नदः॰ । घञ् ॥ सिंहनादोभटानांहि सिंहवन्नदनं स्मृतम् ॥ गजयूथदर्शनात्॰ तद्भङ्गाय॰ यथासिंहस्य नादस्तथा॰ परबलभङ्गाय॰ स्वोत्साहवितरणयेचयोरावः सःसिंहनादः ॥ कलहंसाख्येछन्दोभेदेगुञ्जलौ ॥

सिंहनादिका । स्त्री॰ दुरालभायाम् ॥

सिंहपर्णी । स्त्री॰ वासके ॥

सिंहपुच्छः । पुं॰ वासके ॥

सिंहपुच्छिका । स्त्री॰ चित्रपर्णिकायाम् । चाकुलिया॰ इ॰ गौ॰ भा॰ ॥

सिंहपुच्छी । स्त्री॰ पृश्निपर्ण्याम् ॥ सिंहपुच्छाकारपुष्पत्वात् । उपमानात्पचाद्युपृच्छाच्चे तिङीष् ॥ माषपर्ण्याम् ॥ वासके ॥

सिंहपुष्पी । स्त्री॰ पृश्निपर्ण्याम् ॥

सिंहमुखी । स्त्री॰ वासके ॥

सिंहयाना । स्त्री॰ दुर्गायाम् ॥

सिंहरथा । स्त्री॰ दुर्गायाम् ॥

सिंहलः । पुं॰ जम्बुद्वीपस्योपद्वीपप्रभेदे । सिलोन॰ इ॰ गौ॰ दे॰ प्र॰ । देशविशेषे ॥ यथा । दक्षिणेऽवन्तिमाहेन्द्रमलयाद्याः मृकाः । चित्रकूटमहाराष्ट्रकाञ्चीसिंहलकोङ्कणा इति ॥ देशान्तरेपिच । मरुदेशात्पूर्वभागेकामाद्रेर्दक्षिणेशिवे । सिंहलाख्योमहादेशः सर्वदेशोत्तमोत्तमः इति ॥ न॰ पित्तले ॥ रङ्गे

त्वचे ॥ दालचीनी॰ इ॰ भा॰ ॥
सिंहलस्था । स्त्री॰ सैंहल्याम् ॥ त्रि॰ सिंहलदेशवासिनि ॥
सिंहलस्थान : । पुं॰ तालसदृशसदृश वृक्षविशेषे : प्रोत्फले ॥
सिंहलील : । पुं॰ रतिबन्धविशेषे ॥ यथा । लिङ्गोपरि स्थिता नारी भूमौ द्व्यापदद्वयम । हृदयेदत्तहस्ता च सिंहलील : प्रकीर्त्तित : ॥ लिङ्गोपरिस्थिता नारी बालोरःस्थपदद्वया । हृदयेदत्तहस्ता च सिंहलीलो प्यसावपि ।
सिंहवाहिनी । स्त्री॰ दुर्गायाम् ॥ यथा । सिंहमारुह्य कन्या त्वं निहतीमहिषं यथा । महिषघ्नीतती देवी कन्या वै सिंहवाहिनी ॥
सिंहविक्रान्त । पुं॰ अश्वे हये ॥ त्रि॰ सिंहतुल्यविक्रमवति ॥
सिंहविन्ना । स्त्री॰ माषपर्ण्याम् ॥
सिंहविलोकितम् । न॰ मात्रावृत्तान्तरे ॥ शृणु सिंहविलोकितमुत्तमवरं वरयमकमनोहरचरणधरम् । धरणीपतिमानसमधिकलितच्छलविदग्धतुच्छलगणललितम् ॥ यथा । दिवसाद्वसादिततिमिरवनं वनजावलिबोधनिसर्गधनम् । धनदेन्द्रकृतात्मपाश्रितमितमितभुवनतलंनमदिवसकृतम् ॥ सिंहावलोकिते ॥
सिंहसंहनन : । त्रि॰ वराह कृपीपीते ॥ सिंहसंहनन : सत्याद्योषिसर्वाङ्गसुन्दर: ॥ सिंहस्येवसंहननंदेहोऽस्य । रूढिशब्दोयम् ॥ न॰ सिंहस्यसम्बन्धे ॥
सिंहसेन : । पुं॰ जिनार्हत्पितरि ।
सिंहा । स्त्री॰ धमन्याम् ॥ नाड्याम् ॥
सिंहाणम् । न॰ मण्डूरे । लोहमले । सिंहमाणयति । अन॰ । कर्म्मण्यण् । पृषोदरादि : ।
सिंहाधिप : । पुं॰ सूर्य्ये ॥
सिंहानम् । न॰ मण्डूरे ॥ सिंहवदनमिति । अन॰ अच् ॥
सिंहासनम् । न॰ हेममयेराजासने । सिंहवदासने ॥ सिंहाकारमासनम् । सिंहयुतासनम्वा ॥ परासनस्थो ये राजा येराज्ञ चनिरासन : सपरैर्हन्यते सिंहैरिवमत्तगजाधिप : ॥ पुं॰ रतिबन्धभेदे । यथा । स्वजङ्घाद्वयवाहूचकृत्वा वै चापदद्वयम् । स्तनौधृत्वा रमेत्कामी बन्ध : सिंहासनोमत : ।
सिंहास्य : । पुं॰ वासके ॥ सिंहस्याऽस्यमिव । सिंहास्यसदृशपुष्पत्वात् ॥ त्रि॰ सिंहसमानमुखे ॥
सिंहिका । स्त्री॰ राहुमातरि ॥ कश्यपस्य गृहिणी तु सिंहिका राहुनामा तनयावजीजनत् । पूर्वमेव हरिनिकृत्तकन्धरो देवतैरमृतमेव पायित :

सिंहिकात्मज : । ) पुं॰ राहौवि
सिंहिकासूनु : । )
भुन्तुदे ॥ वास्तुपुरुषे ॥

सिंहनी । स्त्री॰ मात्रावृत्ताम्तरे ॥ यदिगाथातुर्यं पदं विंशतिमात्रं सगाथिनी भवति । फणिपतिपिङ्गलभणितं तद्विपरीतन्तु संहिनीवृत्तम् । यथा । पर्याप्ताजलधाराविरमति गच्छन्त्लोचनेजलधारा । जगमु : प्रसादमाशास्तदपिनमेभवतिजीवितस्याशा ॥

सिंही । स्त्री॰ कण्टकार्याम् । वार्त्ताकौ । वासके ॥ राहुमातरि ॥ हिनस्ति । हिंसो॰ पचाद्यच् । पृषोदरादि : । गौरादि : ॥ सुवर्णवर्णवराटके । मुद्गपर्ण्याम् ॥

सिंहीलता । स्त्री॰ वृहत्याम् ॥

सिंहोद्धता । स्त्री॰ शक्वरीछन्दोभेदे १४ । वसन्ततिलके ॥

सिकता । स्त्री॰ सिकतिले॰ देशे ॥ सिकतास्त्यस्त्र । देशेलुबिलचौचेति॰ सिकताशर्कराभ्याञ्चेतिविहितस्याणोलुप् ॥ कृति ॥

सिकता : । स्त्री॰ भूम्नि ॥ वालुकायाम् ॥ सिच्यते । षिच्क्षरणे । बाहुकाद्तच् । पृषोदरादि : ॥

सिकतामयम् । न॰ वालुकामयदेशे । सैकते ॥ सिकतानांविकार : । मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोरितिमयट् ॥

सिकतावान् । त्रि॰ वालुकाबहुलेदेशे सैकते ॥ अश्मप्रायमृदधिकेदेशे ॥ सिकताऽस्त्यत्र । मतुप् ॥

सिकतिल : । त्रि॰ सिकतावति ॥ सिकताऽस्त्यत्र । देशेलुबिलचौचेति॰ इलच् ॥

सिक्त : । त्रि॰ अभिषिक्ते ॥ कृतसेचने । सेकाश्रये ॥ सिचे : क्त : ॥ एकोमुनि : कुम्भकुशाग्रहस्तआम्रस्यमूलेसलिलंददान: । आम्रश्चसिक्त : पितरश्चतृप्ताएकाक्रियाद्व्यर्थकरीप्रसिद्धा ॥

सिक्थ : । पुं॰ भक्तपुलाके । यासे ॥ न॰ मधूच्छिष्टे । मेण॰ सिथा॰ इ॰ भा॰ प्र॰ गोम॰ इतिच । नौल्याम् ॥ सिच्यते । सिच्यतेवा । षिच॰ । पातृतुदिवचिरिचिसिचिभ्यस्थक् ॥

सिक्थकम् । न॰ सिक्थे ॥ स्वार्थेक : ॥

सिक्थवर्त्तिका । स्त्री॰ मधूच्छिष्टवर्त्तिकायाम् । सिक्थदीपे । सिक्थस्यवर्त्तिका ॥

सिङ्घाणम् । न॰ सिङ्घाणे ॥

सिक् । स्त्री॰ वस्त्रे ॥

सिचय : । पुं॰ वस्त्रे ॥ जीर्णवस्त्रे ॥

सिञ्चन् । त्रि॰ क्षरयति ॥ षिचे : शतृप्रत्यय : ॥

सिच्छिता । स्त्री॰ पिप्पल्याम् ॥

सित: । पुं॰ शुक्रग्रहे ॥ श्वेतवर्णे ॥ गौरवर्णे ॥ वाणे । शरे ॥ न॰ चन्दने ॥ रूप्ये ॥ मूलके ॥ त्रि॰ समाप्ते । अवसिते ॥ शुक्लवर्णविशिष्टे । धवले ॥ बद्धे । बंधा॰ क्त॰ भा॰ ॥ ज्ञाते ॥ सीयतेस्म । षिञ् बन्धने । क्तः । स्यतिस्म । षो॰ क्त: । द्यतिश्यतोरीत्त्वं वा ॥ सिनोतिर्वा । कर्मणि क्तः ॥ समाप्तौ ॥

सितकण्टा । )
सितकण्टारिका ) स्त्री॰ श्वेतकण्टकार्याम् ॥

सितकण्ठ: । पुं॰ दात्यूहपक्षिणि ॥

सितकर: । पुं॰ चन्द्रे । कर्पूरे ॥

सितकर्णी । स्त्री॰ वासके ॥

सितकुञ्जर: । पुं॰ इन्द्रे ॥ इन्द्रगजे ॥

सितगङ्गा । स्त्री॰ कामरूपप्रसिद्धनदीविशेषे । स्वर्धुन्याम् ॥ इ॰कालिकापुराणम् ॥

सितगुञ्जा । स्त्री॰ श्वेतगुञ्जायाम् । काकपीलौ ॥

सितचिल्ल: । पुं॰ वालुकागडे॰मत्स्ये ॥

सितच्छत्रम् । न॰ नृपच्छत्रे ॥

सितच्छत्रा । स्त्री॰ शतपुष्पायाम् ॥ सितं बद्धं शुभ्रं वा छत्रमस्याः ॥

सितच्छत्रित: । त्रि॰ श्वेतच्छत्रयुक्ते ॥

सितच्छद: । पुं॰ हंसे ॥ श्वेतच्छदविशिष्टे ॥ त्रि॰ सिताः शुभ्राः छदा यस्य ॥

सितच्छदा । स्त्री॰ श्वेतदूर्वायाम् ॥

सिततुरग: । पुं॰ अर्जुनाख्यपाण्डवे ॥

सितदर्भ: । पुं॰ श्वेतकुशे ॥

सितदीप्य: । पुं॰ श्वेतजीरके ॥

सितधातु: । पुं॰ कठिन्याम् ॥

सितपक्ष: । पुं॰ हंसे । शुक्लपक्षे ॥ त्रि॰ तद्वति ॥

सितपर्णी । स्त्री॰ अर्कपुष्पिकायाम् ॥

सितपाटलिका । स्त्री॰ काष्ठपाटलायाम् ॥

सितपुङ्खा । स्त्री॰ श्वेतशरपुङ्खायाम् ॥

सितपुष्प: । पुं॰ तगरवृक्षे ॥ श्वेतरोहिते ॥ काशे ॥ न॰ कैवर्त्तीमुस्तके ॥

सितपुष्पा । स्त्री॰ मल्लिकायाम् ॥

सितपुष्पी । स्त्री॰ श्वेतापराजितायाम् ॥ नागदन्त्याम् ॥

सितमरिचम् । न॰ शिग्रुबीजे ॥ शुभ्रमरिचे ॥

सितमाष: । पुं॰ राजमाषे ॥

सितरञ्जन: । पुं॰ पीतवर्णे ॥

सितरश्मि: । पुं॰ चन्द्रे ॥

सितवर्षाभू: । पुं॰ पुनर्नवायाम् ॥

सितशाली । पुं॰ कमुने ॥
सितशिंशपा । स्त्री॰ श्वेतशिंशपायाम् ॥
सितशिम्बिकः । पुं॰ गोधूमे ॥
सितशूरणः । पुं॰ वनजीरे ॥
सितसर्षपः । पुं॰ श्वेतसर्षपे । सिद्धार्थे ॥
सितसायका । स्त्री॰ श्वेतशरपुङ्खायाम् ॥
सितसारः । पुं॰ शालिञ्चशाके ॥
सितसारकः । पुं॰ तिन्दुके ॥ शालिञ्चे ॥
सितसिंही । स्त्री॰ श्वेतकण्टकार्याम् ॥
सितसिन्धुः । स्त्री॰ गङ्गायाम् ॥
सिता । स्त्री॰ शर्करायाम् ॥ सिनोति । षिञ् बन्धने । अर्शआद्यच्‌ । क्तः । टाप् । शुभ्रवर्णत्वाद्वा ॥ खण्डन्तु सिकतारूपं शुभ्रं तं शर्करा सिता । सितामधुरारुच्यावात पित्तास्रदाहहृत् ॥ मूर्च्छाछर्दिज्वरान्हन्ति सुशीताशुक्रकारिणी ॥ मल्लाम् ॥ तेजन्याम् ॥ जरायाम् ॥ गिरिजातापराजितायाम् ॥ वाकुच्याम् ॥ आयमाणायाम् ॥ मद्ये ॥ पिङ्गायाम् ॥ विदार्याम् ॥ सितकण्टकार्याम् ॥ श्वेतदूर्वायाम् ॥ चन्द्रिकायाम् ॥ कुटुम्बिन्याम् ॥ गङ्गायाम् ॥

सितांशुः । पुं॰ चन्द्रे ॥ कर्पूरे ॥
सितांशुतैलम् । न॰ कर्पूरतैले ॥
सिताखण्डः । पुं॰ मधुशर्करायां ॥
सिताङ्गः । पुं॰ वालुकाखण्डमत्स्ये ॥
सिताङ्गः । पुं॰ श्वेतरोहिते ॥
सिताजाजी । स्त्री॰ श्वेतजीरके ॥
सिताद्रिः । पुं॰ गुडे ॥ सितायाअद्रिः ॥
सितानन । पुं॰ गरुडे ॥
सितापाङ्गः । पुं॰ मयूरे ॥
सिताब्जम् । न॰ श्वेतकमले ॥
सिताभः । पुं॰ कर्पूरे ॥
सिताभ्रः । पुं॰ हिमवालुकायाम् । कर्पूरे ॥ सितं श्वैत्य॰ बन्धनं वा ॰ चन्द्रं वा॰ अभ्रति । अभ्रगतौ । कर्मण्यण् ॥ शुक्लत्वात् । सिताभमिववा ॥
सिताभ्रकम् । न॰ कर्पूरे ॥
सिताम्बरः । पुं॰ श्वेतवस्त्रपरिहितव्रतिनि ॥ त्रि॰ शुक्लाम्बरवति ॥
सिताम्भोजम् । न॰ शुक्लपद्मे । पुण्डरीके ॥ सितं शुक्लञ्च तदम्भोजञ्च ॥
सितार्जकः । पुं॰ श्वेततुलस्याम् । कुठेरके ॥
सितालता । स्त्री॰ श्वेतदूर्वायाम् ॥
सितार्कः । पुं॰ श्वेतमन्दारे ॥

सितालिकटभी । स्त्री॰ शुक्तिकायां शुचौ ॥

सितावर : । पुं॰ सुचीपत्त्रके । श्रीवारके । सिरिवाराद्दतिख्यातेशाके । मुनिषणे ॥

सितावरी । स्त्री॰ बाकुच्याम् ॥

सितासित : । पुं॰ बलभद्रे । हलायुधे ॥

सिताह्वय : । पुं॰ श्वेतशिग्रौ ॥ श्वेतरोहिते ॥

सितेक्षु : । पुं॰ श्वेतेक्षौ ॥

सितेतर : । पुं॰ कृष्णशालौ ॥ कुलत्थे ॥ कृष्णे । त्रि॰ कृष्णवर्णवति ॥

सितेतरगति : । पुं॰ वह्नौ ॥

सितोद : । पुं॰ सरोविशेषे ॥ विपुलाख्यस्याद्रेर्मूर्ध्नि वैभ्राजाख्यं वनं तत्र सितोदं नाम सर : । यदर्कक्रान्तिभिरत्रैर्मण्डितं सुरैरासेव्यते । तदुक्तम् । वैभ्राजं वै पुलिने सितोदश्चापि सर : । देवैर्निषेव्यते छन्न : कमलैरंशुमत्प्रभैरिति ॥ सितमुदकं यस्य । उत्तरपदस्य चेत्युद कस्योद : ॥

सितोदक : । पुं॰ सितोदे ॥ स्वार्थे क : ॥

सितोदर : । पुं॰ कुबेरे ॥

सितोपल : । पुं॰ स्फटिके ॥ शिलाधातौ ॥ सिताश्मनि । शि-

लीं॰ खीला॰ इ॰ भाषाप्रसिद्धा ॥

सितोपला । स्त्री॰ शर्करायाम् ॥ शर्कराविकारभेदे । मिश्रीतिख्याते ॥ सितोपलासरा लघ्वी वातपित्तहरी हिमा । यथायथास्य नैर्मल्यं मधुरत्वं तथातथा ॥ स्नेहलाघवशैत्यानि सरत्वञ्च तथातथा ॥

सिद्ध : । पुं॰ व्यासादौ ॥ देवयोनिविशेषे । अणिमादिगुणोपेते विश्वावसुप्रभृतौ ॥ विष्कम्भादियोगान्तर्गतयोगविशेषे ॥ तज्जातफलं यथा । जितेन्द्रिय : सर्वकलानिधानो गौरो विशुद्धो मधुरो विनीत : । सत्योपपन्न : कृतभूरिभोगो यस्य प्रसूतौ किल सिद्धयोग : ॥ इति ॥ गुडे षिधौतु इति सिद्ध : षिधु हिंसासंराद्ध्यो : । गत्यर्थाकर्मकेति कर्तरि क्त : । सिद्धिरस्यास्तीति वा । अर्शआद्यच् ॥ कृष्णधत्तूरे ॥ व्यवहारे ॥ क्ली॰ । शब्द : शृणोमीत्यादिव्यवहारेषु प्रसिद्धे । न॰ सैन्धवलवणे ॥ त्रि॰ योगिनि ॥ जन्मनैव विनाप्रयत्नं धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्ते ॥ पूर्णमनोरथे ॥ अधिगतपरमार्थे । पुत्रभृत्यादिभि : सहाये : सम्पन्ने ॥ प्रसिद्धे ॥ नित्ये । यथा सिद्धा द्यौ : सौद्धा पृथिवी॰ सिद्धमाकाशमिति

॥ कार्य्येष्वपि वर्त्तते । तद्यथा सिद्धश्चौदन: सिद्ध: सूप: सिद्धा यवागूरिति ॥ मुक्ते ॥ निष्पन्ने । पक्वे ॥ सिध्यति स्म । षिधु संराद्धौ । क्त: । सिद्धे साधनाप्रयोग: ॥ सर्व्वभूतादौ विशुद्धे चिनायकेपरमेश्वरे ॥ उत्पत्त्या लब्धात्मकं हि घटादि सिद्धमित्युच्यते० परमात्मा तु० सर्व्वदा लब्धसत्तात्मक: सर्व्वैवकप्रमाणाभावादिति नित्यनिष्पन्नरूपत्वान्नित्य सिद्धवद्युच्यते ॥ सिद्धिर्मोक्षो ज्ञानं वा तदुभयमीश्वरस्य स्वत: सिद्धं ह्यनन्याधीनसिद्धत्वात् सिद्धो वा ॥ सिद्धिविशिष्टे ॥

सिद्धक: । पुं० शालवृक्षे ॥ सिन्धुवारे ॥

सिद्धकामेश्वरी । स्त्री० कामाख्याया: पञ्चमूर्त्त्यन्तर्गतप्रथममूर्त्तौ ॥

सिद्धकेरल: । पुं० केरलदेशान्तर्गतदेशविशेषे

सिद्धगङ्गा । स्त्री० मन्दाकिन्याम् ॥

सिद्धजलम् । न० काञ्जिके । पक्वतोये ।

सिद्धदेव: । पुं० शिवे ।

सिद्धधातु: । पुं० पारदे ॥

सिद्धपीठ: । पुं० सिद्धस्थाने ॥ यथा । जातो लक्षबलिर्यत्र होमो वा कोटिसङ्ख्यक: । महाविद्याजप: कोटि: सिद्धपीठ: प्रकीर्त्तितइति ॥

सिद्धपुरम् । न० भूगोलस्थाधोदेशविशेषे ॥ तच्चोत्तरकुरुवर्षस्याधोदेशेऽस्ति ॥ यथा । लङ्काकुमध्ये यमकोटिरस्या: प्राक्पश्चिमे रोमकपत्तनञ्च । अधस्तत: सिद्धपुरं सुमेरु: सौम्येऽथयाम्ये बडवानलश्च ॥ कुवृत्तपादान्तरितानि तानि स्थानानि षड्गोलविदो वदन्ति ॥

सिद्धपुरी । स्त्री० सिद्धपुरे ॥

सिद्धपुष्प: । पुं० करवीरवृक्षे ॥

सिद्धप्रयोजन: । पुं० गौरसर्षपे ॥ त्रि० लब्धकार्य्ये ॥ सिद्धं प्रयोजनं येन० यस्य वा ॥

सिद्धमन्त्र: । पुं० सिद्धिप्राप्तमन्त्रे

सिद्धमोदक: । पुं० तवराजाख्यखण्डे ॥

सिद्धयोगिनी । स्त्री० योगिनीविशेषे ॥

सिद्धरस: । पुं० पारदे । रसे ॥ त्रि० व्याडिप्रभृतिषु ॥ सिद्धस्यामीरसस्य ॥ सिद्धो रसो येषाम् ॥

सिद्धविद्या । स्त्री० दुर्गायाम् ॥ महाविद्यायां ॥

सिद्धसङ्घ: । पुं० कपिलादिसिद्धानां समूहे ॥

सिद्धसलिलम् । न० काञ्जिके ॥

सिद्धसाधन: । पुं० गौरसर्षपे ॥ न० सिद्धस्यवस्तुन: साधने । सा

ध्यवस्त्वानिश्चये सत्त्वेप्यनुमाने ॥

सिद्धसिन्धुः । स्त्री॰ धर्म्मद्रव्याम् । गङ्गायाम् । आकाशगङ्गायाम् ॥ सिद्धानां सिन्धुः ॥

सिद्धसेनः । पुं॰ कार्त्तिकेये ॥

सिद्धसेवितः । पुं॰ भैरवे ॥ त्रि॰ कपिलादिसिद्धोपासिते ॥

सिद्धा । स्त्री॰ ऋद्ध्याख्यौषधौ ॥ सिद्धिरस्त्यस्याम् । अर्श आद्यच् टाप् ॥ योगिनीविशेषे ॥

सिद्धान्तः । पुं॰ वक्तृतात्पर्यविषयावधारणे ॥ पूर्वपक्षं निरस्य सिद्धपक्षस्थापने । वादिप्रतिवादिभ्यां निर्णीतेऽर्थे ॥ सिद्धान्तं लक्षयति गौतमो यथा । तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्त इति ॥ अस्यार्थः । तन्त्रं शास्त्रं तदेवाधिकरणं ज्ञापकतया यस्य॰ तादृशो योऽभ्युपगमः॰ तस्य समीचीनतयाऽसंशयरूपतया स्थितिः॰ तथा च शास्त्रितार्थनिश्चयः सिद्धान्तः । अत्र चाभ्युपगम्यमानोऽर्थः सिद्धान्त इति भाष्यम् । अभ्युपगमः सिद्धान्त इति वार्त्तिकटीका । न चात्र विरोधः शङ्कनीयः । आचार्यैः परिहृतत्वात् । तथा च विसूत्रीनिबन्धः । अर्थाभ्युपगमयोर्गुणप्रधानभावस्याविवक्षातन्त्रत्वात्॰ अर्थाभ्युपगमोऽभ्युपगम्यमानो वार्थः सिद्धान्तः॰ तेन सूत्रभाष्यवार्त्तिकटीकासु न विरोधः । अत्र च भाष्यानुसारात् सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमः सिद्धान्तान्यतमः सिद्धान्त इति सूत्रार्थ इति तु न युक्तम् अग्रिमसूत्रानुत्थानापत्तेः । तच्च सिद्धान्तत्वं न द्वयमनुगम्यतं चाधिकरणाभ्युपगमान्यतमसिद्धान्त इति कश्चित् ॥ २६ ॥ सिद्धान्तं विभजते । सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थितीनामर्थान्तरभावात् ॥ २७ ॥ स चतुर्विध इति शेषः । सर्वतन्त्रादिसंस्थितीनामर्थान्तरभावात्॰ भेदादित्यर्थः ॥ २७ ॥ राद्धान्ते ॥ सिद्धोऽन्तो निश्चयो यस्मिन् ॥ नः शिवज्योतिर्ग्रन्थेषु । ब्रह्मसूर्यसोमबृहस्पतिगर्गनारदपराशरपुलस्त्यवशिष्ठसिद्धान्तेषु ॥

सिद्धान्ताचारः । पुं॰ वामाचारादुत्तमाचारविशेषे ॥ यथा । आत्मानन्दवतां मत्वा यजेद्देवीं स्वमानसे । सदा शुद्धः सदा शान्तः सिद्धान्ताचार उच्यते॰ इत्याचारभेदतन्त्रम् ॥

सिद्धान्ती । पुं॰ मीमांसके ॥ सिद्धान्तो विद्यतेऽस्य ॥ इनिः ॥

सिद्धापगा । स्त्री॰ स्वर्णद्याम् । गङ्गायाम् ॥

सिद्धायिका । स्त्री॰ जिनशासनदेव

तादिविशेषे ॥

सिद्धार्थः । पुं॰ विष्णौ ॥ सिद्धो निष्पन्नः काम्यमानोऽर्थोऽस्य । मानकामत्वादिति ॥ स्कन्दे । सितसर्षपे ॥ शाक्यसिंहे । शौद्धोदनौ ॥ महार्हत्पितरि ॥ जिनमतप्रसिद्धटीकार्थे ॥ सिद्धार्थोऽस्त्यादस्यथा ॥ वत्सरविशेषे ॥ तत्फलं यथा । तोयपूर्णाः स्मृता मेघा बहुसस्या च मेदिनी । निष्ठुरा पार्थिवा देवि सिद्धार्थे वत्सरानने ॥ ५३ ॥ त्रि॰ प्रसिद्धार्थे ॥

सिद्धार्था । स्त्री॰ सुमत्यर्हन्मातरि ॥

सिद्धासनम् । न॰ ब्रह्मणि ॥ सिद्धं यत्सर्वभूतादि विश्वाधिष्ठानमव्ययम् । यस्मिन्सिद्धाः समाविष्टास्तद्वै सिद्धासनं विदुः ॥ सिद्धस्य तदासनञ्च । सिद्धानामासनं वा । कर्मधारयतत्पुरुषाभ्याम् । ब्रह्मवैवर्त्तः ॥ योगिनामासनविशेषे ॥ यथा । योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेन्मेढ्रे पादमथैकमेव हृदये कृत्वा समं विग्रहम् । स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्यन् भ्रुवोरन्तरे तिष्ठेदेतत्तौ योगिसुखदं सिद्धासनं प्रोच्यते ॥ इति ॥ योनिस्थानकमिति । एकं पादमूलं लिङ्गमूले॰ द्वितीयं पादमूलं वृषणाधः कृत्यर्थः ॥

सिद्धिः । स्त्री॰ निष्पत्तौ ॥ पादुकायाम् ॥ अन्तर्धाने ॥ वृद्धौ ॥ ऋद्धौ नामौषधौ ॥ दुर्गायाम् ॥ सम्पत्तौ ॥ योगे ॥ साङ्ख्यानामष्टविधसिद्धौ । यथा । ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः । दानञ्च सिद्धयोऽष्टौ । विघ्नन्यमानश्च दुःखस्त्रित्वात्तद्विघातास्त्रय इति । इमा मुख्यास्तिस्रः सिद्धयः । तदुपायतया चेतरा गौण्यः पञ्च सिद्धयः । ता अपि हेतुहेतुमत्तया व्यवस्थिताः । तत्राद्याध्ययनलक्षणा सिद्धिर्हेतुरेव । मुख्यास्तु हेतुमत्य एव । मध्यमास्तु हेतुहेतुमत्यः ॥ पुम्प्रकृत्यादिविषया बुद्धिर्या सिद्धिरत्र सा । पुंस्यात्मनि॰ प्रकृतावव्यक्ते॰ आदिग्रहणाद् व्यक्ते च या बुद्धिर्विज्ञानं सा सिद्धिरित्युच्यते ॥ यावा योगान्तरे ॥ यथा वर्गोत्तमगते लग्ने शुभे वाथ बलान्विते । सिद्धसञ्ज्ञो महायोगो यायिनां सिद्धिदायकः । इति ॥ राज्ञां शक्तित्रयसाध्यासु पुरुषार्थलाभात्मिकासु॰ प्रभुसिद्धिमन्त्रसिद्ध्युत्साहसिद्धिषु ॥ सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥ तथाच । कर्मणामारम्भोपायः । पुरुषद्रव्यसम्पत् । देशकालविभागः । विनिपातप्र

तीकार : । कार्यसिद्धिरस्येति नीतिशास्त्रविद् : ॥ मोक्षे । सत्वशुद्धिद्वारा ज्ञानोत्पत्तौ ॥ ब्रह्म भावलक्षणायाम् । पुरुषार्थप्राप्ति योग्यतारूपायामन्त:करणशुद्धौ । ज्ञाननिष्ठालक्षणायाम् ॥ सिद्ध्यति । षिधु संराद्धौ । क्तिच् । यद्वा । करणे क्तिन् ॥

सिद्धिद : । पुं॰ प्रत्यगभिन्नब्रह्मा परोक्षज्ञानद्वारा स्वस्वरूपावस्थानलक्षणमुक्तिप्रदे योगुरौ ॥ परमेश्वरे ॥ सिद्धिम् फलञ्कर्तृभ्य: स्वाधिकारानुरूपतो ददाति । डुदाञ् । आतद्दातिक : ॥ भैरवे ॥ वि॰ सिद्धिदातरि ॥

सिद्धियोग : । पुं॰ शुभयोगविशेषे ॥ यथा । शुक्रेनन्दा बुधेभद्रा॰ शनौरिक्ता॰ कुजेजया । गुरौपूर्णाचसंयुक्ता॰ सिद्धियोग:प्रकीर्त्तित : ॥

सिद्धियोगिनी । स्त्री॰ योगिनीविशेषे । वह्निपुराणोक्तामुद्रालक्षणप्रस्तावगत कन्यासु

सिद्धिस्थानम् न॰ पुण्यस्थानविशेषे ॥

सिद्धेश : । पुं॰ कपिलमुनौ ॥ सदाशिवे ॥ सिद्धानामीश : ॥

सिद्धेश्वर : । पुं॰ शिवे ॥

सिद्धेश्वरी । स्त्री॰ देवीविशेषे

सिद्धौघ : । पुं॰ गुरुक्रमविशेषे ॥

सिध्मम् । न॰ किलासरोगे । सिद्धवा॰ इ॰प्र॰ ॥ सिध्यति । षिधु संराद्धौ । बाहुलकान्मक् ॥

सिध्मा । पुं॰ न॰ किलासरोगे ॥ सिध्मा किलासं त्वक्पुष्पं सिध्ममित्यिष्टमवन्द्र: । किलासं सिध्मइत्यमर. ॥

सिध्मल : । वि॰ किलासिनि ॥ सिध्ममस्यास्ति । सिध्मादिभ्यश्चेति लच् ॥

सिध्मला । स्त्री॰ मत्स्यविकृतौ । मत्स्यचूर्णे ॥

सिध्मवान् । वि॰ सिध्मलि ॥ सिध्ममस्त्यस्य । मतुप् ॥

सिध्य : । पुं॰ पुष्यनक्षत्रे ॥ सिध्यन्त्यस्मिन्कार्याणि । षिधु॰ । पुष्यसिद्ध्यौनक्षत्र इतिक्यपिनिपातित : ॥

सिध्र : पुं॰ वृक्षे ॥ साधौ ॥ सिध्यति । षिधु॰ । स्फायितञ्चीतिरक् ॥

सिध्रका । स्त्री॰ सौधइतिभाषाप्रसिद्धवृक्षे । सेधति॰सिध्यतिवा । षिधु॰ । बहुलमन्यत्रापीति॰स्फायितञ्चीतिवारक् । तत: स्वार्थेकन् । क्षिपकादित्वादित्वाभाव : ॥

सिध्रकारण्यम् । न॰ देवोद्याने

सिध्रकावणम् । न॰ सिध्रकारण्ये ॥ सिध्रकावनम् । वनम्पुरगामिश्रकेत्युत्तरपदस्थवनस्यणत्वम् ॥

सिन : । पुं॰ ग्रासे ॥ पिण्डीक्रियमाणोग्रासोयदाद्ध्यादिव्यञ्जनश्यात्हस्तेनैनुकूलितभवतितदाकर्मण: कर्तृत्वम् । तथाचसिनोतिर्ग्रासक

मंकरणोतिनिष्ठातत्त्वम् : ॥ कायो
ः सिनोति । षिञ् । इण् षिञि
तिनक् ॥ त्रि॰ शुक्लगुणविशिष्टे ।
सिनी । स्त्री॰ शुक्लगुणवत्याम् । श्वे
तासितासिनीश्येनीतिव्याडिः ॥
सिनीवाली । स्त्री॰ दृष्टेन्दुकलामा
याम् ॥ चतुर्दशीयोगदृष्टचन्द्रा
सती॰ अमा॰ सिनी॰ वालीपद
वाच्य भवति । एनश्चिप्यनासह्य
स्तैवालक्ष्मीः । तद्योगात्सि
नीचन्द्रकला । श्रोणादित्वादिनिः
। सिनीवलति । वल॰ । कर्म्म
ण्यण् । ङीप् ॥ दुर्गायाम् । इ॰
मे॰ नी॰ ॥
सिन्दुकः पुं॰ । सिन्दुवारे ॥ स्यन्द
ते । स्यन्दूप्रस्रवणे । स्यन्देः सम्प्र
सारणञ्चेत्युः । बाहुलकाद्वधो
न । स्वार्थेसंज्ञायांवाकन् ॥ श्वेत
नीलपुष्पभेदात्सिन्धुकोद्विविधोम
तः ।
सिन्दुवारः । पुं॰ निर्गुण्ड्याम् ।
सिन्दुके । म्योंडी॰ सम्भालू॰ व
ङ्गा॰ इ॰ भा॰ प्र॰ ॥ निसिन्दा॰
इनकर॰ इ॰ गौ॰ दे॰ भा॰ ॥ सि
न्दुंवणोति॰ वारयतिवा । वृञ् व
रणेवृञ् आदरणेवा । कर्म्मण्यण् ।
सिन्दूरः । पुं॰ वृक्षविशेषे ॥ न॰ र
क्तवर्णचूर्णविशेषे । नागसम्भवे ।
सीमन्तके ॥ तद्धारणात्स्त्र्यायु
षोवृद्धिर्भवतियथोक्तं काशीखण्डे
। हरिद्रांकुङ्कुमञ्चैवसिन्दूरंकज्ज
लंतथा । कार्पासकञ्चताम्बूलं मा
ङ्गल्याभरणं शुभम् ॥ केशसंस्कार
कबरीकरकर्णविभूषणम् । भर्त्तु
रायुष्यमिच्छन्तीदूषयेन्नपतिव्रतेति
॥ अस्यपर्यायाद्ययथा । सिन्दूर
रक्तरेणुस्तनागगर्भश्चसीसजम् । सी
सोपधातुः सिन्दूरंगुणास्तत्सीस
वन्मतम् ॥ संयोगजप्रभावेणतस्या
प्यन्येगुणाः स्मृताः । सिन्दूरमु
ष्णंवीसर्पकुष्ठकण्डूविषापहम् ॥
भग्नसंधानजननंव्रणशोधनरोपण
म् ॥ अस्यशोधनंयथ । दुग्धाम्ल
योगतस्तस्यविशुद्धिर्गदितावुधैरि
ति ॥ स्यन्दते । स्यन्दू॰ । स्यन्देः स
म्प्रसारणञ्चेत्यूरन् ॥
सिन्दूरकारणम् । न॰ सीसके ॥
सिन्दूरतिलकः । पुं॰ मतङ्गजे । ह
स्तिनि ॥
सिन्दूरतिलका । स्त्री॰ सधवायांना-
र्याम् ॥
सिन्दूरपुष्पी । स्त्री॰ सिन्दूरीतिख्याते
पुष्पवृक्षविशेषे । तृणपुष्प्याम् । क
रच्छदायाम् ॥ अस्यागुणाः । कटु
त्वम्॰ तिक्तत्वम्॰ कषायत्वम्॰
श्लेष्मवातशिरोर्त्तिभूतनाशित्वम्॰
चण्डीप्रियत्वञ्चेति ॥ सिन्दूरवृक्ष
पुष्पाण्यस्याः । पाककर्णेतिङीष् ।

सिन्दूररस: । पुं॰ रससिन्दूराभिधौषधे ।

सिन्दूरित: । त्रि॰ सिन्दूरवत्कृते ॥ सिन्दूरवच्छब्दात् तत्करोतीतिण्यन्तात्कर्म्मणि क्त: । णाविष्ठवद्भावात्॰ विन्मतोर्लुक् ॥

सिन्दूरी । स्त्री॰ रोचन्याम् ॥ रक्तचेलिकायाम् ॥ धातक्याम् ॥ सिन्दूरी विषपित्तास्रतृष्णावान्तिहरी हिमा ॥

सिन्धु: । पुं॰ अब्धौ । समुद्रे ॥ स्यन्दन्ते॰ आपोऽत्र । स्यन्दू॰ । स्यन्देः सम्प्रसारणं धश्चेत्यु: ॥ वमथौ ॥ रामेणभरतायार्पितेदेशविशेषे ॥ काश्मीरदेशप्रसिद्धे नदविशेषे ॥ गजमदे ॥ सिन्धुवारवृक्षे ॥ रोगविशेषे ॥ श्वेतटङ्कणे ॥

सिन्धु: । स्त्री॰ नद्यां । सरिति ॥ नदीविशेषे ॥ तज्जलगुणायथा । शतद्रोर्विपाशायुज: सिन्धुभवा: सुशीतं लघुस्वादुसर्वशमथघ्नम् । जलं निर्मलं दीपनं पाचनञ्चप्रदत्ते बलं बुद्धिमेधायुतञ्च ॥

सिन्धुक: । पुं॰ सिन्दुके । निर्गुण्डाम् ॥ सिन्धुशब्दात्स्वार्थे संज्ञायांवाकन् । गुणायथा । सिन्धुक: स्मृतिदस्तिक्त: कषाय: कटुकोलघु: । केश्योनेत्रहितोहन्तिशूलशोथाममारुतान् ॥ कृमिकुष्ठारु

चिश्लेष्मश्वासान्निलापितद्विधा ॥ सिन्धुवारजलं जन्तुवातघ्नं श्महरं लघु ॥ त्रि॰ सिन्धुजाते ॥ सिन्धुपकाराभ्यांकन् ॥

सिन्धुकफ: । पुं॰ समुद्रफेने ॥

सिन्धुप्रभव: । पुं॰ तीर्थविशेषे ॥

सिन्धुरम् । न॰ श्वेतटङ्कणे ॥

सिन्धुखेल: । पुं॰ सिन्धुदेशे ॥

सिन्धुजम् । न॰ सैन्धवलवणे ॥ सिन्धुजातम् ॥ सप्तम्यांजनेर्ड: ॥ त्रि॰ समुद्रजाते ॥

सिन्धुजन्मा । पुं॰ चन्द्रे ॥ न॰ सैन्धवलवणे ॥

सिंधुजा । स्त्री॰ लक्ष्म्याम् ॥

सिंधुडा । स्त्री॰ मालवरागभार्यायाम् ॥

सिंधुनन्दन: । चन्द्रे ॥

सिंधुपुत्र: । पुं॰ चन्द्रे ॥ मर्कटेन्दौ ।

सिंधुपुष्प: । पुं॰ शङ्खे ॥

सिंधुमन्थजम् । न॰ सैन्धवलवणे ॥

सिंधुर: । पुं॰ हस्तिनि ॥

सिंधुरद्वेषी । पुं॰ सिंहे ॥

सिंधुरवदन: । पुं॰ श्रीगणेशे ॥

सिंधुराज: । पुं॰ समुद्रे ॥

सिंधुलवणम् । न॰ सैंधवे ॥

सिंधुवार: । पुं॰ उत्तमाश्वे ॥ सिंधुवारे । निर्गुण्डाम् ॥ सिंधुवारोविषघ्न्रश्चत्रणकुष्ठक्षयापह: ॥ सिंधुंद्रवणोति॰ वारयतिवा । वृञ्

पाण्ड्यादृमेवा । कर्मस्थाण् ॥

सिंधुवारक : । पुं॰ सिंधुवारे ॥

सिन्धुवारित : । पुं॰ सिन्धुवारे ॥ त्रि॰ समुद्रेणवारिते ॥

सिन्धुवेषण : । पुं॰ गम्भार्याम् ॥

सिन्धुसङ्गम: । पुं॰ संभेदे । सिन्ध्वो: सङ्गमोमेल : ॥

सिन्धूत्तमम् । न॰ तीर्थभेदे ॥

सिन्धूद्भवम् । न॰ सैन्धवलवणे ॥ सिन्धुषुउद्भवोऽस्य ॥

सिन्धूपलम् । न॰ सैन्धवलवणे ॥

सिप्र : । पुं॰ चन्द्रे । हिमांशौ ॥ निदाघसलिले । स्वेदे ॥ न॰ सरोविशेषे ॥ यथोक्तङ्कालिकापुराणे । ततोहिमवत : प्रस्थे प्रतीच्यन्त : पुरश्च । सिप्रंनामसर : पूर्णंदद्दशुर्द्विजादयइति ॥

सिप्रा । स्त्री॰ नद्यन्तरे ॥ सिप्राख्यात्सरसोयस्मान्निर्गतासामहानदी । अत : सिप्रेतितन्नामपुरैवब्रह्मणाकृतमितिकालिकापुराणम् ॥ साचोज्जयिनीदेशेवर्त्तते । तस्याश्चोत्पत्ति : कालिकापुराणे २३ अध्यायेद्रष्टव्या ॥

सिम : । त्रि॰ समस्मिन् । सर्वशब्दार्थे ॥ सिनोति । षिञ्॰ । अविसिञ्चिभ्य : किदितिमन् ॥

सिम्वा । स्त्री॰ शम्याम् । शिम्वायाम् । वीजगुप्तायाम् । सिम॰ इ॰ भा॰ प्र॰ ॥ फली॰ इ॰ प्र॰ च ॥ समति । षमवैक्लव्ये । उल्वादयश्चेतिसाधु: ॥

सिम्वि : । स्त्री॰ शिम्वायाम् । सिम्वायाम् । नखनामगन्धद्रव्ये ॥

सिम्वी । स्त्री॰ शिम्व्याम् ॥

सिर : । पुं॰ पिप्पलीमूले ॥

सिरा । स्त्री॰ नाड्याम् । अम्बुवाहिन्यांनाड्याम् । सोर॰ इ॰ भा॰ प्र॰ सिनोति । षिञ्॰ । बहुलमन्यत्रापीतिरक् ॥

सिराल : । पुं॰ सिरासन्तते ॥

सिरिण्टिका । स्त्री॰ चक्रकुटुम्बिन्याक्षुपचुपे । दुराधर्षायाम् ॥

सिलक : । पुं॰ मलावर्त्तापरपर्य्य॰ ऋषिविशेषे ॥

सिल्लकी । स्त्री॰ शल्लकीवृक्षे ॥

सिषाधयिषा । स्त्री॰ साधनेच्छायाम् ॥ यथा । सिषाधयिषयाशून्यासिद्धिर्यत्रनविद्यते । सपक्षस्तत्रवृत्तित्वज्ञानादनुमितिर्भवेत् ॥

सिषिक्षा । स्त्री॰ सेक्तुमिच्छायाम् ॥

सिसृक्षन् । त्रि॰ स्रष्टुमिच्छति ॥

सिहुण्ड : । पुं॰ स्नुहीवृक्षे ॥ सौसिहुण्डकी । कुण्डिवरणी । पचाद्यच् ॥ सिंहतुण्डस्यायमपभ्रंशइतिस्वामी॰ पृषोदरादि: ॥ अस्यगुणायथा । सिहुण्डोरेचनस्तीक्ष्णोदीपन : कटुकोगुरु : । शूलामाष्ठी

लिङ्ग:ध्मानकफगुल्मोदरानिलान् उन्मादमेहकुष्ठार्श: शोथमेदोश्म पाण्डुता: । व्रणशोथज्वरप्लीहश्लिप टूर्ध्वोर्ध्वं हरेत् ॥ उष्णवीर्येसन्दीपो रं सुगन्धसत्कटुकंलघु । गुल्मना ड्यु च्छिनाश्मापित्तर्थ्ये वोदररोगिणा म् । हितमेतद्धिरेकार्थे येचान्ये दो षरोगिण: ॥

सिंहुण्डदलम् । न० स्नुहीपत्रे ॥ तच्छाकगुणा यथा । सिंहुण्डस्यद लन्तीक्ष्णं दीपनं रोचनं हरेत् । ध्मा ध्मानाष्ठीलिकागुल्मशूलशोथोदरा णिच ॥

सिह्ल: । पुं० तुरुष्के । पिण्डके । यावने । लोबान० इ० भा० प्र० ॥ सिह्यति । सिह्यप्रीतौ । अ न्तर्भावितण्यर्थ: । बाहुलकात्कक् । पृषोदरादि० ॥

सिह्लक: । पुं० सिह्ले । नागौरी गूंद० इ० भा० लोबान० इ० य वनभाषाप्रसिद्धे ॥ सिह्लक: कटु क: स्वादुस्निग्धोष्ण: शुक्रकान्ति कृत् । वृष्य: कण्डूस्वेदकुष्ठज्वर दाहग्रहापह: ॥

सिह्लकी । स्त्री० सल्लक्याम् ॥ सि ह्ले ।

सिह्लभूमिका । स्त्री० सल्लक्याम् ॥

सिह्लसार: । पुं० तुरुष्के । धूम्र वर्णे । पीतसरे ॥

सीकर: । पुं० शीकरे ॥ धनपाला दिमतेदन्त्यादि: ।

सीता । स्त्री० लाङ्गलपद्धतौ हल रेखायाम् ॥ जनकनन्दिन्याम् । मैथिल्याम् । वैदेह्याम् ॥ सीता लाङ्गलपद्धति: । तदुत्पन्नत्वात्सी तेतिनिर्दिश्यते ॥ यथा । अथमे कृषत: क्षेत्रं लाङ्गलादुत्थिता तत: । क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुतेति रामायणे ६६ सर्ग: ॥ स्वर्गगङ्गायाम् ॥ यथा । पूर्वेणाशै लात्सीतातु शैलं यात्यन्तरिक्षगा । ततश्च पूर्ववर्षं भद्राश्वेन निसार्णं वम् ॥ सातु भद्राश्ववर्षं गङ्गा । य थोक्तं श्रीभागवते ; सीतातु ब्रह्मस दनात्केशवाचलादिगिरिशिखरेभ्यो ऽधोऽध: प्रस्रवन्तीगन्धमादनमूर्ध्न सुपतित्वान्तरेण भद्राश्ववर्षं प्राच्यां दिशिक्षारसमुद्रमभिप्रविशतीति ॥ श्रियि ॥ दुर्गायाम् ॥ सत्याधि देव तायाम् ॥ मदिरायाम् । गङ्गसीत सि । काञ्चनमालायाम् ॥ सीयते । षिञ् । क्त: । पृषोदरादि: ॥

सीताद्रव्यम् । न० काष्ठकुद्दालादौ ॥

सीतापति: ।)
सीताया:पति: ।) पुं० रामचन्द्रे दा शरथौ ॥

सीत्कार: । पुं० मनुष्याणांसुख सुरा गजशब्दे ॥ यथा । शब्दोगणानु

रागीत्य : प्रपाद् : सौत्कतं न्तृणा मितिहेमचन्द्रः । दन्तनिष्पीडनायां । सौरितिशब्दे ॥

सौत्कृतम् । न० सीत्कारेसुरतध्वनौ ॥

सीत्यम् । न० धान्ये । त्रि० हल्ये । हलेनकृष्टेचेत्र ॥ सीतयासमितं सङ्गतं निम्नोन्नतादिरहितङ्कृतं समीकृतमितियावत् । नौवयोधर्मेतियत् ॥

सीदमानः । त्रि० अवसीदति ॥

सीद्यम् । न० आलस्ये ॥

सीधुः । पुं० शीधुशब्दार्थे ॥

सीधुगन्धः । पुं० वकुले ॥

सीधुपुष्पः । पुं० कदम्बे ॥ वकुले ॥

सीधुपुष्पी स्त्री० धातक्याम् ॥

सीधुरसः । पुं० आम्रवृक्षे ॥

सीधुसञ्ज्ञः । पुं० वकुलद्रुमे ॥

सीपः । पुं० तर्पणाद्यर्थंताम्रादिनिर्मितेजलपात्रे । अर्घा० कोषा० इ० भा० प्र० ॥

सीम् । अ० सर्वतोभवे ॥

सीमा । स्त्री० आघटे । मर्यादायाम् । सीमायाम् । ग्रामादीनामवधारितान्तभागे । सीम० इ० भा० प्र० ॥ स्थितौ । क्षेत्रे । अण्डकोषे । सीयते । षिञ् । नामन्सीमन्नित्यादिनानिपातितः । मनङ्इतिङीप् । सीमानौ० सीमानः ॥

इत्यादि ॥

सीमन्तः । पुं० सीमन्तोन्नयनसंस्कारे ॥ पुं० न० केशवेशे । केशरचनाभेदे ॥ केशेषुवर्त्मनि । मूर्द्धजमध्यपद्धतौ ॥ सीमन्तमस्त्रियांस्त्रीणांकेशमध्येतुपद्धतिरितिवैजयन्ती । सीम्नोऽन्तः । शकन्ध्वादिः ॥

सीमन्तकः । पुं० नरकावासे ॥ यथा । लक्षपञ्चैवनरकावासाः सीमन्तकादयइ० हेमचन्द्रः । न० सिन्दूरे ॥

सीमन्तितः । त्रि० सीमन्तिनीकृते ॥ सीमन्तशब्दान्मत्वन्तात्० तत्करोतीतिण्यन्तात्कर्मणिक्तः । णाविष्ठवद्भावे० विन्मतोर्लुक् ॥

सीमन्तिनी । स्त्री० नार्य्याम् ॥ सीमन्तोऽस्त्यस्याः । अतइनिः । नान्तलक्षणोङीप् ।

सीमन्तोन्नयनम् । न० गर्भाधानात् षष्ठेऽष्टमेवामासिकर्त्तव्ये संस्कारविशेषे ॥ यथा । मासिषष्ठेऽष्टमेवापिकर्त्तव्यं पुंसवनोदिते । रिक्ताहीनेतिथौकुर्यात्सीमन्तोन्नयनंस्त्रियोः ॥

सीमा । स्त्री० अघटे । मर्यादायाम् । सीमनि । ग्रामादीनामवधारितान्तभागे । सीम० इ० भा० प्र० ॥ स्थितौ ॥ क्षेत्रे । अण्डकोषे ॥ सिनोति० सीयतेवा । षिञ् । नामन्सीमन्नित्यादिनानिपातितः

मनइतिनङीप् । डाबुभाभ्यामिति पक्षे डाप् । सीमे॰ सीमाः॰ इत्यादिरूपद्वयम् ॥ वेलायाम् ॥

सीमाविवादः । पुं॰ ग्रामादीनां सीमाविषयककलहे ॥ सीमाविषयको विवादः सीमाविवादः । सीमा चतुर्विधा । जनपदसीमा॰ ग्रामसीमा॰ क्षेत्रसीमा॰ गृहसीमेति भेदात् ॥

सीमिकः । पुं॰ वृक्षविशेषे ॥ वाल्मीके ॥ सूक्ष्मकृमिजातौ । वृक्षपत्रविभागकृतिकीटे ॥ स्यमति । स्यमु शब्दे । स्यमेः सम्प्रसारणञ्चेति किकन् ॥

सीरः । पुं॰ अर्के । सूर्ये ॥ हले । लाङ्गले ॥ सिनोति॰ सीयते वा । षिञ्॰ । शुसिचिमीनां दीर्घश्चेति॰ क्रन्॰ दीर्घत्वञ्च ॥

सीरकः । पुं॰ शिशुमारे ॥ अर्के ॥ हले ॥

सीरध्वजः । पुं॰ चन्द्रवंशीयनृपविशेषे ॥

सीरपाणिः । पुं॰ बलभद्रे । कालिन्दीभेदने ॥ सीरो लाङ्गलं पाणौ यस्य ॥

सीराङ्गम् । न॰ कालाधारे ॥

सीरी । पुं॰ बलदेवे ॥

सीलन्धः । पुं॰ मत्स्यविशेषे । सिलिन्दा॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ तद्गुणा यथा । सीलन्धः श्लेष्मलो वृष्यो विपाके मधुरो गुरुः । वातपित्तहरो हृद्य आमवातकरस्मृतः ॥

सीवनम् । न॰ सेवने । स्यूतौ । तुन्नवायकर्मणि । सीवना॰ इ॰ भा॰ ॥ षिवु तन्तुसन्ताने । ल्युट् । पृषोदरादित्वाद्दीर्घः ॥ षिवुसिव्योर्ल्युटि वा दीर्घ इति स्वामी ॥

सीवनी । स्त्री॰ लिङ्गमध्यस्थसूत्रे । लिङ्गाधाद्गुह्यपर्यन्तसीवने ॥

सीसम् । न॰ सीसके । योगेष्टे । नागे । सीसा॰ इ॰ भा॰ प्र॰ धातौ ॥ सिनोति । षिञ्॰ । क्विप् । अनित्यत्वान्न तुक् । ईष्यति । षो॰ । आतोऽनुपसर्गे कः । सिञ्च॰ तत्॰ ईसश्च॰ सीसम् ॥ अस्य गुणा यथा । सीसं रङ्गगुणं तद्वद्विशेषान्मेहनाशनम् ॥ नागस्तु नागशततुल्यबलं ददाति व्याधिं विनाशयति जीवनमातनोति । वह्निं प्रदीपयति कामबलं करोति मृत्युं विनाशयति सन्ततसेवितः सः ॥ पाकेनहीनौ किल वंगनागौ कुष्ठानि गुल्मांश्च तथाति-कष्टान् । पाण्डुप्रमेहानिलमन्दशोथभगन्दरादीन् कुरुते प्रभुक्तौ ॥ अस्य शोधनमारणविधिर्यथा । तस्य साहजिका दोषा वंगस्येव निदर्शिताः । शोधनं चापि तस्यैव॰ भिषग्भिर्गदितं पुरा ॥ ताम्बूरस

न्मिष्टशिलालिप्तात्पुनः पुनः । द्वाविंशद्भिः पुटैर्नागोविकृतत्वंभस्मतायति ॥ शिलासमः शिला । अन्यच्च । अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेननिः क्षिपेत् । मृत्पात्रे विद्रुतेनागे लोहदर्व्या प्रचालितः ॥ यामेकेनभवेद्भस्मतत्तुल्यास्याम्मनः शिला । काञ्जिकेनद्वयंपिष्ट्वा पचेद्दृढपुटेनच ॥ स्वाङ्गशीतंपुनः पिष्ट्वा शिलयाकाञ्जिकेनच । पुनः पचेच्छरावाभ्यामेवंषष्टिपुटैर्मृति : ॥ अपिच । तैलेतक्रे गवांमूत्रे काञ्जिकेचकुलत्थजे । विषाविधाविशुद्धिः स्यात्स्वर्णादीनां समासतः ॥ मारणम्पुनः । कुर्वंनागपत्राणांकुनट्याः स्यात्पलार्द्धकम् । तण्डुलीयरसैर्यामंयामं वासारसैस्तथा । सम्मर्द्य चक्रियाङ्कृत्वा घर्मेसंशोष्यतम्पुनः । सराबसम्पुटेकृत्वा पचेद्वन्योपलैर्भिषक् ॥ एवंसप्तपुटैर्नागोभस्मीभवतिनिश्चितम् । द्विगुणोयंभुवंवन्यातप्रीहानखिलानपौतिवैद्यदर्पणः ॥

सीसकम् । न० सीसे ॥ स्वार्थे कः ॥

सीसपत्रकम् । न० सीसके ॥

सौहुण्डः । पुं० ऋषाम् । सिहुण्डे ॥ सौतिहुण्डते । हुडिवरणे । पचाद्यच् ॥ सिंहतुण्डस्यापभ्रंशो यमितिस्वामी । पृषोदरादिः ॥

सु । अ० पूजायाम् ॥ भृशार्थे ॥ निर्भरे । अतिमात्रे ॥ अनुमतौ ॥ कृच्छ्रे ॥ समृद्धौ । अनायासे ॥ सूयते० सवतिवा । सुगतौ । क्विप्० तुगभावः । दुर्वा ॥

सुकण्टका । स्त्री घृतकुमार्याम् ॥

सुकण्डुः । पुं० कण्डुरोगे ॥

सुकथा । स्त्री० नैमिषारण्याधिष्ठात्री देवतायां ॥

सुकन्दः । कशेरुणि ॥ धरणीकन्दे ॥

सुकन्दकः । पुं० पलाण्डौ ॥ शोभनमतीवशा० कन्दयति० भक्षकस्यातिभ्रंशकरत्वात् । कन्दिरोदने । अच् । स्वार्थे कन् । गवृलता ॥ धरणीकन्दे ॥ वाराहीकन्दे ॥

सुकन्दी । पुं० सूरणे ॥

सुकम् । अ० अतिशये ॥

सुकरः । त्रि० सुखकरे । सुखेनकर्तुं शक्ये । सुसाध्ये ॥ ईषद्दुःसुष्विति० भावे० कर्मणिवा० अकृच्छ्रार्थे खल् ॥ अल्पसाधनैरौधिकारम्भोनसुकरः ॥

सुकरा । स्त्री० सुशीलायाङ्गवि । अचण्डाम् ॥ सुसुखङ्करोति । अच् ॥ सुक्रियतेवा । ईषदुःसुष्विति खल् ॥

सुकर्णः । पुं० हस्तिकर्णे ॥ त्रि० शोभनकर्णवति ॥

सुकर्णकः । पुं० हस्तिकन्दे ॥ त्रि०

सुन्दरकार्यंवति ॥
सुकर्णिका । स्त्री॰ मूषीकपर्ण्याम् ॥
सुकर्णी । स्त्री॰ इन्द्रवारुण्याम् ॥
सुकर्मा । पुं॰ विष्कंभाद्यन्तर्गतयो गविशेषे ॥ तज्जातफलं यथा । परो पकारीकुशल : कलासुदक्षो यशयुक्तो नितरांयशस्वी । प्रसूतिकालेयदिचे त्सुकर्मानर : सुकर्माभवतिप्रसि द्ध : । देवानांशिल्पिनि । विश्वक र्म्मणि ॥ त्रि॰ सत्क्रिये । शोभन कर्मकरणशीले ॥
सुकल : । त्रि॰ दातृभोक्तरिमानवे । यएकएवददाति॰ भुङ्क्तेचतथ । दाताभोक्ता॰ इ॰ भा॰ प्र॰ ॥ सु कल्पते । कलशब्दस्यानयो : । ईषद्सुप्रतिस्थल् । शोभनाक लायस्यतिवा ॥
सुकल्य : । त्रि॰ अतिनिपुणे ॥
सुकाण्ड : । पुं॰ कारवेल्ले ॥ त्रि॰ शोभनकाण्डवति॰ वृक्षादौ ॥
सुकाण्डी । स्त्री॰ काण्डीरे । काण्ड वेल्लइति॰ शी॰ भा॰ प्र॰ लता- याम् ।
सुकाण्डी : । पुं॰ भ्रमरे ॥
सुकामा । स्त्री॰ त्रायमाणायाम् । ब लितिः॰ बहुलेतिच॰गौ॰भा॰प्र॰ ॥
सुकाली । पुं॰ वशिष्ठात्मजेषु॰ शूद्रा णांपितृषु ॥
सुकालुका । स्त्री॰ डोडीक्षुपे ॥ इ॰ रा॰ वटी : ॥
सुकाष्ठकम् । न॰ देवकाष्ठे ॥
सुकाष्ठा । ) स्त्री॰ कटव्याम् ॥ का
सुकाष्ठिका । )
ष्ठकदल्याम् ॥ इ॰ रा॰ वट : ॥
सुकुन्दन : । पुं॰ बर्बरे ॥
सुकुमार: । पुं॰ पुण्ड्रेक्षौ वनचम्प के ॥ चवे ॥ श्यामाके ॥ त्रि॰ को मले । मृदौ ॥ सुष्ठुकुमारयति । कु मारक्रीडायाम् । चुराद्यद्न्त : । पंसौतिघ : । एरञ्चा ॥ यद्वा । सु काम्यते । कमे : किदुच्चोपधाया इत्यारन् ॥
सुकुमारक: । पुं॰ शालौ ॥ सुन्दरबा लके ॥ न॰ तमालपत्रे ॥
सुकुमारतर : । त्रि॰ अतिपेलवे ॥
सुकुमारतरा । स्त्री॰ अतिपेलवायाम् । प्रकृतौ ॥ यथोक्त । प्रकृते : सुकु मारतरंनकिञ्चिदस्तीतिमेमतिर्भ वति । याद्दष्टास्मीतिपुनर्नदर्शन मुपैतिपुरुषस्य ॥
सुकुमारा । स्त्री॰ कदल्याम् ॥ माल त्याम् ॥ नवमालिकायाम् ॥ ला त्याम् ॥ पृक्कायाम् ॥ चित्रपिष्ट- पुष्पे ॥
सुकुमारी । स्त्री॰ नवमालिकायाम् ॥
सुकृत् । त्रि॰ पुण्याढ्ये ॥ धार्मिके ॥ सुष्ठुकृतवान् । डुकृञ् । सु कर्मपापेतिकृञ : क्विप् । तुक् ।

सुकृतम् । न॰ शुभे ॥ स्वर्गादिप्राप्तौ । पुण्ये ॥ त्रि॰ सुविहिते । सुविधाने ॥ सुष्ठु कृतम् । प्रादिसमासः ॥ सुष्ठु क्रियतइतिवा । क्तः ॥
सुकृतिः । स्त्री॰ सत्कर्म्मणि । शोभनाकृतिः ॥
सुकृती । त्रि॰ पुण्यवति । धन्ये ॥ सुकृतमस्यास्ति । अतइनिः ॥
सुकेतुसुता । स्त्री॰ ताडकायाम् ॥
सुकेशरः । पुं॰ वीजपूरे ॥
सुकेशी । स्त्री॰ अप्सरोविशेषे ॥ त्रि॰ शोभनकेशयुक्ते ॥
सुकोमलः । त्रि॰ अतिमृदुले ॥ अतिमनोज्ञे ॥
सुकोमला । स्त्री॰ सिन्दूरीतिप्रसिद्धे पुष्पे ॥
सुकोली । स्त्री॰ क्षीरकाकोल्याम् ॥
सुकोशः ) पुं॰ कोषाम्रे । क्षुद्राम्रे ॥
सुकोशकः )
सुखंसुखः । पुं॰ खट्वाङ्गे ॥ इति॰ हे॰चन्द्रः ॥
सुखम् । न॰ आत्मवृत्तिगुणविशेषे ॥ मुदि । प्रीतौ ॥ हर्षे । सम्मदे । आनन्दे । शर्म्मणि । सर्व्वेषामनुकूलवेदनीये ॥ स्वर्गे । नाके । त्रिदिवे ॥ वृद्धिनामौषधे ॥ जले ॥ न्यायमते॰धर्मजन्येजगताङ्काम्ये ॥ यथ सुखन्तुजगतामेवकाम्यं धर्म्मेणजन्यते । अधर्म्मजन्यन्दुःखं स्यात्प्रतिकूलंसचेतसाम् ॥ तत्रमनोरमायाम् यथा । मनोयाम्यं सुखन्दुःखमिच्छाद्वेषोमतिः कृतिरितिभा॰प॰द॰ ॥ सुखं चतुर्विंशतिगुणान्तर्गतगुणविशेषः । तत्तु नित्यं जन्यञ्च । नित्यं परमात्मनो विशेषगुणोन्तर्वर्त्ति । जन्यसुखं जीवात्मनोविशेषगुणोन्तर्वर्त्ति । तच्च शुभादृष्टजन्यम्॰धनमित्रलाभारोग्यमिष्टान्नपानपुरीषोत्सर्गपुत्रादिजन्मतत्पालिङ्गनकान्तासम्भोगादिजन्यञ्च । तच्च हितचक्षुस्यायित्वं स्वीतरोत्पन्नानुभवनाश्यत्वात् । सुखाद्युपरागेणात्मनोमानसबोधः । सुखंतदुपायश्चेष्टः । बालस्यस्तन्यपानप्रवृत्तौसुखसाधनत्वज्ञानं हेतुः तच्चसुखस्येष्टत्वम् । दुःखजनकागमनादिप्रवृत्तौसुखोपायोधनंतदेवेष्टं॰तत्साधनत्वज्ञानमेवहेतुः । यागादिप्रवृत्तावपिपारलौकिकसुखसाधनत्वज्ञानङ्कारणम्॰सुखोपायस्वर्गादिरूपेष्टसाधनत्वज्ञानमपिकारणम् । सुखञ्चकालावच्छेद्यत्वं शरीरावच्छेद्यत्वञ्चअतोऽव्याप्यवृत्तित्वम्॰शरीरैकदेशावच्छेदेनदुःखसम्भवेप्यन्यदेशावच्छेदेनसुखसम्भवात्॰एकक्षणावच्छेदेनजीवस्यदुःखसम्भवेपि॰

संगीतराबच्छेदेन सुखसम्बन्धा:••
नन्तु विस्फोटकमतो निष्ट अभोजना
दौ द्रष्टव्यमिति ताकिकाः ॥ * ॥ सुख
रूपे ब्रह्मणि ॥ आत्मानन्दलक्षणान
दे ॥ सर्वतो निवृत्तिकेन चित्तेन लय
विक्षेपविलक्षणे । चित्तेऽपि वृत्तिसत्त्वा
त् • लयेऽपि मनसि पिण्डरूपेणाऽसत्त्वा
त् • सर्ववृत्तिशून्येन सूक्ष्मेण मनसा
सुखानुभवे समाधौ ॥ धर्मासाधार
णकारणकेऽनुकूलवेदनीये । निरु
पाध्यौच्छाविषयीभूतधर्मासाधारण
कारणिकायाश्चित्तवृत्तौ । परमा
त्मसुखव्यञ्जिकायाम् । मोक्षानन्दे ॥
मोक्षनानन्त्त्वाच्छ(?)दे । तृप्तौ ॥ त
च्च सात्त्विकादिभेदात् त्रिविधम् ।
यथा । अभ्यासाद्रमते यत्र दुःखा
न्तञ्च निगच्छति । एतद्विवृणोति ।
यत्तदग्रे विषमिव परिणामेऽमृतोप
मम् । तत्सुखं सात्त्विकं प्रोक्त
मात्मबुद्धिप्रसादजम् ॥ विषयेन्द्रि
यसंयोगाद्यत्तदग्रेऽमृतोपमम् ॥
परिणामे विषमिव तत्सुखं राजसं-
स्मृतम् ॥ यदग्रे चानुबन्धे च सुखं
मोहनमात्मनः । निद्रालस्यप्रमा
दोत्थं तत्तामसमुदाहृतम् ॥ आ
त्मगुणे ॥ आत्मतत्त्वरूपे ॥ शो
भनानि परिपुष्टानि • खानीन्द्रिया
णि येन तत् ॥ यद्वा । सुखयति ।
सुख दुःखतत्क्रियायाम् । चुरा

दि: । पचाद्यच् । चि• धर्मभेदेन•
सुखविशिष्टे ॥ यथा । त्रिषु द्रव्ये
पापपुण्यसुखादि चेत्यमरः । पापपु
ण्यशब्दौ सुखादयश्च स्तान्तागुणे य
थोक्तलिङ्गाः उपचारात्तद्वति द्रव्ये वि
शेष्ये वर्तमानाः वाच्यलिङ्गाः । यथा ।
पापात् क्रतुमतौ कन्या पापो राजाप्यर
क्षः । पापं व्याधकुलं हिंस्रं पापो विप्रश्च
सेवकः ॥ पुण्यं तीर्थं नदी पुण्या पुण्यश्चा(?)
मः पुण्य एव च । सुखा भूतिः सुखी
वासः सुखं कामी कुलं मतम् ।
सुखसाध्ये ॥ धर्मशे ॥ सुखहे
तौ ॥ सुखदुःखसाधनानामस्थि
रत्वं सुखस्य मनोवित्तासमाश्रयत्व
ञ्चोक्तं विष्णुपुराणे । यथा । वस्त्वे
कमेव दुःखाय सुखायेर्ष्योद्भवाय च ।
कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं
कुतः ॥ तदेव प्रीतये भूत्वा पुनर्दु
खाय जायते । तदेव कोपाय ततः प्र
सादाय च जायते ॥ तस्माद्दुःखात्म
कं नास्ति न च किञ्चित् सुखात्मकम् ।
। मनसः परिणामोऽयं सुखदुः
खोपलक्षणः इति २ अंशे ६ अध्यायः
॥ सर्वकामविहीनोऽतः सुखं सर्वं व्य
वस्थितमित्यन्यच ॥ दुःखिनं
सुखं प्राप्नुवन्ति सुखं किलेति देवी
भागवतम् ॥ सर्वं परवशं दुःखं स
र्वमात्मवशं सुखम् । एतद्विद्यात्
समासेन लक्षणं सुखदुःखयोः ॥

सुखकरः । त्रि॰ सुकरे ॥

सुखङ्करी स्त्री॰ लताविशेषे । जीवन्त्याम् ॥ सुखङ्कर्थाम् ॥

सुखङ्घुणः । पुं॰ शिवखट्वाङ्गे ॥ इ॰ त्रि॰ शेषः ॥

सुखचरः । त्रि॰ सुखगामिनि ॥

सुखचारः । पुं॰ उत्कृष्टाश्वे ॥

सुखजातः । त्रि॰ जातसुखे ॥

सुखदः । पुं॰ परमात्मनि । विष्णौ ॥ सद्वृत्तानां सुखं मोक्षलक्षणं ददाति । इति अ॰ । असद्वृत्तानां सुखं द्यति॰ खण्डयतीति वा । दा॰ । आत इतिकः । त्रि॰ सुखप्रदे । न॰ विष्णोः स्थाने ॥

सुखदा । स्त्री॰ गङ्गायाम् ॥ सद्यःपातकसंहन्त्री सद्योदुःखविनाशिनी । सुखदा मोक्षदा गङ्गा गङ्गैव परमा गतिः ॥ शमीवृक्षे ॥ सुखदत्वम् ॥ स्वर्वेश्यायाम् ॥

सुखदोह्या । स्त्री॰ सुखसन्दोह्यायां गवि ॥ सुखेन दुह्यते । दुह॰ । ऋहलोर्ण्यत् ॥

सुखमेदा । स्त्री॰ शल्लकीवृक्षे ॥

सुखरात्रिः । सुखरात्रिका । स्त्री॰ दीपान्वितामावास्यारात्रौ ॥ यथा । तुलाराशिगते भानावमावास्यां नराधिपः । स्नात्वा देवान् पितॄन् भक्त्या सम्पूज्याथ प्रणम्य च ॥ कृत्वा तु पार्वणश्राद्धं दधिक्षीरगुडादिभिः । ततोऽपराह्णसमये घोषयेन्नगरे नृपः ॥ लक्ष्मीः सम्पूज्यतां लोका उल्काभिश्चाभिचेष्टताम् ॥ * ॥ दर्शे प्रदोषव्याप्तिनिर्णयः । तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः । उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम् ॥ उभयतः प्रदोषप्राप्तौ परदिनमेव । दण्डैकरजनीयोगे दर्शः स्यात्तु परेऽहनि । तदा विहाय पूर्वेद्युः परेऽह्नि सुखरात्रिका । उभयप्रदोषव्याप्तावपि उल्कादानं परदिने पूर्वोक्तपार्वणानुरोधात् । भूताहे ये प्रकुर्वन्ति उल्काग्रहमचेतसः । निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम् ॥ अत्र च लक्ष्मीः पूर्वाह्णे रात्रौ पूज्या । अमावास्या यदा रात्रौ दिवाभागे चतुर्दशी । पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका ॥ उल्काग्रहणादिपितृकृत्यं स्वात्प्राचीनावीतिना दक्षिणामुखेन कर्त्तव्यम् ॥ तथा च मनुः । प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा । पित्र्यमानिधनात्कार्य्यं विधिवद्दर्भपाणिनेति ॥ उल्काग्रहणमन्त्रो यथा । शस्त्राशस्त्रहतानाञ्च भूतानां भूतदर्शयोः । उज्ज्वलज्योतिषा देहं दहेयं व्योमवह्निनेति । दानमन्त्रो यथा । अग्निदग्धाश्च ये जीवा

श्चेप्यदग्धाः कुलेमम। उज्ज्वलज्योतिषा दग्धास्ते यान्तु परमां गतिम् इति। विसर्ज्जनमन्त्रो यथा। यमलोकं परित्यज्य आगता ये महालये। उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते॥ इति॥

सुखलुब्धः। पुं॰ देहिनि॥ यथा। मांसलुब्धो यथा मत्स्यो लोहशङ्कुं न पश्यति। सुखलुब्धस्तथा देही यमबाधां न पश्यतीति कुलार्णवतन्त्रम्॥

सुखवर्च्चकः। पुं॰ सर्ज्जिकाक्षारे। सुखं वर्च्चयति। वर्च्च दीप्तौ। ण्वुल्॥

सुखवर्च्चाः। पुं॰ सर्ज्जिकाक्षारे॥ सुखेन वर्च्चो येन॥

सुखवासः। पुं॰ तरमु॰ इ॰ प्र॰ फलविशेषे॥

सुखवासनः। पुं॰ मुखवासनगन्धद्रव्ये। यथा। मुखवासकरो गन्धश्चामोदो मुखवासनः। सुखवासन इत्यत्र क्वचित् शुभवासन इत्यपीति शब्दरत्नावली॥

सुखसंवित्तिः। स्त्री॰ सुखानुभवे।

सुखसन्दोह्या। स्त्री॰ सद्गव्याम्। सुव्रतायाम्। सुखेन सन्दुह्यते। दुह॰। ऋहलोर्ण्यत्।

सुखा। स्त्री॰ प्रचेतसः पुर्याम्॥ अमरेन्द्रस्य पुर्याम्॥ शोभनेन्द्रियायाम्॥

सुखाधारः। पुं॰ स्वर्गे। त्रि॰ सुखाधारे॥

सुखायतः। पुं॰ उत्कृष्टाश्वे। सुशिक्षिताश्वे॥ यथा। सुखायतः शुभमुखः सुखचारः सुखायन इति शब्दमाला॥

सुखायनः। पुं॰ उत्कृष्टघोटके॥ सुखेन अयनं गमनं येन॥

सुखालुका। स्त्री॰ वकुशल्याम्। जीवन्त्याम्॥

सुखावती। स्त्री॰ बुद्धशक्तौ॥

सुखावतीश्वरः। पुं॰ बुद्धभेदे॥

सुखावहः। पुं॰ भर्त्तरि॥ त्रि॰ सुखदातरि॥

सुखाशः। पुं॰ वरुणे। प्रचेतसि॥ सुखभोजने॥ तरम्बुजे। अस्य पर्यायो यथा। स्याच्चेलाकलिङ्गफलः सुखाशो राजतिमिषः। लतापनसनाटाम्रौ सितेतुरिति चिक्कणशेषः॥

सुखासनम्। न॰ नरयानविशेषे। खासा॰ इ॰ भा॰ प्र॰॥ सुखेन आसनं यस्मिन्॥

सुखितः। त्रि॰ सुखं कृतः कृते॥ सुखं सञ्जातमस्य। इतच्॥

सुखी। त्रि॰ सर्वथा नीरोगे॥ निरामयस्थिते॥ तृष्णावर्जिते॥ सुखमस्यास्ति। सुखादिभ्यश्चेति॰ इनिः॥ दुःखमूलं हि संसारः स यस्यास्ति स दुःखितः। तस्य त्यागः कृतो येन स सुखी नापरः प्रिये।

इतिश्रीकुलार्णवतन्त्रम् ॥ ब्रह्मादितृणपर्य्यन्तं मायया कल्पितं जगत् । सत्यमेकं परं ब्रह्म विदित्वैवं सुखी भवेदिति महानिर्व्वाणतन्त्रम् । विदित्वा गुरोर्मुखादध्यात्मविद्यायाः श्रवणादिभिः ॥

सुखोत्सवः । पुं० भर्त्तरि । पत्यौ ॥ सुखस्य उत्सवो ऽस्मिन् ॥

सुखोदकम् । न० सुखोष्णे । सुखजनके । जले ॥

सुखोज्जिका : । पुं० सज्जिकाक्षारे ।

सुखोष्णम् । न० सुखोदके ॥

सुग : । पुं० गन्धर्व्वे ॥ सुष्ठु गायति । गै० कः ॥ न० विष्ठायाम् ॥ त्रि० सुगमे ॥ सुखेन गच्छत्यत । उपपदे रणे० सुदुरोरधिकरणइतिगमेर्डः ॥

सुगत : । पुं० सर्व्वज्ञे । क्षणिकज्ञानात्मवादिजिने । बुद्धे । शोभनं गतं ज्ञानमस्येति सुगतः ॥ सुष्ठु अपुनरावृत्त्यै गतइति वा ॥ सुखेन संसाराद्गतो वा ॥

सुगति : । पुं० अतीतकल्पार्हद्भेदे ॥ स्त्री० शोभनगतौ ॥ पुण्यात्मनां शरीरान्ते प्राप्यस्थाने ॥ यथा । सुवृत्तः शीलसम्पन्नः प्रसन्नात्मात्मवित् बुधः । प्राप्येहलौकिकं सम्मानं सुगतिं प्रेत्य गच्छतीति ॥

सुगन्ध : । पुं० कर्पूरादिगणे ॥ यथा । कर्पूरो मृगनाभिश्च कस्तूरी लतिकातथा । गन्धमार्जारवीर्य्यञ्च श्रीखण्डं पीतचन्दनम् ॥ कालीयकं रक्तकाष्ठं पतङ्गमगुरुद्वयम् । देवदारुश्च सरलस्तगरः पद्मकं गुरुः ॥ सर्ज्जो निर्य्यासको राल: कुन्दुरुश्च शिलारसः । सिह्लकश्चलवङ्गञ्च जातीपत्री फलं तथा ॥ एलाद्वयं दारुचीनीत्वक्पत्रं नागकेशरम् । वालुकं वीरणं मांसी कुङ्कुमं रोचनानखम् ॥ सुगन्धी वीरणं वालं जटामांसी मुरा घनः । शटी चर्चूरकाङ्गी सुगन्धोयं गणो मतः ॥ रक्तशिग्रौ ॥ चणके ॥ गन्धके ॥ भूतृणे ॥ न० चन्द्रजीरके ॥ गन्धतृणे ॥ श्वेतचन्दने ॥ नीलोत्पले ॥ ग्रन्थिपर्णे ॥ कृष्णजीरके ॥ कत्तृणे ॥ पुं० तीक्ष्णगन्धे । रक्ततुलस्याम् ॥ त्रि० समवायातिरिक्तसम्बन्धेन सद्गन्धविशिष्टे ॥

सुगन्धक : । पुं० गन्धके ॥ रक्ततुलस्याम् ॥ कर्कोटा० इ० भा० प० फलशाके ॥ तस्य पर्य्याया यथा । कर्कोटकः किलासघ्नस्तिक्तपत्रः सुगन्धकइति हेमचन्द्रः । काङ्कोल इ० गौ० दे० भा० ॥ शालीविशेषे ॥

सुगन्धतैलनिर्य्यासम् । न० गन्धद्रव्यविशेषे । जवादिनि । मृगघर्म्मजे । कृत्रिमे ॥

सुगन्धपत्रा । )
सुगन्धपत्रिका । ) स्त्री० रुद्रजाट-

याम् ॥

सुगन्धभूतृणम् । न० गन्धतृणे ॥

सुगन्धमूला । स्त्री० रास्नायाम् ॥ स्थलपद्मिन्याम् ॥ सुगन्धीमूलेयस्या : ॥

सुगन्धा । स्त्री० रास्नायाम् ॥ शोभनो गन्ध : । कुगतीतिसमास : । सुगन्धोस्त्यस्या : । अर्शआद्यच् ॥ शल्याम् ॥ गङ्गापत्याम् ॥ वन्ध्याककौटक्याम् ॥ नवमालिकायाम् तुलस्याम् ॥ मधुककर्कटिकायाम् ॥ शतपुष्पायाम् ॥ स्वर्णयूथ्याम् ॥ रुद्रजटायाम् ॥ अनन्तमूले ॥ सल्लक्याम् ॥ माधव्याम् ॥ तीर्थविशेषे ॥

सुगन्धामलकम् । न० सर्वौषधिभि : शुष्कामलकत्वग्योगे ॥ यथा । सर्वौषधिसमायुक्ता : शुष्कास्त्वामलकत्वच : । यत्रास्तदायं योग : स्यात् सुगन्धामलकाभिध : ॥ इतिराजनिर्घण्ट : ॥

सुगन्धि : । पुं० शोभनगन्धे । सुरभौ । घ्राणतर्पणे । इष्टगन्धे ॥ तुम्बुरुवृक्षे । तीक्ष्णकल्के ॥ परमात्मनि ॥ इतिमोक्षधर्मटीकायांनीलकण्ठ : ॥ सहकारे ॥ न० एलवालुके । तगरे ॥ कुस्तुम्बुरौ ॥ धान्याके ॥ मुस्तके ॥ कशेरुणि ॥ गन्धतृणे ॥ पिप्पलीमूले ॥ त्रि० सुगन्धयुक्ते । शोभनोगन्धोऽस्य । गन्धस्येदुत्पूतिसुसुरभिभ्यइतीत्त्वम् ॥ गन्धस्येत्त्वे तदेकान्तग्रहणं नाद्रियन्ते कवय : । यथा । काकुत्स्थत : कटभुवङ्करिणोमदेनस्कन्दं सुगन्धिमनुलीनवतानगस्य ॥ इति माघे० सुगन्धिंशोभनगन्धमित्यर्थात् ॥

सुगन्धिक : । पुं० सिल्हके । तुरुष्के महाशाली ॥ गन्धके ॥ न० कह्लारे ॥ पुष्करमूले ॥ गौरसुवर्णे । वारिजे । पत्रशाकविशेषे ॥ सुपर्णे ॥ उशीरे ॥

सुगन्धिकुसुमम् । न० सुगन्धिपुष्पे पुं० पीतकरवीरे ॥ शोभनगन्धवन्तिपुष्पाण्यस्य ॥

सुगन्धिकुसुमा । स्त्री० पृक्कायाम् ॥

सुगन्धिता । स्त्री० सौरभ्ये ॥ शोभनोगन्धोयस्य० तस्यभाव : । तल् । टाप् ॥

सुगन्धितैलम् । न० । सुगन्धिजले । केतकादिपानीये ॥

सुगन्धित्रिफला । स्त्री० जातीफले न० पूगफलेनत्रसंयुक्तेलवङ्गकलिकाफले ॥

सुगन्धिनी । स्त्री० आरामशीतलायाम् ॥

सुगन्धिमूलम् । न० उशीरे ॥

सुगन्धिमूषिका । स्त्री० छुछुन्दर्याम् ॥

सुगम : । त्रि० सुखेनगमनीयेस्थानादौ ॥ सुखेनगम्यतेप्राप्यते । गम्लृ० । ईषद्दुःसुषुकृच्छ्राकृच्छ्रार्थेषुखल् । यथासुगम : पन्था : ॥

सुगरम् । न० रक्ताभे । हिङ्गुले ॥

सुगहन : । त्रि० निबिडे ॥

सुगहनावृत्ति : । स्त्री० कुम्बायाम् । यज्ञस्थाने० यस्त्रस्यादिदर्शनरारणायनिर्मितवेष्टने ॥ सुगहनानिरवकाशावृत्ति : ॥

सुगृह : । पुं० चञ्चुसूचीखगे । पीततुण्डे । वया० इ० भा० प्र० ॥ न० शोभनालये ॥ त्रि० शोभनगृहवति ॥

सुगृहीत : । त्रि० सुन्दररूपेणकृतग्रहणे ॥

सुगृहीतनामा । पुं० शुभकाम्ययाप्रात : स्मर्त्तव्ये युधिष्ठिरादौ ॥

सुग्रन्थि : । पुं० ग्रन्थपर्णप्रभेदे । चोरके ॥ शोभना : ग्रन्थयोयस्मिन् ॥

सुग्रीव : । पुं० कपिपुङ्गवे । सूर्यपुत्रे । किष्किन्धाधिपे । श्रीराममित्रे ॥ विष्णोरश्वहये ॥ देवीम्प्रतिशुम्भनिशुम्भाभ्यांप्रेषितेदूतविशेषे ॥ हस्ताईत्पितरि । शोभनाग्रीवायस्य स : ॥ शिवे । इन्द्रे ॥ राजहंसे ॥ असुरविशेषे ॥ पर्वतविशेषे ॥ अस्त्रविशेषे ॥ नागप्रभेदे ॥ त्रि० शोभनग्रीवायुक्ते ॥

सुग्रीवी । स्त्री० कश्यपपत्नीविशेषे ॥

सुग्रीवेश : । पुं० श्रीरामचन्द्रे ॥

सुघोष : । पुं० विष्णौ । नारायणे ॥ शोभनोघोष : शब्दोवेदात्मकोयस्य ॥ नकुलाख्यपाण्डवस्यशङ्खे ॥

सुचक्षु : । पुं० उदुम्बरे ॥ न० शोभननेत्रे ॥ वेदान्तजन्यज्ञाने ॥ यथा । एवंविधंत्वांसकलात्मनामपिस्वात्मानमात्मात्मतयाविचक्षते । गुर्वर्कलब्धोपनिषत्सुचक्षुषायेतेतरन्तीवभवानृताम्बुधिम् ॥ त्रि० उत्कृष्टाक्षे ॥ आत्मविदि ॥ शोभनेचक्षुषीयस्य स : ॥ सुष्ठुशोभनञ्चक्षुर्वास्तिवा ॥

सुचञ्चु : । पुं० महाचञ्चुशाके ॥

सुचतुर : । त्रि० शोभनानिचत्वारि यस्य० तस्मिन् ॥ अचतुरविचतुरेत्यादिनासाधु : ॥

सुचरित्र : । त्रि० सुशीले ॥ शोभनंचरित्रमस्य ॥

सुचरित्रा । स्त्री० साध्व्याम् ॥ शोभनंचरित्रमस्या : ॥

सुचर्म्मा । पुं० भूर्जवृक्षे त्रि० सुचर्म्मवति ॥ शोभनंचर्मास्य ॥

सुचारु : । त्रि० मनोहरे ॥

सुचित्रम् । न० शोभनचित्रे ॥

सुचित्रक : । पुं० मत्स्यरङ्गविहङ्गमे ॥ चित्रसर्पे । मातुलाहौ ॥ त्रि० सुन्दरचित्रयुक्ते ॥

सुचित्रवीजा । स्त्री० विडङ्गे ॥

सुचिका । स्त्री॰ चिर्भिटायाम् ॥

सुचिरायुः । पुं॰ सुरे । देवे ॥ मार्कण्डेयादौ ॥ शोभनं चिरायुर्यस्य ॥

सुचुक्रिका । स्त्री॰ तिन्तिडाम् ॥

सुचुटी । स्त्री॰ सन्दंशिकायाम् ॥ इतिसन्दंशिकाशब्दार्थेशेदिनिकरः ॥

सुचेलम् । न॰ शोभनवस्त्रे ॥ शोभनं चेलम् ॥ त्रि॰ शोभनवस्त्रवति ॥

सुचेलकः । पुं॰ तद्वस्त्रे । पटे ॥ सुचेलमिव । स्वार्थे कन् ॥ त्रि॰ तद्वति ॥

सुच्छत्री । स्त्री॰ शतद्रुसरिति ॥ इ॰ म॰ र॰ मी॰ ॥

सुजनः । पुं॰ कुलीने ॥ सदाचारे । साधौ । सज्जने ॥ यथा । दुर्जनस्पर्शदोषेणसुजनोपिविनश्यति । प्रसन्नंजलमित्याहुः कर्दमैः कलुषीकृतम् ॥

सुजनता । स्त्री॰ सौजन्ये ॥

सुजलम् । न॰ कमले ॥ शोभनेसलिले ॥ त्रि॰ शोभनजलयुक्ते ॥

सुजल्पः । पुं॰ वाक्यविशेषे ॥ यथा । यत्रार्जवात् सगाम्भीर्यं सदैन्यंसहचापलम् । सोत्कण्ठञ्चहरिस्पृष्टः ससुजल्पोनिगद्यते ॥ इत्युज्ज्वलनीलमणिः ॥

सुजातः । त्रि॰ सुन्दरे

सुजाता । स्त्री॰ सौराष्ट्रमृत्तिकायाम् । तुवर्याम् ॥

सुजिह्वः । पुं॰ हव्यवाहने ॥

सुजीवन्ती । स्त्री॰ स्वर्णजीवन्त्याम् ॥

सुज्ञः । त्रि॰ विज्ञे ॥ सुशोभनं जानाति । ज्ञा अवबोधने । आतश्चोपसर्ग इति कः ॥

सुज्ञेयः । त्रि॰ सुष्ठु विज्ञेये ॥ सुखेन ज्ञातुं योग्यः । ज्ञा॰ । अचोयत् । ईद्गुणौ ॥

सुडीनम् । न॰ पक्षिणः सुकुमारपाते ॥

सुतः । पुं॰ आत्मजे । तनये । पुत्रे ॥ मातृपितृस्वभावस्तुस्वभावेसुतस्येभवतः । यथाब्रह्मपुराणे । शीलं सञ्जायतेपुत्रोमातुस्तातस्यवैसुता । यथाशीलाभवेन्मातातथाशीलोभवेत्सुतः ॥ यद्वर्णावैभवेद्भूमिस्तद्वर्णंसलिलम्भवेत् । मातृणांशीलदोषेणपितृशीलगुणेनच ॥ विभिन्नास्तुप्रजाः सर्वा॰ भवन्तिभवशीलनामिति । सूयतेस्म॰ सौतिर्वा । षुञ् अभिषवे॰ षुप्रसवैश्वर्ययोर्वा । क्तः ॥ नृपे । पार्थिवे ॥

सुतजीवकः । पुं॰ पुत्रजीवे ॥

सुतनुः । स्त्री॰ नार्य्याम् ॥ त्रि॰ सुकृशे ॥ स्वङ्गे ॥

सुतपादिका । स्त्री॰ हंसपद्याम् । गोधापद्याम् ॥

सुतपाः । पुं॰ सूर्ये ॥ मुनिविशेषे

मुनौ ॥ नरनारायणरूपेभगवति बदरिकाश्रमेसुशोभनंमनसश्चेन्द्रियाणाञ्चैकाग्र्यरूपंतपोऽस्येतिसुतपानरनारायणः ॥

सुतराम् । अ॰ अत्यन्ते । अतिशये ॥ अवधारितार्थप्रतिपादके ॥ यथा । गृहाद्विजमहाबुद्धेर्मानापि स्मृतोहरिः । दृष्टोतिमोच्चंसुतरां किम्पुनर्दम्भवर्ज्जनादिति ॥ द्विवचनविभज्येत्यादिना॰सुशब्दात्तरप् । किमेत्तिङव्ययेत्यादिनाम्प्रत्ययः । तद्धितश्चासर्व्वविभक्तिरित्यव्ययसंज्ञा ॥

सुतङ्कारी । स्त्री॰ देवदालीलतायाम् ॥

सुतर्द्दनः । पुं॰ ताम्राक्षे । कोकिले ॥

सुतलः । पुं॰ अट्टालिकाबन्धे ॥ नागलोकप्रभेदे ॥

सुतस्करा । स्त्री॰ सप्तपुत्रप्रसवाम् ॥

सुतश्रेणी । स्त्री॰ मूषिकपर्ण्याम् ॥ सुतानांश्रेणिरस्याः ॥ पुत्रवृन्दे ॥

सुता । स्त्री॰ स्वपत्ये । कन्यायाम् ॥ दुरालभायां ॥

सुतात्मजः । पुं॰ पौत्रे । दौहित्रे ॥ सुतस्यसुतायावाआत्मजः ॥

सुतात्मजा । स्त्री॰ पौत्र्याम् ॥ दौहित्र्याम् ॥ सुतस्यसुतायावाआत्मजा ॥

सुतारम् । न॰ द्वितीयायामशब्दाख्यायाम्सिद्धौ ॥

सुतारका । स्त्री॰ बुद्धशासनदेवीविशेषे ॥

सुतिक्तः । पुं॰ भूनिम्बे । किराततिक्ते ॥ पर्पटे । पित्तपापडा॰ इ॰ भा॰ प्र॰ ॥

सुतिक्तकः । पुं॰ पारिभद्रे । भूनिम्बे ॥

सुतिक्ता । स्त्री॰ कोशातक्याम् । भृङ्गफलिकायाम् ॥

सुतिक्तिका । स्त्री॰ कोशातक्याम् ॥

सुती । त्रि॰ पुत्रवति ॥

सुतीक्ष्णः । पुं॰ शिग्रौ ॥ श्वेतशोभाञ्जने ॥ रामायणप्रसिद्धमुनिविशेषे । नाम्नासुतीक्ष्णश्चरितेनदान्तः ॥ त्रि॰ अतिशयेनखरे ॥

सुतीर्थकम् । न॰ । तीर्थविशेषे ॥

सुतुङ्गः । पुं॰ नारिकेलागमे ॥ ग्रहाणामुच्चांशविशेषे । अत्यन्ततुङ्गे ॥ त्रि॰ अतिशयोच्चे ॥

सुतृणः । पुं॰ कुन्दरे । उखर्वले । मृगवल्लभेतृणविशेषे ॥

सुतेजनः । पुं॰ धन्वङ्गे । धन्वनवृक्षे ॥

सुतेजाः । पुं॰ सुतेजस्त्वगुणविशिष्टेद्युलोके ॥ स्वर्गे ॥ प्राक्कल्पार्हद्विशेषे स्त्री॰ आदित्यभक्तायाम् ॥ त्रि॰ तेजसान्विते ॥

सुतेला । स्त्री॰ महाज्योतिष्मत्याम् ।

सुत्या । स्त्री॰ अभिषवे । सोमलताकण्डने ॥ अभिषवदिने ॥ सवनम्॰ सूयते सोऽस्मिन्॰ अत्रां वा । षुञ् अभिषवे । संज्ञायां समजेति क्यप् ॥

सुत्रामा । पुं॰ गोत्रभिदि । इन्द्रे ॥ सुष्ठु त्रायते॰ पालयति । त्रैङ् पालने । आतोमनिन्॰ सर्वधातुभ्योमनिन् वा ॥

सुत्वा । पुं॰ अभिषवस्नानि । यज्ञाङ्गस्नानकर्त्तरि ॥ सुतवान् । षुञ्॰ । सुयजोर्ङ्वनिप् । तुक् ॥

सुत्वरी । स्त्री॰ मातरि ॥ ङ्वनिप्स्नात्॰ वनोरचेति ङीब्रौ ॥

सुदग्धा । स्त्री॰ दग्धाख्यतृणे । सुदग्धिकायां ॥ मेरुजम्बुद्रुमे ॥

सुदग्धिका । स्त्री॰ क्षुरक॰ इ॰ गौ॰ दे॰ भा॰ प॰ वृत्ते । दग्धरुहायाम् । भस्मरोहायाम् ॥

सुदण्ड : । पुं॰ वेत्रे ॥

सुदण्डिका । स्त्री॰ गोरक्ष्याम् ॥

सुदन् । त्रि॰ शोभनदन्तविशिष्टे ॥ शोभनादन्तायस्यसः । वयसिदन्तस्य दतृ । नुम् ॥

सुदर्भा । स्त्री॰ तृणविशेषे । इक्षुदर्भायाम् ॥

सुदर्शनः । पुं॰ । हरिचक्रे ॥ यस्यलक्षणंयथा । द्वादशारन्तुषट्कोणं वलयत्रयसंयुतम् । चक्रंस्या तद्दक्षिणोर्ध्वे : शंखशगोहरि:सृतइति ॥ जिनानांबलदेवे ॥ इक्ष्वाकुनृपतिरि ॥ शोभनंदर्शनमस्य । भक्तौ : सुखिनदस्यतेवा । भाषायांशासियुधिदृशिधृषिमृषिभ्योयुच् ॥ गन्धर्वे ॥ जम्बूद्वीपे ॥ सुदर्शनोकारत्वात् ॥ मेरौ ॥ वंशे ॥ रोगभेदे ॥ न॰ शक्रनगरे ॥ मत् गमने ॥ ति॰ सुदृश्ये ॥

सुदर्शनचूर्णम् । न॰ भावप्रकाशोक्तज्वररोगस्यौषधविशेषे ॥

सुदर्शनद्वीप : । पुं॰ न॰ जम्बुद्वीपे ॥

सुदर्शना । स्त्री॰ आज्ञायाम् ॥ औषधिप्रभेदे । सोमवल्लाम् । इन्द्रपर्यायाम् । सुदर्शनगुलञ्चइ॰ पद्मगुलञ्च॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ सुदर्शनास्वादुरुष्णाकफशोफास्रवातजित् ॥ मेरुजम्ब्वाम् ॥ सुरविशेषे ॥

सुदर्शनी । स्त्री॰ अमरावत्याम् ॥

सुदल : । पुं॰ चीरमोरटे ॥

सुदला । स्त्री॰ तरुण्याम् । गम्भाव्यायाम् । सेवन्त्याम् । शालपर्याम् ॥

सुदाम : । पुं॰ शाक्यमुनिशिष्यविशेषे । त्रि॰ तप : सहे ॥

सुदामा । पुं॰ वारिधरे । मेघे ॥ पर्वतविशेषे ॥ गोपविशेषे समुद्रे ॥ श्वेतद्वीपे । ऐरावते ॥ श्रीकृष्णा

मित्रे ब्राह्मणविशेषे । त्रि० सुदातरि ॥ सुष्ठु ददाति । डुदाञ्० । आतोमनिन् ॥

सुदामा । स्त्री० नदीविशेषे । टाप् ॥

सुदायः । पुं० हरणे । अन्यादानकाले० व्रतभिक्षादौ वा दीयमानद्रव्ये । सुष्ठु दीयते । डुदाञ्० । घञ् । युगागमः ॥

सुदारुः । पुं० पारियात्रकपर्वते ॥ सुदारुःपारियात्रक इति हेमचन्द्रः ॥ न० शोभनदारुणि ॥

सुदि । अ० शुक्लपक्षे ॥

सुदिनम् । न० शुभदिवसे ॥ त्रि० प्रशस्ते ॥ यथा । सुदिनासु समासु कार्यमेतत्प्रविचिन्वीत विशेषतः स्वयमिति प्रयोगः ॥

सुदीर्घः । त्रि० अतिविस्तारे ॥

सुदीर्घघर्मा । स्त्री० असनपर्ण्याम् ॥

सुदीर्घफलिका । स्त्री० वार्त्ताकुविशेषे । सिङ्घाबैंगन० इति गौ० दे० भा० प्र० ॥

सुदीर्घा । स्त्री० चीनाकर्कट्याम् ।

सुदुर्दर्शः । त्रि० अत्यन्तं द्रष्टुमशक्ये ॥ सर्वथादर्शनायोग्ये परमात्मनि ॥ तस्यादृष्टरूपत्वात् ॥

सुदुर्लभः । त्रि० अतिदुष्प्राप्ये । दुःखेनापि लब्धुमशक्ये ॥ यथा । बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इति ॥ सुष्ठु अतिमात्रं दुर्लभः ॥

सुदुश्चरः । त्रि० अतिशयदुःखेन चरणीये ॥

सुदुष्करः । त्रि० सर्वथा कर्त्तुमशक्ये ॥ अत्यन्तक्लेशकरे ॥

सुदुस्तरः । त्रि० अतिदुःखेन तरणीये ॥

सुदूरः । त्रि० दवीयसि । दविष्ठे । अतिदूरे ॥ यथा । सुदूरमपि गन्तव्यं यत्र माहेश्वरो जनः ॥

सुदूरपराहतः । त्रि० अतिदूरनिराकृते ॥

सुदृढम् । न० अतिदृढे । गाढे ॥ त्रि० तद्वति ॥

सुदृढत्वक् । स्त्री० काश्मर्याम् ॥

सुदृक् । त्रि० शोभननेत्रयुक्ते ॥

सुदृश्यः । त्रि० सुन्दराकृतौ ॥

सुदेवी । स्त्री० नाभेर्भार्यायाम् । मेरुजंघ्याम् ॥

सुदेशः । पुं० मत्स्यदेशे । उत्तमदेशे ॥

सुद्युम्नः । पुं० वैवस्वतमनोः पुत्रे ॥ त्रि० बहुधने ॥ अतिबलशालिनि ॥

सुधन्वा । पुं० विश्वकर्मणि । त्वष्टरि । नृपविशेषे ॥ त्रि० धन्विनि । प्रौढधानुष्के ॥ शोभनं धनुर्यस्य । धनुषश्चेत्यनङ् ॥

सुधन्वाचार्य्यः । पुं० व्रात्याद्वैश्यात्सवर्णायां जाते० जातिविशेषे ।

काव्ये । यथाऽस्मनुः । वैश्यात्तु
जायते व्रात्यात्सुधन्वाचार्य एव च ।
कारूषश्च विजन्मा च मैत्रः सात्वत
एव चेति ॥
सुधर्मः । पुं॰ जिनगणाधिपविशेषे ॥
सुधर्मी । त्रि॰ धर्मशालिनि ॥ कु
टुम्बिनि ॥
सुधर्मा । स्त्री॰ देवसभायाम् । शो
भनोधर्मोऽस्याम् । धर्मादनिच् के
वलात् । डाबुभाभ्यामितिपक्षे
टाप् । अनोबहुव्रीहेरितिङीब्न ।
सुधर्म॰ सुधर्माइत्यादि । डाब
भावे । सुधर्माणौ॰ सुधर्माणइ
त्यादि ॥
सुधा । स्त्री॰ पीयूषे । अमृते ।
मद्ये । सुरायाम् ॥ सुखेनधी
यते । धेट्पाने । आतश्चोपस
र्गइतिकर्मण्यङ् । लेपने । स्नुह्या
म् । मूर्व्याम् ॥ स्नुह्याम् ॥
गङ्गेष्टकायाम् ॥ गङ्गायाम् ॥
शालपर्ण्याम् ॥ विद्युति ॥ गु
डूच्याम् ॥ जले ॥ तोये ॥
रसे ॥ धात्र्याम् ॥ आमलक्या
म् ॥ पुष्परसे । मधुनि ॥ ह
रीतक्याम् ॥ सुष्ठुदधातिपुष्णा
ति । डुधाञ्॰ । क्विप् ॥
सुधांशुः । पुं॰ इन्दौ । चन्द्रे ॥
सुधायुक्ताअंशवोयस्यसः ॥
सुधांशुतैलम् । न॰ कर्पूरतैले ।

सुधांशुरत्नम् । न॰ मौक्तिके ॥ च
न्द्रकान्ते ॥
सुधाकरः । पुं॰ चन्द्रे ।
सुधाधारः । पुं॰ सौधमूर्धनि । चू
ना॰ इ॰ भा॰ प्र॰ ॥ सुधाधारो
ऽलिन्दस्त्राणः पाकोऽर्केदोविदार
णः ॥
सुधाङ्गः । पुं॰ चन्द्रमसि ॥
सुधाजीवी । पुं॰ पलगण्डे । लेप
के । राज॰ इ॰ भा॰ ॥ सुधयाले
पनेनजीवति॰ तच्छील: णिनिः ॥
सुधाधारः । पुं॰ चन्द्रे । इन्दौ ।
अमृतपात्रे ॥ सुधायाः आधारः ॥
सुधानिधिः । पुं॰ चन्द्रे ॥
सुधाभुक् । पुं॰ गीर्वाणे । देवे ।
सुधांभुङ्क्ते । भुज॰ । क्विप् ॥
सुधामयः । पुं॰ सौधे । राजसदने
त्रि॰ अमृतात्मके ॥
सुधामोदकः । पुं॰ यवासशर्करा
याम् ॥
सुधामोदकजः । पुं॰ तवराजोऽङ्ग
खण्डे ॥
सुधावर्षी । पुं॰ विधातरि । विश्वसृ
जि । बुद्धभेदे ।
सुधावासः । पुं॰ चन्द्रे । न॰ त्रपु
षे ॥
सुधास्रवा । स्त्री॰ त्रपुष्याम् ॥
सुधासंञ्चयोगः । पुं॰ अमृतसिद्धियो
गे । यथा । हराश्वज्जेष्ठ्यो॰

अर्थं निमज्ज्य निमज्ज्य क्रमाद० द्वासमारे । प्रथमं वम् । भवेदम्बुधि मध्यमधिष्ठ्य० कथिष्यं यमीचेत द्वे वसुधासं प्रयोगः ॥

सुधासिन्धुः । पुं० अमृतार्णवे ॥

सुधासूतिः । पुं० चन्द्रे ॥ यथा । प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः सुधासूतेश्चन्द्रोपलजलकणैरर्घ्यघटना । स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियमिति ॥ मखे । यज्ञे ॥ पद्मे ॥

सुधास्रवा । स्त्री० अधोजिह्विकायाम् । गलशुण्डिकायाम् । घण्टिकायाम् । हुडानाम्न्याम् ॥ रुदन्तीवृक्षे ॥

सुधाहरः । )
सुधाहृत् । ) पुं० गरुडे ॥ देवे ॥

सुधितिः । पुं० स्त्री० स्वधितौ । परशौ ॥

सुधीः । पुं० विदुषि । सति । कोविदे । पण्डिते । न्यायगृहीतमोक्षार्थयाचके ॥ सुष्ठु ध्यायति । ध्यै० । ध्यायतेः क्विपि सम्प्रसारणम् ॥ स्त्री० सुन्दरबुद्धौ ॥ सुष्ठु धीः ॥ त्रि० शोभनबुद्धियुक्ते ॥

सुधूपः । पुं० सरलद्रवे ॥

सुधूम्यः । पुं० स्वादुनामगन्धद्रव्ये ॥

सुधोद्भवः । पुं० धन्वन्तरौ । दिवोदासे ॥

सुधोद्भवा । स्त्री० हरीतक्याम् ॥

सुनन्दः । पुं० श्रीकृष्णस्य पार्षदविशेषे ॥ द्वादशविधराजगृहान्तर्गतगृहविशेषे ॥ सप्तदैर्घ्येण राज्ञः सप्तहस्तमानैकपञ्चाशद्धस्तः परिणाहेन चत्वारिंशद्धस्तश्च ॥ यथा । यद्यद्वै प्रोच्यते मानं तत्र तेनैव कल्पना । राज्ञः सप्तहस्तमेकं तु दैर्घ्ये सर्वतनिःश्रितम् ॥ आयामेन सुनन्दः स्यात् द्वाभ्यां पञ्चभिः । परिणाहैश्चतुर्भिश्च राजवस्तौ प्रतिष्ठितः । यस्याधिदेवता भौमो रक्षती मां वसुन्धराम् । द्वारार्थिनं प्रति स्वासु रक्ताश्चिवाद्धतामिव ॥ रक्तपट्टावृतो गेहः सकलार्थप्रसाधकः । अवस्थितत्वा महीपालः सुचिरं पाति मेदिनीमिति युक्तिकल्पतरुः ॥ दैर्घ्ये ५१ प्रस्थे ४० ॥ न० हलभृन्मुसले ॥

सुनन्दा । स्त्री० रोचनायाम् ॥ उमायाम् ॥ अङ्गनायाम् ॥ जनन्याम् ॥ उमासखीभेदे ॥ अर्कपर्णौषधे । इति रत्न० हे० गौ० दे० भा० प्र० ॥

सुनन्दिनी । स्त्री० मञ्जुभाषिणीछन्दसि ॥

सुनयनः । पुं० मृगे ॥ त्रि० शोभननेत्रयुक्ते ॥ शोभने नयने यस्य सः ॥

सुनयना । स्त्री० नार्याम् ॥

सुरेन्द्राधिपः। पुं॰ यगणे। ऽऽ॥
सुनाकृतः। पुं॰ कर्पूरके॥ इ॰ म॰ चन्द्रिका॥
सुनाभः। पुं॰ मैनाकाचले॥
सुनामद्वादशी। स्त्री॰ द्वादशमासी यद्वादशीकर्त्तव्यव्रतविशेषे॥
सुनारः। पुं॰ शुनीस्तन्ये॥ सर्पाण्डे॥ चटके। कलविङ्के॥
सुनालः। पुं॰ उशीरे॥ लामज्जके॥
सुनालकः। पुं॰ वकद्रुमे॥ त्रि॰ सुन्दरनालयुक्ते॥
सुनासिका। स्त्री॰ काकनासायाम्॥ शोभननासायाम्॥ त्रि॰ तद्युक्ते॥
सुनासीरः। पुं॰ इन्द्रे॥ नासते। नासृशब्दे। बाहुलकादीरन्। सुष्ठु नासीरं सेनामुखम्॰ नासीरावा ग्रेसरा वायसस्य॥
सुनिर्य्यासा। स्त्री॰ जिङ्गिन्याम्॥
सुनिर्ग्रथितः। पुं॰ वृक्षविशेषे॥
सुनिषसम्। न॰ सुनिषण्णकशाके। अम्ललोणिकासदृशे॰ चौपतिया॰ इ॰ प्र॰ जलप्रभवशाके। चतुष्पत्र्याम्। अश्मगुणायका। चाङ्गेरीसदृशः पत्रैश्चतुर्दलयुतोरितः। शःकोजलान्वितेदेशे चतुष्पत्रीतिचोच्यते॥ सुनिषसोहिमोग्राही मोहदोषत्रयापहः। अविदाही लघुः स्वादुः कषायोरूक्षदीपनः॥ वृष्योरुच्योज्वरश्वासमेहकुष्ठभ्रमप्रणुत्॥ सितावरशाके। श्रीवारके॥ त्रि॰ सूपविष्टे॥
सुनिषण्णकम्। न॰ शाकविशेषे। वितुन्ने। सुनिषण्णे॥
सुनीतिः। स्त्री॰ ध्रुवमातरि। शोभननये॥ त्रि॰ शोभननीतियुक्ते॥
सुनीथः। त्रि॰ धर्मशीलके॥ नीतिमति॥ पुं॰ वटौ॥ ब्राह्मणे॥ सुष्ठु नयति। णीञ्॰। इनिकुषिनीभ्यादिना क्थन्॥
सुनीथा। स्त्री॰ मृत्योः कन्यायाम्। वेणस्य मातरि॥
सुनीलः। पुं॰ नीलरत्ने॥ दाडिमे॥ सुन्दरनीलवर्णे॥ म॰ लामज्जके॥
सुनीलकः। पुं॰ नीलरत्ने॥ नीलासने॥ दाडिमे। नीलभृङ्गराजे॥ न॰ वीरणाङ्घ्रौ॥
सुनीला। स्त्री॰ तृणविशेषे। चणिकायाम्। गोदुग्धायाम्। अतस्याम्॥ विष्णुक्रान्तायाम्। अरतीतृणे॥
सुनीलिका। स्त्री॰ सुनीलायाम्॥
सुनेपाली। स्त्री॰ पिण्डखर्जूरिका प्रभेदे। तद्गुणायथा। सुनेपाली सुमृदुलावलिष्ठीनफलाघसा। सुनेपालीश्रमभ्रान्तिदाहमूर्च्छास्रपित्तहृत्। सुलेमानीतिलोके॥

सुन्द : । पुं॰ रामायणप्रसिद्धवानरविशेषे । राक्षसविशेषे ॥ करुणाकरे परमेश्वरे । सुष्ठु उनत्ति । आर्द्रीकरोति । उन्दी॰ । पचाद्यच् । शकन्ध्वादि : ॥

सुन्दर : । पुं॰ कामदेवे । सुन्दरी॰ वृत्ति॰ गौ॰ दे॰ भा॰ प्र॰ वृक्षे ॥ त्रि॰ रुचिरे । चारुणि । शोभने । मञ्जुले ॥ सुद्रियते । दृङ् आदरे । शश्वद्रित्यप् । पृषोदरादि : ॥ यद्वा । सुष्ठु उनत्ति॰ चित्तं द्रवीकरोति । उन्दी क्लेदने । बाहुलकादर : । शकन्ध्वादि : ॥

सुन्दरिका । स्त्री॰ तीर्थविशेषे ॥

सुन्दरी । स्त्री॰ रूपलावण्यसम्पन्नायां नार्याम् ॥ द्रुमान्तरे । त्रिपुरसुन्दर्यां देव्याम् । योगिनीविशेषे ॥ हरिद्रायाम् ॥ काकमाच्याम् ॥ छन्दोविशेषे ॥ अयुजोर्यदि सौ जगौ युजोः सभरा लगौ यदि सुन्दरी तदा । यथा । यदवोचदवेक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा । अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम् ॥ वर्णवृत्तान्तरेऽपि । कुसुमगन्धरसैरभिभूषिता चरणसङ्गतनूपुरमण्डिता । करसुवर्णलसद्वलयान्विता कुरु तिकश्चन चेतसि सुन्दरि ॥ यथा । न सुलभा शरदिन्दुमुखी प्रिया मनसि कामविचेष्टितमोहशम् । मलयमारुतचालितमालतीपरिमलप्रसरो हृतवासरः ॥ सुन्दरशब्दस्य गौरादित्वान् ङीष् । पार्वत्याम् ॥

सुन्वन् । त्रि॰ सोमयाजिनि । सोमाभिषवं कृतवति ॥ सुनोतेर्लट : शत्रादेश : ॥

सुपक्व : । पुं॰ सुगन्ध्याम्रे ॥ त्रि॰ शोभनपरिणते । परिपक्वे ॥

सुपक्वक : । पुं॰ सहकाराम्रे ॥

सुपत्र : । पुं॰ पत्रिताहृत्वे । आदित्यपत्रे । न॰ तेजपत्रे । पत्रके ।

सुपत्रक : । पुं॰ शिग्रौ ॥

सुपत्रा । स्त्री॰ पालङ्क्याम् ॥ शतावर्याम् ॥ शम्याम् ॥ रुद्रजटायाम् । शालपर्ण्याम् ॥

सुपत्रिका । स्त्री॰ जतुकायाम् ॥

सुपथ : पुं॰ । शोभनवर्त्मनि । सत्पथे ॥ यथा । सत्पथस्त्वतिपन्थाश्च सुपन्थाः सुपथोऽपि च इति शब्दरत्नावली ॥

सुपन्था : । पुं॰ अर्चितेऽध्वनि । सत्पथे । अतिपथि ॥ सु : पूजायाम् । कुगतीति समास : । नपूजनादिति समासान्तनिषेध : । स्वतः समासान्तनिर्देशात्॰ पथ : सङ्ख्याव्ययादेरिति न क्लीबत्वम् ॥

सुपथ्य : । त्रि॰ अपीडाकारिभोजनादौ ॥

सुपथ्या । स्त्री॰ श्वेतचिल्लायाम् ॥

सुपद्मः । पुं॰ व्याकरणविशेषे ॥ पुं॰ न॰ शोभनारविन्दे ॥

सुपद्मा । स्त्री॰ वचायाम् ॥

सुपर्णः । पुं॰ पन्नगाशने । गरुडे ॥ कनकमयत्वात् शोभनपर्णं यस्य सः ॥ स्वर्णचूडे । पाषि ॥ कृतमालके । राजवृक्षे ॥ सुष्ठु पर्णान्यस्य ॥ भगवति वासुदेवे ॥ शोभनानि पर्णानि छन्दांसि संसारतरुरूपिणोऽस्य । मत्स्योपस्थेऽद्रिविशेषे ॥ श्वेनप्रभेदे । वेगवानस्य विवह सुपर्णइतिव्याख्यातारः ॥ सप्तपर्णे ॥

सुपर्णकः । पुं॰ आरग्वधे । सप्तच्छन्दवृक्षे ॥ गरुडे ॥

सुपर्णकेतुः । पुं॰ विष्णौ ॥

सुपर्णा । स्त्री॰ कमलिन्याम् ॥ विनतायाम् ॥

सुपर्णाख्यः । पुं॰ नागकेशरे । तीर्थविशेषे ॥ यथा । उत्पलाख्ये सुपर्णाख्ये । इति ॥

सुपर्णिका । स्त्री॰ स्वर्णजीवन्त्याम् ॥ पलाश्याम् ॥ वाकुच्याम् ॥ रेणुकायाम् ॥ शालपर्ण्याम् ॥

सुपर्णी । स्त्री॰ कमलिन्याम् ॥ विनतायाम् ॥

सुपर्णीतनयः । पुं॰ गरुडे । तार्क्ष्ये

सुपर्व्वा । पुं॰ सुमनसि । देवे । सुरे ॥ सुष्ठु पर्वं यमावास्यादिचरितम् सञ्ज्ञात्यादिर्यज्ञः उत्सवो वा यस्य ॥ शरे ॥ वंशे ॥ पर्वणि ॥ धूमे ॥

सुपर्व्वा । स्त्री॰ श्वेतदूर्वायाम् ॥

सुपर्व्वाङ्गना । स्त्री॰ देवललनायाम् ॥ यथा । सुपर्व्वाङ्गनागानगम्भीरतानखनत्खड्गधाराविपक्षोरवैश्च । क्षणत्किङ्किणीनादपूर्णैर्नतूर्णं सुखेनाम्बसम्पूर्णघूर्णाकशेषैः ॥

सुपार्थिनी । स्त्री॰ गन्धपत्रायाम् ॥

सुपाक्यम् । न॰ विड्लवणे ॥

सुपात्रम् । न॰ दानयोग्यव्यक्तौ शोभनभाजने ॥ त्रि॰ उत्तमपात्रयुक्ते ।

सुपानः । त्रि॰ पानयोग्ये ॥ सुखेन पीयते । पा॰ । कर्मणि ल्युट् ॥

सुपार्श्वः । पुं॰ प्लक्षवृक्षे ॥ जनः शृङ्गे । सम्पातेः पुत्रे॰ पक्षिविशेषे । पश्चात्तत्सहयोजनैः स्व्ये॰ अस्तवर्णमेरोः सोम्यादिभिः तस्यदाख्यर्धिमते॰ विष्कम्भशैले ॥ तत्रस्तस्ययोजनेन्नतमाश्वयोधपादपोऽस्ति ॥

सुपार्श्वकः । पुं॰ गर्दभाण्डे । कन्दराले । कपीतने । प्लक्षे । पीलवः॰ पीलवच॰ निर्गुण्डी॰ गौ॰ डो॰ दृ॰ प्र॰ हृक्षे ॥ शोभनम् पार्श्वमस्य ॥ भाण्डशिथि ।

सुपिङ्गला । स्त्री० जीवन्त्याम् ॥ ज्योतिष्मत्यां ॥

सुपीतम् । न० गर्जरे ॥

सुपुट: । पुं० कोलकन्दे ॥ विष्णुकन्दे ॥

सुपुत्रिका । स्त्री० लताविशेषे । जतुकायाम् । जतुकार्याम् । तिर्य्यक्फलायाम् ॥

सुपुष्करा । स्त्री० स्थलपद्मिन्याम् ।

सुपुष्प: । पुं० राजतरुण्याम् ॥ हरिद्रौ ॥ शिरीषे ॥ रक्तपुष्पके । पालितामन्दार० इ० गौ० दे० भा० प्र० ॥ न० लवङ्गे ॥ प्रपौण्डरीके ॥ तूले । तूदे । पीश्वंदिप्पलाभिधे ॥ स्त्रीणांरजसि ॥ आहुल्यां ॥

सुपुष्पिका । स्त्री० पाटलायाम् ॥ जीर्णदारुणि ॥

सुपुष्पी । स्त्री० श्वेतापराजितायाम् ॥ कदल्याम् ॥ जीर्णफञ्ज्याम् । जीर्णदारुणि ॥ द्रोणपुष्प्याम् ॥ मिश्रेयायाम् ॥ शतपुष्प्याम् ॥

सुपूर: । पुं० बीजपूरे ॥

सुपूरक: । पुं० बकपुष्पहचे ॥

सुपूर्व्वप्रवेश: । पुं० यात्रानिवृत्त्यनन्तरकृगृहप्रवेशे ॥ यात्रावसाने तु सुपूर्वसंज्ञ: ॥

सुपेशल: । त्रि० अतिरम्ये । सुन्दरे ॥

सुपेशा । त्रि० सुकुमारे । कोमले ॥ सुरूपे ॥

सुप्तम् । न० साधिकायाम् । सुषुप्तौ ॥ त्रि० निद्रिते । निद्राणे । शयितेसुप्त० इ० भा० ॥ यज्ञवेधनेविधिनिषेधौयथा । क्षुधितस्तृषित:कामीविद्यार्थीकृषिकारक: । भाण्डारोचप्रवासीचसप्तसुप्तान्प्रबोधयेत् ॥ मक्षिकाभ्रमरीसर्पीराजाबैवालकस्तथा । परश्वापिचमूर्खश्चसप्तसुप्तान्नबोधयेत्इति ॥ स्वापितस्म । जिष्वप्शये । क्त: । सम्प्रसारणम् ॥

सुप्तघातक: । त्रि० दुशेरे । हिंस्रे ॥ इ० त्रि० ष० ॥

सुप्तजन: । पुं० अर्द्धरात्रे ॥ निद्रितेजने ॥

सुप्तज्ञानम् । न० सुप्तविज्ञाने । स्वप्ने ॥

सुप्ति: । स्त्री० स्पर्शाज्ञतारुजि ॥ विस्रम्भे ॥ शयने ॥ निद्रायाम् । स्वापे विज्ञानविरतौ ॥ अस्या:त्रैविध्यमुक्तंयथा । आहारादिविभेदेन० सात्त्विकीराजसीतथा । तामसीतित्रिधासुप्ति: सापरास्मृष्यतेत्रिधा ॥ सुखमस्वाप्समघाद्दु:खमस्वाप्समयनु । गाढमूढोहम

स्वाप्सिनिन्युक्तिः सार्वलौकिकोति ॥ शिष्वप्रत्यये । कित्। सुप्तःसुप्ति नजानातिनासुप्तेस्वप्नजागरौ ॥

सुप्तोत्थितः । वि॰ सुप्ताद्उत्थिते । पादौसुप्तः पश्चादुत्थितः ॥

सुप्रजाः । पुं॰ सत्सन्तानवति ॥ नित्यमसिच्प्रजामेधयोः ॥

सुप्रतिभा । स्त्री॰ मदिरायाम् ॥ प्रगल्भतायाम् । प्रागोल्कर्षे ॥

सुप्रतिष्ठा । स्त्री॰ शोभनप्रतिष्ठायाम् ॥ पञ्चाक्षरायांवृत्तौ ॥ साविधा । पङ्क्तिप्रियाच ॥

सुप्रतिष्ठितः । पुं॰ उदुम्बरे ॥ वि॰ शोभनप्रतिष्ठायुक्ते । सुस्थिरे ॥ यशस्विनि ॥

सुप्रतीकः । पुं॰ ईशानदिग्गजे ॥ शिवे ॥ कामदेवे ॥ शोभनाङ्गे ॥ वि॰ साधौ ॥ शोभनाङ्गविशिष्टे शोभनाः प्रतीकाः अवयवायस्य ॥ यद्वा । सुप्रपूर्वाद्दिणोऽलीकादित्वात्कीकन् । तुगस्तुटच ॥

सुप्रभः । पुं॰ जिनविशेषे । शुक्लबले ॥ वि॰ सुन्दरप्रभायुक्ते ॥

सुप्रभा । स्त्री॰ वाकुच्याम् । अग्नेर्जिह्वाविशेषे ॥ सुप्रभापद्मरागाभावारुण्यांदिशिसंस्थितेतितन्त्रसारः ॥ शोभनदीप्तौ ॥

सुप्रभातम् । न॰ शुभसूचकप्रातःकाले ॥

सुप्रभाता । स्त्री॰ शोभनप्रभातयुतायांरात्रौ ॥ प्रभवद्दीपवत्सरिति ॥

सुप्रयुक्तः । वि॰ शोभनप्रयोगविशिष्टे ॥

सुप्रयुक्तशरः । पुं॰ कृतहस्ते ॥

सुप्रयोगविशिखः । पुं॰ कृतहस्ते । सुशिक्षितबाणमोक्षणे । सम्यक्कृतशराभ्यासे ॥ शोभनप्रयोगोऽस्य

सुप्रयोगः । सुप्रयोगोविशिखोऽस्य ।

सुप्रलम्भः । वि॰ सुखलभ्ये ॥

सुप्रलापः । पुं॰ सुवचने । सुष्ठूक्तौ ॥ सुष्ठुप्रकृष्ट॰ लपनम् । घञ् ॥

सुप्रसन्नः । पुं॰ कुबेरे ॥ कृष्णार्जके ॥ वि॰ सुप्रसादयुक्ते ॥

सुप्रसन्नकः । पुं॰ कृष्णार्जके ॥

सुप्रसरा । स्त्री॰ प्रसारण्याम् । गन्धालिकायामलतायाम् ।

सुप्रसादः । पुं॰ शिवे ॥ विष्णौ ॥ शोभनप्रसादोऽस्य ॥ अपकारवतां शिशुपालादीनामपिमोक्षप्रदातृत्वात् ॥ सुप्रसन्नतायाम् ॥ वि॰ प्रसन्नमुखे ॥

सुप्रातः । पुं॰ सुप्रभाते ॥ शोभनंप्रातरस्य । सुप्रातसुश्वेत्यादिना॰ बहुव्रीहावच्प्रत्ययान्तोनिपातितः ॥

सुप्रिया । स्त्री॰ सुभगायाम् । भर्तुःप्रियायाम् । सुरूपायाम् ॥ मघाक्टवमपरित्यज्यपदा सिंहेगुरु

र्भवेत् । तथाव्दं कन्यकावोढासुभगासुप्रियाभवेत् इतिमाण्डव्य: ॥

सुफल: । पुं॰ दाडिमे । बदरे । मुद्गे । कर्णिकारे । राजतरौ । आरग्वधविशेषे । छोटासोनालु॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ कपित्थे ॥ सत्फले ॥ त्रि॰ शोभनफलवति । सुष्ठु शोभनानिफलान्यस्य ॥

सुफला । स्त्री॰ कूष्माण्डामोषधौ ॥ इन्द्रवारुण्याम् ॥ काश्मर्याम् ॥ कदल्याम् ॥ कपिलद्राक्षायाम् ॥

सुफेनम् । न॰ समुद्रफेने ॥

सुबन्ध: । पुं॰ तिले ॥

सुबलपुत्री । स्त्री॰ गान्धार्याम् ॥

सुबल्लरी । स्त्री॰ पुत्रदात्र्याम् ॥

सुबल्ली । स्त्री॰ वाकुच्याम् । सोमराज्याम् ॥ शोभनावल्लिरस्या: ॥ कट्व्याम् ॥

सुब्रह्मण्य: । पुं॰ ऋत्विग्विशेषे ॥ गुहे ॥ केरलादिदेशप्रसिद्धे सर्पाधिकृतेदेशे॰ तत्रत्ये सर्पराजे च ॥

सुब्रह्मण्या । स्त्री॰ निगदविशेषे ॥

सुब्रह्मवासुदेव: । पुं॰ ब्रह्मरूपवसुदेवसुते ॥

सुभग: । पुं॰ चम्पके ॥ अशोके ॥ रक्ताम्लाने ॥ टङ्कणे ॥ त्रि॰ हृष्टे ॥ सुन्दरे ऐश्वर्य्ये ॥ शोभनम् भगं ऐश्वर्यं यस्य ॥

सुभगा । स्त्री॰ दुर्गायाम् ॥ पतिप्रियायाम् । सुप्रियायाम् ॥ शालिपर्ण्याम् ॥ वनमल्लयाम् ॥ हरिद्रायाम् ॥ सुवर्णकदल्याम् । चम्पककदल्याम् । चम्पाकेला॰ इ॰ भा॰ प्र॰ ॥ नीलदूर्वायाम् ॥ प्रियङ्गौ ॥ कस्तूर्याम् ॥ तुलस्याम् ॥ कैवर्त्तिकायाम् ॥ शोभनम् भगं ऐश्वर्यं अस्या: ॥

सुभगासुत: । पुं॰ सौभागिनेये ॥ सुभगाया: सुत: ॥

सुभङ्ग: । पुं॰ नारिकेलवृक्षे ॥

सुभद्र: । पुं॰ विष्णौ । राजभेदे ॥ त्रि॰ सुमङ्गलयुक्ते ॥

सुभद्रक: । पुं॰ विमाने । बिल्ववृक्षे ॥

सुभद्रा । स्त्री॰ श्रीकृष्णभगिन्याम् ॥ घृतमण्डायाम् ॥ श्यामालतायाम् ॥ काश्मर्याम् । गम्भार्याम् ॥

सुभद्राणी । स्त्री॰ त्रायन्त्याम् । बटुना इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

सुभद्रिका । स्त्री॰ दुर्गायाम् ॥

सुभद्रेश: । पुं॰ अर्ज्जुने ॥

सुभानु । पुं॰ वत्सरविशेषे ॥ तत्फलं यथा । सुभिक्षं क्षेममारोग्यं विग्रहस्तुनिरुपद्रवम् । व्यवहारोभवेदृष्ट: सुभानौदेवपूजिते ॥ १० ॥

सुभाषित: । पुं॰ बुद्धे ॥ न॰ सुवचने ॥ हितोपदेशवचने ॥ यथा स्वर्गापवर्गसिद्ध्यर्थं भाषितं यत्सु

शोभनम् । वाक्यंमुनिषरै : शांते स्तद्विज्ञेयं सुभाषितमिति ॥
सुभिक्ष : । त्रि॰ सुलभभैक्षद्रव्ये ॥ सुलभभैक्षयुक्तकालादौ ॥
सुभिक्षा । स्त्री॰ धातृपुष्पाम् ॥ शोभनायाम् ॥ भिक्षायाम् ॥ त्रि॰ लब्धान्ने ॥ सुष्ठुभिक्ष्यते॰ । भिक्ष याञ्चादौ । घञ् ॥
सुभीरव : । पुं॰ पलाशवृक्षे ॥
सुभू : । त्रि॰ सुजन्मनि ॥
सुभूता : स्त्री॰ चैलोक्यात्मन : कौशक्षोदरभाने ॥ भूतिमंञ्जिरोश्च रकुबेरादिभिरधिष्ठितत्वात् ॥
सुभूतिक : । पुं॰ बिल्ववृक्षे ॥
सुभूम : । पुं॰ कार्त्तवीर्ये ॥
सुभृशम् । अ॰ गाढमित्यर्थे ॥
सुभ्राता । त्रि॰ स्निग्धभ्रातरि । शोभन : स्निग्धोभ्राता यस्य स : । नद्यृतश्चेतिकप् तुनभवति : वन्दिते भ्रातुरितिनिषेधात् ॥
सुभ्रू : । स्त्री॰ योषिति ॥ त्रि॰ शोभनभ्रूविशिष्टे ॥
सुमम् । न॰ पुष्पे ॥
सुमङ्गलम् । न॰ पुष्पादिद्रव्ये ॥ त्रि॰ सदाचारे ॥ अतिशयधर्मवति ॥
सुमङ्गला । स्त्री॰ वायसोल्याम् ॥ अइन्मातरि ॥
सुमत : । त्रि॰ अनुमते । सुन्दरज्ञानविषये ॥

सुमति : । पुं॰ भरतात्मजे ॥ वसाई द्विशेषे । भूताई द्विशेषे ॥ स्त्री॰ शोभनमतौ : विष्णुयशस : पत्न्याम् । कल्किमातरि ॥ त्रि॰ सुबुद्धौ । निपुणे ॥
सुमदन : । पुं॰ आम्रवृक्षे ॥
सुमदात्मजा । स्त्री॰ स्वर्गनिन्दायाम् । अप्सरसि ॥
सुमधुर : । पुं॰ जीवशाके ॥ न॰ अत्यर्थमधुरवाक्ये । सान्त्वे ॥ त्रि॰ अतिशयमधुररसयुक्ते ॥
सुमन : । पुं॰ गोधूमे ॥ सुष्ठुमन्यते । मनज्ञाने ; अच् । धत्तूरे । त्रि॰ मनोहरे ॥
सुमन : पत्रिका । स्त्री॰ जातीपत्र्याम् जावित्री॰ इ॰ भा॰ प्र॰ ।
सुमन : फलम् । न॰ जातीफले । पुं॰ कपित्थवृक्षे ॥
सुमना : । पुं॰ देवे । सुरे । धीरे । पण्डिते ॥ शोभनं मनोयस्य स : ॥ पूतीकरञ्जे । महाकरञ्जे ॥ निम्बे ॥ गोधूमे ॥ देवप्रायेणायमभूमि ॥ त्रि॰ प्रशस्तमनसि ॥
सुमना : स्त्री॰ सुमनस : स्त्री॰ भूम्नि॰ पुष्पे ॥ सुमना : पुष्पमोलत्यो : स्त्रियांमितिमेदिन्यादेरेकत्वम् । वीश्यास्मशानसुमनाबवहत्ज नीयेति श्लोकोंश्च ॥ स्त्रिय : सुमनस :

पुष्पमप्रसूनकुसुमंसुममित्यमरो क्तेः । भूम्निस्त्रियः सुमनसइति रत्नकोशात्स्त्वबहुत्त्वमपि ॥ सुष्ठुम न्यतेऽभिः । मन० । असुन् ॥ यद्वा । शोभनंमनोऽस्याम् ॥ मलप त्याम् ॥

सुमनः । न० पुष्पे ॥ पुष्पंसुमनः कुसुममितिनाममाला । अप्रत्त्वाद्ये येर्ष्वपिसुमनसोतिप्रयोगदर्शनात्क्ली वत्वेऽनुकूलः । क्लीबत्वंछान्दस मित्यन्ये ॥

सुमना । स्त्री० मालत्याम् । जातीपु ष्पवृक्षे । अस्त्रीलोतिभाष्यप्रसिद्ध- सुमनायावपत्योतिसुत्तेदृष्ट नाद्धावन्तापि ॥

सुमनोरजः । न० परागे ॥ सुमनसां रजः ॥

समन्तु : । पुं० मुनिविशेषे । अथर्वा ङ्गिरसान्धारकेव्यासशिष्ये ॥

सुमन्त्रः । पुं० कल्किदेवस्यज्येष्ठ भ्रातरि । यथा कल्कोर्ज्येष्ठास्त्रयः शूराः कविप्राज्ञसुमन्त्रकाः । ता तमातृप्रियकरागुरुविप्रप्रतिष्ठिता इतिकल्किपु० ९८०यः ॥ दशरथ भूपतेः सारथौ ॥

सुमन्त्रा । स्त्री० दुर्गायाम् ॥

सुमर्षण : । त्रि० सुसहे ॥ सुखे नमृष्यते । मृष० । भाषायांशा सियुधीत्यादिनाखलर्थेयुच् ॥

सुमालतिका । स्त्री० वर्णवृत्तविशेषे ॥ यदाजगणौभवेदमलस्तु ; फ ग्गौवितनोतिसुमालतिकोति ॥ य था । मनोजमरेणविषमशरेण । भ वादिनतेनभवद्दयितेन ॥

सुमित्र : । पुं० ईश्वरे ॥ सुष्ठुमि त्रंजीवपक्षिणः सखा ॥ हनाङ्क मृपितरि । कृष्णकुवंशीयदृढला न्वयेसुरथराजपुत्रे ॥ न० हिते ॥

सुमित्रभूः । पुं० जिनचक्रवर्त्तिवि शेषे । सगरे ॥

सुमित्रा । स्त्री० लक्ष्मणशत्रुघ्नयोर्ज नन्याम् । दशरथराजपत्न्याम् । लक्ष्मणप्रसाम् ॥

सुमित्रानन्दवर्द्धनः । पुं० लक्ष्मणे ॥ सुमित्रायाआनन्दंवर्द्धयति । नंद्या दित्वाल्ल्युः ॥

सुमुख : । पुं० गरुडात्मजे ॥ नाग विशेषे ॥ शाकप्रभेदे ॥ पण्डिते ॥ हेरम्बे ॥ वनवर्वरिकायाम् ॥ बर्वरे सितार्जके ॥ प्राग्दक्षिणपश्चिमद्वा रग्रहे ॥ भगवतिवासुदेवे ॥ शोभ नंमुखमस्य ॥ न० नखक्षतविशेषे ॥ उत्तमास्ये ॥ त्रि० पण्डिते । म नोज्ञे सुन्दरे ॥ सुन्दराननविशि ष्टे । सुन्दरवदने ॥

सुमुखा । स्त्री० तार्क्ष्यवध्वाम् ॥

सुमुखी । स्त्री० देव्यन्तरे ॥ तार्क्ष्यव ध्वाम् । त्रिष्टुप्छन्दो ११ भेदे ॥

नजजलगैर्गदिता सुमुखी । यथा । तरणिसुतातटकुञ्जगृहे वदनविधुस्मितदीधितिभिः । तिमिरमुदस्य मुखं सुमुखी हरिमवलोक्य चुचुम्ब चिरम् ॥ सुन्दरवदनायाम् ॥ स्वाङ्गाच्चोपसर्जनादसंयोगोपधादिति ङीष् ॥

सुमुष्टिः । पुं॰ विषमुष्टिक्षुपे । डोडिकायाम् ॥

सुमूलः । पुं॰ श्वेतशोभाञ्जने ॥

सुमूलकम् । न॰ गर्जरे ॥

सुमूला । स्त्री॰ शालपर्ण्याम् ॥ पृश्निपर्ण्याम् ॥

सुमेखलः । पुं॰ मुञ्जे ॥ त्रि॰ शोभनमेखलायुक्ते ॥

सुमेधाः । स्त्री॰ ज्योतिष्मत्याम् । त्रि॰ सुबुद्धौ । विदुषि । शोभना मेधा प्रज्ञा यस्य सः । नित्यमसिच् प्रजामेधयोरित्यसिच् समासान्तः ॥

सुमेरुः । पुं॰ पर्वतविशेषे । मेरौ । हेमाद्रौ । रत्नसानौ । सुरालये । मिनोति क्षिपति॰ उच्चत्वाज्ज्योतींषि । डुमिञ् प्रक्षेपणे । मिपीभ्यां रुः । सुमेरुरित्युपसर्गान्तरनिवृत्त्यर्थम् ॥

सुम्नम् । न॰ सुखे ॥

सुम्पलुराठः । पुं॰ कर्पूरके ॥

सुम्भः । पुं॰ देशविशेषे । असुरभेदे ।

सुष्यम् । न॰ रज्जौ । सुपूजितं मौ



यति । मौञ्जगव्याम् । एरच् । बाहुलकाद्यण् ॥ सुमेपुष्ये साधुर्वा । तत्र साधुरिति यत् ॥

सुयन्त्रितः । त्रि॰ शास्त्रीयनियमिते विप्रादौ ॥

सुयामुनः । पुं॰ वत्सराजे । प्रासादे ॥ अद्रिविशेषे ॥ अच्युते । श्रीकृष्णे ॥ शोभना यमुनासम्बन्धिनः परिवेष्टारोऽस्य ॥ यामुनाः परिवेष्टारः पद्मासनादयः शोभना यस्येति वा ॥

सुयोजितः । त्रि॰ नियुक्ते ॥

सुयोधनः । पुं॰ दुर्योधने । सुखेन युध्यते सः सुयोधनः । भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच् ॥

सुरः । पुं॰ अमरे । निर्जरे । देवे । सुरति । षुर प्रसवैश्वर्ययोः । तुदादिः । इगुपधेति कः ॥ यद्वा । क्षीरसमुद्रोत्था सुरा॰ सा अस्ति॰ अस्य त्वर्थे॰ अर्श आद्यच् ॥ सुरापरिग्रहाद्वा सुरः । तथा चार्षे रामायणे । वरुणस्य ततः कन्या वारुणी रघुनन्दन । उत्पपात ततस्तस्मान्मार्गमाणा परिग्रहम् ॥ १६ ॥ दितेः पुत्रा न तां राम जगृहुर्वरुणात्मजाम् । अदितेस्तु सुताः प्रीतास्तामगृह्णन्त वै सुराः ॥ २७ ॥ सुरापरिग्रहाद्देवाः सुराख्या इत्यभिविश्रुताः । अपरिग्रहणात्तस्या दैतेया

ह्यासुरास्तथैत्यार्थे रामायणे चादि काण्डे अमृतोत्पत्तिनामनिषट्चत्वारिंशदध्यायेऽप्युक्तः ॥ शोभनं राजते । राज्टोणि । अन्येभ्योपि दृश्यते ॥ यद्वा । सुनोति । षुञ् । सुसूधाञ्गृधिभ्यः क्रन् ॥

सुरकः । पुं॰ ऋषिविशेषे ॥ सुराद्वर्णोऽपि ॥ सुरायाश्चाङ्गाविलिकान ॥

सुरकरीन्द्रदर्पापहा । स्त्री॰ गङ्गायाम् ॥ यथा । भगीरथपथानुगासुरकरीन्द्रदर्पापहाममहेशमुकुटप्रभागिरिशिरः पताकासिता । सुरासुरनरोरगैरजभवाच्युतैः संस्तुताविमुक्तिफलदायिनीभगवतिस्वयं राजते ॥ इतिकल्किपुराणे २४ ऽध्यायः ॥

सुरकारुः । पुं॰ विश्वकर्मणि ॥

सुरकृता । स्त्री॰ गुडूच्याम् ॥

सुरक्तः । पुं॰ रक्तचन्दने । त्रि॰ मधुरकण्ठे ॥ अत्यन्तानुरक्ते ॥ शोभनरागयुक्ते ॥

सुरक्तकः । पुं॰ कोशाम्रे ॥ स्वर्णगैरिके ॥

सुरगणः । पुं॰ इन्द्रादिदेवगणे ॥

सुरगण्डः । पुं॰ रोगविशेषे । वरगण्डे ॥

सुरगुरुः । पुं॰ वृहस्पतौ ॥

सुरग्रामणीः । पुं॰ इन्द्रे ॥

सुरङ्गः । पुं॰ नागरङ्गे ॥ भूमौगुप्तमार्गात्मकोगर्तविशेषे ॥ न॰ पत्ताङ्गे । वक्तम् । इ॰ भाषा । पुं॰ । हिङ्गुले ।

सुरङ्गकृत् । पुं॰ खनकइतिहृतिहा सप्रसिद्धेभूमौगुप्तमार्गकर्त्तरि ॥

सुरङ्गदम् । न॰ पत्ताङ्गे ॥

सुरङ्गधातुः । पुं॰ गैरिके ॥

सुरङ्गयुक् । पुं॰ सुरङ्गयापहर्त्तरि । कुलम्भिले ॥

सुरङ्गा । स्त्री॰ लताविशेषे । कैवर्त्तिकायाम् । दुर्वाङ्कहायाम् ॥ भित्यंगभूखाते । सन्धौ । सौंध॰ इ॰ सुरङ्ग॰ इतिचभाषाप्रसिद्धे ॥ सुयङ्गुरव्यतेऽक्षामूरजसा । रङ्गरागे । इलर्थेतिधञ् । अजीःरितिकुर्वो ॥

सुरङ्गिका । स्त्री॰ मूर्वायां ॥

सुरङ्गी । स्त्री॰ काकनासायाम् ॥ रक्तशोभाञ्जने॰ इतिरत्नमाला ॥

सुरजः कलः । पुं॰ पनसवृन्ते ॥

सुरजनी । स्त्री॰ रात्रौ ॥

सुरज्येष्ठः । पुं॰ ब्रह्मणि ॥ सुराणांसुरेषुवाज्येष्ठः ॥

सुरञ्जनः । पुं॰ गोपदले । गुवाकवृक्षे ॥

सुरतम् । न॰ निधुवने । मैथुने ॥ सुरतंद्विविधम् । बाह्यमाभ्यन्तरञ्च । तत्रबाह्यंप्रेक्षणभाषणाश्लेषणचुम्बनादानेकविधम् । आभ्यन्तरञ्चासनादिभेदेनापि ॥ त्रि॰ दया

युक्ते ॥ अभिरते ॥

सुरतकण्टकः । पुं॰ रतकीले ॥ *

सुरतताली । स्त्री॰ दूत्याम् ॥ शिरःस्रजि ॥

सुरतरङ्गिणी । स्त्री॰ गङ्गायाम् ॥ यथा । आगतावतलरेवहिमानीसेव्यतां सुरतरङ्गिणी सदा । कृष्णवर्त्मनि गुणान् कलयन्तो जीवनेषु च वयन्त्यनुरागम् ॥

सुरतरुः । पुं॰ देवतरौ ॥ अश्वत्थद्रुमे ॥

सुरता । स्त्री॰ देवत्वे ॥ देवतायाम् ॥ पूर्वं भाषितलिङ्गम् । अपरञ्च देवास्तिलिति॰ देवशब्दीयपर ॥ यद्वा । सुराणां समूहः । गजसहायाभ्यां चेति वार्त्तिके॰ चकारादन्यथापि तल् ॥

सुरतोषकः । पुं॰ कौस्तुभमणौ ॥ त्रि॰ देवप्रीतिकारके ॥

सुरथः । स्वारोचिषेऽन्तरे चैत्रवंशसमुद्भवे नृपतिवरे । स च चन्द्रवंशीयः । यथोक्तं ब्रह्मवैवर्त्ते । श्रीनारायण उवाच । अत्रिर्ब्रह्मणः पुत्रस्तस्य पुत्रो निशाकरः । स चक्रत्वा राजसूयं द्विजराजोऽभवद्ध । गुरुपत्न्यास्तारायाञ्चाभूद्बुध सुत । बुधपुत्रश्चैत्रश्च तत्पुत्रः सुरथश्च स्मृतः ॥

सुरदारु । न॰ देवदारुणि ॥

सुरदीर्घिका । स्त्री॰ मन्दाकिन्याम् वियद्गङ्गायाम् ॥ सुराणां दीर्घिका ॰ वापीव ॥

सुरदुन्दुभिः । स्त्री॰ तुलस्याम् ॥ इ॰ रा॰ वट ॥

सुरद्रुमः । पुं॰ मन्दारादिदेवतरौ ॥ सुराणां द्रुमः ॥ देवनले ॥

सुरद्विट् । पुं॰ असुरे । पूर्वदेवे ॥ सुरान् द्वेष्टि । द्विष अप्रीतौ । सत्सूद्विषद्रुहदुहेत्यादिना क्विप् ॥

सुरधनुः । न॰ इन्द्रायुधे । शक्रधनुषि ।

सुरधूपः । पुं॰ धूनके ॥

सुरनदी । स्त्री॰ गङ्गायाम् ॥

सुरनन्दा । ) स्त्री॰ नदीविशेषे ॥
सुरनन्दिका । )

सुरनायकः । पुं॰ इन्द्रे ॥

सुरनालः । पुं॰ देवनाले । नलोत्तमे ।

सुरनिम्नगा । स्त्री॰ गङ्गायाम् ॥ सुराणां निम्नगा । अभ्रादि ।

सुरनिर्म्मम् । न॰ पवके ।

सुरपतिः । पुं॰ इन्द्रे । बलारातौ सुराणां पतिः ॥ आदिगुरुर्विकली ॰ ऽ । ॰ ॥ प्रथम नञ्चतुर्थप्रभेदे॰ ऽ । ऽ ॰ ॥

सुरपत्तनम् । न॰ स्वर्गे ॥

सुरपथम् । न॰ व्योम्नि ॥

सुरपर्म्म । न॰ देवपर्व्वे ॥

सुरपर्णिकः । पुं॰ सुरपुन्नागे ॥

सुरपर्णिका । स्त्री० पुन्नागे ॥
सुरपर्णी । स्त्री० पलाश्याम्
सुरपादप : । पुं० कल्पवृक्षे ॥
सुरपुन्नाग : । पुं० पुन्नागभेदे । न० मेरौ ॥
सुरपुरी । स्त्री० अमरावत्याम् ॥
सुरप्रिय : । पुं० अगस्त्यवृक्षे ॥
सुरप्रिया । स्त्री० जात्याम् ॥ स्वर्णरम्भायाम् ॥
सुरभि: । पुं० चम्पके ॥ वसन्ते ॥ जातीफले ॥ सुगन्धौ ॥ चैत्रमासे ॥ कणगुग्गुलौ ॥ धूनके ॥ कदम्बवृक्षे ॥ वकुलद्रुमे ॥ गन्धतृणे ॥ शमीवृक्षे ॥ न० स्वर्णे ॥ गन्धोपले । गन्धपाषाणे ॥ साधुगन्धे ॥ सुन्दरे । स्त्री० शल्लक्यामोषधौ । गजभक्षायाम् ॥ मातृभिदि ॥ मुरायाम् ॥ गवि । रुद्रजटायाम् ॥ नवमालिकायाम् । नवाल्याम् ॥ जात्याम् । चपेतराचक्याम् । तुलस्याम् ॥ वर्वरीतुलस्याम् ॥ चमायाम् । मेदिन्याम् ॥ सुरायाम् । गवांमातरि ॥ यथा । गवामधिष्ठातृदेवीगवामाद्यागवाम्प्रसू : । गवाम्प्रधान : सुरभि : गोलोकेसासमुद्भवा ॥ त्रि० सुगन्धौ ॥ कान्ते । शोभने ॥ विख्याते ॥ सचिवे ॥ धीरे ॥ सुष्ठुरभते० रम्यतेवा० सुष्ठुरभन्ते रभसयुक्ताभवन्त्यनया । रभरामर्थे । सर्वधातुभ्यइन् । आगमानित्यत्वान्ननुम् ॥
सुरभिका । स्त्री० स्वर्णकदल्याम् ॥
सुरभिगन्धा । स्त्री० मालत्याम् । चंबेली० इ० भा० प्र० ॥
सुरभिगन्धि : । त्रि० शोभनगन्धविशिष्टे । सुरभिर्गन्धोयस्य । गन्धस्येदुत्पूतिसुसुरभिभ्य : ॥
सुरभित : । त्रि० वासिते ॥
सुरभित्रिफला । स्त्री० सुगन्धित्रिफलायाम् ॥
सुरभित्वक् । स्त्री० बृहदेलायाम् ॥
सुरभिदारु : । पुं० सरलवृक्षे ।
सुरभिपत्रा । स्त्री० जम्ब्वाम् ॥ राजजम्बूवृक्षे ॥
सुरभिवल्कलम् । न० गुडत्वचि ॥
सुरभिस्रवा । स्त्री० शल्लक्याम् ॥
सुरभी । स्त्री० चामोदमाने ॥ सुरभौ । गवांप्रसवां ।
सुरभीरसा । स्त्री० शल्लकीवृक्षे ॥
सुरभूरुह: । पुं० देवदारुणि ॥ कल्पवृक्षादौ ॥
सुरमृत्तिका । स्त्री० तुवर्याम् । काच्याम् । सौराष्ट्रमृत्तिकायाम् । फटकरी० इ० भा० ॥
सुरमेदा । स्त्री० महामेदायाम् ।
सुरराज : । पुं० इन्द्रे । सुराणांराजा । टच् ॥
सुरर्षि : । पुं० नारदादौ ॥ नारदा

या: सुरर्षयइत्यमर : । सुराणामेव ह्यादिपुत्त्वात्दृषयश्च ॥ षष्ठीसमासोवा ॥ ब्रह्मर्षिदेवर्षिराजर्षिमह र्षिपरमर्षिकाण्डर्षिश्रुतर्षिभेदात् सप्तप्रकाराकृषय : । तत्रनारदादय : सुरर्षय : ॥

सुरलता । स्त्री॰ महाज्योतिष्मत्याम् ।

सुरला । स्त्री॰ पुरन्दरायाम् । गङ्गायाम् ॥

सुरलोक : । पुं॰ द्यवि । दिवि । स्वर्गे ॥ सुराणांलोक : ॥

सुरवर्त्म । न॰ खे । आकाशे ॥ सुराणांवर्त्म । सुरानभूमिस्पृशोन्तरीक्षगामित्वेन ॥

सुरवल्लभा । स्त्री॰ श्वेतदूर्वायाम् ।

सुरवल्ली । स्त्री॰ तुलस्याम् ॥

सुरवैरी । ) सुरशत्रु : । ) पुं॰ असुरे । दानवे ॥

सुरशाखी । पुं॰ कल्पवृक्षे ॥

सुरश्रेष्ठ : । पुं॰ ब्रह्मणि ॥

सुरश्रेष्ठा । स्त्री॰ ब्राह्म्याम् ॥

सुरस : । पुं॰ नीरसे ॥ सिन्धुवारे ॥ न॰ पर्णासे ॥ बोले ॥ त्वचे ॥ दालचीनीतिभा॰ प्र॰ वल्कले ॥ गन्धतृणे ॥ त्रि॰ स्वादौ ॥ शोभनोरसोऽस्य ॥

सुरसख : । पुं॰ इन्द्रसखिवे ॥ गन्धर्वे ॥

सुरसद्म । न॰ स्वर्गे ॥

सुरसम्भवा । स्त्री॰ श्वादिस्वभद्रायाम् ॥

सुरसरित् । स्त्री॰ गङ्गायां ॥

सुरसर्षप : । पुं॰ देवसर्षपे ॥

सुरसा । स्त्री॰ रास्नायाम् ॥ नागमातरि ॥ तुलसीभेदायाम् । बर्बरीतुलस्याम् । तुलस्याम् । पर्णासे ॥ सुरसास्त्रीतुपर्णासे । इति शब्दरत्नावली ॥ पर्णासितुनपुंसकमितिमुद्राङ्कितामेदिनी । पर्णासिपुंनपुंसकमितिहस्तलिखितामेदिनी । सुरसस्तुविषु स्वादौपर्णासिमनपुंसकमितिचकल्याणिन्मेदिन्यांपाठ : पर्णासिसुरसास्त्रियामितितुवरत्र : ॥ ब्राह्म्याम् ॥ महाशतावर्याम् ॥ कपित्थपर्ण्याम् ॥ मिश्रेयायाम् ॥ काश्मीरप्रसिद्धायांगन्धपत्राद्यामितिभावप्रकाश : ॥ भारतवर्षस्थनदीप्रभेदे ॥ चतिधृतिछन्द : १८ प्रभेदे ॥ नौभ्नौयौनौगुरुकर्ण स्वरमुनिकरण राहसुरसाम् । यथा । कामक्रीडासक्तोमधुसमयसमारम्भसानन्दकान्तकुञ्जे विहरणकुतुकाकृष्टहृदय : । शौविन्दोवल्लवीनामधररसमधाम प्राप्य सुरसांमद्य पौयूषपानप्रचयकृतसुखंव्यसमरदसी ॥ शोभनोरसोयस्या : ॥

सुरसाष्ट : । पुं॰ बुधमण्डविशेषे ॥

पञ्चम : ॥ ततो धेनुशतं दद्याद्ब्राह्मणानाञ्च भोजनम् । इति गारुडे २२६ अध्याय : ॥ तत्पाने शुक्रशापो यथा । सुरापानं ह्यज्ञानात् प्राप्य विद्यां सञ्जीवनीमथ सर्वमस्यातिघोरम् । दृष्ट्वा कचस्यापि तथा विरूपं पीतं तथा सुरया मोहितेन ॥ समन्युरुत्थाय महानुभावस्तदोशना विप्रहितं चिकीर्षु । काव्य : स्वयं वाक्यमिदं जगाद सुरापानं प्रति निर्वेदात्मक : ॥ यो ब्राह्मणोऽद्य प्रभृतीह कश्चिन्मोहात् सुरां पास्यति मन्दबुद्धि : । अपेतधर्मा ब्रह्महा चैव स स्यादस्मिन् लोके गर्हित : स्यात् परे च ॥ मया चेमां विप्रधर्मोक्तिसीमां मर्यादां वै स्थापितां सर्वलोके सन्तो विप्रा : शुश्रुवांसो गुरूणां देवा दैत्याश्चोपशृण्वन्तु सर्वे ॥ इति मात्स्ये २५ अध्याय : ॥ ब्राह्मणस्य चिरविशां चिविधसुरापानप्रायश्चित्तादि यथा । सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् । तया स काये निर्दग्धे मुच्यते किल्बिषात्तत : ॥ गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा । पयो घृतं वा मरणाद्गोशकृद्रसमेव वा ॥ कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि । सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजी ॥ सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्वा न पातव्या द्विजोत्तमै : ॥ यक्ष : रक्ष : पिशाचान्नं मद्यं मांसं सुरासवम् । तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हवि: ॥ अमेध्ये वा पतेन्मत्तो वैदिकं वाप्युदाहरेत् । अकार्यमन्यत् कुर्याद्वा ब्राह्मणो मदमोहित : ॥ यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत् । तस्य व्यपैति ब्राह्मण्यं शूद्रत्वञ्च स गच्छति ॥ एषा विचित्राभिहिता सुरापानस्य निष्कृति : इति मानवे ११ अध्याय : ॥ अत्रापीश्वर : कुलार्णवे । पेयं मद्यं पलं खाद्यं समालोक्यं प्रियामुखम् । इत्येवाचरणं जप्यं परं प्राप्यं परं पदम् ॥ गुरुकारुण्यसुलभमीदृगङ्कुलदर्शनम् । लब्ध्वा एव जानन्ति नेतरे भुक्तिमुक्तिदम् ॥ गुरूपदेशरहिता मद्यान्नाद्यं वदन्ति च । मोहयन्ति जनान् कांश्चित् स्वयमप्येव विमोहिता : ॥ दुराचारपरा : केचिद्वस्तुयन्ति हि पामरा : । यथाभूतो भवेत् स्वामी सेवका : स्युस्तथाविधा : ॥ बहव : कौलिकं धर्मं मिथ्याज्ञानविडम्बका । स्वबुद्ध्या कल्पयन्तीत्थं पारम्पर्यविवर्जिता : ॥ मद्यपानेन मनुजा यदि सिद्धिं लभन्ति चेत् । मद्यपानरता: सर्वे सिद्धिं यान्तु समीहिताम् ।

मांसभक्षणमात्रेण यदि पुण्यागतिर्भवेत् । लोके मांसाशिनः सर्व्वे पुण्यभाजो भवन्ति च ॥ स्त्रीसम्भोगेन देवेशि यदि मोक्षं लभन्ति वै । सर्व्वेऽपि जन्तवो लोके मुक्ताः स्युः स्त्रीनिषेवणात् ॥ कुलमार्गो महादेवि न मया निन्दितः क्वचित् । आचाररहिता ये च निन्दितास्ते न चेतरे ॥ अन्यथा कौलिके धर्म्मे ह्याचारः कथितो मया । विचरन्त्यन्यथा देवि मूढाः पण्डितमानिनः ॥ कृपाणधारागमनाद्व्याघ्रकण्ठावलम्बनात् । भुजङ्गधारणान्नूनमशक्यं कुलवर्त्तनम् ॥ अयापानन्तु देवेशि सुरापानं तदुच्यते । तन्महापातकं ज्ञेयं वेदादिषु निरूपितम् ॥ अनाघ्रेयमनालोक्यमस्पृश्यञ्चाप्यपेयकम् । मद्यं मांसं पशूनान्तु कौलिकानां महत्फलम् ॥ अमेध्यानि द्विजातीनां मद्यान्येकादशैव तु । द्वादशन्तु सुरामद्यं सर्व्वेषामधमं स्मृतम् ॥ सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ सुरादर्शनमात्रेण कुर्य्यात् सूर्य्यावलोकनम् । तद्गन्धाघ्राणमात्रेण प्राणायामत्रयं चरेत् ॥ जानुभ्यां भवेत्स्नानं नौन्यभ्युपवसेद्द्विजः । ऊर्द्ध्वं नाभेस्त्रिरात्रन्तु मद्यस्य स्पर्शने विधिः ॥ सुरापाणे कामकृते ज्वलन्तीं

तां विनिःक्षिपेत् । मुखे तया विनिर्दग्धो मृतः शुद्धिमवाप्नुयात् ॥ मद्यस्पर्शादिदोषस्य प्रायश्चित्तमिति स्मृतम् । अविधानेन यो हन्यादात्मार्थं प्राणिनं प्रिये ॥ निवसेन्नरके घोरे दिनानि पशुरोमभिः । सम्मतानि दुराचारस्तिर्य्यग्योनिषु जायते ॥ अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्त्ता चोपहर्त्ता च खादिता ऽष्टौ च ते समाः ॥ धनेन क्रायिको हन्ति खादिता चोपभोगतः । घातको वधबन्धाभ्यामित्येष त्रिविधो वधः ॥ मांसस्य दर्शनं कृत्वा सुरादर्शनवच्चरेत् । तस्मादविधिना मद्यं मांसं सेवेत न क्वचित् ॥ विधिवत्सेविते देवि तरसा त्वं प्रसीदसि । नाशयत्यविधानस्थं सत्यमेतद्वरानने ॥ तृणं वाप्यविधानेन च्छेदयेन्न कदाचन । विधिना गां द्विजं वापि हत्वा पापैर्न लिप्यते ॥ बहुनाऽत्र किमुक्तेन सारमेकं शृणु प्रिये । जीवन्मुक्तिसुखोपायः कुलशास्त्रेषु गोपितः ॥ यन्मुद्रोः फलं देवि कनकाब्जवसौरभम् । कुलज्ञोऽप्यूर्द्धवितृष्णाच्च जन्मनस्तत्त्वादनुत्तमः ॥ कुलशास्त्राणि सर्व्वाणि मयैवोक्तानि पार्व्वति । प्रमाणानि न सन्देहो न हन्तव्यानि हेतुभिः ॥ देवताभ्यः पितृभ्यश्च मधुवाता ऋतायते । सा

द्विधयामद्विधया। क्षीरं सर्पिर्मधूदकम् ॥ हिरण्यपात्रं स्याद्दीति। बध्नन्ते पुरुषं पशुम्। सद्योदीपयती स्वादा : प्रमाणं श्रुतय : प्रिये ॥ इतिश्रीकुलार्णवे द्वितीयोल्लास : ॥ श्रीमहानिर्वाणतन्त्रे पिर्णौसदाशिवाज्ञया। सुराद्रवमयीताराजीवनिस्तारकारिणी। जननीभोगमोक्षाणांनाशिनीविपदांरुजाम् ॥ दाहिनीपापसङ्घानांपाविनीजगतां प्रिये। सर्वसिद्धिप्रदाज्ञानबुद्धिविद्याविवर्द्धिनी ॥ मुक्तैर्मुमुक्षुभि : सिद्धै : साधकै : क्षितिपालकै : । सेव्यतेसर्वदादेवैरात्मस्वाभीष्टसिद्धये ॥ सम्यग्विधिविधानेनसुसमाहितचेतसा। पिबन्तिमदिरांमर्त्याअमर्त्याएवतेक्षितौ ॥ प्रत्येकतत्त्वस्वीकाराद्विधिनाशक्तिवीन र : । नजानेपञ्चतत्त्वनांसेवनात् किंफलम्भवेत् ॥ इयञ्चेद्वारुणीदेवी निपीताविधिवर्ज्जिता। नृणांविनाशयेत्सर्वंबुद्धिमायुर्यशोधनम् । अत्यन्तपानान्मद्यस्यचतुर्वर्गप्रसाधिनी। बुद्धिर्विनश्यतिप्रायो। लोकानांमत्तचेतसाम् ॥ विभ्रान्तबुद्धेर्मनुजात्कार्याकार्यमजानत : । स्वाऽनिष्टम्परानिष्टंजायतेऽस्मात्पदेपदे ॥ अतोन्रपेणावक्तशोमद्यं मादकवस्तु। अत्यासक्तजनान्कायधनदण्डेनशोधयेत् ॥ सुराभेदाद्वाक्तिभेदान्न्यूनेनाप्यधिकेनवा। देशकालविभेदेनबुद्धिभंशोभवेन्नृणाम् ॥ अतएवसुरापानादतिपानंमलक्ष्यते। सखलन्वाक्पाणिपदद्दृग्भिरतिपानंविचारयेत् ॥ नेन्द्रियाणिवशेयस्यमदविह्वलचेतस: । देवतागुरुमर्यादोल्लङ्घिनोभयरूपिणः ॥ निखिलानर्थयोग्यस्यपापिनः शिवघातिन : । दक्षिणांहरेदर्थान्स्नाडयेतस्यपार्थिव : । विचलत्पादवाक्पाणिभ्रान्तम्मत्तमुन्नतम्। तमुग्रंयातयेद्राजाद्रविणस्यापहरेत्तत : । अपवाग्वादिनम्मत्तंलज्जाभयविवर्ज्जितम्। धनादानेनतंशास्तात्मनाप्रीतिकरेनृप : ॥ शताभिषिक्त : कौलश्चेदतिपानातकुलेश्वरि। पशुरेवसमन्तव्य : कुलधर्मवहिष्कृत : । पिबन्नतिशयंमद्यंशोधितंवाप्यशोधितम्। त्याज्योभवतिकौलानांदण्डनीयोपिभूभृत : ॥ ब्राह्मीभार्य्यांसुरांमत्ता : पाययन्तोद्विजातय : । शूद्रायुर्भार्य्ययासार्द्धमपञ्चाहंकणभोजनात् ॥ असंस्कृतसुरापानात्कृच्छ्रंदुपवसंस्त्र्यहम्। भुक्त्वाप्यशोधितंमांसमुपवासद्वयंचरेत् ॥ असंस्कृतेमीनमुद्रेखादयन्नुपवसेदह : । अवैधंपञ्चमंकुर्वन्नराज्ञो

दण्डेनशुद्ध्यति ॥ अपिच । वीर
घातीस्वथापायीवीराङ्गनागमस्त-
था । स्तेयीमहापातकिनस्तत्संस
र्गीचपञ्चमः ॥ कुलवर्त्मकुलद्रव्यं
कुलसाधकमेवच । येनिन्दन्तिदुरा
त्मानस्तेगच्छन्त्यधमांगतिम् ॥ नृ
त्यन्तिरुद्रडाकिन्योनृत्यन्तिरुद्रभैर
वाः । मांसास्थिचर्वणानन्दाः सु
राकौलद्विषांनृणाम् ॥ दयालवः
सत्यशीलाः सदापरहितैषिणः
तान्गर्हयन्तोनरकान्निष्कृतिंया-
न्तिनकश्चित्इति ॥ सुरामांसादि
भिर्देवीगङ्गापिसुप्रसीदति । अत्र
प्रमाणंसीतायाः वाक्यंसुस्पष्टमु
च्यते । तथाहि । मध्यन्तुसमनुप्रा
प्यभागीरथ्यास्त्वऽनिन्दिता । वैदे
हीप्राञ्जलिर्भूत्वातांनदीमिदमब्र-
वीत् ॥ पुत्रोदशरथस्यायंमहाराजस्य
धीमतः । निदेशंपालयत्वेषगङ्गेत्व
दभिरक्षितः । चतुर्दशहिवर्षाणि
समग्राण्युष्यकानने । भ्रात्रासहम
याचैवपुनः प्रत्यागमिष्यति ॥ त
तस्त्वांदेविसुभगेक्षेमेणपुनरागताय
क्ष्येप्रमुदितागङ्गेसर्वकामप्रदायिनि
॥ त्वंहित्रिपथगेदेविब्रह्मलोकंसमी
क्ष्यसे । भार्याचोदधिराजस्यलोके-
ऽस्मिन्सम्प्रदृश्यते ॥ तांत्वांदेविनम
स्यामिप्रशंसामिचशोभने । प्राप्त
राज्येनरव्याघ्रेशिवेनपुनरागते ॥

गवांशतसहस्रञ्चवस्त्राण्यन्नञ्चशोभ
ने । ब्राह्मणेभ्यः प्रदास्यामितव
प्रियचिकीर्षया ॥ सुराघटसहस्रे
णमांसभूतौदनेनच । यक्ष्येत्वांप्रय
तादेविपुरींपुनरुपागता ॥ यानि
त्वत्तीरवासीनिदैवतानिचसन्तिहि
। तानिसर्वाणियक्ष्यामितीर्थान्याय
तनानिच ॥ पुनरेवमहाबाहुर्मया
भ्रात्राचसङ्गतः । अयोध्यांवनवा
सात्तुप्रविशत्त्वनघोऽनघे ॥ तथा
सम्भाष्यमाणासासीतागङ्गामनिं-
दिता । दक्षिणादक्षिणन्तीरंक्षि
प्रमेवाभ्युपागमत् ॥ इत्यार्षेरामा
यणे अयोध्याकाण्डेद्विपञ्चाशत्-
सर्गः ॥ पुनश्च । कालिन्दीमध्य
मायातासीतात्वेनामवन्दत । स्व
स्तिदेवितरामित्वांपारयेन्मेपतिव्र
तम् ॥ यक्ष्येत्वांगोसहस्रेणसुराघ
टशतेनच । स्वस्तिप्रत्यागतेरामेपु
रीमिक्ष्वाकुपालिताम् ॥ कालिन्दी
मथसीतातुयाचमानाकृताञ्जलिः ।
तीरमेवाभिसम्प्राप्तादक्षिणांवरद-
क्षिणी ॥ इत्यार्षेरामायणेअयो
ध्याकाण्डेपञ्चपञ्चाशत्सर्गः ॥

सुराकरः । पुं॰ नारिकेलद्रुमे ॥ म
द्योत्पत्तिस्थाने ॥ यथा । आकराः
शुद्धयः सर्ववर्जयित्वासुराकर-
म् ॥

सुराग्र्यम् । न॰ अमृतेसुराणामग्र्यं

श्रेष्ठम् ॥

सुरा[illegible] । स्त्री॰ देवपत्न्याम् ॥ अप्स[illegible]

सुरा[illegible] : । पुं॰ बृहस्पतौ ॥ सुराणामाचार्यः ॥

सुराजक : । पुं॰ भृङ्गराजे ॥

सुराजा । पुं॰ शोभननृपे ॥

सुराजीवी । पुं॰ शौण्डिके ॥

सुरानन्द : । पुं॰ हरौ । सुराम् आनन्दयत्यमृतप्रदानेनेतितया । क्रौ[illegible] सुरया॰ सुराणांवानन्दोऽस्य ॥

सुराप : । त्रि॰ मद्यपे । सुरापानकर्त्तरि ॥ सुरांपिबति । पा॰ । गापोष्टगित्यत्र॰ पिबतेः सुराशी॰ध्वोरितिवार्त्तिकेनटक् । टित्वात्स्त्रियांङीप् । सुरापी ॥ ब्रह्महाचायतेयश्चसुरापः स्वाथदन्तकः । सुवर्णहारीकुनखीदुश्चर्मागुरुतल्पगः ॥

सुरापगा । स्त्री॰ गङ्गायाम् ॥

सुरापाणम् । न॰ मद्यपाने ॥ सुरायाः पानम् अदन्तेश ॥ वाभावकरणयोरितिपक्षे णत्वम् ॥

सुरापाणा : । पुं॰ भूम्नि॰ प्राच्येषु । पूर्वदेशस्थेषु ॥ पीयतइतिपानम् । कर्मणिल्युट् । सुरापानंयेषाम् । पानन्देशे॰ इ॰ णत्वम् ॥

सुरापानम् । न॰ सुरापाणे । मद्यपाने ॥ सुरायाः पानम् । वाभा-



वकरणयोरितिपक्षे णत्वाभावः ॥ ब्रह्मोज्झतावेदनिन्दाकौटसाक्ष्यं सुहृद्वधः । गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानिषट् ॥

सुराभाग : । पुं॰ सुरायाम् । सुरायाअग्रभागे ॥

सुरामण्ड : । पुं॰ सुरायाअग्रभागे । कारोत्तरे ॥ सुराणामण्डः ॥

सुरारि : । पुं॰ दैत्ये । सुराणाम् अरिः ॥

सुरारिहा । ) सुरारिहन्ता । ) पुं॰ विष्णौ । श्रीहरौ ॥ सुरारीन्हन्ति । सुरारीणांहन्ता ॥

सुरार्हम् । न॰ हरिचन्दने ॥

सुरालय : । पुं॰ सुमेरुगिरौ ॥ स्वर्गे ॥ सुराणामालयः ॥ सुरायानिलये ॥

सुराश्रय : । पुं॰ इन्द्रे ॥

सुराष्ट्र : । पुं॰ देशविशेषे । सूरत॰ इ॰ भा॰ प्र॰ ॥ शोभनोपवर्त्तने ॥

सुराष्ट्रज : । पुं॰ कृष्णमुद्गे ॥ विषविशेषे ॥ न॰ तुवरिकायाम् । सौराष्ट्रमृदि ॥ सुराष्ट्रेजातम् । जनौ॰ । सप्तम्यांजनेर्डः ॥ त्रि॰ तद्देशजाते ॥

सुराष्ट्रजा । स्त्री॰ तुवरिकायाम् । सौराष्ट्र्याम् ॥ टाप् ॥

सुराह्व : । पुं॰ देवदारुवृक्षे ॥ मरुवके ॥ हरिद्रुवृक्षे ॥

सुरी । स्त्री० देवाङ्गनायाम् ॥ पुरः सुरीणांभयमकिवमानवी ॥

सुरुङ्ग : । पुं० शोभाञ्जने ॥

सुरुङ्गा । स्त्री० सुरुङ्गायाम् । सन्धिलायाम् । सन्धौ । सौध० द्व० प्र० खातविशेषे ॥

सुरुङ्गाहि : । पुं० सन्धिचौरे । कुजम्भिले ॥

सुरुक् । त्रि० अतिक्रमनीये ॥

सुरूप: । त्रि० शोभनरूपयुक्ते । सुन्दरे । रुचिरे । मनोज्ञे । मनोरमे । शोभनं रूपं यस्य स: ॥ विदुषि । विपश्चिति । न० तूले ॥

सुरूपा । स्त्री० भार्ग्याम् । शालपर्ण्याम् ॥ सुन्दर्याम् । रुचिरायाम् । मनोरमायाम् । शोभनंरूपंयस्या: ॥

सुरूहक : । पुं० गर्दभाश्वे । द्व० हि० चन्द्र : ॥

सुरेज्य : । पुं० वृहस्पतौ ॥

सुरेज्या । स्त्री० तुलस्याम् ॥

सुरेन्द्र : । पुं० इन्द्रे ॥

सुरेन्द्रजित् । पुं० गरुडे ॥ सुरेन्द्रं जयति । जि० । क्विप् । तुक् ॥ वृत्रजिदिति ॥

सुरेभ : । पुं० देवहस्तिनि ॥ शोभनशब्दे । न० रङ्गे । मृदङ्गे ॥

सुरेवट : । पुं० राजपूगे मुनिपूगे ।

सुरेश : । पुं० भगवति । विष्णौ ॥ शिवे ॥ सुराणामीश : स्वामी ।

सुरेशलोक : । पुं० ब्रह्मलोके ॥ यथा । नयचव कुण्ठकथासुधापगानसाधवोभागवतास्तदाश्रया : । नयच यज्ञेशमखामहोत्सवा : सुरेशलोकोपिनवैससेव्यतामितिदेवीभागवतं ॥

सुरेश्वर : । पुं० इन्द्रे ॥ शिवे । शङ्कराचार्य शिष्यविशेषे । वार्त्तिककारे ॥

सुरेश्वरी । स्त्री० दुर्गायाम् । मन्दाकिन्याम् ॥ सुराणामीश्वरी ॥

सुरेष्ट : । पुं० वकवृक्षे । शिवमल्लाम् ॥ शाले ॥ सुरपुन्नागे ॥

सुरेष्टा । स्त्री० ब्राह्म्याम् ॥

सुरोत्तम : । पुं० सूर्य्ये ॥ त्रि० देवश्रेष्ठे ॥

सुरोत्तर : । पुं० चन्दने ।

सुरोद : । पुं० सुरासिन्धौ । सुरासमुद्रे ॥ सुरा० उदकं यस्य । उत्तरपदस्येत्युदकस्योदादेश : ॥

सुलक्षण : । त्रि० शोभनलक्षणविशिष्टे ॥

सुलक्षणा । स्त्री० उमाया : सखीविशेषे ॥

सुलभ : । पुं० विष्णौ ॥ यथा । पत्रेषुपुष्पेषुफलेषुतोयेष्वक्रीतलभ्येषुसदैवसत्सु । भक्त्यैकलभ्ये पुरुषेपुराणे मुक्त्यै कथं नक्रियतेप्रयत्न : इति महाभारतम् ॥ त्रि० अनायासप्राप्ये । सुखेनलभ्यते० इति । ईष

ट्ठ : सुप्रितिलभे : खल् ॥

सुलभा स्त्री॰ तुलस्याम् ॥ धूम्रपत्रायाम् ॥ माषपर्ण्याम् ॥

सुललाट : । त्रि॰ शोभनभालविशिष्ट । ललाटेयस्य इश्यन्ते चतुस्त्रिद्व्येकरेखिकाइत्युक्तचतुर्लेखासौभाग्यविशिष्टे ॥

सुललितम् । न॰ मात्रावृत्तविशेषे ॥ द्विजवरयुगमिह रचय विलघुकगणमथकलय । सुललितकलितरसपदिसरसिजमुखिभवतियदि । अगतिविदितसुललितमितिवरफणिपतिरितिवदति ॥ यथा । प्रविचल कुवलयनयनजलनिधिकृतवरशयन । दितितनयनिवहदमनशमनविविधभयशमन । मयिवरमुपनयसुचिरमभिनवजलधररुचिर ॥ त्रि॰ अतिसुभगे ॥ सुकोमले ॥

सुलेखा । स्त्री॰ दुर्गायाम् ॥

सुलोचन : । पुं॰ श्रीकृष्णे ॥ शोभनं लोचनं नयनं ज्ञानं वास्य ॥ मृगे । हरिणे ॥ त्रि॰ शोभननेत्रविशिष्टे ॥ शोभनेलोचनेयस्य स : ॥

सुलोचना । स्त्री॰ सुनेत्रायाम् ॥ माधवराजपत्न्याम् ॥

सुलोमशा । स्त्री॰ काकजङ्घायाम् ॥ त्रि॰ शोभनलोमयुक्ते ॥

सुलोमा । स्त्री॰ मांसच्छदायाम् ॥ ताम्रवल्ल्याम् ॥

सुलोहकम् । न॰ पित्तले ॥

सुलोहित : । पुं॰ सुन्दररक्तवर्णे ॥ त्रि॰ तद्वति ॥

सुलोहिता । स्त्री॰ अग्निजिह्वाविशेषे ॥

सुवक्त्र : । पुं॰ वनवर्वर्याम् ॥ न॰ सुन्दराननेत्रि॰ तद्वति ॥

सुवचनम् । न॰ सुप्रलापे । शोभनोक्तौ ॥ शोभनं वचनम् ॥

सुवचा : । त्रि॰ वाग्मिनि ॥ सुष्ठुवक्ति । वच॰ । सर्वधातुभ्योऽसुन् ॥ यद्वा । मिथुनेऽसि : । उपसर्गविशिष्टोधातुर्मिथुनम् । तस्मात्सोपपदादोऽसि : । स्वरेभेद : ॥

सुवदन : । पुं॰ श्रीगणेशे । शोभनं वदनमस्य ॥ त्रि॰ सुन्दराननवति ॥ न॰ शोभनानने ॥

सुवदना । स्त्री॰ सुन्दराननविशिष्टायांनार्याम् ॥ कृतिच्छन्द : २॰ प्रभेदे ॥ ज्ञेयासप्ताश्वषड्भिर्मरभनययुताभ्लौग : सुवदना ॥ यथा । प्रत्याहृत्येन्द्रियाणित्वदितरविषयाज्ञ्यासायनयना॰ त्वांध्यायन्तीनिकुञ्जे परतरपुरुषं हर्षोत्थपुलका । आनन्दाश्रुप्लुताक्षीवसतिसुवदनायोगैकरसिका॰ कामारित्यक्तकामानमुनरकरिपोराधाममसखी ॥ सुष्ठुशोभनं वदनंयस्या : सा ॥

सुवन : । पुं॰ दिवानाथे । सूर्य्ये ॥ व
ह्नौ ॥ सूते॰ सूयतेवा । पुष्प्रादि
गर्भविमोचने । भूसुधूभ्रस्जिभ्य
श्छन्दसोतिक्युन् ॥
सुवया : । स्त्री॰ प्रौढायाम् ॥
सुवर्च्चक : । पुं॰ सर्ज्जिकाचारे ॥
सुवर्च्चला । स्त्री॰ सूर्य्यपत्नीविशेषे ।
मसृणायाम् । अतस्याम् ॥ ब्राह्म्या
म् ॥ आदित्यभक्तायाम् । हुलहु
ल॰ इ॰ प्र॰ शाके ॥ अस्यागुणा
यथा । सुवर्च्चलाहिमारूक्षास्वादु
पाकरसागुरु : । अपित्तलाकटु :
क्षाराविष्टम्भकफवातजित् ॥ अ
न्यातिक्ताकषायोष्णासरारूक्षालघु:
कटु : । निहन्तिकफपित्तास्रश्वा
सकासारुचिज्वरान् ॥ विस्फोटकु
ष्ठमेहास्रयोनिरुक्कृमिपाण्डुता:॥
सुवर्च्चा : । त्रि॰ दीप्तमति ॥ अति
तेजस्विनि । शोभनंवर्च्चोयस्य स: ॥
सुवर्च्चिक : । पुं॰ सर्ज्जिकाचारे ॥
सुवर्च्चिका । स्त्री॰ अतुकायाम् । त
रुवल्ल्याम् । जतुकायाम् । नि
शाख्यायाम् ॥ सर्ज्जिकाप्रभेदे ।
सोरा॰ इ॰ भा॰ प्र॰ ॥ सुवर्च्चि
कासर्ज्जिकावद्बोद्धव्यागुणतोजनै:॥
सुवर्णी । स्त्री॰ सर्ज्जिकाचारे ॥
सुवर्ण : । पुं॰ स्वर्णकर्षे । विल्ले ।
हेम्नोर्च्चे । हेम्न : षोडशमाषेषु
॥ षोडशभिर्माषै : परिमितेपरि

माणविशेषे ॥ सुवर्णाली ॥ सुव
र्णनामनिर्यत्ते ॥ धत्तूरे ॥ लङ्का
दिद्वीपवत् समुद्रान्तर्वर्त्तिनिद्वी
पविशेषे ॥ कणगुग्गुलौ ॥ न॰
सोना॰ इ॰ भा॰ प्र॰ धातुश्रे
ष्ठे । तत्पर्य्यायायथा । स्वर्णंसुव
र्णंकनकंहिरण्यंहेमहाटकम् ।
तपनीयंशातकुम्भंगाङ्गेयंभर्मकर्बु
रम् ॥ चामीकरंजातरूपंमहारज
तकाञ्चने । रुक्मंकार्त्तस्वरंजाम्बू
नदमष्टापदोस्त्रियामिति ॥ तस्यधा
र्य्यत्वंसर्वदेवतात्मकत्वञ्चोक्तंरामाय
णे॰ महाभारतेचपरशुरामंप्रतिव
शिष्ठवाक्यम् । सर्वरत्नानिनिर्म
थ्यतेजोराशिसमुत्थितम् । सुवर्ण
मेभ्योविप्रेन्द्ररत्नंपरमनुत्तमम् ॥
एतस्मात्कारणाद्देवगन्धर्वोरगराक्ष
सा : । मनुष्याश्चपिशाचाश्चप्रयता
धारयन्तितत् ॥ तथा । तस्मात्स
र्वपवित्रेभ्य : पवित्रंपरमंस्मृतम्
॥ तथा । अग्निर्वैसकलादेवा : सु
वर्णञ्चतदात्मकम् । तस्मात्सुव
र्णंददतादत्ता : स्यु : सर्वदेवता:
॥ तस्मात्पादिनधार्यम् ॥ अस्योत्प
त्तिर्हेम्नि॰ गुणाश्चस्वर्णेद्रष्टव्या : ॥
कृष्णागुरुणि ॥ हरिचन्दने ॥ स्व
र्णगैरिके । वित्ते । धने ॥ नाग
केशरे ॥ पुं॰ न॰ हेम्नोर्च्चे । अशी
तिरक्तिकापरिमितेस्वर्णे ॥ त्रि॰

उत्कृष्टवर्णे ॥ शोभनोवर्णः स्तुतिर्वासुष्ठुवर्ण्यतेवा । वर्णवर्णने । चुरादिः । एरच् ॥

सुवर्णकः । पुं० आरग्वधवृक्षे ॥ पुष्पैः शोभनोवर्णोऽस्य ॥ न० पित्तले ॥

सुवर्णकदली । स्त्री० कनककदल्याम् । चम्पकरम्भायाम् । चम्पाकेला० इ० भा० प्र० ॥

सुवर्णकारः । पुं० स्वर्णकारे ॥

सुवर्णकेतकी । स्त्री० हेमकेतक्याम् ॥

सुवर्णगैरिकम् । न० गैरिकप्रभेदे । स्वर्णधातौ । सुरक्तके । सन्ध्याभ्रे । बानीमाटी० पीलागेरू० इ० भा० प्र० ॥ सुवर्णगैरिकन्त्वन्यत्ततोरक्ततरंहितत् । ततोगैरिकात् ॥ अस्यगुणाः । गैरिकंमधुरंशीतं कषायंव्रणरोपणम् । विस्फोटार्शोऽग्निदाहघ्नंवरंस्वर्णादिकंशुभम् ॥

सुवर्णनकुली । स्त्री० महाज्योतिष्मत्याम् ॥

सुवर्णपुष्पः । पुं० राजतरुण्याम् ॥

सुवर्णप्रसरम् । न० एलवालुके ॥

सुवर्णमाक्षिकम् । न० स्वर्णमाक्षिके ॥

सुवर्णयूथी । स्त्री० सुगन्धायाम् । हेमपुष्पिकायाम् । सोनजुही० इ० भा० प्र० ॥

सुवर्णवणिक् । पुं० अम्बष्ठाद्वैश्यकन्यायांजातेवर्णसङ्करजातिविशेषे । वस्त्वादिषु विक्रयसंसर्गात्स्वर्णकारिणः । स्वर्णचौर्यादिदोषेणपतितोब्रह्मशापतः ॥

सुवर्णवर्णः । पुं० विष्णौ । त्रि० रुक्मवर्णे ॥ सुवर्णस्येववर्णोऽस्य ॥

सुवर्णवर्णा । स्त्री० काञ्चन्याम् । हरिद्रायाम् ॥

सुवर्णबिन्दुः । पुं० विष्णौ । हरौ ॥ बिन्दवोऽवयवाः सुवर्णसदृशाअस्य ॥ शोभनंवर्णमक्षरम्० बिन्दुश्चयस्मिन्मन्त्रे तदात्मकोवा ॥

सुवर्णा । स्त्री० स्वर्णक्षीर्याम् ॥ हरिद्रायाम् ॥ बाह्यालके ॥

सुवर्णाह्वः । पुं० नागकेशरे । धत्तूरे ॥

सुवर्णी । स्त्री० आखुपर्ण्याम् ॥

सुवर्त्तुलम् । न० कालिङ्गे ॥

सुवल्लिः । स्त्री० सोमराज्याम् ॥ शोभनावल्लिरस्याः ॥

सुवल्ली । स्त्री० सोमराज्याम् ॥ कटव्याम् ॥

सुवसन्तः । पुं० मधूत्सवे । चैत्र्यांज्योत्स्नायाम् ॥

सुवसन्तकः । पुं० वासन्त्याम् । मदनोत्सवे ॥

सुवहः । त्रि० सुखवाह्ये ॥ सुखेनवहति । वह० । पचाद्यच् ॥ पुं०

वायो : प्रभेदे ॥
सुवहा । स्त्री॰ गोधापद्याम् ॥ सुष्ठु वहत्यामोदम् । वह॰ । अच् । टाप् ॥ शल्लकीद्रुमे ॥ एलापर्ण्याम् ॥ तुलस्याम् ॥ वीणायाम् ॥ रास्नायाम् ॥ शेफालिकायाम् ॥ त्रिवृतायाम् ॥ नीलसिन्धुवारके ॥ रुद्रजटायाम् ॥ हंसपद्याम् ॥ मुसल्याम् ॥
सुवास : । पुं॰ शोभनगन्धे ॥ उत्तमनिवासे ॥
सुवासा: । त्रि॰ । निर्मलवाससि ॥
सुवासिनी । स्त्री॰ ऊढाल्पवय : स्त्रियाम् । चिरण्टाम् ॥ सुष्ठुतीव वसतिपितृगेहे॰ तच्छीला । सुप्यजातावितिणिनि : । यदोक्तंस्मार्त्तार्णवे । विवाहिताश्चदेवेशिबाला एवकुमारिका : । सुवासिन्योमहाप्रौढा : संशयोनास्तिसुव्रते । इति ।
सुविक्रम : । पुं॰ सुष्ठुपादविन्यासे ॥ विक्रमस्यसौष्ठवंनामगजसिंहादिगतिसदृशत्त्वम् । त्रि॰ तद्वति ।
सुविज्ञ : । त्रि॰ अतिनिपुणे ॥
सुविज्ञेय : । त्रि॰ सम्यग्ज्ञातुंशक्ये ॥
सुविदत्रम् । न॰ कुटुम्बे ॥ सुष्ठुवेत्ति । विदत्राने । सुविदेः कत्रः ॥
सुविदित : । त्रि॰ प्रख्याते ॥

सुविधि : । पुं॰ उत्तमविधाने ॥ अर्हद्विशेषे ॥
सुविनीत: । त्रि॰ अतिविनयविशिष्टे
सुविनीता । स्त्री॰ सुकरायाम् ॥
सुवीजम् । न॰ खसखसे । त्रि॰ साधुवीजे ॥
सुवीर : । पुं॰ देवविशेषे । त्रि॰ सुष्ठुवीरे ॥ शोभनाविविधाङ्कुरागतयोऽस्य ॥ शोभनवीर्य्ययुते ॥
सुवीरकम् । न॰ सौवीराञ्जने । पुं॰ एकवीरवृक्षे ॥
सुवीरजम् । न॰ सौवीराञ्जने । सुवीरेजातम् । जनी॰ । ड : ॥
सुवीराम्लम् । न॰ काञ्जिके । सुवीरेषु॰ अभिषुतमम्लम् । शाकपार्थिवादि : ॥
सुवीर्य्यम् । न॰ बदरे ॥ उत्तमवीर्य्ये । त्रि॰ तद्वति ॥
सुवीर्य्या स्त्री॰ नाडीहिङ्गुनि ॥ वनकार्पास्याम् ॥ महाशतावर्य्याम् ॥
सुवृत्त: । पुं॰ शूरणे ॥ त्रि॰ सदाचारनिष्ठे ॥ सुष्ठुवर्त्तुले । परिवर्त्तुले ॥
सुवृत्ता । स्त्री॰ काकलीद्राक्षायाम् ॥ शतपत्र्याम् ॥
सुवृष्टि : । स्त्री॰ सम्यक्वृष्टौ शोभनवर्षणे ॥
सुवेगा । स्त्री॰ महाज्योतिष्मत्याम् ॥
सुवेल : । पुं॰ त्रिकूटाचले ॥ त्रि॰

प्रयाते ॥ शान्ते ॥

सुवेश: । पुं॰ श्वेतेक्षौ ॥ त्रि॰ उचितशृङ्गारसम्पन्ने ॥

सुव्रत: । पुं॰ श्रीहरौ ॥ शोभनं व्रतमस्य । यथा । सकृदेवप्रपन्नाय तवास्मीति च याचते । अभयं सर्व्वभूतेभ्यो ददाम्येतद्व्रतं ममेति ॥ यद्वा। शोभनं व्रतयति भुङ्क्ते सुदामादत्तपृथुकादीनीति॰ सुष्ठु व्रतयति भोजनान्निवर्त्तते नरनारायणरूपेण तपश्चरन्निति वा । कृताञ्जलिजनैर्निवर्त्तेति चेति विजन्तात् पचाद्यच् ॥ जिनमतकल्पोयार्हति भवित्कल्पीयार्हद्विशेषे ॥ वर्त्तमानकल्पीयार्हद्विशेषे ॥ त्रि॰ शोभनव्रतयुक्ते । सद्व्रते ॥

सुव्रता । स्त्री॰ सुखसंदोह्यायाङ्गवि ॥ शोभनं व्रतमस्या: ॥ सद्व्रतायाम् ॥ शच्याम् ॥ वर्त्तमानकल्पीयार्हन्मातरि ॥

सुशर्म्मा । पुं॰ भारतादिप्रसिद्धे नृपविशेषे ॥ शोभनं शृणाति । शॄ॰ । अन्येभ्योऽपि दृश्यन्त इति मनिन् ॥ मिथुनेमनिरिति मनिर्वा ।

सुशल्य: । पुं॰ खदिरे ॥

सुशाक: । पुं॰ तण्डुलीये ॥ पिण्डायाम् ॥ चञ्चौ । पत्रशाकविशेषे । विजलायाम् । चञ्चुपर्णे ॥ न॰ आर्द्रके ॥

सुशाल्मा । स्त्री॰ कालिकापुराणप्रसिद्धायाम शशिध्वजराजपत्न्यां ॥

सुशिख: । पुं॰ अग्नौ ॥ त्रि॰ उत्तमशिखावति ॥

सुशिखा । स्त्री॰ मयूरशिखायाम् ॥

सुशीत: । पुं॰ प्लक्षवृक्षे ॥ न॰ पीतचन्दने ॥

सुशीतलम् । न॰ गन्धतृणे ॥ नपुंसि । खीरा॰ काकड़ी॰ इ॰ प्र॰ ॥ कत्तृणे ॥ त्रि॰ । अतिशीतगुणविशिष्टे ॥

सुशीता । स्त्री॰ शतपत्र्याम् ॥

सुशील: पुं॰ विष्णोर्दूतविशेषे ॥ त्रि॰ सद्वृत्ते । शोभनशीलयुक्ते ॥ शोभनं शीलं यस्य स: ॥

सुशीला । स्त्री॰ श्रीकृष्णस्याष्टमहिष्यन्तर्गतमहिषीविशेषे ॥ इति पद्मपुराणम् ॥

सुश्राव्यम् । न॰ नलरामयुधिष्ठिरादीनां यशसि ॥ शोभनवाक्ये ॥

सुश्री: । त्रि॰ सुंदरे ॥ शोभना श्रीर्यस्य ॥

सुश्रीक: । त्रि॰ शोभनश्रीविशिष्टे ॥

सुश्रीका । स्त्री॰ शल्लक्यां ॥

सुश्रुत: । पुं॰ विश्वामित्रमुनिपुत्रे॰ चिकित्साशास्त्रकर्त्तरि ॥ चिकित्सायन्यविशेषे । सुश्रुतेनकृतं तन्त्रं सुश्रुतं बहुभिर्यत: । तस्मात्तत् सुश्रुतं नामविख्यातं क्षितिमण्डले ॥

सुश्रुश्रुवान् । त्रि॰ सुश्रुतवति ॥ शृणो

ति : क्रमुः॥

सुषमः। त्रि॰ चारौ। रुचिरे। शोभने। सुन्दरे॥ समे॥ सुशोभनं समं सर्वमस्य। सुविनिर्दुर्भ्य इति षः॥

सुषमा। स्त्री॰ परमायांशोभायाम्। अनन्तशोभायाम्॥ जिनानाङ्काल भेदे॥ वर्णवृत्तविशेषे। कर्णौद्विलघुः कर्णौभगणः शेषगुरुश्चापूर्णं चरणः। यस्यांभविताबालेपरमासैषासुषमाप्रोच्यते सुषमा॥ यथा। राणौनयनेकेलोकस्येप्रेयान् यद्किञ्चिन्नोकुरुते। धन्यारमणीसर्वं सहतेदुःखं सुखवत्खान्तेमनुते॥ शोभनं समं सर्वमनया। सुविनिर्दुर्भ्यः सुपिसूतिसमाइति षत्वम्॥

सुषवी। स्त्री॰ कारव्याम्। कृष्णजीरके॥ जीरके॥ कारवेल्ले॥ सुखं सुवति। षूप्रेरणे। अच्। गौरादिः। उपसर्गात्सुनोतीति षत्वम्॥ सुषवणं वा। ऋदोरप्। सोस्त्यस्याः। पिप्पल्यादिः॥ चद्रकारवेल्ले। इतिराजनिघंटः॥

सुषिः। स्त्री॰ छिद्रे॥ सुष्ठुस्यति। षो॰। उपसर्गेघोः किरितिबाहुलकात्किः॥

सुषिरम्। न॰ विवरे। विले। छिद्रे। सुषिरे॥ सुषिरस्त्यस्य। अथसुषिसुष्कमधीरः॥

सुषीमः। पुं॰ सर्पविशेषे॥ चन्द्रकान्तमणौ॥ त्रि॰ शिशिरे। शीतगुणयुक्ते॥ चारौ। रम्ये। मनोज्ञे। सुष्ठुसीमामर्यादायस्य। सुषामादिषुचेतिषत्वम्॥

सुषुप्तः। पुं॰ न॰ स्वप्नान्ते॥ सुषुप्तावस्थंतमोऽज्ञानंबीजं स्वप्नप्रबोधयोः॥ सुषुप्त्यवस्थायाम्॥ यथा। योजागरेवहिरनुक्षणधर्मिणोर्थान् भुङ्क्ते समस्तकरणैर्हृदितत्सदृक्षान्। स्वप्ने॰ सुषुप्तउपसंहरते॰ सएकः स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेशः। द्र॰ शोभा॰ ११ स्कं॰ ११ऽध्यायः॥ त्रि॰ सुषुप्तियुक्ते॥

सुषुप्तस्थानः। पुं॰ प्राज्ञे॥ सुषुप्तं स्थानमस्य॥

सुषुप्तिः। स्त्री॰ सर्वोपरमावस्थायाम्। अहंकिमपिनजानामिसुखेनमयानिद्राऽनुभूतेत्येवंप्रकारेसत्त्वप्रधानेऽज्ञाने॥ तस्यानामान्तरङ्कारणशरीरम्॰ आनन्दमयकोषश्चेति॥ सर्वस्थूलसूक्ष्मोपाधेः कारणोपाधौलीनत्वं सुषुप्तिस्त्वमितितल्लक्षणम्॥ शोभनासुप्तिः सुषुप्तिः॥

सुषुप्सुः। त्रि॰ स्वप्तुमिच्छौ॥ स्वपेः सन्नन्तादुप्रत्ययः। रुदविदेत्या

दिनासनः क्रियाहविर्यपीयादि नासम्प्रसारणम् ॥

सुषुम्णा । स्त्री॰ नाडीविशेषे ॥ साच । इडापिङ्गलयोर्मध्ये वर्त्तमाना॰ पृष्ठवंशान्तर्गतानाडी॰ सुषुम्णेत्युच्यते ॥ शोभनं सुम्नं सुखं यस्याम् ॥ पुं॰ ॥

सुषेणः । पुं॰ करमर्द्दे ॥ विष्णौ ॥ सुग्रीववैद्ये ॥ तारायाश्शलिभार्यायाः पितरि ॥ वेतसे ॥ शोभनासेनायस्य । एतिसंज्ञायामगादिति षत्त्वम् । रषाभ्यामितिणत्त्वम् ॥

सुषेणिका । स्त्री॰ कृष्णत्रिवृतायाम् ॥ सुष्ठुसेनयति । सेनाशब्दात्॰ सत्यापपाशेतिणिच् । पचाद्यच् । एतिसंज्ञायामगादितिषत्त्वम् । णत्वम् । स्वार्थेकन् ॥

सुषवी । स्त्री॰ त्रिवृति ॥

सुषोमा । स्त्री॰ नदीभेदे ॥

सुष्ठु । अ॰ प्रशंसने ॥ अत्यर्थे ॥ सुतिष्ठति॰ सुस्थानं वा॥ ष्ठा॰ । अपदुसुषुस्थइतिकुः । सुषामादित्वात्षत्त्वम् ॥

सुसंयत । त्रि॰ कृतसंयमे । यथाविधिसंयमविशिष्टे ॥

सुसंवृत । त्रि॰ सिद्धे ॥ अतिनिगूढे । आचारनिर्द्धारविहारयोगाः सुसंवृताधर्मविदातुकार्य्याः ॥

सुसंस्कृतः । त्रि॰ घृतादिनानाद्रव्येणप्रयत्नतः सुपक्वव्यञ्जनादौ । प्रयत्ने ॥ सुष्ठुसंस्क्रियतेस्म । कर्म्मणिक्तः । सम्परिभ्यामितिसुट् ॥

सुसंस्थान । त्रि॰ शोभनाकृतौ ॥

सुसत्या । स्त्री॰ जनकभार्य्यायाम् ॥

सुसम्पत्॰द् । स्त्री॰ परभागे ॥

सुसमृष्टः । त्रि॰ अलङ्कृते ॥

सुसहः । त्रि॰ दुःसहभिन्ने ॥

सुसाध्यः । त्रि॰ सुकरे ॥

सुसारः । पुं॰ रक्तखदिरे ॥ मणिविशेषे ॥ त्रि॰ अतिशयसारवति ॥ शोभनः सारोऽस्य ॥

सुसारवत् । न॰ स्फाटिके ॥

सुसिकता । स्त्री॰ शर्करायाम् ॥ शोभनवालुकायाम् ।

सुसीमा । स्त्री॰ साधुसीम्नि ॥ ब्रह्मदत्तमातरि ॥

सुसेवः । त्रि॰ सुष्ठुसेवितुंयोग्ये ॥

सुस्थः । त्रि॰ नीरोगे । स्वस्थे ॥

सुस्थता । स्त्री॰ आरोग्ये ॥

सुस्थिरः । त्रि॰ चाञ्चल्यरहिते । स्थिरतरे ।

सुस्ना । स्त्री॰ खञ्जकारी । खिसारी॰ इ॰ प्र॰ शमीधान्ये ॥ सुस्नादुर्वालतारुच्याकषायाविषदागुरुरिति-राजनिघण्टः ॥

सुस्नातः । पुं॰ यज्ञान्तस्नानकृति । त्रि॰ सुन्दररूपेणकृतस्नाने ॥

सुस्नातकः । पुं॰ शोभनस्नातके ॥

सुस्मितः । त्रि॰ सुन्दरेषद्धास्ययुक्ते ॥
सुस्वादुः । त्रि॰ सुमधुरे ॥
सुस्वस्तिः । पुं॰ व्रीहिभेदे ॥
सुहितः । त्रि॰ विहिते । तृप्ते ।
सुहिता । स्त्री॰ अग्नेर्जिह्वाविशेषे ॥
सुहृत्तमः । त्रि॰ उपकारानपेक्ष्योपकारके ॥
सुहृत्प्राप्तिः । स्त्री॰ अष्टकाख्यायां सिद्धौ । सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्तिः । न्यायेन स्वयं परीक्षितमप्यर्थं तावन्न श्रद्धत्ते । यावद्गुरुशिष्यसब्रह्मचारिभिः सह न संवाद्यते ।
सुहृत् । पुं॰ मित्रे । सदैवानुगतोपकारः स्वपरभूरिकार्यानां प्रायशो हि सुहृदः सहवासः ॥ शस्तचित्ते । प्रत्युपकारनिरपेक्षतयोपकारिणि । प्रत्युपकारमनपेक्ष्य पूर्वं स्नेहसम्बन्धसूत्रेणैवोपकर्त्तरि । कृतोपकारे ॥ सम्बन्धिनि । शोभनं हृदयमस्य । सुहृद्दुर्हृदाविति साधुः ॥ सहाये ॥ यथाह रसविचारः । चन्द्रश्चन्दनमिन्दुधामधवलाः स्तोकद्विरेफावलीझङ्कारोन्मुखराविलासविपिनोपान्ता वसन्तोदयाः । मन्दध्वानघनोदयाश्च दिवसा मन्दाः कदम्बानिलाः शृङ्गारप्रमुखाश्च कामसुहृदो नार्यो जितार्या जिताः ॥ कामस्य सुहृदः सहाया नार्यो जितार्या जिताः ॥ सर्वेषां तदुपरञ्जकत्वात् ॥ सर्वान्तर्यामिणि ॥
सुहृदयः । त्रि॰ सुचेतसि । सहृदये । हृदयालौ ॥ शोभनं हृदयमस्य । मित्रस्याविनश्वरान्नहृदयस्य हृद्भावः ॥
सुहृद्गुणः । पुं॰ शुचितादौ मित्रस्य गुणे । यथा । शुचितात्यागिता शौर्यं समानसुखदुःखिता । अनुरागश्च दाक्ष्यं सत्यता च सुहृद्गुणाः ॥
सुहोत्रः । पुं॰ वानरविशेषे ॥ चन्द्रवंशीयवृहदिषुराजपुत्रे ॥
सुह्मः । पुं॰ जातिविशेषे ॥ पुं॰ भूम्नि॰ देशविशेषे ॥ सुह्मानां निवासो जनपदः । सुह्माः । अणो लुप् । लुपि युक्तवद्भावः ॥
सूः । पुं॰ प्रसवे । सवनम् । षूङ् प्राणिप्रसवे । क्विप् ॥
सूकः । पुं॰ बाणे ॥ वाते ॥ उत्पन्ने ॥
सूकरः । पुं॰ वराहे । शूकरे । कुम्भकारे ॥ मृगविशेषे ॥ सवनम् । षूङ् प्राणिगर्भविमोचने । सम्पदादिः । सुवं प्रसवं करोति । कृञो हेत्विति टः ॥
सूकरी । स्त्री॰ क्षुपविशेषे ॥ वाराहक्रान्तायाम् ॥ शूकरस्त्रियाम् ॥
सूक्तम् । न॰ प्रवचने ॥ त्रि॰ गम्भी

रार्थे ॥ शोभनोक्तिविशिष्टे ॥ वेदोक्तस्तोत्रमन्त्रादौ ॥

सूक्तवाकः । पुं॰ इदं द्यावापृथिवी भद्रमभूदित्यादिके मन्त्रे ॥ मन्त्रमात्रे । सुभाषिते ॥ सूक्तोक्ति । वच॰ । घञ् ॥

सूक्ता । स्त्री॰ चित्राख्याम् । सारिकायाम् ॥

सूक्तिः । स्त्री॰ शोभनोक्तौ ॥

सूक्ष्मः । पुं॰ अणौ ॥ कतके । सूक्ष्मात्मनि ॥ जातिक्रियादिप्रवृत्तिनिमित्तशून्यत्वात् मनोवागादीन्द्रियाणामगोचरे परमात्मनि ॥ आत्मा सूक्ष्मोऽणुपरिमाण इति कश्चित् । तन्न । युगपदशेषशरीरव्यापिवेदनानुसन्धानासिद्धेः ॥ न॰ कैतवे ॥ शाठ्ये अध्यात्मे । सूक्ष्मशरीरे ॥ अलङ्कारविशेषे ॥ यथा । कुतोपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते । धर्मेणकेनचिद्यत्र तत्सूक्ष्मं परिचक्षते ॥ कुतोऽप्याकारादिङ्गिताद्वा सूक्ष्मः स्थूलमतिसंवेद्यः । उदाहरणम् । वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वाभिन्नं कुङ्कुमं कापि कण्ठे । पुंस्त्वं तन्व्या व्यञ्जयन्तीव वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥ अत्राकूतिमालोक्य कयापि वितर्कितं पुरुषायितमसिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतं पुंसा मेवकृपाणपाणित्वाद्योग्यत्वात् । यथावा । सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया । ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ अत्र जिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः ॥ त्रि॰ अल्पे । स्तोके ॥ इन्द्रियागोचरे ॥ सूच्यते । सूचपैशुन्ये । सूचेः स्मन् ॥

सूक्ष्मकृष्णफला । स्त्री॰ मध्यमजम्बूवृक्षे ॥

सूक्ष्मतण्डुलः । पुं॰ खसखसि ॥

सूक्ष्मतण्डुला । स्त्री॰ पिप्पल्याम् ॥

सूक्ष्मदर्शी । त्रि॰ प्रगाडते ॥ कुशाग्रीयमतौ । प्रत्युत्पन्नमतौ ॥ विशेषज्ञे । इन्द्रियेभ्यः परा ह्यर्था इत्यादिप्रकारेण सर्वविशेषसूक्ष्मतापारम्पर्यदर्शनेन परं सूक्ष्मं द्रष्टुं शीलं यस्य तस्मिन् ॥

सूक्ष्मदलः । पुं॰ देवसर्षपे ॥

सूक्ष्मदला । स्त्री॰ दुरालभायाम् ॥

सूक्ष्मदारु । न॰ किलिञ्जे ॥ तनुकाष्ठे ॥

सूक्ष्मपत्रः । पुं॰ धान्यके ॥ वनजीरके ॥ देवसर्षपे ॥ लघुबदरे ॥ सुरपर्णे ॥ वनबर्बर्याम् ॥ लोहितेक्षौ ॥ ताम्रचूडे । कुक्कुरद्रौ । कुकुरौ धा॰ इ॰ भा॰ ह॰ ॥ बावलसुघ

। स्वर्णपुष्पे ॥ न० वितुन्नकी ॥ सूक्ष्मैपत्रे ॥

सूक्ष्मपत्रकः । पुं० सूक्ष्मपत्रे ॥ स्वर्णकः ।

सूक्ष्मपत्रा । स्त्री० क्षुद्रजम्बूम् ॥ जीवन्त्याम् । दीर्घपत्रायाम् । डिण्डाम् ॥

सूक्ष्मपत्रिका । स्त्री० शतपुष्पायाम् ॥ शतावर्याम् । क्षुद्रोपोदिकायाम् दुरालभायाम् । आकाशमांस्याम् ॥ लघुब्राह्म्याम् ॥

सूक्ष्मपत्री० स्त्री० आकाशमांस्याम् ॥

सूक्ष्मपर्णी । स्त्री० जीर्णदारुणि । जीर्णफलाख्याम् ॥ डिण्डाम् ॥

सूक्ष्मपर्णी । स्त्री० रामदूत्याम् । नागदन्तिकायां ॥

सूक्ष्मपिप्पली । स्त्री० वनपिप्पल्याम् ॥

सूक्ष्मपुष्पी । स्त्री० यवतिक्तायाम् ॥ गर्भे ।

सूक्ष्मप्रपञ्च । पुं० हिरण्यगर्भे ।

सूक्ष्मफलः । पुं० भूकर्बुदारे ॥

सूक्ष्मफला । स्त्री० तामलक्याम् ॥

सूक्ष्मबदरी । स्त्री० भूबदर्यां ॥

सूक्ष्मभुवनाष्टकम् । न० अमरपुरविशेषेषु ॥ यथा । सूक्ष्मामरपुराण्यष्टौ वुधैःपैशाचमादितः । राक्षसंयाक्षगान्धर्वं माहेन्द्रसुमर्दर्शिमत् ॥ सौम्यं प्राजेश्वरं ब्राह्मं दीप्तपरमयाश्रियेति । वृत्तितत्त्व० सूक्ष्मभुवनाष्टकम् । तेषु पैशाचमादितइत्यादौ पैशाचम् । ततो राक्षसादि । ब्राह्मं० दीप्तपरमयाश्रियेति । महर्षिमतो माहेन्द्रादप्यतिशयाय । अधिककान्ति ॥ इ० मृ० सं० ता ॥

सूक्ष्मभूतम् । न० अपञ्चीकृताकाशादिभूते ॥

सूक्ष्ममक्षिकः । पुं० मशके ॥

सूक्ष्ममूला । स्त्री० जयायाम् । वैजयन्तिकायाम् । जाहि० इ० प्र० पुष्पवन्ते सूक्ष्ममूलमस्याः ॥

सूक्ष्मबदरी । स्त्री० भूबदर्याम् ॥

सूक्ष्मवल्ली । स्त्री० जतुकायाम् ॥ ताम्रवल्ल्याम् ॥

सूक्ष्मवस्त्रम् । न० सूक्ष्मवसने ।

सूक्ष्मवीजः । पुं० खसखसे ॥

सूक्ष्मव्रणः । पुं० किणे ॥

सूक्ष्मशरीरम् । न० सप्तदशावयवे लिङ्गशरीरे ॥ विज्ञानमयमनोमयप्राणमयकोशाः ॥ ज्ञानेच्छाक्रियाशक्तिप्रधानाः एतत्कोशत्रयमिलितसत् सूक्ष्मशरीरमित्युच्यते । यथाह भगवतीहिमाद्रिं प्रतिदेवीगीतायाम् । ज्ञानेन्द्रियाणि पञ्चैव पञ्चकर्मेन्द्रियाणि च । प्राणादिपञ्चकञ्चैव धिया च सहितं मनः ॥ एतत्सूक्ष्मशरीरं स्यान्मम लिङ्गं यदुच्यते । इति । सूक्ष्मञ्चतत् शरीरञ्च ॥

सूक्ष्मशर्करा । स्त्री॰ वालुकायाम् ॥

सूक्ष्मशाख: । पुं॰ आलबर्बुरे ।

सूक्ष्मशालि: । पुं॰ धान्यविशेषे । सूचिशाली ॥

सूक्ष्मषट्चरण: । पुं॰ पक्ष्मयूके ॥

सूक्ष्मा । स्त्री॰ यूथिकायाम् ॥ वालुकायाम् ॥ क्षुद्रैलायाम् ॥ करुण्याम् । सूचे: सनिकृतेटाप् ॥ आम्नातकेश्वराधिवासिन्यामम्बायाम् ॥

सूक्ष्मेक्षणम् । न॰ शिल्पविद्याप्रसिद्धयन्त्रविशेषे ॥

सूक्ष्मैला । स्त्री॰ उपकुञ्चिकायाम् । त्रिपुट्याम् । त्रुटौ । छोटीइलायची॰ इ॰ भा॰ ॥ अस्या गुणा यथा । एलासूक्ष्मा कफश्वासकासार्शोमूत्रकृच्छ्रहृत् । रसे तु कटुका शीता लघ्वी वातहरी मता ॥

सूच: । पुं॰ दर्भाङ्कुरे ॥ सीव्यति । षिवु तन्तुसन्ताने । सिवेष्टेरूच्चेति षट् ॥

सूचक: । पुं॰ सीवनद्रव्ये । बोधके ॥ शुनि । चोतौ । बिडाले ॥ काकी । वायसे । बुद्धे । सिद्धे ॥ पिशाचे ॥ कथके ॥ सूक्ष्मशाली ॥ सूत्रधारे ॥ त्रि॰ पिशुने । दुर्जने । कर्णेजपे । परदोषासके । परस्य सतामसतां च दोषाणां ख्यापके ॥ सूचयति । सूच पैशुन्ये॰ ण्वादिरदन्त: । ण्वुल् ॥

सूचनम् । न॰ गन्धने ॥ व्यापने ॥ सूच॰ । ल्युट् ।

सूचना । स्त्री॰ व्यधने । विधनेहशि । दृष्टौ ॥ गन्धने । अभिनये । टाप्

सूचि: । स्त्री॰ व्यधिन्याम् । सूच्याम् । सुइ॰ इ॰ भा॰ प्र॰ ॥ नृत्यप्रभेदे ॥ शिखायाम् । सूच्यतेऽनया । सूच॰ । अच इ: ॥ अल्पगर्ले ॥

सूचिक: । पुं॰ सौचिके । तुन्नवाये ॥

सूचिका । स्त्री॰ सूच्याम् । सीवनद्रव्ये ॥

सूचिकाधर: । पुं॰ गजे । हस्तिनि ॥

सूचिकापुष्प: । पुं॰ केतक्याम् ॥

सूचिकाभरणम् । न॰ औषधविशेषे ॥

सूचिकामुखम् । न॰ जलकरङ्के । जलजशङ्खे । त्रि॰ सूच्यास्ये ।

सूचित: । त्रि॰ ज्ञापिते ॥ सङ्क्षेपतो दर्शिते । सूच॰ । क्त: ॥

सूचिपत्रक: । पुं॰ शितावरशाके ॥

सूचिपुष्प: । पुं॰ केतकवृक्षे ॥

सूचिरोमा । पुं॰ शूकरे ॥

सूचिवान् । पुं॰ गरुडे ॥ इ॰ श॰ र॰ लो ॥

सूचिवदन: । पुं॰ नकुले । मशके ॥ सूचितुल्यं वदनं यस्य ॥

सूचिशालि: । पुं॰ सूक्ष्मशाली ॥

सूची । स्त्री • सीवनसाधने ॥ आङ्गिकाऽभिनयान्तरे । अङ्गहारचेष्टायाम् ॥ स्त्रिया : करणं ॥ सीव्यतेऽनया । षिवु तन्तुसन्ताने । सिवेष्टेरूचेतिचट् । टित्वान्ङीप् ॥ त्रि• पिशुनइति• श्रीधरस्वामिन : ॥

सूचीदल : । पुं• सितावरे ॥

सूचीपत्रा । स्त्री• गण्डदूर्वायाम् ॥ जलस्थायाम् ॥

सूचीपाश : । पुं• सूचीबन्धनहेतुभूतेछिद्रे ॥

सूचीपुष्प : । पुं• केतक्यां ॥

सूचीमुख : । पुं• शुक्लदर्भे ॥ व्यूहविशेषे ॥ न• हीरके ॥ नरकान्तरे ॥ त्रि• सूच्यास्ये ॥

सूचीरोमा । पुं• सूकरे । त्रि• सूचीतुल्यरोमविशिष्टे ॥ सूचीसदृशानिरोमाणियस्यस : ॥

सूचीव्यूह : । पुं• सूच्याकारेव्यूहविशेषे ॥ पिपीलिकापङ्क्तिरिवाग्रपश्चाद्भावेन• संगतरूपतया• यत्र यत्र• सैनिकावस्थानं• सघीप्रवीरपुरुषमुख : सूचीव्यूह । तैमाग्रतोभयैसतियायात् ॥

सूच्यग्र : । पुं• खरच्छदे । उलूखड• इ• गौ• दे• भा• प्र• तृणविशेषे ॥ न• दर्भे ॥ सूच्यग्रभागे ॥

सूच्यग्रस्थूलक : । पुं• तृणविशेषे ॥ यथा । सूच्यग्रस्थूलकोदर्भोनर्णा व्यग्रखरच्छदइतिरत्नमाला ॥

सूच्यास्य : । पुं• मूषिके ॥ मशकर्कटप्रभेदे ॥ त्रि• सूचीतुल्यमुखे ॥

सूच्याह्व : । पुं• सितावरे ॥

सूत : । पुं• सारथौ ॥ सुवतिगमयतिस्माश्वान् । षू• । गत्यर्थत्वात्क्त : ॥ त्वष्टरि । तक्षिण ॥ ब्राह्मण्यांक्षत्रियाज्जाते ॥ यथा । क्षत्रियाद्विप्रकन्यायांसूतोभवतिजातितइति । अत्रविवाहासम्भवात् कन्याग्रहणं स्त्रीमात्रप्रदर्शनार्थम् । ब्राह्मण्यांक्षत्रियाज्जात्यासूतनामासजायते ॥ पितामहदैवत्ये पृथी वैण्यस्ययज्ञे सूत्यांसीमाभिषवभूमौ सौत्येऽहनिसमुत्पन्नेनारायणांशे• पुराणानांवक्तरि । पौराणिके ॥ यथोक्तंविष्णुपुराणे । तस्ते तुदक्षिणे चक्रं दृष्ट्वातस्यपितामह : । विष्णोरंशंपृथुं मत्त्वापरितोषंपरं ययौ ॥ तस्यवै जातमात्रस्ययज्ञे पैतामहेशुभे । सूत : सूत्यांसमुत्पन्न : सौत्येऽहनिमहामते ॥ तस्मिन्नेवमहायज्ञे जज्ञे प्राज्ञोथमागध : । प्रोक्तौतदामुनिवरैस्तावुभौसूतमागधौ ॥ स्तूयतामेषनृपति : पृथुर्वैण्य : प्रतापवान् । इति १ अंशे १३ ऽध्याय : ॥ बन्दिनि ॥ सूर्ये ॥

पुं॰ न॰ पारदे ॥ त्रि॰ प्रसूते ॥ प्रेरिते ॥ सुवति॰ सुयतिक्षत्रियाभिवेन । षूप्रेरणे । क्त : ॥

सूतक : । पुं॰ न॰ पारदे । रसे ॥ न॰ जनौ । जन्मनि ॥ जनना शौचे ॥ यथा । यावन्नच्छिद्यतेनालंतावन्नाप्नोतिसूतकम् । छिन्ने नालेतत : पश्चात्सूतकन्तुविधीयते ॥ अपिच । मृतेनसूतकंगच्छेन्नेतरत्सूतकेनतु ॥ ब्रह्मनुरपि । शावस्योपरिशावेतुसूतकोपरिसूतके । शेषाहोभिर्विशुद्धि : स्यादुदक्यां सूतकं विनेति ॥ मरणाशौचे ॥ यथा । सर्वेगोत्रमसंस्पृश्यं तत्रस्यात्सूतकेसति । मध्येपिसूतकेदद्यात्पिण्डान्प्रेतस्यतत्सयद्वति ॥ प्रतिबन्धके ॥ यथा । व्रतयज्ञविवाहेषुश्राद्धेहोमेऽर्चनेजपे । आरब्धे सूतकंनस्यादनारब्धे तुसूतकमिति ॥

सूतका । स्त्री॰ सूतिकायाम् । सूताशब्दात्स्वार्थे कन् । सूतकापुत्रिकावृन्दारकाणांवेतिसाधु : ॥

सूतकागृहम् । न॰ सूतिकागृहे ॥ सूतकायागृहम् ॥

सूततनय : । सूतनन्दन: । सूतपुत्र : । सूतपुत्रक: । } पुं॰ कर्णे । कुन्त्याज्येष्ठाऽपत्ये ॥

सूतराट् । पुं॰ पारदे । रसे ॥

सूति : । स्त्री॰ प्रसवे ॥ सीमाभिषवभूमौ ॥

सूतिका । स्त्री॰ सूतकायाम् । नवप्रसूतायाम् ॥ तदन्नभोजनप्रायश्चित्तं यथा । चाण्डालान्नं भूमिपान्नंमजजीविकजीविनाम् । शौण्डकान्नं सूतिकान्नं भुक्त्वामासंव्रतीभवेदितिब्रह्मवैवर्त : ॥

सूतिकागारम् । सूतिकागृहम् । सूतिकागेहम् । सूतिकाभवनम् । } न॰ । सूतिकावास : । } पुं॰ } प्रसवालये । अरिष्टे ॥ तल्लक्षणंयथा । अष्टहस्तायतंवाऽचतुर्हस्तविशालकम् । प्राचीद्वारमुदग्द्वारं विदध्यात्सूतिकागृहम् ॥ तत्रापिशाखानांवासीयथा । सर्वगानप्रतिघान्सूतिकागृहसेविन : । पृष्ठत : पार्श्वपादौ अपृष्ठयोवानुसुरक्ष : ॥ एवंविधानृपिशाचांश्चदृष्ट्वाब्रह्मानुक्रमयथा । अन्तर्द्धानंवरंप्रादात्कामचारित्वमेवचेतिवह्निपुराणम् ॥ अपिच । सूतिकावासनिलयाजन्मदानामदेवता : । तासांयागनिमित्तन्तुशुद्धिर्जन्मनिकीर्त्तिता । षष्ठेह्निरात्रियागन्तुजन्मदानान्तुकारयेत् । इति सूते बस्वार्थेकन् । सूतिकापुत्रिकेतिपक्षेऽसाद्गुत्वम् । सूतिकाया: •

आगारं• गृहम्• गेहम्• भवनम्• आवासो वा ॥

सूतिकारोगः । पुं• नवप्रसूतायाव्याधिभेदे ॥

सूतिकाषष्ठी । स्त्री• सूतिकागारेजातबालकस्यषष्ठदिनेपूज्यदेवीविशेषे॥

सूतिगृहम् । न• सूतिकागारे ॥

सूतिमासः । पुं• जन्ममासे । वैजनने ॥ सूतेः प्रसवस्यमासः ॥ सूतिमासोवैजननोनवमोदशमोपि वेतिजटाधरः ॥

सूत्कटम् । न• गुडत्वचि । त्वक्पत्रे । चोचे

सूत्थामः । वि• दक्षे । चतुरे ॥ सु• उत्थानमुद्योगोस्य ॥ न• शोभनोत्थाने ॥

सूत्या । स्त्री• यज्ञस्नाने । अभिषवे । सवने ॥ युवत्याम् ॥ सूतयुवत्यामितिव्यङ्गदेशः ॥ सोमलतारसपाने• सूतिकस्मिन्भरतः ॥

सूत्रम् । न• सूत्र• भा• प्र• वस्त्रारम्भके । तन्तौ ॥ व्यवस्थायाम् ॥ शास्त्रादिसूचकग्रन्थे ॥ पदसाधकग्रन्थे ॥ सूत्रलक्षणन्तु । यथा । संज्ञाचपरिभाषाचविधिर्नियमएवच । प्रतिषेधोधिकारश्चषड्विधंसूत्रलक्षणम् ॥ अपिच । अल्पाक्षरमसंदिग्धंसारवद्विश्वतोमुखम् । अस्तोभमनवद्यञ्चसूत्रंसूत्रविदोविदुरिति ॥ सूचनात्सूत्रमुच्यतइतिच ॥ सूत्र्यते । सूत्रवेष्टने• अदन्तः । एरच् ॥ सीव्यतेनेनवा । षिवु• । सिविमुच्योष्टेरूचेतिऊकारात्• किमृग्रन्चप्रत्ययः ॥ भूतकारणे ॥ यथा । अण्डारम्भकभूतानामपञ्चीकृतभूतत्वम् । एवङ्कारणमित्थंतदागमेनैवगम्यते ॥ अण्डारम्भकपञ्चभूतकारणस्यापञ्चीकृतपञ्चभूतत्कार्यात्मकसूत्रस्यागमैकगम्यत्त्वात्तत्कागम्यत्वम् । तत्स्मृतिम्प्रमाणयति । अचिन्त्याः खलुयेभावानतांस्तर्केणयोजयेत् । सूत्रान्तर्याम्यक्षराणितार्किकानानुमन्वते ॥ तर्काभासोभवेत्तत्रहेतुदृष्टान्तवर्जनादिति ॥ पवित्राचपवित्रसूत्रच्छ्वाः पुंसिचेतिपुंस्त्वमपि ॥

सूत्रकण्ठः । पुं० विप्रे । द्विजन्मनि ॥ खञ्जरीटखगे ॥ कपोते ॥

सूत्रकोणः । पुं• डमरौ ॥

सूत्रगण्डिका । स्त्री० एपण्याम् ॥

सूत्रतन्तुः । पुं• सूत्रे ॥

सूत्रतर्कुटी । स्त्री• तर्क्वाम् । तर्कु• वा• इ• भा• ॥

सूत्रधारः । पुं• इन्द्रे ॥ शचीपतौ ॥ नान्द्यन्तरसञ्चारिणि• नटविशेषे ॥ सतुरङ्गभूमिंपरिक्रम्य-नाटकीयकथासूत्रसूचकः । तल्लक्षणंयथा । चतुरोद्यनिपुणा

तोऽनेकभाषासमाहृत: । नाना
भाषणतत्त्वज्ञो नानानाट्यार्थतत्त्ववि
त् ॥ नानागतिप्रचारज्ञो रसभाव
विशारद: । वेषोपचारचतुरो ना
नाशिल्पिकलान्वित: । छन्दोऽभि
धानतत्त्वज्ञ: सर्व्वशास्त्रविचक्षण:
। तत्सङ्गीतानुगतक: कलातालाव
धारण: ॥ अवधार्य्यप्रयोक्ता च योक्तृ
णामुपदेशक: । एवं गुणगणोपेत
सूत्रधार: स उच्यते ॥ शिल्पकारि
प्रभेदे । त्वष्टरि । रथकारे । बढ
इ० इ० दे० भा० । कुतार० इ०
गौ० दे० भा० प्र० ॥ सूत्रं धरति
। धञ्० । कर्म्मण्यण् ॥
सूत्रपुष्प: । पुं० कार्पासे ॥
सूत्रभित् । पुं० सौचनकर्त्त: सौचि
के । तुन्नवाये ॥
सूत्रमध्यभू: । पुं० धूनके । यक्षधू
पे ॥
सूत्रयन्त्रम् । न० वापसूत्राख्यकाष्ठे
। सूत्रवेष्टनकाष्ठे । तांत० इ०
गौ० भा० प्र० ॥ यथा । आवा
पनं सूत्रयन्त्रं यत्सूत्रैरभिवेष्ट्यते ॥
इति शब्दमाला ।
सूत्रला । स्त्री० तर्कुट्याम् ॥ इ०
हा० लो० ॥
सूत्रवीणा । स्त्री० वीणाप्रभेदे । ला
वुक्याम् ॥ इति हारावली ॥
सूत्रवेष्टनम् । न० तन्तुवायोपकरणे
। वसरे । तासनी० इ० गौ०
भा० प्र० ॥ सूत्रस्य वेष्टनम् ॥ सू
त्रं वेष्टते अनेन इति वा । इति स्वामी ॥
सूत्रात्मा । पुं० समष्टिलिङ्गशरीराभि
मानिनि चैतन्ये । हिरण्यगर्भे ॥
सर्व्वतानुस्यूतत्वात् सूत्रात्मा ॥
वायौ ॥ यथा । येनाण्डादय:
स्थिता वायु: सूत्रात्मेति श्रुतेरि
त: ॥
सूत्रामा । पुं० गोत्रभिदि । इन्द्रे सु
ष्ठु० उत्० अत्यर्थमपुन:पुनस्त्रा
यते । लोकपालने । आतो मनि
न्नित्यादिना मनिन् ॥
सूत्राली स्त्री० गलसूत्रे । गलमेख
लायाम् ॥ इति हारावली ॥
सूत्री । पुं० काके । अस्य पर्याया
यथा । काकेतु करटारिष्ट बलिपुष्ट
सकृत्प्रजा: । ध्वाङ्क्षात्मघोषपर
भृद्बलिभुग्वायसा अपीत्यमर: । का
कोरतज्वर: सूत्री श्रावकी गूढमैथु
न: । कारव: परभृत्युश्चलुण्टाकी
मौद्गलिङ्गिक: ॥ अक्षज: सत्यवा
क् काणोऽपक्षटीनगरीवक: । ऐ
न्द्रिसनाडीजङ्घविकाण्डेकाक्षवाय
का: ॥ त्रि० सूत्रविशिष्टे ॥
सूत्रोद्देश: । पुं० भूमिकायां ॥
सूद: । पुं० सूपकारे । बल्लवे । आ
रालिके ॥ व्यञ्जने ॥ सारथ्ये ॥
लोध्रे ॥ अपराधे ॥ पापे ।

सूद्यते॰ सूदयति वा । षूद क्षरणे एरच् । पचाद्यच् वा ॥

सूदनम् । न॰ हनने ॥

सूदशाला । स्त्री॰ रसवत्याम् । पाकस्थाने । महानसे ॥ रसोइ॰ इ॰ भा॰ ॥ सूदानांसूपकाराणांशाला ॥

सूदाध्यक्ष: । पुं॰ पाकशालाध्यक्षे । पौरोगवे ॥ तल्लक्षणं यथा । अनाहार्य: शुचिर्दक्षस्त्विभिज्ञस्तविशारद: । सूदशास्त्रविशेषज्ञ: सूदाध्यक्ष: प्रशस्यते ॥ इति मात्स्ये १८६ऽध्याय: ॥

सूनम् । न॰ प्रसवे । पुष्पे ॥ पुं॰ किरणे । सूर्ये ॥ त्रि॰ पुष्पिते ॥ जाते ॥ सवनम्॰ सूयते वा । षूङ् प्राणिप्रसवे । भावेकर्मणि वा क्त: । स्वादय ओदित इति निष्ठानत्वम् ॥

सूना । स्त्री॰ पुत्र्याम् ॥ अधोजिह्वायाम् । गलशुण्डिकायाम् । घण्टिकायाम् ॥ जन्तुवधस्थाने । यथा । पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्कर: । कण्डनी चोदकुम्भश्च वध्यते यास्तु वाहयन् ॥ सूने॰ सूना॰ हिंसास्थानगुणयोगात् ॥ शुण्डायाम् । वेश्यायाम् । सुनोत्यस्याम् । षुञ् अभिषवे । सुञो दीर्घश्चेति न: ॥ यद्वा । सवनम्॰ सूयते वा । षूङ् प्राणिगर्भविमोचने भावेकर्मणि क्त: । स्वादय ओदित इति निष्ठानत्वम् ॥

सूनु: । पुं॰ पुत्रे ॥ अनुजे ॥ अर्के । रवौ ॥ सूयते । षूङ् प्राणिप्रसवे । सुव: कित् इति नु: ॥ स्त्री॰ कन्यायाम् ॥

सूनू: । स्त्री॰ कन्यायाम् ॥

सूनृतम् । न॰ प्रियसत्योक्तौ । सत्यप्रियवाक्ये ॥ इन्द्रो भवानिति प्रियम्॰ न सत्यम् । काणो भवानिति सत्यम्॰ न प्रियम् ॥ मङ्गले ॥ सुष्ठु नृत्यन्त्यनेन । नृती॰ । घञर्थे क: । अन्येषामपीति दीर्घ: ॥ त्रि॰ तद्वति ॥

सूनृता । स्त्री॰ प्रियसत्ये वचसि । ऋते । ऋतञ्च सूनृता वाणीत्युक्ता ॥

सून्मद: । त्रि॰ उन्मत्ते ॥

सून्माद: । त्रि॰ उन्मादिष्णौ ॥ उन्मत्ते । उन्मादरोगविशिष्टे ॥ सु॰ अतिशयित उन्मादोऽस्य । सोपसर्गत्वान्मदेर्घञ् ॥

सूप: । पुं॰ सूदे ॥ भाण्डे ॥ व्यञ्जने । दाल्याम् ॥ यथा । दलितन्तु शमीधान्यं दालिर्दाली स्त्रियामुभे । दाली तु सलिले सिद्धा लवणार्द्रकहिङ्गुभि: । संयुक्ता सूपनाम्नी स्यात् कथ्यन्ते तद्गुणा अथ ॥ सूपो विष्टम्भको रूक्ष: शीतस्तु स विशेषत: । निस्तुषो भृष्टसिद्ध: स लाघवं सुतरां व्रजेत् ॥ शोभना आपोऽस्मिन् । ऋक्

सूरित्य : ॥ कुसुयुभ्यश्चेत्यपचतउ त् ॥ अद्नोरित्यत्रदीर्घनिर्देशा दन्यत्राप्यूदितिवा ॥ यद्वा । सव त्रिरसम् । सुप्रसवादौ । सुशूभ्यां निच्चेतिपोदीर्घश्च ॥

सूपकारः । पुं॰ पाककर्त्तरि । वल्लवे । आरालिके ॥ औदनिके ॥ तल्लक्षणं यथा । कुलीनोकारतत्त्व ज्ञोवलवान्मिष्टपाचकः । शूरश्च कठिनश्चैवसूपकारः सउच्यते ॥ अपिच । पितृपैतामहोदन्नः शा स्त्रज्ञोमिष्टपाचकः । शौचयुक्तो ऽथभक्तश्चसूपकार सउच्यते ॥ भवे युर्धार्मिकाः स्निग्धाः सूपकाराः प्रमागताः । धृतिमन्तोपरायशुच यस्तथावैदावशेस्थिताः ॥ अन्येपित थयेकेचिच्चरक्तिपरिचारकाः । तेपि चैवंविधाएवतदध्यक्षोपितादृशस्त्विति ॥ सूपंकरोति । कृ॰ । कर्मण्यण् । शूद्रपाकोपजीविनि ॥

सूपकारपतिः । पुं॰ पाचकाध्यक्षे लक्षणंयथा । सूपकारपतिस्तत्र प्रायोवैद्यगुणान्वितः । तत्तद्य ञ्जनतत्त्वज्ञस्तत्प्राशनतत्परः । जीवनंजीवनामन्नंतद्भुक्तं विधिपाचि तम् । तदेवाविधिनाभुक्तं परिणा मेविषोपमम् ॥ सूपकाराणांप तिः ॥

सूपधूपनम् । न॰ हिङ्गुनि ॥

सूपपर्णी । स्त्री॰ मुद्गपर्ण्याम् ॥

सूपश्रेष्ठः । पुं॰ मुद्गे ॥

सूपाङ्गम् । न॰ हिङ्गुनि ॥

सूप्यः । पुं॰ वैदले । शमीधान्ये ॥

सूमम् । न॰ पुं॰ क्षीरे ॥ नभसि ॥ सूते । षूङ्प्राणिगर्भविमोच ने । सूयतेवा । षूङ्प्राणिप्रसवे । इषियुधीन्धिदसिश्याधूसूभ्योम क् ॥ पुं॰ चन्द्रे ॥

सूर । पुं॰ सूर्ये । रवौ ॥ सुवति प्रेरयतिकर्मणिलोकम् । रप्रे । सु णे । सुसूधाञ्गृधिभ्यः क्रन् ॥ यादवे । वसुदेवजनके । ह्रत्वार्हत् पितृविशेषे ॥

सूरणः । पुं॰ अर्शोघ्ने । शूरणे । कन्दे ॥ सूयते । सूरीहिंसायाम् । बहुलमन्यत्रापीतियुच् । कर्त रित्युड्वा ॥ बाहुलेसूरणंना द्यात् ॥

सूरतः । वि॰ कृपालौ ॥ सुष्ठुरम ते । रम॰ । क्तः । बाहुलकात् पूर्वपदस्यदीर्घः ॥ सूराकर्द्रुवत पतिवा । डः ॥ उपशान्ते ॥ सौ रमेः तोरमेः पूर्वपदस्यचदीर्घः । क्वित्वादनुनासिकलोपः ॥

सूरसूतः । पुं॰ अरुणे । गरुडा ग्रजे ॥ सूरस्यरवेः सूतः सारथिः ॥

सूरिः । पुं॰ धीरे ॥ पण्डिते । सङ्ख्यावति ॥ सूते॰ सूयतेवा । षू

ङ्प्राणिगर्भविमोचने । प्राणिप्रसवे वा । सूङः क्तिः ॥ यादवे ॥ सूर्य्ये ॥

सूरी । पुं॰ पण्डिते । विदुषि ॥ सूरः सूर्य्योऽस्त्यु पास्यतयाऽस्य । अ तइनिठनाविती नि: ॥ न॰ धूमे ॥

सूरी । स्त्री॰ कुन्त्याम् । पृथायाम् ॥ सूर्य्यस्त्री । पुंयोगादिति ङीष् । सूर्य्यतिष्यागस्त्येति यलोपः ॥ राजसर्षपे । राजिकायाम् ।

सूर्षणम् । न॰ आदरे ॥ सूर्षादरे । ल्युट् ॥

सूर्क्ष्यः । पुं॰ माषे ॥

सूर्पः । पुं॰ प्रस्फोटने ॥ शोधनभाजने ॥ कुम्भपरिमाणे । द्रोणद्वयपरिमाणे । श्रुतिरेषाऽपरिभाषा । ससर्त्ति । सृगतौ । सृशृभ्यामूङ्चेतिदशपादीस्थपाठात्पः ॥

सूर्पणखी । स्त्री॰ रावणस्यभगिन्याम् ॥ सूर्पशोधनभाजनम् । नखविदूषणे । सूर्पवच्छोधनभाजने नयस्मादिसत्क्रियानखयतिदूषयतीतिसूर्पणखी ॥

सूर्पपर्णी । स्त्री॰ मुद्गपर्ण्याम् ।। पूर्वपदादितिणत्वम् ।

सूर्पारकम् । न॰ तीर्थविशेषे । रामतीर्थे ।।

सूर्म्मी । स्त्री॰ अयःप्रतिमायाम् ।। शोभनाऊर्म्मिः । बहुव्रीहिर्वा । सर्वतोऽक्तिन्नर्थादितिङीष् । गौरादित्वाद्वा ङीष् ।। सूर्म्मीं ज्वलन्तीमाश्लिष्य मृत्युवेगुरुतल्पगः ।।

सूर्य्यः । पुं॰ अर्कपर्णे ।। सूरे । अर्यमणि । आदित्ये । तपने । सवितरि । रवौ ॥ अस्यद्ध्यादिभिः पूजोक्ताब्रह्मपुराणे । यथा । उदयान्नि: सृतंयर्थ्यंयस्तुभक्त्यानरोत्तिजः । दद्यचताञ्जलिभिस्तुतस्मिः पूजयेच्छुचिः । तस्यभावप्रपन्नस्याशुभंयत्समुपार्ज्जितम् । तत्क्षणादेवनिर्दग्धंभस्मीभवतितत्क्षतादिति ।। रश्मीनांप्राणानांरसानाञ्चस्वीकरणात्सूर्य्यः ।। यद्वा । सरत्याकाशे । सृ॰ । कर्त्तरिक्यप् । निपातनादुत्त्वम् । तस्यरपरत्वाद्धलिचेतिदीर्घः ॥ यद्वा । सुवति॰ कर्मणिलोकंप्रेरयति । षूप्रेरणे । कर्त्तरिक्यप् । निपातनात्क्यपोरुडागमः । उभयत्रराजसूयसूर्य्यत्यादिनानिपातनम् ।। यद्वाजनयतिसर्वंजगदितिवा । षूङ्प्राणिगर्भविमोचने । पूर्ववन्निपातनम् सर्वावभासके ।। पौर्णमासीचन्द्रे ।। यथा । परीतन्तुदिवाप्रोक्तंविपरोतन्तुशर्वरी । पौर्णमासीगतश्चन्द्रः सूर्य्यइत्यभिधीयतइति ।।

सूर्य्यकान्तः । पुं॰ अग्निमणौ । अग्निगर्भे । सूर्य्यमणौ । सूर्य्याश्मनि । पुष्पकविशेषे । सूर्य्यमणौ

। पुष्यरक्ते । पद्मतृपुटे ॥ स्फटिके ॥ सूर्य्यः कान्तोऽस्य ॥

सूर्य्यकान्तिः । स्त्री० पुष्पविशेषे ॥ यथा । सूर्य्यकान्तिस्तालपर्णाथोड्र पर्यायस्यपीतिशब्दचन्द्रिका ॥ सूर्य्यद्युतौ ॥

सूर्य्यकालः । पुं० दिने ॥

सूर्य्यकालानलचक्रम् । न० स्वरोदय प्रसिद्धे मानवानांशुभाशुभज्ञानार्थे मनुष्यघटितचक्रविशेषे ॥ विवादेव्यसनेयुद्धेरोगार्ते गमनेतथा ॥ सूर्य्यकालानलंचक्रं ज्ञातव्यन्तुप्रयततः ॥

सूर्य्यगृहम् । न० सिंहराशौ ॥ अ थाहकालिदासः । मध्यानननाम्ना द्वियथैभचक्रे पञ्चाननाख्योस्तिनया भचक्रे । एनं हरिः पालयितुं स मेघ्यक्लृप्तंतदिदन्तदगारमाशैरिति ॥ सूर्य्यस्यगृहम् ॥

सूर्य्यग्रहः । पुं० सूर्य्योपरागे । सूर्य्यग्रहणे ॥ यथा । सूर्य्यग्रहः सूर्य्यवारेसोमेसोमग्रहोभवेत् । चूडामणिरयंयोगस्तत्रानन्तफलंस्मृतम् ॥

सूर्य्यग्रहणम् । न० सूर्य्योपरागे ॥ तत्कारणमुक्तं वह्निपुराणे । सूर्य्येन्द्वोरुपरागस्तुगोलकच्छायया भवेत् । अन्योन्ययोस्तयोरेवच्यामयोरेकयात् ॥ ग्रासमोचौतुजायेते तथात् पूर्वपश्चिमौ । तत्रपुण्यफलाद्यार्थः छायारोहैःसृष्टिमाने ति ॥

सूर्य्यजः । पुं० यमे पितृपतौ ॥ शनैश्चरे ॥ सुग्रीववानरे ॥ कर्णे । कुन्त्यात्मजे ॥ सूर्य्याज्जातः । अनौ० । डः ॥

सूर्य्यजा । स्त्री० कालिन्द्याम् । यमुनायाम् ॥

सूर्य्यतनयः । पुं० यमे ॥ शनिग्रहे ॥ कर्णे ॥ सुग्रीववानरे ॥

सूर्य्यतनया । स्त्री० कालिन्द्याम् । यमुनायाम् ॥ सूर्य्यस्यतनया ।

सूर्य्यतीर्थम् । न० तीर्थविशेषे ॥

सूर्य्यपत्रः । पुं० अर्कपर्णे । आदित्यपत्रे ॥ सूर्य्याभानितीव्राणि पत्राणिपत्राणियस्य ॥

सूर्य्यपुत्रः । पुं० सूर्य्यजे सूर्य्यतनये ॥

सूर्य्यपुत्री । स्त्री० यमुनायाम् । यथा । यमस्वसर्नमस्तेस्तुयमुने लोकपूजिते । वरदाभवमेनित्यं सूर्य्यपुत्रिनमोस्तुते ।

सूर्य्यफणिचक्रम् न० स्वरोदयोक्तेम नुजानांसर्वकार्येशुभज्ञापकेचक्रविशेषे ।

सूर्य्यवल्ली । स्त्री० अर्कपुष्पिकायाम् ॥

सूर्य्यभक्तः । पुं० बन्धूके ॥ त्रि० अर्कपूजके ॥

सूर्य्यभक्ता । स्त्री॰ सुवर्च्चलायाम् । आदित्यभक्तायाम् । हुल्हुल् इ॰ भा॰ ॥

सूर्य्यमणिः । पुं॰ सूर्य्यकान्तमणौ ॥ पुष्पवृक्षविशेषे । मचतपुटे । पुष्परक्ते ॥

सूर्य्यमण्डलम् । न॰ अर्कविम्बे ॥ सूर्य्यस्यमण्डलम् ॥

सूर्य्यमण्डलभेदी । पुं॰ परिव्राजि । योगिनियुद्धरणे ऽभिमुखोभूत्वाहत स्तस्मिन् ॥

सूर्य्यलता । स्त्री॰ आदित्यभक्तायाम् ॥

सूर्य्यमुखी । स्त्री॰ सूर्य्यमुखीतिख्याते पुष्पवृक्षे ॥ सूर्य्यमुख्याहरेत्स्फोटयोनिरुक्तामिमाण्डताम् । अर्कवृतिशेषः ॥

सूर्य्यलोकः । पुं॰ सौरभुवने ॥

सूर्य्यवंशः । पुं॰ सूर्य्यसन्ताने ।

सूर्य्यसञ्ज्ञम् । न॰ कुङ्कुमे ॥

सूर्य्यसारथिः । पुं॰ अरुणे ।

सूर्य्यहृदयम् । न॰ सूर्य्यस्तवविशेषे

सूर्य्या । स्त्री॰ सूर्य्यस्यदेवतायाम् येषिति सूर्य्यस्योदेवता । सूर्य्यदेवतायांचाप् ॥ इन्द्रवारुण्यामोषधौ । विशालायाम् ॥ नवोढायाम् ॥

सूर्य्याघ्र्यम् । न॰ सूर्य्यसम्प्रदानकार्घ्ये ॥

सूर्य्यालोकः । पुं॰ आतपे ॥

सूर्य्यावर्त्तः । पुं॰ हुल्हुल् इति प्रसिद्धेच पविशेषे । सुवर्च्चलायाम् ॥ सूर्य्यावर्तोविषघ्नः । सुलचि भा॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ शाकविशेषे अस्यपर्य्यायायथा । पार्श्वतैयच्छाक्षरभोवशिरः कपिपिप्पलो । आमातासौम्यकत्प्रोक्ता सूर्य्यावर्तःसितोऽपरद्वितरमाला ॥ वराहकालीकथितः सूर्य्यावर्त्तस्तुशाष्कि कोरितिहराख्यौ । शिरोरोगविशेषे ॥ यथा । सूर्य्योदयंप्रतिमन्दमन्दम क्षिभ्रुवंरुकसमुपैतिगाढम् । विवर्द्धतेचांशुमतासहैवसूर्य्यापवृत्तौविनिवर्त्ततेच ॥ शीतेनशान्तिंलभते चकिञ्चिदुष्णेनजन्तुःसुखमाप्नुयाद्वा । सर्व्वात्मकंकष्टतमंविकारंसूर्य्यावर्त्तमुदाहरन्ति ॥ सूर्य्योदयमितिखचोक्तव्यारभ्येतियावत् । सूर्य्यावर्त्तौ॰ सूर्य्यसंयोगतो ॥ इति ॥

सूर्य्यावर्त्ता । स्त्री॰ आदित्यभक्तायाम् ॥

सूर्य्याश्मा । पुं॰ सूर्य्यकान्तमणौ ।

सूर्य्याश्वः । सूर्य्यघोटके ॥ सूर्य्याश्वेनाटहरितोसमाविति त्रिकाण्डशेषः ॥

सूर्य्याह्वम् । न॰ ताम्रे ॥ पुं॰ अर्कवृक्षे ॥ त्रि॰ सूर्य्यनामके ॥

सूर्य्येन्दुसङ्गमः । पुं॰ दर्शे । अमा

मध्यायाम् ॥ सूर्य्येन्दुसङ्गच्छतोऽ स्मिन् । घः ॥

सूर्य्योढः। पुं॰ सूर्य्यास्तकालप्राप्ते ऽतिथौ ॥ यथा। सूर्य्योढस्तुसम्प्राप्तो यः सूर्य्येऽस्तङ्गतेऽतिथिरितिहेमचन्द्रः। अप्रणोद्योऽतिथिः सायंसूर्य्योढोगृहमेधिनेतिमनुः ॥ सूर्य्येणऊढः प्रापितः ॥ अस्तंगतसूर्य्ये ॥ यथा। दिवातिथौतुविमुखेगतेयत्पातकंभवेत्। तदेवाष्टगुणंरिव्या त्सूर्य्योढेविमुखेगतइतिविष्णुपुराणम् ॥

सूर्य्योदयः। पुं॰ भानोः प्रकाशे। सयथादेवीभागवते। पञ्चपंच ५५ उषःकालः सप्तपंचा ५७ रुणोदयः। अष्टपंच ५८भवेत्प्रातः शेषः सूर्य्योदयः स्मृतइति। तत्रशयनंनिषिद्धंयथा। सूर्य्योदयेचास्तमितेच शायिनंविमुंचतिश्रीरपिचक्रपाणिनमिति ॥

सृकः। पुं॰ वाणे ॥ कुमुदे। करवे ॥ उत्पले। पद्मे वाते। वायौ ॥ सरति॰ ससर्त्ति वा। सृगतौ। सृवृभूशुषिमुषिभ्यःकक् ॥ सृकंसरणशीलमितिवेदभाष्यम् ॥

सृकण्डुः। पुं॰ कण्डुरोगे ॥

सृका। स्त्री॰ शब्दवत्यांरत्नमय्यांमालायाम् ॥ चकुत्सितायांकमंमघ्यांगतौ ॥ टाप् ॥

सृकालः। पुं॰ सृगाले ॥

सृक्कम्। न॰ सृक्कणि ॥

सृक्कणी। न॰ २ ओष्ठयोः प्रान्तभागे। सृजतिलालादि। सृजविसर्गे। बाहुलकात्कनिन्। अस्य मः ॥ प्रान्तावोष्ठयस्सृक्कणीइत्यमरः। ओष्ठस्येतिजातावेकवचनं ॥

सृक्क। ) न॰ सृक्कणि ॥
सृक्का। )

सृक्वि। न॰ सृक्कणि ॥ दूत्यरुणोभरतश्च ॥

सृगः। पुं॰ भिन्दिपाले ॥ सरति। सृ॰ बाहुलकात्॰ गक् ॥

सृगालः। पुं॰ गोमायौ। अस्य के। सियाल॰ दू॰ भा॰ प्र॰ मृगधूर्त्तके ॥ सृजतिमायाम्। सृज॰। बाहुलकात्कालन्। न्यङ्क्वादिः। असृगालातिवा। कः। पृषोदरादिः। सृगंलातिवा। पूर्व्ववत् ॥ दैत्यविशेषे ॥

सृड्डा। स्त्री॰ सृकायाम् ॥ सतौ ॥

सृड्। पुं॰ मुष्टिकासंरि ॥ सृजेः क्विप् ॥ सृजीसृज॰ कृत्यादिरूपाणि ॥

सृजकाचारः। पुं॰ सर्जिकाक्षारे ॥

सृज्यमानः। त्रि॰ सर्व्वलभूतसङ्के ॥

सृञ्जयः। पुं॰ पाण्डवानांसेनापतौ ॥

सृणिः। पुं॰ चन्द्रे ॥ सूर्य्ये ॥ वायौ ॥ सरति। सृ॰ अनिदेशा

द्गिसर्त्तः क्तिन् ॥ यन्त्री । पुं० स्त्री० चक्षुषि ॥ सृणिः स्त्रियामित्यमरः । सृणिः स्यादङ्कुशेपुमानितिशब्दार्णवः । तेनेभयलिङ्गोयमङ्कुशे ॥ सरतिगन्तरंगच्छति अनयावा । सृ० । सृवृषिभ्यां कित्रितिनिः ॥

सृणिका । स्त्री० लालायाम् ॥ संज्ञायांकन् ॥

सृणीका । स्त्री० लालायाम् । सरति । सृ० । सर्त्तेर्नुग्चेति ईकन् ॥

सृतः । त्रि० गते ॥ सृधातोः क्त प्रत्ययेननिष्पन्नः ॥

सृतिः । स्त्री० गमने ॥ मार्गे ॥ सरत्यनया । सृगतौ । क्तिन् ॥ सृकायाम् । कुत्सितायांमृद्धजनप्रसूतायांगतौ ॥

सृत्वा । पुं० विसर्पे ॥ पश्चिमि ॥ हर्षौ ॥ प्रजापतौ । सरति । सृ० । शीङ्क्रुशीत्यादिनाक्वनिप् । तुक् ॥

सृत्वरः । त्रि० गमनशीले ॥ सरतितच्छीलः । सृ० इण्नशजिसर्त्तिभ्यः क्वरप् ॥

सृत्वरी । स्त्री० गमनकर्त्र्याम् ॥ टिड्ढेतिङीप् ॥

सृदरः । पुं० । सर्पे ॥

सृदाकुः । पुं० वायौ ॥ वज्रे ॥ ज्वलने ॥ यमे ॥ प्रतिसूर्यके ॥ दावाग्नावितिहैमः ॥ सरत्यत्यर्थम् । सृ० । सर्त्तेर्दुकूचेति काकुप्रत्ययः ॥

सृदाकुः । स्त्री० नद्याम् ॥

सृपाटः । पुं० सृपाट्याम् ॥

सृपाटिका । स्त्री० चञ्च्वाम् ॥

सृपाटी । स्त्री० माने । गौरादित्वान्ङीष् ॥ रक्तधारायाम् ॥

सृप्तः । त्रि० गते । प्रविष्टे ॥

सृप्यमाणः । त्रि० पच्यमाने ॥ सृप्यमाणपर्यायास्मान्पतन्त्युपरिगाः खगाः ॥

सृपः । पुं० चन्द्रे । निशाकरे ॥ सर्पति । सृप्लृगतौ । स्फायितञ्चिवञ्चिशकिक्षिपि[illegible] ।

सृमरः । पुं० मृगविशेषे ॥ यस्य नीलवालैः कान्ताकचमाल्यं क्रियते सचमरिवाकृतिर्भवति । सरणशीलः । सृगतौ । सृघस्यदः क्मरच् ।

सृष्टः । त्रि० निर्म्मिते । रचिते । युक्ते ॥ निश्चिते ॥ प्रचुरे । प्राज्ये । भूषिते ॥ मुक्ते । त्यक्ते । सर्जनम् । सृज० । भावेक्तः ॥

सृष्टिः । स्त्री० सर्गे । निर्माणे । निर्मितौ ॥ स्वभावे । त्यागे ॥ सर्जनम् । सृज० क्तिन् । सृज्यतेइतिकर्म्मणिवाक्तिन् ।

सृष्टिप्रदा । स्त्री० गर्भदात्र्योषधौ ।

सेतुसंमूढसंस्थाः ॥ लग्नशुद्धिमाह । लेयेतिमीनाबुरिभेमिथेऽस्त्रियाि हिपुंसिलग्ने समदस्वरायगे । चतुष्टयेविक्रमकेरिलाभगैरसाधुभिः सेतुनिबन्धनंश्रिये ॥ इति १८ अध्यायः ॥

सेतुभेदी । पुं॰ दन्तीवृक्षे ॥

सेतुवृक्ष : । पुं॰ वरुणद्रुमे ॥

सेत्रम् । न॰ बन्धनद्रव्ये । निगडे । बेडीइ॰ भा॰ प्र॰ ॥ सीयतेऽनेन । षिञ् बन्धने । दाम्नीशसेतिकारणेष्ट्रन् ॥

सेदिवान् । त्रि॰ निषणे । षदॢ॰ । भाषायांसदवसश्रुवःक्वसुः इति॰ लिटः क्वस्वादेशः लिटिधातोरितिद्वित्वे ॰ अतएकहल मध्येइति॰ एत्वाभ्यासलोपौ । इट् ॥ स्त्रियामुगितश्चेतिङीपि॰ वसोःसंप्रसारणेवलादित्वाऽभावान्नेट् । सेदुषी ॥

सेदु : । पुं॰ नाटाम्ने । राजतेमिषे । तरम्बुजी ।

सेना । स्त्री॰ ध्वजिन्याम् । वाहिन्याम् । पृतनायाम् । सैन्ये । इत्ताहंस्मातरि ॥ सिनोति । षिञ्॰ । कृवृजृसिद्रुपन्यनिस्वपिभ्योनिदितिनन् । टाप् ॥ सहइनेनस्वामिनावा ॥

सेनाग्रग : । पुं॰ सेनापतौ ॥ सेनाया अग्रे गच्छतिगमड्॰ । ड : ॥

सेनाग्रणी : । पुं॰ सेनाग्रेसरे ॥

सेनाङ्गम् । न॰ हस्त्यादिचतुष्के ॥ तद्यथा । हस्त्यश्वरथपादातंसेनाङ्गस्याच्चतुष्टयमिति ॥ अत्र॰ नाविकाटविकादीनांपदातावन्तर्भावः । नौकानांरथेष्वन्तर्भावः । महिषादीनां गजाश्वेन्तर्भावः । सेनायाअङ्गम् ॥

सेनानायक : । पुं॰ बलाध्यक्षे । सेनापतिदशकस्यैकस्मिन् प्रधाने ॥

सेनानिवेश : । पुं॰ शिविरे ॥

सेनानी : । पुं॰ अग्निभुवि । गुहे । कार्त्तिकेये । सेनापतौ ॥ पृतनाधिपे ॥ सेनांनयति । णीञ्॰ । सत्सूद्विषेतिक्विप् ॥

सेनानुचारी । पुं॰ सैनाग्रगे ॥ सेनामनुपश्चाद्गमिकरोति । णिनिः ॥

सेनापति : । पुं॰ सैन्यपे । वाहिनीपतौ ॥ नाविद्दशकस्यैकः पतिः सेनापतिरुच्यते । तल्लक्षणं यथा । कुलीनः शीलसम्पन्नोधनुर्वेदविशारदः । हस्तिशिक्षाश्वशिक्षासु कुशलः श्लक्ष्णभाषणः ॥ निमित्ते शकुनज्ञानेवेत्ता चैवचिकित्सिते । कृतज्ञः कर्मणांशूरस्तथाक्लेशसहोऋजुः । व्यूहतत्त्वविधानज्ञः फल्गुसारविशेषवित् । राज्ञासेनापतिः कार्योब्राह्मणः क्षत्रियोऽथवेति मात्स्ये राजधर्मः । कार्त्तिकेये ।

महासेने । षडानने । गुहे । स्कन्दे । सेनायाः वाहिन्याः पतिः ॥

सेनामुखम् । न॰ सैन्यपङ्क्तिषु ॥ यथा । एकेभैकरथात्र्यश्वापत्तिः पञ्चपदातिका । पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्यायथोत्तरम् ॥ सेनामुखं गुल्मगणौवाहिनीपृतनाचमूः । अनीकिनीदशानीकिन्यक्षौहिणीति । सेनसेनामुखे॰ इभाः त्रि ३ । रथाः ३ । अश्वाः ९ । पदातयः पञ्चदश सम्मिलितव्यया ३॰ भवन्ति । एतत्परिमाणपरिमितासेनासेनामुखमुच्यते । सेनायाःमुखमुपक्रमः ॥

सेनारच : । पुं॰ सैनिके । प्रहरिकाद्दौ । पहरिया॰ इ॰ भा॰ प्र॰ ॥ सेनां रक्षति । रक्षपालने । कर्म्मण्यण् ॥

सेनिका । स्त्री॰ वर्णवृत्तविशेषे ॥ हारगण्डखकुण्डलेनमण्डितायापयोधरेणवीणयाङ्किता । रूपनूपुरेणचापिदृत्तभासेनिकाभुजङ्गराजवल्लभा ॥ यथा । सायुधाष्टबाहुराजिमण्डितारक्तबीजरक्तपानपण्डिता । चण्डमुण्डशुम्भदम्भखण्डकामङ्गलानिमेददातुचण्डिका ॥

सेपुरम् । न॰ वाह्लीकग्रामविशेषे ॥

सेर : । पुं॰ तुरुष्कपरिकल्पितपालि

कापरिमाणसंज्ञायाविख्यातेधान्यमानविशेषे ॥ यथा । पादोनगद्याणकतुल्यटङ्कैर्द्विसप्ततुल्यैः कथितोत्र सेरइतिलीलावती ॥

सेराह : । पुं॰ पीयूषवर्णाश्वे ॥ सतुदुग्धवच्छ्वेतवर्णः । इ॰ हेमचन्द्रः ॥

सेव : । पुं॰ सेवने । सेवते । सेव॰ पचाद्यच् ॥ न॰ सेविवदरे ॥ यथा । मुष्टिप्रमाणंवदरंसेवमाहुर्भिषग्वराः । सेवंसमीरपित्तघ्नं वृष्यं कफकृद्गुरु । रसेपाकेचमधुरं शिशिरं रुचिशुक्रकृत् ॥

सेवक : । पुं॰ प्रसेवे । त्रि॰ अनुजीविनिपरिकर्म्मणि । परिकरे । भृत्ये । सेवाकर्त्तरि ॥ स्निग्धः स्थिरश्चवलवान सेवार्यासेवकोमतः ॥ अन्यप्रभुमङ्गिधीप्रश्नकरणसमत्वं यथा ॥ किङ्करः किङ्करोवापि सर्वथाप्रष्टुमीश्वरम् । योयस्यसेवानिरतः सकंपृच्छतितंविना ॥ सेवते । सेवसेवने ण्वुल् ॥

सेवकालु : । पुं॰ दुग्धपुच्छाम् । निशाभङ्गायाम् । दुग्धपेया॰ इ॰ गौ॰ भा॰ प्र॰ वृत्ते ॥

सेवती । स्त्री॰ कुमार्याम् । भङ्ष्टायां । तरुण्याम् ॥

सेवनम् । न॰ उपास्तौ । विस्तानुतौ । सेवनायाम् ॥ सूच्यादि

नावस्थादिसेवने । स्मृतौ । षि
बुतन्तुसन्ताने ल्युट् । सेवसेव
नेषा ।

सेवना । स्त्री॰ परिचर्य्यायाम् । सेवा
याम् ।

सेवनी । स्त्री॰ सूच्याम् । शरीराश्रय
वसंयोगविशेषे । यथा । सेवन्यः
सप्त तासान्तु भवेयुः पञ्च मस्तके ।
एका शिफ्रसि जिह्वायामेका चैव न
ताः क्वचिदिति भावप्रकाशः ।

सेवन्ती । स्त्री॰ शतपत्र्याम् ।

सेवा । स्त्री॰ । सेवने । भक्तौ । से
व्यचित्तानुवृत्तौ । सर्व्वभावेन सेव्या
नुकूलकारितायाम् । प्रवृत्तौ । वे
तनग्रहणेनाज्ञाकारणं सेवेति व्याख्या
तारः । सेवा तु दीनदृष्टिसन्दर्शन
स्वामितर्ज्जनोच्चक्रियादिधर्म्मयो
गात् शुनवृत्तिभिर्भवति । ब्राह्मणे
नसा न कार्य्या । सेवाश्ववृत्तिराख्या
ता तस्मात्तां परिवर्ज्जयेदिति मनुवच
नात् । सेवनम् । सेव॰ । गुरोश्च ह
लहत्यः । टाप् । सेवनमाराधन
मुपभोगश्चाश्रयणञ्चेति । यथा दिशा
सेवते॰ सुखसेवते॰ तीर्थं सेवते सा
धुरिति । परस्मैपदप्रवृत्तु । नीचं
समृद्धमपि सेवति नीचएव । स्वाधी
नेविभवेऽप्यहो नरपतिं सेवन्ति किं मा
निनः । इत्याद्युदाहरन्ति ।

सेविः । न॰ सेवे । सेविते । मुष्टि
प्रमाणबदरे ।

सेविका । स्त्री॰ दुग्धपक्वाल्पपिष्टकी ।
सिमई॰ सेवी॰ इ॰ भाषा॰ प्र॰
। यथा । समितावर्त्तिताः कृ
त्वा सुसूक्ष्मा यवसन्निभाः । शुष्काः
क्षीरेण संसाध्याः भोज्याः घृतसिता
न्विताः । सेविकास्तर्पणी बल्या
गुर्व्वी पित्तानिलापहा । ग्राहिणी
सन्धिकृद्रुच्या तासां खादेत्तु मात्र
या ।

सेविकामोदकः । पुं॰ लड्डुकविशे
षे । सेवकालड्डू॰ इ॰ भा॰ प्र॰ ।
तत्प्रक्रिया यथा । घृताढ्यया समि
तया कृत्वा सूत्राणि तानि तु । नि
पुणो भर्जयेदाज्ये खण्डपाकेन योज
येत् । युक्तं मोदकान् कुर्य्यात् सेवि
कोर्द्धकाख्यया ।

सेवितम् । न॰ सेविबदरे । सेवफले
। त्रि॰ समुपासिते गुर्व्वादौ । परि
चरिते । अनुष्ठिते । उपभुक्ते ।
आश्रिते ।

सेव्यः । पुं॰ अश्वत्थवृक्षे । हि
ज्जलद्रुमे । न॰ उशीरे । वीरण
मूले । त्रि॰ सेवार्हे । सेवि
तुमर्हः । षिवुसेवने । ण्यत् ।

सेव्या । स्त्री॰ वन्दाके ।

सैंहः । त्रि॰ सिंहसम्बन्धिनि । सिं
हस्येदम् । अण् ।

सैंहली । स्त्री॰ सिंहलपिप्पल्याम् ।

सर्पदण्डायाम् ॥ कुकव्याम् ॥ त्रि॰ सिंहलद्वीपजे ॥

सैंहिकः । पुं॰ राहौ ॥ द्व॰ श॰ र॰ बली ॥

सैंहिकेयः । पुं॰ विधुंतुदे । राहौ । स्वर्भानौ ॥ सिंहिकायाअपत्यम् । ढक् ॥

सैकतम् । न॰ वालुकामयतटे । सिकतामये । त्रि॰ सिकतामये । सिकताबति । सिकतिले । सिकताः सन्त्यस्मिन् । सिकताशर्कराभ्यां चेतिमत्वर्थेऽण् ॥ सिकतैववा । शर्करायाण् ॥

सैकतिकः । पुं॰ सन्न्यस्ते ॥ क्षपणके । न॰ मङ्गलाचारायाम् ॥ मङ्गलसूत्रे ॥ त्रि॰ भ्रान्तिजीविनि । सन्देहजीविनि ॥

सैकतेष्टम् । न॰ आर्द्रके ॥ त्रि॰ सैकतिलप्रिये ॥

सैतवाहिनी । स्त्री॰ नदीविशेषे । बाहुदायाम् ॥ सितानिवाहनानियस्याः अर्जुनस्य॰तस्ययम् । तस्येदमित्यणि टिड्ढेतिङीप् ॥ यद्वा सितस्यार्जुनस्यायंसैतो । सैतोवासौवाहिनी नदीच ॥

सैद्धान्तिकः । त्रि॰ सिद्धान्तज्ञे ॥

सैनापत्यम् । न॰ सेनापतेः कर्मणि ॥ पत्यन्तपुरोहितादिभ्योयक् ॥ यद्वा । दित्यदित्यादित्य पत्युत्तरपदाण्ण्यः ॥ सेनापतिसम्बन्धिनि ॥ सेनापतेः कर्म॰ सेनापतेरिदंवा ॥

सैनिकः । पुं॰ सेनारक्षे । प्रहरकारौ ॥ सेनांरक्षति । रक्षतीति ठक् ॥ सैन्ये । सेनायांसमवेते ॥ सेनांसमवैति । सेनायावेतियमोऽभावे॰ ठक् ॥

सैन्धवः । पुं॰ जयद्रथनृपे । सिन्धुदेशजाश्वे ॥ सिन्धुरभिजनोऽस्य । सिन्ध्वादित्वादण् ॥ पुं॰ न॰ लवणोत्तमे । माणिमन्थे । सिन्धुजे ॥ अस्यगुणायथा । सैन्धवंलवणं स्वादुदीपनंपाचनंलघु । स्निग्धंरुच्यंहिमंवृष्यंसूक्ष्मंनेत्र्यंत्रिदोषहृत् ॥ सैन्धवंद्विविधंज्ञेयंसितरक्तमिति क्रमात् । रसवीर्यविपाकैश्चगुणाढ्यंकथितंसितम् ॥ अपिच । पूर्वाह्णकालेचाज्ञानांप्रायशोलवणंहितम् । शूलानाहविबन्धघ्नं लवणंसैन्धवंवरम् ॥ त्रि॰सिन्धुदेशभवे । सिन्धुजे ॥ सिन्धुजातो भवोवा ॥ कच्छादिभ्यश्चेत्यण् । अणञौचेतिवा ॥ पुं॰ सिंधुदेशे ॥ स्वार्थेऽण् । लङ्काप्रदेशमारभ्यमक्कां परमेश्वरि, सैन्धवाख्योमहादेशः पर्वतेतिष्ठतिप्रिये ॥

सैन्धी । स्त्री॰ तालादिमद्ये । हालायाम् ॥ सैन्धीशीतकषायाम्लापि

व : । तत्रभवइत्यण् । कर्ष : । सैरेभ : । वत्सः ॥ सैरेय : कफशातहृत् ॥

सैरेयक : । पुं॰ भिण्टाम् ॥ संज्ञायांकन् ॥

सैरेय : । पुं॰ भिण्टाम् ॥ सैरेभव : । नद्यादिभ्योढक् ॥

सैरेयक : । पुं॰ भिण्टाम् ॥ सैरेयशब्दोत्संज्ञायांकन् ॥ अस्यगुणाय था । सैरेय : कुष्ठवातास्रकफकण्डुविषापह : । तिक्तोष्णोमधुरोदन्त्य : सुस्निग्ध : केशरञ्जन : ॥ इति ॥

सैवालम् । न॰ शैवाले ॥

सोढ : । त्रि॰ क्षान्ते । सहिष्णौ ॥ सह्यतेस्म । षहमर्षणे । क्त : । सहिवहोरोदवर्णस्य ॥

सोढा । त्रि॰ तितिक्षासंयुक्ते । सहितरि ॥ शक्ते ॥ सहते । षहमर्षणे । शवुल्तृचावितितृच् ॥

सोत्कण्ठ : । त्रि॰ उत्कण्ठायुक्ते । उत्के । उन्मनसि ॥

सोत्प्रास : । पुं॰ सशब्दहासे । आच्छुरितके । स्यादाच्छुरितकंहास : सोत्प्रासइत्यमर : । उत्प्रासनम् । असुक्षेपणे । असुगतिदीप्त्यादानेषुवा । घञ् । उत्सहित : सोत्प्रास : । उत्प्रासेनाधिक्येनक्षेपणेनवासहित : सोत्प्रास : ॥ न॰ सोल्लुण्ठे । प्रियवाक्ये ॥

सोदक : । पुं॰ पिण्डप्रदातारंपुरुषमारभ्यदशमपुरुषान्तेषु ॥ यथा । पिण्डदात्सप्तपुरुषा : सपिण्डा : कथिता : प्रिये । सोदकादशमान्ता : स्युस्तत : गोत्रजाइति ॥

सोदय : । त्रि॰ उदयेनसहवर्त्तमाने । वृद्धियुक्ते । लाभसमेत॰इ॰भाषा ॥

सोदर : । पुं॰ सहोदरे ॥ सहउदरेणवर्त्तते । वोपसर्जनस्येतिस : । सहसमानमुदरंयस्येतिवा ॥ लग्नात्तृतीयस्थाने ॥

सोदरा । स्त्री॰ सहोदरायांभगिन्याम् ॥ टाप् ॥

सोदर्य्य : । पुं॰ समानोदर्ये । सगर्भ्ये । सहजे ॥ समानेउदरेशयित : स्थित : । सोदराद्य : । विभाषोदरे॰ इतिसमानस्यस : ॥

सोनह : । पुं॰ लशुने ॥ इ॰ श॰ र॰ लो ॥

सोन्माद : । त्रि॰ उन्मादिनि । सोन्मादे । सहोन्मादेनवर्त्तते । वोपसर्ज्जनस्य ॥

सोपकरण : । त्रि॰ उपकरणेनसहवर्त्तमाने । उपकरणविशिष्टे ॥

सोपकार : । त्रि॰ उपकारविशिष्टे ॥

सोपधम् । त्रि॰ सच्छद्मदानादौ ॥

सोपपदा । स्त्री॰ अनध्यायविशेषे ॥ यथा । सिताश्चैत्रेतृतीयायाश्च त्रिनेदशमीतथा । चतुर्थीद्वादशी

माविएताःसोपपदाः स्मृताः ॥ इति ॥

सोपप्लवः । पुं॰ राहुग्रस्ते॰ चन्द्रे । राहुग्रस्ते पूषणि । राहुग्रस्तेस्मिन्दीव॰ पूषिणि च । सोपप्लवोपरक्तोद्वाविस्यमरः । राहुकर्तृकग्रसनकर्मीभूतचन्द्रे पूषणि च । उपरक्ते । सहउपप्लवेनराहुणा॰ इति

सोप्लवः । तेनसहेतीतिसमासः । वोपसर्जनस्येतिसहस्यसः ॥ त्रि॰ आपन्नते ॥

सोपमर्दः । त्रि॰ तिरस्कारसहिते ॥

सोपवासः । त्रि॰ उपवासविशिष्टे ॥

सोपाकः । पुं॰ चण्डालेनपुक्कस्यांजनितेऽन्त्यजविशेषे । भक्तोतिप्रसिद्धे ॥ मारणोचितापराधे॰ राजादेशेनमारणम्॰ तेनास्यवृत्तिः । यथा॰। चण्डालेनतुसोपाकोमूलव्यसनवृत्तिमान् । पुक्कस्यांजायतेपापः सदासज्जनगर्हितः ॥ इतिमनुः ॥

सोपाधिः । त्रि॰ उपाधियुक्ते ॥ प्रतिज्ञाभेच्छादिनादानादौ ॥

सोपानम् । न॰ पाषाणादिरचिते॰ सौधाद्यारोहणे । आरोहणे । पैठी॰ इ॰ भा॰ प्र॰ । सहविद्यामानउदरस्य॰नोगमनमनेन । आरोहणसुसोपानं पैडीइतिसमाह्वये । सोपानैकाष्ठघटितैर्मि : श्रेणि

स्वधिरोहिणीतिगव्वरत्नावली ॥

सोभाञ्जनः । पुं॰ शोभाञ्जने ॥

सोमः । पुं॰ शिवे ॥ उमयासहितः । हिमदीधितौ । चन्द्रे ॥ सोमोऽमावास्यायामकृष्णोदयमारभ्यस्नानकालपर्यन्तं भोगोभूत्वास्नानात्गोसहस्रदानफलम्भवतीत्याह्यामः । सिनीवालीकुहूर्वापियदिसोमदिनेभवेत् । गोसहस्रफलंदद्यात्स्नानंयन्मौनिनाकृतमिति । अमृतंसौति॰ सोमः । षुप्रसवैश्वर्ययोः । अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्योमन्निति मन् ॥ वानरे ॥ कुवेरे ॥ पितृदेवे । यमे ॥ समीरणे ॥ वसुप्रभेदे । नीलघनौ ॥ कर्पूरे ॥ सोमलतौषधौ ॥ सोमलतारसे ॥ सोमजतासाधनकेयागे ॥ दिव्यौषध्याम् ॥ अमृते ॥ पर्वतविशेषे ॥ न॰ नीरे । जले ॥ काञ्जिके ॥ स्वर्गे ॥

सोमगर्भः । पुं॰ विष्णौ ॥ सोमोगर्भेऽस्य ॥

सोमजः । पुं॰ बुधे ॥ न॰ दुग्धे ॥ त्रि॰ चन्द्रजे । सोमाज्जातः । अनो॰ । डः ॥

सोमतीर्थम् । न॰ प्रभासतीर्थे ॥

सोमधारा । स्त्री॰ देवपथे । नभः सरिति ।

सोमः । पुं॰ चन्द्रे । कुन्दौ । अमृतं सौति । षु प्रसवे । मामन्सीमन्सोमन्स्थि इत्यनेन दृष्टपाद्यो निपातितः सोमाभाः ।

सोमपः । पुं॰ सोमपीतिनियागेपीतसोमलतारसे । सोमं पिबति । पापाने । आतोनुपेतिकः ।

सोमपत्रः । पुं॰ उलपे । सोमवल्कणे ।

सोमपाः । पुं॰ सोमपे । यज्ञे सोमलतारसपानकर्त्तरि । सोमं पिबति पा॰ क्विप् । भृगोः पुत्रेषु॰ ब्राह्मणानां पितृषु ।

सोमपीती । पुं॰ यागे पीतसोमरसे । सोमपि ॥ सोमस्यपीतम् । सोमपीतमस्यास्ति । इनिः ।

सोमपीथः । पुं॰ सोमपाने ।

सोमबन्धुः । पुं॰ कुमुदे ॥ सोमो बन्धुरस्य । सूर्यबुधयोः । यथा । मित्राणि सूर्याच्छशिभौमजीवाः॰ सूर्येन्दुजौ॰ सूर्यसुताच्छजीवाः । आदित्यशुक्रौ॰रविचन्द्रभौमाः॰ बुधार्कजौ चन्द्रजभार्गवौ चेति॰ज्योतिस्तत्त्वम् ॥

सोमभूः । पुं॰ बुधग्रहे ॥ जिनराजभेदे ॥ त्रि॰ सोमवंशोद्भवे ॥ सोमाद्भवति । भू॰ क्विप् ॥

सोमयागः । पुं॰ सोमलतारसपानाङ्गवार्षिकयज्ञविशेषे ॥

सोमयाजी । पुं॰ सोमयागकर्त्तरि ।

सोमयोनि । न॰ चन्दनविशेषे । यथा । सुगीतलं चन्दनं यत्तु तैलपर्णिकमुच्यते । उभौ तु यस्य पर्यायौ सोमयोनि॰ शिलोद्भवमिति शब्दचन्द्रिका ।

सोमराजः । पुं॰ चन्द्रे । द्विजराजे । सोमश्चासौ राजा च । टच् ॥

सोमराजिका । स्त्री॰ सोमराजिनि । वाकुच्याम् ॥

सोमराजी । पुं॰ औषधिविशेषे । तत्पर्याया यथा । अवल्गुजः सोमराजी सुवल्ली सोमवल्लिका । कालमेषी कृष्णफला वाकुची पूतिफल्यपीति । सोमराज॰ इ॰ इ कुच॰ इ॰ च॰ गौ॰ दे॰ भा॰ ॥ सोमइव । सोमेनवा॰ राजति । राज्॰ । उपमानइतिवासुप्यजातावितिवाणिनिः ॥

सोमराजी । स्त्री॰ सोमलतायाम् । वाकुच्याम् । सोमराजिनि । मात्राछन्दोभेदे ॥ यकारद्वयेनप्रभत्ताद्विकृतिः । भवेत्सोमराजीत याशङ्खनारीद्वयासोमराजीत्य पितच्छलक्षणम् । यथा । हरेसोमराजीसमातेयशोः । जगन्मण्डलप्रान्तचन्द्राकारम् । ङीप् ।

सोमलता । स्त्री॰ स्वनामप्रसिद्धायां लतायाम् । तस्याः पर्यायाश्चा यथा । सोमवल्ली सोमलता सोमाक्षीरौ द्विजप्रिया । सोमवल्लीवि-

दोषघ्नोत्कट्‌तिक्तारसायनीति ॥ अपिच । सोमवल्लीमहागुल्मायज्ञ श्रेष्ठाधनुर्लता । सोमार्हागुल्मवल्ली यज्ञाङ्गाद्विजप्रिया । सोमक्षीरा यज्ञसोमायज्ञाङ्गाऋद्धयोगः स्वयमा । सोमवल्लीकट् : शीतामधुरापित्त दाहहृत् । तृष्णाविशोषणमनी पावनीयज्ञसाधनीतिरा० नि० भट: ॥ ब्राह्मोषधी ॥

सोमलतिका । स्त्री० गुडूच्यां । सोम वल्लयाम् ॥

सोमवंश : । पुं० युधिष्ठिरे अजात शत्रौ चन्द्रवंशे । सोमस्यवंश: ॥

सोमवल्क : । पुं० धवलाकटफले । खदिरे । रोठाकरञ्जे । करञ्जे ॥ सोमद्रुमवल्कोवल्कलमस्य ॥

सोमवल्कल : । पुं० कट्फले । श्वेत खदिरे ॥ सोमद्रुमवल्कलमस्य ॥

सोमवल्लरी । स्त्री० ब्राह्म्यामोषधौ ॥ सोमस्यवल्लरी । सोमलतायाम् ॥

सोमवल्लिका । स्त्री० सोमराजिनि । सोमस्यवल्ली । स्वार्थेकन् ॥

सोमवल्ली । स्त्री० वत्सादन्याम् । छिन्नरुहायाम् । गुडूच्याम् । सोम स्यवल्ली । बाकुच्याम् । सोमलतायाम् । सोमवल्लीविदोषघ्नोत्कट्‌तिक्तारसायनी । पातालगरुड्याम् । ब्राह्म्याम् ॥ सुदर्शनायाम् ॥

सोमवार : । पुं० सोमस्याभीष्टदिने ॥

सोमविक्रयी । पुं० सोमलतारसवि क्रयकर्त्तरि ॥

सोमवृक्ष : । पुं० कट्फलवृक्षे । श्वे तखदिरे ॥

सोमशकला । स्त्री० शशाङ्कस्याम् ॥ चन्द्रखण्डविशिष्टायाम् ॥

सोमसञ्ज्ञम् । न० कर्पूरे ॥

सोमसद : । भूम्नि० पितृगणान्तरे ॥ विराट्सुता : सोमसद : साध्या नांपितर : स्मृता : ॥

सोमसवन : । पुं० ब्रह्मशीकाख्यान्य त्यवृक्षे ॥ सोमोऽमृतंसवतीति । युच् ॥

सोमसार : । पुं० खदिरे ॥

सोमसिद्धान्त : । पुं० बौद्धविशेषे ॥

सोमसिद्धान्ती । पुं० सोमसिद्धा न्तवेत्तरि । कापालिके ॥ तल्लक्ष पादिर्कयथा । नरास्थिमालाकृत चारुभूषण : श्मशानवासीनृकपा लभोजन : । पश्यामियोगाञ्जनशु द्धदृष्टिर्भोजगन्मियोभिन्नमभिन्न- मीश्वरात् ॥ अपिच । मस्तिष्कान्त्र वसाऽभिघारितमहामांसाहुतीर्जु ह्वतां० वह्नौब्रह्मकपालनिर्मितसु रापानेनन : पारणा : सद्य : कृ त्तकठोरकण्ठविगलत्कीलालधारो ज्ज्वलैरर्च्योन : पुरुषोपहारबलिभि र्देवोमहाभैरवइति ॥

सौख्येद्ं : स्वान्यपीहति ॥
सौगन्धिकम् । न॰ तीर्थविशेषे ।
सौगत: । पुं॰ बौद्धविशेषे । शून्यवादिनि । माध्यमिके । सुगतोऽनुबुद्धो भक्तिरस्य । भक्तिरित्यण् ॥
सौगन्ध्यम् । न॰ कत्तृणे । सौगन्धिके ॥
सौगन्धिक: । पुं॰ गन्धपाषाणे । गन्धके । सुगन्धव्यवहारिणि । गन्धवणिजि । गन्धोलिभाषाप्रसिद्धे । नपुंसकविशेषे । नासायोनौ । य: पूतियोनौ जायेत स वै सौगन्धिको भवेत् । म॰ कह्लारे । श्वेतोत्पले । सौधीद्ध॰ भा॰ प्र॰ । पद्मरागमणौ । कत्तृणे । नीलोत्पले । इति राजनिर्घण्ट: । सुगन्ध्येव । स्वार्थे॰ विनयादित्वाट्ठक् । शोभनो गन्धोऽस्य॰ शोभनगन्धो वा । सुगन्ध: प्रयोजनमस्य । प्रयोजनमिति ठञ् ॥
सौगन्धिका । स्त्री॰ पद्मभेदे । म॰ भा॰ वनपर्व ॥
सौचक्यम् । न॰ सूचकस्य कर्मभावो वा : पुरोहितादित्वाद्यक् ॥
सौचि: । पुं॰ सौचिके ॥
सौचिक: । पुं॰ सूचिजीविनि तुन्नवाये । वर्णसङ्करप्रभेदोऽयम् । वैश्यात्स्वचकन्यायां शौण्डिकात् देवसौ चिकादिति परिगणनात् । सूची शिल्पमस्य । शिल्पमिति-ठक् ॥
सौचिक्यम् । न॰ सौचिकस्य कर्म भावो वा : ॥ पश्यन्तपुरोहितादिभ्यो यक् ॥
सौजन्यम् । न॰ सौहार्दे । सुजनता याम् । यथा । सौजन्यं॰ वरवंश जन्म॰ विभवो॰ दीर्घायु॰ रारोग्यता विज्ञत्वं विनयित्व॰ मिन्द्रियवश: ॰ सत्पात्रदानेरुचि : । सन्मन्त्री॰सुसुत : ॰ प्रियाप्रियतमा ॰ भक्तिश्च नारायणे॰ सत्पुण्येन विनाऽभयोदशगुणा : संसारिणाम् दुर्लभा : ॥
सौत्रम् । न॰ सारथ्ये ॥ सूतस्य कर्म भावो वा । ष्यञ् ॥
सौत्र: । पुं॰ ब्राह्मणे । नियतप्रयोगाभावे धातुविशेषे ॥ त्रि॰ सूत्रसम्बन्धिनि ॥
सौत्रामणी । स्त्री॰ सुरायहप्रधाने वैदिकयागविशेषे । सौत्रामण्यां सुराग्रहान् गृह्णीयादिति श्रुतिविहिते ॥ सौत्रामण्यां कुलाचारे ब्राह्मण: प्रपिवेत् सुराम् । अन्यत्रकामत : पीत्वा पतितस्तु द्विजो भवेत् ॥
सौदामनी । स्त्री॰ तडिति । विद्युति सुदामा ऐरावतगज : । सुदाम्ना एकदिक् । तेनैकदिगित्यण् । प

क्षितिप्रकृतिभावाद्विलोपाभावोपीन भवत: । यद्वा । सुदामापर्वत: सुदाम्नापद्रिणाएकदिक् । पूर्ववत्प्रकृतिभावो । स्फाटिकादिमयपर्वताभावात्स्फटिकात्सुदाम्नभवत्यर्थात् ॥ सुदामामाला । तत्रभवाया । सौदामनी । मालाकारेत्यर्थ: । तडिद्विशेषे ॥ अप्सर: प्रभेदे ॥ देवविशेषे॰ कश्यप य: ॥

सौदायिकम् । न॰ स्त्रीधनविशेषे ॥ यथाह कात्यायन: । ऊढयाकन्ययावापित्रो: पितृगृहेयद्वा । भर्तु: सकाशात्पित्रोर्वालब्धंसौदायिकंस्मृतम् ॥ सौदायिकंधनंप्राप्यस्त्रीणांस्वातन्त्र्यमिष्यते । यस्मात्तदानृशंस्यार्थंतैर्दत्तंतत्प्रजीवनम् ॥ सौदायिकेसदास्त्रीणांस्वातन्त्र्यंपरिकीर्त्तितम् । विक्रयेचैवदानेचयथेष्टंस्थावरेष्वपीति ॥ सुदायेभ्य: पितृमातृभर्तृकुलसम्बन्धिभ्योलब्धंसौदायिकम् । आनृशंस्यम्॰ अनैष्ठुर्यम् ॥ इतिदायतत्त्वम् ॥

सौदास: । पुं॰ इक्ष्वाकुवंशीयअयोध्याधिपतौ । कल्मषपादे । मित्रसहे ॥

सौध: । पुं॰ न॰ राजसदने । सुधालिप्तोऽस्यास्ति । ज्योत्स्नादित्वाद ण् ॥ सुधयाऽवलिप्तंवा ॥ रौप्ये ॥ त्रि॰ सुधासम्बन्धिनि ॥ पुं॰ दुग्धपाषाणे ॥

सौधभूषणम् । न॰ अटालिकायाम् । भूना॰ क॰ भाषाप्र॰ ॥

सौन: । त्रि॰ सूनायांभवे ॥

सौनन्दम् । न॰ बलभद्रमुषले ॥

सौनन्दी । पुं॰ बलदेवे ॥ सौनन्दमस्यास्ति । इनि: ॥

सौनिक: । पुं॰ वधस्थानाधिकारिणि ॥ वैतंसिके । मांसिके । शाकुनिके ॥ सूनयाचरति । ठक् ॥

सौनिकी । स्त्री॰ शौनकीयेष्याम् ॥

सौन्दर्य्यम् । न॰ सुंदरतायाम् ॥ तल्लक्षणंयथा । अङ्गप्रत्यङ्गकानांय: सन्निवेशोयथोचितम् । सुश्लिष्टसन्धिबन्धंयत्तत्सौन्दर्य्यमुदाहृतमित्युज्ज्वलनीलमणि: ॥ सुन्दरस्यभाव: । ष्यञ् ॥

सौपर्णम् । न॰ मरकते ॥ शुण्ठ्याम् ॥ गारुत्मतास्त्रे ॥ त्रि॰ सुपर्णसम्बन्धिनि ॥

सौपर्णी । स्त्री॰ पातालगरुडीलतायाम् ॥

सौपर्णेय: । पुं॰ गरुत्मति । गरुडे ॥ सुपर्ण्याअपत्यम् । स्त्रीभ्यो-ढक् ॥

सौपर्णेयी । स्त्री॰ सुपर्ण्या: पुत्र्याम् ॥ सुपर्ण्याअपत्यंस्त्री । स्त्रीभ्योढ

क् । टिट्ढाणञिति ङीप् ॥

सौप्तिकम् । न० रात्रिमारणे । रात्रियुद्धे ॥ महाभारतस्य पर्व्वविशेषे ॥ त्रि० सुप्तसम्बन्धिनि ॥

सौभम् । न० खसञ्चारिपुरे ॥ हरिश्चन्द्रपुरे ॥

सौभगम् । न० सुभगत्वे ॥

सौभद्रः । पुं० सुभद्रातनयेऽभिमन्यौ ॥ सुभद्राया अपत्यम् । ऋष्यन्धकवृष्णिकुरुभ्यश्चेत्यण् ॥ सङ्ग्रामविशेषे ॥ सुभद्राप्रयोजनमस्य । सङ्ग्रामे प्रयोजनयोद्धृभ्य इत्यण् ॥ ग्रन्थविशेषे ॥ सुभद्रामधिकृत्य कृतो ग्रन्थः । अधिकृत्य कृते ग्रन्थे इत्यण् ॥ त्रि० सुभद्रासम्बन्धिनि ॥

सौभद्रेयः । पुं० अभिमन्यौ ॥ सुभद्राया अपत्यम् । स्त्रीभ्यो ढक् ॥ बिभीतकवृक्षे ॥

सौभरम् । न० सामविशेषे ॥

सौभरिः । पुं० पुराणप्रसिद्धे परमहंसे । मुनिविशेषे । *

सौभागिनेयः । पुं० सुभगासुते ॥ सुभगाया अपत्यम् । कल्याण्यादीनामिनङिति ढक् । इनङादेशश्च । हृद्भगेत्युभयपदवृद्धिः ॥

सौभागिनेयी । स्त्री० सुभगात्मजायाम् ॥

सौभाग्यम् । न० विष्कंभाद्यन्तर्गतयोगविशेषे ॥ तज्जातफलं यथा । सौभाग्यजन्मा सुभगो मनुष्यः श्लाघ्यो जनानां धनवान् गुणज्ञः । उदारचित्तो बलवान् विवेकी महाभिमानी प्रियभाषणश्चेति ॥ सिन्दूरे ॥ टङ्कणे ॥ सुभगत्वे । तल्लक्षणं यथा । अल्पनिद्रोऽल्पभुग्वाग्मी मितभाष्यनसूयक इति ॥ सुभगस्य कर्म भावो वा । ष्यञ् । हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदवृद्धिः ॥ व्रतविशेषे ॥

सौभाग्यकरणम् । न० वाक्यभ्यदितौ ॥ यः सार्वजन्यं सुभगत्वमिच्छेद्गुणान् स सर्वस्य वदेत्परोक्षम् । प्राप्नोति दोषानसतोऽप्यनेकान् परस्य यो दोषकथां करोति ॥

सौभाग्यचिन्तामणिः । पुं० सारकौमुद्युक्तौषधविशेषे ॥

सौभाग्यशुण्ठी । स्त्री० पाकविशेषे । यथा । नागरस्य पलान्यष्टौ घृतं देयञ्च तत्समम् । क्षीरं प्रस्थसंयुक्तं खण्डस्यार्द्धशतं पलम् ॥ पचेन्मृद्वग्निना सम्यक् यथा पाको भवेत्तदा । चूर्णं दद्यात् त्रिजातस्यार्थेऽक्षचपलोन्मितम् ॥ भक्षयेत्प्रातरुत्थाय शुचिरज्जूतञ्च मारुतम् । सूर्य्यावर्त्तं हनुस्तम्भं मन्यास्तम्भं गलग्रहम् ॥ वलवर्णकरं हृद्यं बलोपालितनाशनम् । धर्म्मवातप्रशमनं सौभाग्यकरमुत्तममिति पाकावली ॥

सौभ्रात्रम् । न० सुभ्रातृणां भावे ॥ यु

र्वलीकहिते विल्वे ॥ प्रतिविद्धा चिन्तने ॥
सौम्यधातु : । पुं॰ कफे । श्लेष्मणि ॥
सौम्यवपु : । न॰ अनुग्रहशरीरे ॥
सौम्या । स्त्री॰ अनुग्रायाम् । मनोज्ञायाम् । दुर्गायाम् । गौर्याम् ॥ शालपर्ण्याम् ॥ महाज्योतिष्मत्याम् ॥ गुञ्जायाम् ॥ उत्तरदिशि ॥ ब्राह्म्याम् ॥ मल्लिकायाम् ॥ रुद्रजटायाम् ॥ शम्याम् ॥ महेन्द्रवारुण्याम् ॥ महिषवल्ल्याम् ॥
सौम्या : । स्त्री॰ बहुत्वे॰ मृगशिर : शिर : स्थासु पञ्चतारकासु । इल्वलासु ॥
सौम्यायनम् । न॰ उत्तरायणे ॥
सौर : । पुं॰ शनैश्चरे ॥ मासविशेषे ॥ सूर्यैकराशिभोगावच्छिन्नेमासे ॥ यथा । आदित्यराशिभोगेनसौरोमास : प्रकीर्त्तितइति । एतच्चाप्यसङ्क्रान्तसङ्क्रान्ति : सौरोभिधीयतइतिच ॥ दिनविशेषे ॥ वर्षविशेषे ॥ तुम्बुरुवृक्षे ॥ त्रि॰ सूर्यसम्बन्धिनि ॥ न॰ उपपुराणविशेषे ॥ त्रि॰ सूर्योपासके ॥ सूर्यस्यार्कस्यायम् । तस्येदमित्यण् ॥
सौरज : । पुं॰ तुम्बुरुवृक्षे ॥ फलविशेषे ॥ त्रि॰सौरजाते ॥

सौरदिनम् । न॰ सौरदिवसे ॥
सौरनक्तम् । न॰ व्रतविशेषे ॥ यथा । हस्तयुक्तेचार्कदिनेसौरनक्तंसमाचरेत् । स्नात्वात्वर्कंसमभ्यर्च्यनीरोगोबहुजीवति ॥ आत्मनोद्विगुणच्छायंयदासंतिष्ठतेरवि : । सौरनक्तंविजानीयान्नक्तंमनिशिभोजनमितिनारसिंहे ६४ अध्याय : ॥
सौरभम् । न॰ कुङ्कुमे ॥ बोले ॥ सुगन्धितायाम् ॥ विपमच्छदान्तरे ॥ अयमुद्गतासदृशगैयपदमिदन्तीयमन्यया । जायतेरत्नभगैयं वितकायपत्निसौरभमिदंतदीदृशम् ॥ यथा । परिभूतफुल्लशतपत्रवनविततगन्धविभ्रमा । कमलकृतहरतोस्थिरेमुखपद्मसौरभकलातताङ्गता ॥
सौरभेय : । पुं॰ वृषे ॥ सुरभ्याअपत्यम् । स्त्रीभ्योढक् ॥
सौरभेयी । स्त्री॰ माहेय्याम् । गवि । उस्रायाम् ॥ सुरभ्या : स्त्र्यपत्यम् । ढक् । ङीप् ॥
सौरभ्यम् । न॰ मनोज्ञत्वे ॥ सौगन्ध्ये । सुगन्धितायाम् ॥ गुणगौरवे ॥ पुं॰कुबेरे ॥
सौरमास : । पुं॰ सूर्यैकराशिभोगावच्छिन्नकाले ॥ यथा । एकराशौरविर्यावत्कालंमास : सभास्कर : । अयमङ्गभि : सौरमासोयन्मयैरकीर्त्तितम् ॥

सौरसम्वत्सरः। पुं॰ सूर्य्यस्य द्वादशराशिभोगावच्छिन्नकाले। यथा। सौरसंवत्सरस्यान्ते मानेनाब्दशकेन तु पञ्चाहगातिरिच्यन्ते दिनानि भृगुनन्दन॥

सौरसेन:। पुं॰ देशविशेषे। यथा। मागधाद्दक्षभागे तु विन्ध्यात् पश्चिमत: शिवे। सौरसेनाभिधो देश: सूर्य्यवंशप्रकाशक:॥

सौरसेय:। पुं॰ कार्त्तिकेये। स्कन्दे। सुरसाया अपत्ये॥

सौरसैन्धव:। त्रि॰ गङ्गासम्बन्धिनि॥ सुरसिन्धोरयम्। अण्। हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य चेत्युभयपदवृद्धि:॥

सौराष्ट्र:। पुं॰ देशविशेषे॥ कोङ्कणात् पश्चिमतीर्थे समुद्रप्रान्तगोचरम्। हिङ्गुलाजान्तकोदेविदशयोजनदेशक:। सौराष्ट्रदेशो देवेशि तस्मात् गुर्ज्जराभिध:॥ कुन्दुरुकी॥ न॰ कांस्ये॥

सौराष्ट्रकम्। न॰ पञ्चलोहे॥

सौराष्ट्रमृत्तिका। स्त्री॰ काच्याम्। तुवर्याम्। फटकिरी॰ इ॰ भा॰ प्र॰॥

सौराष्ट्रा। स्त्री॰ तुवर्याम्॥

सौराष्ट्रिक:। पुं॰ विषप्रभेदे। सौमल्खार॰ संखिया॰ इ॰ भा॰ प्र॰॥ सुराष्ट्रविषयेषु स्यात् स सौराष्ट्रिक उच्यते॥ त्रि॰ सुराष्ट्रजे। सुराष्ट्रदेशविशेषभव:। अध्यात्मादित्वात् ठञ्॥

सौराष्ट्री। स्त्री॰ सौराष्ट्रमृत्तिकायाम्॥ स्फटिकाया गुणा: सर्व्वे सौराष्ट्र्या अपि कीर्त्तिता:। सुराष्ट्रभवा। अण्। ङीप्॥ सौराष्ट्री कफपित्तघ्नी विसर्पव्रणनाशिनी॥

सौरि:। पुं॰ शनैश्चरे। शनिग्रहे॥ सूरस्यार्कस्यापत्यम्। अतइञ्। श्रीकृष्णे। सूरो यादवेन्द्रस्तस्य नप्तृत्वात्। सूरो वसुदेवस्य पिता। तद्वंशत्वात् सौरि: कृष्ण:। वृष्ण्यन्धकादित्वाद्... आकृतिगणत्वादिञ्। असनवृक्षे॥ चादित्यभक्तायाम्॥

सौरक:। पुं॰ स्वर्गे। न॰ सुरानिर्म्मलधने॥

सौरिरत्नम्। न॰ नीलमणौ॥

सौरी। स्त्री॰ रश्मौ। सूर्य्यकिरणे॥ सूर्य्यस्येयम्। अण्। ङीप्। सूर्य्यतिष्येत्यादिना यलोप:॥

सौव.। त्रि॰ स्वकीये॥ स्वस्येदम्। अण्॥

सौवर्च्चलम्। न॰ सर्ज्जिकाक्षारे॥ सुवर्चलाया इदम्। तस्येदमित्यण्॥ सञ्चर॰ इ॰ प्र॰ लवणे। कृष्णलवणे। अक्षे। रुचके। सुष्ठु वर्च्यते। वर्चदीप्तौ। रुचादित्वात् कलच्।

प्रज्ञाद्यण् ॥
सौवर्णः । त्रि॰ सुवर्णस्यविकारे॰ कटकादौ ॥ तस्यविकारइत्यर्थे॰ जातरूपेभ्यः परिमाणइत्यण् ॥
सौवर्णभेदिनी । स्त्री॰ प्रियंगौ ।
सौवली । स्त्री॰ गान्धार्य्याम् । सुवलस्यापत्यम् ॥
सौवस्तिकः । पुं॰ पुरोहिते ॥ त्रि॰ स्वस्तिकृति ॥
सौविदः । पुं॰ राजस्त्र्यागारेषुयोरक्षाधिकृते । सौविदल्ले । कञ्चुकिनि । स्थापत्ये ॥ यदि: सन्त्यन्तरोनाम : पुरस्त्रीणांनिरक्षकपुरुषान्तर वारगायराजस्त्र्यागारेष्वेवभर्रानि युक्तास्ते यहिर्मुक्ताः सौविदल्लादि शब्दवाच्याः । सुष्ठुवेत्ति । विदन्तानि । इगुपधेतिकः । सुविदएव : प्रज्ञादित्वात्स्वार्थेऽण् । यद्वा । सुविदस्तुराः स्त्रियस्तासामयंरक्षकः । तस्ये दमित्यण् ॥
सौविदल्लः । पुं॰ सौविदे ॥ सुष्ठु दन्तविद्वांसमपि॰ लान्तिवशवर्त्तिनं कुर्वन्तिसुविदल्लाः । तासामयं रक्षः । तस्येदमित्यण् ॥
सौवीरः । पुं॰ नीवदन्तरे । कुमालके ॥ शूरसेनात्पूर्वभागेगंडक्याः पश्चिमेऽपिवै । सौवीरदेशोदेवेशिसर्वदेशाधमाधमः ॥ न॰काञ्जिके ॥ यथा । सौवीरन्तुयवैरामैः पक्वैर्वानिस्तुषैः कृतम् । गोधूमैरपिसौवीरमाचार्याः केचिदूचिरे । सौवीरन्तुयवग्राह्यं : कफघ्नंभेदिदीपनम् । उदावर्त्ताङ्गमर्दास्थिशूलानाहेषुशस्यते ॥ स्रोतोञ्जने । सौवीराञ्जने ॥ बदरीफले । मदुदरे ॥ यथाहुः । पच्यमानंसुमधुरं सौवीरंबदरंमहत् । सौवीरंबदरंशीतभेदनंगुरुशुक्रलम् । बृंहणंपित्तदाहास्रक्षयतृष्णानिवारणमिति ॥ सुवीरदेशेभवम् । तत्रभवइत्यण् ॥
सौवीरकम् । न॰ सुवीराम्ले । काञ्जिके ॥ पुं॰ बदरवृक्षे ॥
सौवीरसारम् । न॰ स्रोतोञ्जने ॥
सौवीराञ्जनम् । न॰ स्रोतोञ्जने । सुरमाइ॰ भा॰ प्र॰ । सौवीरदेशजातदञ्जनञ्च ॥ यथा । सौवीराञ्जनमिदमम्बकयुगेऽस्तौ विन्यस्तं कनककशलाकयाचयत् । तन्नूनंमलिनमपिस्वदयितमुखेन्द्राव्यभिलषणीयताभियायैतिशाङ्करीमानसौपज्जा ॥
सौशब्दः । पुं॰ गुणविशेषे ॥ तल्लक्षणं यथा : सुप्तिङन्तपरावृत्तिः सौशब्दमिति ॥
सौष्ठवम् । न॰ सुष्ठुतायाम् ॥ सुष्ठु भावः । उद्गात्रादित्वादञ् ॥
सौस्नातिकः । त्रि॰ सुस्नातप्रश्नकर्त्तरि ॥ सुस्नातंपृच्छति । पृच्छतौसुस्नातादिभ्यइतिठक् ॥
सौहार्द्दः । पुं॰ मित्रतनये ॥ सुहृ

दोपत्यं तस्यापत्यमित्यण् । हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदयोरादिवृद्धि : ॥ न॰ सौजन्ये । शोभनहृदयत्वे ॥ सख्ये । मैत्र्याम् ॥ सुहृदयस्यभाव : कर्म वा । मिचे सुहृदादेश : ॥

सौहार्दम् । न॰ सौहार्दे । सख्ये ॥ सुहृदयस्यभाव : । ष्यञ् । बाह्मीकष्यञ् रीगीष्वितिहृद्रादेश : ॥

सौहित्यम् । न॰ तृप्तौ ॥ सुहितस्यभाव : ॰ कर्म वा । पुरोहितादित्वात् यक् ॥ पर्याप्ते ॥

सौहृदम् । न॰ सौहार्दे । सख्ये ॥ सुहृद : कर्म भावी वा । युवादित्वादण् ॥ प्रेमणि ॥

सौहृद्यम् । न॰ सौहार्दे ॥ सुहृदयस्यभाव : । ष्यञ् । बाह्मीकष्यञ् रीगीष्वितिपक्षे हृदादेशाभाव : ॥

स्कन्द : । पुं॰ कार्त्तिकेये । महासेने । पार्वतीनन्दने ॥ सेनापतीनामध्ये देवसेनापति: कार्त्तिकेयोभगवद्विभूति: ॥ स्कन्दतिगच्छति॰ शोषयतिवादैत्यान् । स्कन्दिर्गतिशोषणयो: । पचाद्यच् । तथाचवायुपुराणम् । स्कन्दिताद्दानवगणास्तेनस्कन्द : प्रतापवानिति ॥ देव्याहारपालविशेषे ॥ नृपती ॥ पुराणविशेषे ॥ शरीरे ॥ पारदे ॥ बालग्रहविशेषे ॥

स्कन्दनम् । न॰ रेचने ॥ क्रमणे ॥ गमने । शोषणे ॥

स्कन्दपुराणम् । न॰ स्कांदेमहापुराणविशेषे ॥तच्छोकसंख्योक्तामात्स्येदेवीभागवतेयथा । एकाशीतिसहस्राणिस्कन्दाख्यंपरमाद्भुतमिति ॥

स्कन्दांशक : । पुं॰ पारदे ॥

स्कन्ध : । पुं॰ देहावयवविशेषे । भुजशिरसि । अंसे ॥ अमरलक्षणंयथा । कद्लीस्तम्भसङ्काशाअन्यस्कन्धाश्चयेनरा : । राजानस्तेभवित्तयामहाबीप्रामहाबला : ॥ निमांसरोमबहुलानिर्द्धनस्यप्रकीर्त्तिता: इतिसमुद्र : ॥ स्कन्दते । स्कन्दिर॰ । कर्मणिघञ् । स्कन्देसस्वाङ्ग इति॰ बाहुलकाद्दनसुन्यपिध : पृषोदरादिर्वा ॥ नृपती ॥ सम्पराये ॥ व्यूहे । समूहे ॥ काये ॥ प्रकाण्डे ॥ यथा । सक्षीप्रकाण्ड : स्कन्ध : स्यान्मूलाच्छाखावधिस्तरोरिति । भाष्यादी ॥ छन्दसीभेदे ॥ विज्ञानादिपञ्चसु ॥ तेष॰ विज्ञानवेदनारूपसंज्ञासंस्कारसंज्ञका : पञ्चबौनाशिकोनांमयेप्रसिद्धा : ॥ ग्रन्थपरिच्छेदे ॥ पथि ॥ कांशिरोदधाति । डुधाञ् ॰ । आतोनुपेतिक : । पारस्करादित्वात्सुट् ॥ वास्कन्यते॰ आरुह्यते । स्कन्दिर् ॰ । कर्मणिघञ् ॥ पृषो

दरादि: ॥

स्कन्धकम् । न॰ मात्राहत्तान्तरे ॥ स्कन्धकमितितत्कथितंयत्तचतुष्कलगणाष्टकेनार्द्धंस्यात् । तत्तुल्यमपिमदलंभवतिचतुः षष्टिमात्रिकशरीरमिदम्॥ यथा । चपमेतिशिमलविद्युत्करालकरवालवलिततलधरकाल: । उद्यद्वपनगर्त्ततर्जितपथिकाङ्गनानिवहहृदयतलः ॥

स्कन्धचाप: । पुं॰ वंशादिनिर्मिते शिक्याधारे । विहङ्गिकायाम् ॥

स्कन्धज: । पुं॰ वटे । शल्लक्यादौ । पवर्योनयङ्कलाद्या: स्कन्धजाः सल्लकीमुखा:॰ इतिहेमचन्द्र: ॥

स्कन्धतरु: । पुं॰ स्कंधफले ।

स्कंधदेश: । पुं॰ आसने । द्विरदस्कंधे ॥ स्कन्धएवदेश: ॥ स्कंधमात्रे ॥

स्कंधफल: । पुं॰ नारिकेले ॥ स्कन्धेफलान्यस्य ॥ उदुम्बरवृक्षे ।

स्कन्धफला । स्त्री॰ खर्ज्जूर्य्याम् ॥

स्कन्धबन्धना । स्त्री॰ मधुरिकायाम् ॥

स्कंधमल्लक: । पुं॰ कङ्कखगे ॥

स्कन्धरुह: । पुं॰ वटवृक्षे ॥

स्कन्धवाह: । पुं॰ शकटादिवाहकवृषे । शङ्के । अश्वधूर्त्तिले ॥

स्कन्धवाहक: । पुं॰ वृषे ॥

स्कंधशाखा । स्त्री॰ वृक्षसमुख्यशाखायाम् । शालायाम् ॥ स्कंधजाशाखा ॥

स्कंधशृङ्ग: । पुं॰ महिषे ॥ इतिकश्चित् ॥

स्कंध: । न॰ वृक्षमूलाच्छाखावधिकभागे । प्रकाण्डे ॥ अंसे ॥ स्कन्द्यते । स्कन्दिर्॰ । स्कन्देश्चस्वाङ्गस्यमुनूधञ्चान्तादेश: ॥

स्कन्धाग्नि: । पुं॰ वडवाग्नौ । समिन्धने: ॥ कतयज्ञाग्निभेदे ।

स्कंधामल: । पुं॰ बृहत्काष्ठग्नौ ॥

स्कंधावार: । पुं॰ कटके ॥ सैन्यस्थितौ ॥ राजधान्याम् ॥

स्कंधिक: । पुं॰ स्कंधवाहकवृषे ॥

स्कंधी । पुं॰ द्रुमे ॥

स्कन्नम् । त्रि॰ इस्तादित: पतिते । अस्यपर्यायाश्च । स्रस्तंध्वस्तंभ्रष्टं॰ स्कन्नं॰पन्नंच्युतंगलितमिति ॥ स्कन्द्यतेस्म । स्कन्दिर्॰ । कर्मणिक्त: गत्यार्थाकर्मकेतिकर्त्तरि क्तौवा ॥ कठिनीभूते ॥

स्कोटिका । स्त्री॰ दात्युहिकाखगे ॥

स्कोनगरम् । न॰ वाहीकग्रामविशेषे ॥

स्खदनम् । न॰ विद्रावणे ॥ स्खद स्खदने । ल्युट् ॥

स्खलत् । त्रि॰ चलति ॥

स्खलनम् । न॰ रिङ्गणे ॥ बालाभ्यांहस्तपादाभ्यांचलने ॥ निर्निमि

संस्खलादित : पतने ॥ पिच्छिला द्दीपतने ॥ धर्मादिस्खलने ॥ स्खल सञ्चलने । भावेल्युट् ॥

स्खलितम् । न॰ कूटयुद्धादिनायुद्धम र्यादास्खलने । छले । छलिते ॥ भ्रेषे ॥ स्खलनम् । स्खल॰ । क्त ॥

स्खालित्यम् । न॰ व्यभिचारे ॥

स्तन : । पुं॰ वक्षसउपाङ्गे । कुचे । पयोधरे । वक्षोजे ॥ स्तनौपुंस स्त्रयानार्या : विशेषउभयोरयम् । यौवनागमनेनार्या : पीवरीभवत: स्तनौ ॥ गर्भवत्या : प्रसूताया : स्तनौक्षीरपूरितौ ॥ अरोमशौस्त नौपीनौघनाववि षमौशुभौ ॥ स्त नमनोहरत्वकारणौषधंयथा । कुष्ठ नागबलाचूर्णं नवनीतसमन्वितम् तज्ञ्जं पीयुवतीमाश्चकुर्यान्मनोहरं-स्तनम् ॥ स्तनयतिक्षयतियोगमो द्दयम्॰ स्तनतिशब्दयतेवाबाम्-कं : । स्तनशब्दे । अच् । पुंसी तिघो वा ॥

स्तनम् । त्रि॰ शब्दायमाने ॥ स्तन॰ । अट : अरादेश : ॥

स्तनमम् । न॰ धूनिमावे ॥ मेघश ब्दे ॥ कुन्थिते ॥

स्तनंधय : । न॰ अतिबालके । उत्ता नशये ॥ स्तनंधयति । धेट्पाने । नासिकास्तनयोर्ध्माधेटोरितिखश् । अरुद्विषदितिमुम् ।

स्तनंधयी । स्त्री॰ स्तनपायाम् । अ तिबालिकायाम् । उत्तानशयाया म् ॥ धेटइत्वान्ङीप् ॥

स्तनय : । पुं॰ आतशिशौ ॥ अर्भके ॥ स्तनौपिबति । पा॰ आतोनुपे तिक : ॥

स्तनया । स्त्री॰ डिम्भायाम् । स्तनं धय्याम् ॥ टाप् ॥

स्तनभर : । पुं॰ स्तनाभोगे ॥

स्तनभव : । पुं॰ रतिबंधविशेषे ॥ यथा । स्वजङ्घाद्वयमध्येतुक्षत्वायो षित्पदद्वयम् । स्तनौधृत्वारमेत् कामीबंध : स्तनभव : स्मृत : ॥

स्तनमुखम् । न॰ चूचुके ॥

स्तनयित्नु : । पुं॰ वारिधरे, मेघे । मुस्तके ॥ स्तनिते । मृतौ । रोगे ॥ अशनौ ॥ विद्युति ॥ स्तनय ति । स्तनगदीदेवशब्दे॰ चुरादा वदन्त : । स्तनिहृषिपुषिगदिभ्यो णेरित्नुच् । अयामन्तेतिणेरया देश : ॥

स्तनवृन्तम् । ) न॰
स्तनाशिखा । ) स्त्री॰ स्तनमुखे ॥
स्तनाग्रम् । ) न॰

स्तनान्तरम् । न॰ हृदये ॥

स्तनाभोग : । पुं॰ कुचभरे । स्तन भरे ॥ कुचपरिपूर्णतायाम् ॥

स्तनालिङ्गनम् । न॰ कण्ठसूत्रे ॥ तल्लक्षणंयथा । उरसिदयितमुखे

रादिश्लिष्टराज्ञीस्तनयुगमुपधत्ते यत्स्तनालिङ्गनं तदिति ॥

स्तनितम् । न० गर्जिते । मेघनिर्घोषे ॥ स्तनगदोदेवशब्दे । भावे क्त: ॥ त्रि० शब्दिते ॥

स्तनितफल: । पुं० विकङ्कतवृक्षे ॥

स्तन्यम् । न० दुग्धे ॥ स्तने भवम् । शरीरावयवाद्यत् ।

स्तब्ध: । त्रि० साभिमाने । अविनीते । अप्रगतस्वभावे । अनम्रे । गुरुदेवतादिष्वप्यनम्रे ॥ स्तम्भिते । जडीकृते ॥ स्तभ० । क्त: ॥

स्तब्धरोमा । पुं० वराहे । सूकरे । घोणिनि ॥ स्तब्धानि० अनम्राणि रोमाणि यस्य ॥

स्तम्ब: । पुं० गुल्मे । स्कन्धरहिते० अप्रकाण्डद्रुमे ॥ तृणयवादिगुच्छे ॥ व्रीह्यादीनामप्रकाण्डे ॥ आलाने ॥ तिष्ठति० अच् । ष्ठा० । स्थस्तोम्बजबकाविस्तम्बच्० तिष्ठते: स्तादेशश्च ॥ तृणादौ ॥

स्तम्बक: । पुं० स्तम्बे ॥ स्वार्थे० यावादिभ्य: कन् ॥

स्तम्बकरि: । पुं० धान्ये ॥ स्तम्बङ्करोति । स्तम्बशकृतोरिन् । व्रीहिवत्सयोरिति वक्तव्यम् ॥ त्रि० बृहत्स्तम्बे ॥

स्तम्बकार: । पुं० गुच्छकारके ॥

स्तम्बहा । पुं० स्तम्बघ्ने ॥

स्तम्बघन: । पुं० स्तम्बघ्ने । तृणादिगुच्छोन्मूलनसाधने । स्तम्बघ्नस्तु स्तम्बघन: स्तम्बो येन निहन्यते० भूत्यमर: । स्तम्बस्तु खं वीरुध । सहन्यते येन । स्तम्बे कपित्यप् धञ् हनो घमादेश: ॥ नीशारादिग्रहणार्थं कृतवंशपात्रे ॥

स्तम्बघ्न: । पुं० तृणाद्युन्मूलकखनित्रादौ । स्तम्बघने ॥ स्तम्बो हन्यते० येन । स्तम्बे क चेति क: ॥ नीशारादिग्रहणार्थं कृतवंशपात्रे ।

स्तम्बपू: । स्त्री० पुरीभेदे । तामलिप्ते । विष्णुगृहे । तमोलुक्० इ० भा० प्र० देशे ॥

स्तम्बहननम् । न० स्तम्बघ्ने ॥
स्तम्बहननी । स्त्री० स्तम्बघ्ने ॥

स्तम्बेरम: । पुं० हस्तिनि । हस्तावले । द्रुमे । स्तम्बे रमते । रमु० । स्तम्बकर्णयोरमिजपोरित्यच् । हस्तिसूचकयोरिति वक्तव्यम् । अन्यत्र स्तम्बेरन्ता । तत्पुरुषे कृतीति० हलदन्तादिति वा ङेरलुक् ॥

स्तम्भ: । पुं० स्थूणायाम् । थम्भ० भा० ॥ जडत्वे । पक्षजाड्ये ॥ स्तभ्नाति । स्तन्भु रोधने । पचाद्यच् । भावे घञ् वा ॥ गतिनिरोधे । निष्प्रति[illegible]याम् ॥ गर्वे ।

स्तम्भकर: । पुं० वेष्टने । त्रि० स्थूणाकारके ॥ जाड्यकारके ॥

कौशितम् । अपिच । अन्यायेनप रस्वग्रहणंस्तेयम्च्यते॰ इति ॥ स्तेनस्यभावः कर्म वा । स्तेनाद्यन्न लोपश्च ॥ महापातकेषुब्राह्मणस् वर्णहरणे ॥ नि : चेपस्यापहर णंनराश्वरजतस्यच। भूमिवज्जमणी नाञ्चरुक्मस्तेयसमंस्मृतम् ॥

स्तेयफलः । पुं॰ कण्टकवृक्षे । तेजः फले ॥

स्तेयी । पुं॰ चौरे । स्वर्णकारे ॥ स्ते यमस्यास्य । अतइनि : ॥

स्तैनम् । न॰ स्तेये ॥

स्तैन्यः । पुं॰ चौरे ॥ न॰ स्तेनस्यभा वे॰कर्मणिच, चौर्ये । स्तेनस्य भावःकर्मवा । स्तेनाद्यन्नलोपश्चेत्य च॰स्तेनादितियोगविभागात्ष्यञ्॥

स्तैमित्यम् । न॰ जडतायाम् ॥ श रीरस्याद्रचर्मावगुण्ठितत्वमितिवै द्या : ॥

स्तोक : पुं॰ चातके ॥ त्रि॰ अल्पे ॥ स्तुच्यते । ष्टुचप्रसादे।घञ् । न्यङ् क्वादित्वात्कुत्वम् ॥ स्तूयतेवा । बाहुलकात्तुञः कः ॥

स्तोकक : । पुं॰चातके । स्तोकंकं जलमस्य ॥ स्तोकंकायतिवा । कै शब्दे । आतोनुपेतिकः ॥

स्तोतव्य :। त्रि॰ स्तवनीये । स्तुत्ये ॥

स्तोता । त्रि॰ स्तवकर्त्तरि ॥ स्तौति ष्टुञ् । तृच् ॥

स्तोत्रम् । न॰ स्तवे ॥ स्तूयतेऽनेन ष्टुञ्॰ । दाम्नीतिकरणेष्ट्रन् । ति तुत्रेतिनेट् ॥ प्रगीतमन्त्रसाध्यायां स्तुतौ । उद्गात्रादिनागीयमानेऋ ग्जाते । प्रगीतमन्त्रसाध्यगुणिनि ष्ठगुणाभिधानंस्तोत्रमितियाज्ञिकानां व्यवहारः ॥

स्तोभ : । पुं॰ न॰ अर्थशून्येवर्णे ॥ स्तोभः स्यात्सामविच्छेदेहेलनेस्त म्भनेऽपिचेतिहेमचन्द्रः । साङ्केत्यं पारिहास्यंवास्तोभंहेलनमेववा । वै कुण्ठनामग्रहणमशेषाघहरंविदुरि त्यत्र॰ स्तोभगीतालापपूरणार्थेऽक्ष रमितिश्रीधरः स्वामिनः ॥

स्तोभित :। त्रि॰ प्रोत्साहिते ॥

स्तोम : । पुं॰ समूहे ॥ यज्ञे । स्तो त्रे ॥ स्तूयतेऽनेन । ष्टुञ् । अ र्त्तिस्तुसुहितिमन् । सामयागेछन्दो गैः क्रियमाणायांपृष्ठादिसंज्ञका यांस्तुतौ ॥ मन्त्रसमूहे ॥

स्तोमक्षार : । पुं॰ सर्वक्षारे ॥

स्तौमवल्ली । स्त्री॰ काण्डीरे । ना सासंवेदने । काण्डवेल॰ इ॰ गौ॰ भा॰ प्र॰ लताप्रभेदे ॥

स्तौपिकम् । न॰ बुद्धधद्रव्ये । चोधा॰ इ॰ भा॰ प्र॰ ॥

स्त्यानम् । न॰ स्निग्धे ॥ प्रतिध्वानै ॥ घनत्वे ॥ आलस्ये ॥ स्त्यैष्ट्यै शब्दसङ्घातयोः । क्तः । अकर्म

नित्यदेवार्च्चनं पुष्पजलादिकम् ॥ ज्ञानेन किं किं तपसा जपहोमप्रपूजनैः । विद्यया चैव यज्ञैश्च स्त्रीभिर्यस्य मनो हृतम् ॥ इति श्रीदेवीभागवते तुलस्युपाख्यानम् ॥ तत्र स्त्रैणोऽपि निषिद्धः । यथा । स्त्रीजितस्याग्र्यं मात्रं यासर्वं पुण्यं प्रणश्यति । न भूमौ पातकी पापात् पापिनां स्त्रीजितात् परः ॥ इति । स्त्रियाजितः ॥

**स्त्रीधनम्**, क्ली, स्त्रीस्वस्वास्पदीभूतधनम् । यस्मिन् धने पतिनिरपेक्षतया स्त्रिया अधिकारस्तस्मिन् ॥ तद्विधाः । पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकं बन्धुदत्तं शुल्कान्वाधेयकमिति ॥ मनुश्च । अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिकर्म्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥ नारदोऽपि । अध्यग्न्यध्यावाहनिकं भर्त्तृदायस्तथैव च । भ्रातृदत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतम् ॥ याज्ञवल्क्यः । पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकञ्चैव स्त्रीधनं परिकीर्त्तितम् ॥ तदेव मन्वादिस्थितसङ्ख्यस्त्रीधनकीर्त्तनात् षट्त्वसङ्ख्याविवक्षिता । किन्तु स्त्रीधनकीर्त्तनमात्रपराणि मुनिवचनानि । तदेवञ्च स्त्रीधनं यद्दत्तं स्वातन्त्र्येण दानविक्रयभोगान् कर्त्तुमधिकरोति ॥ यदिदं किञ्चित् सङ्क्षिप्याह कात्यायनः । प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः । भर्त्तुः स्वाम्यं भवेत्तत्र शेषं तु स्त्रीधनं स्मृतम् ॥ अन्यत इति । पितृमातृभर्त्तृकुलव्यतिरिक्ताद् । यल्लब्धम् । शिल्पं न वा यदर्जितम् । तद्भर्त्तुः स्वाम्यम् । स्वातन्त्र्यम् । अनापद्यपि भर्त्ता ग्रहीतुमर्हति । तेन । स्त्रिया अपि धनं न स्त्रीधनमस्वातन्त्र्यात् । एतद्व्यतिरिक्तधनन्तु । स्त्रिया एव । दानाद्यधिकारात् ॥ कुलार्णवसेतौ श्रीमहानिर्वाणे श्रीसदाशिवः । पितृभिः श्वशुरैर्वापि दत्तं यद्धर्म्मसम्मतम् । स्वकृत्योपार्जितं यच्च स्त्रीधनं तत् प्रकीर्त्तितम् ॥ इति ॥ स्त्रियाः । धनम् ॥ न भर्त्ता नैव च सुतो न पिता भ्रातरो न च । आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णव इति दायभागः । प्रभविष्णवः । प्रभवः ॥

**स्त्रीधर्म्मः**, पुं, ऋतौ । पुष्पे । आर्त्तवे । रजसि ॥ स्त्रीणामनुष्ठेये ॥ तत्र मनुः । बालया वा युवत्या वा वृद्धया वापि योषिता । न स्वातन्त्र्येण कर्त्तव्यं किञ्चित् कार्य्यं गृहेष्वपि ॥ बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने । पुत्राणां भर्त्तरि प्रेते न भजेत्

स्त्रीरत्नवताम् ॥ पिताभाचासुते
र्वापितेच्छे विरहमात्मन:। एषां
हि विरहेण स्त्रीगर्ह्ये कुर्यादुभेकुले ॥
सदाप्रहृष्टयाभाव्यं गृहकार्येषुदक्ष-
या। सुसंस्कृतोपस्करया व्ययेचा
मुक्तहस्तया ॥ यस्मै दद्यात्पिता
त्वेनांभ्राताचानुमतेपितु:। तंशु
श्रूषेतजीवन्तं संस्थितं चनलङ्घयेत्
॥ मङ्गलार्थं स्वस्त्ययनंयज्ञश्चासांप्र
जापते:॥ प्रयुज्यतेविवाहेषुप्रदानंस्वा
म्यकारणम् ॥ अनृतावृतुकालेचम
न्त्रसंस्कारकृत्पति:। सुखस्यनि
त्यंदातेहपरलोकेचयोषित: ॥ वि
शील: कामवृत्तोवागुणैर्वापरिव
र्ज्जित:। उपचर्य्य: स्त्रियासाध्
व्यासततंदेववत्पति: ॥ नास्तिस्त्री
णांपृथग्यज्ञोनव्रतंनाप्युपोषितम्
पतिंशुश्रूषतेयेनतेनस्वर्गे महीयते॥
पाणिग्राहस्यसाध्वीस्त्रीजीवतोवा-
मृतस्यवा। पतिलोकमभीप्सन्ती
नाचरेत्किञ्चिदप्रियम् ॥ कामन्तु
क्षपयेद्देहंपुष्पमूलफलै: शुभै:।
नतुनामापिगृह्णीयात्पत्यौप्रेते
परस्यतु ॥ आसीतामरणात्क्षान्ता
नियताब्रह्मचारिणी। योधर्म एक
पत्नीनांकाङ्क्षन्तीतमनुत्तमम् ॥
अनेकानिसहस्राणिकुमारब्रह्मचा
रिणाम्। दिवंगतानिविप्राणाम
कृत्वाकुलसन्ततिम् ॥ मृतेभर्त्तरि
साध्वीस्त्रीब्रह्मचर्य्यव्रतेस्थिता। स्व
र्गंगच्छत्यपुत्रापियथातेब्रह्मचारि-
ण: ॥ अपत्यलोभाद्यातुस्त्रीभर्त्ता
रमतिवर्त्तते। सेहनिन्दामवाप्नो
तिपतिलोकाच्चहीयते ॥ नान्योत्प
न्नाप्रजास्तीहनचाप्यन्यपरिग्रहे। न
द्वितीयश्चसाध्वीनांक्वचिद्भर्त्तोपदि-
श्यते ॥ पतिंहित्वापकृष्टं स्वमुत्कृ
ष्टंयानिषेवते। निन्द्यैवसाभवेल्लो
केपरपूर्वेतिचोच्यते ॥ व्यभिचारा
त्तुभर्त्तु: स्त्रीलोकेप्राप्नोतिनिन्द्य
ताम्। शृगालयोनिंप्राप्नोतिपाप
रोगैश्चपीड्यते ॥ पतिंयानाभिच
रतिमनोवाग्देहसंयता। साभर्त्
लोकमाप्नोतिसद्भि: साध्वीतिचो
च्यते ॥ अनेननारीवृत्तेनमनोवाग
देहसंयता। इहाग्र्यांकीर्त्तिमाप्नो
तिपतिलोकंपरत्रच ॥ इतिमानवे
धर्मशास्त्रे नवमोध्याय: ॥

स्त्रीधर्म्मिणी। स्त्री० ऋतुमत्याम् ॥
स्त्रीधर्मोरज:ऽस्त्यस्या:। अतइ
निठनादित्वीनि:। ङीप् ॥

स्त्रीधव:। पुं० पुरुषे ॥

स्त्रीपर:। पुं० कामुके। षिङ्गे ॥

स्त्रीपण्योपजीवी। पुं० सम्भोगार्थम
न्यस्मैस्त्रियंदत्त्वातद्धनोपजीविनि ॥

स्त्रीपुंसौ। पुं० २मिथुने। द्वन्द्वे ॥
स्त्रीचपुमांश्च। अचतुरेत्य: ॥

स्त्रीपुंसलक्षणा। स्त्री० पेटायाम् ॥

शाय्यसौ । स्थण्डिलेकुमायाव्रतेस्य चेश्रेत । व्रती० दूतिणिनि : ॥

स्थण्डिलसितकम् । न० वेद्याम् ॥ दू० हा० लो ॥

स्थण्डिलेशय : । पुं० स्थाण्डिले ॥ व्रतेनस्थंडिलेशेते । शीङ्० अधिकरणे शेतेरित्यच् । अलुक् ॥

स्थपति : । पुं० वृहस्पतौ । वृहस्पतिसवकर्त्तरि । जीवेष्टियाजके । स गीष्पतीष्ट्यास्थपतिरित्यमर : । स यज्वेतिसम्बन्ध : । कुबेरे । कञ्चुकिनि । सौविदे । यज्वनि । का रुभेदे । शिल्पिविशेषे । राज० था त्रो० दू० भा० प्र० । तल्लक्षणं यथा । वास्तुविद्याविधानज्ञोलघुहस्तोजितश्रम : । दीर्घदर्शीचशूरश्च स्थपति : परिकीर्त्तित : इति ॥ स्थानस्थ : । सुपिस्थ इत्यच० स्थ इतियोगविभागात्क : । स्थस्थप ति : । यद्वा । तिष्ठन्त्यस्मिन् । स्था० । घञर्थेक : । स्थस्वासौपति श्च ॥ वि० अमात्ये ॥

स्थपुट : । त्रि० विषमोन्नते ॥ विषमसञ्चारकौविनि ॥

स्थलम् । न० जलशून्याकृत्रिमभूभागे । स्थल्याम् ॥ स्थलति । स्थल० । पचाद्यच् ॥ वस्त्रगृहे ।

स्थलकन्द : । पुं० अयाम्यकन्दे । वनशोलइतिभाषाप्र० ॥

स्थलकमलम् । न० स्थलपद्मे ॥

स्थलकुमुद : । पुं० करवीरे ॥ दू० रा० गट : ॥

स्थलपद्म : । पुं० मानके । मानकच० दू० भा० । न० पुष्पप्रभेदे । छत्रपत्रे । तमालके ॥ प्रपौण्डरीके । स्थलपद्मं साधुपुष्पं इष्टिकृत्पुण्डरीयकमितिरभस : ॥

स्थलपद्मनी । स्त्री० स्थलपद्मे ॥

स्थलपाकजम् । न० पक्वमांसविशेषे । यथा स्थलेनपक्वं यन्मांसं तज्ज्ञेयं स्थलपाकजम् ॥

स्थलमञ्जरी । स्त्री० अपामार्गे ॥

स्थलविहङ्गम : । पुं० मयूरादौ ॥ सथलस्थविहङ्गम : ॥

स्थलशृङ्गाट : । ) स्थलशृङ्गाटक : । ) पुं० गोक्षुरे ।

स्थलसीमा । पुं० सर्यस्थिले ॥

स्थला । स्त्री० पुरुषेणसंस्कृतायां भूमौ । स्थलति । स्थल० । पचाद्यच् । टाप् ।

स्थली । स्त्री० अकृत्रिमायांभूमौ । जानपदेतिङीष् ॥

स्थलेरुहा । स्त्री० घृतकुमार्याम् । दग्धायाम् ॥ वि० स्थलजाते । स्थलेरोहति । रुह० । इगुपधेति क : । तत्पुरुषेकृतीत्यलुक् ॥

स्थलेशय : । पुं० मृगादौ ॥ स्थलेशेते । अधिकरणे शेतेरितिअच्

। तिष्ठन्त्यस्मिन्नशब्दादिति व्युत्पत्त्या क्वचित् स्थानशब्दोऽयं वाच्यो । निकटे । स्वधर्मानुष्ठायिनामसम्यग्वर्त्तिनाञ्च स्थानविशेषप्राप्तिर्यथा । वर्णानामाश्रमाणाञ्च सम्यग्धर्मानुपालिनाम् । असम्यग्वर्त्तिनां लोकान् ब्रह्माचक्रे यथाचयत् ॥ प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् । क्षत्रियाणां तथा चैन्द्रं सङ्ग्रामेष्वनुवर्त्तिनाम् ॥ वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्त्तिनाम् । गान्धर्वं शूद्रजातीनां परिचर्यानुकारिणाम् ॥ अष्टाशीतिसहस्राणि यतीनामूर्द्ध्वरेतसाम् । स्मृतं तेषान्तु यत्स्थानं तदेव गुरुवासिनाम् ॥ सप्तर्षीणाञ्च यत्स्थानं स्मृतं तद्वनौकसाम् । प्राजापत्यं गृहस्थानं गृहधर्मानुवर्त्तिनाम् ॥ न्यासिनात्मपरस्वच्छयोगिनाममृतं स्मृतम् । एकान्तवासिनां ब्रह्मध्यायिनां परमं पदम् ॥ तामिस्रमन्धतामिस्रं महारौरवरौरवम् । असिपत्रवनं घोरं कालसूत्रमवीचिमत् ॥ वेदानिन्दकानान्तु यज्ञव्याघातकारिणाम् । स्थानमेतत् समाख्यातं स्वधर्मविनिवर्त्तिनाम् ॥ इति वह्निपुराणे सर्गकथननामाध्यायः ॥

स्थानकम् । न० आलवाले ॥ नगरे ॥

स्थानचञ्चला । स्त्री० वर्वराद्ये ॥

स्थानच्युतः । त्रि० स्थानभ्रष्टे । यथा । स्थानस्थितस्यापद्मस्य मित्रवरुणभास्करौ स्थानच्युतस्य तावेव क्लेदशोषणकारकौ ॥ इति ग० पु० ॥

स्थानपालः । पुं० स्थानरक्षके ॥

स्थानभ्रष्टः । त्रि० पदच्युते ॥ यथा । स्थानस्थितानि पूज्यन्ते पूज्यन्ते च पदस्थिताः । स्थानभ्रष्टा न पूज्यन्ते केशा दन्ता नखा नराः ॥ इति गारुडेऽध्यायः ११५ ॥

स्थानाध्यक्षः । )<br>स्थानिकः । ) त्रि० स्थानरक्षके ॥

स्थाना । त्रि० स्थानविशिष्टे । स्थानीवति ॥

स्थानीयम् । न० पुर्याम् । पत्तने । निगमे । नगरे ॥ प्राकारादिना दुर्गयोजनविस्तीर्णं नगरं स्थानीयम् । स्थानाय हितम् । तस्मै हितमिति छः ॥ त्रि० स्थानभवे ॥ स्थानसम्बन्धिनि ॥

स्थाने । अ० कारणार्थे । हेतौ । युक्ते ॥ सादृश्ये । साम्ये स्थानस्थकरणम् । स्थानशब्दात् तत्करोतीति णिजन्तादेप्रत्ययः ॥

स्थापकः । त्रि० स्थापनकर्त्तरि ॥ स्थापयति । स्था० । णिजन्ताण्वुल् ॥

स्थापत्यः । पुं० राज्ञां स्त्र्यागारे वहीर चाधिकृते । सौविदल्ले । कञ्चुकिनि । सिद्धान्तपुरुषाः । घञर्थे

स्थिति : । स्त्री॰ अवस्थाने । ऊर्द्धाव स्थाने ॥ मर्यादायाम् । न्यायपथ स्थितौ । संस्थायाम् ॥ ईश्वरेच्छा निरुद्धस्य सर्वलोकस्य स्वगोचरे नियोगस्थापने । विद्यमानतायाम् । सृष्टिप्रलययोर्मध्ये ॥ सीमनि ॥ स्थानम् । स्था॰ । स्थागापापचोभावे॰ क्तिन् ॥ तिष्ठत्यत्र । बाहुलकाद्धिकरणे क्तिन् ॥

स्थितिस्थापकः । पुं॰ संस्कारविशेषे । अन्यथाकृतस्य पुनस्तदवस्थापादके घटादिपृथिवीवृत्तौ ॥

स्थिरः । पुं॰ शनैश्चरे । मोक्षे । देवे ॥ नगे । पर्वते ॥ वृक्षे ॥ कार्त्तिकेये ॥ धववृक्षे ॥ वृषे ॥ वृषसिंहवृश्चिककुम्भराशिषु । न॰ नक्षत्रविशेषेषु ॥ यथा । उत्तरात्रयरोहिण्योर्भास्करश्च ध्रुवं स्थिरम् । तत्र स्थिरं बीजगेहशान्त्यारामादिसिद्धयतीति ॥ त्रि॰ कठिने ॥ अचले ॥ दृढप्रयत्ने ॥ रसाद्यंशेन चिरकालस्थायिनि शरीरे ॥ तिष्ठति । स्था॰ । अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः । इति किरच्॰ टिलोपः ॥ षड्भावविकाररहिते सद्रूपे ॥

स्थिरकर्म्मा । त्रि॰ आफलोदयकारिणि ॥

स्थिरगन्धः । पुं॰ चम्पके ॥ त्रि॰ स्थिरस्थायिसौरभयुक्ते । स्थिरो गन्धो यस्मिन् ॥

स्थिरगन्धा । स्त्री॰ पाटलायाम् ॥ केतक्याम् ॥

स्थिरचक्रः । पुं॰ मञ्जुघोषाभिधे जिनविशेषे । त्रि॰ सुस्थसैन्ये ॥

स्थिरच्छदः । पुं॰ भूर्जपत्रे ॥ स्थिराः छदा यस्य ॥

स्थिरच्छायः । पुं॰ देवद्रुमे ॥ स्थिरा चञ्चला छाया यस्य सः ॥ तृणमात्रे ॥ छायावृक्षे ॥

स्थिरजिह्वः । पुं॰ मत्स्ये ॥

स्थिरजीविका । स्त्री॰ स्थिरवृत्तौ ॥ शाल्मलौ ॥ त्रि॰ स्थिरवृत्तिमति ॥

स्थिरजीविता । स्त्री॰ शाल्मलिवृक्षे ॥

स्थिरतरः । त्रि॰ स्थास्नौ । स्थेयसि । अतिस्थिरे ॥ अतिशयेन स्थिरः । द्विवचनविभज्येति तरप् ॥ एकरूपतयातिस्थिरे ॥

स्थिरदंष्ट्रः । पुं॰ भुजङ्गमे ॥ वराहाकृतिविष्णौ । ध्वनात्मकवायौ ॥

स्थिरदारु । पुं॰ शाकवृक्षे ॥

स्थिरपत्रः । पुं॰ हिन्तालौ ।

स्थिरपुष्पः । पुं॰ चम्पके ॥ बकुले ॥

स्थिरपुष्पी । स्त्री॰ तिलकद्रुमे ॥

स्थिरफला । स्त्री॰ कुष्माण्डाम् ॥

स्थिरबुद्धिः । त्रि॰ स्थिरप्रज्ञे । लब्धश्रवणमननफले ॥ स्थिरा निश्चला सन्यासपूर्वकवेदान्तवाक्यविचार

परिपाकेणसर्वसंशयशून्यत्वेननि
र्विचिकित्सानिश्चितान्नस्यबुद्धि
र्यस्य ॥

स्थिरमतिः । स्त्री॰ निश्चलायांबुद्धौ
॥ परमार्थवस्तुविषयायांमतौ ॥
त्रि॰ तद्वति ॥ स्थिरापरमार्थव
स्तुविषयामतिर्यस्य ॥

स्थिरयोनिः । पुं॰ द्रुमे ॥

स्थिरयौवनः । पुं॰ विद्याधरे ॥ त्रि॰
चिरस्थायितरुणावस्थे ॥ स्थिरंयौव
नमस्य ॥

स्थिररङ्गा । स्त्री॰ नील्याम् ॥

स्थिररागा । स्त्री॰ दारुहरिद्रायाम् ॥

स्थिरश्रीः । पुं॰ विष्णौ ॥ त्रि॰ नि
श्चलश्रीविशिष्टे ॥ स्थिराश्रीर्यस्मि
न्॰ यस्यवा ॥ स्थिरोपायोहिपुरु
षः स्थिरश्रीरेवजायते । रचितुं
नैवशक्नोतिचपलश्चपलांश्रियमिति
मत्स्यपुराणम् ॥

स्थिरसाधनकः । पुं॰ सिन्धुवारवृक्षे ॥

स्थिरसारः । पुं॰ शाकवृक्षे ॥

स्थिरा । स्त्री॰ भुवि । धरित्र्याम् ।
विश्वम्भरायाम् ॥ शालपर्ण्याम् ॥
शाल्मलिवृक्षे ॥ तिष्ठति । छा॰ ।
अजिरशिशिरेत्यादिनाकिरच्॰ टि
लोपः । टाप् । काकोल्याम् ॥

स्थिराङ्घ्रिपः । पुं॰ हिन्तालवृक्षे ॥

स्थिरायुः । स्त्री॰ शाल्मलिद्रुमे ॥ स्थि
रमायुर्यस्याः ॥ षष्टिवर्षसहस्रा
णिवनेजीवतिशाल्मलिरितिवचना
त् ॥

स्थूणा । स्त्री॰ गृहस्याधारभूतेस्तम्भे
काष्ठमयीहिकर्णिकास्थूणाभवति
। थूणी॰ इ॰ भा॰ प्र॰ गृहपूर्वः
स्थूणाशब्दः क्लीवे । यथागृहस्थू
णमिति ॥ सूर्म्याम् ॥ तिष्ठति ।
छा॰ । रास्नासास्नेतिसाधुः ॥
वृगन्तरे ॥ इतिहेमचन्द्रः ॥

स्थूरः । पुं॰ मनुष्ये ॥ तिष्ठति ।
छा॰ । स्थः किच्चस्थूरम् ॥ स्थू
रस्थरायइतिमन्त्रेतुयोगपुरस्कारात्
स्थिरस्त्यर्थः ॥

स्थूरी । पुं॰ खरतस्नभवत्पृष्ठेनभा
रवाहकेऽश्वे ॥

स्थूलः । पुं॰ विराजि ॥ पनसे ॥
न॰ कूटे । समूहे ॥ त्रि॰ निष्प्र
ज्ञे ॥ जडे ॥ उपचितावयवे । पी
ने । पीवि । पीवरे । मोटा॰
इ॰ भा॰ ॥ स्थूलशरीरे । आ
त्मनउपाधिविशेषे ॥ स्थूलोदेहो
ऽहमप्रत्ययादात्मेतिलोकायतभेदः
। तत्र । मृतसुषुप्तयोरपिसङ्घा
ताविशेषाच्चैतन्यप्रसङ्गात् । एक
कस्यचभूतस्यचैतन्यादर्शनात् ।
सङ्घातस्यचावस्तुत्वात् ॥ स्थूलय
ति । स्थूलपरिवृंहणे । चुरादद
न्तः । पचाद्यच् ॥

स्थूलक्षः । पुं॰ तृणविशेषे । सूच्य

र्षे। खरच्छदे। उलुखड॰ इ॰ गौ॰ दे॰ भा॰ प्र॰। वि॰ स्थूले।

स्थूलकङ्गुः। पुं॰ वरकधान्ये॥

स्थूलकणा। स्त्री॰ स्थूलजीरके॥

स्थूलकण्टकः। पुं॰ जालबर्बूरे॥

स्थूलकण्टकिका। स्त्री॰ शाल्मलिवृक्षे॥

स्थूलकण्टा।
स्थूलकण्टिका। ) स्त्री॰ वृहत्याम्॥

स्थूलकन्दः। पुं॰ हस्तिकन्दे॥ शूरणे॥ मानकन्दे॥ रक्तलशुने। एकन्ने॥

स्थूलकायः। पुं॰ स्थूलशरीरे॥

स्थूलकाष्ठधृक्। पुं॰ वृहत्काष्ठाग्नौ। स्कन्धानले।

स्थूलकाष्ठाग्निः। पुं॰ स्कन्धाग्नौ।

स्थूलक्ष्वेडः। पुं॰ बाणे॥

स्थूलकेशरः। पुं॰ सिंहस्थानविशेषे॥ स्थूलास्थात्स्थूलकेश्वरे॰ इ॰ लिदेवीगीता॥

स्थूलग्रन्थिः। स्त्री॰ वचाप्रभेदे। महाभरा॰ इ॰ भा॰॥

स्थूलचञ्चुः। पुं॰ महाचञ्चुशाके।

स्थूलचापः। पुं॰ तूलपरिष्कारार्थधनुषि। तूलचापे। इ॰ श॰ र॰ लौ॥

स्थूलजीरकः। पुं॰ कृष्णजीरके। उपकुञ्चिकायाम्। वालौजी॰ मं गरैला॰ इ॰ भा॰ प्र॰॥

स्थूलतालः। पुं॰ हिंताले॥

स्थूलत्वचा। स्त्री॰ काश्मर्याम्। गम्भार्याम्।

स्थूलदण्डः। पुं॰ देवनले॥

स्थूलदर्भः। पुं॰ मुञ्जे॥

स्थूलदला। स्त्री॰ घृतकुमार्याम्॥

स्थूलनालः। पुं॰ देवनले॥

स्थूलनासः।
स्थूलनासिकः। ) पुं॰ सूकरे॥ वि॰ पीननासायुक्ते॥

स्थूलपटः। पुं॰ स्थूलशाटके। पटति। पटगतौ॰ पटविस्तारे वा। पचाद्यच्। स्थूलश्चासौ पटश्च॥ वि॰ स्थूलवस्त्रवति। यथा। कृशस्तद्दशः स्थूलपटायत्रगोधूमशालिनः। प्रलयेपिनसीदन्ति यदि कन्यान जायते॥

स्थूलपट्टः। पुं॰ कर्पासे॥

स्थूलपट्टाकः। पुं॰ स्थूलवस्त्रे॥

स्थूलपादः। पुं॰ हस्तिनि॥ व्याधिनाशस्थूलचरणे॥

स्थूलपुष्पः। पुं॰ वकद्रुमे॥

स्थूलपुष्पिका। स्त्री॰ गिरिजापराजितायाम्॥

स्थूलप्रपञ्चः। पुं॰ विराजि।

स्थूलफलः। पुं॰ शाल्मलिवृक्षे॥

स्थूलफला। स्त्री॰ शणपुष्प्याम्॥

स्थूलभद्रः। पुं॰ श्रुतकेवलिनामनि

जैनभेदे ॥

स्थूलभुक् । न० व्यष्ट्युपहितचैतन्ये । विश्वशब्दाभिधेये ॥ स्थूलान् विषयान् भुङ्क्ते । भुज० । क्विप् ॥

स्थूलभूतम् । न० पञ्चीकृताकाशादिभूते अपञ्चीकृतानामेव भूतानां परस्परव्यवहारं प्राप्तिनिकायव्यवहारनिर्वाहकतदीयधर्माधर्मापेक्षपरमेश्वरसान्निध्यादिनिमित्तापेक्षया विभागेन मिलितानां स्थूलतापत्तौ । पञ्चीकृतभूते ॥

स्थूलमरिचम् । न० कक्कोले ।

स्थूलमूलम् । न० चाणक्यमूलके ।

स्थूललक्ष्यः । त्रि० बहुप्रदे ॥ स्थूलैर्महद्भिर्लक्ष्यते । लक्ष० । कर्मणि घञ् ॥

स्थूललक्ष्यः । त्रि० दानशौण्डे । बहुप्रदे । वदान्ये ॥ स्थूलं कूटं लक्ष्यमस्य ॥ स्थूलैर्महद्भिर्लक्ष्यते वा । लक्ष० । कर्मणि यत् ॥

स्थूलवर्म्मकृत् । पुं० ब्रह्मगर्भ्याम् ॥

स्थूलवल्कलः । पु० रक्तलोध्रे ॥

स्थूलवृत्तफलः । पुं० मदनवृक्षविशेषे । स्निग्धपिण्डीतके ॥

स्थूलवैदेही । स्त्री० गजपिप्पल्याम् ।

स्थूलशरः । पुं० महाशरे । स्थूलपर्वे ॥

स्थूलशरीरम् । न० आत्मन उपाधिविशेषे । अन्नमयकोषे ॥ यथा । खादिपञ्चीकृतभूतसम्भवं भोगालयं दुःखसुखादिकर्मणाम् । शरीरमाद्यन्तवदादिकर्मजं मायामयं स्थूलमुपाधिरात्मनः ॥

स्थूलशाटकः । पुं० स्थूलवस्त्रे । वराशौ ॥ शटति शटक आदौ स्थूल । स्थूलश्चासौ शाटकश्च ॥

स्थूलशाटका । )
स्थूलशाटिका । ) स्त्री० स्थूलवस्त्रे । वराशौ ॥
स्थूलशाटिः । )

स्थूलशालिः । पुं० महाशालौ । स्थूलतण्डुले ॥

स्थूलशिराः । पुं० ऋषिविशेषे । न० वृहन्मस्तके ॥ त्रि० तद्युक्ते ॥ स्थूलं शिरो यस्य सः ॥

स्थूलशीर्षिका । स्त्री० क्षुद्रपिप्पलिकायाम् ॥

स्थूलषट्पदः । पुं० वरोलि । वोलता० हु० गौ० भा० प्र० ॥

स्थूलस्कन्धः । पुं० लकुचे ।

स्थूलहस्तः । पुं० करिशुण्डायाम् । हस्तिहस्ते ॥ त्रि० पीनभुजे ।

स्थूला । स्त्री० स्थूलैलायाम् । कृष्णपिपीलिकायाम् । गन्धपत्रायाम् ॥ एर्वारौ ॥ गजपिप्पल्याम् ॥ स्थूलकेशवरशायां स्त्रियाम् ॥

स्थूलांशा । स्त्री० गन्धपत्रायाम् ॥

स्थूलाम्रः । पुं॰ महाराजाम्रे ॥

स्थूलास्यः । पुं॰ सर्पे ॥ त्रि॰ बृहन्मुखे ।

स्थूलैरण्डः । पुं॰ महैरण्डे ॥ स्थूलैरण्डोगुणाढ्यः स्याद्रसवीर्यविपाकिषु ॥

स्थूलैला । स्त्री॰ बृहदेलायाम् ॥ अस्यागुणायथा । स्थूलैलाकटुका पाकेरसेचानलकृल्लघुः । रूक्षोष्णा श्लेष्मपित्तास्रकण्डूश्वासतृषापहा ॥ हृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनुत् ॥

स्थूलोच्चयः । पुं॰ गण्डोपले । गण्डाश्मनि । स्थूलोपले ॥ असाकल्ये । अकात्स्न्ये ॥ वरण्डे ॥ गजानांमध्यमगतौ ॥ नीचैर्गतम् । स्थूलोच्चयः । वीथिमार्गइतिलि ङ्गेश्रित्रिगतयः ॥ उच्चयनम् । विअ॰ । एरच् । स्थूलस्योच्चयः । गजानांदन्तरन्ध्रे ॥

स्थेमा । पुं॰ स्थैर्ये । स्थिरस्यभावः पृथ्वादित्वादिमनिच् । प्रियस्थिरेतिस्थादेशः ॥

स्थेयः । पुं॰ विवादपदस्यनिर्णेतरि । प्रवदरि । प्राड्विवाके ॥ तिष्ठत्यस्मिन्विवादपदनिर्णयार्थम् । ष्ठा॰ । बाहुलकादधिकरणे॰ अचोयत् । ईद्यति ॥ पुरोधसि । त्रि॰ अतिस्थिरे ॥

स्थेयान् । त्रि॰ स्थास्नौ । स्थिरतरे ॥ अयमनयोरतिशयेनस्थिरः । द्विवचनविभज्योपपदेतरबीयसुनाविती यसुनि॰ प्रियस्थिरेतिस्थादेशः ॥ स्त्री॰ स्थेयसी ॥

स्थेष्ठः । त्रि॰ स्थिरतमे । अयमेषामतिशयेनस्थिरः । अतिशायनेतमबिष्ठनाविती ष्ठनि॰ प्रियस्थिरेतिस्थादेशः ॥ सुस्थिरे ॥

स्थैर्य्यम् । न॰ स्थिरत्वे । अचञ्चलत्वे । मोक्षसाधनेप्रवृत्तस्यानेकविघ्नविघ्नप्राप्तावपितदपरित्यागेनपुनः पुनर्यत्नाधिक्ये ॥ स्थिरस्यभावः । ष्यञ् । स्तब्धत्वे ॥

स्थोरी । पुं॰ भारवाहितुरगे ॥

स्थौणेयम् । न॰ ग्रन्थिपर्णप्रभेदे । कुकुरौंधाख्यौषधौ । गांठयाला॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ अस्यप्रभेदागुणाश्चयथा । ईषत्सुगन्धिस्थौणेयंयुमेर॰ इतिलोके । स्थौणेयकंबर्हिबर्हंशुकबर्हंचकुक्कुरम् । शौणेरामःशुकस्त्वापिशुकपुष्पंशुकच्छदम् ॥ स्थौणेयकंकटुस्वादुतिक्तंस्निग्धंत्रिदोषनुत् । मेधाशुक्रकरंत्वच्यंरक्षोघ्नंज्वरजन्तुजित् ॥ हन्तिकुष्ठासृक्तृट्दाहदौर्गन्ध्यतिलकालकान् । इतिभा॰ प्रकाशः ॥

स्थौणेयकम् । न॰ सुगन्धद्रव्यभेदे ।

बहिर्मुखे । स्थौणेये ॥
स्थौरी । पुं॰ खरप्रभवत पृष्ठेनभार वाहकेऽश्वे । पृष्ठ्ये । स्थूलस्येद म् । तस्येदमित्यण् । रलयोरैक्य म् । स्थौरं बलमस्यास्ति । इनिः ॥
स्थौलल्यम् । न॰ बहुप्रदत्त्वे ॥ *
स्थौल्यम् । न॰ स्थूलत्वे ॥ स्थूलस्य भावः । ष्यञ् ॥
स्नपनम् । न॰ अभिषेचने ॥ स्नाने ॥ यथा । पूजनात्स्नपनं श्रेष्ठं स्न पनात्तर्पणं स्मृतम् । तर्पणाम्भ्रां सदामन्त्रमध्विषाजनिपातनमिति- दुर्गोत्सवप्रकरणे तिथ्यादितत्त्वम् ॥
स्नपितः । वि॰ क्षालिते ॥ सिक्ते ॥ स्नातेर्ण्यन्तात्क्तः । अर्त्तिह्रीत्या दिनापुक् । मितांह्रस्वः ॥ आ- प्लुते ॥
स्नवः । पुं॰ स्रवे । स्रवणे । क्षरणे ॥ स्नवनम् । आप्रस्रवणे । ऋदो रप् ॥
स्नसा । स्त्री॰ स्नायौ ॥
स्नातः । वि॰ आप्लुते । कृतस्नाने ॥ यथा । स्नातोऽधिकारीभवतिदैवे पैत्रे चकर्मणि । असातस्यक्रियाः सर्वाः भवन्तिह्यफलाः ॥ प्रातःसमाचरेत्स्नानमतोनित्य मतन्द्रितः ॥ इतिप्रायश्चित्ततत्त्वम् स्नात्वाकर्माणिकुर्वीत । शिरः स्नात्वाकुर्वीतदैवंपित्र्यमथापिवेति स्मृतिः ॥ आप्लोवे । भाविक्तः ॥
स्नातकः । पुं॰ आप्लुतव्रतिनि । स मातवेदपाठे॰ अगृहस्थे । आश्र मान्तरगतेसमाप्तवेदव्रते । कृत- स्नाने ॥ अत्राहहारीतः । त्रयः स्नातकाभवन्ति । विद्यास्नातको॰ व्रतस्नातकोविद्याव्रतस्नातकश्चेति । तत्रयः समाप्यवेदमसमाप्यव्रता निसमावर्त्तते॰ सविद्यास्नातकः । यः समाप्यव्रतानि॰ असमाप्य वेदं समावर्त्ततेसव्रतस्नातकः । य उभयं समाप्यसमावर्त्ततेसविद्याव्र तस्नातकोभवति ॥ अत्रभवन्तिच यःपक्षाः । यथा । मन्त्रब्राह्मणा त्मकं वेदमधीत्याबबुद्ध्यचस्नाया दित्येकःपक्षः । साङ्गवेदमधी त्याबुद्ध्यचस्नायादित्यपरः । अ न्यमावमप्यधीत्ययस्तुविद्याभ्यासा स्नायादितितृतीयः पक्षः । यस्तु विद्याविरहेणान्यमार्गेऽधीतेनस्ना यादितिनिषेधः । यतोवेदाध्ययनं वेदविहिताग्निहोत्रादिकर्माद्यनुष्ठा नप्रयोजनमिति ॥ स्नातिस्म । आ॰ ॥ गत्यर्थाकर्मकेतिक्तः । संज्ञा यांकन् ॥ याबादिषु॰ स्नातवेदस मापाविवितिपाठाद्वाकन् ॥ गृहस्थ ब्राह्मणे ॥
स्नानम् । न॰ मज्जने । आप्लावे । आ प्लवे ॥ स्नानंषड्विधंभवति । यथा

-प्रसङ्ग : । नित्यं नैमित्तिकं काम्यं क्रियाङ्गमलकर्षणम् । क्रियास्नानं तथाषष्ठं षोढास्नानं प्रकीर्त्तितमिति ॥ विशिष्टांशस्तु नानातन्त्रेष्ववगन्तव्यम् । तथाग्रुङ्गस्मृतिः ॥ आग्नेयादिप्रभेदेन तच्चप्रोक्तं चतुर्विधम् । यथा । आग्नेयं भस्मना स्नानमवगाह्यन्तुवारुणम् । आपो हिष्ठेतिचब्राह्मं वायव्यं गोरजः स्मृतमिति ॥ ष्णा शौचे । भावेल्युट् ॥ स्नानं तर्पणपर्य्यन्तं ब्राह्मन्तं देवपूजनम् । आह्निकत्वविसन्ध्यान्तं विप्राणाञ्चस्मृतौ स्मृतम् । तत्प्रातःस्नानं प्रशंसन्निदृष्टादृष्टकरं हितम् । सर्व्वमर्हति पूतात्मा प्रातःस्नायी जपादिकमिति दक्ष : । दृष्टङ्कर्म्माधिकार : । अदृष्टं जपादिद्वारा परलोकसिद्धि : ॥

स्नानतृणम् । न० कुशे ॥

स्नानीयम् । न० स्नानसाधने चूर्णादौ ॥ स्नान्यनेन । ष्णा० । कृत्यल्युटोवहुलमित्यनीयर् ॥

स्नान्ती । स्त्री० जलमवगाहमानायाम् ॥

स्नायी । त्रि० स्नानकर्त्तरि ॥

स्नायु : । स्त्री० वायुवाहिन्यांनाड्याम् ॥ वस्नसायाम् ॥ स्नाति । ष्णा० । वाहुलकादुण् । आतोयुक् चित्वात्कृती : ॥

स्नायुर्म्म : । न० नेत्ररोगप्रभेदे । तल्लक्षणं यथा । स्थिरं प्रस्तारिमांसाढ्यं शुष्कं स्नायुर्म्म पञ्चममिति माधवकर : ॥

स्नावा । पुं० रसिके ॥ स्नाति । ष्णा० । स्नामदिपद्यर्त्तिपॄशकिभ्योवनिप् । धीवावत् ॥

स्नावरी । स्त्री० नद्याम् ॥ स्नान्त्यस्याम् । ष्णा० । वनिप् । वनोरचेतिङीब्रौ ॥

स्नावा । स्त्री० शिरायाम् ॥ स्नुप्रस्रवणे । स्नावयतिशरीरमितिज्ञावा ॥

स्निग्ध : । पुं० वहुवारे । रक्तैरण्डे ॥ सरलद्रुमे । वयस्ये ॥ न० समूहगन्धे । जवादिके । सिक्थके ॥ त्रि० स्नेहयुक्ते । अरूक्षे । चिक्कणे । मसृणे ॥ सहजेनागन्तुकेनवास्नेहेनयुक्ते । प्रिये । वत्सले । ष्णिह प्रीतौ । अकर्म्मकत्वात्कर्त्तरिक्त : । वाद्रुहेतिव : ॥ मतिवुद्धिपूजार्थेभ्यश्चेतिचाइत्र्येमानेवाक्त : ॥

स्निग्धकन्दा । स्त्री० द्रोणपर्ण्याम् । भूमिकदल्यां ॥

स्निग्धतण्डुल : । पुं० षष्टिशाली ॥

स्निग्धता । स्त्री० स्नेहे । प्रियत्वे ॥

स्निग्धदारु । न० देवदारुणि ॥ देवदारुप्रभेदेपूतिकाष्ठे ॥ सरलद्रुमे ॥

स्निग्धपत्र : । पुं० गर्जरद्रुणे । घृत

कारञ्जे । गुच्छकरञ्जे ॥
स्निग्धपत्रा । स्त्री॰ बदर्याम् ॥ पाल
ङ्क्याम् ॥ काश्मर्याम् ॥
स्निग्धपर्णी । स्त्री॰ गम्भार्याम् ॥
स्निग्धपिण्डीतक : । पुं॰ मदनवृक्षवि
शेषे । स्थूलवृक्षफले ॥
स्निग्धफला । स्त्री॰ कर्कटीप्रभेदे ।
बालुङ्क्याम् । मूत्रलायाम् ॥
स्निग्धा । स्त्री॰ मेदायाम् ॥
स्नु : । पुं॰ प्रस्थे । सानौ । पर्वतस
मभूभागे । स्नौतिजलम्॰ वाति
वा । ष्णुप्रस्रवणे॰ ष्णागौचेवा ।
मितद्र्वादित्वात्॰ डु : ॥ स्त्री॰
स्नायौ ॥
स्नुक्छद : । पुं॰ चीरकस्नुक्वृक्षे ।
स्नुत : । त्रि॰ स्रुते । स्नुतजलादौ ।
स्नुयतेस्म॰ । ष्णु॰ क्त : ॥
स्नुषा । स्त्री॰ सुतस्त्रियाम् । पुत्रव
ध्वाम् ॥ स्नौति । ष्णु॰ । स्नुव्रश्चि
कृत्यृषिभ्य : कित्दितिस : ॥ स्नु
ह्याम् ॥
स्नुक् । स्त्री॰ स्नुह्याम् ॥ स्नुह्यति ।
ष्णुहउद्गिरणे । क्विप् । वाद्रुहेति
कुत्वम् । तदभावेहोढ इतिढत्वे
स्नुट् स्नुड् ॥
स्नुहा । स्त्री॰ स्नुहीवृक्षे ॥ भागुरिम
ते॰ स्नुहष्टाप् ॥
स्नुहि : । स्त्री॰ स्नुह्याम् । स्नुह्य
ति । ष्णुह॰ । सर्वधातुभ्यइन् ॥

स्नुही । स्त्री॰ सिहुण्डे ॥ इन्नन्ता
त्स्नुहे : कृदिकारादक्तिनइति
ङीष् ॥
स्नेह : । पुं॰ सौहृदे । प्रेमणि ।
प्रियतायाम् ॥ तामसीयं चित्तवृ
त्तिविशेष : ॰ यस्मिन्सत्यन्यदीये
हानिवृद्धीस्वस्मिन्नारोप्येते । अ
न्यविषय : प्रेमापरपर्याय : स्ने
ह : ॥ यथा । स्मृत्वावियोगजं दु :
खं त्यजस्नेहं प्रियेजने । अतिस्
नेहःपापशङ्की इतिशाकुन्तलेषु
ति । स्नेहयतिप्रीणयतिपुरुषम्
। ष्णिह॰ । पचाद्यच् । स्निह्यन्ति
पुरुषायस्मिन् । अभिकरणार्थे॰
घञ् ॥ घृतादिरसविशेषे ॥ यथा
स्नेहश्चतुर्विध : प्रोक्तोघृतं तैलं
वसातथा । मज्जाच॰ तं पिबेन्म-
र्त्य : किञ्चिदभ्युदितेरवौ ॥ स्थाव
रोजङ्गमश्चैवद्वियोनि : स्नेहउच्य
ते । तिलतैलं स्थावरेषुजङ्गमेषुघृ
तं वरमद्गुति ॥ द्व्याभिश्चतुर्भं
वा॰ यमकश्चित्त्रिवृन्महान् ॥ न्याय
मते॰ चूर्णादिपिण्डीभावहेतौ॰
गुणविशेषे॰ जलमात्रवृत्तौ ॥ ज
लीयपरिमाणावयं नित्योऽन्यवत्त्व
नित्य : । तैलादावस्यप्रकर्षोस्यत
स्तेषांदाहेभवति । यथोक्तं भाषा
परिच्छेदे । स्नेहोजलेऽसौनित्यो
यमनित्योऽवयविन्यसौ । तैलान्त

रेतत्प्रकर्षाद्द्रव्यस्यानुकूलतेति ॥
स्नेहनम् । णिच् । भावे घञ् ॥
स्निग्धतैलेनवा ॥ स्नेहस्तुः स्वमूलत्वमुक्तंगारुडे ११४५ध्याये । य
थस्नेहोभयंतत्रस्नेहोदुःखभाजनम् । स्नेहमूलानिदुःखानि
तस्मिंस्त्यक्तेमहत्सुखमिति ॥ स्नि
ग्धतायाम् ॥ यथा । स्नेहः पक्ष
सु लक्ष्मीर्वाग् जिह्वाग्रेऽत्मवनसं
स्थः । सुतधनसौभाग्ययुताः
स्निग्धैर्नैनिर्भेनारुक्तेरिति ॥

स्नेहः । पुं० व्याधिप्रभेदे ॥ सुहृदि ॥ चन्द्रे ॥ स्निह्यति । णिच् ।
। स्वनूघनग्नषष्क्रिन्स्यः इना० कानि
न० निपातनाद्गुणश्च ॥

स्नेहनम् । न० तैलमर्द्दने । मक्षणे
। अभ्यङ्गे ॥ स्निह्यतेयेन । णि
च० । ल्युट् ॥

स्नेहपात्रम् न० कुत्वाम् । चर्मम
येतैलादिभाण्डे ॥ स्नेहस्यतैलघृ
तादेः पात्रम् ॥

स्नेहप्रियः । पुं० प्रदीपे ॥ त्रि०
तैलादिप्रिये ॥

स्नेहफलः । पुं० तिले । पापघ्ने

स्नेहभूः । पुं० श्लेष्मणि । त्रि०
. स्निग्धभूमौ ॥

स्नेहरङ्गः । पुं० तिले ॥

स्नेहवती । स्त्री० मेदायाम् ॥ स्नेहो
ऽस्यस्याम् । रसादिभ्यश्चेतिमतुप्
। ङीप् ॥

स्नेहाश्रयः । पुं० प्रिये । प्रदीपे ।

स्नेहवस्तिः । स्त्री० अनुवासनवस्तौ
। तैलपिचकारी० इ० भा० ॥
यथा । वस्तिर्द्विधाऽनुवासाख्योनि
रूहश्चततः परः । यः स्नेहैर्दीय
तेसस्यादनुवासननामकः ॥

स्नेहबीजः । पुं० पियालवृक्षे ॥
त्रि० स्नेहकारणे ॥

स्नेहाशः । पुं० प्रदीपे । दीपे ॥

स्नेही । पुं० वयस्ये ॥ त्रि० स्नेह
युक्ते ॥

स्नेहुः । पुं० व्याधिभेदे ॥ चन्द्रे ॥
स्निह्यति । णिच् । मृस्वृस्निही
त्यादिनाउः ॥

स्पन्दः । पुं० स्पन्दने । प्रस्फुरणे ॥
स्पन्दते । स्पदिकिञ्चिच्चलने । प
चाद्यच् ॥

स्पन्दनम् । न० स्पन्दे । किञ्चिच्च
लने ॥

स्पर्द्धकः । त्रि० सपद्र्धाकरे ॥

स्पर्द्धा । स्त्री० सङ्घर्षणे । पराभि
भवेच्छायाम् ॥ स्पर्द्धतेऽनिनंस्त्री
॥ साम्ये ॥ क्रमसमुन्नतौ ॥ स्प
र्द्धसङ्घर्षे ॥ भिदादङ् ॥

स्पर्द्धालुः । त्रि० स्पर्द्धायुक्ते ॥
स्पर्द्धालाति । ला० । मितद्वा
दित्वात् डुः ॥

स्पर्शः । पुं० रुजायाम् ॥ सम्पर्के ॥

सन्तापे । स्पृशति । स्पृशता धनस्पर्शनयोः । पदरुजेत्यच॰ स्पृशउपतापइतिकर्त्तरिघञ् ॥ यथा, स्पर्शनंस्पर्शः भावेघञ् ॥ दाने ॥ स्पर्शके । कादिमावसानवर्गा चरे । उपतापे । रोगविशेषे । स्पर्शके ॥ मणिविशेषे । पारस॰ दु॰भाः॰ प्र॰ ॥ त्वगिन्द्रियविषये । स्पर्शने । त्वगिन्द्रियमात्रयाह्ये गुणविशेषे ॥ सत्रविधः । शीता ष्णानुष्णाशीतभेदात् । पृथिव्यप्तेजोमात्रवृत्तिः । तत्रशीतोजले । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः । रूपरसगन्धस्पर्शाः पृथिव्यांपाकजाः ॰ अनित्याश्च । जलादावपाकजाः ॰ नित्याः अनित्याश्च । नित्यगतानित्याः ॰ अनित्यगताअनित्याः अत्राहुः । कठिनः पार्थिवः स्पर्शः शीतो जलवह्निजो । मृदुर्वायोरिति स्पर्शविशेषाश्चकीर्त्तिताः ॥ स्पर्शसामान्येस्पर्शविशेषाणांलयइति ॥ इन्द्रियैःस्पृश्यन्ते ॰ इतिव्युत्पत्त्या॰ शब्दादिविषयेषु ॥ मात्रा स्पर्श॰ । ॰ ॥ स्पर्शनम् । स्पृश स्पर्शने । अकर्त्तरिचकारकेसंज्ञायामितिघः ॥ पुराणे॰ एकादशविधः स्पर्शउक्तोयथा । उष्णः शीतः सुखोदुःखः स्निग्धोविश दएवच । खरोमृदुश्लक्ष्णश्चलघुर्गुरुरितिक्रमात् ॥ कामिनस्तु । शब्दादीनांपञ्चानांमध्येस्पर्शसुखं वरम् । । आनन्दरसमूलंवैनान्य द्रसिसुखंकिलेत्याहुः ॥

स्पर्शकः । पुं॰ स्पर्शे ॥ त्रि॰ स्पर्शनकर्त्तरि ॥

स्पर्शज्ञानम् । न॰ त्वाचप्रत्यक्षे ॥

स्पर्शनः । पुं॰ श्वसने । वायौ ॥ स्पृशति । स्पृश॰ । बहुलमन्यत्रापीतियुच् ॥ न॰ दाने ॥ स्पर्शे ॥ स्पृशेर्भावेल्युट् ॥

स्पर्शमणिः । पुं॰ स्पर्शे । पारस॰ दु॰ प्र॰ मणौ ।

स्पर्शमणिप्रभवम्॰ । न॰ काञ्चने । स्वर्णे ॥

स्पर्शलज्जा । स्त्री॰ लज्जालुवृक्षे ॥

स्पर्शशुद्धा । स्त्री॰ शतमूल्याम् ॥

स्पर्शस्पन्दः । पुं॰ भेके ॥

स्पर्शा । स्त्री॰ कुटलायां ॥

स्पर्शानन्दा । स्त्री॰ रतिमदायाम् ॥ अप्सरः सु । स्पर्शेन॰ स्पर्शेवाआनन्दोऽस्याः ॥

स्पर्शितः । त्रि॰ प्रतिपादिते ॥

स्पशः । पुं॰ सम्पराये । युद्धे ॥ प्रणिधौ । चरे । हेरिके । अस्पष्ट यथाथथा । यथाहेवथ॰ प्रणिधिरपसर्पश्चरः स्पशः । चारश्च गूढपुरुषइति ॥ स्पशति । स्प

शसपर्शनबन्धनयोः । पचाद्य च् ॥

स्पष्टः । त्रि० स्फुटे । प्रव्यक्ते । उल्बणे । प्रकटे ॥ सपृश्यतेस्म । स्पश० । यमनात्क्तः । वा दान्तेतिसाधुः ॥

स्पष्टीकृतः । त्रि० व्यक्तीकृते ।

स्पाशनः । पुं० स्पर्शे । स्पर्शेनेनगद्यते शेषदृश्यण् ॥

स्पाशितः । त्रि० स्पष्टे । स्पश० । क्तः । वादान्तेतिसाधुः ॥

स्पृक्का । स्त्री० सुगन्धिद्रव्यविशेषे । शाकभेदे । पृक्कायाम् ॥ गुणास्तु । स्पृक्कास्वादीर्हिमाहृद्यातिक्तानिखिलदोषनुत् । कुष्ठकण्डूविषस्वेददाहाश्रीज्वररक्तहृत् ॥ स्पृश्यते । स्पृशस्पर्शने । बाहुलकात् कक् ॥

स्पृशा । स्त्री० भुजङ्गघातिनीवृत्ते । कङ्कालिका० इ० गौ० दे० भा० प्र० ॥

स्पृशी । स्त्री० कण्टकार्याम् । स्पृशति । स्पृश० । इगुपधेतिकः । गौरादिः ॥ *

स्पृश्यः । त्रि० स्पर्शनीये ।

स्पृष्टः । त्रि० कृतस्पर्शे ॥

स्पृष्टास्पृष्टम् । न० परस्परस्पर्शने ॥

स्पृष्टास्पृष्टि । अ० परस्परस्पर्शने । छूआछूति० छुवाछूत० इ० भा० ॥ यथा । तीर्थविवाहेयात्रायांसङ्ग्रामेदेशविप्लवे । नगरग्रामदाहेचस्पृष्टास्पृष्टिनदुष्यति ॥ आपद्यपिचकष्टायांभयेपीडितेतथा । मातापित्रोर्गुरोश्चैवनिदेशेवर्त्तनात्तथा ॥ स्पृष्टास्पृष्टि० इत्यव्ययंक्रियाव्यतीहारे । तथेतिनदुष्यतीत्यर्थः ॥

स्पृष्टिः । स्त्री० स्पर्शे । पृक्तौ ॥ स्पर्शनम् । स्पृशः क्तिन् ॥

स्पृहणीयः । त्रि० श्लाघ्ये । कमनीये । मनोहरे ॥

स्पृहयालुः । त्रि० सस्पृहे । स्पृहाशीले । लोभिनि ॥ स्पृहयति० तच्छीलः । स्पृहेर्ईप्सायाम् । स्पृहिगृहीत्यालुच् ॥

स्पृहा । स्त्री० दोहदे । इच्छायाम् । काङ्क्षायाम् ॥ भिदादेराकृतिगणत्वात्स्पृहेरङ् ॥ धर्माविरोधेनप्राप्तोच्छायाम् ॥ उक्तंचविष्णुपुराणेषुदृष्टान्तेषु० येनकेनाप्युपायेनोपादित्सायाम् ॥ इर्षात्मिकायांचित्तवृत्तौ ॥ सुखानुभवकाले० तज्जातीयसुखस्यकारणं धर्ममननुष्ठायतद्वेवतदाकाङ्क्षारूपायांतामसांचित्तवृत्तौ ॥ भ्रान्तिरेषा ॥ तस्यानिन्दाप्रशंसेयथा । सर्वोत्तमं ब्राह्मणानांतपः कल्पतरुस्तथा । तपस्याकामधेनुश्चतस्मात्तपसिस्पृहा ॥ ऐश्वर्यंचविषयाणाङ्क्षाविर्ज्ञेचतथाविमाम् । शूद्राणांविप्रसेवा

पूर्णेन्दुकरसंस्पर्शादमृतं स्रवति क्षणात्। चन्द्रकान्तं तदाख्यातं दुर्लभं तत्कलौ युगे ॥ अशोकपल्लवच्छायं दाडिमीबीजसन्निभम्। विन्ध्याटवितटे देशे जायते मन्दकान्तिकम् ॥ सिंहले जायते कृष्णमाकरे गन्धनीलके। पद्मरागभवे स्थाने द्विविधं स्फटिकं भवेत् ॥ अत्यन्तनिर्मलं स्वच्छं सर्वतो ज्वलं शुचि। ज्योतिर्ज्वलनमाश्लिष्टं सुक्ताज्योतीरसं द्विज ॥ तदेवलोहिताकारं राजावर्त्तं मुदाहृतम्। आनीलं तत्तु पापाणं प्रोक्तं राजमयं शुभम्। ब्रह्मसूत्रमयं यत्तु प्रोक्तं ब्रह्ममयं द्विजैः। इति स्फटिकपरीक्षा। इति भोजराजकृतयुक्तिकल्पतरुः ॥

स्फटिया। स्त्री॰ स्फट्याम्। रङ्गदायाम्। स्फटिकायाम्। फटकरी॰ इ॰ भा॰ प्र॰ पाषाणे ॥

स्फटिकाचलः। पुं॰ स्फटिकोऽद्रिरिति। कैलासे ॥

स्फटिकात्मा। पुं॰ स्फटिके ॥

स्फटिकाभ्रः। पुं॰ कर्पूरे ॥

स्फटिकारिः। स्त्री॰ स्फटिकायाम् ॥

स्फटिकारिका। ) स्त्री॰ स्फटिकायाम् ॥
स्फटिकारी। )

स्फटी। स्त्री॰ स्फटिकायाम् ॥

स्फुरणम्। न॰ स्फुरणे। स्फारस्फुरण

इत्यकारोपधं केचित्पठन्ति। स्वार्थे ण्यन्तादस्माद्युच् ॥

स्फटिकम् न॰ स्फाटिकोपले ॥

स्फाटिका। स्त्री॰ स्फटिकोपले। फटकरीतिख्याते पाषाणे। अस्या गुणा यथा। स्फाटिका तु कषायोष्णा वातपित्तकफव्रणान्। निहन्ति श्वित्रवीसर्पान् योनिसङ्कोचकारिणीति ॥

स्फाटिकोपलः। पुं॰ स्फटिकायाम्। स्फटिके ॥

स्फाटिकोऽद्रिभृत्। पुं॰ कैलासे ॥

स्फातिः। स्त्री॰ वृद्धौ। स्फायनम्। स्फायी वृद्धौ। क्तिन् ॥ * ॥

स्फायितः। त्रि॰ वृद्धिकृते ॥

स्फारः। पुं॰ विकटे ॥ करकादे र्बुद्बुदे ॥ त्रि॰ विपुले। विशाले ॥ यथा। तस्मिंश्छिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः। इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ स्फायते। स्फायी॰। स्फायितञ्चीति रक् ॥ यद्वा। स्फुरणम्। स्फुरस्खलने। घञ्। स्फुरतिस्फुलत्योर्घञीत्यत्वम् ॥

स्फिग्घातनकः पुं॰ कट्फले ॥

स्फगदेशः। पुं॰ बालधिमूलप्रदेशे ॥

स्फिक्। स्त्री॰ कटिप्रोथे। कटिदेशस्थमांसपिण्डे। स्फायते। स्फायी॰। बाहुलकात् क्विप्प्रत्ययः ॥

स्फेटति । स्फिटहिंसायाम् । क्विप् । स्फिगपूतेतिनिपातनात्॰टस्य चइतिमुकुट : ॥

स्फिर : । त्रि॰ प्रचुरे ॥ स्फायते । स्फायी॰ । अजिरशिशिरेतिकिरच्टिलोपश्च ॥

स्फीत : । त्रि॰ समृद्धे ॥ विकसिते ॥ स्फायतेस्म । स्फायी॰ । क्त : । स्फाय : स्फीनिष्ठायाम् ॥ कथंसफीतिकामइतिस्फीतमाचष्टे॰ इतिण्यंतादचइ : । अल्लोपणिलोपौ ॥

स्फुट् । स्त्री॰ इर्वारौ ॥ पोटस्फोटे । स्फुटति । स्फुट॰ । क्विप् ॥

स्फुट : । त्रि॰ व्यक्ते । स्पष्टे ॥ सच घटादीनांविषयेन्द्रियसन्निकर्षजन्यप्रतिहतायांप्रमाचभेदाङ्गवतीति प्रसिद्धमेव । प्रफुल्ले ॥ व्याप्ते ॥ सिते । शुक्ले । स्फुटति । स्फुटविकसने । इगुपधेतिक : ॥ स्फुटिते । भिन्ने ॥

स्फुटता । स्त्री॰ विशदार्थतायाम् ॥

स्फुटनम् । न॰ विदरे । विदरणे ॥ स्फुट॰ । कुटादि॰ । ल्युट् । विकसने ॥

स्फुटबन्धनी । स्त्री॰ ज्योतिष्मत्याम् ॥ पारावताङ्घ्राम् ॥

स्फुटल : । पुं॰ तुम्बुरुवृक्षे । प्लक्षे ॥

स्फुटा । स्त्री॰ फणायाम् ॥ स्फुट॰ । क : । टाप् ॥

स्फुटि : । स्त्री॰ पादस्फोटामये । विपादिकायाम् ॥ निर्भिन्नकर्कटीफले । इर्वारुशुक्तिकायाम् । स्फुट॰ इ॰ भा॰ प्र॰ ॥

स्फुटित : । त्रि॰ विकचे । विकसिते ॥ दीर्णे । भिन्ने ॥ अस्फुटत् । स्फुट॰ । क्त : ॥

स्फुर : । पुं॰ फलके ॥ स्फुरणे ॥

स्फुरणम् । न॰ स्फरणे । फरकना ॰ इतिभाषा ॥ यथा॰ अङ्गस्फुरणमेवस्फुरणम् ॥ किञ्चिच्चलने ॥ भाने ॥ कम्पने ॥ स्फुरस्फुरणे सञ्चलनेच । कुटादि : । ल्युट् ॥

स्फुरन् । त्रि॰ कम्पनयुक्ते ॥ दीप्यमाने ॥

स्फुरितम् । न॰ स्फुरणे ॥ त्रि॰ मनस : कल्पनायाम् ॥ उल्लसिते ॥ उज्ज्वले ॥ प्रतिफलिते ॥

स्फुर्ज्क : । पुं॰ कालस्कन्धे । तिन्दुके ॥

स्फुर्जथु : । पुं॰ वज्रपतनजनितध्वनौ ॥ स्फूर्जथौ ।

स्फुलम् । न॰ तम्बू॰ इ॰ प्र॰ वस्त्रवेश्मनि ॥

स्फुलिङ्ग : । त्रि॰ अग्निकणे । चिनगारी॰ इ॰ भा॰ ॥ स्फु॰ इत्यनुकरणशब्द : । स्फुना॰ फुत्कारेण॰

जिङ्गति॰ गच्छति । लिगिगतौ । पचाद्यच् ॥

स्फुलिङ्गा । स्त्री॰ अग्निकणजातौ ॥ जातावपिनङीष् । अजादिषुपाठात्॰ टाप् ॥

स्फुलिङ्गनी । स्त्री॰ अग्नेर्जिह्वाविशेषे ॥

स्फूत्कार : । पुं॰ फूत्कारे ॥

स्फूर्जक : । पुं॰ तिन्दुकवृक्षे । तेटू॰ दू॰ भा॰ प्र॰ ॥ स्फूर्जति । टुओस्फूर्जावज्रनिर्घोषे ॥ ण्वुल् ॥

स्फूर्जथु : । पुं॰ वज्रनिर्घोषे । वज्रपातजध्वनौ ॥ स्फूर्जनम् । टुओस्फूर्जा॰ । ट्वितोथुच् । मेघनादे । तगडलौये ॥

स्फूर्जन : । पुं॰ तिन्दुके ॥

स्फूर्त्ति : । स्त्री॰ स्फुरणे ॥

स्फूर्त्तिमान् । त्रि॰ पाशुपते ॥ यथा । पारमार्थिक : पाशुपतविद्रूप : स्फूर्त्तिमानमत : । इतिच काण्डशेष : । स्फूर्त्तिविशिष्टे ।

स्फेमा । पुं॰ स्फिरत्वे । प्रचुरतायाम् ॥ स्फिरस्यभाव : । पृथ्वादित्वादिमनिच् । प्रियस्थिरेत्यादिनास्फादेश : ॥

स्फेय : । त्रि॰ प्रचुरतरे । स्फिरतरे ॥ द्वयोरनयोरतिशयेनस्फिरम् । ईयसुन् । प्रियस्थिरेतिस्फादेश : ॥

स्फेरम् । त्रि॰ भूयिष्ठे ॥

स्फेष्ठ : । त्रि॰ अतिशये । भूयिष्ठे ॥ अयमेषामतिशयेनस्फिर : । इष्ठन् । प्रियस्थिरेतिसाधु : ॥

स्फेयकृत : । पुं॰ स्फाकृतेपच्ये अण् ॥

स्फोट : । पुं॰ स्फोटके । विस्फोटे । पिडके । शब्दव्यापारे । स्फुट्यते॰ व्यज्यतेवर्णै :॰ स्फुटत्यर्थोयस्मादितिवा । स्फुटविकसने । घञ्॰ अज्वा ॥

स्फोटक : । पुं॰ फोडाइतिख्याते॰ रोगे । पिडके । स्फोटति । स्फुटिर्विशरणे । ण्वुल् ॥

स्फोटनम् । न॰ विदारणे ॥

स्फोटनी । स्त्री॰ मणिशङ्खादिवेधोपकरणे । आस्फोटन्याम् । स्फोट्यतेऽनया । स्फुटभेदनेचुरादि : । करणेल्युट् ॥

स्फोटबीज : । ) स्फोटबीजक : । ) पुं॰ वातारीभल्लातके ॥

स्फोटायन : । पुं॰ मुनिविशेषे । कक्षीवति : स्फोटप्रतिपादनपरे॰ वैयाकरणे । स्फोटोऽयनं परायणंयस्यस : ॥

स्फोटिका । स्त्री॰ खञ्जनिकायाम् । छापुनिकायां ॥

स्फ्य : । पुं॰ यज्ञाङ्गभूते॰ खड्ग

स्मरवीथिका । स्त्री० वेश्यायाम् ॥
स्मरवृद्धिः । स्त्री० कामवृद्ध्याख्यौषधौ । मदनायुधे ॥ स्मरस्य वृद्धिर्यया ॥
स्मरसखः । पुं० वसन्ते ॥ कामोद्दीपकत्वात् ॥ स्मरस्य सखा । टच ॥
स्मरस्तः । त्रि० कामोद्दीपके ॥ सहते । षह० । पचाद्यच् । स्मरस्य सहः ।
स्मरस्तम्भः । पुं० उपस्थे । मेढ्रे ॥ स्मरस्य स्तम्भ इव स्तम्भः ॥
स्मरस्मर्य्यः । पुं० गर्दभे ।
स्मरहरः । पुं० शिवे । स्मरं हरति । हरतेरनुद्यमनेऽच् ।
स्मरागारम् । न० भगे ॥
स्मराङ्कुशः । पुं० कामुके । नखे ।
स्मराम्रः । पुं० राजाम्रे ॥
स्मरासवः । पुं० लालायाम् । मुखसुरे । मद्यप्रभेदे ॥
स्मरेष्टकः । पुं० अर्श्मे ।
स्मर्त्तव्यः । त्रि० स्मरणीये ॥ यथा । स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातुचित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥
स्याय । पुं० गूढहसिते ॥
स्मारकः । त्रि० स्मरणकारके ॥
स्मार्त्तः । त्रि० स्मृतिशास्त्रविदि ॥ स्मृतिविहिते ॥ स्मृतिसम्बन्धिनि ॥ न० स्मृतिशास्त्रोक्तकर्मणि ॥ यथा । श्रौतं कर्म स्वयं कुर्यादन्योऽपि स्मार्त्तमाचरेत् । अशक्तौ श्रौतमप्यन्यः कुर्यादाचारमन्ततः ॥
स्मार्त्तयज्ञः । पुं० यज्ञविशेषे ॥ मचतुर्विधो यथा । देवयज्ञः पितृयज्ञो भूतयज्ञस्तथैव च । मनुष्ययज्ञ इत्येवं स्मार्त्तयज्ञश्चतुर्विधः ॥
स्मितम् । न० ईषद्धास्ये ॥ तल्लक्षणं यथा । ईषद्विकसितैर्दन्तैः कटाक्षैः सौष्ठवान्वितम् अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेदिति ॥ स्मिङ् ईषद्धसने । भावे क्तः ॥ त्रि० विकसिते ॥
स्मितदृक् । त्रि० स्मेराक्षे ॥
स्मृतः । त्रि० स्मृतिविषये । कृतस्मरणे ॥ यथा । आह्निकेऽपि तत्कार्य्यं घमासश्चान्द्रमसः स्मृतः । विभाद्यदीस्मृतः सौरोयज्ञादौ सावनो मतः ॥
स्मृतिः । स्त्री० धर्मसंहितायाम् । मन्वादिप्रणीतधर्मशास्त्रे ॥ स्मर्य्यते वेदधर्मोऽनया । स्मृतिचिन्तायाम् । स्त्रियाम् क्तिन् । वेदार्थस्मरणपूर्वकं रचितत्वात् ॥ शास्त्रमात्रे । स्मरन्ति वेदमनयाऽऽ इति स्मृतिः ॥ महर्षिभिर्वेदार्थस्मरणात् स्मृतिः । तद्योगाद्ग्रन्थोऽपि स्मृतिः ॥ स्मरणे । तात्त्व्यानुसन्धा

ने ॥ धैर्य्ये ॥ इच्छायाम् ॥ अनुभूतविषयज्ञाने ॥ स्वाश्रयाश्रितक्रियाजन्यसंस्कारजन्यज्ञानं स्मृतिरिति रघुमञ्जरी ॥ शास्त्राचार्य्योपदिष्टार्थानुसन्धाने ॥ अनुभवजन्यसंस्कारजन्यज्ञाने ॥ यथा । विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता । अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधेति भाषापरिच्छेदः ॥ सा स्मृतिर्द्विधा । यथार्था च अयथार्था च । तत्र प्रमाजन्या यथार्था अप्रमाजन्याऽयथार्था ॥ अनुभूतविषयाऽसम्प्रमोषप्रत्यये ॥ पूर्व्वानुभवसंस्कारजज्ञाने । चिरानुभूतार्थस्मरणशक्तौ ॥ एतज्जन्मनि पूर्व्वानुभूतार्थविषयायां वृत्तौ ॥ योगिनां जन्मान्तरानुभूतार्थविषयापि स्मृतिर्भवति ॥ अनुभूतप्रियादीनामर्थानां चिन्तनं स्मृतिः । तत्र कम्पभ्रूविक्षेपवाक्यानि : श्वसितादयः ॥ तत्पर्य्यायाः । चिन्ता । आध्यानम् । चिन्तिया । ध्यानम् । स्मरणम् । चर्च्चेति ॥ स्मरणम् स्मृ ध्याने । क्तिन् ॥

स्मृतिमान् । त्रि० पूर्व्वानुभूतार्थाविस्मरणशीले ॥ स्मृतिविशिष्टे ॥ स्मृतिरस्त्यस्यास्मिन् वा । मतुप् ॥

स्मृतिविभ्रमः । पुं० स्मृतेर्विचलने ॥

स्मृतिविरुद्धः । त्रि० धर्म्मशास्त्रविपरीते ॥ यथा कूर्म्मपुराणे हिमालयं प्रति देवीवाक्यम् । यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि च । श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां तु तामसी ॥ करालभैरवञ्चैव यामलं वाममार्हतम् । एवंविधानि चान्यानि मोहनार्थानि तानि वै ॥ मया सृष्टानि चान्यानि मोहायैषां भवार्णवे ॥ इति ॥ जैनप्रभृतिकारीणि कानिचित्कथितानि चैतमप्यानिवर्णितम् ॥

स्मृतिशास्त्रम् । न० धर्म्मसंहितायाम् ॥

स्मृतिहेतुः । पुं० स्मरणबीजे । भावनायाम् । संस्कारे । भावनायाम् ॥

स्मेरः । पुं० प्रकाशे । त्रि० प्रकाशयुक्ते ॥ ईषद्धसनशीले ॥ अयं तेन व्याख्यातः । ष्मिङ् ईषद्धसने । नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥

स्मेराक्षः । त्रि० स्मितदृष्टि ॥

स्यदः । पुं० जवे । वेगे ॥ स्रवेगगतिवचनेऽस्य प्रयोगः । स्यन्दतेऽनेन । स्यन्दनं वा स्यन्दू प्रस्रवणे । स्यदो जवइति घञन्तो निपातितः ॥ वेगाख्यगुणे ॥

स्यन्दः । पुं० स्यन्दने ॥

स्यन्दनः । पुं० तिनिशवृक्षे । नेमि

नि । रथद्रौ । अतिमुक्तके ॥ अतीतकाल्य ऽर्थे हृदे ॥ न० स्नुतौ । घरणे ॥ नीरे । सलिले ॥ पुं० न० रथे ॥ त्रि० स्रवणे ॥ स्यन्दते स्यन्दू० । बहुलमन्यत्रापीतियुच् । चलनशब्दार्थादकर्मकाद्युच्० इतिशायुच् ॥ यद्वा । स्यन्दते० प्रद्रवति । स्यन्दू० । नन्द्यादित्वाल्ल्युः ॥

स्यन्दनद्रुम : । पुं० तिनिशवृक्षे ॥

स्यन्दनारोह : । पुं० रथिनि । रथारूढेयोद्धरि ॥ स्यन्दनमारोहयति । रुह० । कर्मण्यण् ॥

स्यन्दनाह्वय : । पुं० तिमिशे ॥ तिन्दुके ॥ स्यन्दनमाह्वयेयस्य यस:

स्यन्दनि : । पुं० तिनिशद्रुमे ॥

स्यन्दनिका । स्त्री० क्षुद्रनद्याम् ॥

स्यन्दनी । स्त्री० लालायाम् । मूत्रनाड्याम् ॥

स्यन्दी । त्रि० स्रवणशीले ॥

स्यन्दनी । स्त्री० लालायाम् ॥ अवश्यंस्यन्दते । स्यन्दू० । आवश्यकेतिणिनि : ॥

स्यन्न : । त्रि० स्नुतेजलादौ ॥ स्यन्दते स्म । स्यन्दू० । क्त : । रदाभ्यामितिणत्वम् ॥

स्यन्नम् । त्रि० स्रुते : रीणे ॥

स्यमन्तक: । पुं० श्रीकृष्णाखहस्तमणौ । मणि : स्यमन्तकोहस्ते भुजमध्येतुकौस्तुभइतिहेमचन्द्रः ॥ सौरभाद्रपदीयचतुर्थ्यां चन्द्रदर्शनेस्यमन्तकोपाख्यानंश्रुत्वावक्ष्यमाणमन्त्रेणाभिमन्त्रितंजलंपिबेत् । मन्त्रस्तु । सिंह : प्रसेनमवधीत्सिंहोजाम्बवताहत : । सुकुमारकमारोदीस्तवह्येषस्यमन्तकइति ॥

स्यमीक : । पुं० मुनिविशेषे ॥ पादपे । वृक्षे ॥ नाके । वल्मीके ॥ अमति । स्यमुशब्दे । स्यमेरीटचेतिकन् ॥

स्यमीका । स्त्री० नीलिकायाम् ॥

स्याद्वादी । पुं० जिने ॥

स्याल : । पुं० पत्नीभ्रातरि । श्यालि ॥ स्यामयति । स्यमवितर्के चुरादि : । अच् पृषोदरादि : ॥

स्यूत : । पुं० प्रसेवे । वस्त्रगणादिनिर्मितधैलाद्रतिख्याते ॥ त्रि० ऊते । प्रोते । वुना० इ० भा० ॥ क्रतमोत्तमे । सीव्यतिस्म । षिवु तन्तुसन्ताने । क्त: च्छ्वोरित्यूठ् । यणादेश : ॥

स्यूति : । स्त्री० सूच्यादिनावस्त्रादिसीवने । सेवने । सीवना० इ० भा० प्र० ॥ षिवे : क्तिन् : ऊठ् । सन्ततौ ॥

स्यून : । पुं० किरणे ॥ सूर्ये ॥ धौतकटे ॥ सीव्यतेऽनेनवा । षिवु० । सिविष्ट्यूचेतिन : । दीर्घ

च्छवि : पीतवासाश्चैर्मूर्त्तिराव स्तांजयायोरसिस्रग्विणो ॥ माला स्याम् ॥

स्रग्वी । पुं॰ भूततन्त्रावरूपावैज यन्त्याख्यांस्रजं बिभ्राणे हरौ ॥ त्रि॰ कुसुममालाधारिणि ॥ स्रगस्त्य स्तिऽस्य । अस्मायामेधास्रजोविनि रितिविनिः ॥

स्रक्, ग् । स्त्री॰ मूर्द्धन्यस्तपुष्प दामनि ॥ माल्ये ॥ सृज्यते॰ सृजासिवा । सृजविसर्गे । ऋत्वि गित्यादिना॰ कर्म्मणि॰ कर्त्तरि वाक्विन्॰ चमागमश्च । कुत्वम् ॥ अतिशक्वरीच्छन्दः १५ प्रभेदे ; सप्तच्छणं यथा । सगियमपिचर सनवरविलयति : । यथा । च यसवृधारि॰ रुचिरतरगुणमयोम दिमवसतिरनपगतपरिमला । स गिवनिरसविलरुनुमरसासुमुखि मुदितदनुजदलनहृदये ॥

स्रज्वा पुं॰ प्रजापतौ ॥ पटसङ्घे ॥ रज्जौ ॥

स्रव : । पुं॰ स्रवे । स्रवणम् । सुगतौ । ऋदोरप् ॥ वारिप्रवाहे । यथा हेमचन्द्रः । निर्झरस्तुभरः स रिः । उत्सः स्रवः प्रस्रवण मिति ॥

स्रवणम् । न॰ सच्छिद्रहते : शनैः शनैर्जलनिर्गमे । क्षरणे ॥ स्रु॰ । ल्युट् ॥ मूत्रे ॥

स्रवन्तोया । स्त्री॰ रुदन्त्यां ॥

स्रवद्गर्भा । स्त्री॰ पतितगर्भायाङ्गवि । अवतोकायाम् ॥ पतितगर्भाया म् ॥ स्रवन्गर्भोयस्याः ॥

स्रवद्रङ्ग : । पुं॰ पण्यस्थ्यौ । हाट॰ व जार॰ इ॰ भा॰ प्र॰ ॥

स्रवन्ती । स्त्री॰ नद्याम् सिरिति । नि म्नगायाम् ॥ स्रवति । स्रु॰ । ल टः शतृ । उगितश्चेतिङीप् । श प्श्यनोरितिनुम् ॥ गुल्मस्थामे ॥ औषधिभेदे ॥ जरस्याम् ॥

स्रवा । स्त्री॰ मूर्वायाम् । मुरहरा॰ इ॰ भा॰ प्र ॥ स्रवति । स्रु॰ । अच् । गुणावादेशौ । टाप् । जी वन्त्यामोषधौ ॥ जीवन्याम् ॥

स्रष्टा । पुं॰ प्रजापतौ । निर्म्मातरि । वेधसि । शम्भौ । शिवे ॥ विष्णौ ॥ सृजति । सृजविसर्गे । तृच् । सृजिदृशोरित्यम् ॥

स्रस्त : । त्रि॰ च्युते ॥ स्रस्यतेस्म । स्रंसुध्वंसुसने । गत्यर्थाकर्म्मकेति कर्त्तरिक्तः ॥

स्रस्तकम् । न॰ च्युते ॥

स्रस्तर : पुं॰ न॰ वीरचक टे । पल्ल वादिशय्ये ॥ पुं॰ कुशमुष्टौ ॥

स्राक् । अ॰ द्रुते । झटित्यर्थे ॥ स्रे पाके । सम्पदादित्वात्क्विप् । स्रा मकति । वक्रकुटिलायामृगतौ ।

क्विप्‌ ॥

स्राम : । त्रि॰ एकाङ्गे ॥ यस्य सदा च सु नासिकायामुर्वतितस्मिन्‌ ॥

स्राव : । पुं॰ स्रवणे ॥ आगर्भाधाना च्चतुर्थमासपर्यन्तं गर्भस्यच्यवणे ॥

स्रावकम्‌ । न॰ मरीचे ॥

स्रावणी । स्त्री॰ ऋद्धिवृक्षे ॥

स्रावित : । त्रि॰ गालिते ॥

स्रुग्दारु । न॰ व्याघ्रपादवृक्षे । विकङ्कते ॥

स्रुघ्न : । पुं॰ सागराख्ये॰ नगरे । तद्युक्तदेशे ॥ मथुरायामिव॰ मथुरावत्‌ स्रुघ्नप्राकारादिति कौमुदी ॥

स्रुघ्नी । स्त्री॰ सर्जिकाक्षारे ॥

स्रुक्‌॰ग्‌ । स्त्री॰ खादिरेन्धनपात्रविशेषे ॥ तद्वंद्दा यथा । ध्रुवोपभृज्जुहूर्नातु स्रुवोभेदा : स्रुच : स्त्रियष्टु त्यमर : । तत्र वटपत्राकृतिर्ध्रुवा । उपभृच्चक्राकारा । जुहूरर्द्धचन्द्राकृति : । वैकङ्कतीध्रुवाप्रोक्ताश्वत्थीचोपभृन्मता । जुहू : पलाशकाष्ठखदिरस्रुवोमत : ॥ स्रुशब्दिकन्तु यज्ञादौपात्रमित्यभिधीयते । स्रुव : पुमानेकहस्तोवा हुमात्रास्रुगीरिता । तद्विशेषा : शराषाया : स्त्रीजुहूरुपभृद्ध्रुवेतिशब्दरत्नावली ॥ स्रवतिघृतादिकम्‌ । स्रुस्रवणेस्रुव : कर्त्तरि क्विप्‌ चेतिचिक्‌ प्रत्यय : कुकारश्चान्तादेशा

र्थं : । अद्भुत्‌ । कुत्सम्‌ ॥

स्रुत : । त्रि॰ क्षरितेजलादौ । भ्रे । रीधे । च्युते ॥ स्रूयतेस्म । स्रुगतौ । क्त :

स्रुता । स्त्री॰ हिङ्गुपत्र्याम्‌ ॥

स्रुव : । पुं॰ यज्ञपात्रविशेषे । स्रुचि ॥ स्रवति । स्रु॰ । अच्‌ । संज्ञापूर्वकत्वान्नगुण : । उत्त्वङ्‌ ॥ यद्वा । स्रवतिघृतादिकम्‌ । स्रुवम्रवणे । स्रुव : क : ॥

स्रुवा । स्त्री॰ होमपात्रान्तरे । स्रुचि ॥ मूर्वायाम्‌ ॥ शल्लक्याम्‌ ॥ टाप्‌ ।

स्रुवावृक्ष : । पुं॰ विकङ्कते । सा टुकण्टके ॥ स्रुवायावृक्ष : ॥

स्रू : । स्त्री॰ होमपात्रविशेषे । यज्ञोपकरणे ॥ स्रवे । निर्झरे । स्रवत्यस्मात्‌ घृतादिकम्‌ । स्रुस्रवणे । क्विब्‌वचिप्रच्छिश्रिस्रुद्रुकटप्रज्वांदीर्घोऽसम्प्रसारणञ्चेतिक्विब्‌दीर्घौ ।

स्रोतम्‌ । न॰ स्रोतसि ॥

स्रोतईश : । पुं॰ समुद्रे ॥ स्रोतसामीश : ॥

स्रोत : । न॰ स्वतोऽम्बुसरणे ॥ प्रवाहे । वेगेनजलगतौ ॥ इन्द्रिये ॥ शरीरस्थनवच्छिद्रेषु ॥ स्रवति । स्रुगतौ । स्रुरीभ्यांतुट्‌ चेत्यसुन्‌॰ तुडागमश्च ॥

स्रोतस्वती । स्त्री॰ नदीमात्रे सरि

ति । दीपवत्याम् । स्रोतांसिसन्त्य
स्या: । तदस्यास्तीतिमतुप् । मा
दुपधायाश्चेतिवत्वम् । उगितश्चे
तिङीप् ॥

स्रोतस्विनी । स्त्री॰ सरिति । स्रो
तांसिसन्त्यस्या: । अस्मायामेधा
स्रजोविनि: । नान्तत्वान्ङीप् ॥

स्रोतोञ्जनम् । न॰ सौवीरे । कापो
ताञ्जने । यामुने । अञ्जनञ्च
त्यादयोयथा । तत्रस्रोतोञ्जनंकृ
ष्णंसौवीरंश्वेतमीरितम् । वल्मी
कशिखराकारंभिन्नमञ्जनसन्निभम्
। घृष्टन्तुगैरिकाकारमेतत्स्रोतो
ञ्जनंस्मृतम् । स्रोतोञ्जनसमंज्ञेयं
सौवीरंतत्तुपाण्डुरम् । स्रोतो
ञ्जनंस्मृतंस्वादुचक्षुष्यंकफपित्तनुत्
। कषायंलेखनंस्निग्धंग्राहिच्छर्दि
विषापहम् । हिध्मक्षयास्रहृच्छो
तसेवनीयंसदाबुधै: । स्रोतोञ्ज
नगुणा: सर्वेसौवीरेपिमताबुधै:
॥ किन्तुश्रेष्ठंरञ्जनयोश्रेष्ठंस्रोतोञ्ज
नंमतम् । इतिभावप्रकाश:
स्रोतोञ्जनन्तुतद्विद्यादञ्जना-
भंयदञ्जनमितिमदनपाल:॥ अपि
च । स्रोतोञ्जनंमतंश्रेष्ठंविशुद्धंसि
न्धुसम्भवम् । दृष्टे: कण्डूमलघ्न
रदाहक्लेदरुजापहम् । अक्ष्णोरु
पावहंसेवसहतेमारुतातपौ । नेत्र
रोगानजायन्तेतस्मादञ्जनमाचरेत्
स्रोतोञ्जनंकृष्णमुत्तमेतिप्रसिद्धम् ।
अञ्जतिनयनमनेनचक्षुष्यत्वात् ।
अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु । क
रणेल्युट् । स्रोतसोऽञ्जनंस्रोतो
ञ्जनम् ॥

स्रोतोभेदक: । पुं॰ प्रवहज्जलानांसे
तुभेदादिनादेशान्तरनेतरि ।

स्रोतोवहा । स्त्री॰ नद्याम् ॥

स्व:सिन्धु: । स्त्री॰ गङ्गायाम् ॥

स्व: । पुं॰ आत्मनि ॥ ज्ञातौ ॥ पुं॰
न॰ धने ॥ न॰ द्वितीयभवने ।
त्रि॰ आत्मीये । स्वनति । स्वनश
ब्दे अन्येभ्योपीतिड: ॥

स्वक: । त्रि॰ स्वीये । आत्मीये ॥

स्वकम्पन: । पुं॰ वायौ ॥

स्वकर्मकृत् । त्रि॰ निजकार्यक
र्त्तरि ॥

स्वकीय: । त्रि॰ आत्मसम्बन्धिनि ।
स्वीये । निजे । आत्मीये ॥ स्वस्ये
दम् । गहादिषुस्वस्यचेतिछ: कु
गागमश्च ॥

स्वकुलक्षय: । पुं॰ मत्स्ये ॥ निजवं
शनाशे ॥ त्रि॰ तत्कर्त्तरि॰ तद्विशि
ष्टे च ॥

स्वगतम् । न॰ मनोगते ॥ त्रि॰ आ
त्मप्राप्ते ॥ आत्मनोगते ॥

स्वगुप्ता । स्त्री॰ आत्मगुप्तायाम् । शू
कशिम्ब्याम् । लज्जालौ ॥

स्वगृह: । पुं॰ कलिङ्गारपक्षिणि ॥

वफलं वय या विभेति भागवतम् ॥ पित्र्यदानमन्त्रे । देवहविर्दाने । यथा स्वाहादेवहविर्दाने श्रौषट् वौषट् वषट् स्वधेत्यमरः । अत्र पितरो देवता इति स्मृतेस्त्रि पि दैवाः ॥ स्वमात्मानं शरीरं पोषयतीति स्वधा । स्वधा पितॄणामन्नमिति श्रुतिः ॥ देवपितृहविर्दाने । स्वद्यतेऽनेन । ष्वद आस्वादने । आप्रत्ययः । पृषोदरादित्वाद्दस्य धः ॥

स्वधा । स्त्री॰ पितृदाने ॥ स्वधाऽस्त्यस्याम् । अच् । टाप् । पितृपत्न्याम् ॥ स्वाभूधत्ते इति व्युत्पत्तेः । नमः स्वधायै स्वाहायै॰ इति प्रयोगश्च ॥

स्वधाप्रियः । पुं॰ कृष्णतिले ॥

स्वधाभुक् । पुं॰ पितृगणे । दिव्यपितरि । देवे ॥

स्वधाम । न॰ स्वरूपविस्फुरणे ॥

स्वधायी पुं॰ पितृषु । स्वधागमनशीलः । सुप्यजातौ णिनिस्ताच्छील्ये ॥

स्वधावाचनम् । न॰ श्राद्धयोग्ये कालविशेषे ॥ यथा । कर्ममुहूर्तात् कुतपाद्यनुमुहूर्त्तचतुष्टयम् । मुहूर्त्तपञ्चकञ्चैव स्वधावाचनमिष्यते ॥ कुतपादूर्द्ध्वं मुहूर्त्तचतुष्टयं॰ मुहूर्त्तपञ्चकमकुतपात्पूर्वम्॰ पर्यादिकं मुहूर्त्तं कुतपएव । स्वधाबोच्यतेऽत्र । वच॰ । अधिकरणे ल्युट् ॥

स्वधितिः । पुं॰ स्त्री॰ कुठारे । यथा । द्वयोः कुठारः स्वधितिः परशुश्च परश्वध इत्यमरः ॥ स्वं धियति । धिधारणे । क्तिच् ॥ छेदनीयमांसस्य शस्त्रविशेषे ॥

स्वनः । पुं॰ शब्दे । निनादे । निनदे । ध्वनौ । स्वननम् । स्वनशब्दे । स्वनहसोर्वेति पक्षेऽप् ॥

स्वनचक्रः । पुं॰ रतिबन्धविशेषे । यथा । धृत्वा बाहू तथा कण्ठं पाद-तो पि शिरः स्थितः । गूढस्वकामयेत् कामी स्वनचक्र प्रकीर्त्तितमिति रतिमञ्जरी ।

स्वनितम् । त्रि॰ ध्वनिते ॥ न॰ गर्ज्जिते । मेघशब्दे ॥ स्वन्यतेस्म । स्वन॰ । क्तः ।

स्वनिताह्वयः । पुं॰ तण्डुलीयशाके । अल्पमारिषे ।

स्वनुष्ठितः । त्रि॰ सर्वाङ्गोपसंहारेण सम्पादिते ॥

स्वभेत्सहः । पुं॰ गण्डके ॥

स्वन्नः । त्रि॰ अस्ततारकाले । शुभोदर्के ।

स्वपन् । त्रि॰ निद्रामनुभवति ॥ स्वपिति । ञिष्वप॰ । लटः शतादेशः ॥

स्वपतिः । पुं॰ आत्मनि । निजभर्त्तरि ॥

स्वपनम् । न॰ निद्रायाम् । ञिष्वप् शये । ल्युट् ॥

स्वपण्डा । स्त्री॰ पिण्डखर्ज्जूर्याम् ॥

स्वप्नः । पुं॰ निद्रायाम् । शयने । स्वापे ॥ प्रसुप्तस्य विज्ञाने । जाग्रद्वासनामये । जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्न इत्युच्यते स च ममः करणस्यार्द्रविकाशे यथा । जाग्रदवस्थायां यद् दृष्टं यच्छ्रुतं तज्जनितवासनया निद्रासमये यः प्रपञ्चो यत्र प्रतीयते सा स्वप्नावस्थेति वासुदेवमनस्वती ॥ तथा च । बाह्येषु करणेषूपसंहृतेषु जागरितवासनानुसारेण मनसस्तदर्थाभासाकारावभासनं स्वप्नशब्दितम् ॥ यथाहुः । इन्द्रियाणामुपरमे मनोऽनुपरतं यदि । सेवते विषयानेव तद्विद्यात् स्वप्नदर्शनमिति ; स च सप्तविधो यथा । दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः कल्पितस्तथा ; भाविको दोषजश्चेति स्वप्नः सप्तविधः स्मृत इति ॥ स्वप्नजाग्रदादिकल्पमयात्मश्च विध्यमाह । स्पष्टस्मृतिरथास्पष्टस्मृतिरस्मृतिरित्यमी । स्वप्नभेदाः । स्वप्नमध्ये जाग्रत्स्वप्नसुषुप्तय इति ॥ सन्ध्यं तृतीयं स्वप्नस्थानमिति श्रुतिः ॥ स्वपित्यनेन । ञिष्वप् शये । स्वपिशृन्सिद्धन्यनिस्वपिभ्यो निदिति नन् ॥ स्वप्नोऽन्यथाग्रहणं सर्प इव रज्ज्वामिति भाष्यम् । यथा रज्जौ सर्पो गृह्यमाणोऽन्यथा गृह्यते तथात्मनि देहादिग्रहणमन्यथाग्रहणम् आत्मनो देहादिवैलक्षण्यस्य श्रुतियुक्तिसिद्धत्वात् ॥ अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः । विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥

स्वप्नकृत् । पुं॰ सुनिषण्णके ॥ जीवे ॥

स्वप्नक् । त्रि॰ शयालौ । निद्राशीले । स्वप्नशीलः । ञिष्वप्॰ । स्वपितृषोर्नजिङ् ॥

स्वप्नदृक् । पुं॰ जीवे ॥ स्वप्नान् पश्यति । दृशिर्॰ । क्विप् ॥

स्वप्नस्थानः । पुं॰ तैजसे । स्थूलप्रपञ्चलयस्थानस्वप्नव्यष्ट्युपहितचैतन्ये ॥ स्वप्नः स्थानमस्य ॥

स्वप्नान्तः । पुं॰ स्वप्नमध्ये । स्वप्नविज्ञाने ॥ सुषुप्तिस्थाने । स्वप्नस्यान्तोऽवसानं यस्मिन् ॥

स्वप्रकाशः । पुं॰ अन्यानपेक्षप्रकाशे । चन्द्रसूर्यादिप्रकाशनिरपेक्षे॰ स्वयमेव भासमाने द्रष्टरि । दृश्यानां जडानां बुद्ध्यादीनां दर्शनं स्वप्रकाशं द्रष्टारं विना न घटते ॥ यथोक्तं ल क्षीधरिसूरिभिः । न प्रकाशिष्यमित्यूक्तियन्तृप्रकाशकबन्धना । स्वप्रकाशं तमात्मानमप्रकाशः कथं स्पृशेदिति ॥ स्वेनात्मनैव प्रकाशते । काशृ दीप्तौ । पचाद्यच् ॥

स्वप्रमाणकः । त्रि॰ स्वतः सिद्धे ॥

स्वभावः । पुं॰ सत्त्वधर्मविशेषे । संसिद्धौ । प्रकृतौ । स्वरूपे । निसर्गे । स्वभावपारम्पर्य कश्चिद्येन सदाऽसद्वासदसद्वा कर्म निष्पद्यते । जन्मान्तरकृतधर्माधर्मादिशुभाशुभसंस्कारे । वृद्धानां तु जन्मारम्भके प्राक्तनसंस्कारे ॥ सत्त्वसात्त्विकादिभेदात् त्रिविधः अनाद्यविद्यायाम् ॥ स्वतएवाविर्भावे ॥ यथा । वह्निर्हि स्वनपेक्षो तु स्वभावोयं प्रकीर्त्तितः । निसर्गस्वस्वरूपश्चेत्येषोऽपि भवति द्विधा । निसर्गः सुदृढाभ्यासजन्यः संस्कार उच्यते । स्वजन्यस्तु स्वतः सिद्धः स्वरूपं भाव धूम्यतद्वत्युज्ज्वलनो न मणिः । स्वभावः सत्तायश्चासत्स्वभावः अनन्याधीनसत्ताकः ॥

स्वभावोक्तिः । स्त्री॰ अर्थालङ्कारविशेषे । यथा । स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् । अथास्तदेकाश्रययोः रूपं वर्णः संस्थानस्य । उदाहरणम् । पश्चादङ्घ्रीप्रसार्य्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चैरासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय । घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेणेति ॥ स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनमिति लक्षणान्तरम् ।

स्वभूः । पुं॰ विष्णौ । हरौ ॥ ब्रह्मणि । प्रजापतौ । परमेष्ठिनि । स्वतोभवति । भू इति क्विप् ॥

स्वमेकः । पुं॰ संवत्सरे ॥ यथा । स्वमेकमेकं वरदात्मजा भवति चण्डिका । रुधिरैर्योरणस्य हतपितामहविध्वस्तेति पुराणम् ॥ स्वमेकं संवत्सरीयव्योमासद्वृत्तिः श्रुतिः ॥

स्वयंहारिका । स्त्री॰ स्त्रीविशेषे ॥

स्वयङ्कृतः । त्रि॰ आत्मनाकृते ॥ स्वयङ्कृत इति तत्पुरुषः ॥

स्वयङ्गुप्ता । स्त्री॰ शूकशिम्ब्याम् ।

स्वयङ्ग्रहः । पुं॰ प्रार्थनां विना यद्ग्रहणे ॥

स्वयन्दत्तः । पुं॰ द्वादशविधपुत्रान्तर्गतपुत्रविशेषे ॥ यथाह मनुः । मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् । आत्मानं स्पर्शयेद्यस्मै स्वयन्दत्तस्तु स स्मृत इति ॥ आत्मानं स्वयं ददाति॰ तवाहं पुत्रो भवामीति॰ स्वयन्दत्तः उपनतः स्वयं प्राप्त इति यावत् ॥

स्वयम् । अ॰ आत्मनेत्यर्थे । आप॰ मु॰ भा॰ प्र॰ ॥ सुष्ठु अयते । अय गतौ । अम् ॥

स्वयमुपस्थितः । त्रि॰ स्वयमागते ॥

स्वयम्प्रकाशः । त्रि॰ स्वतः साधना-

चतुर्थः प्रचयो नीचोदात्तसौष्ठान्त्यः स्मृत इति ॥ उदात्तादिभिः स्वयं राजमानः इति नीलकण्ठः ॥ स्वर इति कण्ठगतं माधुर्यमिति भगवत्पूज्यपादाः ॥ श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः । स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते इति ॥ शब्दे ध्वनौ ॥ यथा । करिवृषरथौघभेरीमृदङ्गसिंहाब्दनिस्वनाभूपाः । गर्दभजर्जररूक्षस्वराश्च धनसौख्यसंत्यक्ता इति ॥ नासासमीरणे ॥ निषादादिसप्तसु ॥ ते यथा । निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ अपाहनारदः । षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम् । अजाविकौ च गान्धारं क्रौञ्चो नदति मध्यमम् । पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् । अश्वस्तु धैवतं रौति निषादं रौति कुञ्जर इति ॥ सस्वरो यः श्रुतिस्थानेस्वनन्नृहृदयरञ्जन इत्यन्यत्र ॥

स्वरतः । अ॰ स्वरेणेत्यर्थे ॥ आद्यादित्वात्तसिः ॥ यथा । दुष्टः शब्दः स्वरतो वर्णतो वेति ॥

स्वरपत्तनम् । न॰ सामवेदे ॥ इ॰ चि॰ शेषः ॥

स्वरभङ्गः । पुं॰ गलरोगविशेषे ॥

स्वरभङ्गी । पुं॰ पक्षिविशेषे ॥

स्वरभेदः । पुं॰ स्वरभङ्गरोगे ॥

स्वरमण्डलिका । स्त्री॰ वीणाविशेषे ॥

स्वरलासिका । स्त्री॰ वंश्याम् ॥

स्वरसः । पुं॰ वस्त्रनिष्पीडितरसे ॥ यथा । अहतात्तत्क्षणाकृष्टाद्द्रव्यात्क्षुण्णात्समुद्भवेत् । वस्त्रनिष्पीडितो यस्तु स्वरसो रस उच्यते ॥ अहतः कीटाग्निशीतादिभिरनुपहतः ॥ शिलापिष्टकल्के ॥ यथा । स्वोरसः स्वरसः प्रोक्तः कल्कोदृषदि पेषित इति ॥ कषायविशेषे ॥ यथा । सद्यः समुद्धृताद्द्रव्यात्क्षुण्णाद्यन्त्रादिपीडनात् । यो रसस्त्वभिनिर्याति स्वरसः स प्रकीर्त्तित इति ॥ अपि च । पिष्टः कल्को विनीयस्तु स्वरसः पीडितो रसः । क्वाथः कषायो निर्यूहो निर्यासो वैष्टकस्तथेति रत्नमालः ॥

स्वरा । स्त्री॰ ब्रह्मणोज्येष्ठपत्न्याम् । गायत्रीसपत्न्याम् ॥

स्वरांशः । पुं॰ सङ्गीतस्वरस्यार्द्धपादे वा ॥

स्वराट् । पुं॰ स्वतो भासमाने सवितरि ॥ इन्द्रियानपेक्षस्वतः सिद्धज्ञाने परमेश्वरे ॥ स्वेन एव राजते । राजृ दीप्तौ ॥ सत्सूद्विषेत्यादिना क्विप् ॥

स्वरापगा । स्त्री॰ मन्दाकिन्याम् ॥

स्वरालु: । पुं॰ वचायाम् ॥

स्वरित: । पुं॰ मध्यस्वरे । उदात्तानुदात्तत्वे वर्णधर्मौ समाहृताविति यस्मिंस्तस्मिन्नच ॥ शब्दनिष्ठधर्मविशेषे । स्वर: सप्ततीव्र । द्रुतच् ॥

स्वरु: । पुं॰ शस्त्रे । कादिन्याम् । वज्रे ॥ यूपखण्डे । यूपतक्ष्णमाणे प्रथमपतितशकले ॥ यूपैकदेशप्रादेशमात्रकाष्ठे ॥ अध्वरे ॥ शरे । बाणे ॥ स्वरति॰ स्वर्गतेवा । स्वृ शब्दोपतापयो: । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च - त्यु: ॥

स्वरुचि: । त्रि॰ स्वच्छन्दे । स्वतन्त्रे ॥ स्त्रीस्वेच्छायाम् ॥

स्वरू: । पुं॰ स्वरौ । वज्रे ॥ शोभना निरूरूं विधारावल्याशाल्ल: ॥

स्वरूपम् । न॰ स्वभावे । निसर्गे ॥ स्वस्वरूपम् । स्वमेव रूपं यस्यसः । परमानन्दप्रकाशैकात्मन: स्वरूपम् । येन धर्मेण दृष्टूयतेनामृतस्य स्वरूपम् ॥ त्रि॰ प्राज्ञे । विदुषि ॥ मनोज्ञे ॥ प्राप्तरूपस्वरूपाभिरूपाबुधमनोज्ञेरित्यमर: ॥

स्वरूपलक्षणम् । न॰ अध्यासाधिष्ठानत्वेन सत्ये॰सर्वज्ञे ॥

स्वरूपस्थिति: । स्त्री॰ समाधिविशेषे ॥ यथा । संशान्तसर्वसङ्कल्पायाशि

लावद्वस्थिति: । जाग्रन्निद्राविनिर्मुक्तासास्वरूपस्थिति: परीति ॥

स्वरूपासिद्ध: । पुं॰ हेत्वाभासविशेषे ॥ यथा । शब्दोगुणश्चाक्षुषत्वादिति । अत्रचाक्षुषत्वं शब्दे नास्ति । शब्दस्यश्रावणत्वात् ॥ स्वरूपेणासिद्ध: ॥

स्वरूपासिद्धि: । स्त्री॰ साध्यसमाख्यहेत्वाभासभेदे । पक्षेहेतुतावच्छेदकावच्छिन्नस्याभावे । यथा । ह्रदोद्रव्यं धूमादित्यादौ ॥ स्वरूपस्यासिद्धि ॥

स्वरेणु: । स्त्री॰ सूर्यपत्नीविशेषे । संज्ञायाम् । यममातरि ।

स्वरोदय: । पुं॰ स्वरज्ञापकग्रन्थविशेषे ॥

स्वरोदयवित् । त्रि॰ दिक्परमार्थवादिनि ॥ सर्वदिश: परमार्थद्रष्टा । भान्तिमात्रमेतत् । तदिदं दामपिपराजयदर्शनात् ॥

स्वर्ग: । पुं॰ नाके । त्रिदिवे । त्रिपिष्टपे । देवलोके । सुखाधारे ॥ सुष्ठुअर्ज्यते । अर्ज अर्जने । कर्मणिघञ् । न्यङ्क्वादित्वात्कुत्वम् । सामवेदे । दु:खविरोधिनि सुखविशेषे । उत्कृष्टसुखे ॥ सस्वर्ग: स्वस्तयासमूलघातमपहन्ति दु:खम् । नचैषक्षयी । तथाहिश्रुती । अपामसोमममृताअभूमेति

चक्षुषैकु तोऽमृतस्त्वसम्भव: । यन्नदु:खेनसंभिन्नं नचग्रस्तमनन्तरम् । अभिलाषोपनीतञ्चसुखंस्वर्गपदास्पदम् ॥ रुच्यतेऽस्मिन्निति वा । रुजगतिस्थानादौ ॥ फलमेतिघञ् ॥ मन: प्रीतिकर: स्वर्गो नरकस्तद्विपर्ययः । नरकस्वर्गसंज्ञे वैपापपुण्ये द्विजोत्तमः ॥ पारिभाषिकस्वर्गोयथा । मनोनुकूल: प्रमदारूपवत्य: स्वलङ्कृता: । वास: प्रासादपृष्ठेषुस्वर्ग: स्याच्छुभकर्मणः ॥ इतिगारुडे १०८ऽध्याय: ॥

स्वर्गगामी । त्रि॰ स्वर्गगमनकर्त्तरि ॥ यथा । सर्वाहिंसानिवृत्तायेनरा: सर्वंसहाश्चये । सर्वस्याश्रयभूताश्चते नरा: स्वर्गगामिन: ॥

स्वर्गङ्गा । स्त्री॰ मन्दाकिन्याम् ॥

स्वर्गद्वारम् । न॰ तीर्थविशेषे ॥

स्वर्गपति: । पुं॰ इन्द्रे । पुरन्दरे

स्वर्गपर: । पुं॰ स्वर्गप्रधाने ॥ स्वर्गएवपरंश्रेष्ठंयस्य । पितस्तेनपरत्वकृष्टेययस: ॥

स्वर्गलोक: । पुं॰ वैकुण्ठे ॥ स्वर्गीयतेइतिस्वर्ग: । स्वर्गश्चासौलोकश्च ॥ यजमाने । स्वर्गोलोकोयस्यस: ॥

स्वर्गलोकेश: । पुं॰ इन्द्रे ॥ शरीरे ॥

स्वर्गवधू: । स्त्री॰ सूर्यभार्यायाम् ॥

स्वर्गसरित् । स्त्री॰ मन्दाकिन्याम्

स्वर्गसरिद्वरा । )<br>
स्वर्गापगा । ) स्त्री॰ भागीरथ्याम् ।

स्वर्गाय: । पुं॰ हरौ ॥ स्वर्गीयतइति स्वर्गीय: ॥

स्वर्गिगिरि: । पुं॰ सुमेरौ ॥

स्वर्ग: । पुं॰ देवे । सुरे त्रि॰ स्वर्गगामिनि ॥ तल्लक्षणन्तु । दयाभूतेषुसम्वाद: परलोकंप्रतिक्रिया । सत्यं परहितायोक्तिर्वेदप्रामाण्यदर्शनम् ॥ गुरुदेवर्षिपूजाचकेवलंसाधुसङ्गम: । सत्क्रियाभ्यसनंमैत्रीमूर्गीयालक्षणंविदुरिति ॥

स्वर्गिवधू: । स्त्री॰ अप्सरसु ।

स्वर्गिरि: । पुं॰ मेरौ । सुरालये ।

स्वर्गौका: । पुं॰ अमरे । सुरे ॥

स्वर्ग्य: । त्रि॰ स्वर्गलोकस्यप्राप्तिसाधनभूते ॥ स्वर्गस्यनिमित्ते । स्वर्गायहिते ॥ स्वर्गस्यनिमित्तं संयोगउत्पातोवा । गोद्व्यचोऽसङ्ख्यापरिमाणाश्वादेर्यत् ॥

स्वर्णम् । न॰ लोहवरे । भृङ्गारे । अस्यपर्यायायथा । स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटकम् । तपनीयं शातकुम्भं गाङ्गेयं भर्म्म कर्वुरम् । चामीकरंजातरूपंमहारजतकाञ्चने । रुक्मंकार्त्तस्वरंजाम्बूनदं मष्टापदोऽस्त्रियामिति ॥ अस्यपरीक्षादियथा । दाहेऽतिरक्तमथयच्च स

गन्धयोः । कज्जलीकृतयोर्लिप्ये त्समयातया ॥ काञ्चनारत्वचः कल्कैर्मूषायुग्मं प्रकल्पयेत् । धृत्वा तत्सम्पुटे गोलं मूषासम्पुटयेत् ततः । निधाय सन्धिरोधं कृत्वा संशोष्य गोलकम् । वह्निं खरतरं कुर्यात् देवं दद्यात्पुटत्रयम् ॥ निरुत्थं जायते भस्म सर्वकर्मसु योजयेत् । काञ्चनारप्रकारेण लाङ्गली हन्ति काञ्चनम् ॥ लाङ्गली कलिहारी ॥ ज्वालामुखी तथा हन्यात् तथा हन्ति मनःशिला । शिलासिन्दूरयोश्चूर्णं समयोरर्कदुग्धकैः ॥ सप्तधा भावनां दद्याच्छोषयेच्च पुनः पुनः । ततस्तु गोलितैर्हेम कल्कीयं दीयते समः ॥ पुनर्हेमे दत्तितरां यथा कल्को विलीयते । एवं वेलाचयं दद्यात् कल्कं हेममृतं भवेत् ॥ सुष्ठु वर्णोति । ऋनुपतौ । पचाद्यच् ॥ यद्वा । वर्णनम् । घञ् । शोभनोऽस्त्रीय ॥ धत्तूरे । गन्धशाके । गौरसुवर्णशाके ॥ नागकेशरे ॥

स्वर्णकर्षः । पुं० कनकगुग्गुलौ ॥

स्वर्णकायः । पुं० गरुडे । त्रि० सुवर्णमयशरीरे ॥

स्वर्णकारः । पुं० स्वनामख्यातवर्णसङ्करजातिविशेषः । नाडिन्धमे । स्याकरा इ । तदुत्पत्तिस्तु । विश्वकर्मा च शूद्रायां वीर्य्याधानं चकार सः । ततो बभूवुः पुत्राश्च नवैते शिल्पकारिणः ॥ मालाकारः कर्मकारः शङ्खकारः कुविन्दकः । कुम्भकारः कांस्यकारः षडेते शिल्पिनां वराः ॥ सूत्रधारश्चित्रकरः स्वर्णकारस्तथैव च । पतितास्ते ब्रह्मशापादयाज्या वर्णसङ्कराः ॥ स्वर्णकारः स्वर्णचौर्य्याद्ब्राह्मणानामिति श्रुतम् । बभूव सद्यः पतितो ब्रह्मशापेन कर्मणेति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० ऽध्यायः ॥ स्वर्णं करोति । कृञ् अण् । कर्मण्यण् ॥

स्वर्णकृत् । पुं० स्वर्णकारे ॥

स्वर्णकेतकी । स्त्री० हेमकेतक्याम् । कनकप्रसवायाम् । हैम्याम् ॥ अस्या गुणा यथा । सुवर्णकेतकी त्वन्या लघुपुष्पा सुगन्धिनी । केतकीकुसुमं वर्ण्यं केशदौर्गन्ध्यनाशनम् । हेमाभं मदनोन्मादवर्द्धनं सौख्यकारि च ॥ तस्यास्तनोऽतिशिशिरः कटुः पित्तकफापहः । रसायनकरो वर्ण्यो देहदार्ढ्यकरः परः ॥

स्वर्णक्षीरी । स्त्री० ओषधिविशेषः । पटुपर्ण्याम् । हैमवत्याम् । हिमावत्याम् । चोकं इति लोके इति भावप्रकाशः ॥ अस्याः पर्य्याया यथा । स्वर्णक्षीरी स्वर्णदुग्धा स्वर्णाह्वा रुक्मिणी तथा । सुवर्णाहिम

दुग्धोऽहिमक्षीरीचकाक्षनी ॥ स्वर्णक्षीरीहिमाहिकाक्रिमिपित्तकफापहा । मूत्रकृच्छ्राश्मरीशोफदाहज्वरहरापरैति ॥ स्वर्णमिवपीतस्वात्क्षीरमस्याः, गौरादिः ॥

स्वर्णगैरिकम् । न॰ सुवर्णगैरिके । सोनागेरू॰ इ॰ भा॰ प्र॰ ॥

स्वर्णपीठा । स्त्री॰ कामरूपदेशप्रसिद्धनद्याम् ॥ यथा । यानिर्गतापूर्वभागात्तस्माद्गिरिवरान्नदी । स्वर्णपीठेतिविख्यातासागङ्गासदृशीफले ॥ तस्मात्नाऽकर्णलात् ॥

स्वर्णचूडः । पुं॰ चाषे । किकीदिवी ॥

स्वर्णजम् । न॰ त्रपुणि । मृदङ्गे ॥ रङ्गे ।

स्वर्णजातिः । स्त्री॰ पीतमालत्याम् ।

स्वर्णजीवन्ती । स्त्री॰ जीवन्तीभेदे । हेमाह्वायाम् । हेमजीवन्त्याम् । हिमाह्वयायाम् ॥

स्वर्णतुला । स्त्री॰ नाराच्याम् ॥

स्वर्णधातुः । पुं॰ स्वर्णगैरिके ॥

स्वर्णदी । स्त्री॰ मन्दाकिन्याम् ॥ स्वःस्वर्गस्थनदी । पूर्वपदाद्‌गसंज्ञायामगङ्गादिगणत्वम् ॥ कामरूपप्रसिद्धायांसितगङ्गायाम् ॥ यथा । नद्याः स्वर्णश्रियाः पूर्वनदीकामाख्ययात ता । कामाख्यायाः पूर्वभागेनदी सीमासमाख्यया ॥ सीमासमायाः पूर्वस्यांनदीमानाहषीदका । ततः पूर्वेकामरूपपीठान्तेजगतांप्रसूः ॥ जगन्मायामहामायादेवीदिक्करवासिनी । एतायाः कथितानद्यः सकलादक्षिणस्रवाः ॥ तासुस्नात्वाश्वपीत्वापः स्वर्गलोकमवाप्नुयात् । प्रान्ते दिक्करवासिन्याः सदावहतिस्वर्णदी ॥ सितगङ्गाख्यया लोकेसाचाद्गङ्गाफलप्रदा । साभूमिपीठसंस्थातुदेवीदिक्करवासिनी ॥ चमलैः प्लावयन्तीयातिप्रस्यन्दतांसुरैः । सितगङ्गाजलेस्नात्वाख्रष्टाशम्भुंहरिंविधिम् ॥ दृष्ट्वा ललितकांताख्यांपुनर्योनौनजायते इतिकालिकापुराणे ८२ऽध्यायः ॥ दधिकाल्याम् ॥

स्वर्णदीधितिः । पुं॰ वह्नौ ॥

स्वर्णदुग्धा । स्त्री॰ स्वर्णक्षीर्याम् ॥

स्वर्णद्रुः । पुं॰ आरग्वधे ॥

स्वर्णपक्षः । पुं॰ गरुडे ॥

स्वर्णपद्मा । स्त्री॰ मन्दाकिन्याम् ॥

स्वर्णपाठकः । पुं॰ टङ्कणे । लोहद्राविणि ॥

स्वर्णपारेवतम् । न॰ रुक्मपारेवते ॥

स्वर्णपुङ्खः । पुं॰ शरविशेषे ॥

स्वर्णपुष्पः । पुं॰ आरग्वधे ॥ चम्पके ॥

सुवर्णपुष्पा । स्त्री॰ कलिकार्याम् ॥ सातलायाम् ॥
सुवर्णपुष्पी । स्त्री॰ राजरम्भे ॥ पीतिकायाम् ॥ सुवर्णाख्याम् ॥ सातलायाम् । कलिकार्याम् ॥ स्वर्णक्षीर्याम् ॥ स्वर्णकेतक्याम् ।
सुवर्णप्रस्थः । पुं॰ जम्बुद्वीपोपद्वीपभेदे ।
स्वर्णफला । स्त्री॰ पीतरम्भायाम् ॥ त्रि॰ पीतफलके ॥
स्वर्णवणिक् । पुं॰ वर्णसङ्करजातिभेदे । सुवर्णवणिजि ॥ यथा । स्वर्णकारः स्वर्णवणिक्कायस्थ स्वजेश्वर । नरेषुमध्येतेधूर्त्ताः कृपाहीनामहीतले ॥ हृदयंक्षुरधाराभंतेषाम्नास्तिसादरम् । प्रतिषुसज्जनः कोपिकायस्थोमेतरो चलाविनिरन्नायैवर्णपुराणम् ॥
स्वर्णभूषणः । पुं॰ आरग्वधे ॥ त्रि॰ हेमाभरणविशिष्टे ॥
स्वर्णभृङ्गारः । पुं॰ स्वर्णभङ्गराजे ॥ हेमकलसे ॥
स्वर्णमद्वा । स्त्री॰ नदीविशेषे ॥
स्वर्णमाक्षिकम् । न॰ उपधातुविशेषे ॥ तन्नामानिगुणाश्चयथा । स्वर्णमाक्षिकमाख्यातंतापीजंमधुमाक्षिकम् । तीक्ष्णंमाक्षिकधातुश्चमधुधातुश्चसस्मृतः ॥ किञ्चित्सुवर्णसाहित्यात्स्वर्णमाक्षिकमीरितम् । उपधातुसुवर्णस्यकिञ्चित्स्वर्णगुणान्वितम् ॥ तथाचकाञ्चनाभावेदीयतेस्वर्णमाक्षिकम् । किन्तुतस्यानुकल्पत्वात्किञ्चिदूनागुणास्ततः ॥ नकेवलंस्वर्णगुणावर्त्तन्तेस्वर्णमाक्षिके । द्रव्यान्तरस्यसंसर्गात्सन्त्यन्येपिगुणायतः ॥ सुवर्णमाक्षिकंस्वादुतिक्तंवृष्यंरसायनम् । चक्षुष्यंवस्तिरुक्कण्डूपाण्डुमेहविषोदरम् ॥ अर्शःशोथंविषंकण्डूंत्रिदोषमपिनाशयेत् । अशुद्धस्याप्यदोषमाह । मन्दानलत्वंबलहानिमुग्रांविष्टम्भितांनेत्रगदान्सकुष्ठान् । तथैवमालांव्रणपूर्विकाञ्चकरोतितापीजमशुद्धमेतत् ॥ शोधनन्तु । माक्षिकस्यत्रयोभागाभागैकंसैन्धवस्यच । मातुलुङ्गद्रवैर्वाथजम्बीरस्यद्रवैःपचेत् ॥ चालयेल्लोहजेपात्रेयावत्पात्रंसुलोहितम् । भवेत्॰तत्तस्तुशुद्धिंस्वर्णमाक्षिकमृच्छति ॥ अथास्यमारणम् । कुलत्थस्यकषायेणघृष्ट्वातैलेनवापुटेत् । तैलेनवाजमूत्रेणम्रियतेस्वर्णमाक्षिकमितिभावप्रकाशः ॥
स्वर्णयूथी । स्त्री॰ पीतयूथिकायाम् । पीतिकायाम् । हेमपुष्पिकायां ॥
सुवर्णरेताः । पुं॰ वह्नौ ॥
सुवर्णलता । स्त्री॰ ज्योतिष्मत्याम् ॥
सुवर्णवर्णा । स्त्री॰ हरिद्रायाम् ॥

त्रि॰ सुवर्णसदृशवर्णयुक्ते ॥

स्वर्णकन्दल: पुं॰ श्योनाके ॥

स्वर्णवल्ली । स्त्री॰ लताविशेषे । रक्तफलायाम् । काकवन्ध्यायाम् ॥ स्वर्णवल्लीशिर: पीडांत्रिदोषाम् हन्तिदुग्धदा ॥

स्वर्णबिन्दु: । पुं॰ विष्णौ । हरौ ॥ बिन्दवोऽवयवा: स्वर्णसदृशा यस्य स: ॥ शोभनवर्णमक्षरं बिन्दुश्च यस्मिन्मन्त्रे तदात्मकोवा ॥

स्वर्णशेफालिका । )<br>
स्वर्णशेफाली । ) स्त्री॰ राजवृक्षे ॥

स्वर्णाङ्ग: । पुं॰ लतमाले । आरग्वधे ॥

स्वर्णारि । न॰ गन्धके ॥

स्वर्णाह्वय: । पुं॰ नागकेशरे ॥

स्वर्णाह्वा । स्त्री॰ स्वर्णक्षीर्याम् ॥

स्वर्णुली । स्त्री॰ क्षुपान्तरे । हेमपुष्प्याम् ॥

स्वर्भानव: । पुं॰ गोमेदमणौ । पिङ्गस्फटिके ॥

स्वर्भानु: । पुं॰ राहौ । स्वर् आकाशे विपरीतलक्षणया भाति । भा॰ । द॰ भाभ्यानु: । जुभ्वादि ॥

स्वर्भानुसूदन: । पुं॰ सूर्ये ॥

स्वर्यात: । त्रि॰ मृते ॥

स्वर्लोक: । पुं॰ स्वर्गे । तदूनकोटि: स्वर्लोक: स्वर्गवर्यसमाश्रय: ॥ पञ्चाशीतिलक्षोच्छ्राय स्वर्गवर्याणां सूर्यासिमुख्यानामास्पदं स्वर्लोकसूस्यथ: ॥

स्वर्वधू: । स्त्री॰ सुरस्त्रियां ॥

स्वर्वापी । स्त्री॰ गङ्गायाम् ॥

स्वर्वेश्या । स्त्री॰ उर्वशीप्रधानास्वप्सरस्सु । तद्यथा । घृताचीमेनकारम्भाउर्वशीचतिलोत्तमा । सुकेशी मञ्जुघोषाद्या: कथ्यन्तेऽप्सरसो बुधैरिति ॥ स्व: स्वर्गस्य वेश्या ॥

स्वर्वैद्यौ । पुं॰ २ अश्विनीसुतयो: । नासत्ययो: ॥ स्व: स्वर्गस्य वैद्यौ एतयो: सर्वपर्यायानित्य द्विवचनान्ता: । एकत्वविवक्षाया मेकवचनान्ताश्च । तथोक्तं मार्कण्डेयपुराणे । नासत्यश्चैव दस्रश्च स्मृतौ द्वौ नामतोऽश्विनाविति ॥

स्वर्लीन: । पुं॰ दानवविशेषे ॥

स्वर्लोला । स्त्री॰ स्वाचारे ॥

स्वल्प: । त्रि॰ अत्यल्पे ॥

स्वल्पकेशरी । पुं॰ कोविदारे ॥

स्वल्पकेशी । पुं॰ भूतकेशे ॥

स्वल्पतपा: । पुं॰ तीर्थस्नानादिमात्रतपोयुते ॥

स्वल्पपत्र: । )<br>
स्वल्पपत्रक: । ) पुं॰ गौरशाके । मधूले । गिरिजे ॥

स्वल्पपर्णिका । स्त्री॰ मेदायाम् ॥

स्वल्पफला । स्त्री॰ क्षुपप्रभेदे । कच्छूघ्न्याम् । मोहपर्णी ।

स्ववान् । त्रि० धनिनि । स्वमस्यास्ति मतुप् ॥

स्ववश: । त्रि० अपराधीने । स्वतन्त्रे ॥ स्वस्मिन् वशः आयत्तः ॥

स्ववासिनी । स्त्री० सुवासिन्याम् । चिरण्ट्याम् । स्वेषु पित्रादिषु वस्तुं शीलमस्याः । सुप्यजातौ णिनि-स्ताच्छील्ये (?) ॥

स्वबीज: । पुं० आत्मनि । न० निज कारणे ॥ स्वीयवीर्ये ॥

स्वसंवित् । स्त्री० स्वरूपसम्यग्ज्ञाने ॥

स्वसा । स्त्री० भगिन्याम् । सुष्ठु अस्यति० असुक्षेपणे । साश्सि (?) ऋन् ॥

स्वसुखम् । न० स्वरूपभूतेपरमानन्दे ॥

स्वस्तन: । त्रि० स्वर्गभावे ॥

स्वस्ति अ० मङ्गलेसमीहितसाधने । समीहितसम्पत्तौ । पुण्ये ॥ आशंसायाम् । आशीर्वादे ॥ दानस्वीकारमन्त्रे । यथा । स्वस्तिदेवीवायुपत्नीप्रतिश्रुते पूजिता । आदानसम्प्रदानस्य निष्फलस्य याविनी निर्दिष्टोभागमन्त्रम् ॥ अस्यति० असतिवा । असक्षेपणे० असुक्षेपणे वा । सुपूर्वकात्० क्तिच् । बाहुलकात्तिर्वा । यद्वा । अस्ति । असभुवि । सावसेरेतिति: । बहुल वचनात्प्रभुभाव: ॥

स्वस्तिक: । पुं० मङ्गलद्रव्ये । तण्डुलचूर्णनिर्मितश्चिकोणाकाराधिवासद्रव्ये ॥ चतुष्के ॥ पिष्टकप्रकारे ॥ रतताविशेषे । जिनानां चतुर्विंशतिचिह्नान्तर्गतचिह्नविशेषे ॥ रसोनके ॥ राजादीश्वरसद्मविशेषे ॥ चतुष्पथे ॥ सर्पाणांफणास्थे नीलरेखाविशेषे ॥ पुं० न० राजादीश्वराणांसद्मविशेषे । तल्लक्षणं यथा । प्रागुत्तरद्वाररहित: स्वस्तिकाख्योऽन्यप्रदक्षिणे ॥ अपिच । स्वस्तिकं प्राङ्मुखं यत्स्यादलिन्दानुगतं भवेत् । तत्पार्श्वानुगतौ चान्यौ तत्प्रान्तगतोऽपर: ॥ इति । मिताक्षरणाके ॥ अभिप्रेतार्थस्याविनाशे । अष्टाङ्गयोगस्य तृतीयाङ्गविशेषे ॥ तद्यथा । जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे । ऋजुकाय: विशेन्मन्त्री स्वस्तिकं तत् प्रचक्षते इति ॥ स्वस्तिशब्दं मंकायति । कै शब्दे । आतोऽनुपेतिक: । मूलविभुजादित्वात् ॥

स्वस्तिमुख: । पुं० ब्राह्मणे ॥ लेखे । पत्रे ॥ त्रि० वन्दिनि ॥ स्वस्तिमुखे यस्य ॥

स्वस्तिवाचनम् । न० विहितमङ्गलकर्मारम्भे मन्त्रविशेषपाठे । मन्त्रोच्चारणपूर्वकतण्डुलविकिरणे ।

न्दर्परूपप्रभयासमेतः कान्त्याजनप्रीतिरतिप्रसन्नः। स्वातिः प्रसूतौ यदि मानवस्य महामतिः प्राप्तविभूतियोगः॥ त्रि॰ स्वात्यां जाते॥ श्रविष्ठाफल्गुनीष्वणो लुक्॥

स्वाती। स्त्री॰ पद्मरगर्घे॥

स्वातीपथः। पुं॰ छायापथे। स्वातीवीथ्याम्॥

स्वातीवीथी। स्त्री॰ सूर्यादीनां मध्यमार्गमध्यमवीथ्याम्। यथा। सूर्यादीनां त्रयो मार्गा दक्षिणोत्तरमध्यमाद्युपक्रम्य॰ तथार्द्रा चापि फल्गुन्यो मघा चैवर्षभं मतः। हस्तश्चित्रा तथा स्वातिर्मध्यवीथ्यभिविश्रुता। ज्येष्ठा विशाखा ह्यनुराधा च वीथिराजगवी मता। एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यत इति वायुपुराणात्॥

स्वात्मा। पुं॰ स्वकीयात्मनि॥

स्वात्मामृतरसास्वादः। पुं॰ स्वात्मैवामृतरसः अमृतद्रवस्तस्यास्वादने॥

स्वादः। पुं॰। रसग्रहणे आस्वादनम्। स्वाद॰। घञ्॥

स्वादनम्। न॰ चर्वणे। स्वादनमशनं भक्षणमभ्यवहारो भोजनं स्वदनमिति हलायुधः। प्रीतिकरणे॥

स्वादितः। त्रि॰ आस्वादिते॥

स्वादिमा। पुं॰ स्वादुतायाम्। स्वादोर्भावः। इमनिच्॥

स्वादुः। पुं॰ मधुररसे। यथा। मधुरस्तु रसश्रेष्ठो गल्पस्य। दुर्मधूलकद्रुतिहिमषण्टः॥ गण्डोले। गुडे। जीवकौषधौ। सुगन्धिद्रव्यभेदे। अगुरुसारे। स्त्री॰ द्राक्षायाम्॥ त्रि॰ मिष्टे। रसनाकर्षिणि। मधुरे। मनोज्ञे। सुन्दरे॥ स्वदते। प्रवृत्याखादने। कृवापिच्युण्॥

स्वादुकण्टकः। पुं॰ विकङ्कते। गोक्षुरके। कण्टकोऽस्यास्ति। अर्श आद्यच्। स्वादुश्चासौ कण्टकश्च। स्वादुः कण्टकोऽस्य वा॥

स्वादुकन्दा। स्त्री॰ विदार्याम्॥

स्वादुका। स्त्री॰ नागदन्त्याम्॥

स्वादुखण्ड। पुं॰ गुडे। मधुरभागे॥

स्वादुगन्धा। स्त्री॰ विदार्याम्॥

स्वादुक्षारम्। न॰ स्वादुक्षारस्यार्थे॥ स्वादुमिष्टमुक्तम्॥

स्वापर्णी। स्त्री॰ दुग्धिकायाम्॥

स्वादुपाका। स्त्री॰ काकमाच्याम्॥ स्वादुः पाकोऽस्याः॥

स्वादुपिण्डा। स्त्री॰ पिण्डखर्जूर्याम्॥

स्वादुपुष्पः। पुं॰ कटभ्याम्।

स्वादुफलम्। न॰ बदरीफले॥

स्वादुफला। स्त्री॰ द्राक्षायाम्। कोली॥

वेदाभ्यासे ॥ स्वाध्यायस्याभ्यसनं ॥

स्वाध्यायी । पुं० पत्रमर्मरिणि ॥ स्वाध्याययुक्ते ॥ स्वाध्यायि स्त्यस्य । ध्वनिः ॥

स्वाध्वरिकः । त्रि० स्वध्वरशालिनि ॥ शोभनोऽध्वरः स्वध्वरः । स्वध्वरमित्याह० तिनचरतिवा । ठक् । स्वागतादीनाञ्चेत्यैजागमो न ॥

स्वानः । पुं० निर्घोषे । निक्वणे । शब्दे ॥ स्वननम् । स्वनशब्दे । स्वनहसोर्वेतिपक्षे घञ् ॥

स्वानुभवः । पुं० आत्माकारान्तःकरणसाक्षात्कारे ॥

स्वान्तम् । न० हृदि । मानसे । मनसि । चित्ते ॥ गह्वरे । स्वन्यते स्म । स्वन० क्षुब्धस्वान्तध्वान्तेतिमनस्यनिट्कमेतन्निपातितम् ॥ स्वस्यान्तोऽवच्छेदोभवतिवेनतद्वितिवा ॥

स्वापः । पुं० निद्रायाम् । कारणभाविनावस्थाने । शयने । शय्यायाम् । अज्ञाने । तत्त्वाप्रतिबोधे । दर्शनस्पर्शनदर्शनस्पर्शसयेति हि प्रकारनिरूपिणीवावस्थाभेदे । स्वप्नभेदे । स्पर्शाज्ञतायाम् ॥ स्वपनम् । ञिष्वप्शये । घञ् ॥ धात्वोर्गुरुकृतान्तस्वराणांसंविशेदुपदिनाप्यनुवंशम् । नोत्तरापरशि-

रानघनस्योनैवाद्रेचरणः श्रियमिच्छन् ॥

स्वापतेयम् । ) स्वापतेयकम् । ) न० धने । वित्ते ॥ स्वस्वपतिः० स्वपति० । स्वपतौ धनस्वामिनोसाधु । पथ्यतिथिवसतिस्वपतेर्ढञ् । स्वागतादित्वान्नैजागमः ॥

स्वापनः । पुं० न० अस्त्रविशेषे । पुं० श्रीहरौ । विष्णौ ॥ स्वापयति स्वभाययात्मज्ञाविधुरानुकरोति । ञिष्वप्शये । अस्मात् णिजन्तात् ल्युट् । औणादिको युच्वा ॥

स्वाप्ययः । पुं० सुषुप्तौ । स्वस्मिन्नप्ययः ॥

स्वाभाविकः । त्रि० स्वभावसिद्धे । स्वभावतउत्पन्ने ॥ स्वभावोऽनादिरविद्या० तत्कार्ये । सहजे । अकृतके ॥ स्वभावेभवः । स्वभावादागतोवा । ठञ् ॥

स्वाभाविकी । स्त्री० प्रकृतौ । द्रव्यस्वभावतएवसिद्धायांप्रकृतौ ॥ यथाऽग्न्यादीनामुष्णप्रकाशादिलक्षणास्वाभाविकीप्रकृतिः ॥

स्वाभासः । त्रि० रमणीये ॥ सुष्ठु आभासते । भास० । पचाद्यच् ॥ पुं० कुबेरे ॥ स्वेनधनेनआभासते ॥

स्वाभाव्यः । पुं० हरौ । स्वभा

वेर्न वृषभाद्योऽसाध्यो नित्यनिष्पन्न रूपत्वात् ॥

स्वामिजङ्गी । पुं॰ परशुरामे ॥

स्वामिता । स्त्री॰ स्वामित्वे ॥ स्वामिनोभावः । तस्यभावस्त्वतलौ ॥

स्वामी पुं॰ कार्त्तिकेये । विशाखे । शिखिवाहने । पत्यौ । भर्त्तरि । गुरौ । श्रीनाथे ॥ यथा । गुरुं मास्नानभाषितमपकालाहर्तेर्शिवे । श्रीनाथदेवस्वामीतिविवादेवोधर्मेव देत् ॥ हरे ॥ हरौ ॥ परमहंसे ॥ वात्स्यायनमुनौ ॥ प्राक्स्योयाह्रदे ॥ नृपे । भूपे ॥ त्रि॰ अधिपतौ । अस्यपर्यायास्तु । स्वामीत्वीश्वरः पतिरीशिता । अधिभूर्नायकोनेताप्रभुः परिवृढोधिपवृति ॥ स्वमैश्वर्यमस्यास्तिस्वामि ऐश्वर्यं इत्यामिनच्॰ निपात्यते ॥

स्वाम्यम् । न॰ आधिपत्ये ॥

स्वायम्भुवः । पुं॰ प्रथममनौ । ब्रह्मणः पौत्रे ॥ स्वयम्भुवोऽपत्यम् । अण् । संज्ञापूर्वकत्वाद्वि धेरनित्यत्वान्नगुणः ॥

स्वायम्भुवी । स्त्री॰ ब्राह्मीमोषधौ ॥

स्वारः । पुं॰ उपतप्तरि ॥ स्वरति । स्वृशब्दोपतापयोः । अच् । स्वरएव । प्रज्ञाद्यण् ॥ भावेवा घञ् ॥

स्वारस्यम् । न॰ स्वभावे ॥ स्वरसभावः । ष्यञ् ॥

स्वाराट् । पुं॰ इन्द्रे । मनुविसृष्टने ॥ स्वः स्वर्गे राजते । सत्सुदेवेषु॰ स्वेनधनेनवा॰ आराजते । सत्सूद्विषितिक्विप् । रौ रोतिलोपे॰ ढ्रलोपदूतिदीर्घः । जाम्तः ॥

स्वाराज्यम् । न॰ स्वर्गेतत्त्वे । स्वराड्भावे ॥ ष्यञ् ॥

स्वारामगुच्छकम् । न॰ ग्रन्थिपर्णे ॥ ऐन्द्रेपदे ॥

स्वारोचिषः । पुं॰ द्वितीयमनौ ॥ स्वरोचिषोऽपत्यम् । अण् ॥

स्वार्थः । पुं॰ स्वप्रयोजने ॥ स्वीयाभिधेये ॥ स्वकीयधने । स्वीयवस्तुनि ॥

स्वार्थदर्शनः । वि॰ निजार्थावलोकने ॥ स्वस्यात्मनोर्थं पश्यतीतितथा ॥

स्वार्थानुमानम् । न॰ स्वानुमितिहेतौ ॥ तथाहि । स्वयमेवभूयोदर्शनेनयत्रधूमस्तत्राग्निरितिमहानसादौव्याप्तिंगृहीत्वा॰ पर्वतसमीपङ्गतः॰ तद्गतेचाग्नौसन्दिहानः पर्वतेधूमंपश्यन्व्याप्तिं स्मरतियत्रधूमस्तत्राग्निरिति । तदनन्तरंवह्निव्याप्यधूमवानयंपर्वतइतिज्ञानमुत्पद्यते । अयमेवलिङ्गपरामर्शइत्युच्यते । तस्मात्प

र्तीयवह्निमान् । इतिप्रमाणमनुमि
तिम् त्पद्यते । तदेतत्स्वार्थानुमा
नम् ॥
स्वाश्रय: । त्रि० अनन्याश्रये ॥
स्वास्थ्यम् । न० आरोग्ये ॥ स्व
रूपेऽवस्थाने । सन्तोषे ॥ स्व
स्थस्यभाव: । ष्यञ् ॥
स्वाहा । अ० देवहविर्दानमन्त्रे ॥ स्वा
दते । स्वादयाखादने । आप्रत्यय
। पृषोदरादित्वाद्धस्य: ॥ सुष्ठु
आहूयतेऽनेनवा । डाप्रत्यय: ॥
स्वाहा । स्त्री० अग्ने: पत्न्याम् । अ
ग्नाय्याम् ॥ यथा । स्वाहादेवीवह्नि
पत्नीप्रतिविश्वेषु पूजिता । ययाबि
नाहविर्दानं नग्रहीतुं सुरा: क्षमाइ
तिदेवीभागवतम् ॥ सुष्ठु आहूय
न्तेदेवाअनया । अन्येभ्योपीतिड:
। टाप् ॥ स्वाहाऽस्त्यस्यावा । अर्श
आद्यच् ॥ स्वान् आजिहीतेवा ॥
बुद्धिशक्तिविशेषे । तारिण्याम् ॥
स्वाहापति: । पुं० अग्नौ ॥ बू० ध-
र्णौ ॥ *
स्वाहाप्रिय: । पुं० वैश्वानरे । वह्नौ
॥ स्वाहाप्रियायस्य । अपूर्वीप्रिया
दिष्वितिनिषेधान्नपुंवद्भाव: ॥
स्वाहाभुक् । पुं० त्रिदशे । देवता-
याम् ॥
स्वित् । अ० प्रश्ने ॥ वितर्के । नानाप
क्षावमर्शे ॥ पादपूरणे ॥ सुष्ठु एति
। अयतिवा । इण् गतौ । इङ्गतौ
वा । क्विप् । तुक् ॥
स्विदित: । त्रि० स्वेदिते ॥
स्विन्न: । त्रि० प्रस्विन्ने । स्वेदाप्लुते ।
घर्मयुक्ते ॥ स्विन्नोघर्मोपितोजनङ्ग
तिहलायुध: ॥ पक्वे ॥ यथा । अ
न्यंचैतगतंप्राहु: सतुषंधान्यमु
च्यते । आमंवितुषमित्युक्तं स्विन्न
मन्नमुदाहृतमितिशब्दार्णव: ॥
स्विष्टम् । न० सम्यग्यजने ॥ त्रि० स
म्यक्पूजिते ॥
स्विष्टकृत् । पुं० पूर्वाहुत्यन्तेक्रियमा
णे होमविशेषे । सु० सुष्ठु शोभनं
इष्टंसर्वमपिकरोति । डुकृञ् ।
क्विप् तुक् ॥
स्विष्टिकृत् । पुं० होमविशेषे ॥ शोभ
नाइष्टि: स्विष्टि: । तांकरोति ।
कृञ् : क्विपितुक् ॥
स्वीकार: । पुं० अङ्गीकारे । स्वीकर
णम् । च्व्यन्तस्वशब्दपूर्वात् कृञो
भावेघञ् ॥ यावताऽस्वात्स्वनिर्वा
ह: स्वीकुर्यात्तावदर्थवित् । मा
धिक्येन्यूनतायाञ्चच्यवतेपरमार्थ
त: ॥
स्वीकृत: । त्रि० अङ्गीकृते ।
स्वीय: । त्रि० आत्मीये । प्राक्क्री
तीय्छ: ॥
स्वीया । स्त्री० स्वामिन्येवानुरक्ता
यांनायिकायां ॥

स्वेदनी । स्त्री॰ कन्दौ ॥ कन्दुशालायाम् ॥ स्विद्यतेऽस्याम् अधिकरणे ल्युट् । ङीप् ॥

स्वेदमलोज्झितदेहः । पुं॰ सर्वज्ञकल्पेयजिनोत्तमे ॥ स्वेदमलरहितशरीरे ॥ वि॰ तद्वति ॥

स्वेदावरोधः । पुं॰ प्रस्वेदानिर्गमे ॥ दोषैर्गाठतरैर्गात्रच्छन्नतायाम् ॥ स्विद्यतेऽनेनेति स्वेदोऽग्निः । तस्य अवरोधः ॥

स्वैरः । त्रि॰ स्वच्छन्दे । स्वतन्त्रे ॥ मन्दे ॥ स्वेन स्वातन्त्र्येण ईरं॰ ईरति वा । ईरगतौ कम्पने च॰ ईर प्रेरणे वा । पचाद्यच् । स्वादीरेरिणोरिति वृद्धिः ॥

स्वैरिणी । स्त्री॰ स्वधर्मरतायाम् । व्यभिचारिण्याम् । अस्याः पर्यायास्तु । पुंश्चली धर्षिणी बन्धकी असती कुलटा इत्वरी । स्वैरिणी पांशुला इत्यमरः ॥ तद्विशेषस्तु । स्वैरिण्यः पतिं त्यक्त्वा अन्यं कामतः श्रयेत् । चतुर्विधाः सम्प्रोक्ता नारदेन सुरर्षिणा ॥ यथा । स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति । कामात् समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥ कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता । पुनः पत्युर्गृहं यायात् सा द्वितीया प्रकीर्त्तिता ॥ मृते भर्त्तरि तु प्राप्तान् देवरादीनपास्य या । उपगच्छेत् परं कामात् सा तृतीया प्रकीर्त्तिता ॥ प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या । तवाहमित्युपगता सा चतुर्थी प्रकीर्त्तितेति ॥ स्वयाच्छया॰ स्वेन स्वातन्त्र्येण वा॰ स्वेनात्मना वा ईरितुं शीलमस्याः । ईरगतौ । सुप्यजातौ णिनिः । नान्तलक्षणे ङीप् । स्वादीरेरिणोरिति वृद्धिः ॥ महाभारते आदिपर्व्वणि॰ चतुः पुरुषगामिनी स्त्री स्वैरिणीत्युक्ता ॥

स्वैरिता । स्त्री॰ अन्यानपेक्षणे । यदृच्छायाम् । स्वच्छन्दतायाम् । स्वैरिणो भावः । तल् ॥

स्वैरी । त्रि॰ स्वतन्त्रे । स्वेन ईरितुं शीलमस्य । ईरगतौ । सुप्यजातौ णिनिः । स्वादीरेरिणोरिति वृद्धिः ॥ परदारगमनशीले ॥

स्वैरिन्ध्री । स्त्री॰ सैरिन्ध्र्याम् ॥ स्वैरं स्वाच्छन्द्यं धरतीति तथा ॥ पू॰ रभसः ॥

स्वोपार्जितम् । न॰ स्वयमर्जितधने ॥ तदुक्तं श्रीमहानिर्वाणतन्त्रे । पुत्रं पितृस्वविद्याधनाश्रयेदरौरिणम् । शरीरन्तु पितुर्यस्मात् किं न स्यात् पैतृकं वसु ॥ पृथगर्थैः पृथक्स्वैर्मनुजैर्यदुपार्जितम् सर्वं तत् पितृसङ्क्रान्तं तदा स्वोपार्जितं कुतः ॥ अतीतमैत्रिस्थायासेर्यम

 हंसः

यद्धनमर्जितम् । स्वोपार्जितं तदेवस्यात्सततस्वामीनचापरः इति ॥ चि० स्वार्जितधनादौ ॥ च वषिष्ठसूत्रम् । पिताचेत्पुत्रान् विभजेत्तस्य स्वेच्छास्वयमुपात्ते र्थे । पैतामहेतुपितापुत्रयोस्तुल्यंस्वामित्वमिति ॥

( **—*‡*‡*—** )

हकारस्यप्रारम्भः

ह । अ० सम्बोधने ॥ पादपूरणे ॥ विनियहे ॥ नियोगे ॥ क्षिपायाम् अपषे ॥ कुत्सायाम् ॥ ऐति ह्यार्थे ॥ प्रसिद्धौ ॥ हन्ति । हन हिंसागत्योः । अन्येभ्योपीतिड ॥ इत्तावद्योतकीयं निपातइतिवै दिकाः ॥

हः । पुं० शिवे ॥ सलिले ॥ शून्ये ॥ धारणे ॥ मङ्गले ॥ गगने ॥ नकुलीशे ॥ रक्ते ॥ नाके ॥ स्वर्गे ॥ पापहरणे ॥ चन्द्रे ॥ हरौ ॥ हंसे ॥ रणे ॥ रोमाञ्चे ॥ वाजिनि ॥ हर्षे ॥ हकारे ॥ सकोपवारणे ॥ शुष्के ॥

हंसः । पुं० मानसौकसि । श्वेतगरुति । चक्राङ्गे ॥ अस्यमांसगुणा यथा । स्निग्धंहिमगुरुवृष्यंमांसंज लपक्षिणामनुवातघ्नम् । तीव्रपित्तं

समासंश्लेष्यतमंतिमिरहरचेति राः निघण्टुः ॥ अस्यशकुनन्तु । काष्ठासुसर्वासुवपिदर्शनेनहंसस्य शब्देनतुसर्वसिद्धिः । नामानिहं ससंश्रृणोतियस्तुप्रयान्तिनाशंदुरि तानितस्य ॥ चौरैः समंदर्शनमा द्यशब्देनिषिद्धेतौयेऽथभयंतृतीये । युद्धंचतुर्थे• नृपतिप्रसादः स्वात्पञ्चमेहंसरवेनराणामितिवसन्त राजः ॥ निर्लोभनृपे ॥ विष्णौ ॥ अर्के ॥ परमात्मनि ॥ मत्सरे ॥ योगिभेदे ॥ मन्त्रभेदे ॥ शरीरस्थम रुद्विशेषे । प्राणवायौ ॥ ब्राह्मणे ॥ अश्वमेधीयाश्वे ॥ यथा । किमयं दीयतेहंसः सतिसैन्येचतुर्विधे• कूर्मादिपुराणम् । अयतः स्थित श्रेष्ठे । गुरौ ॥ शिवे ॥ विष्णौ ॥ पर्वते ॥ गन्धर्वविशेषे ॥ जीवे ॥ चतुर्विधावधूतान्तर्गतावधूतवि शेषे । यथा । श्रीदेव्युवाच । द्विविधाश्रमीप्रोक्तौगार्हस्थोभैक्षु कस्तथा । किमिदंश्रूयतेचित्रमव धूताश्चतुर्विधाः ॥ एतद्वेदितुमि च्छामितत्त्वतः कथयप्रभो । चतु र्विधाऽवधूतानांलक्षणंसविशेषतः ॥ श्रीसदाशिवउवाच । ब्रह्ममन्त्रो पासकायेब्राह्मणः क्षत्रियादयः । गृहाश्रमेवसन्तोपिज्ञेयास्तेयतयः प्रिये ॥ पूर्णाभिषेकविधिनासंस्कृ

तावेव मानवाः । ये चावधूतास्ते श्रेष्ठाः पूजनीयाः कुलार्च्चिते ॥ ब्राह्मावधूताः ये चाश्रमाचारवर्त्तिनः । विदग्धाः सर्व्वकर्म्माणि मद्दीरितवर्त्मना ॥ विनाभ्यासितं चैतत् चक्रार्पितं विना । निषिद्धमन्नं तोयञ्च न गृह्णीयुः कदाचन ॥ ब्राह्मावधूतकौलानां कौलानामभिषिक्तिनाम् । प्रागेव कथितं धर्म्मो चाराश्च वरानने । स्नानं सन्ध्याशनं पानं दानञ्च दारग्रहणम् । सर्व्वमागममार्गेण ब्राह्मावधूतयोः ॥ उक्तावधूतो द्विविधः पूर्णापूर्णविभेदतः । पूर्णः परमहंसाख्यः परिव्राडपरः प्रिये ॥ कृतावधूतसंस्कारो यदि स्याद्ज्ञानदुर्ब्बलः । सदा लोकालये तिष्ठन्नात्मानं संशोधयेत् ॥ रचयन् मुद्राः तिलकञ्च कुर्व्वन् कर्म्माणि कौलवत् । सदा ब्रह्मपरो भूत्वा साधयेज्ज्ञानमुत्तमम् ॥ ओंतत्सदिति मन्त्रमुच्चार्य्य सोऽहमस्मीति चिन्तयन् । कुर्य्यादात्मोचितं कर्म्म सदा वैराग्यमाश्रितः ॥ कुर्व्वन् कर्म्माण्यनासक्तो न लिप्यते जलमीरवत् । यतेतात्मानमुद्धर्त्तुं तत्त्वज्ञानविवेकतः ॥ कृत्यपक्वस्योत्तमम् । चतुर्णामवधूतानां तुरीयो हंस उच्यते । त्रयोऽन्ये योगभोगाढ्या मुक्ताः सर्व्वे शिवोपमाः ॥ हंसो न कुर्य्यात् स्त्रीसङ्गं न वा धातुपरिग्रहम् । प्रारब्धमश्नन् विहरेन्निषिद्धविधिवर्ज्जितः ॥ त्यक्तेन सर्व्वजातिचिह्नानि कर्म्माणि गृहमेधिनाम् । तुरीयो विचरेत् क्षौणीं निःसङ्कल्पो निरुद्यमः ॥ सदात्मभावसन्तुष्टः शोकमोहविवर्ज्जितः । निर्निकेतस्तितिक्षुः स्यान्निःशङ्को निरुपद्रवः ॥ नार्पणं भक्ष्यपेयानां न तस्य ध्यानधारणाः । मुक्तो विरक्तो निर्द्वन्द्वो हंसाचारपरो यतिः ॥ इति ते कथितं देवि चतुर्णां कुलयोगिनाम् । लक्षणं सविशेषेण साधूनामात्मरूपिणाम् ॥ एतेषां दर्शनस्पर्शादालापात् परितोषणात् । सर्व्वतीर्थफलावाप्तिर्जायते मनुजन्मनाम् ॥ पृथिव्यां यानि तीर्थानि पुण्यक्षेत्राणि यानि च । कुलसन्न्यासिनां देहे सन्ति तानि सदा प्रिये ॥ इति श्रीमहानिर्व्वाणतन्त्रे १४ उल्लासः ॥ हन्ति गच्छति । सृषांकशंसा । हन० । पचाद्यच् । भवेद्वर्णागमाद्धंस इति सक् ॥ हन्ति । वृतृवदिहनीति सो वा । स इति विशेषे ॥ पिङ्गलदृष्टो भादिविशिष्टः कर्णयुतो भो मिनि हंसः ॥ यथा, एति वसन्ते याति दिगन्ते । किं सखि कान्तः कोपितकान्तः ॥

हंसकः । पुं॰ पादकटके । पादवलये । हंसवत् कायति मधुरध्वनित्वा

त् । कैवर्त्ते । यज्ञोपवीतिके ॥ हंसदृश्वाहंसाकृतित्वात् । दुष्टप्रतिकृताविति कश्चन् । स्वार्थे वा कन् ॥ राजहंसे ॥ तालप्रभेदे । यथा । लघुगुरुलघुर्यत्र तालो हंसकः स्मृत इति ॥

हंसकाख्य । पुं० रतिबन्धविशेषे ॥ यथा । नारीपादद्वयं कृत्वा कान्तस्योरुयुगोपरि । कटिमान्दोलयेद्यत्र स्मोयं हंसकोत्तमः ॥

हंसकीरल । पुं० रामेश्वरविद्धटेश्वर्योःपृथि ॥

हंसगः । पुं० सुरज्येष्ठे । परमेष्ठिनि ॥

हंसगद्गदा । स्त्री० मधुरभाषिण्याम् । मधुरनिःस्वनायाम् ॥

हंसगामिनी । स्त्री० ब्रह्माण्याम् । गजगामिनि । नारीविशेषे । हंसस्येव गमनमस्याः । यत्र्यमानहंसगामिनि ॥

हंसडिम्ब । पुं० हंसयोषे ॥

हंसदहनम् । न० अगुरुणि ॥

हंसनादिनी । स्त्री० नारीविशेषे ॥ यथा । गजेन्द्रगमनातन्वीकोकिलालापसंयुता । नितम्बगुर्विणीयासा कथ्यते हंसनादिनी ॥

हंसपदी । स्त्री० हंसपदीविशेषे । मधुस्रवायाम् । हंसपाद्याम् । त्रिपद्याम् ॥ गोधापद्याम् ॥ यथा । हंसपदीगुरुः शीताविषरक्तविषघ्नाम् । विसर्पदाहातिसारलूताभूताग्निरोहिणी ॥

हंसपादः । पुं० हिङ्गुले ॥ यथा । जपाकुसुमसंकाशोहंसपादोमहोत्तमः ॥ पुं० हंसचरणे ॥

हंसपादिका । स्त्री० हंसपद्याम् । गोधापद्याम् ॥

हंसपादी । स्त्री० गोधापद्याम् ॥

हंसमाला । स्त्री० कलहंसी । हंससमूहे ॥

हंसमाषा । स्त्री० माषपर्ण्यां ॥

हंसरथः । पुं० ब्रह्मणि । द्रुहिणे ॥ हंसोरथोऽस्य ॥

हंसलोमशः । पुं० न० कासीसे ॥

हंसलोहकम् । न० पित्तले ॥

हंसवती । स्त्री० हंसपादीलतायाम् ॥ त्रि० हंसयुक्ते ।

हंसवाहनः । पुं० ब्रह्मणि । सुरज्येष्ठे ॥ हंसोवाहनमस्य ।

हंसबीजम् । न० हंसडिम्बे । यथा । हंसबीजं परं बल्यं हंसकं वातनाशनम् । पाकेलघुतरं प्रोक्तं सर्वामयविनाशनमितिराजनिर्घण्टः ॥

हंसाङ्घ्रिः । पुं० गोधापद्याम् ॥ हिङ्गुले ।

हंसाधिरूढा । स्त्री० सरस्वत्याम् ॥

हंसाभिख्यम् । न० रूप्ये ॥

हंसारूढ । पुं० कमलासने । ब्रह्मणि ।

हंसारूढा । स्त्री० ब्रह्माण्याम् ॥

हंसिका । स्त्री० हंस्याम् ॥ हन्ति । हन० । हंसमहिष्यादित्वात् ।

हंसिनी । स्त्री० स्त्रियोगम्या प्रभेदे । यथा । निर्गौरसुस्वरसंयुक्ताङ्गा स्निग्धदृष्टि । मर्ममांसलत्वं सरसं युक्ता हंसिनी भवेत् ॥ हंसीपिखरि णीकुच्याशुभावर्ज्जितिवकाशिनी । सुशीतलजननी पयबकफपित्तविनाशिनी ॥

हंसी । स्त्री० हंसयोषिति । वरटायाम् ॥ हंसिन्याम् । आकृति २२ प्रभेदे ॥ तज्जचणन्तु । भौगौनाच्चत्वारौ गौगौ वसुभुव्रमयतिरिति भवतिहंसौ । यथा । सान्द्रकान्ते नेका केसौ विकचकमलमधुसुरभिपिवन्ती कामक्रीडाकृतस्फीतप्रमदसरसभरमलघुरसन्ती । कालिन्दी येपघ्राणात्पेयनयनपरितरलपरागे कं सारातिप्रख्यविच्छंसरभसगतिरिहविलसति हंसी ॥ वृत्तान्तरेपि । यथा । स्याङ्गेहर्षौ भनगणत: पश्चाद्द्वौ विपुलफलत: । हंसोख्याताश्रुतिरसयतिस्तस्या किंषां नजयति मत: ॥

हंसोदकम् । स० अंशूदके । यथा । नादेयं नवमृद्घटेषुनिहितं सम्यमक्कांशुभिर्यामिन्याचनिविष्टमिन्दु किरणैर्मन्दानिलान्दोलितम् । एलाद्यै: परिवासितं भ्रमवरं पित्तोषदाहविषमूर्च्छारक्तमदात्ययेषु वहितं प्राप्य हंसोदकमिति राजनिघण्ट: ॥

हंहो । अ० प्रश्ने ॥ दम्भे ॥ दर्पे ॥ सम्बोधने ॥

हक्क: । पुं० गजसमाह्वाने ॥

हक्कार: । पुं० आह्वाने ॥

हञ्जा । अ० नाट्योक्तितश्चेटीसम्बोधने ॥

हड्डि: । पुं० द्युति । छवि ॥

हड्डिका । स्त्री० भार्याम् ॥ भनक्ति रोगान् ॥ भञ्जोषामर्दने । ण्वुल् । पृषोदरादि: ॥

हड्डी । स्त्री० फञ्जिकायाम् । भार्याम् ॥ हन्तिरोगान् । पचाद्यच् । पृषोदरादि: । गौरादि: ॥

हञ्जे । अ० नाट्योक्त्या चेटीसम्बुद्धौ ॥ हियतडते । हञ्जिगत्यमादरयो: । बाहुलकादेप्रत्यय: । हृतोऽकारोऽडस्योपि ॥

हटपर्णिका । स्त्री० शैवाले ॥

हट्ट: । पुं० क्रयविक्रययो: प्रसिद्धस्थाने । आपणे । हाटइतिभाषाप्रसिद्धि ॥

हट्टचौर: । पुं० प्रसह्यचौरे । बन्दीकारे । विलासे ॥

हट्टवणिक् । पुं० हट्टवाणिज्यवृत्तिस्याते गणविशेषे ॥

हट्टविलासिनी । स्त्री॰ गन्धद्रव्यविशेषे । धमन्याम् । अञ्जनकेश्याम् । हरिद्रायाम् । हट्टे विलसति॰ तच्छीला । लसक्रीडायाम् । सुपीतिणिनि : ॥

हट्टाध्यक्ष : । पुं॰ अधिकर्मिके ॥

हट्टी । स्त्री॰ क्षुद्रहट्टे । पुरतस्याम् ॥

हठ : । पुं॰ प्रसभे । बलात्कारे ॥ अम्बुपर्य्याम् । प्रशन्याम् । हठनम् । हठप्लुतिशठत्वयो : । पुंसीति॰ खनोघचेतिवाच : ॥

हठनिग्रह : । पुं॰ मूढानुगृहीतनिग्रहविशेषे ॥ तथाहि । चक्षु : श्रोत्रादीनिज्ञानेन्द्रियाणि॰ वाक्पाण्यादीनिकर्मेन्द्रियाणिच॰ तत्तद्गोलकमात्रोपरोधेनहठान्निगृह्यन्ते । तदृष्टान्तेनमनोपिहठेननिग्रहीष्यामीतिमूढस्यभ्रांतिर्भवति । नवततथानिग्रहीतुंशक्यते॰ तद्गोलकस्यहृत्कमलस्यनिरोद्धुमशक्यत्वात् । अत : क्रमनिग्रहएवयुक्त : ॥

हठपर्णी । स्त्री॰ अम्बुताली । शैवाले ॥

हठयोग : । पुं॰ पातञ्जलोक्तप्रसिद्धेऽष्टाङ्गयोगे ॥ योगस्वरोदयोक्तयोगे । यथा । द्वाभ्यांहठयोगस्तुकथ्यतेहठसिद्धिद : । कृत्वासनंपावनांशरीरेरोगहारकम् । पूरकंकुम्भकञ्चैवरेचकंवायुनाभवेत् । इत्थंक्रमोत्क्रमंप्राप्यापवनंसाधयेत्सदा । धौत्यादिकमंषट्कञ्चसंस्कुर्याद्धठसाधक : । एतन्नाड्यास्तुदेवेशिवायुपूर्णप्रतिष्ठितम् ॥ ततोमनोनिश्चलंस्यात्तत्रानन्दमेवहि । हठयोगाल्पकाल : स्यान्मन : शून्येभवेद्यदि । द्वाभ्यांहठयोगस्यद्वितीयंभेदवच्छृणु । नासाग्रेनासिकाग्रेतुसूर्यकोटिसमंस्मरेत् । श्वेतंरक्तंतथापीतंकृष्णमित्यादिरूपत : । एवंध्यात्वाचिरायु : स्याद्धानाननवर्ज्जित : ॥ शिवतुल्योमहात्मासौहठयोगप्रसादत : । हठाज्ज्योतिर्मयोभूत्वाह्यमरोवाशिवोभवेत् ॥ अतोयंहठयोग : स्यात्सिद्धिद : सिद्धसेवितश्चेति ॥

हठालु : । ) स्त्री॰ कुम्भिकायाम् ॥
हठालुका । )

हठो । त्रि॰ हठविशिष्टे ॥

हठी । स्त्री॰ वारिपर्य्याम् ॥

हडि : । पुं॰ बन्धनसाधनकाष्ठयन्त्रविशेषे ॥ यथा । निगडोलोहबन्धेऽस्त्रीहडि : काष्ठस्ययन्त्रण॰ इतिशब्दमाला ॥

हडिक : । पुं॰ मलाकर्षिणि॰ नीचजातिविशेषे । हाडि॰ इ॰ गौ॰ भा॰ ॥

हड्डम् । न॰ अस्थिनि ॥

हड्डक : । पुं॰ हडिक ॥

हड्डजम् । न॰ मज्जनि ॥

हडि : ।)
हडिक : ।) पुं॰ हडिकेमलियहौ ॥
हडिप : ।)

हण्डा । अ॰ कुत्सितास्त्राने । नीचसम्बोधने ॥ यथा हञ्जेतिचेटकाह्वानंमध्याह्वानंहलेतिच । हण्डेतिकुत्सिताह्वानमार्यमारिषउच्यतइति भागुरि : ॥ हण्डाहञ्जाहलाशब्दाः स्त्रय : सम्बोधशाचकाः ॥ पाणिनिषि ॥

हण्डिका । स्त्री॰ हाण्डी॰इतिप्र॰सृत्पात्रे । उखायाम् ॥

हण्डिकासुत : । पुं॰ कृपणे । कोटीहांडी॰इ॰भा॰ ॥ इतिचिकाण्डशेष : ॥

हण्डी । स्त्री॰ हण्डिकायाम् ॥

हण्डे । अ॰ नाट्योक्तौनीचांप्रत्याह्वाने ॥ हिण्डते । हिडिगत्यनादरयो : । बाहुलकादेप्रत्यय : डुतोऽकारश्च ॥

हत : । त्रि॰ हननक्रियाकर्मभूते । नष्टे । प्रमापिते ॥ आशारहिते । भग्नमनसि । मनोहते । प्रतिहते । प्रतिबद्धे ॥ आहते । गुणिते । ताडिते ॥ हन्यतेस्म । हन॰ । क्त : ।

हतक : । पुं॰ नीचलोके ॥

हताश : । त्रि॰ निर्दये ॥ आशारहिते ॥ पिशुने ॥ हताआशायस्मात्॰ इत्यादिविग्रह : ॥ वन्ध्ये ॥

हति : । स्त्री॰ अपकर्षे ॥

हतौजा : । त्रि॰ निस्तेजस्के ॥

हद् : । पुं॰ व्याधौ ॥ शस्त्रे ॥ हन्ति॰चोहारमन्त्यंशा । हन॰ । क्रहनिभ्यांक्नुः । अमुनासिकोपदेशित्यादिनाऽनुनासिकलोप : ॥ हन्तरि ॥

हत्या । स्त्री॰ हनने । बधे ॥

हथ : । त्रि॰ विषमे ॥ हन्ति । हन॰ । हनिकुषिनीरमिकाशिभ्य : क्थन् ॥ * ॥

हन : । त्रि॰ हननकर्तरि ॥

हननम् । न॰ प्राणवियोगफलकव्यापारे । बधे ॥ मरणे ॥

हनु : । स्त्री॰ हट्टविलासिन्याम् ॥ मृत्यौ ॥ अस्त्रे । गदे ॥ अगदे । रक्षारोगे ॥ हरिद्रायाम् ॥ नखौषधौ । नृत्यारम्भे ॥ आयुधे ॥ पुं॰स्त्री॰कपोलावयवे । कपोलाधोभागे ॥ हन्ति । हन॰ शृस्वृस्निहीत्य : ।

हनुग्रह : । पुं॰ हनुस्तम्भाख्येवातव्याधौ ॥

हनुमान् । पुं॰ वायुजे । हनुमति । आञ्जनेये । योगचरे । रामदूते । महावीरे ॥ अतिशयितोहनुर्विद्यतेऽस्य । अतिशायनेमतुप् ॥

हनुस्तम्भ : । पुं॰ अनुग्रहे ।

हनू : । स्त्री॰ हनुशब्दार्थे ॥ हृत्यम

रटीकायांभरत : ॥

हनूमान् । पुं० । वातात्मजे । महावीरे ॥ यथा । जयत्यतिबलोरामो लक्ष्मणश्चमहाबल : । राजाजयति सुग्रीवोराघवेणाभिपालित: ॥ दासोऽहङ्कोशलेन्द्रस्यरामस्याक्लिष्टकर्मण: । हनूमान्शत्रुसैन्यानांनिहन्ता मारुतात्मज : ॥ नरावणसहस्रंमेयुद्धे प्रतिबलंभवेत् । शिलाभिस्तुप्रहरत : पादपैश्चसहस्रश : ॥ अर्द्दयित्वापुरींलङ्कामभिवाद्यचमैथिलीम् । समृद्धार्थोगमिष्यामिमिषतांसर्वरक्षसामिति ॥ अतिशयितेहनुरस्त्यस्य । अतिशायनेमतुप् । अन्येषामपिदृश्यतइतिपाणिनिसूत्रेणदीर्घ : ॥ शरादीनाञ्चेतिदीर्घइति रघुव्याख्यानेमल्लिनाथ : ॥

हनूष : । पुं० राक्षसे । हन्ति० । हम० । ऊषनिभ्यामूषन् ॥

हन्त । अ० वाक्यारम्भे । खेदे । शोके । यथा । कालेनक्षाय तेनानाकार्यै : संसारसम्भवै : । सुखदु : खेजर्नेहन्तनवेत्तिहितमात्मनइति । विषादे । अवसादे ॥ हर्षे ॥ सम्भ्रमे । यथार्थे ॥ दाने ॥ अनुकम्पायाम् ॥ निश्चये ॥ प्रसादे ॥ अनुमतौ । इदानीमर्थे ॥ हन्ति । हन० । बाहुलकात्त : ॥ आर्त्तौ । वादे । अल्पकल्पने ॥

हन्तकार : पुं० अतिथयेदानार्थेकौ शग्रासेषु ॥ यथा । भिक्षाश्चया शतादद्यात्परिव्राड्ब्रह्मचारिणाम् । ग्रासप्रमाणभिक्षाकादयंग्रासचतुष्टयम् ॥ अग्रंचतुर्गुणंप्राहुर्हन्तकारंद्विजोत्तमा : भोजनंहन्तकारश्चाग्रंभिक्षामथापिवा : अदत्त्वातुनभोक्तव्यंयथाविभवमात्मन इति । हन्तशब्दे । इतिमार्कण्डेयमहाकसीपाख्यानम् ॥

हन्ता । त्रि० हननक्रियाकर्त्तरि । जघ्नौ । घातके । हन्त । हन्० । तृच् ॥

हन्न : । त्रि० कृतपुरीषोत्सर्गे । गूने । हदधातोस्त । हदपुरीषोत्सर्गे । क्त : ॥

हन्यमान : । त्रि० ताड्यमाने ॥

हपुषा । स्त्री० हबुषायाम् ॥

हबुषा । स्त्री० हपुषायाम् । हौहवेर० इ० हाउबेर० इ० अप्रसिद्धफलविशेषे । तच्चफलंद्विविधम् । मत्स्यसदृशंविस्रगन्धं प्रथमम्० अश्वत्थफलसदृशंमत्स्यगन्धमपरम् । गुणायथा । हबुषादीपनीतिक्ताकट्वाष्णातुवरागुरु : । पित्तोदरसमीराशीयिहगोगुल्मशूलहृत् । अपराप्येतद्गुणाप्रोक्तारूपभेदेहयीरपि ॥

हम् । अ० रुषोक्तौ । रोषभाषणे ॥ अनुनये । अनुशये । प्रश्ने । असूयायाम् ॥ स्मृतौ । अपाकृतौ ॥

हम्बा । स्त्री॰ हम्भायाम् ॥

हम्भा । स्त्री॰ गोध्वनौ । रम्भायाम् ॥

हय: । पुं॰ घोटके । तुरगे । अश्वे । वाजिनि । तस्य सञ्चिन्तितालक्ष्मीः सन्नियचोत्तमाहया: । हयति । हयगतौ । अच् ॥ हिनोतिवा । अच् ॥ शरीररथस्याकर्षणादिन्द्रियेषु ॥ धनुराशौ ॥

हयकातरा ।)
हयकातरिका ।) स्त्री॰ अश्वकातरायाम् ॥ यथा । कातराहयपर्यायैः कातरान्ता: प्रकीर्त्तिता: । अश्वकातरिकातिक्ताबातघ्नोद्दीपनीपरा ॥ वृ॰ रा॰ नि॰ घट: ॥

हयगन्धम् । न॰ कासमावचर्णे ॥

हयगन्धा । स्त्री॰ अश्वगन्धायाम् ॥ अजमोदायाम् ॥

हयग्रीव: । पुं॰ वेदोद्धारार्थं विष्णोरवतारविशेषे ॥ असुरभेदे ॥

हयग्रीवहा । पुं॰ विष्णौ ॥

हयङ्कष: । पुं॰ मातलौ ॥

हयद्वीप: । पुं॰ लङ्कादिद्वीपवत्समुद्रान्तर्वर्त्तिनिद्वीपविशेषे ॥

हयनम् । न॰ पुरुषस्कन्धवाह्यचौडोलाख्ये यानविशेषे । वर्षीयेथे ॥ हयगतौ । ल्युट् ॥

हयपुच्छी । स्त्री॰ माषपर्ण्यामोषधौ ॥ हयपुच्छमिवपर्णान्यस्या: । गौरादि: ॥

हयप्रिय: । पुं॰ यवे ॥ इतिहेमचन्द्र: ॥

हयप्रिया । स्त्री॰ अश्वगन्धायाम् ॥ खर्ज्जूर्याम् ॥ इतिराजनिर्घण्ट: ॥

हयमार: । पुं॰ करवीरे ॥

हयमारक: । पुं॰ करवीरे ॥ हयानां मारक: ॥

हयमारण: । पुं॰ अश्वत्थवृक्षे ॥

हयवाहन: । पुं॰ सूर्यपुत्रे । रेवन्ते ॥ त्रि॰ हयारोहे ॥ हयोवाहनमस्य ॥

हयवानमञ्जर: । पुं॰ रक्तकाञ्चने ॥

हयशाला । स्त्री॰ मन्दुरायाम् । अश्वालये ॥

हयशीर्ष: । पुं॰ विष्णौ ॥

हया । स्त्री॰ अश्वगन्धायां ।

हयाध्यक्ष: । पुं॰ अश्वाध्यक्षे ॥ सकलयन्तु । हयशिक्षाविधानज्ञस्तच्चिकित्सितपारग: । अश्वाध्यक्षोमहीभर्त्तु: स्वासनश्चप्रशस्यते ॥

हयानन्द: । पुं॰ मुद्गे ॥

हयायुर्वेद: । पुं॰ अश्वचिकित्साशास्त्रे ॥

हयारि: । पुं॰ करवीरे ॥ महिषे ॥

हयासना । स्त्री॰ शल्लकीवृक्षे ॥

हयाह्वया । स्त्री॰ अश्वगन्धायाम् ॥

हयी । स्त्री॰ वाम्याम् । अश्वायाम् । वडवायां । घोडी॰ वृ॰भा॰प्र॰ ॥

रस्त्रीविषयादिस्वत० येपधप्रतिषिधेगवयहयमुकयमनुष्यमत्स्यानाम प्रतिषिध्वृत्तिङीष् ॥

हयेष्ट: । पुं० यवे ॥

हयोत्तम: । पुं० कुलीनाश्वे । आजानेये । वाताश्वे ॥

हर: । पुं० स्मरहरे । शम्भौ । शङ्करे । हरतिसर्हितुकंसंसारदु:खम् । हृञ्हरणे । पचाद्यच् ॥ वैश्वानरे ॥ वानरयूथपतिविशेषे ॥ वि० नाशके ॥

हरगौरी । स्त्री० अर्द्धनारीश्वरमूर्तौ ॥

हरचूडामणि: । पुं० चन्द्रे ॥ शिवशिरोरत्ने ॥

हरणम् । न० सुदाये । यौतकादीनां द्रव्ये । यौतकादिधने ॥ दोर्षिण । भुजे । हृतौ ॥ भोज्याङ्गाङ्गजकाङ्क्षाराभागहरणे ॥ क्रियते । हृञ्हरणे । कर्मणिल्युट् ॥ हरणम्० प्रापणम्स्वीकार: स्तेयंनाशनञ्चेतिवैयाकरणा: । उदाहरन्निचती । भारंहरति० प्रापयति । अंशंहरति० स्वीकरोति । स्वर्णंहरति० चोरयति । पापंहरति० नाशयतीति ।

हरबीज: । न० पारदे ॥

हरवल्लभा । स्त्री० पार्वत्याम् ॥

हररूप: । पुं० महेश्वरे । शिवे ॥

जातिश्च० अ० र० को० ॥

हरबीजम् । न० पारदे ॥

हरशेखरा । स्त्री० गङ्गायाम् ॥

हराक्षम् । न० रुद्राक्षे ॥

हराद्रि: । पुं० कैलासे ॥

हरि: । पुं० ब्रह्मणि । भूम्नि । परमेश्वरे ॥ ब्रह्मदातरिश्रीगुरौ ॥ हरत्यविद्यामात्मज्ञानप्रदानेनेतिनिरुक्ते: । विष्णौ; नारायणे ॥ यथा । हरास्यघंहिस्मृत्तोपांहविभोगकृतुप्वहम् । वर्णश्चमेहरिच्चेष्टस्तस्माद्धरिरहंस्मृत: ॥ हरति । हृञ्० । अचक्र: । हृपिपोत्यादिनेत्वा ॥ चन्द्रे ॥ अर्के । भानौ ॥ यमे ॥ अनिले । वाते ॥ इन्द्रे ॥ सिंहे ॥ अंशौ ॥ अश्वे । वाजिनि ॥ शुके । अहौ । सर्पे ॥ कपौ । वानरे ॥ भेके ॥ हरे । शिवे ॥ अजे । परमेष्ठिनि ॥ लोकान्तरे । वर्षविशेषे ॥ मयूरे ॥ कोकिले । हंसे ॥ अग्नौ ॥ भर्तृहरौ ॥ वि० कपिलवर्णे । पिङ्गे ॥ हरिद्वर्णे ॥ पीतवर्णे ॥ श्रीकृष्णरूपगुणवर्णनप्रास्तवर्गवेधाधिकारङ्कुहचेद्दलमन्यशाखे: । तत्प्रेमभावबलभक्तिविलासनीमहासिषुचेद्यदिरति: किमुकामिनीभि: । तंचेतसाविभजतांव्रजबालकेन्द्रं वृन्दावनञ्चितितलंयमुना

जलस्य । तल्लोकनाथपदपङ्कजधूलि भिर्लिप्तवपुः किलद्रयाऽगुरुच न्दनाद्यैः ॥ इतिपाद्मेपातालख ण्डे १२ ऽध्याय : ॥

हरिक : । पुं॰ पीतहरितवर्णाश्वे । । चालके ॥

हरिकेलीया : । पुं॰ भू॰ वङ्गदेशेषु ॥ त्रि॰ तद्देशस्थे ॥

हरिकेश : । पुं॰ शिवे ॥ शिवभक्तेय चविशेषे ॥

हरिकान्त : । पुं॰ अश्वे ॥ इ॰ का ण्डविशेष : ॥

हरिक्रांता । स्त्री॰ विषणुक्रान्तायाम् ॥

हरिचंदम् । न॰ हरिहरचंदे । पुल हाश्रमे । तद्हरिचंद्र॰इ॰भा॰प्र॰ ॥

हरिगन्धनम् । न॰ हरिचन्दने ॥ ॥

हरिगीतम् । न॰ मात्रावृत्तप्रभेदे ॥ तल्लक्षणन्तु । इन्द्रासनंप्रथमंविस र्जयतदनुसन्ततुषट्कलम्॰ इहत दनुपञ्चकलत्रयंकिलकुरुविरामेकु ण्डलम् । अष्टाधिकामिहविंशतिं चकला : कलावतिसुन्दरं॰ हरि गीतमितिहरिगीतकंवरवृत्तमतिर समन्धिरम् ॥ यथा । सखिवत्समी मियतेभृशंजगदेवशून्यमवेच्यते- परिभिद्यतेममहृदयममंनशर्मसम्प्र तिवीच्यते । परिहीयतेवपुषाभृ शंनलिनीवहिमकरसङ्गता॰ रुद तीपरंवदतीतिसासुदतीरतीशवश ङ्गता ॥

हरिगृहं । न॰ एकचक्रे । शुभपुर्य्याम् । हरिमंदिरे

हरिचक्रम् । न॰ सुदर्शने ॥ सिंहौघे ॥

हरिचन्दनम् । न॰ गोशीर्षे । तैलप र्णिके ॥ अस्यगुणायथा । हरिचन्द नन्तुदिव्यंहिमंतद्दिहदुर्षंहमनुजे: । पित्ताटोपविलोपिवमथुभ्रममशो थमान्द्यभेदोह्लाददिति ॥ पारिभाषि कहरिचन्दनन्तु । घृष्टस्तुलसीका ष्ठंकर्पूरागुरुयोगत : । अथवाकेश रैर्योज्यंहरिचन्दनमुच्यते ॥ ज्योत्‌ स्नायाम् ॥ कुङ्कुमे ॥ अतिशीतैपी तचन्दने ॥ कान्ताङ्गे ॥ पद्मकेशरे ॥ पुं॰ न॰ सुरतरुविशेषे ॥ चन्द यति॰ आह्लादयति । चदिआह्लाद ने । ल्युत : । नन्द्यादित्वाल्ल्यु : । हरेश्चन्दनोहरिचन्दन : ॥ हरेरि न्द्रस्यचन्दनम् । हरि : कपिलवर्णं चन्दनंवा ॥

हरिण : । पुं॰ सारङ्गे ॥ अस्यपर्याया: । मृगेकुरङ्गवातायुहरिणाजिनयोन यइति । ताम्रवर्णीयम् ॥ अस्यमां सगुणायथा । हरिण: शीतलोबद्ध विण्मूत्रोदीपनोलघु: । रसेपाकेच मधुर : सुगन्धि : सान्निपातहेति ॥ त्रि॰ विशदे । पाण्डुवर्णवति । ध वले ॥ हरतिमन: । क्रियतेगीतेनवा । हृञ्॰श्यास्त्याहृञविभ्यइनच् ।

स्वर्वेश्यायाम् ॥ भाद्रशुक्लचतुर्थ्याम् ॥ यथा । भाद्रे मासि सिते पक्षे हस्तर्क्षसंयुता । हरितालीचतुर्थी स्यात्कार्या गौरीप्रीतिदा सदा ॥ भाद्रे मासि सिते पक्षे चतुर्थ्यामभियोगत: । ददाति किल्विषघोरं हस्तसन्दोहसंशय: ॥ करविषामलचंच हरीसूर्ये चतुर्थिका । हरितालो समाख्याता रुद्राणीप्रीतिदा सदा ॥

हरिताश्मम् । न० तुत्थे । नीलाञ्जने ॥

हरिताश्म । न० तुत्थे ॥ पुष्परागे ॥

हरितोषणम् । न० भगवत्प्रीतिकरे सर्वभूतदयालक्षणे कर्म्मविशेषे ॥ हरेराराधने ॥ हरेस्तोषणं येन ॥

हरित्पर्णम् । न० मूलके ॥

हरिद्गर्भ: । पुं० हरित्कुशे ॥ मरुवके ॥

हरिदश्व: । पुं० रवौ । सूर्य्ये ॥ हरन्ति शीघ्रं गन्तव्यदेशं प्रापयन्तीति हरितो हरिन्नामका: अश्वा: यस्य स: ॥ अर्कवृक्षे ॥

हरिदास: । त्रि० भगवद्भक्ते ॥

हरिदेव: । पुं० श्रवणर्क्षे ॥ हरिर्देवो यस्य स: ॥

हरिद्रव: । पुं० नागकेशरचूर्णे ॥

हरिद्रा । स्त्री० निशाख्यायाम् । काञ्चन्याम् । पीतायाम् । वरवर्णिन्याम् । हलदी० इ० भा० प्र० ॥ अस्या गुणास्तु । हरिद्रा कटुका तिक्ता रूक्षोष्णा कफपित्तनुत् । वर्ण्या त्वग्दोषमेहास्रशोथपाण्डुव्रणापहा ॥ चित्त्वग्घ्नि हरिद्रान्या सा शीता वातला मता । पित्तघ्नी मधुरा तिक्ता सर्वकण्डूविनाशिनीति ॥ हरिद्वर्णं विशेषं द्राति । द्राक् कुत्सायां गतौ । आतोऽनुपेति क: । हरिं द्रवति वा । हरितं द्रवति वा । द्रु गतौ । अन्येभ्योऽपीति ड: ॥ हरिं रसं राति वा ॥ टाप् ॥

हरिद्राघ्न: । पुं० हरितालपक्षिणि ॥ हरिद्रांगान्यस्य ॥

हरिद्राभ: । पुं० पीतवर्णे । गौरे ॥ असनवृक्षे । कर्पूरे । त्रि० पीतवर्णवति ॥ हरिद्रेवाभा दीप्तिरस्य ॥

हरिद्राराग: । त्रि० अस्थिरस्नेहे । चलसौहृदे ॥ हरिद्रारागकुररागोस्य । हरिद्रारागश्चाचिरस्थायि स्यात्तथेति यावत् । यथा । क्षणमात्रानुरागे च हरिद्रारागउच्यते इति हलायुध: ॥

हरिद्रु: । पुं० द्रुमे । वृक्षे ॥ दारुहरिद्रायाम् ॥ वृक्षविशेषे । पीतदारुणि । पीतकाष्ठे । हलदुवा० इ० भा० प्र० ॥ हरित् पिङ्ग० पीतो वा द्रुरस्य । यद्वा हरिभिर्द्रूयते । द्रु गतौ । हरिमितयो द्रुब

हतिकुः ॥

हरिद्वारम् । न० तीर्थविशेषे । गङ्गाद्वारे । मायापुर्याम् ॥

हरिनामा । पुं० मुद्गे ॥

हरिनाम । न० श्रीहरेराख्याने ।

हरिनेत्रम् । न० श्रीहरेरक्षिणि । श्वेतपद्मे ॥

हरिनेत्रः । पुं० पेचके । घूके ॥

हरिन्मणिः । पुं० गारुत्मते । मरकतमणौ । हरिद्वर्णमणिः । शाकपार्थिवादिः ॥

हरिन्मुद्गः । पुं० आरण्यमुद्गे ॥

हरिपदम् । न० विष्णुचरणे ॥ रवेः सङ्क्रान्तिविशेषे ॥ यथा । दानविसङ्क्रमतोऽभ्युदितैर्भुवि पदम् मिति । २ । ५ । ८ ११ ॥

हरिपर्णम् । न० मूलके ॥

हरिप्रस्थः । पुं० इन्द्रप्रस्थे ॥

हरिप्रियः । पुं० कदम्बवृक्षे ॥ विष्णुकन्दे ॥ पीतभृङ्गराजे ॥ बन्धूके ॥ शङ्खे ॥ करवीरे ॥ न० उशीरे ॥ कृष्णचन्दने । कालीयके ॥

हरिप्रिया । स्त्री० लक्ष्म्याम् । पद्मालयायाम् ॥ हरेः प्रिया ॥ तुलस्याम् ॥ तमस्कन्दे ॥ गङ्गादिचतसृषु ॥ यथा । गङ्गा सरस्वती लक्ष्मीश्चैतास्तिस्रः प्रिया हरेः । तुलसीसहितास्तत्र ताः कीर्तिताः शुभाः भूतिदेवीभागवतम् ।

हरिबालुकम् । न० एलवालुके । ऐलेये ॥ हरिवर्णबालुकम् ॥ पुं० हारीतपक्षिणि ॥

हरिभक्तः । पुं० हरिसेवके ॥ तल्लक्षणं यथा । सर्वजीवेषु यो विष्णुं भावयेत् समताधिया । हरौ करोति भक्तिं स हरिभक्तः सतां मतः ॥

हरिभद्रम् । न० हरिबालुके ॥

हरिभुक् । पुं० मयूरे ॥ सर्पे ॥

हरिमा । पुं० काले ॥ हरति । हृञ् ० । हृभृधृसृस्तृशृभ्य इमनिच् ॥

हरिमन्थः । पुं० अग्निमन्थे । गणिकारिकायाम् ॥ चणके ॥ हरिभिर्मथ्यते । मन्थ विलोडने ॥ कर्मणि घञ् ॥

हरिमन्थकः । पुं० चणके ॥ स्वार्थे कः ॥

हरिमन्थजः । पुं० चणके ॥ हरीन् अश्वान् मन्थं जनयति । जनी० अन्येष्वपि डः ।

हरिमन्दिरम् । न० विष्णोरायतने । तिलकविशेषे ॥ यथा । तिलकानूर्द्ध्वपुण्ड्रस्य मध्ये छिद्रं हि नारद । यदि कुर्यात्ललाटे तद्विद्धि तं हरिमन्दिरम् ॥ हरेः सर्वावताराणां मत्स्यादीनां विशेषतः । उपासनां तिलकं चैव तं हरिमन्दिरमितिपद्मपुराणम् ॥ अपिच । नासिकायास्त्रिभागैको भागो मानमयो भवेत् । भ्रुवोर्मध्य

द्ध : स्थानं मृगमनुमर्त्तो विध :
इति ॥

हरिय : । पुं॰ पीतवर्णहये ॥

हरिलोचन : । पुं॰ तिर्य्यग्यने । कु
लीरे ॥

हरिवंश । पुं॰ महाभारतीयपर्वविशे
शे ॥ श्रीकृष्णान्वये ॥

हरिवाप् । पुं॰ मुकुन्दे । त्रि॰ हरि
विशिष्टे ।

हरिवर्षम् । न॰ निषधहेमकूटयोर्म्म
ध्यवर्त्ति भारतवर्षांशविशेषे ॥ यथा ।
निषधाद्धरिवर्षं यच्चाक्मलं हेमकूटत
इति ॥ अपिच । दक्षिणे शैलावृत्तं
निषधो हेमकूटो हिमालयइतिप्रागा
यता यथा नीलादयोऽयुतयोजनो त्से
धा हरिवर्षकिम्पुरुषभारतानां यथा
सङ्ख्यमिति श्रीभागवतम् ॥

हरिवल्लभा । स्त्री॰ लक्ष्म्याम् ॥ तुलस्या
म् । जपायाम् । जयायाम् ॥

हरिवासर : । पुं॰ न॰ द्वादश्याःप्रथमे
पादे ॥ यथा । द्वादश्या : प्रथम :
पादो हरिवासरसंज्ञक : । तमति
क्रम्यकुर्व्वीतपारणं विष्णुतत्पर॰ इ
ति ॥ इति विष्णुधर्म्मोत्तरसंहि
ता ॥

हरिवाहन : । पुं॰ गरुडे ॥

हरिविक्रम : । पुं॰ हरे : पराक्रमे ॥
योपिदेकचरणे समुच्छ्रितेजायते हि
हरिविक्रमाभयइतिलघितैरिमावि

शेषे ।

हरिबीजम् । न॰ हरिताले ॥

हरिवर्षम् । न॰ हरिवर्षे ॥

हरिशयनम् । न॰ हरेर्निद्रायाम् ॥ त
च्चाषाढशुक्लैकादशीतः प्रसिद्धम् ॥

हरिश्चन्द्र : । पुं॰ नृपतिविशेषे । स
ताव्यौभक्ते । त्रिशङ्कुजे ॥ ऋषिवि
शेषे ॥ प्रस्कण्वहरिश्चन्द्रास्मपोइति
साधु : ॥ चन्द्रिका देवीस्थानेतीर्थ
विशेषे ॥ इति देवीगीता । शुभेश्च
वीहरिश्चन्द्रइत्यागम : ॥

हरिश्चन्द्रपुरम् । न॰ सौभे । खपुरे ।
जङ्गेपुरे । हरचन्द्रावलो॰ इ॰
भा॰ प्र॰ ॥

हरिषेण : । पुं॰ जिनचक्रवर्त्तिविशेषे
। हरिसुते : यथा । हरिषेणोहरि
सुतोजयोविजयनन्दन : । ब्रह्मसू
नुर्ब्रह्मदत्त : सर्व्वेचेक्ष्वाकुवंशजा :
॥ हरि . सेनायस्य । एतसंज्ञोया
मगादितिष : ॥

हरिसुत : । पुं॰ स्मरे । कामे । मी
नकेतने । हरिषेणे ॥

हरिहय : । पुं॰ इन्द्रे । अधिपतौ ॥
हरिर्हयोयस्य ॥ अश्वविशेषे ॥ यथा
। श्वक्षीधवलरोमाश्वि सुवर्णाभा
नियस्तु । हरि : सवर्णतोऽश्वस्तु
पीतकोषियसप्रभइतिशालिहोत्र :
॥ सूर्ये ॥

हरिहर: । पुं॰ संयुक्तहरिहरमूर्त्तौ ।

प्रान्तपतत्पतद्ग्रहपक्षव्याली लटीपा ट्टराच्छायापरत्वममाकलय्यसकलं-सन्तोषमालम्बयता : ॥ हरतिमनः हृञ्॰ । बाह्वादित्वात् ॰मुटच् ॥

हर्य्यक्ष : । पुं॰ सिंहे ॥ हरिवोपिङ्गलेपक्षिणीयस्य : । बहुव्रीहौ षि तिषच् ॥ कुबेरे ॥

हर्य्यत : । पुं॰ वायौ ॥ अश्वे ॥ हर्यति । हर्यगतिकान्त्यो : । भृमृदृशियजिपर्विपच्यमितमिनमिहर्षिभ्योऽतच् ॥ हर्य्यत : सर्वै : स्पृहणीयइतिवेदभाष्यम् ॥

हर्य्यश्व : । पुं॰ इन्द्रे । हरिहये ॥ हृ॰ बधित् ॥

हर्ष : । पुं॰ मुदि । प्रीतौ । धर्मेपि । सुखे ॥ स्वाप्रियलाभेरोमाश्राश्रुपातादिहेतुरानन्दाभिव्यञ्जकश्चित्तवृत्तिविशेषोहर्षस्मृतः : । हृषतुष्टौ ॥ घञ् ॥

हर्षक : । पुं॰ पर्वतविशेषे ॥ त्रि॰ हर्षकारके ॥

हर्षक्षय : । पुं॰ धातुक्षये ॥

हर्षण : । पुं॰ अक्षिरुग्भेदे ॥ श्राद्धदेवे ॥ योगविशेषे ॥ तत्रजातस्यफलम् । सुखारुणाक्ष : स्फुटपक्ष्मनेत्र : शास्त्रप्रयत्नैर्विनयोपपन्न : । प्रसूतिकालेयदिहर्षण : स्याद्धर्मस्थितोमेधजन : कदाचित् ॥ न॰ हर्षे ॥ त्रि॰ हर्षके हर्षकारके ॥

हर्षमाण : । त्रि॰ विक्रुर्वाणे । प्रमनसि । हृष्टमानसे ॥ हर्षति । हृषुअलीके । ताच्छील्येचानश् ॥

हर्षयित्नु : । पुं॰ पुत्रे । सुते ॥ न॰ काञ्चने । स्वर्णे ॥ हर्षयति । हृषतुष्टौ । तनिहृषीतीत्नुच् । त्रि॰ हर्षयशीले ॥

हर्षस्वन : । पुं॰ किलकिलायाम् ॥ हृ॰ त्रि॰ शेष : ॥

हर्षणी । स्त्री॰ विजयायाम् ॥

हर्षित : । त्रि॰ हृष्टे । सञ्जातहर्षे ॥ हृषु॰ । क्त : । हर्ष : सञ्जातोस्य वा । इतच् ॥

हर्षुल : । पुं॰ मृगे ॥ कामिनि । कामुके ॥ हृष्यति । हृषतुष्टौ । हृषिकुलच ॥

हलम् । न॰ लाङ्गले । गोदारणे । सीरे ॥ हलति । हलविलेखने । अच् ॥ अपगोयोजनेदोषादेः चोयथा । अष्टागवंधर्महलं षड्गवंजीवितार्थिनाम् । चतुर्गवन्नृशंसानां द्विगवंब्रह्मघातिनामितिप्रारोत् ॥

हलदण्ड : । पुं॰ ईषायाम् । हलयुगयोर्मध्यकाष्ठे ॥

हलद्दी । स्त्री॰ हरिद्रायाम् । हृ॰ र॰ गट ॥

हलधर : । ) हलभृत् । ) पुं॰ बलदेवे ॥ हालिके ॥

हल्या । स्त्री॰ हलसमूहे ॥ हलानां समूहः । पाशादिभ्योयः ॥

हल्लकम् । न॰ रक्तसंध्यके । रक्तसौगन्धिकेइतिख्याते । हेला॰ इ॰ गौ॰ भा॰ प्र॰ पुष्पे ॥ रक्तवर्णविकालविकाशिपुष्पविशेषे॰ इत्यन्ये ॥ हलति । हलविकसने । ण्वुल् ॥ यद्वा । हलनम् । सम्पदादित्वात् क्विप् । हलं लाति । लादाने । आतोनुपेतिकः । संज्ञायांकन् ॥

हल्लनम् । त्रि॰ प्रचलायिते । इ॰ ज॰ धरः ॥

हल्लीषम् । न॰ योषितांमण्डलोनृत्ये ॥ स्त्रीणांहल्लीषंसहनर्त्तनमितित्रिकाण्डशेषः ॥

हल्लीषकम् । न॰ स्त्रीणांमण्डलिकानृत्ये । मण्डलेनतुयन्नृत्यंस्त्रीणांहल्लीषकन्तुतदितिहेमचन्द्रः ॥ एकस्पुंसोबह्वीभिः स्त्रीभिः सहक्रीडने ॥ तत्तुरासक्रीडा । यथा । गोपीनांमण्डलोनृत्यबंधेहल्लीषकंविदुरितिकोषात् । तल्लक्षणंरासगोष्ठ्यांद्रष्टव्यम् ॥

हवः । पुं॰ आज्ञायाम् । निदेशे ॥ आह्वाने । हूतौ ॥ अध्वरे । सप्ततन्तौ ॥ ह्वानम् । ह्वेञ् स्पर्द्धायांशब्दे च । भावेऽनुपसर्गस्येत्यप् सम्प्रसारणञ्च ॥ हूयतेऽस्मिन्निति वा ॥ आहवे॰ इतिवेदविदः । आहूयन्ते

परस्परं युद्धार्थं योद्धारोऽत्र ॥

हवङ्गः । पुं॰ कांस्यपात्रे दधिमिश्रितान्नभक्षणे । इतिकश्चित् ॥

हवनम् । न॰ होमे ॥

हवनायुः । पुं॰ अग्नौ ॥

हवनी । स्त्री॰ हवनकुण्डे ॥

हवनीयम् । त्रि॰ हविषि । होमीयद्रव्ये ॥ हूयते । हु॰ । अनीयर् ॥

हविनी । स्त्री॰ होमकुण्डे ॥

हविरशन । पुं॰ अग्नौ ।

हविर्गन्धा । स्त्री॰ शम्यां ॥

हविर्गृहम् ) न॰ हवनगृहे । होहविर्गेहम् । ) मीये ॥

हविर्भुक् । पुं॰ अङ्गिरसः पुत्रे क्षत्रियाणांपितरि ॥ अग्नौ ॥ हवींषि भुङ्क्ते । भुज॰ । क्विप् ।

हविर्भूः । स्त्री॰ पुलस्त्यस्यपत्न्याम् ॥

हविर्मन्थः । पुं॰ अग्निमन्थे । श्रीपर्णे ॥

हविष्कृत् । स्त्री॰ देवानामर्थेयाहविःसम्पादयतितस्याम् ॥

हविष्मत् । पुं॰ हविर्भुजि । त्रि॰ आज्यादिमति ॥ ध्यानभावनावति ॥

हविष्यम् । न॰ हवनीये ॥ भोज्यभेदे ॥ मुन्यन्नादिषु ॥ घृते ॥ हविषेहितम् । उगवादिभ्योयत् ॥

हविष्यान्नम् । न॰ हविष्ये । व्रतादा

वदनीयद्रव्यविशेषे ॥ हविष्यस्तत दन्नञ्च ॥

हवि : । न॰ होतव्यद्रव्ये । सान्नाय्ये । देवतोद्देशेनाग्नौ त्यज्यमानद्रव्ये । यागप्रत्यक्रियाया : साक्षात् कर्मकारके ॥ तद्द्विविधम् । पुरोडाशरूपमाज्यरूपञ्च ॥ घृते । सर्पिषि ॥ हविषांपरिणामोयं यदेतदखिलं जगत् ॥ हूयते । हुदानादनयो : अर्चिशुचिहुसृपीत्यादिना इसि : ॥ मुन्यन्नानिपय : सोमोमांसं यच्चानुपस्कृतम् । अक्षारलवणञ्चैवप्रकृत्याहविरुच्यते इतिमनु : ॥

हवुषा । स्त्री॰ हपुषायाम् ॥

हवै । अ॰ हर्षार्थस्मरणार्थौनिपातौ ॥ प्रसिद्धार्थविश्वौतकौवेदेनिपातौ ॥

हव्यम् । न॰ दैवेऽन्ने । हवनीये । हूयन्तेप्रीणयन्तेदेवायेन॰ हूयते॰ प्रक्षिप्यतेवा । हु॰ । अचोयत् । गुणावादेशौ ॥

हव्यपाक : । पुं॰ चरौ ॥ पच्यते । पचे : कर्मणिघञ् । हव्यञ्चतत्॰ पाकश्च यद्वा । भावेघञ् । पचनम्॰ पाक : । हव्यस्यपाक : ॰ पाकोऽधिकरणम् ॥

हव्यवाह : । पुं॰ अग्नौ ॥

हव्यवाहन : । पुं॰ अग्नौ ॥ हव्यंवहति । यस्मादहेल्युं : ॥

हव्याश : ।
हव्याशन : । पुं॰ अग्नौ ॥
हव्येश : ।

हस : । पुं॰ हास्ये ॥ हसनम् । हसेर्हसने । स्वनहसोर्वेत्यप् ॥

हसन् । त्रि॰ हास्यंकुर्वति ॥ हसेर्लट : शतृ ॥

हसनम् । न॰ हास्ये ॥ हसे॰ । ल्युट् ॥

हसनी । स्त्री॰ अङ्गारधान्याम् ॥ हसति । हसे॰ । कृत्यल्युटइतिल्युट् । टिड्ढेतिङीप् ॥

हसनीमणि : । पुं॰ पर्यंके । अग्नौ ॥

हसन्तिका । स्त्री॰ हसंत्याम् । अङ्गारधान्याम् ॥

हसन्ती । स्त्री॰ अङ्गारधान्याम् ॥ मल्लिकाप्रभेदे ॥ शाकिनीविशेषे ॥ हसति । हसे॰ । लट: शतृ । उगितश्चेतिङीप् । शप्श्यनोरितिनुम् ॥

हसितम् । न॰ अट्टहास्ये ॥ हास्ये ॥ त्रि॰ विकसिते । फुल्ले ॥ हसे॰ । नपुंसकेभावेक्त : ॥

हस्त : । पुं॰ करे । पञ्चशाखे । शये । पाणौ । हाथ॰ दू॰ भा॰ प्र॰ ॥ करिकरे शुण्डायाम् । सं॰ह॰ दू॰ भा॰ प्र॰ ॥ मानभेदे । चतुर्विंशत्यङ्गुलमितेसप्रकोष्ठकरे ॥ यथा । यवानांतदङ्गुलैरेकमङ्गुलंचाष्टभिर्भवेत् । षडद्भिर्वोवितैर्हस्त

सतुविंशद्भिरङ्गुलैरितिकालिकापुराणम् । द्रुमेदे । ऋयोदशर्क्षे । हस्तायाम् । यथा । पुष्योहस्तोऽभिजमथाश्विनसयस्थायाहुः सर्वदिगद्वारकाणीति ॥ केशात्परोग्राते ॥ यथा केशहस्तः । अवसमूहकृत्यर्थः । हसति । हस्तेषा । हसे । हसिमृग्रिणितितम् ॥ क्रि० हस्तायांजाते ॥ अविष्ठःफल्गुनीस्वर्णीलुक् । न० चर्मप्रसेविकायां ॥

हस्तधारणम् । न० परित्राणे । प्राहर्तुमुद्यतस्य हस्तस्य धारणं रोधः । रक्षकस्य पृष्ठहस्तस्थापनं वा ॥ भुजग्रहणे ॥

हस्तपुच्छम् । न० कन्युषि । कल्मषे । हार्थीकां० कृ० भा० प्र० ॥

हस्तवारणम् । न० परित्राणे । मारणोद्यतस्य निवारणे ॥ हस्तेन०-हस्तस्य वा० वारणम् ॥ करेणनिषेधे ॥

हस्तबिम्बम् । न० चन्दनादिना देहविलेपनविशेषे । स्थासके ॥

हस्तसिद्धिः । स्त्री० भृतौ । वेतने । हस्ताभ्यां साध्या सिद्धिः ॥

हस्तसूत्रम् । न० करसूत्रे । कंगणा० इतिविवाहप्रसिद्धे ॥

हस्ता । स्त्री० अश्विन्यादीवयोदशर्क्षे ॥ तत्रजातस्य फलं यथा । दातायशस्त्रीसुतरांमनस्वीभूदेवदेवार्चनतत्
नयवान् । प्रसूतिकालेकिलयस्य हस्ताहस्तस्थितातस्य समस्तसम्पत् ॥

हस्ताङ्गुलिः । स्त्री० करशाखायां ॥

हस्तामलकम् । न० करस्थितामलकीफले ॥ करस्थितस्वच्छजले । वेदान्तग्रन्थविशेषे । पुं० शङ्कराचार्यशिष्यविशेषे ॥

हस्तावसेचनम् । न० उत्तरापोशाने ॥

हस्तास्त्रम् । न० प्रहरणे । हथियार कृ० भा० प्र० ॥

हस्तिकन्दः । पुं० वृहत्कन्दविशेषे । कुष्ठहन्तरि० गजकन्दे ॥

हस्तिकन्दकः । पुं० हस्तिकन्दे । स्वार्थे कः ॥

हस्तिकरञ्जः । पुं० महाकरञ्जे ॥

हस्तिकर्णः । पुं० उरुबूके । एरण्डे । रक्तैरण्डे । स्वनामख्यातेपलाशप्रभेदे ॥ हस्तिकर्णः परं श्लेष्मोमेधायुर्बलवर्द्धनः ॥ हस्तिकन्दे ॥ गणदेवताप्रभेदे ॥

हस्तिकर्णकः । ) पुं० हस्तिकर्णी
हस्तिकर्णदलः । )

भिधेपलाशे । किंशुके ।

हस्तिकारवी । स्त्री० अजमोदायां ।

हस्तिकोलिः । गोबघोमटायाम् ॥

हस्तिगिरिः । पुं० काञ्चीदेशे ॥

हस्तिघोषा । स्त्री० कोशातकीप्रभेदे । महाकोशातक्याम् । नुनिआ० घोयातोरञी० कृ० भा० ॥

हस्तिचारिणी। स्त्री॰ महाकरञ्जे ॥

हस्तिचेष्टितम्। न॰ गजेङ्गिते ॥ तद्यथा। तत्रादौ दन्तकल्पनविधानम्। दन्तस्य मूलपरिधिं द्विरायतं प्रोज्झ्य कल्पयेच्छेषम्। अधिकमनूपचराणां न्यूनं गिरिचारिणां किञ्चित्॥ कल्पितदन्तस्य लक्षणन्तु। श्रीवत्सवर्द्धमानच्छत्रध्वजचामरानुरूपेषु। छेदे दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि॥ प्रहरणसदृशेषु जयो नन्द्यावर्त्ते प्रणष्टदेशाप्तिः। लोष्टे तु लब्धपूर्वस्य भवति देशस्य सम्प्राप्तिः॥ स्त्रीरूपे स्वविनाशो भृङ्गारेऽभ्युत्थिते सुतोत्पत्तिः। कुम्भेन निधिप्राप्तिर्यात्राविघ्नं च दण्डेन॥ ४॥ कृकलासकपिभुजङ्गेष्वसुभिक्षव्याधयो रिपुवशित्वम्। गृध्रोलूकध्वाङ्क्षश्येनाकारेषु जनमरकः॥ ५॥ पाशेऽथवा कबन्धे नृपमृत्युर्जनविपत्स्रुते रक्ते। कृष्णे श्यावे रूक्षे दुर्गन्धे चाशुभं भवति॥ शुभच्छेदलक्षणन्तु। शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवेच्छेदः। गलनम्लानफलानि च दन्तस्य समानि भङ्गेन। अथ शुभाशुभमाह। मूलमध्यदशनाग्रसंस्थिता देवदैत्यमनुजाः क्रमात्ततः। स्फीतमध्यपरिपेलवं फलं शीघ्रमध्यचिरकालसम्भवम्॥ अथ विशेषफलमाह। दन्तभङ्गफलमथ दक्षिणे भूप्रदेशबलविद्रवप्रदम्। वामतः सुतपुरोहितेभयान् हन्ति साटविकदारनायकान्॥ पुनरपि। आदिशेदुभयभङ्गदर्शनात् पार्थिवस्य सकलं कुलक्षयम्। सौम्यलग्नतिथिभादिभिः शुभं वर्द्धते शुभमथोऽन्यथा भवेत्॥ दन्तभङ्गस्य विशेषफलमाह। क्षीरमिष्टफलपुष्पपादपेष्वापगातटविघट्टनेन वा। वाममध्यरदभङ्गखण्डनं शत्रुनाशकृदतोऽन्यथा परम्॥ ११॥ अथ नागेङ्गितमाह। स्खलितगतिरकस्मात्त्रस्तकर्णोऽतिदीनः श्वसिति मृदु सुदीर्घं न्यस्तहस्तः पृथिव्याम्। द्रुतमुकुलितदृष्टिः स्वप्नशीलो विलोमो भयकृदहितभक्षी नैकशोऽसृक्छकृत्कृत्॥ १२॥ शुभचेष्टितमाह। वल्मीकस्थाणुगुल्मक्षुपतरुमथनः स्वेच्छया हृष्टदृष्टिर्यायाद्यात्रानुलोमं त्वरितपदगतिर्वक्त्रमुन्नम्य चोच्चैः। कक्ष्यासन्नाहकाले जनयति च मुहुः शीकरं बृंहितं वा तत्काले वा मदाप्तिर्जयकृदथ रदं वेष्टयेद्दक्षिणं च॥ प्रवेशनं वारिणि वारणस्य ग्राहेण नाशाय भवेन्नृपस्य। ग्राहं गृहीत्वोत्तरणं द्विपस्य तोयात्स्थलं वृद्धिकरं नृपस्य॥ १४॥ इति वाराह्यां ९३ अध्यायः॥

हस्तिच्छाया। स्त्री॰ गजच्छायायाम्॥ कुञ्जरच्छायायाम्॥

हस्तिजिह्वा । स्त्री० नाडीविशेषे । यथा । हस्तिजिह्वोत्पलप्रख्यानाडी तस्याः पुरः स्थिता । तस्याइडायाः । सव्यभागस्थम् दूर्द्धादिपादाङ्गुष्ठान्तमाश्रिता । हस्तिजिह्वाख्यानाडीदक्षिणे चक्षुषिस्थितेति ॥

हस्तिदन्तः । पुं० मूलके । मूली० इ० प्र० मूली ॥ नागदन्ते । खूंटी इ० भा० प्र० ॥ हस्तीरदे ॥

हस्तिदन्तकम् न० मूलके ॥

हस्तिदन्तफला स्त्री० एर्वारौ । ककडी० इ० भा० प्र० ॥ हस्तिदन्तवत्फलानियस्याः ॥

हस्ती । पुं० मत्तमृगे । पीलौ । अस्य पर्यायास्तु । दन्तीदन्तावलोहस्ती० द्विरदोऽनेकपोद्विपः । मतङ्गजोगजोनागः कुञ्जरोवारणः करी ॥ इभः स्तम्बेरमः पद्मीति ॥ हस्तःशुण्डऽस्यास्ति । हस्ताज्जाताविती नि : ॥ हस्तिनापुरस्यनिर्माणकर्त्तरिसुहोत्रराजपुत्रे ॥ यथा । अवत्सवत्सुहोत्रः पुत्रः सुहोत्राद्धस्तीतिश्रुत्या पुराणम् । नारीवेत् क्रामुञ्जीन्मत्त गजंराजाजादानसारुद्धाश्रमुवर्त्तन्तुपरते हस्तिपोदतीति कालिकापुराणम् ॥

हस्तिमखः । पुं० अश्मीपामौ । पूर्द्वारिमृत्कूटे । पुरद्वारऽऽवरणार्थं स्तोकमानिर्मितमृत्कूटे । दुर्गपुरद्वार समीपेयुद्धार्थं यद्दूरतटमन्तः सोपानयुक्तमृत्कूटं यत्रस्थित्वा० विपक्षेपुकाग्रडादिकंक्षिप्यतेतवहस्तिनखइत्यन्ये । पुरद्वारियद्भस्तिनखस्तस्मिन्नित्यमरः । हस्तिनामखइवसदृशःवा । खनुत्रवद्दारणे । अन्येष्वपीतिडः ॥

हस्तिनपुरम् । )
हस्तिनापुरम् । ) न० गजाह्वयेहास्तिनपुरे ॥ हस्तीनामराजा० तेननिर्मितत्वात् ॥

हस्तिनी । स्त्री० गजयोषायाम् । करिण्याम् ॥ धेनुकायाम् । वशायाम् ॥ भाद्रपदादौहस्तिनीप्रसूतेतद्वानमाहकालिदासः । भावीतदापिकरभेकलभः करिण्याश्चेयप्रसूयतइतिधुर्भिर्मौनभक्षे । चक्षव्येनरपतेर्यदिभूमिदेवैतद्दानमस्ति तदुपप्रशमान्तयेत० इति ॥ नारीजातिविशेषे ॥ तल्लक्षणं यथा । स्थूलाधरस्थूलनितम्बभागास्थूलाङ्गुलीस्थूलकुचासुशीला । कामोत्सुकागाढरतिप्रियाचनितम्बखर्वाखलु-हस्तिनीसेति ॥ हट्टविलासिन्याम् । हस्तिशुण्ड्याम् ।

हस्तिनीदुग्धम् । न० दुग्धक्षीरे ॥ तद्गुणायथा । दृष्यंहस्तिनीदुग्धं मधुरंतुवरंगुरु । बल्यंबल्यंहिमंस्निग्धंचतुष्यंस्थिरताकरमिति ॥

हस्तिनीपुरम् । न० हस्तिनापुरे ॥
हस्तिप : । पुं० हस्तिपके ॥ हस्तिनं पाति । पा० । आधोरणे । हस्तिपके :॥
हस्तिपक : । पुं० हस्त्यारोहे । आधोरणे । निषादिनि ॥ स्वार्थे कन् ॥
हस्तिपत : । पुं० हस्तिकन्दे ॥
हस्तिपर्णिका । स्त्री० राजकोषातक्याम् ॥
हस्तिपर्णी । स्त्री० राजकोषातक्याम् । मेनुचा० इ० भा०प्र० ॥ एर्वारौ । कर्कट्याम् ॥ मोरटायाम् ॥
हस्तिमद : । पुं० गजमदे । दाने ॥
हस्तिमल्ल : । पुं० सुरद्विपे । ऐरावते । अभ्रमातङ्गे ॥ विनायके । विघ्नराजे ॥ शङ्खनागे ॥
हस्तिमुख : । पुं० गणेशे ॥ हस्तिवन्मुखं यस्य ॥
हस्तिरोहणक : । पुं० महाकरञ्जे ॥
हस्तिलक्षम् । न० गजस्वरूपे ॥ तन्निरूपणं यथा । भद्रोमन्दोमृगोमिश्रश्चतस्रोगजजातय :॥ तत्रादौभद्रलक्षणम् । मध्वाभदन्ता : सुविभक्तदेहानचोपदिग्धानकृशा : क्षमाश्च । गात्रै : समैश्चापसमानवंशा वराहतुल्यैर्जघनैश्चभद्रा : ॥ मन्दलक्षणं यथा । वक्षोऽथकक्ष्यावलय : श्लथायालम्बोदरस्त्वग्बृहतीगलश्च । स्थूलाचकुक्षि : सहमेचकेनसैंही चदृङ्मन्दमतङ्गजस्य ॥ २ ॥ मृगसङ्कीर्णलक्षणन्तु । मृगास्तुह्रस्वाधरवालमेढ्रास्तन्वङ्घ्रिकण्ठदिशतस्तकर्णा : । स्थूलेक्षणाश्चेतियथोक्तचिह्नै : सङ्कीर्णनागाव्यतिमिश्रचिह्ना : ॥ ३ ॥ अथैतेषामुन्नतिदैर्घ्यपरिणाहानांप्रमाणमाह । पञ्चोन्नति : ० सप्तमृगस्यदैर्घ्यमष्टौचहस्ता : परिणाहमानम् । एकद्विवृद्धावथमन्दभद्रौसङ्कीर्णनागोऽनियतप्रमाण : ॥ अथैतेषांवर्णमदलक्षणमाह । भद्रस्यवर्णोहरितोमदश्चमन्दस्यहारिद्रकसन्निकाश : । कृष्णोमदस्याभिहितोमृगस्यसङ्कीर्णनागस्यमदोविमिश्र : ॥ ५ ॥ गजानांशुभलक्षणान्याह । ताम्रोष्ठतालुवदना : कलविङ्कनेत्रा : स्निग्धोन्नताग्रदशना : पृथुलायतास्या : । चापोन्नतायतनिगूढनिमग्नवंशास्तन्वेकरोमचितकूर्मसमानकुम्भा : ॥ ६ ॥ विस्तीर्णकर्णहनुनाभिललाटगुह्या : कूर्मोन्नतैर्द्विनवविंशतिभिर्नखैश्च । रेखात्रयोपचितवृत्तकरा : सुवालाधन्या : सुगन्धिमदपुष्करमारुताश्च ॥ दीर्घाङ्गुलिरक्तपुष्करा : सजलाम्भोदनिनादबृंहणा: । बृहदायतवृत्तकन्धराधन्याभूमिपतेर्मतङ्गजा : ॥ ८ ॥ अथाशुभलक्षणान् गजानाह । निर्मदाभ्यधि

क्षीणमखाङ्गान् कुब्जवामनकमेष
विषाणान्। दृश्यकोषफलपुष्कर
हीनान् श्यावनीलशबलासिततालू
न्॥ स्वल्पवक्त्ररुहमत्कुणषण्ढा
न् हस्तिनीश्च गजलक्षणयुक्ताम्। ग
र्भिणीश्च नृपतिः परदेशं प्रापयेदथ
विरूपफलास्ते॥ १०॥ अथ कुब्जा
दीनां लक्षणमितु। सङ्क्षिप्तवक्षो
जघनः पृष्ठमध्यसमुन्नतः। प्रमा
णहीनस्तन्नाभिः सकुब्जो वारणा
धमः॥ नानाच्छायासंयुक्तो यो
लिङ्गस्थो भवेद्गजः। वामनः सस
माख्यातो भर्त्तुर्नार्थयशः प्रदः॥
सर्व्वलक्षणसम्पूर्णो दन्तैस्तु परिवर्ज्जि
तः। मत्कुणः स समाख्यातः
सङ्ग्रामे प्राणघातकः॥ पादयोः स
न्निकर्षः स्याद्यस्य नागस्य गच्छतः
। सषण्ढोऽध्वनियुक्तैश्च लक्षणज्ञैर्न
पूजितः॥ अनन्ताभ्यधिकं यस्य वि
स्तारो गात्रमानान्तरम्। विकटः स वि
निर्द्दिष्टो दुर्गतिर्निन्दितो गजः॥
इति वाराह्यां ६३ अध्यायः॥

हस्तिलोध्रः।) हस्तिलोध्रकः।) पुं॰ लोध्रे॥ इति
राजनिर्घण्टः॥

हस्तिवाहः। पुं॰ अङ्कुशे॥

हस्तिविषाणी। स्त्री॰ कदल्याम्॥

हस्तिशाला। स्त्री॰ चतुरे। गजगृहे
पीलुस्थाने॥

हस्तिशुण्डा।) हस्तिशुण्डी।) स्त्री॰ क्षुपविशेषे। ह
स्तिन्याम्। भूरुण्ड्याम्। हाती
शुंडा॰ इ॰ गौ॰ भा॰ प्र॰। अ
स्थिसंहारे॥ यथा। वज्रवल्ल्यस्थि
संहारो हस्तिशुण्डी शमालिकेति हा
रावली॥

हस्तिश्यामाकः। पुं॰ हातियाश्यामा
इति गौडप्रसिद्धे शस्ये॥

हस्ते। अ॰ पाणौ॥

हस्तेकरणम्। न॰ पाणिग्रहणे। वि
वाहे॥

हस्त्यध्यक्षः। पुं॰ गजाध्यक्षे॥ तल्ल
क्षणं यथा। हस्तिशिक्षाविधानज्ञो
वन्यजातिविशारदः। क्लेशक्षमस्त
थाराज्ञो हस्त्यध्यक्षः प्रशस्यते॥ इ
ति मात्स्ये १८९ अध्यायः॥

हस्त्यायुर्वेदः। पुं॰ हस्तिचिकित्सा
शास्त्रे। गजायुर्वेदे॥

हस्त्यारोहः। पुं॰ हस्तिपके। निषा
दिनि॥ तल्लक्षणन्तु। एतैरेव गु
णैर्युक्तः स्थासनश्च विशेषतः। ह
स्त्यारोहो नरेन्द्रस्य सर्व्वकर्म्मसु शस्य
ते इति मात्स्ये १८९ अध्यायः। ए
तैर्हस्त्यध्यक्षगुणैः॥ हस्तिनमा
रोहति। रुहेः कर्म्मण्यण्॥

हस्त्यालुकम्। न॰ कुञ्जरालुके। दी
र्घतायुक्ते महाशरीरे कन्दविशेषे॥

हस्रः। त्रि॰ मूर्खे। हसति। हसि॰

तत्पर्यायाय्था । अथसर्षपौ॰ ख ञ्जनिका तुलिका॰ स्फोटिकेतिचि काण्डशेष : । गोभण्डीर : बक्क कोरोहापुचीराजभद्रिकेतिहाराव लौ ॥

हारिका । स्त्री॰ अम्भर्ण । अम्भाया म् । उपपुष्पिकायाम् । जम्भाई॰ ई॰ भा॰ ॥

हायन : । पुं॰ वर्षे । ज्वाले । वन्हे : शिखायाम् ॥ व्रीहिप्रभे दे । नीवारादाविति मुकुट : । षष्टिकट्टतिस्वामी । शालिजातिवि शेषे॰ इतिभिषज : ॥ पुं॰ न॰ संवत्सरे । शरदि । वर्षे ॥ जहा तित्यजत्युदकम् । ओहाक्त्यागे । भावाम् जिहीतेर्व्याप्नोतिवा । ओ हाङ् गतौ । हस्रश्रीहिभ्यामेर्योरि त्युभयत्रण्यट् ।

हार : । पुं॰ मुक्तावली । मुक्तादाम नि । युधि । सङ्ग्रामे । संयुगे । गुरुवर्णे॰ऽ॰ ॥ सुग्रीवधानरस्यञ्च शुरे । न॰ हरेसरिते ॥ वि॰ मनो हरे । मनोऽह्रियतेऽनेन । हृञ॰ । घञ् ॥ यद्वा । हारयतिमन : । स्वार्थेण्यन्तादच् ॥ हरणम् । भा वेवाघञ् ॥

हारक : । पुं॰ कितवे । चौरे ॥ ग द्यभेदे ॥ विज्ञानविशेषे ॥ शाखोट वृक्षे ॥ भालकाङ्के ॥ वि॰ हरणक र्तरि ॥ हरति । हृञ॰ । ण्वुल् । ह्रियते । बाहुलकात् कर्मणि वा ण्वुल् ॥

हारहारा । स्त्री॰ कपिलद्राक्षायाम् ॥

हारहूरम् । न॰ मद्ये ॥ पुं॰ हेमच न्द्र : ॥

हारहूरा । स्त्री॰ द्राक्षायाम् ॥

हारहूरका । स्त्री॰ गोस्तन्याम् ॥

हारावली । स्त्री॰ पुरुषोत्तमकृतको षविशेषे ॥ हारपङ्क्तौ ॥

हारि : । स्त्री॰ पथिकसन्तत्तौ । पथि कपङ्क्तौ ॥ द्यूतादौपराजये ॥ वि॰ मनोज्ञे । रुचिरे ॥ शुभे ॥ हरति । हृञ॰ । बाहुलकादिञ् ॥

हारिकण्ठ : । पुं॰ कोकिले ॥ वि॰ हाराऽन्वितगले ॥

हारिणिक : । पुं॰ मृगयौ ॥ हरिणा न्हन्ति । पक्षिमत्स्यमृगान्हन्ती तिठक् ॥

हारिणी : स्त्री॰ अत्यष्टिछन्द १० प्रभेदे ॥ तल्लक्षणन्तु । वेदर्त्वश्वैर्मं भनमयलागयेत्तद्धारिणी । य था । यस्यानित्यंश्रुतिकुवलयेश्री मालिनीलोचनेराग : खौयोऽधर किसलयेलाक्षारसारञ्जनम् । गौ रीकान्तिः प्रकृतिरुचिरारम्याङ्गराग च्छटासाकंसारिरजाननकर्धराधाम नोहारिणी ॥ हारवत्याम् ॥

हारित : । पुं॰ पक्षिविशेषे । हारी

ते ॥ हारमित : ॥
हारितकम् । न० शाके ॥
हारिद्र : । पुं० कदम्बवृक्षे । नीपे ॥ विषविशेषे ॥ यथा । हरिद्रातुल्य मूलोयोहारिद्र : समुदाहृत : ॥ हरिद्रावर्णे ॥ त्रि० हरिद्रारञ्जिते ॥
हारिद्रयारक्तम् । हरिद्रामहारजना भ्यमञ् ॥
हारिद्रव : । पुं० मैत्रायणीयानांशाखा प्रभेदे ।
हारिद्रुमत : पुं० गौतमगोत्रेमुनिवि शेषे ॥ हरिद्रुमतोऽपत्यम् । अण् ॥
हारी । त्रि० हारविशिष्टे ॥ हारोस्त्य स्य । इनि : ॥ हर्तरि ॥ अवश्यंह रति । हृञ् । णिनि : ॥
हारी । स्त्री० मौक्तिके । यथा । मुक्ता मुक्ताफलंशुक्तिबीजंहारोपमौक्तिक मितिशब्दरत्नावली ॥
हारीत : । पुं० धर्मशास्त्रप्रवर्त्तकेमु निविशेषे ॥ कैतवे । छद्मनि ॥ पक्षि विशेषे । हरिलाहारीतलङ्कतिलो कप्रसिद्धे ॥ अस्यमांसगुणायथा । हारीतेौरूक्षउष्णा : स्याद्रक्तपित्तक फापह : ।स्वेदस्वरकर : प्रोक्तईष द्वातकरस्तथा : ॥ हारीतोरक्तपीत: स्याद्धारितोऽपिसकथ्यते ॥ हारी मीत : ॥ हारोस्त्यस्मिन्या । इ नि : । हारिमनोहरमितंगमनम स्य ॥ यद्वा । हारयति । क्विप् । ए तिस्म । इगतौ । गत्यर्थेतिक्त : । हारश्चासावीतश्च ॥
हारीतक : । पुं० हारीतखगे ॥ स्वा र्थेक : ॥
हार्दम् । न० प्रेमणि । स्नेहे ॥ अ भिप्राये ॥ हृदयस्यकर्म । युवादि त्वात्० हायनान्तयुवादिभ्योणित्य ण् । हृदयस्यहृल्लेखेतिहृदादेश : ॥ हृदमर्थ्या ॥
हार्दी । त्रि० स्नेहवति ॥
हार्य्य : । पुं० कलिद्रुमे । विभीतके हरणीयाङ्गे । भाव्ये ॥ करणे ॥ त्रि० हर्तव्ये ॥ हर्तुंयोग्य : । हृ ञ् । ऋहलोर्ण्यत् ॥
हाल : । पुं० बलदेवे ॥ शालिवाह नभूपतौ ॥ हले ॥ हलति । ह लविलेखने । ज्वलितिकसन्तेभ्यो ण : ॥
हालक : । पुं० पीतहरितवर्णाश्वे ।
हालहलम् । न० पुं० हालाहलेविषे ॥ हालेइहलति० जठरम् । हल० । पचाद्यच् । हलमिवहलतिवा । अच् । पृषोदरादि ॥ मधुतिष्ठति वाचियोचित्तेहृदयेहालहलमहवि षम् । अतएवनिपीयतेऽधरोहृदयं मुष्टिभिरेवताड्यते ॥
हालहाल : । पुं० न० हालाहले ॥
हाला । स्त्री० सुरायाम् । बलदेवप्रि यायाम् । वरुणात्मजायाम् ॥ ह

लघ्वङ्गम् । हल० । ज्वलतीतिण: ॥ हल्यतेऽनयाबा । हलयेतिघञ् ॥ हालाहलं हन्ति चेत् हालातु साम्प्रतोक्तम् ॥ तालमद्यं ॥

हालाभृत्याणम् । न० विद्म्बराभिधेदेव्या: स्थाने ॥

हालाहल: । पुं० न० विषप्रभेदे ॥ तत्स्वरूपन्तु । गोस्तनाभफलोगुच्छस्तालपत्रच्छदस्तथा । तेजसायस्यदह्यन्ते समीपस्थाद्रुमादय: किञ्चित्स्यायांहिमालये । दक्षिणाब्धितटे देशे कोङ्कणे पिचजायते ॥ हालेरत्याहलंति । हल० पचाद्यच् ॥ हालाहलोनैवविषं विषं रमादरं जनाव्ययमेवमन्वते । येगैनजागर्त्तिनिपोयतंचिव: स्तुश्नूरसाम्मुच्यतिनिद्रयाहरि: ॥

हालाहल: । पुं० कीटविशेषे । अञ्जनिकायाम् । कुटिलकीटके ॥

हालाहलधर: । पुं० सर्प्पे । हालाहलस्यधरोधारक: ॥

हालाहला । स्त्री० अञ्जनिकायाम् । गिरिकायाम् । बालमूषिकायाम् ॥

हालाहली । स्त्री० मदिरायाम् ॥

हालिक: । पुं० कर्षकवर्षे । सैरिके । हलेनखनंति । तेनदीव्यतिखनतीतिठक् ॥ हलं वहति० हलस्यायंवा । हलसीराट्ठक् ॥

हालिनी । स्त्री० स्थूलपल्ल्याम् ॥

हाली । स्त्री० कनिष्ठशालिकायाम् ॥ यथा । कनिष्ठाश्यालिकाहालीयस्मि काकेलिकुञ्चिकेतिहेमचन्द्र: ॥ मदिरायाम् ॥

हालु: । पुं० दन्ते ॥

हाव: । पुं० आह्वाने ॥ स्त्रीणांविलासादौ । नारीणांशृङ्गारभावसुक्रियासु ॥ यथा । स्त्रीणांविलासोबिब्बोकोविभ्रमोललितंतथा । हेलालीलेत्यमीहावा: क्रियाशृङ्गारभावजा: ॥ शृङ्गारात्० रत्यादे:० भावान्मनोविकाराच्चजाता: क्रियास्थ टाय चङ्काराद्याविलासादि काहावशब्दवाच्याइत्यर्थ: ॥ ह्वयनम् । ह्वानादनयो: । क्वचिद्पवादविषयेप्युत्सर्गोऽभिनिविशते० इत्यविषयेघञ् । इतिशब्द: प्रकारे । तेनान्येपिबोध्या: लीलाविलासोविच्छित्तिर्विभ्रम: किलकिञ्चितम् । मोट्टायितंकुट्टमितबिब्बोकोललितंतथा । विहृतञ्चेतिमन्तव्यादशस्त्रीणांस्वभावजाइति ॥ हूयन्तेरागिणोऽनेनेतिहाव: । यद्वाहूयन्तेरागिण: कामान्तावनेनेतिहाव: । अधिकरणेकरणेवाघञ् ॥ यथोक्तम् । युवानोऽनेनहूयन्तेनारीभिर्मदनानले । अतोनिरुच्यतेहावस्तंविलासादयोमताइति ॥ हाक

हाहाहूहू : । पुं॰ गन्धर्वे ।
हि । अ॰ पादपूरणे ॥ हेतौ । विशेषे ।
अवधारणे । प्रश्ने । हेत्वपदेशे ।
सम्भ्रमे ॥ असूयायाम् ॥ अप्यर्थे ॥
निश्चयानुभवप्रसिद्धौ । हिनोति । हि
गतौ । क्विप् । संज्ञापूर्वकत्वाद्
णाभाव: । अपितुगभावोऽपि ।
भावेऽप्रत्ययौ ॥
हिंसक : पुं॰ व्याघ्रे । हिंस्रपशौ
। अथर्ववेदज्ञब्राह्मणे ॥ शत्रौ ।
त्रि॰ हिंसाकर्त्तरि । नृशंसे । घा
तुके ॥ हिनस्तितच्छील: । हिसि
हिंसायाम् । निन्दहिंसक्लिशेति
वुञ् । शरणागतबालस्त्रीहिंसका
न्संवसेन्नतु चीर्णव्रतानपिसदा
कृतप्रत्यहितानिमान् ॥
हिंसा । स्त्री॰ चौर्यादिकर्मणि ॥
आदिना वधबन्धासताभाषणादयो ग्रा
ह्या: । घाते । वधे । अयस्तोऽपि
प्राणिवधे ॥ सा च कृतकारितानु
मोदितभेदेन त्रिविधा । कायवा
ङ्मनोभि: प्राणिनां पीडने । प्रा
णवृत्तिच्छेदे । स्वाभिप्रायप्रकटने
न परवृत्तिच्छेदने ॥ कायक्लेशं म
नोदु: खं वधं वा प्राणिनां पुन: ।
य: प्रवर्त्तयति हि वा तु साहिंसेति
समासत: । इतिदेवल: ॥ हिंसन
म् । हिसि । गुरोश्च हल: । टा
प् ॥ एवेगुरावरण्ये वानिवसन्ना
त्मवानद्विज: । नाऽवेदविहितांहिं
सामापद्यपिसमाचरेत् ॥ कथं त
र्हितुल्ये हिंसात्वे वैदिकी हीना-
दिक्षुहिंसानाधर्माधिक्यमपाह ।
यावेदविहिताहिंसानियतास्मिंश्च
राचरे । अहिंसामेवतांविद्याद्वेदा
द्धर्मोहिनिर्बभौ । इतिमनु: ।
याश्रुतिविहिताकर्मविशेषदेशका
लादिनियता । अस्मिन्जगतिस्था
वरजङ्गमात्मनि॰ अहिंसामेवतांजा
नीयात्॰ हिंसाजन्याधर्मविरहात् ।
दैवपशुहननम्॰ अधर्म॰ प्राणिह
ननत्वात्॰ ब्राह्मणहननवदित्याद्य
नुमानम्॰ उपजीव्यशास्त्रबाधादे
वनप्रवर्त्तते । दृष्टान्तीकृतब्राह्मण
हननमप्यधर्मत्वे । शास्त्रमेवोप
जीव्यम् । वेदाद्धर्मोहिनिर्बभौ ।
यस्माद्नन्यप्रमाणकोधर्मोवेदादेव
नि: शेषेणप्रकाशत इत्येतद्कुल्लू
कभट्ट: ॥ यज्ञार्थंब्राह्मणैर्व
ध्या: प्रशस्तामृगपक्षिण: । भृत्या
नाञ्चैवदृत्त्यर्थमगस्त्योह्याचरत्पुरा
॥ बभूवुर्हिपुरोडाशाभक्ष्याणांमृग
पक्षिणाम् । पुराणेष्वपियज्ञेषुब्रह्म
क्षत्रसवेषुचेतिमनु ॥ पुरातनेष्वपि
ऋषिकर्त्तृकयज्ञेषुभक्ष्याणांमृगप-
क्षिणांमांसैनपुरोडाशाअभवन् । त
स्मात्॰ यज्ञार्थमधुनातनैरपिमृग
पक्षिणोवध्याइतिकुल्लूकभट्ट: ॥

हिंसाकर्म्म । न॰ अथर्ववेदोक्तमन्त्रयन्त्रादिनिष्पादितमारणोच्चाटनादिक्रियायाम् । अभिचारे ॥ हिंसाफलं कर्म्म । शाक्तपार्थिवादिः ॥

हिंसात्मकः । त्रि॰ हिंसास्वभावे ॥

हिंसारुः । पुं॰ व्याघ्रे ॥

हिंसालुकः । पुं॰ खादुकेशुनि । कटखना॰ खाणया॰ कुत्ता इ॰ भा॰ ॥

हिंसितः । त्रि॰ प्राप्तहिंसे । हिंसां प्राप्ते ॥ यथा । यस्तु कन्यां पितादत्त्वा न प्रयच्छति तां पुनः । अष्टौ पितृगणास्तेन हिंसिता नात्र संशयः ॥ इ॰ वाराहपु॰ ॥

हिंसीरः । पुं॰ व्याघ्रे ॥ त्रि॰ खले । दुष्टे ॥ हिनस्ति । हिंसि॰ । हिंसीरन्नीरचौ । स्वरभेदः ॥

हिंस्रः । पुं॰ घोरे ॥ भीमसेने ॥ हरे ॥ त्रि॰ हिंसाशीले । शरारौ । घातुके ॥ हिंस्राणां हिंसने दोषाभावो यथा । कृपाकार्य्या सतां शश्वत् हिंस्रेषु च जन्तुषु । हिंसायां नहि दोषश्च हिंस्राणां व्रजेश्वर । इ॰ ब्र॰ वै॰ कृ॰ जन्मखण्डे ८५ अध्यायः ॥ हिनस्ति । हिंसि॰ । नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥

हिंस्रकः । पुं॰ हिंस्रपशौ । व्याडे ॥ स्वार्थे कः ॥

हिंस्रपशुः । पुं॰ हिंसकजन्तौ । व्याडे । हिंसकी ॥

हिंस्रा । स्त्री॰ हींस॰ इ॰ भा॰ प्र॰ सिद्धे । काकादन्याम् ॥ जटामांस्याम् ॥ वसायाम् ॥ हिनस्ति । हिंसि॰ । रः । टाप् । नगवेदुकायाम् ॥ नाड्याम् ॥

हिक्का । स्त्री॰ ऊर्द्ध्ववातप्रवृत्तौ शब्दविशेषे ॥ रोगोपसर्गविशेषे ॥ रोगविशेषे ॥ अस्याविप्रकृष्टनिदानमाह । विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः । शीतपानाशनस्नानरजोधूमैस्तथानिलैः ॥ व्यायामकर्म्मभाराध्ववेगाघातापतर्पणैः । हिक्काश्वासश्च कासश्च नृणां समुपजायते ॥ अपतर्पणम्॰ अनशनादि ॥ सम्प्राप्तिमाह । वायुः कफमानुगतः पञ्च हिक्काः करोति हि । अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा ॥ सामान्यलक्षणन्तु । मुहुर्मुहुर्वायुरुदेति सस्वनो यकृत्प्लिहान्त्राणि मुखादिवक्षिपन् । सदोषवानाशु हिनस्त्यसून् यतस्ततस्तु हिक्केत्यभिधीयते बुधैरिति ॥ हिनस्तीति हिक्का । पृषोदरादित्वात् रूपसिद्धिः । हिगिति कायति॰ शब्दं करोतीति वा ॥ हिक्कनम् । हिक्क अव्यक्ते शब्दे । गुरोश्च हलः । टाप् ॥ यद्वा । हिक्कयते । हिक्क हिंसायाम् । पचाद्यच् ॥

हिक्कारः । पुं॰ सामभक्त्यन्तरे । पाश्च

भक्तिकस्य नाम्नः प्रथमायाम् भक्तौ ॥

हिङ्गु । न० मूलविशेषस्य निर्यासे वधूपनि ॥ अस्य पर्य्याया गुणाश्च यथा । सहस्रवेधि जतुकं वाह्लीकं हिङ्गु रामठम् ॥ हिङ्गूष्णं पाचनं रुच्यं तीक्ष्णं वातबलासनुत् । रसे पाके च कटुकं स्निग्धं च वह्निदीपनम् ॥ शूलगुल्मोदरानाहकृमिघ्नं पित्तवर्द्धनमिति ॥ हिनोति । हि गतौ वृद्धौ च । हिं गच्छतीति वा । मृगय्वादिः ॥ वंशपत्र्याम् ।

हिङ्गुनाडिका । स्त्री० नाडीहिङ्गुनि । रामठ्याम् ॥

हिंगुनिर्य्यासः पुं० निम्बवृक्षे ॥ हिङ्ग्वाकारो हिङ्गुगन्धो वा निर्य्यासो यस्य ॥ हिङ्गुरसे ॥

हिङ्गुपत्रः । पुं० इङ्गुदीवृक्षे । हिङ्गोटः । इ० भा० प्र० ॥ हिङ्गुनः पत्रमिव पत्रं यस्य ॥

हिङ्गुपत्री । स्त्री० कारव्याम् । पृथ्वीकायाम् । त्वक्पत्र्याम् ॥ अस्या गुणा यथा । हिङ्गुपत्री भवेद्रुच्या तीक्ष्णोष्णा पाचनी कटुः । हृद्बस्तिरुग्विबन्धार्शःश्लेष्मगुल्मानिलापहा ॥ हिङ्गुपत्रमिव पत्रमस्याः ॥ हिङ्गुनः पत्रे ॥

हिङ्गुपर्णी । स्त्री । वंशपत्र्याम् ॥

हिङ्गुलः । पुं० न० कुङ्कुमविन्दौ । हंसपादे ॥ अन्यनामानि० लक्षणानि गुणाश्च यथा । हिङ्गुलं दरदं म्लेच्छं चित्रासं चूर्णपारदम् ॥ दरदस्त्रिविधः प्रोक्तश्चर्मारः शुकतुण्डकः । हंसपादस्तृतीयः स्याद्गुणवानुत्तरोत्तरः ॥ चर्मारः शुक्लवर्णः स्यात्सपीतः शुकतुण्डकः । जपाकुसुमसङ्काशो हंसपादो महोत्तमः ॥ तिक्तं कषायं कटु हिङ्गुलं स्यान्नेत्रामयघ्नं कफपित्तहारि । हृल्लासकुष्ठज्वरकामलांश्च प्लीहामवातौ च गरं निहन्ति ॥ ऊर्द्ध्वपातनयुक्त्या तु डमरुयन्त्रपाचितम् । हिङ्गुलं तस्य सूतन्तु शुद्धमेव न शोधयेत् ॥ शोधनविधिस्तु । मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम् । सप्तवारान् प्रयत्नेन शुद्धिमायाति निश्चितम् ॥ शोधितस्य गुणास्तूक्तास्तिक्तं कषायमित्यादिना ॥ हिङ्गुलाद्रसाकर्षणविधिर्यथा । निम्बूरसैर्निम्बपत्ररसैर्वा याममात्रकम् । घृष्ट्वा दरदमूर्द्ध्वन्तु पातयेत्सूतयुक्तिवत् । ततोर्द्ध्वपिठरीलग्नं गृह्णीयाद्रसमुत्तमम् । शुद्धमेव हि तत्सूतं सर्वकर्मसु योजयेत् ॥ इ० भा० प्र० ॥ सिन्दूरे ॥

हिंगुला । स्त्री० देशविशेषे । यथा । ब्रह्मरन्ध्रं हिंगुलायां भैरवो भीमलोचनः । कोट्टवी सा महामाया त्रिगुणा या दिगम्बरी । इति मन्त्रचूडा

मणीपीठमाला ॥ वामनपुराण मपियथा । कन्याचेत्रूखे दसङ्का तासास्त्वलिलिहितुता । ततस्ता माहशलाकंप्रभांभैरवमूर्त्तिमान् शङ्करोवरदोलोकश्रेयोर्थायचोम हत् त्वांपूजयिष्यन्तिसुराश्चषयः पितरस्तथा ॥ यक्षविद्याधराश्चैव मानवांश्चशुभङ्करि। त्वांस्तोष्यन्तिस द्रादेविबलिपुष्पोत्करैः करैः च चर्चेतिशुभंनामयस्माद्रुधिरच र्चिता । त्वंवमुक्तावरदेनचर्चि काभूतानुयाताहरिचर्मवासिनी- महीसमस्ताविचचारसुन्दरीस्थानंग ताहिङ्गुलमाद्यमुत्तममिति ॥

हिंगुलिः । पुं॰ हिंगुले ॥

हिंगुलिका । स्त्री॰ कण्टकार्याम् । भण्टाक्याम् ॥

हिंगुली । स्त्री॰ वार्त्ताक्याम् । सिं ह्याम् । भण्टाक्याम् ॥ हिंगुला ति । ला॰ । घातोनुपेतिकः । गौरादित्वान्ङीष् ॥ वृहत्याम् । कण्टकार्याम् ॥

हिंगुलु : पुं॰ न॰ रक्तवर्णद्रव्यविशेषे ॥ यथा । दारदस्तुहिंगुलुः स्याद्धि ङ्गुलंरक्तपारदमितिविकाण्डशे- षः ।

हिंगुशिंशाटिका। स्त्री॰ वंशपत्र्याम् ॥

हिंगूलम् । न॰ आलुविशेषे । मधुमू ले । मौचालू॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

हिज्जः । पुं॰ हिज्जले ।

हिज्जल : । पुं॰ वृक्षे । निचुले । जलवेतसविशेषे ॥ यथा । हिज्जलो हिज्जलश्चापिनिचुलश्चाम्बुजस्तथा । जलवेतसवद्वेद्योहिज्जलोयंविषाप हः । इतिभावप्रकाशः ॥ हिनो ति हिगतौवृद्धौच । क्विप् । हित्जलमस्य ॥ स्थलवेतसवृक्षेन्ये ॥ समुद्रफलेतिख्यातवृक्षेपरे ॥

हिञ्जोर : । पुं॰ हस्तिपादबन्धे । नि गडे । अन्दुके ॥ इतिहेमचन्द्रः ॥

हिडम्ब :। ) पुं॰ असुरविशेषे ।<br>हिडिम्ब : । )

हिडिम्बजित् । )<br>हिडिम्बनिसूदन : । ) पुं॰ भीमसेने ।<br>हिडिम्बभित् । )

हिडिम्बा । स्त्री॰ हिडिम्बासुरभगि न्याम् ।

हिडिम्बापति : । )<br>हिडिम्बारमण : । ) पुं॰ हनूमति । रामदूते । अर्जुनध्वजे ॥

हिण्डनम् । न॰ भ्रमणे । रते ॥ या ने ॥ क्रीडायाम् ॥ हिडिगत्यनादरयोः । ल्युट् ॥

हिण्डक : । पुं॰ लग्नाचार्ये ।।

हिण्डिर : । पुं॰ हिण्डीरे ।।

हिण्डी । स्त्री॰ शिखरवासिन्याम् । । दुर्गायाम् ।। इ॰ शि॰ शेष :।।

हिन्दोल: । पुं॰ श्रावणशुक्लपक्षविहितभगवद्यात्राविशेषे । दोलयात्रेति प्रसिद्धे । षड्रागान्तर्गतरागविशेषे । यथा । भैरव: कौशिकश्चैव हिन्दोलो दीपकस्तथा । श्रीरागो मेघरागश्च षडेते पुरुषाह्वया इति ॥

हिन्दोलक: । पुं॰ यानविशेषे । दोलायाम् । प्रेङ्खायाम् ॥

हिन्दोलनम् । न॰ दोलने ॥

हिन्दोला । स्त्री॰ दोलिकायाम् ॥

हिबुकम् । न॰ लग्नाच्चतुर्थभवने ॥

हिम: । पुं॰ चन्दनवृक्षे ॥ कर्पूरे ॥ चन्द्रे । हेमन्तर्त्तौ ॥ हिमालयपर्वते ॥ न॰ खबाष्पे । रजनीजले ॥ तत्पर्यायो यथा । अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् । प्राबेयं महिकेति ॥ चन्दने ॥ नवनीते ॥ मौक्तिके ॥ पद्मकाष्ठे ॥ रङ्गे ॥ शीते ॥ त्रि॰ शीतले ॥ हन्ति । हन॰ । हन्तेर्हिचेतिमक् ॥

हिमक: । पुं॰ विकङ्कतवृक्षे ॥

हिमकर: । ) हिमकिरण: । ) पुं॰ चन्द्रे । कर्पूरे ॥ हिमा: करा किरणा यस्य स: ॥

हिमकूट: । पुं॰ शिशिरर्त्तौ ॥ हिमवत्यद्रौ ॥

हिमगिरि: । पुं॰ हिमालयपर्वते ॥

हिमज: । पुं॰ मैनाकाचले । मेनकापुत्रे । हिमात् जात: । जनी॰ । पञ्चम्यामितिड: ॥ न॰ हिमोद्भवे ॥

हिमजा । स्त्री॰ गौर्य्याम् । पार्वत्याम् ॥ हिमात् हिमालयात् जाता । जनी॰ । ड: । टाप् ॥ शच्याम् । इन्द्राण्याम् । क्षीरिण्याम् ॥

हिमझण्टि: । पुं॰ भूमिकायाम् । कुहेलिकायाम् ॥

हिमतैलम् । न॰ कर्पूरतैले ॥

हिमदुग्धा । ) हिमदुग्धिका । ) स्त्री॰ क्षीरिण्याम् ॥

हिमदुर्दिनम् । न॰ पतद्धिमे । हिमनिपातितैनदुर्दिने ॥

हिमद्युति: । पुं॰ इन्दौ । चन्द्रे ॥ हिमाद्युतिर्यस्य स: ॥

हिमद्रुम: । पुं॰ महानिम्बे ॥

हिमनामा । पुं॰ कर्पूरे ॥ हिमस्य नामान्येव नामान्यस्य ॥

हिमप्रस्थ: । पुं॰ हिमगिरौ ॥

हिमवान् । पुं॰ उमागुरौ । नगाधिराजे । हिमालये ॥ यतद्रु चन्द्रभागाद्या: हिमवत्पादनि:सृता: । सतां निषेव्यो हिमवान् भोगिनां मलयाऽचल: ॥ हिमम् अस्त्यस्मिन्नस्ति । मतुप् । वत्वम् ॥

हिमवत्सुत: । पुं॰ हिरण्यनाभे । मैनाकाचले ॥

हिमवत्सुता । स्त्री॰ उमायाम् ।

गौर्य्याम् । हिमवतः सुता ॥ ग ङ्गायाम् ॥ इ॰ ध॰ य: ॥

हिमवत्सुताबन्ध: । पुं॰ । भीमे तीर्थविशेषे ॥

हिमवालुक: । पुं॰ कर्पूरे । इ॰ राजनिघण्ट: ॥

हिमवालुका । स्त्री॰ कर्पूरे ॥ हि मावासौबालुकाच ॥

हिमशर्करा । स्त्री॰ यावनाल्याम् ॥

हिमशैल: । पुं॰ हिमवति । मे नाधवे ॥ हिमप्रधान: शैल: ॥

हिमशैलजा । स्त्री॰ पार्वत्याम् ॥

हिमसंहति: । स्त्री॰ महाहिमे । हिमान्याम् ॥ हिमानांसंहति: ॥

हिमह: । पुं॰ चादित्ये ॥ वह्नौ ॥ हिमंजाड्यंहन्तीतिहिमह: । ड:

हिमहासक: । पुं॰ हिन्तालवृक्षे ॥

हिमा । स्त्री॰ नागरमुस्तके । सू क्ष्मैलायाम् ॥ रेणुकायाम् ॥ पृ क्कायाम् । भद्रमुस्तायाम् ॥ च णिकायां ॥

हिमांशु: । पुं॰ चन्द्रमसि ॥ हि मामंशवोयस्यस: ॥ कर्पूरे ॥

हिमांशुभिख्य: । पुं॰ कर्पूरे । न॰ रौप्ये ॥

हिमाग: । पुं॰ हिमालये ॥ हि मप्रधानोग: ॥

हिमागम: । पुं॰ हेमन्ते ॥ हि मस्यागमोयस्मिन् ॥

हिमाचल: । पुं॰ हिमालये ॥

हिमात्यय: । पुं॰ वसन्तर्त्तौ । हि मस्यात्ययोयस्मिन् ॥

हिमाद्रि: । पुं॰ हिमशैले ॥

हिमाद्रिजा । स्त्री॰ पार्वत्याम् ॥ हिमाद्रेर्जाता । जनी॰ । ड: । टाप् ॥ क्षीरिण्याम् ॥

हिमाद्रितनया । स्त्री॰ पार्वत्याम् ॥

हिमाद्रितनयापति: । पुं॰ शिवे ॥

हिमानी । स्त्री॰ हिमसंहतौ ॥ महद्धिमम् । हिमारण्ययोर्महत्त्वइति ङीषानुकौ ॥ यथा । आगतावत- सरेवहिमानीसेव्यताम् सुरतरङ्गि- णीसदा । कृष्णवर्त्मनिगुणानुकल यन्तीजोवनैपुलवयन्त्यनुरागम् ॥ यावनालशर्करायाम् ॥

हिमाराति: । पुं॰ चीतिहोत्रे । ध- नञ्जये ॥ किरणमालिनि । सूर्य्ये ॥ हिमस्यारातिः ॥

हिमाल: । पुं॰ हिमशैले ॥ हिमेन चल्यते । चलभूषणादौ ॥ घञ् ॥

हिमालय: । पुं॰ भारतवर्षस्यसी मापर्व्वते । उदग्द्रौ । नगपतौ । मेनाधवे । उमागुरौ ॥ स्थावराणां मध्ये॰भगवतोविभूतिरयम् ॥ हि मस्यालय: ॥ शुक्लखदिरे ॥

हिमालयसुता । स्त्री॰ पार्वत्याम् ॥

हिमालया । स्त्री॰ भूम्यामलक्याम् ॥

हिमाञ्जम् । न॰ उत्पले ॥

हिमावती । स्त्री० स्वर्णक्षीर्याम् ॥ हिममस्त्यस्याः । मतुप् । शरादीनांचेतिदीर्घः ॥

हिमाश्रया । स्त्री० स्वर्णक्षीरयाम् ॥

हिमाह्वय : । पुं० कर्पूरे ॥

हिमिका । स्त्री० तृणोपरिपतितहिमे ॥ तुहिनमित्यर्थः ॥

हिमेलु : । त्रि० हिमार्त्ते । शीतभीते ॥ हिमं नसहते । हिमाच्चेलुः ॥

हिमोत्तर : । त्रि० शीतले ।

हिमोत्तरा । स्त्री० कपिलद्राक्षायाम् ॥

हिमोत्पन्ना । स्त्री० यावनाल्याम् ॥

हिमोद्भवा । स्त्री० शट्याम् ॥ क्षीरिण्याम् ॥

हिम्या : । पुं० भूभि हिमवति पर्वते ॥ प्रशस्तं हिममस्यास्मिन्वास्ति । पन्थ्योपि दृश्यत इति यप् ॥

हिरण्म् । न० रेतसि । स्वर्णे । वराटे । हिरण्यमिव वराट इ० हेमचन्द्र : ॥

हिरण्मय : । पुं० सुरज्येष्ठे । ब्रह्मणि । विश्वसृजि । न० भारतवर्षादिनववर्षान्तर्गतवर्षविशेषे । त्रि० तैजोमये ॥ सुवर्णमये ॥ हिरण्यस्य विकार : । मयट् । दाण्डिनायनेति ट्लोपे निपात्यते । हिरण्यये० छन्दसि मलोपे निपात्यते । हिरण्यये मसविर्तितिदर्शनात् ॥

हिरण्यम् । न० रेतसि । द्रव्ये ॥ धान्तकुम्भे । स्वर्णे ॥ वराटे ॥ अक्षये ॥ मानभेदे ॥ अकुप्ये ॥ रूप्ये ॥ श्वेतपर्वतादुदीच्यांदिशिवर्तमानेवर्षविशेषे ॥ हर्यति । हर्यतिकान्तयो : । हर्यते : कन्यन्हिरच्च ।

हिरण्यक : । पुं० देवदत्तादिहिरण्याख्यायाम् ॥ हिरण्यकाम : । धनहिरण्यत्कामइतिकन् ॥

हिरण्यकशिपु : । पुं० कश्यपाद्दित्यांजातेदैत्यविशेषे ॥ हिरण्यकशिपुरस्य ।

हिरण्यकशिपुहा । पुं० विष्णौ ।

हिरण्यकामधेनु : । स्त्री० षोडशमहादानान्तर्गतमहादानविशेषे ॥

हिरण्यकोष : । पुं० घटिताघटितहेमरूप्ययो : ॥ यथा । हिरण्यकोषा : कुप्यान्निहेम्निरूप्येकृताकृते० इतिहेमचन्द्र : । अमरस्तु० स्यात्कोशश्चहिरण्यञ्चहेमरूप्येकृताकृते । ताभ्यांयिन्नायदन्यत्तत्कुप्यमित्याह ॥

हिरण्यगर्भ : । पुं० ब्रह्मणि । लोकेशे । चतुरानने ॥ हिरण्यंहिरण्मयमण्डम्० तद्गर्भइवतदन्तर्वर्तित्वात् । यथामनु : । तदण्डमभवद्धैमंसहस्रांशुसमप्रभम् । तस्मिन्जज्ञेस्वयंब्रह्मासर्वलोकपितामहइति ॥ यद्वा हिरण्यंहिरण्मयमण्डंगर्भोऽस्य ॥ अथवा० हिरण्यंहिरण्मयंसुवर्णप्रचुरम्० तदात्प्रकाशवत्कुलंब्रह्मा

हिरण्यस्तूप : । पुं॰ ऋषिविशेषे । अङ्गिरस : पुत्रे ॥

हिरण्याक्ष : । पुं॰ कश्यपादित्यांसमुत्पन्ने॰ आद्यदैत्यविशेषे ।

हिरण्याश्व: । पुं॰ तुलापुरुषादिषोडशमहादानान्तर्गतमहादानविशेषे ।

हिरण्याश्वरथ : । पुं॰ षोडशमहादानान्तर्गतमहादानविशेषे ।

हिरुक् । अ॰ विनार्थे । हिरुक्कर्माणिमेऽच : ॥ मध्यार्थे ॥ हिनोति । हिगतौ । रुक् प्रत्यय : । सामीप्ये । अधर्मार्थे ।

हिलमोचि. । स्त्री॰ हिलमोचिकायाम् ॥

हिलमोचिका । स्त्री॰ ब्राह्म्याम् । आचार्याम् । चक्राङ्ग्याम् । हिलशा॰ कृ॰ गौ॰ भा॰ प्र॰ हिलसा स्यभाषे । यथा । शोथं कुष्ठं कफं पित्तं हरतेहिलमोचिका । हिलति । हिलभावकरणे । इगुपधेतिक : । मोचयति । मुचेर्ण्वुल् । हिलाचासौमोचिका । ङ्यापोरितिह्रस्व : ॥ चुरौ ॥

हिलमोची । स्त्री॰ हिलमोचिकायां ।

हिल्ल : । पुं॰ मरादिपक्षिणि ।

हिल्लोल: । पुं॰ तरङ्गे । नद्यादिजलस्यवायुनातिर्यग्रूर्ध्वगमने । रतिबन्धविशेषे । यथा । हृदिकृत्वास्त्रिय: पादौकराभ्यांधरयेत् कुचौ । यथेष्टंताडयेद्योनिं बन्धोहिल्लोलसंज्ञक : ॥

हिल्वला । स्त्री॰ इल्वलायाम् ।

हिवुकम् । न॰ लग्नाच्चतुर्थभवने ॥

ही । अ॰ दु: खहेतौ ॥ विषादे । विस्मये ॥ यथा । हाविधिलुलितानांहीविचित्रोविपाक : ॥ हिनोति । हि॰ विच् । संज्ञापूर्वकत्वान्नगुण : । क्विपितुगभावोवा । भावेवाप्रत्ययौ । पृषोदरादित्वाद्दीर्घ: ॥ हननम्बाहुलकाड्डीर्वा । शोके ॥

हीन : । त्रि॰ गर्ह्ये । ऊने । प्रतिवादिविशेषे ॥ यथाहनारद : । अन्यवादीक्रियाद्वेषीनोपस्थायीनिरुत्तर : । आहूतप्रपलायीचहीन : पञ्चविध : स्मृतइति ॥ ओहाक॰ हीयतेस्मवा । ओहाकत्यागे । आदिकर्मणिक्त:॰ कर्मणिवा । ओदितश्चेतिनत्वम् । घुमास्थेतीत्वम् ।

हीनक्रिय : । त्रि॰ आलस्यादिक्रियाशून्ये ।

हीनवर्ण : । त्रि॰ नीचजातौ ॥ यथा । हीनवर्णोपिभूत्वायःकन्यामध्यापिवाभवेदिति ।

हीनवादी । त्रि॰ विरुद्धार्थवादिनि ॥ यथाहनारद : । पूर्ववादंपरित्यज्ययोन्यमालम्बतेपुन : । वादसंक्रमणाज्ज्ञेयोहीनवादीसवैनरइति ॥ वाक्यवर्जिते । अधरे ॥

हीनाङ्ग : । त्रि॰ स्वभावतोऽन्यूनाधि

हुडम्ब : । पुं॰ हुडुम्बे ॥

हुडु : । पुं॰ मेषे

हुडुक : । पुं॰ दात्यूहे ॥

हुडुक्क : । पुं॰ वाद्यप्रभेदे मदमत्ते ॥ दात्यूहपक्षिणि ॥ दण्डके । हुडका इ॰ गौ॰ दे॰ भा॰ प्र॰ लगुडविशेषे ॥

हुडुत् । न॰ वृषशब्दे ॥

हुडुम्ब : । पुं॰ भृष्टचिपिटे । हुडुम॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

हुण्ड : । पुं॰ व्याघ्रे ग्रामशूकरे ॥ मूर्खे ॥ राक्षसे ॥

हुत : । पुं॰ देवयज्ञाख्ये होमे ॥ त्रि॰ वषट्कृते । मन्त्रेणाग्नौ प्रक्षिप्ते घृतादौ । हवि : प्रक्षेपे ॥ हूयते । हुदानादनयो : । क्त : ॥ न॰ हवने होमे । अग्नौ हवि : प्रक्षेपक्रियायाम् ॥ नपुंसके भावे क्त : ॥

हुतभुक्प्रिया । स्त्री॰ अग्निपत्न्याम् ॥ स्वाहायाम् ॥ हुतभुज : प्रिया ॥

हुतभुक् । पुं॰ वैश्वानरे । वह्नौ ॥ हुतं भुङ्क्ते । भुज॰ । क्विप् ॥ चित्रके ॥ हुतहोमं भुनक्ति पालयति विगुणमपि सगुणं करोतीति वा नामेत्याद्यादिति हुतभुक् ॥

हुतवह : । पुं॰ अग्नौ ॥ हुतस्य वह : ॥

हुताश : । पुं॰ अग्नौ ॥ हुतमश्नाति । अश॰ । कर्म्मण्यण् ॥

हुताशन : । पुं॰ अग्नौ ॥ हुतमशनमस्य ॥ यथा । लक्षहोमे तु वह्नि : स्यात् कोटिहोमे हुताशन : । पूर्णाहुत्यां मृडो नाम शान्तिके वरद : सदा ॥ शिवे ॥

हुताशनी । स्त्री॰ होलिकायाम् ॥

हुति : । स्त्री॰ हवने हु॰ क्तिन् । ।

हुम् । अ॰ स्मृतौ ॥ अपाकृतौ । अर्थप्रश्ने ॥ अभ्यनुज्ञायाम् ॥ वितर्के ॥ भये । भर्त्सने । कोपे । हूयते । हु॰ । बाहुलकान्म : ॥

हुलहुली । स्त्री॰ मुखघण्टायाम् । स्त्रीणां मङ्गलजनकमुखध्वनिविशेषे । हुलहुलु इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

हुहु : । ) पुं॰ गन्धर्वविशेषे ॥ यथा । हुहूर्हुहुश्च द्विविधो हुहूर्हूहुश्च
हुहू : । )
कुत्रचिदिति शब्दरत्नावली ॥

हू अ॰ आह्वाने । अवज्ञायाम् । अहङ्कारे ॥ शोके ॥

हूङ्कार : । पुं॰ हूमिति भयजनकध्वनिकरणे ॥

हूड : । पुं॰ मेषे ॥

हूण : । पुं॰ । म्लेच्छजातिविशेषे ॥ यथा । स्वपाकश॰ पुरुष्क

हृच्छ्रीयवमहृत्यपि । लोकवाम्नस्तु पौण्ड्रगावयाचारवर्जित : ॥ म्लेच्छ : किरातशबरपुलिन्दाद्यास्तु तद्विदेतिजटाधर : ॥ देशविशेषे ॥ यथा । कामगिरेर्दक्षभागेमरुदेशा त्पश्चिमे । हूणदेश : समाख्यात : शूरास्तत्रमन्विता ॥

हूतम् । न० आह्वाने ॥ नाम्नि ॥ त्रि० आहूते ॥

हूति । स्त्री० आकारणायाम् । आह्वाने ॥ ह्वानम् । ह्वेञ : क्तिन् । वचिस्वपीतिसम्प्रसारणम् ॥

हूम् । अ० प्रश्ने ॥ वितर्के ॥ रुषोक्तौ ॥ अनुनये ॥ स्मृतौ सम्भाव्ये ॥ अभ्युपगमे । कुत्सने ॥ प्राकाश्ये । हूयते । हु० । बाहुलकान्म : । पृषोदरादि : ॥ यद्वा । हवनम् । डूम प्रत्यय : ॥

हूरव : । पुं० शृगाले ॥

हूर्च्छनम् । न० कौटिल्ये ।

हूहु । पुं० गन्धर्वविशेषे ।,

हूहू : । पुं० देवगन्धर्वे ॥ हूहूतिह्वाययति । ह्वेञ स्पर्धायांशब्देच । क्विप् । वचिस्वपीतिसम्प्रसारणम् । हलहूतिर्दीर्घ : । अजादौ० हूहुवौ० हूहुवहूव्यादिरूपाणि । अन्यत्त्विपक्षेयण् हूह्वौ० हूह्वहूव्यादि ।

हृच्छय : । पुं० मदने । मन्मथे । कामदेवे । हृदिवस्त्वविवेकिनांचेतसि शेते । शीङ् स्वप्ने । अधिकरणेशेतेरित्यच् ॥

हृच्छयालु : । पुं० कामदेवे ॥

हृच्छूलम् । न० हृदयशूले ॥ यथा । कफपित्तावरुद्धस्तुमारुतोरसवर्द्धित : । हृदिस्थ : कुरुतेशूलमुच्छ्वासरोधकम् । सहृच्छूलइति ख्यातोरसमारुतकोपज : ॥

हृणिया । स्त्री० जुगुप्सने ।

हृणीया । स्त्री० भर्त्सने । जुगुप्सने ॥ हृणीङ्कण्ड्वादि : । यक् । अप्रत्ययात् ।

हृत : त्रि० मुषिते । आकृष्टे ॥ धारि । हृञ् । क्त : । उपात्ते ।

हृति : । स्त्री० हरणे । देशाद्देशान्तरप्रापणायां

हृत्कम्प : । पुं० हृदयकम्पने ।

हृत्पति : । पुं० अन्तर्यामिणि ।

हृत्स्थ : । त्रि० बुद्धिस्थे ॥

हृत् । न० बुक्के । चित्ते । बुक्कौ । मानसे । अन्त : करणे । हृदयकमले ॥ नवमभवने । हृदयस्य० पद्दन्नित्यादिहृदादेश : ० प्रभृतिग्रहणस्यप्रकारार्थत्वात् क्वचित् स्वादावपि । यद्वा । हरति० क्रियतेवा हृञ० । क्विप् । धुक् दुकौचेति० बाहुलकात् केवलादपिदुक् । यथा । अचलं पृथुतुङ्गन्तपार्श्वंहृदयं स्मृतम् । विपरीतं सिरालञ्चरोमश तु :

खभागिनामिति ॥

हृदयम् । न० उरसि । वक्षसि ॥ बुक्कायाम् । हृदयान्तर्गतमांसविशेषे । अग्रमांसे । मानसे । स्वान्ते । स्मृतिप्रत्ययास्पदेज्ञाने ॥ हरति० आहरतिविषयान्० क्रियतेविषयैर्वा । हृको: सुक्दुकौचेतिकयन् दुगागमश्च ॥ परमात्मनि ॥ हृदिअयम् ॥ हृदयकमले ॥ यथा । पद्मकोषप्रतीकाशं रुचिरं चाप्यधोमुखम् । हृदयंतद्विजानीयाद्विश्वस्यायतनंमहत् ॥ अपिच । हृदयं पुण्डरीकंयसहशं स्यादधोमुखम् । जाग्रतस्तद्विकसतिस्वपतस्तुनिमीलति । आशयस्तत्तु जीवस्य चेतनस्यानमुत्तमम् । अतस्तस्मिंस्तमोव्याप्ते प्राणिनः स्वपन्तिहि ॥

हृदयग्रन्थि: । पुं० अहङ्कारे । चिज्जडग्रन्थनरूपेऽहङ्कारेचिदहङ्कारतादात्म्यरूपे ॥ चिज्जडात्मकत्वात्० ग्रन्थिरिवग्रन्थि: ॥ हृदयमेवग्रन्थिर्वा ॥ हृदुस्थे ॥

हृदयङ्गमम् । त्रि० सुखजनकोक्तौ । युक्तियुक्तवाक्ये । सङ्गते ॥ हृदयं गच्छति । गमश्चेतिखच् ॥

हृदयज: । पुं० पुत्रे ॥ त्रि० हृदयउत्पन्ने ॥

हृदयज्ञ: । त्रि० हृदयप्रिये ॥ हृदयाभिज्ञे ॥

हृदयदौर्बल्यम् । न० मनसोभयमवादिरूपेऽधैर्ये ॥ हृदयस्यदौर्बल्यम् ॥

हृदयवान् । त्रि० हृदयालौ ॥ मतुप् ॥

हृदयशल्यः । पुं० सन्देहे ॥

हृदयशुद्धि: । स्त्री० मनश्शुद्धौ ॥ हृदयस्यशुद्धि: ॥

हृदयस्थ: । त्रि० सर्वान्तर्यामिणि ॥

हृदयस्थानम् । न० भुजान्तरे । क्रोडे । उरसि ॥

हृदयस्पृक् । त्रि० मनोज्ञे । हृद[illegible]त । स्पृश० । स्पृशोऽनुदकेक्विन् ॥

हृदयात्मक: ।)
हृदयात्मा ।) पुं० कङ्कखगे ॥

हृदयालु: । पुं० प्रशस्तचेतसि । सुहृदये ॥ प्रशस्तंहृदयमस्यास्ति । हृदयाच्चालुरन्यतरस्यामित्यालु: ॥

हृदयाविन् । त्रि० पिशुने ॥ हृदयमाविध्यति । क्विप् ॥

हृदयिक: । त्रि० प्रशस्तचेतसि । हृदयिनि ॥ हृदयंप्रशस्तमस्यास्ति । ठन् ॥

हृदयी । त्रि० प्रशस्तचेतसि । हृदयालौ ॥ हृदयंप्रशस्तमस्य । इनि: ॥

हृदयेश: । पुं० धवे । भर्तरि पत्यौ ॥

हृदयेशा । स्त्री० प्रेयस्याम् । भार्यायाम् । कान्तायाम् ॥

हृदामयः । पुं० हृद्रोगे ॥

हृदावर्त्तः । पुं० अश्वहृदयावर्त्ते । श्रीवत्सके । इ० वि० शेषः ॥

हृदिस्पृक् । त्रि० मनोज्ञे । हृद्ये । हृदिस्पृशति । क्विप् ॥

हृदीकृतः । त्रि० हृदये प्रवेशिते ॥

हृद्गतः । त्रि० । वाग्व्यापारहिरप्रकाशिते । अन्तर्गते ॥

हृद्गोलः । पुं० पर्वतविशेषे ।

हृद्गोलीयः । पुं० आयुधजीविविशेषे । हृद्गोलोऽभिजनोऽस्य । आयुधजीविभ्यश्छः । पर्वते ॥

हृद्ग्रन्थिः । पुं० हृद्व्रणे ॥

हृद्यः । पुं० वशकृद्वेदमन्त्रे । हृदयस्य बन्धनः । बन्धने चर्षाविति यत् । न० धवलजीरके । गुडत्वचि ॥

हृद्यः । त्रि० हृज्ज्ञे । हृदिते । हृत्प्रिये ॥ हृदयङ्गमे । मनोज्ञे ॥ मनोहरे । दुर्गन्धाशुचित्वादिदृष्टादृष्टदोषशून्ये । हृदयस्य प्रियम् । हृदयस्य प्रियमिति यत् । हृदयस्य हृल्लेखेति हृदादेशः ॥

हृद्यगन्धः । पुं० विल्वे । न० सौवर्चले । स्वल्पजीरके ॥ त्री० सुगन्धे । सुरभौ । हृद्यो मनोहरो गन्धोऽस्य । हृद्यस्यौगन्धस्य ।

हृद्यगन्धा । स्त्री० मालत्याम् । जात्याम् ।

हृद्यगन्धि । न० क्षुद्रजीरके । हृद्यो गन्धोऽस्य ॥

हृद्या । स्त्री० वृद्धिनामौषधौ ।

हृद्रोगः । पुं० व्याधिप्रभेदे । हृदयपीडायाम् । हृदयरोगे । अस्य विप्रकृष्टनिदानन्तु । अत्युष्णगुर्वम्लकषायतिक्तश्रमाभिघाताध्ययनप्रसङ्गैः । संचिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः ॥ सम्प्राप्तिपूर्वकं लक्षणन्तु । दूषयित्वा रसं दोषा विगुणा हृदयं गताः । हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते० इति । शुण्ठीसौवर्चलं हिङ्गु पीतं हृदयरोगनुत् ॥ कामे । यथा । हृद्रोगमाशुप्रहिणोत्यचिरेणधीरइति ॥ हृदयस्य रोगः । वा शोकष्यञ्रोगेष्विति हृदादेशः । कुम्भराशौ ।

हृद्रोगवैरी । ) हृद्रोगारिः । ) पुं० अर्जुनवृक्षे ॥

हृल्लटकः । पुं० जठरे । इ० श० चं० का ॥

हृल्लट्टकः । पुं० कोष्ठरोगे ॥

हृल्लासः । पुं० हिक्कायाम् । हिक्का हेक्का च हृल्लास इति हेमचन्द्रः । हिक्काभिधरोगे । हृद्गात्कटूम्लनिर्गमे । हृदयादीषद्द्रव्यशालहिताम्लमथपानीयोद्गिरणं हृल्लासइति तत्र हेद्रः ॥ हृदयस्य हृल्लेखयदण्लासेष्विति०

हृदादेशः ॥

हृल्लेखः । पुं॰ तर्के ॥ ज्ञाने ॥ हृदयंलिखति । लिख॰ । कर्म्मण्यण् । हृदयस्य हृल्लेखेत्यादिना हृदादेशः ॥

हृल्लेखा । स्त्री॰ मायावीजे ॥ औत्सुक्ये ॥ भुवनेश्वर्याम् ॥ ज्ञानिनां हृदयाम्भोजे हृल्लेखा परमेश्वरीति देवीगीता ॥ हृदि लिखेः जागर्त्ति प्राणशक्तिरियं परा हृल्लेखा कथ्यते तस्मादिति भुवनेश्वरीरहस्यम् ॥

हृषितः । त्रि॰ विस्मिते ॥ प्रीते ॥ प्रहते ॥ हृष्टलोमनि ॥ प्रणते ॥ वर्मिते ॥ हर्षितस्म॰ हृष्यतिस्म वा । हृषु अलीके॰ हृषतुष्टौ वा । क्तः । हृषेर्लोमस्विति विकल्पे नेट् ॥

हृषी । पुं॰ अग्नेषामयोः ॥

हृषीकम् । न॰ श्रोत्रादीन्द्रिये ॥ हृष्यत्यनेन । हृष॰ अनिहृषिभ्यां कित् ईकन् ॥

हृषीकेशः । पुं॰ विष्णौ ॥ सर्वेन्द्रियप्रेरकत्वेन सर्वान्तर्यामिणि । सर्वान्तःकरणप्रवृत्तेः । सर्वनिगूढाभिप्रायज्ञे ॥ हृषीकाणामिन्द्रियाणामीशोऽधिष्ठाता ॥ हृषीकाणि नियम्यात्र यतः प्रत्यक्षतांगतः । हृषीकेश इतिख्यातो नाम्नातत्रैव संस्थितः ॥

हृषुः । पुं॰ हर्षे ॥ सूर्ये ॥ अग्नौ ॥ शशी । राशौ ॥ हृष्यति । हृष तुष्टौ हर्षितवा हृषु अलीके । पृभिदिव्यधिगृधिधृषिहृषिभ्यश्चेतिपठित्वा॰ एध्वर्थे उकप्रत्ययइतिकेचिदितिमनोरमा ॥

हृष्टः । त्रि॰ जातहर्षे । अस्यपर्यायाः यथा । हृष्टमत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतइति ॥ रोमाञ्चिते । अप्रतिहते । विस्मिते ॥ हर्षितस्म॰ हृष्यतिस्मवा । हृषु॰ वा । क्तः । हृषेर्लोमस्विति विकल्पितेट्कत्वात्॰ यस्यविभाषेति नेट् ॥

हृष्टमानसः । त्रि॰ सहर्षमानसे । हर्षमाणे । विकुर्वाणे । प्रमनसि ॥ हृष्टं मानसं यस्य सः ॥

हृष्टरोमा । त्रि॰ रोमाञ्चिते ॥ हृष्टानि रोमाणि यस्य सः ॥

हृष्टिः । स्त्री॰ आनन्दे । माने ॥

हृष्यत् । त्रि॰ रोमाञ्चिते ॥

हे । अ॰ सम्बोधने । आह्वाने ॥ असूयादौ ॥ हिनोति । हिगतौ । विच् ॥ पादपूरणे ॥

हेक्का । स्त्री॰ हिक्कायाम् ॥ इ॰ त्रि॰ शेषः ॥

हेठः । पुं॰ बाधायाम् । विहेठे ॥

हेडावुक्कः । पुं॰ अश्वविक्रयिणि । घोटकविक्रयकारिणि ॥

हेतिः । स्त्री॰ रवेरर्च्चिषि । अस्त्रे ॥ वह्निज्वालायाम् ॥ हिनोति

हुतस्ततो गच्छति हि० । ऊतियूतिजूतिसातिहेतिकीर्त्तयश्चेति क्तिन्नन्तानिपातिता । इति० । हन्यतेऽनयावा । क्तिन् । ऊतियूतीतिसाधु: ॥

हेतु: । पुं० कारणे । बीजे । निमित्ते । नियतपूर्वभाविनि । येन विनायन्नभवति तस्मिन् ॥ हिनोति व्याप्नोति कार्यम् । हिगतौ कमिमनिजनिगाभायाहिभ्यश्चेति तु ॥ फलसाधनयोग्ये पदार्थे ॥ हेतुं लक्षयति गौतम: उदाहरणसाधर्म्यात्साध्यसाधनं हेतुस्तथा वैधर्म्यात् ॥ ३४ ॥ अत्र साध्यसाधनं हेतुरिति सामान्यलक्षणम् । साध्यसाधनं साध्यसिद्ध्यनुकूलज्ञापकत्वबोधकत्वमर्थ: तथाच साध्यतावच्छेदकावच्छिन्नसाध्यान्वितज्ञापकत्वबोधक: साध्यान्वितस्वार्थबोधकोऽवयवइतिफलितार्थ: । तस्य द्वैविध्यमाह उदाहरणसाधर्म्यात्० तथा वैधर्म्यादिति । साधर्म्यमन्वय० वैधर्म्यं व्यतिरेक: । तद्व्याप्तिरितिफलितार्थ: । उदाहरणसाधर्म्यम्० उदाहरणबोध्यान्वयव्याप्तिस्तेनान्वयीहेतुर्ज्ञातव्य: उदाहरणेति दृष्टार्थम् । तथाच ज्ञातान्वयव्याप्तिकहेतुबोधकोहेत्ववयव: । अज्ञातव्यतिरेकव्याप्तिकहेतुबोधकोहेत्ववयव: इतिफलितार्थ: । एवमप्रतीतान्वयव्याप्तिकहेतुबोधकोहेत्ववयवोव्यतिरेकीहेतु: इत्थमेवप्रतीतान्वयव्यतिरेकव्याप्तिकहेतुबोधकोहेत्ववयवोऽन्वयव्यतिरेकीत्यपिसूचितमितिवदन्ति । साधने ॥

हेतुक: । पुं० कारणे ॥ स्वार्थेक: ॥ त्रि० तत्सम्बंधिनि ॥

हेतुता । स्त्री० कारणतायाम् । हेतुत्वे ॥ अङ्गतिविशेषे । प्रत्यक्षप्रमाणं हेतुतासङ्गात: । हेतोर्भाव: । तस्यभावस्त्वतलाविति तल् ॥

हेतुमान् । त्रि० व्यक्ते । कारणवति युक्तियुक्ते । हेतुरस्त्यस्मिन्नस्यवामतुप् फले ॥

हेतुशास्त्रम् । न० तर्कशास्त्रे ।

हेतौ । अ० निमित्तार्थे ।

हेत्वाभास. । पुं० हेतुदोषे ॥ सपञ्चविध: । सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधितभेदात् । यथोक्तं भाषापरिच्छेदे । अनेकान्तोविरुद्धश्चाप्यसिद्ध: प्रतिपक्षित: । कालात्ययापदिष्टश्चहेत्वाभासास्तुपञ्चधा । आद्य: साधारणस्तुस्यात् असाधारणोऽपर: । तथैवानुपसंहारीत्रिधानैकान्तिकोभवेत् । य: सपक्षेविपक्षे चभवेत्साधारणस्तु स: । यस्तूभयस्माद्व्यावृत्त: सपा

साधारणोमत: । तथैवानुपसंहारो केवलान्वयिपक्षक : । य : साध्यम तिनैवास्तिसविरुद्धधउदाहृत : ॥ चाश्रयासिद्धिराद्यास्यात्स्वरूपासिविरप्यथ । व्याप्यत्वासिद्धिरप रासाद्दसिद्धिरतस्त्रिधा । यत्राऽसिद्धिर्यश्रपत्तोभवेन्नाश्रमशीगिरि : श्रदेद्रव्य धूमत्वाद्वासिद धिरथापरा ॥ व्याप्यत्वासिद्धिरप रानोलधूमादिकेभवेत् । विरुद्ध यो : परामर्शहेत्वो : सत्प्रतिपक्ष ता । साध्यशून्योयत्रपक्षस्त्ववतो धउदाहृत । उत्पत्तिकालोनघटेग न्धादिर्यत्रसाध्यते । इति । सव्यभि चारविरुद्धप्रकरणसमसाध्यसमा तोतकाला हेत्वाभासद्रतिपाचार्यसूत्रम् ॥ हेतुलक्षणरहिता हेतुवदाभास मानाहेत्वाभास : ॥

हेम : । पुं॰ माषकपरिमाणे । वू॰ वैद्यकपरिभाषा ।

मकन्दल : । पुं॰ प्रवाले ॥

हेमकान्ति : । स्त्री॰ दारुहरिद्रायाम् । त्रि॰ सुवर्णद्युतिमति ॥

हेमकार : । पुं॰ स्वर्णकारे । हेमकर्त्तरि ।

हेमकिञ्जल्क : । पुं॰ नागकेसरे ॥

हेमकूट : । पुं हिमालयादुत्तरे॰ कुला चलश्चद्विपर्षे किम्पुरुषवर्षे योजनविस्तीर्णे पूर्वतोदीर्घेकिम्पुरुषवर्षमर्या दागिरौ ॥ हेम : कूटेराशि : ॥

हेमकेतकी । स्त्री॰ सुवर्णकेतक्याम् ॥ उष्णातिक्तारसाःस्त्रियाचक्षुष्याहेमकेतकी ॥

हेमकेलि : । पुं॰ वह्नौ । वू॰ म॰ माला ॥

हेमकेश : । पुं॰ शिवे ।

हेमक्षीरी । स्त्री॰ स्वर्णक्षीर्याम ३॥ मद्रूवक्षीरमस्या : । गौरादि : ॥

हेमगर्भिणी । स्त्री॰ रेवत्याख्यग न्धद्रव्ये । कृतिरत्नमाला ॥

हेमगौर : । पुं॰ । पीतकण्टे । किङ्किरते । त्रि॰ स्वर्णवद्गौर वर्णयुक्ते ॥

हेमज्वाल : पुं॰ वह्नौ । पवने ।

हेमतारम् । न॰ यष्टनविशेषे । नीलतुत्थे । मूषातुत्थे ॥

हेमदुग्ध : । पुं॰ उदुम्बरवृक्षे ।

हेमदुग्धक : । पुं॰ उदुम्बरवृक्षे । यज्ञाङ्गे । हेमवर्णदुग्धमस्य । क. ॥

हेमदुग्धा । स्त्री॰ स्वर्णक्षीर्याम् ।

हेमदुग्धी : पुं॰ यज्ञाङ्गे । उदुम्बरे ।

हेमदुग्धी । स्त्री॰ स्वर्णक्षीर्याम् ।

हेमा । पुं॰ बुधग्रहे ॥

हेम । न॰ कासुमे । स्वर्णे । पक्षोत्पन्नादिषु यथा । पुरानिजाश्रमस्था नांसप्तर्षीणांजितात्मनाम् । पत्नी विलोक्यलावण्यलक्ष्मीसम्पन्नयौव- ना : । कन्दर्पदर्पविध्वस्तचेतसो

हेमशिखा । स्त्री० स्वर्णक्षीर्य्याम् ॥

हेमसारम् । न० तुत्थे । इ० रसच न्द्रिका ॥

हेमसूत्रकम् । न० हारविशेषे ॥

हेमहस्तिरथ । पुं० महादानविशेषे ॥

हेमा । स्त्री० अप्सरसांभेदे ॥ सुन्दर्य्यां नार्य्याम् ॥

हेमाङ्ग : । पुं० गरुडे ॥ परमेष्ठिनि ॥ सुमेरौ ॥ सिंहे ॥ चम्पके विष्णौ ॥ न० हेमवर्णशरीरे ॥ त्रि० तद्वति । हेमेवाङ्गंवपुर्यस्य : ॥

हेमाद्रि : । पुं० सुरपर्वते । मेरौ ॥ हेम्नोऽद्रि : ॥ चिन्तामणिकामधेनु कल्पद्रुमनामकस्मृतिसङ्ग्रहकारकेच चिवेराजविशेषे ॥

हेमाद्रिजरथ : । पुं० स्वर्णक्षीर्य्याम् ॥

हेमाह्व : । ) पुं० मनचम्पके ॥ चम्प
हेमाह्वय : । )

के ॥ धत्तूरे ॥

हेमाह्वया । स्त्री० स्वर्णजीवन्त्याम् ॥ हेमआह्वयोयस्या : ॥

हेमाह्वा । स्त्री० हेमक्षीर्य्याम् । चोक्ते ॥ गुणायथा । हेमाह्वारेचनीतिक्ता मादिन्युत्क्लेदकारिणी । क्रमिक राड्विषानाहकफपित्तास्रकुष्ठनुदिति ॥ स्वर्णजीवन्त्याम् ॥

हेय : । त्रि० त्याज्ये । हातव्ये ॥ पुरुषस्योद्देश्यसिद्धयेयदुपयुक्तमविरोधितदुपादेयंविपरीतन्तुहेयम् ॥ हा तुंयोग्य : । ओहाक० । अचोयत् ईद्यति । गुण : ॥

हेर : । त्रि० मुकुटप्रभेदे ॥ हरिद्रायाम् ॥ आसुर्य्यांमायायाम् ॥ इ० कचित् ॥

हेरम्ब : । पुं० विनायके एकदन्ते । लम्बोदरे । विघ्नराजे । गणेशे ॥ हे मङ्करे० रणेवाशिवसमीपेवारम्बते । रविशब्दे । ओष्ठोपध : । पचाद्यच् । तत्पुरुषेकृतीत्यलुक् । हेउ षसिरम्बते० इतिस्वामी ॥ महिषे ॥ शौर्य्यगर्विते । बुद्धविशेषे । हेरुके । वज्रटीके ॥

हेरम्बजननी । स्त्री० दुर्गायाम् ।

हेरम्बहट्ट : । पुं०देशविशेषे ॥

हेरिक : । पुं० चरे ॥

हेरुक : । पुं० कामाख्यायांप्रसिद्धेशि वलिङ्गविशेषे । महाकालगणे ॥ बु द्धभेदे । वज्रटीके ।

हेलम्बी । स्त्री० हिलमोचिकायाम् ॥

हेलनम् । न० अवज्ञायाम् । अवहेलने ॥ हेडृअनादरे । ल्युट् । डलयो रैक्यम् ।

हेला । स्त्री० अवज्ञायाम् ॥ वरयोषितांविलासे । स्त्रीणांशृङ्गारभावजेक्रियाविशेषे ॥ यथाशृङ्गारसूचकोहावोहेलाऽस्यैवानुभावनम् । अपिच । हाव एवभवेद्धेलाव्यक्त : शृङ्गारसूचक इति ॥ सुरतेप्रौढेच्छायाम् ॥ यदा

ष्या मधुरा बद्धवर्च सइति ॥ वि०
हेमन्तसम्बन्धिनि । हेमन्ते त्यं ।
हेमन्ते जात: । भव: । साधुर्वा
। सर्वत्राणचतलोपश्चेत्यण् ।

हैमन्तम् । न० । पुं० हेमन्तर्त्तौ ॥ वि०
हेमन्तसम्बन्धिनि ॥ हेमन्तभवे ॥ स
न्धिवेलेति० ऋत्वण् ॥

हैमन्तिकम् । न० शालिधान्ये । चा
मनधान० इ० गौ० भा० प्र० ।

हैमवत: । पुं० विषप्रभेदे ॥ न० भा
रतवर्षे ॥ यथा । नाम्नदंभारतंव
र्षं हिमाद्रे स्तचदक्षिणे । तेनहैमव
तंनामपरिचण्यं वमुद्भयेत् ॥ कूलाव
न्तं सोमेरवंसुमेरो: परितोस्थितदि
ति ॥ वि० हिमवतिजाते ॥

हैमवतवर्षम् । न० हैमवते । भारत
वर्षे । यथा । एतद्धैमवतंवर्षंभा
रतीयवसन्तति: । हेमकूटंपरंयत्र
नाम्नाकिम्पुरुषामतद्दति ॥

हैमवती । स्त्री० उमायाम् । काल्याम्
। पार्वत्याम् ॥ हिमवतोपत्यंस्त्री ।
हिमवतोभवावा । अण् । ङीप् ॥
गङ्गायाम् ॥ हिमवत: प्रभवतिप्र
काशते० तत्रप्रथमं दृश्यतइतियाव
त् । प्रभवतीत्यण् ॥ स्वर्णक्षीर्याम्
। पटुपर्ण्याम् । हिमावत्याम् ॥ इयं
पीतक्षीरानागजिह्विकाकाराभवति
। यथा । हैमवर्णीपयस्तस्याहिमवद्भूमि
सम्भवा । सानागजिह्विकाकारात
न्मूलंवाविजौषधमिति ॥ हरीतक्या
म् ॥ श्वेतवचायाम् । हिमवतिजाता०
भवावा । तत्रजातइति० तत्रभवइति
वाअण् । क्षीरिण्याम् । रेणुकायाम्
। अतस्याम् ॥ कपिलद्राक्षायाम् ॥

हैमा । स्त्री० पीतयूथिकायाम् ॥

हैमी । स्त्री० पीतयूथिकायाम् ॥ हैमव
त्याम् ॥ स्वर्णकेतक्याम् । क्षीरिण्याम्
। काञ्चनक्षीर्याम् । हिमाद्रिजायाम् ॥

हैयङ्गवीनम् । न० एकरात्रिपर्युषितात्
प्रउत्पन्ने० ह्योगोदोहोद्भवेघृते । त
त्तु हैयङ्गवीनंयत्० ह्योगोदोहोद्भवं
घृतमित्यमर: ॥ यथा । हविर्ह्यस्तनदु
ग्धोत्थं तत्स्याद्धैयङ्गवीनकम् । है
यङ्गवीनंचक्षुष्यंदीपनंरुचिकृत्परम्
। वलकृद्बृंहणंवृष्यं विशेषात्ज्वरना
शनम् ॥ ह्योगोदोहस्यविकार: । है
यङ्गवीनसंज्ञायामितिह्योगोदोहस्य
हियङ्गुरादेशोविकारार्थेखञ्चनिपात्य
ते ॥ नवनीते ॥

हैरण्यगर्भ: । पुं० स्वायम्भुवमनौ ॥
हिरण्यगर्भस्यापत्यम् । अण् हिरण्य
गर्भोपासके ॥

हैरिक: । पुं० चौरे ॥

हैहय: । पुं० कार्त्तवीर्ये एकवीरनृ
पे । धृष्यापत्यम् । स्त्रीभ्योढक् ।
पृषोदरादि: । यद्वा । हेयस्त्वेनहैया
०नामैकदेशेननामग्रहणात् । हैया
शब्दंकुर्वन्हयतिगच्छतीतिहैहय:

भवस्तस्यायं हैहयः । यद्वा । हेमन्त० हेमन्त इति वदन् हयति गच्छतीति हेहयो विष्णुस्तस्यायम् हैहयः । देशविशेषे ॥ यथा । पश्चिमे हैहयास्ताद्रिम्लेच्छवासनकादय इति कूर्मचक्रम् ॥

हैहयः । पुं० कार्त्तवीर्ये । हे० श० र० ली ॥

हा अ० विस्मये । सम्बोधने । आह्वाने । ह्वानम् । आह्वाङ्गतौ ॥ डा प्रत्ययः ॥

होडः । पुं० तरान्धौवहने । भङ्ग० हुडो० हु०गौ० दे० भा० प्र० नौकाविशेषे ॥ न० लोप्त्रे । चौरधने ।

होडा । स्त्री० बालिकायाम् । वयसि प्रथम इति ङपि बाधित्वादजादित्वात् टाप् ।

होडृ । पुं० चौरे । ऋकारान्त ॥ इति कश्चित् ॥

होढम् । न० चौरकर्तृकहृतधने ।

होता । पुं० । ऋग्वेदविदि । देवानामाह्वानकर्त्तरि । ऋग्वेदर्त्विजि । अग्नेर्देवानां होतेति श्रुतेरग्नौ । होमकर्त्तरि । जुहोति । हु दानादनयोः । नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रादिना साधुः । तन्विधावृत्विक्चानुपसर्गस्येति तृन्वा ॥

होत्रम् । न० हविषि । हूयते । हु० । हुयामाश्रुभसिभ्यस्त्रन् ।

होत्रा । स्त्री० ऋत्विजि ॥ टाप् ॥ स्तुतौ ॥

होत्री । स्त्री० यजमानरूपायां शिवमूर्त्तौ ।

होत्रीयम् । न० होमालये । त्रि० होतृसम्बन्धिनि ।

होमः । पुं० । पञ्चमहायज्ञेषु दैवयज्ञे । सायम्प्रातर्होमयोः । सावित्र्यचरुहोमादौ । हवने । देवतोद्देशेनाग्नौ हविःप्रक्षेपे । याग एव त्यज्यमानद्रव्यस्याग्नौ प्रक्षेपाद्धोम इत्युच्यते ॥ अत्रानुकल्पश्चोक्तम् । ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः । एतैरेव हुतं यत्तु तद्धुतं स्वयमेव हीति । हवनम् हु० । अर्त्तिस्तुसुहुसृक्षीति मन् ॥

होमकः । पुं० होतरि ।

होमकुण्डम् । न० हवन्याम् ।

होमधान्यम् । न० तिले ।

होमधूमः । पुं० निगणे । इति हेमचन्द्रः ॥

होमभस्म । न० वैष्टुते ॥

होमाग्निः । पुं० यज्ञाग्नौ । महाज्वाले । महावीरे ॥

होमिः । पुं० पावके । अग्नौ । घृते ॥

होमी । पुं० होमकर्त्तरि जुहोति । हु० । उल्मुकादर्पि होमिन इति जुहोतेर्मिनिः ॥

मीयः । वि० होतव्यद्रव्ये ।

ह्रदालयेश्वरः । पुं० ह्रदालयेशस्थशिवे ॥

ह्रदिनी । स्त्री० नद्याम् । सरिति ॥ ह्रदाः सन्त्यस्याम् । अतइनिः । ङीप् ॥

ह्रसिमा । पुं० ह्रस्वत्वे ॥ ह्रस्वस्यभावः । पृथ्वादित्वादिमनिच् । स्थूलदूरेतिसाधुः ॥

ह्रसिष्ठः । त्रि० अतिह्रस्वे । ह्रस्वतमे ॥ अयमेषामतिशयेनह्रस्वः । इष्ठनि स्थूलदूरेतिसाधुः ॥

ह्रसीयान् । त्रि० ह्रस्वतरे ॥ अयमनयोरतिशयेह्रस्वः । ईयसुनिस्थूलदूरेतिसाधुः ॥

ह्रस्वः । पुं० द्व्यणुके ॥ एकमात्रवर्णे ॥ न० परिमाणविशेषे ॥ यथा । अणुदीर्घमहद्ध्रस्वमितितद्भेदईरितइति ॥ गौरसुवर्णशाके । पुष्पकासीसे ॥ त्रि० प्रकृतपुरुषपरिमाणात् न्यूनमनुष्ये । खर्वे । वामने । वीना० ह्र० भा० प्र० ॥ क्षुद्रवस्तुमात्रे । वामने । न्यचि । नीचे । खर्वे ॥ ह्रसति० ह्रस्यतेवा । ह्रसशब्दे । बाहुलकात् वः । उल्वादिर्वा ।

ह्रस्वकुशः । पुं० श्वेतकुशे ॥

ह्रस्वगर्भः । पुं० कुशे ॥

ह्रस्वगवेधुका । स्त्री० नागबलायाम् । काँगहीतिख्यातायाम् ॥ गविभूमौएधते । एध० । बाहुलकात् उः संज्ञायांकन् । ह्रस्वाचासौगवेधुकाच ॥

ह्रस्वजम्बुः । स्त्री० क्षुद्रजम्ब्वाम् ॥

ह्रस्वतण्डुलः । पुं० राजान्ने ॥

ह्रस्वदर्भः । पुं० श्वेतकुशे ॥

ह्रस्वदा । स्त्री० शल्लक्याम् ॥ इतिराजनिर्घण्टः ॥

ह्रस्वपत्रः । पुं० गिरिजमधूकागमे ॥

ह्रस्वपत्रिका । स्त्री० अश्वत्थ्याम् ॥

ह्रस्वप्लक्षः । पुं० क्षुद्रप्लक्षवृक्षे । पुण्ड्रे । ह्रस्वपर्णे । पीवरी ॥ गुणास्तु । प्लक्षः कटुः कषायश्चशिशिरोरक्तदोषजित् । मूर्च्छाभ्रमप्रलापघ्नोह्रस्वप्लक्षोविशेषतइति ॥

ह्रस्वफलः । पुं० मधुनालिकेरे ॥

ह्रस्वफला । स्त्री० भूमिजम्ब्वाम् ॥

ह्रस्वमूलः । पुं० रक्तेक्षौ ॥

ह्रस्वशाखाशिफः । पुं० ह्रस्वशाखामूले । क्षुपे ॥ शाखाश्च० शिफामूलञ्चतेशाखाशिफे । ह्रस्वेशाखाशिफेयस्यसः ॥

ह्रस्वा । स्त्री० खर्वायाम् । वामन्याम् ॥ नागबलायाम् । मुद्गपर्ण्याम् ॥ भूमिजम्ब्वाम् ॥

ह्रस्वाग्निः । पुं० चित्रके ॥ हयाग्नौ ॥

ह्रस्वाङ्गः । पुं० अष्टवर्गगतजीवकौषधौ । कूर्चशीर्षे ॥ ह्रस्वान्यङ्गान्यस्य ॥

ह्रस्वैरण्डः । पुं० रक्तैरण्डे ॥

ह्रादः । पुं० स्तनिते । गर्जिते । श

